जाल्मः । नित्यसमासोऽयम् । नहि वाक्येन निन्दा गम्यते । **सामि ।२।१।२७।** सामिकृतम् । **कालाः ।२।१।२८** क्तेनेत्येव । अनत्यन्तसंयोगार्थं वचनम् । मासप्रमितः प्रतिपच्चन्द्रः । मासं परिच्छेत्तुमारब्धवान् [ इत्यर्थः ]। **अत्यन्तसंयोगे च ।२।१।२९।** काला इत्येव । अक्तान्तार्थं वचनम् । मुहूर्तं सुखं मुहूर्तसुखम् । **तृतीया तत्कृतार्थेन गुणवचनेन ।२।१।३०।** 'तत्कृते'ति लुप्ततृतीयाकम् । तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनाऽर्थशब्देन च

---

त.] वा, निषिद्धानुष्ठानपरः सर्वोऽपि खट्वारूढ इत्युच्यते। अत एवाह-**नित्येति। सामि।** सामीत्येतदव्ययमर्धशब्दपर्यायः। **कालाः।** बहुवचननिर्देशः स्वरूपनिरासार्थः। 'कालवाचिनो द्वितीयान्ताः क्तान्तेन सह वा समस्यन्त' इति सूत्रार्थः। ननु 'काला अत्यन्तसंयोगे' इत्येवास्तु क्तेनेति निवृत्तम्, नार्थो योगविभागेनेत्यत आह-**अनत्यन्तेति। मासप्रमित इति।** 'माङ्माने'। आदिकर्मणि क्तः कर्तरि। इह प्रतिपच्चन्द्रेण नास्त्यत्यन्तसंयोगः। **मुहूर्तमिति।** मुहूर्तव्यापीत्यर्थः। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। **तृतीया तत्कृत। लुप्तेति।** सौत्रत्वादिति भावः। तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते। तदर्थकृतत्वं च गुणवाचकस्यार्थद्वारा विशेषणं—तृतीयान्तार्थकृतो यो गुणस्तद्वचनेनेति। तदेतद्व्याचष्टे-**तृतीयान्तार्थेत्यादिना। अर्थशब्देन चेति।** सोऽपि स्वतन्त्रं निमित्तमिति भावः। नन्वर्थेन समासाऽसंभवात्तद्वाची शब्दो ग्रहीष्यते किमत्र वचनग्रहणेन ?। अत्राहुः-गुणमुक्तवान्गुणवचनः। 'कृत्यल्युटो बहुल'मिति भूते कर्तरि ल्युट्। गुणमुक्त्वा यो द्रव्यमुक्तवान्स गुणवचनस्तेन घृतेन पाटवमिति गुणमात्रनिष्ठेन शब्देन समासो न भवति। गुणश्चात्र 'सत्त्वे निविशतेऽपैति' इत्यादिलक्षणलक्षितो गृह्यते न तु प्रवृत्तिनिमित्तं घटत्वादिः,

---

बा ] लौकिकविग्रहः। लौकिकविग्रहस्तु नास्तीत्याह-**नित्यसमासोऽयमिति।** तत्कुत इत्य आह-**न हि वाक्येनेति।** वृत्त्यर्थबोधकं वाक्यं-लौकिकविग्रहः। तत्र खट्वामारूढ इति वाक्यं हि गृहस्थाश्रमिणि निन्दां न गमयति। 'खट्वारूढ' इति समासस्तु रूढ्या निन्दां गमयति। तथाच भाष्यम्—'अधीत्य स्नात्वा गुर्वनुज्ञातेन खट्वा आरोढव्या। यस्तावदन्यथा करोति स 'खट्वारूढोऽयं जाल्म' इत्युच्यते' इति। अत्र 'जाल्म'इत्यनेनोद्वृत्तेऽयं शब्दो रूढः, अवयवार्थे तु नामिनिवेष्टव्यमिति सूचितम्। **सामि।** 'सामी'त्यव्ययमर्धे वर्तते। तत्-क्तान्तप्रकृतिकसुबन्तेन समस्यत इत्यर्थः। **सामिकृतमिति।** समासाऽभावे तु तद्धितवृत्तौ 'सामिकार्ति'रिति स्यादिति भावः। **कालाः। क्तेनेत्येवेति।** क्तेनेत्यनुवर्तत एवेत्यर्थः। कालवाचिप्रकृतिकद्वितीयान्ताः क्तप्रत्ययान्तप्रकृतिकसुबन्तेन वा समस्यन्त इत्यर्थः। ननु 'अत्यन्तसंयोगे च'त्युत्तरसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह-**अनत्यन्तेति। मासप्रमित इति।** मासं प्रमित इति विग्रहः। प्रपूर्वकान्माधातोरादिकर्मणि क्तः कर्तरि चेति कर्तरि क्तः। तदाह-**मासं परिच्छेत्तुमिति।** इह प्रतिपच्चन्द्रेण मासस्य नात्यन्तसंयोग इति भावः। **अत्यन्तसंयोगे च। काला इत्येवेति।** तेनात्यन्तसंयोगे कालवाचिनो द्वितीयान्ताः सुबन्तेन सह वा समस्यन्त इति लभ्यत इत्यर्थः। ननु 'कालाः' इति पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्य आह-**अक्तान्तार्थमिति।** अत्र क्तेनेति निवृत्तमिति भावः। **मुहूर्तं सुखमिति।** अत्यन्तसंयोगे द्वितीया। मुहूर्तव्यापि सुखमित्यर्थः। **तृतीया तत्कृत।** तत्कृतेत्यस्याऽव्यवहितमप्यर्थेनेति परित्यज्य गुणवचनेनेत्यत्रान्वयं वक्तुमाह-**तत्कृतेति लुप्ततृतीयाकमिति।** तत्र 'तृतीये'त्यनेन तृतीयान्तं विवक्षितम्। 'तत्कृते'ति लुप्ततृतीयाकं भिन्नं पदम्। तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते। तत्कृतेत्येतच्च गुणद्वारा गुणवचनेऽन्वेति। ततश्च 'तृतीयान्तं तृतीयान्तार्थकृतो यो गुणस्तद्वाचिना समस्यते' 'अर्थशब्देन च तृतीयान्तं समस्यते'इति वाक्यद्वयं संपद्यत इति भाष्ये स्थितत्। तदाह-**तृतीयान्तमित्यादिना।** 'गुणे'त्यस्य तत्कृतत्वसापेक्षत्वेऽपि सौत्रः समासः। इदं सूत्रं कृतशब्दार्थद्वारक एव सामर्थ्ये प्रवर्तते न तु साक्षात्परस्परान्वये इति भाष्ये स्पष्टम्। नच 'घृतेन पाटव'मित्यत्रातिप्रसङ्गः शङ्क्यः, गुणेनेति सिद्धे वचनग्रहणाद्गुणोपसर्जनद्रव्यवाचिशब्दो गृह्यत' इति व्याख्यानात्।

---

शे.] भावः। ऐकस्वर्यमपि समासफलम्। **खट्वा।** अस्य तत्प्रकृतिकं लक्षणया 'द्वितीया' इत्यनेन सामानाधिकरण्यम्। **जाल्म इति।** तेन केवलरूढत्वं तस्य सूचयति। एतेन प्रकारणादिसहकृतवाक्येन निन्दाप्रतीतिसम्भवात् 'न हि निन्दा'इत्ययुक्तमित्यपास्तम्। योगरूढे तत्सम्भवेऽपि केवलरूढे तदभावात्। न हि निन्देत्यस्य च विवक्षिता निन्देत्यर्थः। **सामि इत्यर्थे। काला इति।** कालवाचिन इत्यर्थः। बहुवचनात्। ननु क्तेनेत्यस्य निवृत्त्या क्तान्ताऽक्तान्तसाधारणोत्तरसूत्रेण सिद्धे योगविभागो व्यर्थोऽत आह-**अनत्यन्तेति। परिच्छेत्तुमिति।** [illegible] शक्तधृषे'ति तुमुन्। **अत्यन्त।** अत्यन्तसंयोगानत्यन्तसंयोगसाधारणेन पूर्वेण सिद्धे इदं किमर्थमत आह-**अक्तान्तार्थमिति।** 'क्तेन'इति अत्र नानुवर्तत इति भावः। **तृतीया।** इदं सूत्रं कृतद्वारक एव सामर्थ्ये प्रवर्तते, न साक्षात्परस्परान्वये। [illegible]

सह प्राग्वत् । शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम् ? । अक्ष्णा काणः । **पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ।२।१।३१।** तृतीयान्तमेतैः प्राग्वत् । मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थे-

---

त.] तस्य तत्त्वाऽसंभवादिति । **शङ्कुलया खण्ड इति ।** करणेऽत्र तृतीया । 'खडि भेदने' इत्यस्माद्भावे घञि व्युत्पादितः खण्डशब्दः क्रियारूपापन्ने गुणे वर्तित्वा पश्चान्मत्वर्थलक्षणया तद्वति द्रव्ये वर्तत इति गुणवचनो भवति । **धान्येनेति ।** करणे तृतीया । अर्थ्यते इत्यर्थः—प्रयोजनम् । कर्मणि घञ् । अर्थनमर्थः—अभिलाषो वा । भावे घञ् । अर्थशब्दस्य रूढत्वे तु धान्येनेति हेतौ तृतीया । 'कर्तृकरणे कृता—' इत्यनेन गतार्थत्वशङ्कैवाऽत्र नेति रूढत्वाभ्युपगमपक्ष एव श्रेयान् ।

**तत्कृतेति किमिति ।** 'कर्तृकरणे कृता—' इति सिद्धमिति प्रश्नः । इतरो 'गुणवचनेन चेत्तत्कृतेनैवे'ति नियमार्थमिदमित्याशयेन प्रत्युदाहरति—**अक्ष्णेति ।** न ह्यक्ष्णा काणत्वं कृतं किंतु कर्मादिनैवेति भावः । तृतीया त्विह 'येनाङ्गविकारः' इत्यनेन । **काण इति ।** 'कण निमीलने' इत्यस्माद्घञ् । गुणवचनत्वं तूक्तरीत्या खण्डशब्दस्येवास्यापि बोध्यम् । **गुणवचनेनेति किम् ? । गोभिर्वपावान् ।** गोसंबन्धिदध्यादिभोजनेन देवदत्तस्य वपावत्त्वमित्यस्ति तत्कृतत्वं, न त्वसौ गुणवचनः । **पूर्वसदृश ।** इह समसदृशाभ्यां योगे 'तुल्यार्थैः' इति तृतीया । अन्यैर्योगे त्वत एव वचनात्; 'हेतौ' इति वा तृतीया । इह सदृशग्रहणं व्यर्थं, षष्ठीसमासेन गतार्थत्वात् । न च 'तत्पुरुषे तुल्यार्थतृतीया—' इति पूर्वपदप्रकृतिस्वरार्थमिदमिति वाच्यम् । 'सदृशप्रतिरूपयोः सादृश्ये' इति सूत्रेण तत्सिद्धेरिति मनोरमायां स्थितम् । विद्यया सदृशो विद्यासदृश इत्यादौ हेतुत्वप्रकारकबोधार्थं तृतीयासमासोऽप्यावश्यक इति त्वन्ये । पूर्वसूत्रेणैव तत्कृतत्वात्तृतीयासमासोऽपि सिध्यतीत्यपरे । **ऊनार्थेति ।** पूर्वसूत्रेऽर्थशब्देन समासस्योक्तत्वादिहार्थग्रहण-

---

बा.] **शङ्कुलाखण्ड इति ।** 'देवदत्त' इति शेषः । 'शङ्कुलाखण्डो देवदत्तः' इत्येव भाष्ये उदाहृतम् । 'खडि भेदने' भावे घञ् । खण्डनं खण्डः । मत्वर्थीयोऽर्शआद्यच् । शङ्कुलयेति करणे तृतीया । शङ्कुलाकृतखण्डनक्रियावानित्यर्थः । यत्त्वाकडारादिति सूत्रभाष्ये 'समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दभिन्नमर्थवच्छब्दस्वरूपं गुणवचनसंज्ञं भवती'त्युक्त, तदेतत्प्रकृते न प्रवर्तते । 'गुणमुक्तवता गुणवचनेने'ति भाष्येण यौगिकत्वावगमात् । अतोऽत्र गुणशब्देन धर्ममात्रं विवक्षितम् । एवञ्च खण्डशब्दस्य क्रियावचनत्वेऽपि न क्षतिः । तत्त्वबोधिन्यां तु 'वोतो गुणवचना'दित्यत्र 'सत्त्वे निविशतेऽपैती'त्यादिलक्षणलक्षितो गुणोऽत्र गृह्यत इत्युक्तम् । तद्व्याख्यावसरे क्रियाया गुणत्वं नास्तीत्यप्युक्तम् । इह तु खण्डशब्दस्य क्रियावाचिनोऽपि गुणवचनत्वमास्थितम् । तत्तु प्रकृतसूत्रस्थभाष्यविरुद्धत्वात्पूर्वोत्तरविरुद्धत्वाच्चोपेक्ष्यम् । अर्थशब्देन समासमुदाहरति—**धान्येनेति ।** अर्थशब्दो धनपरः । हेतौ तृतीया । धान्यहेतुकं धनमित्यर्थः । अत्र धनस्य धान्यहेतुकत्वेऽपि तत्करणकत्वाऽभावादप्राप्तौ पृथगुक्तिः । 'धान्येनेति प्रकृत्यादित्वात्तृतीया, धान्याऽभिन्नं धनमित्यर्थ' इति केचित् । ननु 'शङ्कुलया खण्ड' इत्यत्र 'कर्तृकरणे कृता बहुल'मित्येव सिद्धे तत्कृतेति व्यर्थमिति पृच्छति—**तत्कृतेति किमिति ।** 'गुणवचनेन चेत्तत्कृतेनैवे'ति नियमार्थं तत्कृतग्रहणमित्यभिप्रेत्य प्रत्युदाहरति—**अक्ष्णा काण इति ।** नह्यक्ष्णा काणत्वं कृतं, किन्तु रोगादिनेति भावः । गुणवचनेनेति किम् ? । गोभिर्वपावान् । गोसम्बन्धिक्षीरादिभोजनेन देवदत्तस्य वपावत्त्वमित्यस्ति तत्कृतत्वम् । किन्तु न गुणवचनोऽसौ ।

**पूर्वसदृश । एतैरिति ।** पूर्व-सदृश-सम-ऊनार्थ-कलह-निपुण-मिश्र-श्लक्ष्ण-एतैरित्यर्थः । **मासपूर्व इति ।** मासेन पूर्व इति विग्रहः । मासात्प्रागुत्पन्न इत्यर्थः । यद्यप्यवधित्वसम्बन्धे 'अन्यारादितरर्ते' इति दिक्शब्दयोगे पञ्चमी प्राप्ता, दिशि दृष्टः शब्दो दिक्शब्द इत्यभ्युपगमात् । तथाप्यत एव ज्ञापकात्तृतीया । हेतौ तृतीयेत्यन्ये ।

**मातृसदृश इति** 'मात्रा सदृश' इति विग्रहः । **पितृसम इति ।** पित्रा सम इति विग्रहः । 'तुल्यार्थैरतुलोपमाभ्या'मिति तृतीया । 'तुल्यार्थै'रिति षष्ठ्यां षष्ठीसमासेनैव सिद्धमिदमित्याहुः । **ऊनार्थेति ।** उदाहरणसूचनमिदम् ।

---

शे.] स्पष्टश्चैतद्भाष्ये । गुणेत्यस्य 'तत्कृत' इत्येतत्सापेक्षत्वेऽपि सौत्रत्वात्समासः । खण्डशब्दश्च खण्डगुणवत्त्वेन शकलबोधक इति शङ्कुलाखण्ड इत्यत्र कृतद्वारकमेव सामर्थ्यम् । शङ्कुलाकृतखण्डगुणवानित्यर्थः । वचनग्रहणन्तु गुणोपसर्जनद्रव्यवचनेनैव समासार्थम् । तेन 'कुसुम्भेन कृतं रूप'मित्यादौ न, 'घृतेन पाटव'मित्यादौ च न । स्पष्टञ्चेदं भाष्ये । यद्यपि जातिसंख्याकृदन्ततद्धितान्तसमस्तसर्वनामसंख्याशब्दभिन्नशब्दानामेव गुणवचनसंज्ञा, तथाऽपि प्रकृते व्याख्यानाच्छुद्धयौगिक एव गुणवचनशब्द इति बोद्धयम् । तृतीयान्तार्थेन कृतो यो गुणस्तद्वचनेन समास इत्यर्थात्, 'तत्कृत' इत्यस्य गुणपदेनैवान्वयेन सम्बन्धाऽनुपादानाच्च, 'गुणेन' इतीयता सिद्धे वचनग्रहणाद्गुणमुक्तवतेत्यर्थं इति भाष्याच्च गुणपदेन धर्ममात्रमत्र । तेन खण्डशब्दस्य क्रियावचनत्वेऽपि न दोषः । धान्येनेति । अर्थशब्दो धनपरः, हेतुतृतीयेति बोद्धयम् । पूर्वसदृश । यद्यपि सदृशशब्देन षष्ठीसमासः सिद्धः,

माषोनं कार्षापणम् । माषविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः । मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्, 'मिश्रं चानुपसर्गमसन्धौ' इत्यत्राऽनुपसर्गग्रहणात् । गुडसंमिश्रा धानाः । ॐ **अवरस्योपसङ्ख्यानम्** । मासेनाऽवरो मासावरः । **कर्तृकरणे कृता बहुलम्** ।२।१।३२। कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । **कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्** । नखनिर्भिन्नः । कर्तृकरणे इति किम् ? । भिक्षाभिरुषितः । हेतावेषा तृतीया । बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम् ।

त.] मभिधेयपरम् । तच्चोनशब्देनैव संबध्यते, न तु पूर्वादिभिः, समसदृशयोः पृथग्ग्रहणादिति भावः । **मिश्रं चेति** । 'पणबन्धेनैकार्थ्यं संधिस्तत्राऽप्रयुज्यमानो मिश्रशब्द उपसर्गरहितोऽन्तोदात्तः' इति सूत्रार्थः । **अवरस्येति** । अत्र व्याचक्षते—ऊनार्थेत्येव सिद्धत्वादिदं सुत्यजमेव । न चावरशब्दस्योनार्थकत्वमप्रसिद्धमिति वाच्यम् । 'सप्तदशावराः सत्रमासीरन्' इति श्रुतौ 'अव्यक्तानुकरणाद् द्व्यजवरार्धात्' इति सूत्रे च तत्प्रसिद्धेरिति । **कर्तृकरणे** । समाहारद्वन्द्वात्सप्तमीत्याशयेनाह—**कर्तरि करणे चेति** । अत्र केचित्—कर्तृकरणे इति प्रथमाद्विवचनं तृतीयया विशेष्यते, विशेषणेन च तदन्तविधिस्तेन तृतीयान्ते कर्तृकरणे कृदन्तेन समस्येते इति व्याख्यान्तरमित्याहुः । **सर्वोपाधीति** । कर्तरि करणे च या तृतीया तदन्तमपि बहुलग्रहणात् क्वचिन्न समस्यते । क्वचित्तु विभक्त्यन्तरमपि समस्यते, बहुलग्रहणादेवेत्यर्थः । समासाऽभावं प्रदर्शयति—**दात्रेण लूनवानित्यादाविति** । आदिशब्देन दात्रेण छिन्नवान्, हस्तेन कुर्वन्नित्यादि भाष्यम् । विभक्त्यन्तरमपि समस्यत इत्यस्योदाहरणं तु—पादहारकः गलेचोपकः । ह्रियत इति हारकः । बाहुलकात्कर्मणि ण्वुल् । पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः । 'चुप मन्दायां गतौ' । हेतुमण्णिजन्तात्कर्मणि ण्वुल् । 'अमूर्धमस्तका'दित्यलुक् । कर्तृ[त्व]करणत्वयोः क्रियानिरूपितत्वेन क्रियासमर्पककृदन्तेनैव भवेत्समासः, 'सुपा' इत्यधिकारात्तिङन्तेन तु नातिप्रसङ्ग इत्याशयेन पृच्छति—**कृता किमिति** । इतरस्तु तिङन्तप्रकृतिकतद्धि-

बा.] **माषोनमिति** । माषाख्यपरिमाणविशेषेण ऊनं परिमाणमित्यर्थः । अतएव ज्ञापकादवधित्वे तृतीया, हेतौ वा । अर्थग्रहणं च ऊनेनैव सम्बध्यते, न पूर्वादिभिरपि, समसदृशयोः पृथगुपादानात् । अर्थग्रहणस्य प्रयोजनमाह—**माषविकलमिति** । माषेण विकलमिति विग्रहः । हीनमित्यर्थः । पूर्ववत्तृतीया । **वाक्कलह इति** । वाचा कलह इति विग्रहः । **आचारनिपुण इति** । आचारेण निपुण इति विग्रहः । आचारहेतुकनैपुण्यवानित्यर्थः । **गुडमिश्र इति** । गुडेन मिश्र इति विग्रहः । **आचारश्लक्ष्ण इति** । आचारेण श्लक्ष्ण इति विग्रहः । आचारहेतुककुशलत्ववानित्यर्थः । ननु 'गुडसंमिश्रा' इत्यत्र कथं समासः ?, सुबन्तविशेषणत्वेऽपि समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात् । तत्राह—**मिश्रग्रहणे सोपसर्गस्यापीति** । कुत इत्यत आह—**मिश्रं चेति** । 'असन्धौ मिश्रेत्युत्तरपदमुपसर्गहीनं तृतीयान्तात्परमन्तोदात्त'मिति तदर्थः । अत्राऽनुपसर्गग्रहणादितरत्र मिश्रग्रहणे सोपसर्गग्रहणं विज्ञायत इत्यर्थः ।

**मासेनावर इति** । मासेन पूर्व इत्यर्थः । न्यून इत्यर्थे तूनार्थकत्वादेव सिद्धम् । **कर्तृकरणे** । कर्ता च करणं चेति समाहारद्वन्द्वात्सप्तमी । तृतीयेत्यनुवर्तते । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं । कृतेत्यपि तथैव । तदाह—**कर्तरि करणे चेति** । **प्राग्वदिति** । समस्यते स तत्पुरुष इत्यर्थः । इह कृद्ग्रहणेन क्तप्रत्यय एव गृह्यते, बहुलग्रहणादिति भाष्यम् । अतः क्तान्तमेवोदाहरति—**हरिणा त्रात इति** । पालित इत्यर्थः । ननु कृदन्तस्य समर्थविशेषणत्वेऽपि समासप्रत्ययविधौ तदन्तविधिप्रतिषेधान्नखनिर्भिन्न इत्यत्र न स्यादित्यत आह—**कृद्ग्रहणे इति** ।

शे.] 'तुल्यार्थैः' इत्यनेन तद्योगे षष्ठ्या अपि विधानात् । एतस्याश्च न प्रतिपदविधानत्वमिति वक्ष्यते । अतः 'प्रतिपदविधाना षष्ठी न समस्यते' इति निषेधोऽत्र न । पूर्वपदप्रकृतिस्वरोऽपि 'सदृशप्रतिरूपयोः' इति सिद्धः । तत्र हि 'दास्याःसदृशः' इत्यादौ षष्ठ्या अलुकि पूर्वपदप्रकृतिस्वरार्थं सदृशग्रहणमावश्यकं । 'मनसा सदृशः' इति सञ्ज्ञा नास्त्येवेति न तदर्थमिदमावश्यकं, तथापि भोजनहेतुकसादृश्यवानित्यर्थे 'भोजनसदृशः' इत्यत्र समासार्थमिदमावश्यकम् । हेतोः शेषत्वविवक्षया षष्ठीसमासे तु पूर्वपदप्रकृतिस्वराऽसिद्धिः । सादृश्यग्रहणेन 'सदृशप्रतिरूपयोः' इत्यस्योपमानबोधकपूर्वपदे एव प्रवृत्तेरिति स्पष्टं 'सदृशप्रतिरूपयोः' इत्यत्र भाष्ये । यदि तु भोजनेन कृतः सदृश इत्यर्थे पूर्वसूत्रेण समासे 'तत्पुरुषे तुल्यार्थ' इत्यनेन स्वरोऽपि सिद्ध इत्युच्यते, तदा सदृशग्रहणं व्यर्थमेवेति प्रकृतसूत्रे कैयटेन ध्वनितम् । 'सदृश' इति स्वरविधायकसूत्रशेषस्थं भाष्यन्तु एकदेश्युक्तिरिति तदाशयः । **मिश्रञ्चेति** । पणबन्धेनैकार्थ्यं सन्धिः, तत्राऽगम्यमाने 'मिश्र' इत्युत्तरपदमनुपसर्गं तृतीयान्तात्परमन्तोदात्तमित्यर्थः । **अवरस्येति** । यद्यप्ययमूनार्थोऽपि, तथापि व्यवस्थाविषयाऽवरार्थमिदम् । भाष्ये ऊनार्थेत्यर्थग्रहणस्य 'तृतीया' इति सूत्रे प्रत्याख्यानात्, 'समर्थ'सूत्रे 'तृतीया तत्कृते', सुंपन्यस्य 'उपादानविकलः' इत्युदाहरणाच्च । अत्रोनार्थग्रहणं नेति वादिनां मते सर्वथाऽस्यावश्यकत्वाच्चेति दिक् । **कर्तरि करणे चेति** । सूत्रे समाहारद्वन्द्वात्सप्तम्येकवचनमिति भावः । **तृतीयेति** । तृतीयान्तमित्यर्थः । **कृद्ग्रहणे इति** । यत्र गतिकारकसमभिव्याहृतं कृदन्तं, तत्र तद्विशिष्टस्यैव ग्रहणम्, अपिशब्दात्तदसमभिव्याहृते केवलस्यापीत्यर्थं इत्यन्यत्र विस्तरः । **कृतेति किमिति** ।

तेन दात्रेण लूनवानित्यादौ न। कृता किम्?। काष्ठैः पचतितराम्। **कृत्यैरधिकार्थवचने** ।२।१।३३। स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनं, तत्र कर्तरि करणे च तृतीया कृत्यैः प्राग्वत्। वातच्छेद्यं तृणम्। काकपेया नदी। **अन्नेन व्यञ्जनम्** ।२।१।३४। संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन प्राग्वत्। दध्ना ओदनो दध्योदनः। इहान्तर्भूतोपसेकक्रियाद्वारा सामर्थ्यम्। **भक्ष्येण मिश्रीकरणम्** ।२।१।३५। गुडेन धानाः गुडधानाः। मिश्रणक्रियाद्वारा सामर्थ्यम्। **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** ।२।१।३६। चतुर्थ्यन्तार्थाय यत्तद्वाचिना, अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। तदर्थेन प्रकृतिविकृतिभाव एव [गृह्यते]।

---

त ] तान्तप्रकृतिकसुबन्तेनाऽसमासस्तत्फलमित्याशयेन प्रत्युदाहरति—**काष्ठैरिति**। **कृत्यैरधिकार्थे**। पूर्वसूत्रस्यैव प्रपञ्चोऽयं न तु नियमार्थमित्याहुः। **वातच्छेद्यमिति**। पूर्ववत्कृत्यः। कोमलत्वाद्वातेनापि छेत्तुं शक्यत इति स्तुतिः, वातेनापि छेत्तुं शक्यते निर्बलत्वादिति निन्दा वा। **काकपेयेति**। 'शकि लिङ् चे'ति शक्यार्थे कृत्यः। पूर्णतोयत्वात्तटस्थैः काकैरपि पातुं शक्येति स्तुतिः, अल्पतोयत्वेन निन्दा वा। **अन्नेन**। 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री' इत्यमरः। व्याख्यानान्नेह स्वरूपग्रहणं,तदाह—**संस्कारकेत्यादि**। **भक्ष्येण**। खरं विशदमभ्यवहार्यं भक्ष्यम्। खरं =कठिनं विशदं=विविक्तावयवं खाद्यं भक्ष्यमित्यर्थः। यत्प्रत्ययान्तस्य एरजन्तस्य च भक्षयतेस्तत्रैव प्रयोगात्। 'अब्भक्ष' इत्यादिप्रयोगस्तु भाक्तः। **गुडधाना इति**। ननु धानानां प्रत्येकं विविक्तावयवत्वाऽभावात्कथमेतदुदाहरणं सङ्गच्छत इति चेत्। मैवम्। भृष्टयवसमुदायस्य धानात्वात्समुदायं प्रति समुदायिनामवयवत्वाच्च तदुपपत्तेः। **चतुर्थी तदर्थार्थे**। तच्छब्देन प्रकृता चतुर्थी परामृश्यते, प्रत्ययग्रहणात्तदन्तग्रहणम्, चतुर्थ्यन्तेन सामर्थ्यात्तदर्थो लक्ष्यते

---

बा ] परिभाषेयम् 'गतिरनन्तरः' इति सूत्रे भाष्ये स्थिता। **पचतितरामिति**। अतिशयेन पचतीत्यर्थः। 'अतिशायने' 'तिङश्चे'त्यनुवृत्तौ 'द्विवचनविभज्ये'ति तरप्। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याम्। अत्र तद्धितान्तेन समासनिवृत्त्यर्थं कृद्ग्रहणमिति भावः। **कृत्यैरधिकार्थवचने**। **अर्थवादवचनमिति**। असदुक्तिरित्यर्थः।

**वातच्छेद्यमिति**। वातेन च्छेद्यमिति विग्रहः। छेत्तुं योग्यमित्यर्थः। 'ऋहलोर्ण्य'दिति कृत्यप्रत्ययः। कोमलत्वेन स्तुतिः, दुर्बलत्वेन निन्दा वा। **काकपेयेति**। 'अचो य'दिति यत्। 'ईद्यती'ति गुणः। अत्र पूर्णाम्भस्त्वेन स्तुतिः, अल्पाम्भस्त्वेन निन्दा वा। **अन्नेन व्यञ्जनम्**। व्यञ्जनशब्दं व्याचष्टे—**संस्कारेति**। संस्क्रियते गुणविशेषवत्तया क्रियते अनेनेति संस्कारः=उपसेकादिसाधनं दध्यादि, तद्वाचकमित्यर्थः। **अन्नेनेति**। **अन्नम्**-ओदनः। तद्वाचकशब्देनेत्यर्थः। 'भिस्सा स्त्री भक्तमन्धोऽन्न'मिति कोशः। **दध्योदन इति**। नन्विह दध्नेति करणत्वस्योपसिक्तपदापेक्षत्वादसामर्थ्यात्कथमिह समास इत्यत आह—**अन्तर्भूतेति**। उपसेकक्रियां विना दध्नोऽन्नसंस्कारकत्वानुपपत्त्या दध्नेत्यस्य दधिकरणकोपसेके वृत्तेर्नाऽसामर्थ्यमिति भावः। तदुक्तं भाष्ये—'युक्तार्थसंप्रत्ययाच्च सामर्थ्य'मिति। **भक्ष्येण**। मिश्रीक्रियते खाद्यं द्रव्यमनेनेति **मिश्रीकरणं**—गुडादि। तद्वाचकं तृतीयान्तं भक्ष्यवाचकेन समस्यत इत्यर्थः। कठिनद्रव्यं-खाद्यम्। पृथुकादि भक्ष्यं विवक्षितम्। **गुडधाना इति**। 'धाना भृष्टयवे स्त्रियः' इत्यमरः। गुडेन मिश्रा धाना इत्यर्थः। ननु गुडकरणत्वस्य मिश्रपदाऽपेक्षत्वान्न सामर्थ्यमित्यत आह—**मिश्रणेति**। गुडेनेत्यस्य गुडकरणकमिश्रणे वृत्तेर्नाऽसामर्थ्यमिति भावः। **चतुर्थी**। प्रत्ययग्रहणपरिभाषया चतुर्थीत्यनेन चतुर्थ्यन्तं गृह्यते। तदर्थ-अर्थ-बलि-हित-सुख-रक्षित-एषां द्वन्द्वः। चतुर्थ्यन्तम् एतैः षड्भिः समस्यते, स तत्पुरुष इति फलितम्। तदर्थेत्यत्र तच्छब्देन चतुर्थ्यन्तार्थो विवक्षितः। तस्मै चतुर्थ्यन्तार्थाय इदं तदर्थम्। 'अर्थेन नित्यसमासः' इति वक्ष्यमाणः समासः। चतुर्थ्यन्तवाच्यप्रयोजनकं यत्तत्तदर्थमिति पर्यवस्यति। तदाह—**चतुर्थ्यन्तार्थायेत्यादिना**। **तदर्थेनेति**। तदर्थेन

---

शे.] सुपेत्यधिकारेण तिङन्तेनाऽप्रसङ्गात्कर्त्राद्याक्षिप्तधात्वर्थक्रियाबोधककृदन्तेनैव भविष्यतीति प्रश्नः। **काष्ठैरिति**। अन्ये तु कृदन्तेनैव समासो यथा स्यान्न सुबन्तेनेत्यर्थं तत्। उक्तोदाहरणे तु शानजन्तादिभिरिव बहुलग्रहणेन वारयितुं शक्य इति प्राहुः। **अर्थवादः**—आरोपितोऽर्थः। **काकपेयेति**। शक्यार्थे कृत्यः। पूर्णाम्भस्त्वेन कोमलत्वेन च स्तुतिः, अल्पाम्भस्त्वेन दुर्बलत्वेन च निन्दा वा।

**इहान्तर्भूतेति**। तां विना दध्नः संस्कार्यत्वेन प्रतीतान्नसंस्कारकत्वानुपपत्तेरिति भावः। तदुक्तं भाष्ये—'युक्तार्थसम्प्रत्ययाच्च सामर्थ्यमि'ति। दध्ना युक्तो योऽर्थ उपसेकादिस्तत्संप्रत्ययादित्यर्थः। सर्वलोकव्यवहारप्रसिद्ध्या च तदर्थान्तर्भावनिश्चय इति च। अन्नशब्देनात्रौदनः। 'भिस्सा स्त्री भक्तमन्धोऽन्न'मिति कोशेन तत्र तस्य रूढेः, योगाच्च रूढिर्बलीयसीति बोध्यम्। **मिश्रणेति**। तां विना मिश्रीकरणत्वाऽयोगादिति भावः। तच्छब्देन चतुर्थ्यन्तार्थं इत्याशयेनाह—**चतुर्थ्यन्तार्थायेति**। तादर्थ्ये चतुर्थी।

बलिरक्षितग्रहणाज्ज्ञापकात् । यूपाय दारु यूपदारु । नेह—रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीसमासाः ।

**७ अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् ।** द्विजायाऽयं द्विजार्थः सूपः ।

---

त ] इत्याशयेनाह—**चतुर्थ्यन्तार्थायेति** । चतुर्थ्यन्तवाच्याय यूपाय यद्दार्वादि, तद्वाचिना चतुर्थ्यन्तं समस्यत इत्यर्थः । **बलिरक्षितग्रहणादिति** । हितसुखग्रहणं तु न ज्ञापकं, तद्योगे चतुर्थी चाशिषीत्यतादर्थ्येऽपि चतुर्थी-संभवादिति भावः । ननु 'चतुर्थी चाशिषी'ति विहिता या चतुर्थी तदन्तस्य समासो न भवति, समासादाशिषोऽनव-गमादिति केचिदाहुरिति कैयटेनोक्तम् । ततश्च तत्पक्षे हितसुखग्रहणमपि बलिरक्षितग्रहणवज्ज्ञापकमेवेति चेत् , अत्र नव्याः—'ब्राह्मणाय हितं ब्राह्मणहितम् । गोहितम् । गोसुखमित्यतादर्थ्यचतुर्थ्यन्तेनापि समासः स्वीक्रियते । सा चाऽतादर्थ्यचतुर्थी 'हितयोगे चे'ति वार्तिकाच्चतुर्थी तदर्थे'त्यादिना हितसुखशब्दाभ्यां समासविधानाज्ज्ञापकाद्वा सम्भवतीति हितसुखग्रहणं न ज्ञापकमिति सम्यगेवेत्याहुः । **यूपायेति** । तादर्थ्ये चतुर्थी । एवमग्रेऽपि यथासंभवमूह्यम् ।

**अश्वघासादय इति** । एतच्च भाष्यकृतोक्तम् । नन्वेवं 'रन्धनाय स्थाली'त्यत्रापि षष्ठीसमासः स्यादेवेति प्रकृति-विकृतिभाव एवेति नियमो निष्फल एव । न च स्वरे विशेषः,'चतुर्थी तदर्थे' इति पूर्वपदप्रकृतिस्वरस्यापि प्रकृतिविकृतभाव एवेष्यमाणत्वात् । अत्राहुः—'संबन्धत्वतादर्थ्यकृतवैलक्षण्येनोक्तनियमसाफल्यान्न दोषः । अत्र च मानमेतदेव भाष्यम् । 'न माषाणामश्नीयात्,' 'दाशरथाय मैथिली'त्यादिप्रयोगा अपीत्थमेव विवक्षाभेदेन निर्वाह्याः । एवंच 'पूर्वसदृशे'ति सूत्रे सदृशग्रहणं व्यर्थमिति कैयटहरदत्तादीनामुक्तिः प्रामादिकीत्यवधेयम् । शाब्दबोधकृतवैलक्षण्यस्य तत्रापि सत्त्वादिति । **अर्थेन नित्येति** । अन्यथा विभाषाधिकारात्पक्षे 'द्विजायार्थ' इति प्रयोगः स्यादिति भावः । **विशेष्यलिङ्गता चेति** ।

---

बा ] समास इति यदुक्तं तत्प्रकृतिविकृतिभाव एव भवति, न त्वन्यत्रेत्यर्थः । कुत इत्यत आह—**बलिरक्षितेति** । यदि तादर्थ्यमात्रेऽयं समासः स्यात्प्रकृतिविकृतिभाव एवेति नोच्येत, तर्हि बलिरक्षितग्रहणं व्यर्थं स्यात् । भूतेभ्यो बलिः, गोभ्यो रक्षितं तृणमित्यत्रापि बलेर्भूतार्थतया, रक्षिततृणस्य गवार्थतया च तदर्थेनैव समाससिद्धेरिति भावः । **यूपा-येति** । अत्र चतुर्थ्यन्तवाच्ययूपार्थं दारु, अतो दारुशब्देन यूपायेत्यस्य समासः, यूपस्य दारुविकृतित्वाच्च, तक्षादिना अंष्टाश्रीकृतवृक्षस्यैव यूपशब्दार्थत्वात् । अथ प्रकृतिविकृतिभावग्रहणस्य प्रयोजनमाह—**नेहेति** । **रन्धनायेति** । पाका-येत्यर्थः । 'रध हिंसायाम्' । इह पाको विवक्षितः । भावे ल्युट्, अनादेशः । 'रधिजभोरची'ति नुम् । स्थाल्याश्चतुर्थ्यन्त-वाच्यपाकार्थत्वेऽपि प्रकृतिविकृतिभावविरहान्न समासः । नन्वश्वेभ्यो घासः अश्वघासः, धर्माय नियमो धर्मनियम इत्यादौ कथं तदर्थेन समासः, प्रकृतिविकृतिभावविरहादित्यत आह—**अश्वघासादयस्त्विति** । न चैवं 'रन्धनाय स्थाली'त्यत्रापि षष्ठीसमासः स्यादेवेति प्रकृतिविकृतिभावनियमो व्यर्थ इति वाच्यं, शाब्दबोधे सम्बन्धत्वतादर्थ्यत्व-कृतवैलक्षण्येन उक्तनियमसाफल्यात् । एवञ्च 'रन्धनस्य स्थाली'ति सम्बन्धत्वेन भाने षष्ठीसमास इष्ट एव । तादर्थ्य-त्वेन भाने चतुर्थीसमासवारणाय तु प्रकृतिविकृतिभावनियमाश्रयणमित्यास्तां तावत् । तदेवं तदर्थेत्यंशः प्रपञ्चितः ।

अथेदानीमर्थशब्देन चतुर्थ्यन्तस्य समासे विशेषमाह—**अर्थेनेति** । अर्थशब्देन चतुर्थ्यन्तस्य नित्यसमास इति वक्तव्यम् । अन्यथा विभाषाधिकाराद्विकल्पः स्यात् । विशेष्यस्य प्रधानस्य यल्लिङ्गं तल्लिङ्गमित्यपि वक्तव्यम् । अन्यथा अर्थशब्दस्य नित्यं पुँल्लिङ्गत्वात् 'परवल्लिङ्ग'मिति सर्वत्र पुँल्लिङ्गतैव स्यादित्यर्थः । अर्थशब्दोऽत्र वस्तुपरः । 'अर्थोऽभि-धेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । इहोपकारकं वस्तु विवक्षितमित्यभिप्रेत्योदाहरति—**द्विजार्थ इति** । तत्र द्विजायाऽयमित्यस्वपदविग्रहः । तत्राऽर्थशब्दस्थानेऽयमिति शब्दः, नित्यसमासत्वेनाऽस्वपदविग्रहौचित्यात् । द्विजायेति

---

शे.] **बलिरक्षितग्रहणादिति** । तद्योगे हि तादर्थ्ये चतुर्थी । हितयोगे चाऽस्मादेव ज्ञापकाच्चतुर्थी । हितसुखाभ्यामन्योपकाराऽजननेन तद्योगे तादर्थ्यचतुर्थ्या असम्भवात् । एतत्सर्वं भाष्ये स्पष्टम् । **षष्ठीसमासा इति** । 'रन्धनाय स्थाली'त्यादावभिधानस्वाभाव्या-त्तादर्थ्येनैव तस्य भानं न संबन्धत्वेनेति षष्ठ्यभावान्न तत्र षष्ठीसमासः । चतुर्थीसमासवारणाय तु 'प्रकृतिविकृतिभावे एव'इत्यु-क्तम् । अश्वघासादावुपकारकत्वेन बोधे वाक्यमेव । संबन्धत्वेन बोधे षष्ठ्यन्तेन समासोऽपीति व्यवस्था । 'रन्धनार्था स्थाली'इति मध्यमपदलोपिसमासोऽपि तत्र न, अनभिधानादिति भावः । एतेन षष्ठीसमासेन रन्धनस्थाल्या अपीष्टत्वात्प्रकृतिविकृतिभाव एवेति व्यर्थम् । चतुर्थीसमासेऽपि 'चतुर्थी तदर्थे' इति पूर्वपदप्रकृतिस्वरो न, तस्य प्रकृतिविकृतिभाव एव प्रवृत्तेः । अन्यथा 'गोरक्षितम्' इत्यत्राप्यनेनैव स्वरसिद्धौ 'क्ते च' इति व्यर्थं स्यात् । न च हितार्थं, क्ते चेत्यत्रापि तदर्थं इत्यनुवृत्तेः । अतएवास्योक्तार्थज्ञापकता-परं भाष्यं सङ्गच्छते इत्यपास्तम् । अर्थशब्दस्य नित्यपुंस्त्वेन 'परवल्लिङ्ग'मित्यस्य बाधायाह—विशेष्यलिङ्गता चेति । एतदेवात्र

द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्। **पञ्चमी भयेन** ।२।१।३७। [पञ्चम्यन्तं सुबन्तं भयप्रकृतिकेन सुबन्तेन सह वा समस्यते स तत्पुरुषः]। चोराद्भयं चोरभयम्। **भयभीतभीति-भीभिरिति वाच्यम्**। वृकभीतः। वृकभीतिः। वृकभीः। **अपेतापोढमुक्तपतितापत्रस्तैरल्पशः** ।२।१।३८। एतैः सहाऽल्पं पञ्चम्यन्तं समस्यते स तत्पुरुषः। सुखापेतः। कल्पनापोढः। चक्रमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। अल्पशः किम् ?, प्रासादात्पतितः। **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन** ।२।१।३९। [स्तोकान्तिक-दूरार्थवाचकाः कृच्छ्रशब्दश्चेति पञ्चम्यन्ताः क्तान्तेन सह वा समस्यन्ते स तत्पुरुषः]। स्तोकान्मुक्तः। अल्पान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रादागतः। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्। **षष्ठी** ।२।२।८। [षष्ठ्यन्तं सुबन्तं सुबन्तेन सह वा समस्यते स तत्पुरुषः]। राज्ञः पुरुषो

---

त.] वचनाऽभावे त्वर्थशब्दस्य नित्यपुंस्त्वात् 'परवल्लिङ्ग'मिति सर्वत्र पुँल्लिङ्गप्रयोग एव स्यादिति भावः। **पञ्चमी भयेन**। भयेनेति स्वरूपग्रहणं, नार्थस्य, प्रमाणाऽभावात्, 'भयभीते'ति वार्तिकारम्भाच्च। तेन 'वृकात्त्रास' इत्यादौ समासो न। कथं तर्हि 'भोगोपरतो' 'ग्रामनिर्गतः', इत्यादिप्रयोगाः ?। अत्राहुः—बहुलग्रहणात्क्वचिद्विभक्त्यन्तरमपि कृता समस्यतइति प्रागेवोक्तत्वात्, 'सुप्सुपे'त्यनेन वा तदुपपत्तिरिति। **अपेतापोढ**। 'पञ्चमी'ति वर्तते, प्रत्ययग्रहणात्तदन्तग्रहणम्। '**अल्पश**'इत्यत्र 'बह्वल्पार्थाच्छस्कारका'दिति शस्। यद्यपि 'बह्वल्पार्थान्मङ्गलाऽमङ्गलवचन'मिति वक्ष्यति, तथाप्यत एव निपातनाच्छसिति बोध्यम्। कारकत्वं तु समसनक्रियां प्रति पञ्चम्यन्तस्य कर्मत्वात्तदभिधायित्वाच्चाल्पशब्दस्य। तदेतदाह—**अल्पं पञ्चम्यन्तमिति**। **स्तोकान्मुक्त इत्यादि**। 'करणे च स्तोकाल्पे'ति पञ्चमी। 'दूरादागत' इत्यादौ तु 'दूरान्तिकार्थेभ्यः' इत्यनेन। **राजपुरुष इति**। राजन् अस्–पुरुष सु इत्यलौकिकविग्रहे समासे कृते सुपो

---

बा.] तादर्थ्यचतुर्थी। तदन्तस्याऽर्थशब्देन समासो विशेष्यसूपशब्दस्य पुँल्लिङ्गत्वात्समासस्य पुँल्लिङ्गता च। द्विजस्योपकारकः सूप इत्यर्थः। **द्विजार्थेति**। द्विजायेयमिति विग्रहः। अर्थशब्दस्य नित्यपुँल्लिङ्गत्वेऽपि 'परवल्लिङ्ग'मिति पुँल्लिङ्गं बाधित्वाऽनेन विशेष्यलिङ्गानुसारेण स्त्रीलिङ्गता। **द्विजार्थं पय इति**। द्विजायेदमिति विग्रहः। अत्र विशेष्यलिङ्गानुसारान्नपुंसकत्वम्। भाष्ये तु चतुर्थ्यैव तादर्थ्यस्योक्तत्वात 'उक्तार्थानामप्रयोगः' इति न्यायेनाऽर्थशब्देन विग्रहाऽप्रसक्तेर्नित्यसमासत्वं न्यायसिद्धमेव। 'गुरोरिदं गुर्वर्थ'मित्यादाविव लिङ्गमपि लोकत एव सिद्धमिति वार्तिकमिदं प्रत्याख्यातम्। **भूतबलिरिति**। भूतेभ्यो बलिरिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य बलिशब्देन समासः। **गोहितमिति**। गोभ्यो हितमिति विग्रहः। गवामनुकूलमित्यर्थः। 'हितयोगे चे'ति शेषषष्ठ्यपवादश्चतुर्थी। तदन्तस्य हितशब्देन समासः। **गोरक्षितमिति**। 'तृणादिक'मिति शेषः। गोभ्यो रक्षितमिति विग्रहः। तादर्थ्यचतुर्थ्यन्तस्य रक्षितशब्देन समासः। **पञ्चमी भयेन**। पञ्चम्यन्तं भयशब्देन सुबन्तेन समस्यत इत्यर्थः। **चोरभयमिति**। 'भीत्रार्थानां भयहेतुः'- इत्यपादानत्वात्पञ्चमी। **भयभीतभीति**। सूत्रे भयशब्दस्यैव ग्रहणाद्भीतादेरप्राप्ते समासे वचनम्। **वृकभीत इति**। वृकभीतिः-वृकभीरित्यप्युदाहार्यम्। अत्र भाष्ये 'अपर आहे'त्युक्त्वा भयनिर्गतजुगुप्सुभिरिति वक्तव्यमित्युक्त्वा वृकभयं ग्रामनिर्गतः, अधर्मजुगुप्सु'रित्युदाहृतम्। चोरत्रस्तः, भोगोपरत इत्यादौ 'सुप्सुपे'ति वा, मयूरव्यंसकादित्वाद्वा समासः। **अपेतापोढ**। अल्पशः' इति स्वार्थे शस्, अत एव निपातनात्। तदाह—**अल्पं पञ्चम्यन्तमिति**। 'बह्वल्पार्था'दिति शस्तु न भवति, 'बह्वल्पार्थान्मङ्गलामङ्गलवचन'मिति वक्ष्यमाणत्वात्। **स्तोकान्तिक**। स्तोक-अन्तिक-दूर-एतदर्थकानि, कृच्छ्र-एतानि पञ्चम्यन्तानि क्तप्रत्ययान्तेन समस्यन्त इत्यर्थः। अर्थग्रहणं स्तोकान्तिकदूरेषु संबध्यते। **अल्पान्मुक्त इति**। स्तोकपर्यायस्योदाहरणम्। **अभ्याशादागत इति**। अन्तिकपर्यायस्योदाहरणम्। **विप्रकृष्टादागत इति**। दूरशब्दपर्याय उदाहार्यः। 'करणे च स्तोके'ति पञ्चमी। 'दूरादागत' इत्यत्र तु 'दूरान्तिकार्थेभ्यः' इति पञ्चमी। अत्र 'सुपो धात्वि'ति लुकमाशङ्क्याह—**पञ्चम्याः स्तोकादिभ्य इत्यलुगिति**। **षष्ठी**। षष्ठ्यन्तं सुबन्तेन समस्यते, स तत्पुरुष इत्यर्थः। **राजपुरुष इति**। राजन् अस् पुरुष स् इत्यलौकिकविग्रहवाक्ये समासे सति सुब्लुकि अन्तर्वर्तिनी

---

शे.] विधेयम्। नित्यत्वन्तु चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहाऽप्रसक्तेर्न्यायसिद्धम्। गुरोरिदं गुर्वर्थमित्यादाविव यदि लिङ्गमपि लोकतः सिद्धं, तदेदं स्पष्टार्थम्। भयभीति। निर्गतजुगुप्सयोरप्युपलक्षणमिदम्। भोगोपरत-वन्येतरादिषु 'सुप्सुपे'ति समासः, मयूरव्यंसकादित्वाद्वा। अल्पं पञ्चम्यन्तमिति। कानि चिदेव पञ्चम्यन्तानि समस्यन्ते इत्यर्थः। अमङ्गलसम्बन्धाऽभावेऽपि 'अल्पशः' इत्यस्मादेव निपातनाच्छस्। स्तोकान्तिक। स्तोकार्थोऽल्पशब्द एव, न लेशादयो, व्याख्यानात्। स्तोकाल्पाभ्यां कृच्छ्राच्च 'करणे च स्तोके'ति पञ्चमी, दूरान्तिकार्थेभ्यो द्वितीया [illegible] बोध्यम्। प्रतिपदोक-

राजपुरुषः। **याजकादिभिश्च** ।२।२।९। एभिः षष्ठ्यन्तं समस्यते। 'तृजकाभ्यां कर्तरि'त्यस्य प्रतिप्रसवोऽयम्। ब्राह्मणयाजकः। देवपूजकः॥ **ॐ गुणात्तरेण तरलोपश्चेति वक्तव्यम्** ॥ तरबन्तं यद्गुणवाचि तेन सह समासस्तर[प्रत्यय]लोपश्च। 'न निर्धारणे' इति 'पूरणगुणे'ति च निषेधस्य प्रतिप्रसवोऽयम्। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः सर्वमहान्। **ॐ कृद्योगा [च] षष्ठी समस्यत इति वाच्यम्।** इध्मस्य व्रश्चनः इध्मव्रश्चनः॥ **न निर्धारणे** ।२।२।१०। निर्धारणे या षष्ठी सा न समस्यते। नृणां द्विजः श्रेष्ठः॥

---

स ] लुक्यन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्न लोपः। **याजकादिभिश्च**। याजक। पूजक। परिचारक। परिवेषक। स्नातक। अध्यापक। उत्पादक। होतृ। पोतृ। भर्तृ। रथगणक। पत्तिगणक। वृत्। **गुणात्तरेणेति**। एतच्च वार्तिकं 'सर्वं गुणकार्त्स्न्ये' इत्यत्र पठितम्। **कृद्योगा षष्ठीति**। 'कर्तृकर्मणोः कृती'ति कृत्संनियोगेन कृतेत्यर्थः। यदा तु 'प्रतिपदविधाने'त्यादिनिषेधवचनमारभ्यते, तदेदं तद्बाधनायारब्धव्यम्। तस्यैवाऽनारभ्यत्वमनुपदं वक्ष्यामः। **इध्मव्रश्चन इति**। वृश्च्यते छिद्यतेऽनेनेति व्रश्चनः=कुठारादिः। करणे ल्युट्। इध्मानामिति कर्मषष्ठ्यन्तस्यानेन समासः। **नृणामिति**। 'यतश्च निर्धारण'मिति षष्ठी। द्विजशब्देनात्र समासप्रसङ्गस्तदपेक्षा हि षष्ठी। श्रेष्ठत्वं द्विजेतरमनुष्येभ्यः, तेषां सामान्यशब्देनोपस्थिततया तान्विहायानुपस्थितकल्पनाया अन्याय्यत्वात्। अथ कथं पुरुषोत्तम इति ?। यस्मान्निर्धार्यते, यश्चैकदेशो निर्धार्यते, यश्च निर्धारणहेतुः–एतत्रितयसंनिधाने सत्येवायं निषेध इति 'द्विवचनविभज्योपे'ति सूत्रे कैयटः। अन्ये तु–पुरुषेषूत्तम इति निर्धारणसप्तम्याः 'संज्ञाया'मिति समासः। न चैवं 'न निर्धारणे' इति व्यर्थम्। स्वरे भेदात्। सप्तमीसमासे हि 'तत्पुरुषे तुल्यार्थे'त्यादिना पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे तु 'समासस्ये'त्य-

---

बा ] विभक्तिं प्रत्ययलक्षणेनाश्रित्य नलोपः। नच लुका लुप्तत्वान्न प्रत्ययलक्षणमिति वाच्यं, पदत्वस्य सुब्घटितसमुदायधर्मत्वेन तस्याऽङ्गकार्यत्वाऽभावादिति भावः। **याजकादिभिश्च**। ननु 'षष्ठी'तिपूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह **तृजकाभ्यामिति**। **ब्राह्मणयाजक इति**। ब्राह्मणस्य याजक इति विग्रहः। यजतेर्ण्यन्तात्कर्तरि ण्वुल्। अकादेशः। 'कर्तृकर्मणोः कृती'ति कर्मणि षष्ठी। **देवपूजक इति**। देवानां पूजक इति विग्रहः। पूजकशब्दो याजकादिरिति भावः। 'भूभर्ते'ति तृजन्तस्योदाहार्यम्, भर्तृशब्दस्य याजकादित्वात्। **गुणात्तरेणेति**। वार्तिकमिदं 'सर्वं गुणे'ति सूत्रे भाष्ये स्थितम्। गुणवाचकाद्विहितो यस्तरप्तदन्तेन षष्ठी वा समस्यते, तरपो लोपश्चेत्यर्थः। फलितमाह–**तरबन्तं यदिति**। ननु 'षष्ठी'ति सूत्रेणैव सिद्धे किमर्थमिदमित्यत आह–**न निर्धारणे इति**। 'सर्वं गुणे'ति सूत्रे भाष्ये तु 'पूरणगुणेत्यस्यापवाद'इत्येवोक्तम्। सर्वशब्दानुवृत्तेः सर्वशब्द एवेदं वार्तिकमित्यभिप्रेत्योदाहरति–**सर्वश्वेत इति**। 'बकानां गुण' इति शेषः। द्रव्यान्तरवृत्तिश्वेतरूपापेक्षया सर्वेषां बकानां श्वेतगुणोऽयमधिक इत्यर्थः। 'द्विवचनविभज्य' इति विभक्तव्योपपदे तरप्। अत्र सर्वेषामिति षष्ठ्यन्तस्य श्वेततरशब्देन समासे तरपो लोपे 'सर्वश्वेत' इति रूपम्। **सर्वमहानिति**। 'ईश्वर' इति शेषः। पूर्ववत्तरप्। 'सर्वेषां महत्तरः'इति विग्रहः। इतरसंबन्धिमहत्त्वापेक्षया ईश्वरस्य महत्त्वमधिकमित्यर्थः। **कृद्योगेति**। कृता योगो यस्या इति विग्रहः। 'कर्तृकर्मणोः कृतीति विहिते'ति भाष्यम्। **इध्मप्रव्रश्चन इति**। 'कुठार' इति शेषः। प्रवृश्च्यतेऽनेनेति 'प्रव्रश्चनः'। करणे ल्युट्। इध्मानां प्रव्रश्चनं इति विग्रहः। कर्मणि षष्ठी। 'प्रतिपदविधाने'ति वक्ष्यमाणनिषेधस्यापवादोऽयम्। **न निर्धारणे। नृणां द्विजः श्रेष्ठ इति**। अत्र 'नृणा'मिति षष्ठ्यन्तस्य द्विजशब्देन समासो न भवति। पुरुषाणामुत्तमः पुरुषोत्तम इत्यत्र तु शेषषष्ठ्येव, न तु निर्धारणषष्ठी। 'यतो निर्धारणं यच्च निर्धार्यते यश्च निर्धारणहेतुः–एतत्रितयसंनिधान एव तस्याः प्रवृत्ते'रिति कैयटः। 'गुणेन निषेधस्त्वनित्य'इति तरप्सूत्रे कैयटः। केचित्तु 'उत्तमः पुरुषस्त्वन्यः

---

शे.] परिभाषयैतद्विहितपञ्चम्यन्तेनैवायं समास इत्याहुः। **राजपुरुष इति**। अन्तर्वर्तिविभक्त्या पदत्वान्नलोपः। **गुणात्तरेण**। इदञ्च 'पूरणगुणे'त्यस्यापवाद इति 'सर्वं गुणे'ति सूत्रे भाष्ये। ततः सर्वपदानुवृत्तेः सर्वशब्द एवेदम्। गुणबोधकाद्विहितो यस्तरप् तदन्तेन सर्वशब्दस्य समास इति वाच्योऽर्थः। गुणाद्विहिततरबन्तञ्च गुणवाच्येवेत्याशयेनाह–**तरबन्तं यद्गुणेत्यादि**।

ननु यतो निर्द्धार्यते, यश्च निर्द्धार्यते, यश्च निर्द्धारणहेतुस्तत्त्रितयसन्निधान एवायं निषेधो युक्तो, निर्द्धारणषष्ठी च युक्ता, स्पष्टं चेदं तरब्विधायके कैयटे। अतो नाऽत्रास्य प्राप्तिः, 'सर्वेषां श्वेततरः' इत्यादौ तमबापत्तिश्चेत्यरुचेराह–**पूरणेत्यादि**। द्रव्यान्तराधेयश्वेतापेक्षया सर्वेषां पटानामधिकोऽयं श्वेतो गुण इत्युदाहरणार्थः। एवञ्च तरबप्युपपन्नः। **कृद्योगा चेति**। 'प्रतिपदविधाना न समस्यते' इत्यस्यापवादः। **न निर्द्धारणे**। द्विजादिशब्दैः प्राप्तस्य निषेधोऽयम्। 'पुरुषोत्तमः' इत्यत्र त्रितयसन्निधानाऽभावान्ननिर्द्धारणविभक्तिः, किन्तु संबन्धसामान्ये षष्ठीति तया समासः। अत एव 'हलादिः शेषः' इति सूत्रे 'किमयं हलामादिरिति षष्ठीसमासः' इति भाष्ये उक्तम्। गुणवचनेन निषेधस्त्वनित्य इति तरप्सूत्रे कैयटः। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदा-

ॐ प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्॥ सर्पिषो ज्ञानम्। **पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन** ।२।२।११। पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते। पूरणे—सतां षष्ठः। गुणे—काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः।

---

त.] न्तोदात्तत्वं स्यात्तच्चाऽनिष्टमित्याहुः। तन्मन्दम्। 'संज्ञाया'मिति समासस्य नित्यत्वेन स्वपदविग्रहाऽसङ्गतिप्रसङ्गात्। तस्मात्कैयटोक्तसमाधानमेव समीचीनमिति नव्याः। **प्रतिपदविधानेति**। पदं पदं प्रति विहिता प्रतिपदविधाना। 'षष्ठी शेषे' इति विहायाऽन्येन 'ज्ञोऽविदर्थस्ये'त्यादिना विहिता सर्वैव षष्ठीत्यर्थः। धातुकारकविशेषं गृहीत्वैव 'ज्ञोऽविदर्थस्य' इत्यादिना षष्ठी विधीयत इति भवति तस्याः प्रतिपदविधानत्वम्। नन्वनेनैव गतार्थत्वा'न्न निर्धारणे' इति व्यर्थमिति चेत्। अत्राहुः—'यतश्च निर्धारण'मिति सूत्रं न षष्ठीं विधत्ते, किं तु सप्तमीमेव। षष्ठी तु तया मा बाधीति प्रतिप्रसूयत इत्यन्यदेतत्। एवं 'स्वामीश्वराधिपती'त्यादिष्वपि। तेन 'गृहस्वामी' 'सर्वेश्वरः' 'निषादाधिपति'रित्यादि सिद्धमिति। वस्तुतस्तु 'ज्ञोऽविदर्थस्ये'त्यादिचतुर्दशसूत्रीमध्ये 'दिवस्तदर्थस्ये'त्यादिषट्सूत्रीं विहायावशिष्टाष्टसूत्र्यां 'शेषे' इति वर्तते, तथा च 'न माषाणामश्नीया'दित्यादाविव 'षष्ठी शेषे' इत्येव सिद्धे नियमार्थं प्रकरणम्—इह षष्ठ्येव न तु तल्लुगिति। तथा च लुकः प्रयोजकीभूतः समास एव नेति फलितोऽर्थः। ततश्च 'प्रतिपदविधाने'ति वचनं न कर्तव्यम्। एवं स्थिते 'कृद्योगा षष्ठी'ति वचनमपि मास्तु। 'कर्तृकर्मणोः कृती'त्यत्र हि 'शेषे' इति निवृत्तम्। तथा चाऽप्राप्तषष्ठीविधानार्थमेव तदिति समासनिवृत्तिप्रसङ्गाऽभावात् 'षष्ठी' इत्यनेनैव समाससिद्धेः। **सर्पिषो ज्ञानमिति**। वस्तुतः करणस्य संबन्धमात्रविवक्षया 'ज्ञोऽविदर्थस्य' इति षष्ठी। सर्पिःसंबन्धि प्रवर्तनमित्यर्थः। **पूरणगुण**। अर्थशब्दस्य त्रिषु संबन्धादाह—**पूरणाद्यर्थैरिति**। अत्र प्राचोक्तम् 'एतदर्थैः षष्ठी न समस्यते' इति। तन्न्यूनम्। तथा हि सति सुहितान्तानामेव ग्रहणं स्यात्, तावतामेवाऽर्थशब्देन समस्तत्वादिति ध्वनयन्नाह—**सदादिभिश्चेति**। **षष्ठ इति**। षण्णां पूरणः षष्ठः। 'तस्य पूरणे डट्', 'षट्कतिकतिपयचतुरां थुक्'। कथं तर्हि 'तान्युच्छषष्ठाङ्कितसैकतानी'ति?। प्रमाद एवायमिति केचित्। नन्वेषु षष्ठः, उञ्छात्मकः षष्ठ इति वा व्याख्येयमिति मनोरमायां स्थितम्।

**गुणे इति**। 'सत्त्वे निविशतेऽपैती'त्यादिलक्षणलक्षितो गुणोऽत्र गृह्यते, न त्वदेल्लक्षणः, अर्थग्रहणात्। नापि सङ्ख्या, 'क्रोशशतयोजनशतयो'रिति वार्तिके निर्देशात्। **काकस्य कार्ष्ण्यं**। **ब्राह्मणस्य शुक्ला इति**। व्याप्तिन्याया-

---

बा ] परमात्मेत्युदाहृतः' इति गीतावाक्यात्कर्मधारय एव। उत्तमशब्दस्य विशेषणत्वेऽपि राजदन्तादित्वात् परनिपात इत्याहुः। **प्रतिपदविधानेति**। पदं पदं प्रतीति वीप्सायामव्ययीभावः। प्रतिपदं विधानं यस्याः सा प्रतिपदविधाना। 'षष्ठी शेषे' इति शेषलक्षणां षष्ठीं वर्जयित्वा सर्वा षष्ठी प्रतिपदविधानेति भाष्यम्। **सर्पिषो ज्ञानमिति**। अत्र 'ज्ञोऽविदर्थस्य करणे'इति विहितषष्ठ्याः समासो न भवति, 'न निर्धारणे' इति प्रत्याख्येयमेवेति भाष्ये स्पष्टमित्यलम्। **पूरणगुण**। पूरणगुणसुहितानि अर्था येषां ते पूरणगुणसुहितार्थाः, ते च सच्च अव्ययं च तव्यश्च समानाधिकरणं चेति समाहारद्वन्द्वात्तृतीया। तदाह—**पूरणाद्यर्थैरिति**। **पूरणे इति**। 'उदाहरणं वक्ष्यते' इति शेषः।

**सतां षष्ठ इति**। षण्णां पूरण इत्यर्थे 'तस्य पूरणे डट्' 'षट्कतिकतिपयचतुरां थुक्'। नच 'कुम्भपूरण'मित्यत्रापि निषेधः स्यादिति वाच्यम्, 'सोऽचि लोपे चेत्पादपूरण'मिति निर्देशेन पूरणार्थकप्रत्ययस्यैव ग्रहणात्। 'उञ्छषष्ठाङ्कितसैकतानी'त्यत्र तुञ्छात्मकः षष्ठ इति व्याख्येयम्। **गुणे इति**। 'उदाहरणं वक्ष्यते'इत्यर्थः। प्रधानत्वेन वा, उपसर्जनत्वेन वा गुणवाची गुणशब्दः, व्याख्यानात्। तदाह—**काकस्य कार्ष्ण्यं ब्राह्मणस्य शुक्ला इति**। कृष्णशब्दात् 'गुण-

---

शे.] हृतः' इत्यादि गीतावाक्यादत्र कर्मधारय इति लभ्यते। राजदन्तादित्वात्परनिपातः। प्रतिपदेति। 'ज्ञोऽविदर्थस्ये'त्यादि 'कृत्वोऽर्थे' इत्येतत्सूत्रविहिता प्रतिपदविधाना। यत्तु 'तेषु शेषपदसंबन्धेन शेषे एव तैः षष्ठीविधानेन तत्र च 'षष्ठी शेषे' इत्यनेनैव सिद्धौ तत्सामर्थ्यात्समासाऽभावः कल्प्यते, तेन 'प्रतिपदविधाने'ति नापूर्व'मिति, तन्न। तत्तद्धातुयोगे उपात्तकारकातिरिक्तकारकाणां शेषत्वविवक्षाऽभावज्ञापनेनापि चारितार्थ्यसम्भवात्। किं च 'कृत्वोऽर्थप्रयोगे' 'ज्ञोऽविदर्थस्य' 'दिवस्तदर्थस्ये'त्यादिविषये समासनिषेधाऽनापत्तिः। तत्र शेषग्रहणनिवृत्तेः सर्वसंमतत्वात्, 'कृत्वोऽर्थे' इत्यत्र तत्सम्बन्धे भाष्यानुग्रहाऽभावात्। एवं 'ज्ञोऽविदर्थस्ये'ति सूत्रेऽपि तत्सम्बन्धे नात्यन्तं भाष्याऽनुग्रहः 'अधीगर्थे'त्यादौ मण्डूकानुवृत्तिः। एतच्च 'दिव' इति सूत्रे विस्तरेणोपपादितम्। 'शतस्य दीव्यति' इत्यादौ तु न्योगे 'कर्तृकर्मणो'रित्यस्य निषेधेनानेनैव षष्ठ्या समासनिषेधस्य आवश्यकत्वात्। अत एव भाष्ये नेदं प्रत्याख्यातम्। अत एव 'प्रतिपदविधाना के'ति प्रश्ने 'सर्वा प्रतिपदविधाना, शेषलक्षणां वर्जयित्वा। कर्तृकर्मणोः कृतीति च कृद्योगा' इति भाष्ये उक्तम्। तत्र 'शेषलक्षणा'मित्यस्य शेषमात्रलक्षणामित्यर्थः। प्रतिपदविधानेत्यस्य कारकविशेषोपादानेन विहितेत्यर्थः। तेन 'तुल्यार्थै'-रित्यादेर्न तत्त्वमित्यलम्। पूरणाद्यर्थैरिति। आदिना गुणसुहितौ। अत्र पूरणार्थैः ...

यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम्। अनित्योऽयं गुणेन निषेधः,'तदशिष्यं संज्ञाप्रमाणत्वा'दित्यादिनिर्देशात्। तेनाऽर्थगौरवं बुद्धिमान्द्यमित्यादिसिद्धम्। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः॥

त.] त्केवलगुणवाची गुणोपसर्जनद्रव्यवाची च गुणशब्देन गृह्यत इति भावः। ननु 'ब्राह्मणस्य शुक्ला' इत्यत्र समासप्रसङ्ग एव नास्ति, ब्राह्मणशब्दस्य दन्तैरेवान्वयाद्ब्राह्मणस्य ये दन्तास्ते शुक्ला इत्यर्थादत आह–यदेति। शुक्लशब्द एवेह विशेष्यसमर्पक इति भावः। 'चन्दनगन्धः' 'घटरूप' मित्यादावनेन निषेधे प्राप्ते 'तत्स्थैश्च गुणैः समासो वक्तव्यः' इति वार्तिकेन समासः प्रतिप्रसूयते। गन्धत्वेन प्रतीयमानो गन्धो न कदापि गुणिसमानाधिकरणः, किंतु स्वप्रधानः। इदमेव हि तात्स्थ्यं नाम। ननु 'पिनष्टि गन्धा'निति प्रयोगदर्शनाच्छुक्लशब्दादितुल्य एव गन्धशब्दो न तत्स्थगुणवचन इति चेत्। न। 'पिनष्टी'ति प्रयोगे हि 'गन्धा'निति न गुणशब्दः, मालतीकुसुमादिषु गन्धशब्दप्रयोगदर्शनात्। किंतु चन्दनत्वादिजातिनिमित्तकोऽन्य एव सः। तस्माच्चन्दनगन्ध इत्यादौ तत्स्थत्वं सुस्थमेव। एवं 'घटरूप'मित्यादावपि।

नन्वेवमपि 'बलाकायाः शौक्ल्यं', 'केशस्य नैल्य'मित्यादावतिप्रसङ्ग इति चेत्। अत्राहुः–'गुणिवचनादुत्पन्नस्य शुक्लादिगुणस्यैवाभिधानात्तद्वाचकपदानां गुणिसामानाधिकरण्यसत्त्वान्न दोषः। तथा च प्राधान्येनाऽप्राधान्येन वा द्रव्याऽप्रतिपादकत्वे सति गुणप्रतिपादकत्वं तत्स्थगुणवाचित्वमित्यर्थ इति। **फलानामिति**। करणस्य शेषत्वविवक्षायां षष्ठी।

बा.] वचनब्राह्मणादिभ्यः' इति भावे ष्यञ्। शुक्लशब्दात्तु 'गुणवचनेभ्यो मतुपो लु'गिति लुक्। ननु 'दन्ता' इति शेषपूरणेन 'ब्राह्मणस्य दन्ताः शुक्ला' इत्यर्थे ब्राह्मणशब्दस्य दन्तशब्देनैवान्वयाच्छुक्लशब्देनान्वयाऽभावादसामर्थ्यात्कथमिह समासप्रवृत्तिरित्यत आत–**यदा प्रकरणादिनेति**। प्रकरणादर्थाद्वेत्यर्थः। दन्ताः संयुक्ताः शुभावहा न तु, विरला इत्यादिदन्तवर्णने प्रकृते यदा 'ब्राह्मणस्य शुक्ला' इत्युच्यते, तदा प्रकरणाद्दन्ता इति विशेष्योपस्थितिः। यदा वा सर्ववर्णेषु दन्तवस्त्रभूषणेषु प्रकृतेषु 'ब्राह्मणस्य शुक्ला' इत्युच्यते, तदाऽर्थाद्दन्ता इति विशेष्योपस्थितिस्तत्र सामर्थ्यसत्त्वात्समासे प्राप्ते निषेध इत्यर्थः। अत्र 'आकडारा'दिति सूत्रोक्तगुणवचनसंज्ञकानां 'तृतीया तत्कृते'ति सूत्रे प्रपञ्चितानां गुणानां न ग्रहणम्, अत्र गुणवचनशब्दाभावात्। किंतु 'वोतो गुणवचना'दिति सूत्रभाष्ये प्रपञ्चितानां 'सत्त्वे निविशतेऽपैती'त्यादिलक्षितगुणानामेव ग्रहणमिति बोध्यम्। एतेन 'आकडारा'दिति सूत्रभाष्ये तद्धितान्तस्य गुणवचनत्वपर्युदासात्कथं कार्ष्ण्यादिशब्दानां गुणवाचित्वमिति निरस्तम्। अथ 'अर्थगौरव'मित्यादौ षष्ठीसमासं साधयितुमाह–**अनित्योऽयमिति**। **संज्ञाप्रमाणत्वादिति**। संज्ञायाः प्रमाणत्वं–संज्ञाप्रमाणत्वं, तस्मादिति विग्रहः। अत्र प्रमाणत्वस्य गुणत्वात्तेन षष्ठीसमासनिषेधात्समासनिर्देशोऽनुपपन्नः स्यादतो गुणेन समासनिषेधोऽनित्य इति विज्ञायत इत्यर्थः। **इत्यादीति**। आदिना 'गुणकार्त्स्न्य'मित्यादिसङ्ग्रहः। वस्तुतस्त्वनित्यो गुणेन निषेध इत्ययमर्थो भाष्ये न दृश्यते। न च कृष्णैकत्वमित्यादौ समासानुपपत्तिरिति वाच्यं, 'पङ्क्तिविंशती'ति सूत्रे 'विंशत्यादिशब्दा भाववचना भवन्ती'त्युक्तः। गवां विंशतिर्गवां सहस्रमित्यर्थे गोविंशतिर्गोसहस्रमित्यादिप्रयोगात्। 'अर्थगौरव'मित्यादौ त्वर्थगतं गौरवमिति मध्यमपदलोपिसमासो बोध्य इति शब्देन्दुशेखरे प्रपञ्चितम्। 'सुहित'पदं व्याचष्टे–**सुहितार्थास्तृप्त्यर्था इति**। नपुंसके भावे क्त इति भावः।

**फलानां सुहित इति**। करणत्वस्याऽविवक्षायां संबन्धविवक्षायां षष्ठी। अर्थग्रहणात्फलानां तृप्तिरित्यादा-

शे.] व्याख्यानात्। गुणार्थशब्देन केवलगुणवाची सन् गुणोपसर्जनद्रव्यवाची, गुणिबोधकप्रकृतिकभावप्रत्ययान्तश्च गृह्यते, व्याख्यानात्, तदाह–काकस्येति। 'आकडार' सूत्रोक्तगुणवचनानां तु नेह ग्रहणं, वचनपदानुपादानात्। तदेदमिति। अन्यथा ब्राह्मणस्य ये दन्ता इत्यर्थे शुक्लपदेनाऽसामर्थ्यात्समासप्राप्तिरेव नेति भावः। इदानीं तु शुक्लशब्द एव विशेष्यसमर्पक इति तात्पर्यम्। परे तु एवमपि सामर्थ्यं दुरुपपादम्। षष्ठ्यन्तं समर्थप्रकृतिकेन सुबन्तेन समस्यते इत्यर्थेनाऽदोषात्। अत्र हि सुबन्तेन 'शुक्ला' इति पदेन वाक्यैकदेशन्यायेन शुक्ला दन्ता इत्यर्थबोधः। एवञ्च सुबुत्पत्तिः शुक्लशब्दात्स्वार्थे एवेति न समर्थप्रकृतिकता सुबन्तस्य। अत एव ब्राह्मणस्य ग्रामं गत इत्यर्थके 'ब्राह्मणस्य गतः' इति वाक्ये प्रकरणादिना ग्राममित्यर्थस्योक्तन्यायेन 'गत' इत्यनेनोक्तौ समासो न। नेष्यते च तत्र समास इति 'कर्मणि च' इति सूत्रे भाष्यकैयटयोः। तस्मात् कार्ष्ण्यादय एवात्रोदाहरणम्। गुणिपरताऽपि शुक्लादीनां विशेष्यद्रव्योपादाने, प्रकरणादिना तदवगतौ वा, नान्यत्र,' अभिधानस्वाभाव्यादित्याहुः। अनित्योऽयं गुणेनेति। पूरणार्थेनेति च बोद्धव्यम्। इत्यादीति। 'लोपे चेत्पादपूरणम्' इति आदिशब्दार्थः। तेन 'कुम्भपूरणभवः' 'उञ्छषष्ठः' इत्यादि सिद्धम्। परे तु एषु कुम्भसम्बन्धिपूरणमुञ्छसम्बन्धी षष्ठ इति मध्यमपदलोपी समासः। अत एव भाष्येऽनित्यत्वं नोक्तम्। अन्यत्राऽस्यानभिधानम्। अत एव 'सर्वश्वेतः' इत्यादौ गुणेन नेति निषेधात् कथं समासः' इत्याशङ्क्य 'गुणात्तरेण समासस्तरलोपश्च' इति वचनमारब्धं 'सर्वे गुणे'ति सूत्रे भाष्ये। सङ्ख्याशब्दास्तु भावशब्दा इति यौवनशतादौ कोशशतादौ गोविंशतिरित्यादौ च नायं निषेधः। तथा च 'पङ्क्तिविंशति' इति सूत्रे भाष्यं–'ते एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति' इति, विंशत्यादिषु भाववचनेषु' इति च। यच्च

तृतीयासमासस्तु स्यादेव । स्वरे विशेषः । सत्—द्विजस्य कुर्वन्कुर्वाणो वा । किङ्कर इत्यर्थः । अव्ययम्[म्]—ब्राह्मणस्य कृत्वा । पूर्वोत्तरसाहचर्यात्कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धमिति रक्षितः । तव्ये । ब्राह्मणस्य कर्तव्यम् । तव्यता तु भवत्येव । स्वकर्तव्यम् । स्वरे भेदः । समानाधिकरणेन—तक्षकस्य सर्पस्य ।

---

त.] **स्वरे विशेष इति** । 'तत्पुरुषे तुल्यार्थे'ति पूर्वपदप्रकृतिस्वरं बाधित्वा 'थाथा'दिसूत्रेणान्तोदात्तत्वे प्राप्ते तदपवादेन 'तृतीया कर्मणि'त्यनेन पूर्वपदप्रकृतिस्वरे सत्याद्युदात्त इष्टः, षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्तच्च नेष्यत इति भावः। तृपिश्च सकर्मकोऽप्यस्ति' 'पितॄनताप्सींसममंस्त बन्धून्'इति भट्टिप्रयोगात् । तेनाऽस्मात्कर्मणि क्तो नास्तीति न शङ्कनीयम् । **द्विजस्य कुर्वन्कुर्वाण इति** । नेयं घटाद्यपेक्षया षष्ठी, 'द्विजस्य घटं कुर्व'न्निति । तथा हि सत्यसामर्थ्यादेव समासाऽप्रसक्तौ निषेधोऽयं व्यर्थः स्यादतो व्याचष्टे—**किङ्कर इत्यर्थ इति । ब्राह्मणस्य कृत्वेति** । तादर्थ्यरूपसंबन्धस्य सामान्यरूपेण विवक्षायां षष्ठी । ब्राह्मणसंबन्धिनी या क्रिया तदनन्तरमित्यर्थः । **कृदव्ययमेवेति** । 'अनेकमन्यपदार्थे'इति सूत्रे 'सर्वपश्चा'दिति भाष्यप्रयोगादिति भावः । **इत्यादीति** । तथा च भट्टिः प्रायुङ्क्त—'यत्कृतेऽरीनिग्रहीमः' । 'आदेयाः किङ्करास्ते भोगाः कुम्भकर्ण ! त्वया विना' इति । **रक्षित इति** । कैयटहरदत्तौ त्वव्ययप्रतिषेधे 'वृक्षस्योपरी'त्युदाहरन्तावकृदव्ययेनापि निषेधं मन्येते, तौ च प्रागुक्तभाष्यप्रयोगविरोधादुपेक्ष्याविति भावः। **तव्यता तु भवत्येवेति** । सूत्रे निरनुबन्धग्रहणादिति भावः । **स्वकर्तव्यमिति** । कर्तृषष्ठ्या समासः। **स्वरे भेद इति** । कृदुत्तरपदप्रकृतिस्वरेण तित्स्वरस्यावस्थानादन्तस्वरित इष्टः । तव्येन तु समासे मध्योदात्तत्वं स्यात्तच्च नेष्यत इति

---

बा.] वापि न समासः । 'फलसुहित'मिति कथं समास इत्यत आह—**तृतीयासमासस्त्विति** । करणत्वविवक्षायां तृतीया । 'कर्तृकरणे कृता बहुल'मिति समास इति भावः । तर्हि सुहितयोगे षष्ठीसमासनिषेधो व्यर्थ इत्यत आह—**स्वरे विशेष इति** । तृतीयासमासे 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरः । षष्ठीसमासे तु 'समासस्ये'त्यन्तोदात्तत्वमिति फलभेद इति भावः । **सदिति** । सद्योगे षष्ठीसमासनिषेध उदाह्रियत इत्यर्थः । 'तौ स'दिति शतृशानचोः सदिति संज्ञा वक्ष्यते । ननु 'द्विजस्य कुर्व'न्निति न कर्मणि षष्ठी, 'न लोके'ति निषेधात् । नापि 'द्विजस्य घटं कुर्व'न्निति घटाद्यपेक्षया शेषषष्ठी, तर्हि सापेक्षत्वेनाऽसामर्थ्यात्कुर्वन्नित्यनेन समासाऽप्रवृत्तेरित्यत आह—**किङ्कर इत्यर्थ इति** । द्विजं परिचरन्नित्यर्थ इति यावत् । कृञ्धातुरिह परिचरणे वर्तत इति फलितम् । **अव्ययमिति** । 'उदाहरणं वक्ष्यते'इति शेषः । **पूर्वोत्तरेति** । सत्तव्याभ्यां कृद्ग्रहणमित्यर्थः । 'अनेकमन्यपदार्थे' इति सूत्रभाष्ये 'सर्वपश्चा'दिति प्रयोगश्चेह लिङ्गम् । **तव्य इति** । उदाहरणं वक्ष्यते इत्यर्थः। **ब्राह्मणस्य कर्तव्यमिति** । 'अर्हे कृत्यतृचश्च' 'तव्यत्तव्यानीयरः' इति कृत्यस्तव्यः । 'कृत्यानां कर्तरि वे'ति षष्ठी । **तव्यता तु भवत्येवेति** । 'षष्ठीसमास'इति शेषः । तकारानुबन्धरहितस्यैव तव्यस्य सूत्रे ग्रहणात्तव्यतो न ग्रहणमिति भावः । **स्वकर्तव्यमिति** । स्वस्य कर्तव्यमिति विग्रहः । 'कृत्यानां कर्तरि वे'ति षष्ठी । अत्र तव्यता योगात्समासनिषेधो नेति भावः । ननु तव्यत्प्रत्ययमाश्रित्य 'ब्राह्मणकर्तव्य'मिति समाससंभवात्किं तव्ययोगे तन्निषेधेनेत्यत आह—**स्वरे भेद इति** । तव्यति कृते कृदुत्तरपदप्रकृतिस्वरः, तव्ये तु नेति फलभेद इति भावः । **समानाधिकरण इति**। समानाधिकरणेन षष्ठ्यन्तं न समस्यते इत्यत्रोदाहरणं वक्ष्यत इत्यर्थः । **तक्षकस्य सर्पस्येति** । अत्र समासे सति पुनः समासात् षष्ठ्युत्पत्तौ तक्षकसर्पस्येति न भवतीत्यर्थः । ननु षष्ठीसमासस्य निषेधेऽपि 'विशेषणं विशेष्येणे'ति कर्मधारयसमासो दुर्वारोऽतः किं षष्ठी-

---

शे.] तत्रैषां गुणवचनत्वव्यवहारोऽपि, स तु तत्साहचर्यात् । अन्यथा धनमित्युपक्रम्य 'धनमेको गुणः, अपत्यमेको गुणः' इत्यपि भाष्योक्तेः 'चैत्रधनम्' 'चैत्रापत्यम्' इत्यादि न स्यादिति वदन्ति । सूत्रे सुहितेति भावे क्तः, तेन फलानां तृप्तिरित्यादावपि निषेधस्तदाह—तृप्त्यर्था इति । तृतीययेति । तत्र करणत्वेन भानं, षष्ठीसमासे संबन्धत्वेनेति भावः । भेदविशेषमप्याह—स्वरे विशेष इति । तृतीयासमासे 'तृतीया कर्मणि'इति पूर्वपदकृतिस्वरः थाथादिस्वरापवादः । षष्ठीसमासे त्वन्तोदात्तः। तृप्त्यर्थानां सकर्मकत्वात्कर्मणि क्तः।

द्विजस्येति । कुर्वन्नित्यपेक्षया न कर्मणि षष्ठी, 'न लोके'ति निषेधात्; नापि घटापेक्षया, असामर्थ्यात्समासानापत्तेः, किं तु शेषे इत्याह—किंकर इत्यर्थ इति । रक्षित इति । अत एव 'सर्वपश्चात्'इति भाष्यप्रयोगः सङ्गच्छते । प्रकृतसूत्रभाष्येऽपि अकृदव्ययैरुच्चैरादिभिरसामर्थ्येन समासाऽभावमुक्त्वा कृदव्ययमेवोदाहृतम् । तेनाऽन्याव्ययैः सति सामर्थ्ये समास इष्ट इति गम्यते ।

परे तु द्विजस्य कुर्वन्कृत्वेत्यादौ कारकषष्ठ्या निषेधात् कटाद्यपेक्षया शेषषष्ठ्यां त्वसामर्थ्यात्समासप्राप्तिरेव नेत्याशङ्क्य द्विजस्य द्विषन्पुरा सूर्यस्योदेतोरित्यादौ द्विषः शतुर्वावचनं तोसुन्कसुनोरप्रतिषेध इति कारकषष्ठीसत्त्वात्तत्रोदाहृतं भाष्ये । तस्मादीदृशे कर्मणः शेषत्वविवक्षायाः, तादर्थ्यस्य संबन्धत्वविवक्षायाश्चाऽभाव एव । पाणिनितात्पर्यनिर्णयायैव भाष्यकृतः प्रवृत्तेरित्याहुः । स्वकर्तव्यमिति । कर्तृषष्ठ्या समासः । तक्षकस्येति । परिनिष्ठितसमानाधिकरणषष्ठ्या समासः । अत्र परत्वात्समानाधिकरणसमासं बाधित्वा षष्ठी-

विशेषणसमासस्त्विह बहुलग्रहणान्न । गोर्धेनोरित्यादिषु 'पोटायुवती'त्यादीनां विभक्त्यन्तरे चरितार्थानां परत्वा-द्बाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन वार्यते ॥ क्तेन च पूजायाम् ।२।२।१२। 'मतिबुद्धी'ति सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते । राज्ञां मतो बुद्धः पूजितो वा । 'राजपूजित' इत्यादौ तु भूते क्तान्तेन सह

त.] भावः । सोऽप्यनेनेति । षष्ठीसमासेन 'पोटायुवती'ति समासो वारितः, सोऽपि षष्ठीसमासः 'पूरणगुणे'त्यनेन वार्यत इत्यर्थः । क्तेन च पूजायाम् । सूत्रे उपलक्षणं पूजाग्रहणं, व्याख्यानादित्याह—मतिबुद्धीति । राज्ञामिति । 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी । भूत इति । न च तक्रकौण्डिन्यन्यायेन मत्यादिभ्यः क्तस्य वर्तमानकालो

बा ] समासनिषेधेनेत्यत आह—विशेषणसमासस्त्विति । ननु षष्ठीसमासनिषेधसामर्थ्यादेवात्र कर्मधारयो न भवि-ष्यति, तत्किमगतिकगत्या बहुलग्रहणाश्रयणेन ? । न च कर्मधारयस्वर एव यथा स्यान्नतु षष्ठीसमासस्वर इत्येतदर्थः षष्ठी-समासनिषेध इति वाच्यम्, उभयथापि 'समासस्ये'त्यन्तोदात्तत्वस्याऽविशिष्टत्वादिति चेत्, मैवम्- कर्मधारये हि सति 'गमनस्य श्रेयस' इत्यादौ 'अज्यावमकन्यापवत्सु भावे' इति पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे त्वन्तोदात्तत्वं स्यात्, तन्मा भूदित्येतदर्थं षष्ठीसमासनिषेध आवश्यक इति समासनिषेधस्य चरितार्थत्वान्न तस्य विशेषणसमासनिवृत्तिसामर्थ्यमिति बहुलग्रहणमाश्रितम् । न चैवमपि तक्षकः सर्प इति प्रथमान्तविग्रहे कर्मधारये सति 'तक्षकसर्पस्ये'ति दुर्निवारमिति वाच्यं, निषेधसामर्थ्यादेव प्रथमान्तकर्मधारयमाश्रित्य तक्षकसर्पस्येत्येवंजातीयकप्रयोगाऽभावोन्नयनात् । अथ समाना-धिकरणे निषेधे उदाहरणान्तरमाह—गोर्धेनोरिति । गोर्धेनोरित्यादिषु षष्ठीसमासः प्राप्तः, सोऽप्यनेन वार्यत इत्य-न्वयः । आदिना यूनः खलतेरित्यादिसङ्ग्रहः । ननु षष्ठीसमास एवात्र न प्रसज्यते, 'पोटायुवति', युवा खलती'त्यादि-विशेषविहितकर्मधारयेणाऽत्र परस्यापि षष्ठीसमासस्य बाधितत्वादित्यत आह—पोटायुवतीत्यादि । 'पोटायुवति', 'युवा खलती'त्यादिविधयो 'गौर्धेनुः' 'युवा खलति'रित्यादिषु प्रथमाविभक्त्यन्तेषु सावकाशाः । षष्ठीसमासस्तु 'राज्ञः पुरुषः' इत्यादावसमानाधिकरणे सावकाशः । 'गोर्धेनोः', 'यूनः खलते'रित्यादिषूभयं प्राप्तम् । तत्र 'पोटायुवति,' 'युवा खलती'त्यादिविधीन् बाधित्वा षष्ठीसमासः प्राप्तः, सोऽप्यनेन समानाधिकरणेनेति निषेधेन वार्यत इत्यर्थः । न च निषेधसामर्थ्यादेव पोटायुवतीत्यादिसमासोऽपि बाध्यतामिति वाच्यं, षष्ठीसमासे गोर्धेनोरित्यादावन्यतरस्य पूर्वनिपातः, 'पोटायुवती'त्यादिसमासे तु गोयुवादिशब्दस्यैवेति फलभेदस्य स्पष्टत्वात् । समानाधिकरणेन निषेधश्चायं क्वाचित्क एव, अन्यस्य पदस्यार्थ इत्यर्थेऽन्यपदार्थ इति निर्देशात् । तेन 'नीलोत्पलस्य गन्ध' इत्यादिः सिद्धः । क्तेन च । अत्र पूजा-ग्रहणं 'मतिबुद्धिपूजार्थेभ्यश्चे'ति सूत्रोपलक्षणं । तदाह—मतिबुद्धीति सूत्रेणेति । राज्ञां मतो बुद्धः पूजितो

शे.] समासः प्राप्तः । 'कटोऽपि कर्म, भीष्मादयोऽपि' इति पक्षेऽपि परस्परान्वय एवेति नाऽसामर्थ्यम् । क्रियान्वयनियमश्च न साक्षादेव, किं तु यद्द्वारा कारकत्वं तद्द्वारकोऽपीत्युक्तम् । अत एवैतन्निषेधसार्थक्यं तत्पक्षे । न च—'समानाधिकरणमर्थवत्' इत्यसामर्थ्यम्, समानाधिकरणाधिकारे 'समानमध्यमध्यमवीराश्च' इति पाठेन तस्य समानाधिकरणाधिकारस्थसमासाऽविषयत्वेऽप्यन्यत्राऽप्रवृत्ती मानाऽभावात्—इति वाच्यम्, 'अधात्वभिहित'मित्युक्त्या धातूत्तरप्रत्ययेन कर्माभिधाने यजुषः पीयमानस्येत्याद्यर्थसावश्यकत्वात् । स्पष्टश्चेदं भाष्ये । समर्थसूत्रभाष्योक्तेः प्रकरणान्तरस्थे 'इसुसोः' इति षत्वेऽपि तत्प्रवृत्तिरित्यन्यत् । ननु षष्ठीसमासस्य निषेधेऽपि विशेषणसमासोऽत्र दुर्वार इति निषेधे फलाऽभावोऽत आह—विशेषणसमासस्त्विति । 'विशेषणं विशेष्येण' इत्युभयोपादानेन तत्तावच्छेदकधर्मयोः परस्परं व्यभिचार एव विशेषणसमासप्रवृत्तिरिति तु न युक्तम्, कैलासाद्रिरित्यादौ समासानापत्तेः । अत एवोभयोपादानं स्पष्टार्थमिति कैयटः । इह—तक्षकस्य सर्पस्येत्यादौ । तयोः समासयोरत्र फले विशेषाऽभावादिति भावः । एवं प्रथमान्तेन समास इति पक्षेऽपि षष्ठ्यन्ततत्प्रयोगाऽभाव एवानभिधानादिति बोध्यम् । एतच्च भाष्यवृत्त्युदाहृतप्रयोगविषयम् । अत एवान्यस्य पदस्यार्थे इत्यर्थकः 'अन्यपदार्थे' इति सूत्रप्रयोगः सङ्गच्छते । एवञ्च 'नीलोत्पलस्य गन्धः' इत्यादि साध्वेव । निषेध-सामर्थ्यादिति तु नोक्तम् । 'गमनस्य श्रेयसः' इत्यादौ कर्मधारये 'अज्यावमकन्यापवत्सु भावे कर्मधारये' इत्यनेन पूर्वपदप्रकृतिस्वरः, षष्ठीसमासे त्वन्तोदात्तत्वमिति भेदेन तत्सार्थक्यात् । फलान्तरमप्याह—गोर्धेनोरिति । तत्र हि षष्ठीसमासे गुणप्रवृत्तिनिमित्तकत्वे-नाऽप्रधानत्वात्प्रथमानिर्दिष्टत्वाच्च धेनोः पूर्वनिपातो, विशेषणसमासे तु गोरिति भेद इति भावः । आदिना भोज्यस्योष्णस्येत्यादि-सङ्ग्रहः । ये तूपसर्जनसञ्ज्ञामन्वर्थां नाश्रयन्ते, तेषां षष्ठीसमासे पूर्वनिपाताऽनियम इति तद्वारणाय निषेधो, विशेषणसमासस्तु स्यादे-वेति कैयटः । परे तु 'प्रथमानिर्दिष्टम्' इत्यादिसूत्रभाष्योक्तरीत्या 'षष्ठी' इति सूत्रे प्रत्यासत्त्या येन सुबन्तेन समासस्तदर्थनिरूपित-सम्बन्धावर्थकषष्ठ्या ग्रहणम् । एवञ्च प्रकृते न समासप्राप्तिरिति समानाधिकरणग्रहणं व्यर्थमेव । ध्वनितश्चेदमत्र भाष्ये । तथा च भाष्यम्—'समानाधिकरणे किमुदाहरणम् ?, एकदेश्याह—राज्ञः पाटलिपुत्रकस्य । प्रष्टाऽऽह—नैतदस्ति । असामर्थ्यादत्र न भविष्यति । उक्त आशयः । उदाहरणवाद्येकदेश्याह—कथमसामर्थ्यम् ? । प्रष्ट्रेकदेश्याह—समानाधिकरणमसमर्थवदिति । उदाहरणवाद्येकदेश्याह—अधात्वभिहितमिति । तच्छेपास्सर्पिषः पीयमानस्येत्युदाहरणम्' इति । उपसर्जनसञ्ज्ञासूत्रस्थभाष्यैकवा-

तृतीयान्तस्य समासः । **अधिकरणवाचिना च** ।२।२।१३। [अधिकरणवाचिना च] क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा ॥

**कर्मणि च** ।२।२ १४। 'उभयप्राप्तौ कर्मणी'ति या षष्ठी सा न समस्यते। आश्चर्यो गवां दोहोऽगोपेन ॥

---

त.] भूतकालतां बाधंत इति वाच्यं, 'तेनैकदि'गित्यतः 'तेन' इत्यधिकारे 'उपज्ञाते' इति निर्देशेन भूतकालस्याऽबाधज्ञापनात् । 'उपज्ञाते' इत्यत्र हि भूते क्तो, न तु वर्तमाने । अन्यथा 'क्तस्य च वर्तमाने' इति षष्ठीविधानादुपज्ञातशब्दस्य तेनेति तृतीयायोगो न स्यात् । न चैवमपि ज्ञानार्थेष्वेव ज्ञापकत्वमस्त्विति वाच्यं, 'पूजितो यः सुरासुरैः' इति प्रयोगानुरोधेन सामान्यविषयज्ञापकत्वस्यैव न्याय्यत्वात् । अन्ये तु कारकषष्ठ्या एव समासनिषेधोऽयम्, शेषषष्ठ्या तु समासः स्यादेवेत्याहुः । एतेन 'कलहं स राममहितः कृतवा'निति भट्टिप्रयोगो व्याख्यातः । 'राममहितः स कलहं कृतवा'नित्यन्वयः । **अधिकरणवाचिना च** । 'वाचि'ग्रहणं चिन्त्यप्रयोजनमिति हरदत्तादयः । **इदमेषामिति** । 'क्तोऽधिकरणे चे'ति क्तः । 'अधिकरणवाचिनश्चे'ति कर्तरि षष्ठी । 'अधिकरणे चे'त्येव सिद्धे सूत्रद्वयेऽपि 'वाचि'ग्रहणं स्पष्टार्थमित्याहुः । ननु 'किंवृत्तं' 'यद्वृत्त'मित्यत्र न कर्मणि क्तः, वृतेरकर्मकत्वात् । तथा चाधिकरणक्तान्तेन कथमिह समास इति चेत् । मैवम् । नायमधिकरणे क्तः, किं तु 'गत्यर्थाकर्मके'ति कर्तरि । किंवा वृत्तं निष्पन्नमित्यर्थः ।

**कर्मणि च** । क्तेनेति नानुवर्तते, 'क्तेन च पूजाया'मिति निषेधवैयर्थ्यप्रसङ्गात् । षष्ठी त्वनुवर्तते, किंतु सापि या काचित्कर्मणि षष्ठी न गृह्यते । 'अपां स्रष्टे'त्यादावनेनैव सिद्धौ 'तृजकाभ्यां कर्तरी'ति निषेधवैयर्थ्यापत्तेः । किं च 'इध्मव्रश्चनः' इत्यादौ समाससिद्धये वचनं कर्तव्यं स्यात् । न च 'कृद्योगलक्षणा षष्ठी समस्यते'इति वार्तिकमस्त्वेवेति वाच्यं, तस्य सिद्धान्ते प्रत्याख्यानात् । ततश्च निपातानामनेकार्थत्वादितीत्यर्थे चशब्दोऽयं; तदाह—**कर्मणीति या षष्ठीति** । सप्तम्येकवचनान्तं पदमुच्चार्य या षष्ठी विहिता परिशेषिता वेत्यर्थः । नियमसूत्राणां विधिरूपेण निषेधरूपेण वेति द्वेधा प्रवृत्तेः स्वीकृतत्वात् । **गवां दोह इति** । 'अगोपेने'त्युपन्यासस्त्विह उभयप्राप्तिप्रदर्शनार्थः । अथ कथं 'शब्दानुशासन'मिति ? । अत्र व्याचख्युः—शब्दानामितीयं षष्ठी 'कर्तृकर्मणो'रिति विहिता, न तु 'उभयप्राप्तौ' इत्यनेन, आचार्यस्य कर्तुः वस्तुतः सत्त्वेऽपीहानुपादानात् । 'कृत्वोर्थप्रयोगे–' इत्यतः 'प्रयोगे' इत्यनुवर्तनात्कर्तृकर्मणोरुपादान एवायं नियम इति स्वीकारात् । 'आश्चर्यो गवां दोहोऽगोपेने'त्यत्र हि आश्चर्यं प्रतिपाद्यं, तच्च यदशिक्षितो दोग्धा दुर्दोहा गावश्च दोग्धव्यास्तदैव निर्वहति न त्वन्यथा । अतः कर्तृकर्मणोर्विशिष्योपादानादस्तूभयप्राप्तिः, इह तु 'शब्दानामिदमनुशासनं, न त्वर्थाना'मित्यर्थनिवृत्तिपरं वाक्यं, न तु कर्तृविशेषनिवृत्तिपरमतो नास्त्युभयप्राप्तिः । अस्तु वा यथाकथंचिदुभयप्राप्तिः, तथापि न क्षतिः, 'उभयप्राप्तौ' इति सूत्रे 'अविशेषेण

---

बा.] **वेति** । राज्ञा इष्यमाणो ज्ञायमानः पूज्यमान इति क्रमेणार्थः । 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति षष्ठी । नन्वेवं सति 'राजपूजितः' 'राजमतः' 'राजबुद्ध' इति कथं समास इत्यत आह—**राजपूजित इत्यादावपीति । अधिकरण** । शेषपूरणेन सूत्रं व्याचष्टे—**क्तेनेति । इदमेषामासितं शयितं गतं भुक्तं वेति** । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यधिकरणे क्तः । 'अधिकरणवाचिनश्चे'ति षष्ठी । **कर्मणि च** । क्तेनेति निवृत्तम् । कर्मणि या षष्ठी सा न समस्यते इत्यर्थे अपां स्रष्टेत्यादावपि निषेधसिद्धेः 'तृजकाभ्यां कर्तरी'ति व्यर्थं स्यात् । किं-तु-चकार इतिपर्यायः । कर्मणीति सप्तम्येकवचनमुच्चार्य या षष्ठी विहिता सा न समस्यत इत्यर्थः । फलितमाह—**उभयेत्यादिना । आश्चर्य इति** । यद्यप्यत्र 'कर्तृकर्मणोः कृती'त्येव कर्मणि षष्ठी, न तु 'उभयप्राप्तौ कर्मणी'ति सूत्रेण, तस्य सूत्रस्य कर्मण्येव षष्ठी, न तु कर्तरीति नियमपरत्वात्, तथापि नियमसूत्राणां विधिरूपेण निषेधरूपेण च द्वेधा प्रवृत्तेः स्वीकाराच्च दोषः । 'शब्दानुशासन'मित्यत्र तु वस्तुत आचार्यस्य कर्तृत्वेऽपि तस्यानुपादानादुभयप्राप्तावित्यस्याऽप्रवृत्तेर्नायं निषेधः, 'कृत्वोऽर्थप्रयोगे' इत्यनुवृत्त्या कर्तृकर्मणोरुभयोः प्रयोग एव तस्य प्रवृत्तेः । यद्वा शेषे विभाषा अविशेषेण विभाषेत्याश्रित्य उभयप्राप्तावित्यभावपक्षे 'कर्तृकर्मणोः कृती'त्येव षष्ठ्याः प्राप्ते-

---

शे.] वचतयाऽस्यैवं व्याख्यानस्यैवौचित्यादित्याहुः । व्याख्यानात् 'पूजायाम्'इति सूत्रोपलक्षणमित्याह—**मतिबुद्धीति । राज्ञां मत** इति । 'क्तस्य च वर्त्तमाने'इति षष्ठी । अयञ्च कारकषष्ठीशेषषष्ठ्योरुभयोरपि समासस्य निषेधः । तयोः समासयोः थाथादिस्वर-समासस्वराभ्यामन्तोदात्तस्यैव प्राप्त्या फले विशेषाऽभावात्; तद्ध्वनयन्नाह—**भूते क्तान्तेनेत्यादि** । 'न च वर्त्तमाने क्तो भूते क्तस्य बाधकस्तक्रकौण्डिन्यन्यायादिति वाच्यम्, भूते क्तेऽवश्यं प्राप्ते वर्त्तमाने क्तस्यानारम्भात् । भूतत्ववर्तमानत्वयोर्युगपद्विवक्षाया असम्भवात् । दधिदानेऽवश्यं प्राप्ते तक्रदानारम्भा[illegible] इति बोध्यम् । **कर्मणि च** । अस्य क्तेन न सम्बन्धः, पूजायां प्रतिषेधानर्थक्यात्; तदाह—**कर्मणीति या षष्ठीति** । चशब्द इतीत्यस्यार्थे इति भाव । एवञ्च क्तस्यानुवृत्तिरेव ।

**तृजकाभ्यां कर्तरि** ।२।२।१५। कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः । कर्तरि किम् ?। इक्षूणां भक्षणमिक्षुभक्षिका । पत्यर्थभर्तृशब्दस्य तु याजकादित्वात्समासः । भूभर्ता । कथं तर्हि 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलह' इति ?। शेष षष्ठ्या समास इति कैयटः । **कर्त्तरि च** ।२।२।१६। कर्तृशेषषष्ठ्या अकेन न समासः । भवतः शायिका । नेह तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावात् ॥ **नित्यं क्रीडाजीविकयोः** ।२।२।१७। एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते । उद्दालकपुष्पभञ्जिका । क्रीडाविशेषस्य संज्ञा । 'संज्ञाया' मिति भावे ण्वुल् । जीविकायां—दन्तलेखकः । तत्र क्रीडायां

त.] विभाषे'ति पक्षस्यापि विद्यमानतया नियमाऽप्रवृत्तिपक्षे 'आचार्यस्य शब्दानुशासनमि'ति प्रयोगसम्भवात् । यदि वा शेषलक्षणा षष्ठीति व्याख्यायते, तदा तु समासनिषेधशङ्कैवात्र नास्तीति । **तृजकाभ्याम्** । इह 'कर्तृषष्ठ्या तृजकाभ्या'मिति वृत्तिकारव्याख्यानमयुक्तमिति ध्वनयन्नाह—**कर्त्रर्थतृजकाभ्यामिति** । 'कर्तृ'ग्रहणं तृजकयोरेव विशेषणमिति युक्तं, तयोः श्रुतत्वात्, न तु षष्ठ्या इति भावः । यद्यपि 'कर्तरी'ति तृचो न विशेषणमव्यभिचारात्, तथाप्यकस्य विशेषणत्वेन तदावश्यकमित्याह—**इक्षुभक्षिकेति** । 'पर्यायार्हणे'ति भावे ण्वुच् । कर्मणि षष्ठ्या समासः । ननु 'वज्रस्य भर्ते'त्युदाहरणमयुक्तम्, भर्तृशब्दस्य याजकादित्वेन समासाऽवश्यम्भावादित्याशङ्क्याह-**पत्यर्थभर्तृशब्दस्येति** । यद्यपि याजकादिष्वर्थविशेषविशिष्टतया भर्तृशब्दो न पठितः, तथापि रूढेर्बलीयस्त्वात्पतिपर्यायस्यैव तत्र ग्रहणम्, न तु यौगिकस्येति भावः । **शेषषष्ठ्येति** । न्यासकारस्तु तृन्नन्तमेतत्, 'न लोके'ति निषेधस्त्वनित्यः, 'त्रकाभ्या'मिति वक्तव्ये तृचः सानुबन्धग्रहणाज्ज्ञापकादित्याह । केचित्तु—'जनिकर्तुः', 'तत्प्रयोजको हेतुश्चे'ति निर्देशादनित्योऽयं समासनिषेध इत्याहुः । तन्मन्दम् । शेषषष्ठीसमासेनोक्तनिर्देशोपपत्तेः । **नेह तृजिति** । न चोत्तरार्थत्वं शङ्क्यम् । तृच्क्रीडाजीविकयोर्नास्तीति जयादित्येनोक्तत्वादिति भावः । वामनस्तु—'अके जीविकार्थे' इत्यत्र 'अके' इति किम् ?। 'रमणीयकर्ते'ति

बा.] नायं निषेध इत्यलम् । **तृजकाभ्यां कर्तरि** । कर्तरीति तृजकयोरेव विशेषणं, श्रुतत्वात्, नतु षष्ठ्याः । तदाह—**कर्त्रर्थतृजकाभ्यामिति** । **अपां स्रष्टा वज्रस्य भर्तेति** । 'ण्वुल्तृचौ' इति कर्तरि तृच् । 'कर्तृकर्मणोः' इति कर्मणि षष्ठी । एवमोदनस्य पाचक इति पचेः कर्तरि ण्वुल् । अकादेश इति विशेषः । **इक्षुभक्षिकेति** । 'स्त्रियां क्ति'न्नित्यधिकारे धात्वर्थनिर्देशे ण्वुल् । कर्मणि षष्ठ्या समासः । 'कर्मणि चे'ति निषेधस्तु न, कर्तुः प्रयोग एव तत्प्रवृत्तेः । ननु भुवो भर्ता भूभर्तेत्यत्रापि निषेधः स्यात् । न च भर्तृशब्दस्य याजकादौ पाठाद्भवत्येव षष्ठीसमासः, 'याजकादिभिश्चे'त्यस्य प्रतिप्रसवार्थत्वादिति वाच्यम्, एवं तर्ति 'वज्रस्य भर्ते'त्यत्रापि समासप्रसङ्गादित्यत आह—**पत्यर्थेति** । याजकादौ पत्यर्थकस्यैव भर्तृशब्दस्य ग्रहणं, व्याख्यानात् । ततश्च 'वज्रस्य भर्ते'त्यत्र 'याजकादिभिश्चे'ति समासो नेति भावः । **कथं तर्हीति** । त्रयाणां भुवनानां समाहारस्त्रिभुवनं । 'तद्धितार्थे'ति द्विगुः । 'अकारान्तोत्तरपदो द्विगुः स्त्रिया'मिति तु न भवति, 'पात्राद्यन्तस्य ने'त्युक्तेः । 'त्रिभुवनस्य विधाते'ति तृचो योगे कथं कर्मणि षष्ठ्या समास इत्याक्षेपः । परिहरति—**शेषषष्ठ्येति** । प्रत्यासत्त्या कारकषष्ठ्या एवायं निषेध इति बहुष्विति सूत्रे कैयट आहेत्यर्थः । **कर्तरि च** । कर्तरीत्येतत्षष्ठीत्यनुवृत्तेऽन्वेति । तदाह-**कर्तरि षष्ठ्या इति** । **अकेनेति** । 'तृजकाभ्यां कर्तरी'त्यतस्तदनुवृत्तेरिति भावः । **भवतः शायिकेति** । 'स्त्रियां क्ति'न्नित्यधिकारे धात्वर्थनिर्देशे ण्वुल्, अकादेशः, टाप् । 'कर्तृकर्मणो' रिति कर्तरि षष्ठी । अत्र अकस्य कर्त्रर्थकत्वाऽभावात् 'तृजकाभ्या'मित्यस्य न प्राप्तिः ।

ननु पूर्वसूत्रे 'तृजकाभ्या'मिति समस्तपदोपादानात्कथमिहाऽकस्यैवानुवृत्तिः, न तु तृच इत्यत आह—**नेहेति** । **तद्योगे इति** । तृचः कर्तरि विहितत्वेन 'स्रष्टा कृष्ण' इत्यादौ कर्तुः कृताभिहिततया तत्र कर्तरि षष्ठ्या एवाऽप्रसक्त्या तत्समासनिषेधस्य 'शशशृङ्गेण कण्डूयनं न कर्तव्य'मितिवदसंभवपराहतत्वादित्यर्थः । **नित्यं क्रीडा** । **उद्दालकपुष्पभञ्जिकेति** । उद्दालकः=श्लेष्मातकः, तस्य पुष्पाणि, तेषां भञ्जनमित्यस्वपदविग्रहः । **संज्ञायामिति** । 'स्त्रियां

शे.] **इक्षुभक्षिकेति** । धात्वर्थनिर्देशे ण्वुल् । कर्मणि षष्ठ्या समासः । कर्तुः प्रयोगाऽभावेनोभयप्राप्तावित्यस्याऽप्राप्तेः 'कर्मणि च'इति निषेधो न शङ्क्यः । 'पर्यायार्हणोत्पत्ति' इति भावे ण्वुजित्यन्ये । **पत्यर्थेति** । प्रसिद्धत्वेन तस्यैव तत्र ग्रहणादिति भावः । **कैयट इति** । प्रत्यासत्त्या कारकषष्ठ्या एव तन्निषेध इति भावः । 'गुणविशेषक' इति भाष्यप्रतीकमुपादाय'बहुषु'इति सूत्रे कैयटे एतत् ।

**कर्त्तरि च** । अत्र सामर्थ्यात् 'कर्त्तरि'इति षष्ठ्या एव विशेषणम् । **भवतः शायिकेति** । 'पर्याये'ति ण्वुच् । धात्वर्थनिर्देशे ण्वुल् वा । **नित्यं क्रीडा** । जीविकायां निषेधस्य सिद्धेर्नित्यग्रहणाच्च विधिरयम् । दन्तानां लेखितेत्यादौ जीविकायां तृचोऽनभिधानात्, क्रीडायां तृचोऽसम्भवाद्विच्छिन्नत्वाच्च तस्यात्राऽसम्बन्ध इत्याह—**अकेनेति** । 'अके जीविकार्थे'इत्यत्राकग्रहणं स्वर्थग्रहणत्वस्पष्टार्थम् । प्रतिपदोक्तत्वेनैतद्विहितसमास एव तत्प्रवृत्तिसिद्धेः । **सञ्ज्ञायामितीति** । यद्यप्यत्र 'धात्वर्थनिर्देश' इत्येव सिद्धं 'सञ्ज्ञायाम्'

विकल्पे, जीविकायां 'तृजकाभ्यां कर्तरी'ति निषेधे प्राप्ते वचनम् ॥ **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।२।२।१।** अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकदेशिना किम्?। पूर्वं नाभेः कायस्य। एकाधिकरणे किम्?।

त.] प्रत्युदाहरजीविकायां तृचमिच्छति। **नित्यंक्री।** **भावे ण्वुलिति।** भञ्जनं भञ्जिका। 'पुष्पाणा'मिति कर्मणि षष्ठी। 'भावे' इत्युपलक्षणम्, अधिकरणे ण्वुल्यपि बाधकाभावादिति मत्वा 'संज्ञाया'मिति सूत्रे कृदन्ते मनोरमायामुक्तम्-'उद्दालकः श्लेष्मातकस्तस्य पुष्पाणि भज्यन्ते यस्यां क्रीडायां सा उद्दालकपुष्पभञ्जिके'ति। **पूर्वापर।** 'एकदेश'शब्दोऽवयवे रूढः। अतएव तस्य कर्मधारयत्वेऽपि ततो मत्वर्थीयः। 'कृष्णसर्पवा'नित्यत्रेव 'न कर्मधारयान्मत्वर्थीयः' इति निषेधस्य रूढेष्वप्रवृत्तेः। यद्यपीह 'एकगोपूर्वादि'ति ठञ् प्राप्तः, तथाप्यत एव निर्देशादिनिः। तदेतदाह-**अवयविनेति।** नन्विदं सूत्रं व्यर्थं, 'पूर्वकाय' इत्यादिप्रयोगाणां कर्मधारयेणैव सिद्धेः, 'ऊर्ध्वकाय' इतिवत्, 'समुदाये हि वृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्ते' इति न्यायादत आह-**षष्ठीसमासापवाद इति।** तथा च 'कायपूर्व' इत्याद्यनिष्टप्रयोगनिवृत्तये सूत्रमिति भावः। **पूर्वं कायस्येति।** यद्यपि 'अन्यारा'दिति सूत्रे 'दिशि दृष्टः शब्दो दिक्शब्द' इति व्याख्यानेन संप्रत्यदिग्वृत्तिनापि योगे पञ्चमी स्वीकृतेति षष्ठीह दुर्लभा, तथापि 'तस्य परमाम्रेडित'मिति लिङ्गात् 'अवयववाचिदिक्शब्दयोगे पञ्चमी ने'त्युक्तत्वात्षष्ठ्येव भवतीति भावः। **पूर्वं नाभेरिति।** नाभेर्यः पूर्वो भागः स कायस्यावयव इत्यर्थः। 'नाभे'रिति दिग्योगलक्षणा पञ्चमी। तेनाऽत्र पूर्वस्य भागस्य नाभिरवधिः, न त्वेकदेशिनीति नाभ्या सह समासो नेत्यर्थः। कायेन तु स्यादेव 'पूर्वकायो नाभेः' इति। पूर्वशब्दस्य नित्यसापेक्षत्वात्प्रधानत्वाच्च। **पूर्वम्छात्राणा-**

बा.] किन्' इत्यधिकारे 'संज्ञाया'मिति भावे ण्वुलित्यर्थः। अत्र कर्मणि षष्ठ्याः समासः। वस्तुतस्तु 'स्त्रियां क्ति'न्नित्यधिकारे 'धात्वर्थनिर्देशे ण्वु'लिति भावे ण्वुलित्येव युक्तम्। 'संज्ञाया'मिति त्वधिकरणार्थमिति कृदन्ते वक्ष्यते। तथा सति उद्दालकपुष्पाणि भज्यन्ते यस्यां क्रीडायामिति विग्रहः। **जीविकायामिति।** उदाहरणं वक्ष्यत इत्यर्थः। **दन्तलेखक इति।** दन्तानां लेखनेन जीवतीत्यस्वपदविग्रहः। लिखेः कर्तरि ण्वुल्। अकादेशः। जीविका समासगम्या। ननु 'षष्ठी'ति सूत्रेणैवात्र षष्ठीसमाससिद्धेः किमर्थमिदमित्यत आह-**तत्रेति।** **तत्र**=तस्मिन्नुदाहरणद्वये, क्रीडाबोधके 'उद्दालकपुष्पभञ्जिके'त्यत्र विभाषाधिकारात् षष्ठीसमासनिषेधे प्राप्ते, जीविकाबोधके तु 'दन्तलेखक' इत्यत्र 'तृजकाभ्याम्' इति षष्ठीसमासनिषेधे प्राप्ते इदं सूत्रमारब्धमित्यर्थः। **पूर्वापर।** 'पूर्वापराधरोत्तर'मिति समाहारद्वन्द्वात्प्रथमैकवचनम्। एकदेशशब्दोऽवयवे रूढः। एकदेशोऽस्यास्तीत्येकदेशी-अवयवी, तेनेति लभ्यते। **अधिकरणं**=द्रव्यम्। एकमधिकरणम्-एकाधिकरणम्। एकत्वविशिष्टद्रव्ये वर्तमानेनाऽवयविवाचकसुबन्तेन पूर्वापराधरोत्तरशब्दाः सुबन्ताः समस्यन्ते, स तत्पुरुष इत्यर्थः। फलितमाह-**अवयविना सहेत्यादिना।** ननु पूर्वश्चासौ कायश्चेति कर्मधारयेणैव 'पूर्वकाय' इत्यादि सिद्धम्। भक्त्या कायशब्दस्य कायावयववाचित्वेन सामानाधिकरण्योपपत्तेरित्यत आह-**षष्ठीसमासापवाद इति।** पूर्वं कायस्येति विग्रहे 'षष्ठी'ति सूत्रेण समासे सति षष्ठ्यन्तस्य समासविधौ प्रथमानिर्दिष्टत्वात्पूर्वनिपातः स्यात्तन्निवृत्त्यर्थमिदं वचनमित्यर्थः। **पूर्वं कायस्येति।** अत्र पूर्वं कायस्येति विग्रहवाक्यम्। 'अर्ध'मिति गम्यम्। विशेष्याभिप्रायान्नपुंसकत्वम्। 'तस्य परमाम्रेडित'मिति निर्देशादवयववृत्तिदिक्शब्दयोगे पञ्चम्यभावात्षष्ठी। **पूर्वकाय इति।** पूर्वशब्दस्य समासविधौ प्रथमानिर्दिष्टत्वात् पूर्वनिपातः। 'परवल्लिङ्ग'मिति पुंस्त्वमिति भावः। 'यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते' इति 'पारे मध्ये षष्ठ्या वे'त्यत्रोक्तम्। ततश्च एकदेशिसमासाऽभावे षष्ठीसमासो न भवति।

**अपरकाय इति।** अपरं कायस्येति विग्रहः। अपरकायः। उत्तरकायः। **एकदेशिना किमिति।** एकद्रव्यवाचिना पूर्वादयः समस्यन्त इत्येवास्त्वित्यर्थः। **पूर्वं नाभेः कायस्येति।** अत्र 'नाभे'रिति पूर्वशब्देऽन्वेति। दिग्योगे पञ्चमी। नाभ्यपेक्षया यत् पूर्वमर्द्धं तत् कायावयवभूतमित्यर्थः। अत्र नाभिशब्दस्य पूर्वांशेऽन्वयः। अत्र पूर्वस्यांशस्य नाभिरवधिरेव, न त्ववयवी। अतो नाभिशब्देन पूर्वशब्दस्य समासो न

शे.] इति त्वधिकरणार्थमिति कृदन्ते वक्ष्यते, तथापि तदर्थस्य भावेऽपि प्रवृत्तिर्न्याय्या। सञ्ज्ञायां विशेषविहितत्वात्। अचारितार्थ्यो-ऽभावेऽपि तस्य प्रथमं बुद्ध्यारोहेण प्रथमं प्रवृत्तौ नियामकत्वमस्तीत्यन्यत्र प्रपञ्चितम्। 'सञ्ज्ञायामिति ण्वुल्' इत्येव पाठः। उदाहरणेऽ-धिकरणे स इति तत्त्वम्। षष्ठीसमासप्रसञ्जने तदपवादमेकदेशिसमासमाह-पूर्वापरेति। अवयविना त्ववयवापेक्षम्। तद्वाचका-श्चोपस्थितत्वात्पूर्वादय एवेत्याह-**पूर्वादय इति।** अधिकरणं-द्रव्यम्। एकत्वविशिष्टद्रव्ये वर्तमानेनावयववाचकेनेति वाच्योऽर्थः।

पूर्वश्छात्राणाम् । सर्वोऽप्येकदेशोऽह्ना समस्यते । 'संख्याविसाये'ति ज्ञापकात् । मध्याह्नः । सायाह्नः । केचित्तु सर्वोऽप्येकदेशः कालेन समस्यते न त्वह्नैव । ज्ञापकस्य सामान्यापेक्षत्वात् । तेन मध्यरात्रः । 'उपारताः पश्चिमरात्रगोचरा'दित्यादि सिद्धमित्याहुः । अर्द्धं नपुंसकम् ।२।२।२। समांशवाच्यर्द्धशब्दो नित्यं क्लीबे, स

---

त.]मिति । नासौ निर्धारणे षष्ठी, किं तु समुदायसमुदायिसंबन्धे । बहुवचनं तूद्भूतावयवभेदसमुदायविवक्षया । ततश्छात्राणामेकदेशित्वे सत्यप्येकत्ववैशिष्ट्याऽभावान्न समासः । **सर्वोऽपीति** । पूर्वादिभिन्नोऽपीत्यर्थः । **ज्ञापकादिति** । अन्यथा अह्नस्य सायपूर्वत्वं न स्यादिति भावः । **मध्याह्न इति** । 'राजाहःसखिभ्यः' इति टच् । 'अह्नोह्न' इत्यह्नादेशः । अयं चादेशो मध्याह्नसायाह्नशब्दयोरूर्ध्वकायवत्कर्मधारयेण न निर्वहति, तस्यैकदेशिसमासप्रयुक्तत्वात्, अतोऽत्र ज्ञापकाश्रयणं युक्तमेवेति बोध्यम् । **इत्याहुरिति** । न चैवं 'दिनमध्यो' 'रात्रिमध्य' इत्यादि न सिध्येदिति वाच्यम् । ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात् । **अर्धं नपुंसकम्** । खण्डवाच्यर्द्धशब्दो न नित्यनपुंसकः, ग्रामार्द्धो नगरार्द्ध इति यथा । समांशवाची तु नित्यनपुंसकः । स एवेह गृह्यते, 'पूर्वापरे'ति पूर्वसूत्र एवार्द्धशब्दे पठनीये 'अर्ध'मिति योगविभागेन निर्देशान्नपुंसकत्वे लब्धे, पुनर्नपुंसकग्रहणादित्याशयेन व्याचष्टे–**नित्यं क्लीबे स इति** । यो नित्यनपुंसकलिङ्गः स इत्यर्थः । **प्राग्वदिति** । एकत्वविशिष्टेनावयविना समस्यत इत्यर्थः । अन्ये तु व्याचख्युः–'अर्ध'मिति निर्देशादेव नपुंसकत्वे सिद्धे नपुंसकग्रहणं 'सूत्रेषु लिङ्गनिर्देशो न विवक्षितः' इति ज्ञापयितुम् । 'तेन तस्येद'मित्यादि लिङ्गत्रयेऽपि भवतीति । 'अर्धपिप्पली'त्यत्र 'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनसंज्ञायां 'गोस्त्रियो'रिति ह्रस्वः स्यादित्याशङ्क्य समाधत्ते–**अषष्ठ्यन्तवचनमिति** । तेन पिप्पलीशब्दस्याऽनुपसर्जनत्वान्न दोष इति भावः । नन्वेवं पञ्चानां खट्वानां समा-

---

बा.] भवतीत्यर्थः । **पूर्वश्छात्राणामिति** । अत्र छात्रशब्दः छात्रसमुदायपरः । उद्भूतावयवसमुदायापेक्षं बहुवचनम् । अवयवावयविभावसम्बन्धे षष्ठी । छात्रसमुदायस्य पूर्वमर्धमित्यर्थः । अत्र छात्रसमुदायस्य एकत्वेऽपि उद्भूतावयवकतया बहुत्वादेकत्वसंख्यावैशिष्ट्याऽभावान्न समास इति भावः । ननु अह्नो मध्यं मध्याह्न इत्यत्र कथमेकदेशिसमासः, मध्यशब्दस्य पूर्वादिष्वनन्तर्भावादित्यत आह–**सर्वोऽप्येकदेश इति** । पूर्वादिभिन्नोऽपीत्यर्थः । **ज्ञापकादिति** । 'तत्पुरुषस्ये'ति 'अहस्सर्वैकदेशसंख्यातपुण्याच्चे'ति च प्रकृते,–'अह्नोऽह्न एतेभ्यः' इत्येकदेशवाचकात्परस्याऽहन्शब्दस्याऽह्नादेशो विधीयते । ततश्चाह्नः साय इति विग्रहे अवयविवृत्तिना अहन्शब्देन षष्ठ्यन्तेन अवयववृत्तिसायशब्दस्य तत्पुरुषसमासे सति प्रथमानिर्दिष्टत्वात्सायशब्दस्य पूर्वनिपाते सति एकदेशवृत्तिसायशब्दात्परस्याऽहन्शब्दस्याऽह्नादेशे रात्राह्नाहाः पुंसीति पुंस्त्वे'सायाह्न'इति भवति । तस्मात्सप्तम्येकवचने परे 'सङ्ख्याविसाये'ति सायशब्दपूर्वकस्याह्नशब्दस्याऽहन्नादेशविकल्प उक्तः । सायाह्नि, सायाहनि, सायाह्ने इत्युदाहरणम् । तत्र अह्नः साय इति विग्रहे यदि सायशब्दस्य पूर्वार्धप्रविष्टत्वादहन्शब्देन समासो न स्यात् तदा 'षष्ठी' इति सूत्रेण अहन्शब्दस्य षष्ठ्यन्तस्य सायशब्देन समासे सति षष्ठ्यन्तस्यैव समासशास्त्रे प्रथमानिर्दिष्टत्वात् पूर्वनिपाते सति सायशब्दात्परस्याह्नशब्दस्याऽहन्नादेशविधानं निर्विषयं स्यात्, अतः 'सर्वोऽप्येकदेशोऽह्ना समस्यते' इति विज्ञायते इत्यर्थः । **मध्याह्न इति** । अह्नो मध्यमिति विग्रहेऽयं समासः । 'राजाहःसखिभ्यष्टच्' इति टच् । 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः । **सायाह्न इति** । अह्नः साय इति विग्रहः । मध्याह्नवत् । ननु 'सर्वोऽप्येकदेशः कालेन समस्यते' इत्ययुक्तं, 'संख्याविसाये'ति सूत्रेऽहन्शब्दस्यैवोपात्ततया तदितरकालवाचिना सर्वस्यैकदेशस्य समासज्ञापनाऽनुपपत्तेरित्यत आह—**ज्ञापकस्येति** । अहन्शब्देन सह सायशब्दस्य एकदेशिसमासं सिद्धवत्कृत्य सायशब्दादह्नशब्दोपादानात्सर्वेणाप्यवयविवृत्तिकालवाचिना सर्वस्यैकदेशस्य समासो ज्ञाप्यते, ज्ञापकस्य सामान्यापेक्षत्वात्, नत्वहन्शब्देन सायशब्दस्यैव पूर्वार्धप्रविष्टत्वेऽपि समासो ज्ञाप्यत इति भावः । **मध्यरात्र इति** । रात्रेर्मध्यमित्यर्थः । **पश्चिमरात्रेति** । रात्रेः पश्चिममिति विग्रहः । 'अहः सर्वैकदेशे'त्यच्समासान्तः । **अर्धं नपुंसकम्** । अर्धमिति नपुंसकलिङ्गनिर्देशादेव नपुंसकत्वे लब्धे पुनर्नपुंसकग्रहणं नित्यनपुंसकलिङ्गस्य ग्रहणार्थमित्यभिप्रेत्याह—**समांशवाच्यर्धशब्दो नित्यं क्लीबे इति** । 'वर्तते' इति शेषः । 'वा पुंस्यर्धोऽर्धं समेंऽशके' इति

---

शे.]फलितमाह–एकत्वेति । मध्याह्न इति । 'राजाह'इति टच् । 'अह्नोऽह्न' इत्यह्नादेशः । अर्धं न । निर्देशादेव नपुंसकत्वे लब्धे नपुंसकग्रहणं सूत्रनिर्देशे लिङ्गाऽविवक्षाज्ञापनार्थम् । न च समांशवाचिनित्यनपुंसकग्रहणार्थं तत् । 'एओङ्' 'एच इग्'इति सूत्रे एचो ह्रस्वशासने अर्धैकारार्धौकारयोर्विधानमाशङ्क्य 'न वेदे नैव लोकेऽर्ध एकारोऽर्द्ध ओकारो वाऽस्ति'इति भाष्यप्रयोगात्समांशवाचिनोऽपि नित्यनपुंसकत्वाऽभावात् । अशवाचो तु पुंल्लिङ्ग एव । अपूपार्धं ग्रामार्धमित्यादावपि समप्रविभाग एवेत्याहुः । पिप्पल्या

प्राग्वत् ॥ ॐ एकविभक्तावषष्ठ्यन्तवचनम् । एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेधः । तेन 'पञ्चखट्वी'त्यादि सिद्ध्यति । अर्द्धं पिप्पल्याः अर्द्धपिप्पली । क्लीबे किम् ? ग्रामार्द्धः । द्रव्यैक्य एव । अर्द्धं पिप्पलीनाम् ॥ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।२।२।३। एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयं भिक्षाया द्वितीयभिक्षा । एकदेशिना किम् ? । द्वितीयं भिक्षाया भिक्षुकस्य । अन्यतरस्याङ्ग्रहणसामर्थ्याद

त.] हारः पञ्चखट्वीति न सिद्ध्येत्, उपसर्जनसंज्ञानिषेधेन खट्वेत्याकारे ह्रस्वाप्रवृत्तेरदन्तत्वाभावेन 'द्विगोः' इति ङीपोऽप्रवृत्तेरत आह-**एकदेशिसमासविषयकोऽयमिति**। 'पञ्चखट्वी'ति भाष्योदाहरणमेव 'अषष्ठ्यन्ते'त्यस्य संकोचे लिङ्गमिति भावः। **अर्धपिप्पलीति**। परवल्लिङ्गत्वात्स्त्रीत्वम्। **अर्धं पिप्पलीनामिति**। सति समासे 'अर्धपिप्पली'त्येव स्यात्, विशेष्यैक्यात्। 'परवल्लिङ्ग'मिति लिङ्गातिदेशोऽपि वचनातिदेशाऽभावाच्चेति भावः। 'अर्धपिपल्यः' इति प्रयोगस्तु 'अर्धानि पिप्पलीना'मिति विग्रहे असाधुश्चेदपि खण्डसमुच्चये साधुरेव, अर्धं पिप्पल्या अर्धपिप्पली, अर्धपिप्पली च अर्धपिप्पली चेत्यादिविग्रहात्। एकदेशिना किम् ?। अर्धं पशोर्देवदत्तस्य। अत्र देवदत्तः स्वामी, न त्ववयवीति न तेन समासः। इदं सूत्रं 'परवल्लिङ्ग'मित्यत्र भाष्ये प्रत्याख्यातम्। तथा-अर्धपिप्पलीति हि कर्मधारयेण सिद्धम्। 'समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्तन्ते' इति न्यायात्। समप्रविभागादन्यत्र तवाप्येषैव गतिः, 'अर्धाहारः' अर्धोक्तम्' 'अर्धविलोकितम्' इत्यादिप्रयोगदर्शनात्। न च समप्रविभागे षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यम्, षष्ठीसमासस्यापीष्टत्वात्। अतएव कालिदासः प्रायुङ्क्त-'प्रेम्णा शरीरार्धहरां हरस्ये'ति। **द्वितीयतृतीय**। षष्ठीसमासा-

बा.] कोशादिति भावः। अंशसामान्यवाची अर्धशब्दः पुंसि वा नपुंसके वा भवति। समे त्वंशे अर्धशब्दो नपुंसकलिङ्ग एवेत्यर्थः। भाष्ये तु समप्रविभागे नपुंसकलिङ्गोऽर्धशब्दः, अंशसामान्यवाची तु पुंलिङ्ग इत्युक्तम्। **स प्राग्वदिति**। स नित्यनपुंसकलिङ्गोऽर्धशब्दोऽवयविवाचिना समस्यत इत्यर्थः। अर्धशब्दस्य पूर्वाद्यनन्तर्भावात्पूर्वेण न प्राप्तिः।

नन्वर्धं पिप्पल्या अर्धपिप्पलीत्युदाहरणं वक्ष्यति। तत्र अर्धं पिप्पल्याः अर्धपिप्पली, अर्धेन पिप्पल्या अर्धपिप्पल्या, अर्धाय पिप्पल्याः अर्धपिप्पल्यै, अर्धात्पिप्पल्याः अर्धपिप्पल्याः, अर्धस्य पिप्पल्याः अर्धपिप्पल्याः, अर्धे पिप्पल्याःअर्धपिप्पल्यामिति विग्रहेषु पिप्पलीशब्दस्य नियतविभक्तिकतया 'एकविभक्ति चापूर्वनिपाते'इत्युपसर्जनत्वात् 'गोस्त्रियोः' इति ह्रस्वः स्यादित्यत आह—**एकविभक्ताविति**। 'एकविभक्ति चापूर्वनिपाते' इति सूत्रे 'अषष्ठ्यन्त'मिति वक्तव्यमित्यर्थः। ततश्च पिप्पलीशब्दस्य षष्ठ्यन्तत्वान्नोपसर्जनत्वमिति न ह्रस्व इत्यर्थः। नन्वेवं सति पञ्चानां खट्वानां समाहारः समाहारं समाहारेणेत्यादिविग्रहेषु खट्वाशब्दस्य नियतविभक्तिकत्वेऽपि षष्ठ्यन्तत्वादनुपसर्जनत्वात् 'गोस्त्रियो'रिति ह्रस्वाऽभावेऽदन्तत्वाऽभावेन 'द्विगो'रिति ङीबभावे पञ्चखट्वेति स्यात्, पञ्चखट्वीति न स्यादित्यत आह-**एकदेशिसमासेति**। 'अपथं नपुंसक'मिति सूत्रभाष्ये पञ्चखट्वीत्युदाहरणमत्र लिङ्गमिति भावः। **अर्धपिप्पलीति**। 'प्रथमानिर्दिष्ट'मित्यर्धशब्दस्योपसर्जनत्वात्पूर्वनिपातः। पिप्पलीशब्दस्य तु विग्रहे नियतविभक्तिकत्वेऽपि 'एकविभक्तौ' इति निषेधादुपसर्जनत्वाऽभावान्न ह्रस्व इति भावः। **ग्रामार्ध इति**। ग्रामस्याऽर्ध इति विग्रहः। ग्रामस्यांश इत्यर्थः। अर्धशब्दस्य समांशवाचित्वाऽभावेन नित्यनपुंसकत्वाऽभावान्नायं समास, किन्तु 'षष्ठी'इत्येव समास इति षष्ठ्यन्तस्य पूर्वनिपातः। **द्रव्यैक्य एवेति**। एकाधिकरण इत्यनुवर्तत एवेत्यर्थः। **अर्धं पिप्पलीनामिति**। अत्र द्रव्यैक्याऽभावान्न समासः। सति समासेऽर्धपिप्पलीत्येव स्यात्, विशेष्यैक्यात्। इदं सूत्रं 'परवल्लिङ्ग'मिति सूत्रभाष्ये प्रत्याख्यातम्। **द्वितीयतृतीय**। **द्वितीयं भिक्षाया इति**। विग्रहोऽयम्। भिक्षाया द्वितीयमर्धमित्यर्थः। **द्वितीयभिक्षेति**। द्वितीयशब्दस्य प्रथमानिर्दिष्टत्वात्पूर्वनिपातः। 'परवल्लिङ्ग'मिति स्त्रीत्वम्। **द्वितीयं भिक्षाया भिक्षुकस्येति**। भिक्षाया द्वितीयं भागं भिक्षुकस्येत्यन्वयः। 'भिक्षाया' इत्यवयवषष्ठी 'द्वितीय'मित्यत्रान्वेति। 'द्वितीय'मित्येतत्तु 'भिक्षुकस्ये'त्यत्र कर्मत्वेनान्वेति। 'न लोके'ति निषेधान्न षष्ठी। अत्र 'द्वितीय'मित्यस्य 'भिक्षुकस्ये'त्यनेन समासो न भवति, द्वितीयं प्रति भिक्षुकस्य एकदेशित्वाऽभावादित्यर्थः। ननु विभाषाधिकारेण विकल्पे सिद्धेऽन्यतर-

शे.] 'एकविभक्ति'इत्युपसर्जनत्वाद्ध्रस्वत्वं स्यात्, अत आह-एकविभक्ताविति। नन्वेवं पञ्चानां खट्वानां समाहार इति विग्रहे 'पञ्चखट्वी'इति न सिध्येत्, अत आह-एकदेशीति। इदञ्च 'अपथं नपुंसकम्'इति सूत्रे 'पञ्चखट्वी'ति भाष्योदाहरणाज्ज्ञायते।

निषेधं बाधित्वेति। भागार्थकात्प्रत्ययान्तोऽपि स्वार्थिकत्वात्पूरणार्थं इति भाष्ये स्पष्टम्। 'पूर्व'इत्यादिविहित एकदेशिसमासः,



'परवल्लिङ्गम्' इति सूत्रस्थमेकदेशिसमासपरं तत्पुरुषग्रहणञ्च 'परवल्लिङ्गम्'इति सूत्रे भाष्ये प्रत्याख्यातम्, 'द्वन्द्वैकदेशिनो'रिति वक्ष्यामि। प्राप्तादिषु चाऽप्राप्तिरेव। तदेकदेशिग्रहणमपि न कार्यम्। कथम् ?। एकदेशिसमासो नारभ्यते। अर्धपिप्पल्यादिः

'पूरणगुणे'ति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ॥ **प्राप्तापन्ने च द्वितीयया** ।२।२।४। पक्षे 'द्वितीयाश्रिते'ति समासः । प्राप्तो जीविकां प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः । इह सूत्रे 'द्वितीयया-अ' इति छित्त्वाऽकारोऽपि विधीयते । तेन जीविकां प्राप्ता स्त्री--प्राप्तजीविका । आपन्नजीविका । **कालाः परिमाणिना** ।२।२।५। परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । मासो

---

त.] पवादोऽयं योग इति वृत्तिकृतोक्तमयुक्तमिति ध्वनयन्नाह–**निषेधं बाधित्वेति** । **प्राप्तजीविक इति** । 'गोस्त्रियो'रित्युपसर्जनह्रस्वः । 'द्विगुप्राप्तापन्ने'ति वक्ष्यमाणेन परवल्लिङ्गनिषेधः । न चेदं बहुव्रीहिणा गतार्थमिति शङ्क्यम्, स्वरे विशेषात् । 'प्राप्तसुखं' इत्यादौ निष्ठान्तस्य 'जातिकालसुखादिभ्यः' इति परनिपातापत्तेश्च । 'प्राप्तापन्ने चे'ति चकारेण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानात्, प्राप्तापन्ने समस्येते, अ च, अत्वं च तयोः स्यादिति भाष्ये स्थितम् । तत्र चकारात्पूर्वमेवाऽकारं छित्त्वा सौत्रत्वात्प्रकृतिभावो नेति प्राञ्चः । इमं क्लेशं परिहरन्नाह–**द्वितीयया अ इति** । **प्राप्ता स्त्रीति** । एकादेशस्य पूर्वान्तत्वेन ग्रहणाल्लिङ्गविशिष्टपरिभाषया वा टाबन्तयोरपि प्राप्तापन्नयोः समासः । **कालाः परिमाणिना** । परिमीयते परिच्छिद्यते येन तत्परिमाणं=परिच्छेदकं, तद्वान्परिमाणी, तदाह–**परिच्छेद्यवाचिनेति** । **काला इति** । कालविशेषवाचका इत्यर्थः । सूत्रे बहुवचननिर्देशात्कालसामान्यस्याऽपरिच्छेदकत्वाच्च । **मासो जातस्येति** । षष्ठीसमासे प्राप्ते वचनम् । ननु जातः पुरुषस्तस्य तु हस्तवितस्त्यादिकं परिच्छेदकं, न तु कालः, तस्य क्रियामात्रपरिच्छेदकत्वादिति चेत् । अत्राहुः–साक्षात्क्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परिच्छिनत्ति । यस्य हि जननादूर्ध्वं मासो गतः स 'मासजात' इति व्यवह्रियते । तत्र व्यवहारकालजननक्षणयोरन्तरालभावी मासो जननद्वारा जातमपि परिच्छिनत्त्येवेति । इह विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यं द्योतयितुं 'यस्य [सः'] इत्युक्तम् । अलौकिके तु प्रक्रियावाक्ये नास्य प्रवेशः । एवं बहुव्रीहावपीति बोध्यम् । ननु 'जातस्य मासः' इति विग्रहे वृत्तौ मासशब्दस्य पूर्वनिपातार्थमेतत्सूत्रारम्भस्यावश्यकत्वेऽपि मासविशेष्यकबोध एवात्रोचित इति किमनेन 'जातस्य यस्य सः' इति कथनेनेति चेत् । अत्राहुः–'मासजातो मृतः' इत्यादिप्रयोगानुरोधेन विग्रहे 'यस्य सः' इति स्वीक्रियत इति । **मासजात इति** । यद्यपि मासो जातो यस्येति बहुव्रीहिणापीदं सिध्यति, 'जातिकालसुखादिभ्यः परा निष्ठा वाच्ये'ति

---

बा.] स्याङ्ग्रहणं व्यर्थमित्यत आह–**अन्यतरस्यामिति** । अन्यतरस्याङ्ग्रहणसामर्थ्यात्पक्षे षष्ठीसमास इत्यन्वयः । अन्यथा षष्ठ्यपवादभूतेनानेन समासेन मुक्ते उत्सर्गो न प्रवर्तेत । महाविभाषाधिकारे 'अपवादेन मुक्ते उत्सर्गो न प्रवर्तते' इति 'पारेमध्ये षष्ठ्या वे'ति वाग्रहणेन ज्ञापितत्वादिति भावः । ननु 'पूरणगुणे'ति निषेधात्कथमिह षष्ठीसमास इत्यत आह–**पूरणगुणेति निषेधं बाधित्वेति** । अन्यथा अन्यतरस्याङ्ग्रहणवैयर्थ्यादिति भावः । **[इत्येकदेशिसमासनिरूपणम्]** । **प्राप्तापन्ने च** । प्राप्त आपन्न एतौ शब्दौ द्वितीयान्तेन समस्येते इत्यर्थः । चकारो द्वितीयासमाससमुच्चयार्थः । तदाह–**पक्ष इति** । वस्तुतस्तु 'द्वितीया श्रिते'ति सूत्रे 'प्राप्तापन्नशब्दाभ्यां द्वितीयायाः समासविधानमपि निरवकाशमेव इति तत्समुच्चयस्य सिद्धत्वाच्चकारो न तत्समुच्चयार्थः' इति भाष्ये स्थितम् । तत्र प्रकृतसूत्रेण समासे प्राप्तापन्नयोः पूर्वनिपातः । 'द्वितीया श्रिते'ति समासे तु द्वितीयान्तस्य पूर्वनिपातः । तदाह–**प्राप्तजीविक इत्यादि** । अथ जीविकां प्राप्ता स्त्री जीविकामापन्ना स्त्री इति विग्रहे प्रकृतसूत्रेण समासे सति पूर्वपदयोरकारमन्तादेशं साधयितुमाह––**इह सूत्रे इति** । **अकारोऽपीति** । 'प्राप्तापन्ने द्वितीयया समस्येते, तयोरकारोऽन्तादेशश्चे'त्यर्थलाभादिति भावः । **तेनेति** । प्राप्तापन्नयोराकारस्यान्तस्य स्थाने अकारविधानेनेत्यर्थः । **कालाः परिमाणिना** । परिमाणिपदं व्याचष्टे–**परिच्छेद्यवाचिनेति** । 'काला' इति बहुवचनात्कालविशेषवाचका इत्यर्थः । **मासजात इति** । अत्र विग्रहे मासः प्रधानम् । समासे तु जातः प्रधानम् । 'मासजातो दृश्यता'मित्यादौ जातस्यैव

---

शे.] समानाधिकरणसमासोऽवयवे समुदायरूपारोपात्–अर्धं च सा पिप्पलीति । न च भेदविवक्षायां षष्ठीसमासबाधार्थम् । इष्यत एव षष्ठीसमासो, ग्रामार्धमित्यादिवत्पिप्पल्यर्धमित्यादि भवितव्यमेव' इति भाष्यात् । **द्वितीयया अ इतीति** । न चात्र प्रश्लेषे द्वितीयान्तस्यैवाकारः स्यात्, न प्राप्तापन्नयोरिति वाच्यम्, प्राधान्येन तयोरेवादेशात् । चकारश्च भिन्नक्रम इति भावः प्राप्तापन्ने इत्युत्तरमकारप्रश्लेषः । प्रगृह्यत्वं सौत्रत्वान्नेति भाष्यस्वरसः । एकादेशस्य पूर्वान्तत्वेन ग्रहणात्प्राप्तशब्देन समासः । जीविकाशब्दस्य 'एकविभक्ति' इत्युपसर्जनत्वात् 'गोस्त्रियोः' इति ह्रस्वे तदन्ताट्टाबिति बोध्यम् । बहुव्रीहिणा तु न गतार्थता, स्वरे विशेषात् । कालाःप । मासस्य जात इति षष्ठीसमासेन सिद्धे जातमास इत्यनिष्टनिवृत्तये इदम् । यद्यपि बहुव्रीहिणेदं सिद्धम् । 'जातिकालसुखादिभ्योऽनाच्छादनात्क्तो' 'वा जाते' इत्यनेनान्तोदात्तत्वेन स्वरे विशेषाऽभावात् । 'जातिकालसुखादिभ्यः परा निष्ठा' इति वचनान्न जातस्य पूर्वनिपातः, तथाऽपि जातबच्छब्देन

जातस्य यस्य स मासजातः । द्व्यहजातः । द्वयोरह्नोः समाहारो द्व्यहः । द्व्यहो जातस्य [यस्य स] इति विग्रहः ।
**ॐ उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसङ्ख्यानम् ।** द्वे अहनी जातस्य यस्य [स] द्व्यह्नजातः । 'अह्नोऽह्न' इति वक्ष्यमाणोऽह्नादेशः । पूर्वत्र तु 'न सङ्ख्यादेः समाहारे' इति तन्निषेधः ।

---

त.] वचनात् । न च स्वरे विशेषः । 'वा जाते' इत्यन्तोदात्तत्वस्यापि सिद्धेः, तथापि षष्ठीसमासापवादार्थमिदमारम्भणीयमेव । किं च मासो जातवतो यस्य स मासजातवानित्येतदर्थमपीदमवश्यारम्भणीयमिति । **उत्तरपदेनेति** । परिमाण्युत्तरपदहेतुकद्विगुसिद्धये त्रिपदतत्पुरुषो वक्तव्य इत्यर्थः । 'सुप्सुपे'त्येकत्वस्य विवक्षितत्वादप्राप्ते वचनम् । अस्मादेव वार्तिकारम्भात् 'सुप्सुपे'त्येकत्वं विवक्षितमिति ज्ञायते । **अह्नादेश इति** । त्रिपदतत्पुरुषे सत्युत्तरपदे परतः 'तद्धितार्थ'

---

बा.] दर्शनकर्मत्वादिप्रतीतेः । विशेषणविशेष्यभावस्तु एकार्थीभावसम्बन्धसाध्यः । एतदेवाभिप्रेत्य मूले क्वचित् पुस्तके 'मासो जातस्य यस्य स' इति पठितम् । तत्र विग्रहे जातस्येति परिच्छेद्यपरिच्छेदकभावे षष्ठी । जातपरिच्छेदको मास इति विग्रहवाक्ये बोधः । मासपरिच्छेद्यो जात इति समासाद्बोधः । तत्र मासस्तावज्जननं साक्षात्परिच्छिनत्ति । जननाश्रयं तु देवदत्तं जननद्वारा परिच्छिनत्ति । तथाच 'मासपरिच्छेद्यजननाश्रयो देवदत्त' इति समासाद्बोधः फलति । षष्ठीसमासापवादोऽयम् । षष्ठीसमासे तु 'जातमास' इति स्यात् । न च मासो जातस्य यस्य स मासजात इति बहुव्रीहिणैवैतत्सिद्धमिति वाच्यं, समानाधिकरणानामेव बहुव्रीहिविधानात् । 'निष्ठे'ति जातशब्दस्य पूर्वनिपातापत्तेश्च । 'जातिकालसुखादिभ्यः परा निष्ठा वाच्ये'ति जातशब्दस्य परनिपातस्तु न, सुखादावस्य पाठकल्पनायां प्रमाणाऽभावादित्यलम् । **द्व्यहो जातस्येति** । 'तद्धितार्थ' इति समाहारे द्विगुः, 'राजाहःसखिभ्यः' इति टच् । 'रात्राह्नाहाः पुंसी'ति पुंस्त्वम् । **उत्तरपदेनेति** । 'तद्धितार्थ' इति सूत्रभाष्ये इदं वार्तिकं पठितम् । तेन हि सूत्रेण उत्तरपदे परे दिक्सङ्ख्ययोस्सुबन्तेन द्विगुसमासो विहितः । उत्तरशब्दश्च समासस्य चरमावयवे रूढः । ततश्च द्वे अहनी जातस्य यस्येति विग्रहे त्रयाणां समासे सति जातशब्दे उत्तरपदे संपन्ने पूर्वयोः सुबन्तयोर्द्विगुसमासप्रवृत्तिर्वक्तव्या । सच समासस्त्रयाणां 'कालाः परिमाणिने'ति पूर्वसूत्रेण न सम्भवति, 'सुप्सुपे'त्येकत्वस्य विवक्षितत्वात् । अत उत्तरपदेन परिमाणिना परिच्छेद्यवाचिना परनिमित्तभूतेन हेतुना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसङ्ख्यानं वक्तव्यमित्यर्थः । उत्तरपदभूतपरनिमित्तकद्विगुसिद्धये त्रिपदतत्पुरुषो वाच्य इति यावत् । 'सुप्सुपे'त्येकत्वं विवक्षितमित्यत्र इदमेव लिङ्गम् ।

**द्वे अहनी इति** । द्वे अहनी जातस्येति विग्रहे त्रयाणां समासे सुब्लुकि 'द्व्यहन्-जात' इति जातशब्दे उत्तरपदे परे द्वि-अहन् इत्यनयोः 'तद्धितार्थ' इति द्विगुसमासे 'राजाहःसखिभ्यः' इति टचि 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशे 'द्व्यह्नजात' इति रूपमित्यर्थः । अत्र पूर्वयोर्द्विगुतत्पुरुषत्वाऽभावे टच्, अह्नादेशश्च न स्यातामिति भावः । ननु द्वयो-

---

शे.] समासे 'मासजातवान्' इत्यादावन्तोदात्तार्थमावश्यकमिदमिति केचित् । परे तु परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यादेव षष्ठीस्वीकारेण 'मासस्य जात' इति विग्रहस्य तत्र षष्ठीसमासस्य च खपुष्पायमाणता । अत एव भाष्ये उत्तरपदार्थप्रधानत्वे समासात्षष्ठीमाशङ्क्य सम्बन्धस्य प्रातिपदिकार्थत्वेनाऽशेषत्वात्परिहृता । अन्यथा 'मासस्य जात' इति विग्रहेण तत्प्राधान्यं दर्शितं स्यात्, यत्र षष्ठीप्रसक्तिरेव न । 'षष्ठी' इति सूत्रेण सिद्धे इदं सूत्रं जातमास इत्येतन्निवृत्त्यर्थं तवैव ममापि । कालाः परिमाणिना समस्यन्ते न तु परिमाणी कालेनेत्यर्थात् । किं च मासो जातो यस्येति बहुव्रीहिणाऽतीतमाससम्बन्धिजननक्रियाकर्तुरिव तत्सम्बन्धिगमनादिकर्तुरपि मासजातशब्दात्प्रतीत्यापत्तिरित्यनयोर्बहुव्रीहेरनभिधानमेव । अत्र विग्रहे वृत्तौ चोभयत्राप्युत्तरपदार्थप्रधानत्वम् । न च विग्रहेऽपि तत्त्वे जातात्षष्ठ्यनुपपत्तिर्विशेषणादेव षष्ठीविधानादिति वाच्यम् । वाक्यस्य वृत्त्यर्थबोधकत्वविवक्षायां विशेष्यविशेषणभावपरीत्येऽपि पूर्वजातसंस्काराऽनिवृत्तेः । अन्यथा समासे जातप्राधान्येन विशेषणविभक्तिषष्ठ्यापादनस्य भाष्येऽसङ्गत्यापत्तेः । मम तु न दोषः । विग्रहे तस्यैव प्राधान्येऽपि तत्स्थितिवत्समासादपि तदापादनसम्भवात् । तदुत्तरषष्ठ्यैव तत्र मासविशेषणकसम्बन्धप्रतीतिवत्समासेऽपि विशिष्टोत्तरषष्ठ्या तत्सम्भव इत्याशयात् । शब्दस्वभाव एव च तद्व्यत्यासे बीजम् । यत्तु एकार्थीभाववशाद्वृत्तौ विशेष्यविशेषणभावव्यत्यास इति, तन्न, एकार्थीभावफलेषु भाष्येऽस्याऽगणनात् । वृत्तिविग्रहयोः समानार्थत्वमज्ञापत्तेश्च । 'किंप्रधानोऽयं समासः ? उत्तरपदार्थप्रधानः' इति भाष्यं वृत्तिविग्रहोभयपरम् । समासपदेन तस्याप्युपलक्षणात् । अन्यथा 'मासजातो दृश्यताम्' इत्यादौ जातस्यैव कार्यसम्बन्धदर्शनेनौत्सर्गिकत्वाच्च तत्पुरुषत्वेनोत्तरपदार्थप्रधानत्वनिर्णयेन 'किंप्रधानोऽयं समासः' इति प्रश्नस्य निर्दलत्वापत्तेः । तस्माद्वृत्तिविग्रहयोः समानार्थत्वनिर्वाहमपश्यत उभयविषयोऽयं प्रश्न, उत्तरश्चेत्युचितम् । अन्यथोत्तरपदार्थप्रधानोऽयं तत्पुरुषः, तेनान्यैरुत्तरपदार्थप्रधानैः सधर्मणा भवितव्यम् । अन्यत्र चोत्तरपदे याऽन्तवर्तिनी विभक्तिः; सैव समासेऽपि भवति, इह तु वाक्ये षष्ठी, समासे प्रथमा केनैतत् ?' इत्येवाशङ्क्येत । प्रातिपदिकेनोक्तत्वेन प्रातिपदिकार्थतयाऽशेषत्वान्न षष्ठीत्युत्तरं तुल्यमेवेत्याहुः । मासजात इत्यादौ मासत्वेनैकत्र[illegible] अन्यथा परिच्छेदकत्वं न स्यात् । मासो जातस्येत्यर्थे तु न समासोऽनभिधानात् । **उत्तरपदेनेति** । इदं वार्त्तिकमेतत्सूत्रविषयमेव, 'तद्धितार्थ' इति सूत्रे पाठेऽप्येतद्विषयस्यैव भाष्यकृतोदाहरणात् । पूर्वत्र

**सप्तमी शौण्डैः** ।२।१।४०। सप्तम्यन्तं शौण्डादिभिःप्राग्वद्वा। अक्षेषु शौण्डः अक्षशौण्डः। अधिशब्दोऽत्र पठ्यते। 'अष्युत्तरपदा'दिति खः। ईश्वराधीनः॥ **सिद्धशुष्कपक्वबन्धैश्च** ।२।१।४१। एतैः सप्तम्यन्तं प्राग्वत्। साङ्काश्यसिद्धः। आतपशुष्कः। स्थालीपक्वः। चक्रबन्धः॥ **ध्वाङ्क्षेण क्षेपे** ।२।१।४२। ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम्। तीर्थे ध्वाङ्क्ष इव–तीर्थध्वाङ्क्षः। तीर्थकाकः॥ **कृत्यैर्ऋणे** ।२।१।४३। सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके। मासेदेयं ऋणम्। ऋणग्रहणं नियोगोपलक्षणार्थम्। पूर्वाह्णेगेयं साम॥

**संज्ञायाम्** ।२।१।४४। सप्तम्यन्तं सुपा प्राग्वत्संज्ञायाम्। वाक्येन संज्ञानवगमान्नित्यसमासोऽयम्।

---

त.]इत्यवान्तरद्विगौ सतीति भावः। **पूर्वत्रेति** । व्यहजात इत्यत्रेत्यर्थः। **सप्तमी शौण्डैः**। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्च आद्यर्थावगतिरित्यभिप्रेत्याह–**शौण्डादिभिरिति**। **अक्षशौण्ड इति**। शौण्डः=प्रवीणः। इह आसक्तिरूपा क्रिया वृत्तावन्तर्भवतीति, तद्वारकं च सामर्थ्यम्। यथा दध्योदनगुडधानादौ उपसेचनमिश्रीकरणादिद्वारा सामर्थ्यम्। तेन 'कारकाणां क्रिययैव संबन्ध' इति नियमस्य न व्यभिचारः। **अधिशब्द इति**। 'आधेयप्रधान'इति शेषः। अधिकरणप्रधानस्य त्वव्ययीभाव एव। अधिहरीति यथा। **ख इति**। 'नित्य'मिति शेषः। 'विभाषाञ्चेः'इति विभाषाग्रहणसामर्थ्यादिति वक्ष्यमाणत्वात्। अन्तःशब्दोऽत्र पठ्यते, स चाधिकरणप्रधानः। मध्ये इत्यर्थात्। तद्योगेऽव्ययविन आधारत्वविवक्षायां सप्तमी, यथा 'वृक्षे शाखे'ति। वने अन्तर्वनान्तर्वसति। यस्त्वधिकरणत्वमात्रवृत्तिरन्तःशब्दस्तस्य तु 'विभक्त्यर्थे' इति नित्यमव्ययीभावः। 'प्रनिरन्तःशरे' इति णत्वम्। वने इति अन्तर्वणम्। यत्तु तत्पुरुषस्य वैकल्पिकत्वात्पक्षे अव्ययीभाव इति हरदत्तेनोक्तम्। तच्चिन्त्यम्। तत्पुरुषस्य वैकल्पिकत्वेऽप्यव्ययीभावस्य नित्यत्वाद्वने अन्तरिति तदुक्तस्वपदविग्रहस्याऽयोगात्। किं च विभक्त्यर्थमात्रवृत्तेरव्ययीभावः, वचनग्रहणसामर्थ्यात्। अन्यथा वृक्षस्योपरीत्यादावतिप्रसङ्गः स्यात्। ततश्च मध्यवाचिनः प्रसङ्ग एव नास्तीति दिक्। शौण्ड। धूर्त। कितव। व्याड। प्रवीण। संवीत। अन्तर्। अधि। पटु। पण्डित। कुशल। चपल। निपुण। वृत्। **कृत्यैः**। यत्प्रत्ययान्तेनैव समास इष्यते। 'अल्पशः' इत्यनुवृत्तेः। बहुवचनं तु प्रकृतिभेदाभिप्रायम्। तथैवोदाहरति–**मासेदेयमिति**। तत्पुरुषे कृती'त्यलुक्। नेह–मासे दातव्यम्। **नियोगोपलक्षणार्थमिति**। नियोगो-निर्धारणम्। आवश्यकोपलक्षणार्थमित्यर्थः। **नित्यसमासोऽयमिति**। अतएव 'पुरुषेषूत्तमः' इति स्वपदविग्रहोऽसङ्गत इत्यवोचाम।

---

बा.]र्ह्नोः समाहारो व्यह इति कथं पूर्वमुक्तं, तत्राप्यह्नादेशप्रसङ्गादित्यत आह—**पूर्वत्र त्विति**। **निषेध इति**। अह्नादेशनिषेध इत्यर्थः। **सप्तमी शौण्डैः**। **शौण्डादिभिरिति**। बहुवचननिर्देशाद्गणपाठाच्च शौण्डशब्दस्तदादिपरः। **अक्षेषु शौण्ड इति**। **शौण्डः**= क्रियाकुशलः। वैषयिकाधिकरणत्वे सप्तमी। अक्षविषयकक्रीडाकुशल इत्यर्थः। **अत्रेति**। शौण्डादावित्यर्थः। **ईश्वराधीन इति**। 'प्रपञ्च' इति शेषः। 'ईश्वरे अधि' इति विग्रहः। 'अधिरीश्वरे' इत्यधेः कर्मप्रवचनीयत्वम्। 'यस्मादधिक'मिति सप्तमी। तदन्तस्याऽधिना समासः। सुब्लुक्। 'अषडक्षे'त्यष्युत्तरपदत्वात्खः। ईनादेशः। 'ईश्वराधीन' इति रूपम्। **सिद्धशुष्क**। 'सप्तमी'त्यनुवर्तते। तदाह–**एतैः सप्तम्यन्तमिति**। **साङ्काश्यसिद्ध इति**। सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम्। तत्र **सिद्धः**=उत्पन्नो ज्ञातो वेत्यर्थः। **आतपशुष्क इति**। आतपे शुष्क इति विग्रहः। **स्थालीपक्व इति**। स्थाल्यां पक्व इति विग्रहः। **चक्रबन्ध इति**। चक्रे बन्ध इति विग्रहः। शौण्डादिगणे एतेषां पाठाऽभावात्पृथगुक्तिः। **ध्वाङ्क्षेण क्षेपे**। 'ध्वाङ्क्षे'त्यर्थग्रहणम्, व्याख्यानात्। तदाह—**ध्वाङ्क्षवाचिनेति**। 'क्षेप'पदं व्याचष्टे—**निन्दायामिति**। **तीर्थध्वाङ्क्ष इति**। **ध्वाङ्क्षः**=काकः, स इव यो गुरुकुले चिरं न तिष्ठति स इत्यर्थः। एवं हि निन्दा भवति। अर्थग्रहणस्य प्रयोजनमाह—**तीर्थकाक इति**। **कृत्यैर्ऋणे**। 'सप्तमी'त्यनुवर्तते। कृत्यग्रहणेन प्रत्ययग्रहणपरिभाषया कृत्यसंज्ञकप्रत्ययान्तग्रहणम्। 'ऋणपदमावश्यकोपलक्षण'मिति भाष्यम्। तदाह—**सप्तम्यन्तमित्यादि**। **मासे इति**। सामीप्याधिकरणत्वे सप्तमी। मासाऽव्यवहितोत्तरकाले प्रत्यर्पणीयमृणमित्यर्थः। ऋणपदस्यावश्यकोपलक्षणतायाः प्रयोजनमाह—**पूर्वाह्णेगेयमिति**। 'तत्पुरुषे कृती'त्यलुक्। यत्प्रत्यय एव कृत्योऽत्र विवक्षित इति

---

शे.]त्विति। व्यहजात इत्यत्रेत्यर्थः। **अक्षशौण्ड इति**। अधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयाच्छौण्डादिभिः सामर्थ्यम्। आसक्त्यादिक्रियाऽन्तर्भावेन सामर्थ्यमिति तु न युक्तम्। तदप्रतीतेः। **साङ्काश्ये सिद्ध इति**। सङ्काशेन निर्वर्तिते वने तपसा सिद्ध इत्यर्थः। साङ्काश्ये नगरे सिद्धो जात इत्यर्थो वा। ध्वाङ्क्षेण। व्याख्यानादर्थग्रहणम्। इवेति। तत्र स इव यो गुरुकुलादौ न चिरं तिष्ठति स एवमुच्यते। एवं हि निन्दा भवति। ऋणग्रहणमावश्यकोपलक्षणमित्याह–**आवश्यके इति**। तत्फलमाह–**पूर्वाह्णे**-

अरण्येतिलकाः। वनेकसेरुकाः। 'हलदन्तात्सप्तम्या' इत्यलुक्॥ **क्तेनाहोरात्रावयवाः** ।२।१।४५। अह्नो रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत्। पूर्वाह्णकृतम्। अपररात्रकृतम्। अवयवग्रहणं किम्? । अह्नि दृष्टम्॥ **तत्र** ।२।१।४६। 'तत्रे'त्येतत्सप्तम्यन्तं क्तान्तेन सह प्राग्वत्। तत्रभुक्तम्॥ **क्षेपे** ।२।१।४७। सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम्। अवतप्तेनकुलस्थितं त एतत्॥ **पात्रेसमितादयश्च** ।२।१।४८। एते निपात्यन्ते क्षेपे। पात्रेसमिताः। भोजनसमये एव सङ्गता नतु कार्ये। गेहेशूरः। गेहेनर्दी। आकृतिगणोऽयम्। चकारोऽवधारणार्थः। तेनैषां समासान्तरे घटकतया प्रवेशो न। परमाः पात्रेसमिताः। **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** ।२।१।४९। 'विशेषणं विशेष्येणे'ति सिद्धे पूर्वनिपात-

---

त.]**अवतप्ते इति**। नकुलेन स्थितं नकुलस्थितम्। 'कर्तृकरणे कृते'ति समासः। कृद्ग्रहणपरिभाषया नकुलस्थितशब्दोऽपि क्तान्त इति तेन सह सप्तम्यन्तस्य समासः। 'तत्पुरुषे कृती'ति सप्तम्या अलुक्। अव्यवस्थितत्वप्रतिपत्त्याऽत्र निन्दावगम्यते। **पात्रेसमितादयश्च**। संपूर्वादिणः क्तः। **गेहेनर्दीति**। 'नर्द शब्दे' इत्यस्मात् 'सुप्यजातौ-' इति णिनिः। **घटकतया प्रवेशो नेति**। 'परमाः पात्रेसमिताः' इति वाक्यमेव भवति, न तु 'सन्महदि'त्यादिना समासान्तरमिति भावः। एतच्च शब्दकौस्तुभे स्थितम्। अन्ये तु 'केवलाः पात्रेसमिताः' इति वाक्यमेव, न तु 'पूर्वकालैके'त्यादिना समासान्तरमित्याहुः। **पूर्वकालैक**। 'पूर्वकाले'त्यर्थनिर्देशः। इतरेषां तु पण्णां स्वरूपग्रहणम्। पूर्वत्वस्य ससंब-

---

बा.]भाष्यम्। तेनेह न—पूर्वाह्णे दातव्या भिक्षेति। **संज्ञायाम्**। 'सप्तमी'त्यनुवर्तते। तदाह—**सप्तम्यन्तमित्यादि**। 'अरण्येतिलका' इति 'वनेकसेरुका' इति च संज्ञाशब्दौ। 'हलदन्तात्सप्तम्याः' इत्यलुक्। **क्तेनाहो**। अहोरात्रयोरवयवा इति विग्रहः। सप्तमीत्यनुवर्तते। क्तेनेति तदन्तग्रहणं। तदाह—**अह्नो रात्रेश्चेति**। अहरवयवस्योदाहरति—**पूर्वाह्णकृतमिति**। रात्र्यवयवस्योदाहरति—**अपररात्रकृतमिति**। **तत्र**। 'तत्रे'ति शब्दस्वरूपग्रहणम्। 'सप्तमी'ति 'क्तेने'ति चानुवर्तते। तदाह—**तत्रेत्येतदित्यादि**। **तत्रभुक्तमिति**। समासस्वरः प्रयोजनम्। तत्रभुक्तस्येदं तात्रभुक्तमिति च। **क्षेपे**। 'सप्तमी' 'क्तेने'ति चानुवर्तते। तदाह—**सप्तम्यन्तमित्यादि**। **अवतप्तेनकुलस्थितं त एतदिति**। 'स्थित'मिति भावे क्तः। नकुलेन स्थितम्। 'कर्तृकरणे कृता बहुल'मिति समासः। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहण'मिति परिभाषया 'नकुलस्थित'शब्दोऽपि क्तान्तः, तेन सहावतप्ते इति सप्तम्यन्तस्याऽनेन समासे कृते 'तत्पुरुषे कृती'त्यलुक्। हे देवदत्त! ते=तव, **एतत्**=अवस्थानम्, अवतप्ते नकुलस्थित'मित्यन्वयः। यथा अवतप्तप्रदेशे नकुला न चिरं तिष्ठन्ति तथा कार्याण्युपक्रम्य तान्यनिर्वर्त्य तत्र इतस्ततो धावनमित्यर्थः। अव्यवस्थितोऽसीति निन्दा ज्ञेया। **पात्रेसमितादयश्च**। **निपात्यन्त इति**। कृतसमासादिकार्या एते शब्दा निर्दिश्यन्त इत्यर्थः। **पात्रेसमिता इति**। इण् गतौ। संपूर्वात् 'गत्यर्थाकर्मके'ति कर्तरि क्तः। निपातनात्सप्तम्या अलुक्। भोजनपात्रे निहिते सति सङ्गता इत्यर्थः। फलितमाह—**भोजनेति**। **गेहेशूर इति**। गेह एव प्रकटितशौर्यो, न तु युद्ध इत्यर्थः। **गेहेनर्दीति**। 'नर्द शब्दे' 'सुप्यजातौ' इति णिनिः। समासे सति निपातनादलुक्। गेह एव गर्जति, युद्धादौ तु न प्रवर्तत इत्यर्थः। **अवधारणार्थ इति**। ततश्च एते यथा गणे पठितास्तथैव भवन्तीत्यर्थः। ततः किमित्यत आह—**तेनेति**। ततश्च परमाश्च ते पात्रेसमिताश्चेत्यादौ समासो न भवति।

**पूर्वकालैक**। 'सु'बित्यनुवृत्तं बहुवचनेन विपरिणम्यते। सुपेति चानुवर्तते। पूर्वः कालो यस्य स पूर्वकालः। पूर्वकालवृत्तिरित्यर्थः। ततश्च 'पूर्वकाले'त्यनेन पूर्वकालवृत्त्यर्थकशब्दस्य ग्रहणम्। एकादिशब्दास्तु षट् स्वरूपपरा एव। तथाच पूर्वकालादयः सप्त सुबन्ताः समानाधिकरणेन सुबन्तेन समस्यन्ते, स तत्पुरुष इत्यर्थः। समानम्-एकम् अधिकरणं=वाच्यं यस्येति विग्रहः। एकार्थवृत्तित्वं सामानाधिकरण्यमिति फलितम्। **पूर्वनिपातेति**। पश्चादनुलिप्तः पूर्वं स्नातत्वेन, पूर्वं स्नातो वा पश्चादनुलिप्तत्वेन विशेष्टुं शक्यते, अतो 'विशेषणं विशेष्येणे'ति समासे सति

---

शे.]**गेयं सामेति**। 'तत्पुरुषे कृति'इत्यलुक्। अयं समासो यत्प्रत्ययान्तेनैव, अभिधानस्वाभाव्यात्। तत्रेत्येतत्सप्तम्यन्तमिति। 'अधिकाराऽवाधायाधिकरणशक्तिप्रधानादपि सप्तमी'इति वृत्तिकृत्। तेन पूर्वपदप्रकृतिस्वरसिद्धिः। अव्ययत्वेन तु न सः, 'अव्यये नञ्कुनिपातानाम्'इति परिगणनात्। **अवतप्तेनकुलेति**। चापलादिति भावः। कृद्ग्रहणपरिभाषया नकुलस्थितशब्देन समासः। 'तत्पुरुषे कृति'इत्यलुक्। अव्यवस्थितत्वप्रतिपत्त्याऽत्र निन्दा। **गेहेनर्दीति**। 'नर्द शब्दे' अस्माण्णिनिः। 'तत्पुरुषे कृति'इत्यलुक्सर्वत्र। **समासान्तरे इति**। समासप्रकरणादिति भावः। तेन 'पात्रेसमितिः'इत्यादि भवत्येव! समासश्चानन्तरत्वात्कर्मधारय एवेत्याहुः। **प्रवेशो नेति**। तेन 'परमाः पात्रेसमिताः'इत्येव। समितेति निरनुस्वारम्। **पूर्वकालैक**। अत्र पूर्वकालशब्दोऽर्थपरोऽ-

**सप्तमी शौण्डैः** ।२।१।४०। सप्तम्यन्तं शौण्डादिभिः प्राग्वद्वा । अक्षेषु शौण्डः अक्षशौण्डः । अधिशब्दोऽत्र पठ्यते । 'अप्युत्तरपदा'दिति खः । ईश्वराधीनः ॥ **सिद्धशुष्कपक्वबन्धैश्च** ।२।१।४१। एतैः सप्तम्यन्तं प्राग्वत् । साङ्काश्यसिद्धः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः ॥ **ध्वाङ्क्षेण क्षेपे** ।२।१।४२। ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम् । तीर्थे ध्वाङ्क्ष इव–तीर्थध्वाङ्क्षः । तीर्थकाकः ॥ **कृत्यैर्ऋणे** ।२।१।४३। सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके । मासेदेयं ऋणम् । ऋणग्रहणं नियोगोपलक्षणार्थम् । पूर्वाह्णेगेयं साम ॥

**संज्ञायाम्** ।२।१।४४। सप्तम्यन्तं सुपा प्राग्वत्संज्ञायाम् । वाक्येन संज्ञानवगमान्नित्यसमासोऽयम् ।

---

त.]इत्यवान्तरद्विगौ सतीति भावः । **पूर्वत्रेति** । व्यहजात इत्यत्रेत्यर्थः । **सप्तमी शौण्डैः** । बहुवचननिर्देशाद्गणपाठसामर्थ्याच्च आद्यर्थावगतिरित्यभिप्रेत्याह–**शौण्डादिभिरिति** । **अक्षशौण्ड इति** । शौण्डः=प्रवीणः । इह आसक्तिरूपा क्रिया वृत्तावन्तर्भवतीति, तद्वारकं च सामर्थ्यम् । यथा दध्योदनगुडधानादौ उपसेचनमिश्रीकरणादिद्वारा सामर्थ्यम् । तेन 'कारकाणां क्रिययैव संबन्ध' इति नियमस्य न व्यभिचारः । **अधिशब्द इति** । 'आधेयप्रधान'इति शेषः । अधिकरणप्रधानस्य त्वव्ययीभाव एव । अधिहरीति यथा । **ख इति** । 'नित्य'मिति शेषः । 'विभाषाञ्चेः'इति विभाषाग्रहणसामर्थ्यादिति वक्ष्यमाणत्वात् । अन्तःशब्दोऽत्र पठ्यते, स चाधिकरणप्रधानः । मध्ये इत्यर्थात् । तद्योगेऽवयविन आधारत्वविवक्षायां सप्तमी, यथा 'वृक्षे शाखे'ति । वने अन्तर्वनान्तर्वसति । यस्त्वधिकरणत्वमात्रवृत्तिरन्तःशब्दस्तस्य तु 'विभक्त्यर्थे' इति नित्यमव्ययीभावः । 'प्रनिरन्तःशरे' इति णत्वम् । वने इति अन्तर्वणम् । यत्तु तत्पुरुषस्य वैकल्पिकत्वात्पक्षे अव्ययीभाव इति हरदत्तेनोक्तम् । तच्चिन्त्यम् । तत्पुरुषस्य वैकल्पिकत्वेऽप्यव्ययीभावस्य नित्यत्वाद्वने अन्तरिति तदुक्तस्वपदविग्रहस्याऽयोगात् । किं च विभक्त्यर्थमात्रवृत्तेरव्ययीभावः, वचनग्रहणसामर्थ्यात् । अन्यथा वृक्षस्योपरीत्यादावतिप्रसङ्गः स्यात् । ततश्च मध्यवाचिनः प्रसङ्ग एव नास्तीति दिक् । शौण्ड । धूर्त । कितव । व्याड । प्रवीण । संवीत । अन्तर् । अधि । पटु । पण्डित । कुशल । चपल । निपुण । वृत् । **कृत्यैः** । यत्प्रत्ययान्तेनैव समास इष्यते । 'अल्पशः' इत्यनुवृत्तेः । बहुवचनं तु प्रकृतिभेदाभिप्रायम् । तथैवोदाहरति–**मासेदेयमिति** । तत्पुरुषे कृती'त्यलुक् । नेह–मासे दातव्यम् । **नियोगोपलक्षणार्थमिति** । नियोगो-निर्धारणम् । आवश्यकोपलक्षणार्थमित्यर्थः । **नित्यसमासोऽयमिति** । अतएव 'पुरुषेषूत्तमः' इति स्वपदविग्रहोऽसङ्गत इत्यवोचाम ।

---

बा.]रङ्गोः समाहारो व्यह इति कथं पूर्वमुक्तं, तत्राप्यह्लादेशप्रसङ्गादित्यत आह—**पूर्वत्र त्विति** । **निषेध इति** । अह्लादेशनिषेध इत्यर्थः । **सप्तमी शौण्डैः** । **शौण्डादिभिरिति** । बहुवचननिर्देशाद्गणपाठाच्च शौण्डशब्दस्तदादिपरः । **अक्षेषु शौण्ड इति** । **शौण्डः**=क्रियाकुशलः । वैषयिकाधिकरणत्वे सप्तमी । अक्षविषयकक्रीडाकुशल इत्यर्थः । **अत्रेति** । शौण्डादावित्यर्थः । **ईश्वराधीन इति** । 'प्रपञ्च' इति शेषः । 'ईश्वरे अधि' इति विग्रहः । 'अधिरीश्वरे' इत्यधेः कर्मप्रवचनीयत्वम् । 'यस्मादधिक'मिति सप्तमी । तदन्तस्याऽधिना समासः । सुब्लुक् । 'अषडक्षे'त्यप्युत्तरपदत्वात्खः । ईनादेशः । 'ईश्वराधीन' इति रूपम् । **सिद्धशुष्क** । 'सप्तमी'त्यनुवर्तते । तदाह–**एतैः सप्तम्यन्तमिति** । **साङ्काश्यसिद्ध इति** । सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम् । तत्र **सिद्धः**=उत्पन्नो ज्ञातो वेत्यर्थः । **आतपशुष्क इति** । आतपे शुष्क इति विग्रहः । **स्थालीपक्व इति** । स्थाल्यां पक्व इति विग्रहः । **चक्रबन्ध इति** । चक्रे बन्ध इति विग्रहः । शौण्डादिगणे एतेषां पाठाऽभावात्पृथगुक्तिः । **ध्वाङ्क्षेण क्षेपे** । 'ध्वांक्षे'त्यर्थग्रहणम्, व्याख्यानात् । तदाह—**ध्वाङ्क्षवाचिनेति** । 'क्षेप'पदं व्याचष्टे—**निन्दायामिति** । **तीर्थध्वाङ्क्ष इति** । **ध्वाङ्क्षः**=काकः, स इव यो गुरुकुले चिरं न तिष्ठति स इत्यर्थः । एवं हि निन्दा भवति । अर्थग्रहणस्य प्रयोजनमाह—**तीर्थकाक इति** । **कृत्यैर्ऋणे** । 'सप्तमी'त्यनुवर्तते । कृत्यग्रहणेन प्रत्ययग्रहणपरिभाषया कृत्यसंज्ञकप्रत्ययान्तग्रहणम् । 'ऋणपदमावश्यकोपलक्षण'मिति भाष्यम् । तदाह—**सप्तम्यन्तमित्यादि** । **मासे इति** । सामीप्याधिकरणत्वे सप्तमी । मासाऽव्यवहितोत्तरकाले प्रत्यर्पणीयमृणमित्यर्थः । ऋणपदस्यावश्यकोपलक्षणतायाः प्रयोजनमाह—**पूर्वाह्णेगेयमिति** । 'तत्पुरुषे कृती'त्यलुक् । यत्प्रत्यय एव कृत्योऽत्र विवक्षित इति

---

शे.]स्त्विति । व्यहजात इत्यत्रेत्यर्थः । **अक्षशौण्ड इति** । अधिकरणकारकस्य कर्तृकर्मद्वारा क्रियान्वयाच्छौण्डादिभिः सामर्थ्यम् । आसक्त्यादिक्रियाऽन्तर्भावेन सामर्थ्यमिति तु न युक्तम् । तदप्रतीतेः । **साङ्काश्ये सिद्ध इति** । सङ्काशेन निर्वर्तिते वने तपसा सिद्ध इत्यर्थः । साङ्काश्ये नगरे सिद्धो जात इत्यर्थो वा । ध्वाङ्क्षेण । व्याख्यानादर्थग्रहणम् । **इवेति** । तत्र स इव यो गुरुकुलादौ न चिरं तिष्ठति स एवमुच्यते । एवं हि निन्दा भवति । ऋणग्रहणमावश्यकोपलक्षणमित्याह–**आवश्यके इति** । तत्फलमाह–**पूर्वाह्णे-**

गोधेनुः । वशा वन्ध्या । गोवशा । वेहद्गर्भोपघातिनी । गोवेहत् । बष्कयणी तरुणवत्सा । गोबष्कयणी । कठ-प्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः । **प्रशंसावचनैश्च** ।२।१।६६। एतैः सह जातिः प्राग्वत् । गोमतल्लिका । गोमचर्चिका । गोप्रकाण्डम् । गवोद्धः । गोतल्लजः । प्रशस्ता गौरित्यर्थः । मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः । जातिः किम् ? । कुमारी मतल्लिका ॥ **युवा खलतिपलितवलिन-जरतीभिः** ।२।१।६७। पूर्वनिपातनियमार्थं सूत्रम् । लिङ्गविशिष्टपरिभाषया युवतिशब्दोऽपि समस्यते । युवा खलतिः–युवखलतिः । युवतिः खलती युवखलती । युवजरती । युवत्यामेव जरतीधर्मोपलम्भेन

---

त:] नात्र कठत्वं कुत्स्यते,अतः 'कुत्सितानि कुत्सनैः' इति गतार्थता न शङ्क्या,प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेः । 'जनयति कुमुदभ्रान्तिं धूर्तबको बालमत्स्याना'मित्यत्र 'धूर्तबक'इत्यसाधुरेव । **प्रशंसावचनैश्च** । वचनग्रहणं रूढि-शब्दपरिग्रहार्थम् । तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयो, ये च विशेषवचनाः शुचिमृद्वादयो, ये तु गौण्या वृत्त्या प्रशंसां गमयन्ति–'सिंहो माणवकः' इत्यादयस्ते सर्वे व्युदस्यन्ते । **गवोद्ध इति** । 'अवङ् स्फोटायनस्ये'त्य-वङि 'आद्गुणः' । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः । 'प्रशंसावचनपोटायुव-ती'त्येकयोगसंभवे पृथग्योगकरणं चिन्त्यफलम् । **युवखलतीति** । 'कृदिकारादक्तिनः' इति ङीष् । 'पुंवत्कर्मधारये'ति युवतिशब्दस्य पुंवद्भावः । **जरतीति** । 'जीर्यतेरतृन्' 'उगितश्चे'ति ङीप् । एवं युवपलितः युववलिन इत्युदाहार्यम् ।

---

बा.] तदुदश्विचेति कर्मधारयः । **गृष्टिः सकृत्प्रसूतेति** । कोशवाक्यमिदम् । **गोगृष्टिरिति** । गृष्टिश्चासौ गौश्चेति कर्मधारयः । **धेनुर्नवप्रसूतेति** । कोशवाक्यमिदम् । **गोधेनुरिति** । धेनुश्चासौ गौश्चेति विग्रहः । **वशा वन्ध्येति** । कोशवाक्यमिदम् । **गोवशेति** । वशा चासौ गौश्चेति विग्रहः । **वेहद्गर्भघातिनीति** । कोशवाक्य-मिदम् । **गोवेहदिति** । वेहच्चासौ गौश्चेति विग्रहः । **बष्कयण्यतरुणवत्सेति** । 'चिरसूता बष्कयणी' इत्यमरः। 'तरुणवत्से'त्यपपाठः । **गोबष्कयणीति** । बष्कयणी चासौ गौश्चेति विग्रहः । **कठप्रवक्तेति** । प्रवक्ता=अध्यापकः, स चासौ कठश्चेति विग्रहः । **कठाध्यापक इति** । अध्यापकश्चासौ कठश्चेति विग्रहः । **कठधूर्त इति** । धूर्तश्चासौ कठश्चेति विग्रहः । 'धूर्तोऽक्षदेवी'त्यमरः । विट इत्यन्ये । नच 'कुत्सितानि कुत्सनैः' इत्यनेन सिद्धिः शङ्क्या, प्रवृत्तिनिमित्तकुत्सायामेव तत्प्रवृत्तेः । न हि कठत्वं कुत्सितम् । **प्रशंसावचनैश्च** । **एतैरिति** । रूढ्या प्रशंसा-वाचकैरित्यर्थः । **जातिरिति** । 'पोटायुवती'त्यतस्तदनुवृत्तेरिति भावः । **प्राग्वदिति** । समानाधिकरणैः समस्यते स तत्पुरुष इत्यर्थः । जातेः पूर्वनिपातनियमार्थं सूत्रम् । **गोमतल्लिकेति** । मतल्लिका चासौ गौश्चेति विग्रहः । **गो-मचर्चिकेति** । मचर्चिका चासौ गौश्चेति विग्रहः । **गोप्रकाण्डमिति** । प्रकाण्डं चासौ गौश्चेति विग्रहः । **गवोद्ध इति** । उद्धश्चासौ गौश्चेति विग्रहः । 'अवङ् स्फोटायनस्य' 'आद्गुणः' । **गोतल्लज इति** । तल्लजश्चासौ गौश्चेति विग्रहः । सर्वत्र परवल्लिङ्गता । मतल्लिकादिशब्दानामप्रसिद्धत्वाद्व्याचष्टे—**प्रशस्ता गौरित्यर्थ इति** । गोशब्दस्य स्त्रीलिङ्गत्वाभिप्रायात्प्रशस्तेति स्त्रीलिङ्गनिर्देशः । गोशब्दस्य पुंलिङ्गत्वे तु प्रशस्त इति पाठ्यम् । ननु गोशब्दस्य पुंलिङ्गत्वे मतल्लिकामचर्चिकाप्रकाण्डशब्दानामपि विशेष्यनिघ्नत्वात्पुंलिङ्गतापत्तिः । गोशब्दस्य स्त्रीलिङ्गत्वे तु प्रकाण्डो-द्धतल्लजानामपि स्त्रीलिङ्गतापत्तिश्चेत्यत आह—**मतल्लिकादय इति** । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनी'त्यमरः । **कुमारी मतल्लिकेति** । अवस्थाविशेषात्मकवयोविशेषवाचित्वान्न जातिवाची कुमारी-शब्द इति न समासः । समासे तु 'पुंवत्कर्मधारये'ति पुंवत्त्वं स्यादिति भावः । **युवा खलति** । युवन्शब्दः खल-त्यादिभिः समानाधिकरणैः समस्यते, स तत्पुरुष इत्यर्थः । विशेषणसमासेन सिद्धे किमर्थमिदमित्यत आह–**पूर्वेति** । युवन्शब्दस्य खलत्यादिशब्दानां च गुणवाचित्वाद्विशेषणत्वे कामचारात्पूर्वनिपातस्याऽनियमे प्राप्ते तन्नियमार्थमिदं सूत्रमित्यर्थः । **खलतिः**=केशहीनशिराः । 'पलितं जरसा शौक्ल्यं' 'वलिनो वलिभः समौ' इत्यमरः । **युवखलति-रिति** । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपः । ननु युवेति पुंलिङ्गनिर्देशात् कथं युवतिशब्दस्य समास इत्यत आह—**लिङ्गविशिष्टेति** । **युवखलतीति** । 'पुंवत्कर्मधारये'ति पुंवत्त्वम् । **युवजरतीति** । जरती=वृद्धा । युवतिश्चासौ जरती चेति विग्रहः । 'पुंवत्कर्मधारये'ति पुंवत्त्वम् । ननु युवतिः कथं जरती स्यादित्यत आह—

---

शे.] इति पञ्चसूत्र्येत्यर्थः । विध्युन्मूलकत्वरूपयुक्तिमूलकस्य 'निषेधाश्च बलीयांसः' इत्यस्य तु न विषयः,तद्बाधं विना कर्मधारयांशेऽस्य विधेरचारितार्थ्यात् । बाध्यसामान्यचिन्तया च सर्वबाधः । इभी पोटेत्यादिविग्रहः । जातेः पूर्वनिपातार्थं 'पोटायुवति' इति सूत्रम् ।

**प्रशंसाव** । जातिरिति वर्त्तते । ननु मतल्लिकादेः स्त्रीत्वात् प्रशस्त इत्यर्थो न युक्तः । 'प्रशस्ता गौरित्यर्थ इति पाठ' उद्धादेः पुंस्त्वात्प्रकाण्डस्य क्लीबत्वादयुक्तोऽत आह—**न तु विशेष्यनिघ्ना इति** । **युवत्यामेवेति** । जरत्यां युवतीधर्मारोपे तु युवती-

तद्रूपारोपात्सामानाधिकरण्यम् । **कृत्यतुल्याख्या अजात्या** ।२।१।६८। भोज्योष्णम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्या किम् ? । भोज्य ओदनः । प्रतिषेधसामर्थ्याद्विशेषणसमासोऽपि न ॥ **वर्णो वर्णेन** ।२।१।६९। समानाधिकरणेन सह प्राग्वत् । कृष्णसारङ्गः । **कडाराः कर्मधारये** ।२।२।३१। कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः । कडारजैमिनिः । जैमिनिकडारः । **कुमारः श्रमणादिभिः** ।२।१।७०। कुमारी

---

त.] वलिनशब्दः पामादिः । **कृत्यतुल्याख्या** । 'तुल्यमहान्' 'सदृशमहा'नित्यादौ तु परत्वादनेन 'सन्महद्'दिति बाध्यते । 'तस्य सत्कृत्यशालिनः' इति भट्टिप्रयोगे तु 'सतां कृत्यं सत्कृत्य'मिति षष्ठीसमासो बोध्यः । एवं 'परमपूज्यः' इत्यादिष्वपि । **वर्णो** । समानाधिकरणेन वर्णवाचिना वर्णवाचि समस्यत इत्यर्थः । 'विशेषणं विशेष्येणे'त्यनेनैव सिद्धे पृथग्विधानं 'वर्णो वर्णेष्वनेते' इति पूर्वपदप्रकृतिस्वरो विधीयमानः प्रतिपदोक्तत्वादेतत्समासपूर्वपदस्यैव भवतु नान्यस्येत्येतदर्थम् । **कृष्णसारङ्ग इति** । सारङ्गश्चित्रपर्यायः । स च गुणोपसर्जनद्रव्यपरः । कृष्णशब्दोऽपि कृष्णावयवके भाक्तः । एवं च गौणे सामानाधिकरण्ये 'विशेषणं विशेष्येणे'त्यप्रवृत्तौ समासार्थमपीदमारब्धव्यमित्याहुः । ननु 'तृतीया तत्कृते'त्यनेनैवायं समासः सिध्यति, सारङ्गत्वस्य कृष्णादिकृतत्वात् । नापि स्वरे भेदः । 'तत्पुरुषे तुल्यार्थतृतीये'त्यनेनैव पूर्वपदप्रकृतिस्वरसिद्धेरिति चेदत्राहुः—'कृष्णशुक्लो हरितशुक्ल इत्याद्यर्थं समासोऽनेनाऽवश्यं विधेयः । नहीह तत्कृतत्वमस्ति । यद्यपीह 'विशेषणं विशेष्येणे'त्यनेन समासः सिध्यति, तथापीष्टः स्वरो न सिध्यति । न च प्रतिपदोक्तसमासोऽकिञ्चित्करः, व्यावर्त्याऽलाभादिति वाच्यं, कृष्णशुक्लौ इत्यादेर्व्यावर्त्यस्य संभवा'दिति । **कडाराद्य इति** । बहुवचननिर्देशादिति भावः । आदिशब्देन—'गडुलशाण्डिल्यः', 'शाण्डिल्यगडुलः' इत्यादि । एतच्च

---

बा.] **युवत्यामेवेति** । **कृत्यतुल्याख्या** । कृत्यप्रत्ययान्ताः, तुल्यवाचकाश्च जातिभिन्नवाचकेन समानाधिकरणेन समस्यन्ते स तत्पुरुष इत्यर्थः । **भोज्योष्णमिति** । भोज्यं च तदुष्णं चेति विग्रहः । 'ऋहलोर्ण्य'दिति ण्यत् । अर्हे कृत्यप्रत्ययः । भोज्योष्णशब्दयोः क्रियागुणशब्दत्वाद्विशेषणत्वे कामचारादनियतपूर्वनिपाते प्राप्ते नियमार्थमिदम् । **तुल्यश्वेत इति** । तुल्यश्चासौ श्वेतश्चेति विग्रहः । उभयोर्गुणवचनतया विशेषणत्वाऽनियमेऽपि तुल्यशब्दस्यैव पूर्वनिपातः । आख्याग्रहणस्य प्रयोजनमाह—**सदृशश्वेत इति** । सदृशशब्दस्य तुल्यपर्यायत्वादिति भावः **भोज्य ओदन इति** । अत्र ओदनशब्दस्य जातिवाचित्वात्तेनायं समासो न भवतीत्यर्थः । नन्वेतत्समासाऽभावेऽपि विशेषणसमासो दुर्वार इत्यत आह—**प्रतिषेधेति** । भोज्यशब्दपूर्वनिपातस्योभयत्राप्यविशिष्टतया 'अजात्ये'ति पर्युदासवैयर्थ्यादिति भावः । **वर्णो** । शेषपूरणेन सूत्रं व्याचष्टे—**समानाधिकरणेनेति** । वर्णवाचिना समानाधिकरणेन वर्णवाची समस्यते स तत्पुरुष इत्यर्थः । **कृष्णसारङ्ग इति** । सारङ्गः—चित्रवर्णवान् । कृष्णशब्दः कृष्णावयवके लाक्षणिक इति सामानाधिकरण्यम् । कृष्णश्चासौ सारङ्गश्चेति विग्रहः । विशेषणसमासेन सिद्धे इदं प्रपञ्चार्थमेव । यत्तु 'वर्णो वर्णेष्वनेते' इति स्वरविधौ प्रतिपदोक्तत्वादस्यैव ग्रहणार्थमिदम् । तेन सारङ्गस्यावयवः कृष्णः सारङ्गकृष्ण इत्यत्र 'वर्णो वर्णेषु' इति स्वरो नेति, तच्चिन्त्यं, कर्मधारयस्वरप्रकरणे 'वर्णो वर्णेष्वनेते' इति सूत्रस्य पाठेनैव सिद्धेरिति दिक् । **कडाराः कर्म** । 'उपसर्जनं पूर्व'मित्यतः पूर्वमित्यनुवर्तते । 'कडाराः' इति बहुवचननिर्देशात्तदादिग्रहणम् । तदाह—**कडाराद्य इति** । 'उपसर्जनं पूर्व'मिति नित्ये प्राप्ते विकल्पोऽयम् । **कडारजैमिनिरिति** । कडारश्चासौ जैमिनिश्चेति विग्रहः । **कुमारः श्रमणा** । कुमारशब्दः श्रमणादिभिः समानाधिकरणैः समस्यते स तत्पुरुष इत्यर्थः । **कुमारश्रमणेति** । 'पुंवत्कर्मधारये'ति पुंवत्त्वम् । **श्रमणा**—परित्यक्तसर्वसङ्गा ।

---

शे.] शब्दस्य विशेषणत्वेन 'विशेषणम्' इति समासेऽपि पूर्वनिपातनियमसिद्धया जरतीग्रहणस्य वैयर्थ्यमेव स्यादिति भावः । **कृत्यतु** । कृत्यप्रत्ययान्तास्तुल्यवाचकाश्च जातिभिन्नवाचकेन समस्यन्त इत्यर्थः । 'तुल्यमहा'नित्यादौ परत्वादनेनैव समासः । पूर्वनिपातनियमार्थमिदम् । सत्कृत्यं, परमपूज्य इत्यादौ षष्ठीसमासो बोद्धव्यः । यद्वा बाहुल्कादेतद्विषये 'सन्महद्' इत्यस्यैव प्रवृत्तिः । **सामर्थ्यादिति** । पूर्वनिपातस्योभयत्रापि समत्वादिति भावः । जातिभिन्नवाचकेन समासे हि पूर्वनिपाताऽनियमे प्राप्ते तन्नियमार्थमिदं सार्थकमिति अजात्येत्येतदर्थं स्यादिति तत्सामर्थ्याद्विशेषणसमासबाध इति तात्पर्यम् । इदं प्राचामनुरोधेन । परे तु अजात्येति उक्तार्थस्य स्पष्टतया लाभायैव । अत एव 'कुलगार्हपते'ति सूत्रभाष्योदाहृते पण्यकम्बलः पण्यहस्तीत्यत्र विशेषणमिति समाससिद्धिः । भोज्य ओदन इत्यत्राऽसमासस्येष्टत्वे स बाहुल्काद्बोध्य इत्याहुः । **समानाधिकरणेनेति** ॥ वर्णवाचिना तादृशेन वर्णवाचि समस्यत इत्यर्थः । सारङ्गः—चित्रः । कृष्णशब्दस्तदवयवके लाक्षणिक इति सामानाधिकरण्यम् । 'विशेषण'मित्येव सिद्धे इदं व्यर्थम् । न च 'वर्णो वर्णेष्वनेते' इति स्वरविधायके प्रतिपदोक्तस्याऽस्यैव ग्रहणार्थमिदम् । अत एव सारङ्गस्यावयवः कृष्णः 'सारङ्गकृष्ण' इत्यत्र तेन पूर्वपदप्रकृतिस्वरो नेति वाच्यम् । कर्मधारयस्वरप्रकरणे तत्पाठेन सिद्धेरिति दिक् । बहुवचननिर्देशाद्यथार्थावगतिरित्याह—**कडाराद्य इति** । कर्मधारये किम् ? [illegible] इत्यपीत्यर्थः । 'युवा खलती'ति

श्रमणा कुमारश्रमणा। इह गणे श्रमणा प्रव्रजिता गर्भिणीत्यादयः स्त्रीलिङ्गाः पठ्यन्ते। लिङ्गविशिष्टपरिभाषाया एतदेव ज्ञापकं बोध्यम्। **चतुष्पादो गर्भिण्या** ।२।१।७१। चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत्। गोगर्भिणी। **मयूरव्यंसकादयश्च** ।२।१।७२। एते निपात्यन्ते। मयूरो व्यंसको मयूरव्यंसकः। व्यंसको धूर्तः। उदक्चाऽवाक् च उच्चावचम्। निश्चितं च प्रचितं च निश्चप्रचम्। नास्ति किंचन यस्य सः अकिंचनः। **(ग) आख्यातमाख्यातेन क्रियासातत्ये**। अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता। पचत-भृज्जता। खादतमोदता। **(ग) एहीडादयोऽन्यपदार्थे**। एहीड इति यस्मिन्कर्मणि [ प्रयुज्यते ] तदेहीडम्।

---

त.] भाष्ये स्पष्टम्। **एतदेवेति**। एवकारः स्फुटसिद्धत्वद्योतनार्थो, न त्ववधारणार्थः, 'युवा खलती'ति सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वसंभवात्। न हि युवन्शब्दस्य पुंस्त्वे जरतीसामानाधिकरण्यं सङ्गच्छते। **चतुष्पादो**। मण्डूकप्लुत्याऽत्र 'जाति'रित्यनुवर्तत इत्याह—**जातिवाचीति**। जातिः किम्?। 'कालाक्षी गर्भिणी'। चतुष्पात्किम्?। ब्राह्मणी गर्भिणी। प्रत्युदाहरणे 'विशेषण'मिति समासः स्यादेव। गर्भिणीकालाक्षीत्यादिपूर्वनिपाते विशेषः। **मयूर**। चकारोऽत्रावधारणार्थः। तेन 'परममयूरव्यंसकः' इत्यादि समासान्तरं न भवति। **धूर्त इति**। एवं च गुणवचनत्वात्पूर्व-निपाते प्राप्ते इदं वचनमारब्धमिति भावः। अन्ये तु 'मयूर इव व्यंसको मयूरव्यंसक' इत्यादौ 'उपमानानि सामान्य-वचनै'रिति समासस्यापवादोऽयम्। तेन 'समासस्ये'त्यन्तोदात्तत्वमिह सिध्यति, 'तत्पुरुषे तुल्यार्थे'त्युपमानपूर्व-पदप्रकृतिस्वरस्योपमानसंशब्दनेन विहिते प्रतिपदोक्तसमासे चरितार्थत्वादित्याहुः। **अश्नीतपिबतेति**। इह क्रिया-रूपस्यान्यपदार्थस्य प्राधान्यात्स्त्रीत्वाट्टाप्। एवमग्रेऽपि। **राजान्तरमिति**। अन्तरशब्दोऽत्र भिन्नवाची। **चिन्मात्र-मिति**। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। अन्तर-मात्रशब्दाभ्यां सह नित्यसमास इत्युभयत्राऽस्वपदविग्रहो

---

बा.] ननु सूत्रे कुमारशब्दस्य पुंलिङ्गस्यैव पाठात्कथमिह स्त्रीलिङ्गस्योदाहरणमित्यत आह—**इहेति**। ननु गणे स्त्रीलिङ्गाना-मेव पाठे सूत्रस्य कथं तेषु प्रवृत्तिः?। नच लिङ्गविशिष्टपरिभाषयेति वाच्यं, तत्सद्भावे प्रमाणाऽभावादित्यत आह—**लिङ्गेति**। **एतदेवेति**। एतदपीत्यर्थः। 'युवा खलती'ति सूत्रे जरतीग्रहणस्यापि तज्ज्ञापकत्वात्। न हि युवन्शब्दस्य जरतीसामानाधिकरण्यमस्ति। **चतुष्पादो गर्भिण्या**। 'जातिग्रहणं कर्तव्य'मिति वार्तिकमभिप्रेत्याह—**चतुष्पाज्जा-तीति**। **गोगर्भिणीति**। गर्भिणी चासौ गौश्चेति विग्रहः। विशेष्यस्य पूर्वनिपातार्थमिदं सूत्रम्। जातिरिति किम्?। कालाक्षी गर्भिणी। **मयूरव्यंसका**। **एते निपात्यन्त इति**। कृतसमासकार्या निर्दिश्यन्त इत्यर्थः। **मयूरव्यंसक इति**। व्यंसकश्चासौ मयूरश्चेति विग्रहः। **व्यंसको धूर्त इति**। अत्र कोशो मृग्यः। गुणवचनत्वाद्व्यंसकशब्दस्य पूर्वनिपाते प्राप्ते इदं वचनम्। **उच्चावचमिति**। उदक्शब्दस्य उच्चेत्यादेशः। अवाक्शब्दस्य अवचादेशश्च। उच्चावचं नैकभेद'मित्यमरः। **निश्चप्रचमिति**। निश्चितशब्दस्य निश्चादेशः। प्रचितशब्दस्य प्रचादेशः। **नास्ति किंचनेति**। चनेत्यव्ययमप्यर्थे। नास्ति किमपि यस्येत्यर्थे बहुव्रीह्यपवादस्त्रिपदस्तत्पुरुषः। नञो नकारस्य लोपश्च निपात्यते। 'नलोपो नञः' इति तु नात्र प्रवर्तते, किंशब्दस्य उत्तरपदत्वाऽभावात्, समासचरमखण्ड एव उत्तरपद-शब्दस्य रूढत्वात्। **नास्ति कुत इति**। कुतोऽपि भयमस्य नास्तीति विग्रहस्यार्थः। **अकुतोभय इति**। बहुव्रीह्यपवादस्तत्पुरुषः। **राजान्तरमिति**। अत्राऽन्तरशब्दोऽन्यपर्यायः। तस्य स्थाने अन्यशब्दो विग्रहवाक्ये ज्ञेयः, नित्यसमासत्वेनाऽस्वपदविग्रहौचित्यात्। नित्यसमासत्वं च राजान्तरमित्यस्य व्याख्यानादेव ज्ञेयम्। अत्र अन्तरशब्दस्य परनिपातः। **चिन्मात्रमिति**। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। नित्यसमासत्वसूचनाय अस्वपद-विग्रहः। निपातनादनुनासिकनित्यतेत्याहुः। **आख्यातमिति**। गणसूत्रम्। क्रियासातत्ये गम्ये तिङन्तं तिङन्तेन समस्यते, स तत्पुरुष इत्यर्थः। **अश्नीतपिबतेति**। इहाऽसुबन्तत्वेऽपि समासः। क्रियारूपस्यान्यपदार्थस्य प्राधान्या-त्स्त्रीत्वाट्टाप्। एवं पचतभृज्जतेत्यादावपि। **एहीडादय इति**। इदमपि गणसूत्रम्। अन्यपदार्थे एहीडादयो निपात्यन्त इत्यर्थः। एहि ईडे इति विग्रहः। 'ईडे' इति लडुत्तमपुरुषैकवचनम्। इकारादेकारस्य अकारादेशः।

---

शे.] सूत्रे जरतीग्रहणस्यापि ज्ञापकत्वात्। **चतुष्पादो**। 'जातिग्रहणं कर्त्तव्य'मिति वार्त्तिकलब्धमर्थमाह—**जातिवाचिन इति**। **मयूरो व्यंसक इति**। केचित्तु मयूर इव व्यंसक इत्यर्थे उपमानसमासापवादोऽयं, प्रतिपदोक्तोपमानसमासविषयकपूर्वपदप्रकृति-स्वराऽभावायेत्याहुः। **उच्चावचमिति**। उच्चावचादेशोऽत्र। उच्चनीचमित्यर्थे इदमित्यन्ये। निश्चितप्रचितयोर्निश्चप्रचादेशः।

एतदन्तर्गणसूत्राण्याह—**आख्यातमिति**। क्रियाप्रधानमित्यर्थः। अत्र 'एहीडादयः' इत्यतोऽन्यपदार्थ इत्यनुवर्त्तते। गणे तस्य पूर्वं पाठात्। इह त्वसातत्याऽर्थतां तस्य ध्वनयितुं व्युत्क्रमेण पाठस्तदाह—**यत्राऽभिधीयत इति**। **अश्नीतपिबतेति**। अन्य-पदार्थस्य क्रीडादिरूपत्वेन स्त्रीत्वात्समासत्वेन प्रातिपदिकत्वाच्च टाप्। **खादतमोदतेति**। 'मोदन्ता'मित्यस्य स्थाने मोदतेत्यादेशः।

पृहियवन्न् । उद्धर कोष्ठादुत्सृज-देहीति यस्यां क्रियायां सा उद्धरोत्सृजा । उच्चमविचमा । भसावत्यार्थमिह पाठः । (ग) जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति । जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये, समासेन चेत्कर्ताऽभिधीयत इत्यर्थः । जहिजोडः । जहिस्तम्बः । नास्ति कुतो-[ऽपि] भयं यस्य सोऽकुतोभयः । अन्यो राजा राजान्तरम् । चिदेव चिन्मात्रम् । [अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः] । ईषदकृता ।२।२।७। ईषत्पिङ्गलः । * ईषद्गुणवचनेनेति वाच्यम् । ईषद्रक्तम् । नञ् ।२।२।६। नञ् सुपा सह समस्यते । नलोपो नञः ।६।३।७३। नञो नस्य लोपः

त.] दर्शितः । नित्यसमासत्वं त्ववधारणार्थकचकारेण लब्धमित्याहुः । उद्धर कोष्ठादित्यादि । उद्धर उत्सृजेत्येतावानेव विग्रहः । उत्सृजेत्यस्य विवरणं-देहीति । कोष्ठादिति तूद्धरेत्यस्याकाङ्क्षापूरणार्थमुक्तम् । समासेन चेत्कर्तेति । 'जहि जोड'मित्याभीक्ष्ण्येन य आह स जहिजोडः । एवं जहि स्तम्बमिति य आह स जहिस्तम्बः । नञ् । इह 'नलोपो नञः' इत्यत्र विशेषणार्थो ञकारः । तत्फलं च नैकधेत्यत्राऽलोपः । 'अव्यये नञ्कुनिपातानां'मित्यव्ययपूर्वपदप्रकृतिस्वरार्थं ञकारोच्चारणमित्यन्ये । सुपा सह समस्यत इति । उत्तरपदार्थप्रधानोऽयं समासः । तथाहि आरोपितत्वं नञा द्योत्यते । तथा च अब्राह्मणशब्दादारोपितो ब्राह्मण इति बोधे अर्थाद्ब्राह्मणभिन्न इति पर्यवस्यति । अतएवाऽनुपसर्जनत्वादतस्मिन्स इत्यादौ सर्वनामकार्यं सिध्यति । तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम् । 'एतत्तदो'रिति सूत्रेऽनञ्समासग्रहणं चेह लिङ्गमित्यादि मनोरमायामनुसन्धेयम् । नलोपो नञः । 'नञोऽचि'ति वक्तव्ये नलोपवचनं साकच्कार्थं,तेन नञोऽकचि 'अकब्राह्मणः' 'अकनश्व' इत्यादि सिद्धमित्याहुः । उत्तरपदे इति । 'अलुगुत्तरपदे' इत्यधिकारादिति भावः । उत्तरपदे किम् ? । घटो नास्ति । पटो नास्ति । नन्वेवमपि 'स्त्रैणाऽर्थे' इत्यत्र नलोपः स्यादिति चेदत्राहुः—उत्तरपदाक्षिप्तपूर्वपदेन नञं विशेष्य 'पूर्वपदभूतस्य नञः' इति व्याख्यानान्न भवति । 'स्त्रीपुंसाभ्या'मिति विहितस्य नञ्प्रत्ययस्याऽपूर्वपदत्वात् । अतएव चाऽत्र 'प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहण'मिति परिभाषा नोपतिष्ठते । न च प्रत्ययग्रहणे तदन्तग्रहणान्नञ्प्रत्ययान्तस्य पूर्वपदत्वं संभवत्येवेति 'प्रत्ययाप्रत्यययो'रित्येतदुपतिष्ठत एवेति वाच्यं, 'हृदयस्य हृल्लेखे'ति सूत्रेऽण्ग्रहणात्पृथग्लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापनात् । यद्वा 'अमूर्धमस्तकात्' 'विभक्तावप्रथमाया'मित्यादिज्ञापकात्

बा.] पृहियवमिति । 'यौमी'त्यस्य यवादेशः । 'उत्सृजे'त्यस्य विवरणं-देहीति । इह पाठ इति । एहीडादिष्वित्यर्थः । 'जहि कर्मणा बहुल'मित्यपि गणसूत्रम् । कर्ताऽभिधीयते इति । उक्तः कर्तेत्यर्थः । जहिजोड इति । 'जोड' इति कस्यचित्संज्ञा । जहि जोडं जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः । जहिस्तम्ब इति । जहि स्तम्बं, जहि स्तम्बमिति य आहेति विग्रहः । [इति समानाधिकरणाधिकारः] । ईषदकृता । ईषच्छब्दोऽकृदन्तप्रकृतिकसुबन्तेन समस्यते स तत्पुरुष इत्यर्थः । ईषत्पिङ्गल इति । पिङ्गलशब्दोऽव्युत्पन्नप्रातिपदिकमिति भावः । ईषद्गुणवचनेनेति । 'अकृतेत्यपहाये'ति शेषः । नञ् । इदं समानाधिकरणाधिकारस्थं नेत्यभिप्रेत्याह—सुपा समस्यत इति । न लोपो नञः । नेति लुप्तषष्ठीकं पदं । तदाह—नञो नस्येति । उत्तरपदे इति । 'अलुगुत्तरपदे' इत्यतस्तदनुवृत्तेरिति भावः । 'नञोऽ'चीति सिद्धे लोपवचनम्-'अकब्राह्मण' इति साकच्कार्थमित्याहुः । अब्राह्मण इति । अत्रारोपितत्वं नञर्थः । आरोपितत्वं च ब्राह्मणत्वद्वारा ब्राह्मणे अन्वेति । आरोपितब्राह्मणत्ववानिति बोधः ।

शे.] एहीडादय इति । लडुत्तमपुरुषैकवचनस्य 'ईडे इत्यस्य ईडादेशः । पृहियवमित्यत्र यौमीत्यस्य यवादेशः । उद्धर कोष्ठादिति । उद्धरोत्सृजेति विग्रहः । उत्सृजेत्यस्य विवरणं देहीति । कोष्ठादिति तूद्धरेत्यस्याकाङ्क्षापूरणाय । इह पाठ इति । एहीडादिषु तिङन्तपूर्वपदोत्तरपदकसमुदायानामित्यर्थः । कर्तेति । 'उक्त' इत्यादिः । जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः । चिन्मात्रमिति । अत्राऽनुनासिकनित्यता निपातनात् । एवार्थमात्रशब्देनात्र समासः । मयूरव्यंसकादयश्चेति चकार एवकारार्थः । तेनैषां समासान्तरघटकता नेति 'परमो मयूरव्यंसक' इत्याद्येव । ईषद्गुणवचनेनेति । अकृतेत्यस्य स्थाने इदं । तदाह-ईषद्रक्तमिति ।

नञ् । ञकारो निषेधार्थकनशब्देन समासे तत्पुरुषत्वाऽभावाय । तेन नैकधेत्यादौ पूर्वपदप्रकृतिस्वरो न । अत्रैव नलोपं वारयितुं लोपविधायके ञकारोच्चारणम् । प्रसिद्धतरत्वान्नञत्राऽव्ययं, न तु स्त्रीपुंसाभ्यां नञ् । ये तु नेत्यव्ययं नेच्छन्ति, अत एव 'न लोपो नञः' इति सूत्रे नञः सानुबन्धकस्य ग्रहणं व्यर्थं, नस्येत्येव सिद्धम् । न च प्रश्नपुत्रे दोषः, सानुबन्धकत्वात् । अव्ययेष्वपि नेत्येव पाठ्यमित्याशयः । 'वामनपुत्र' इत्येतद्वारणार्थं तु सानुबन्धकः पठित इति भाष्योक्तं सङ्गच्छत इति वदन्ति च, तेषामुभयत्रापि ञकारः स्पष्टार्थः । नैकधेत्यादि नान्तरीयकमिति च पृषोदरादित्वात्साधुः । न लोपो । 'नञोऽचि'ति सिद्धे लोपवचनं साकच्कार्थम् । तेनाऽकब्राह्मण इत्यादि सिद्धमित्येके । ननेत्यादौ द्वित्वे बहुव्रीहिवद्भावेऽपि नाऽनेन लोपः । उत्तरपदशब्दस्य

स्यादुत्तरपदे । [ न ब्राह्मणः— ] अब्राह्मणः । तस्मान्नुडचि ।६।३।७४। लुप्तनकारान्नञ उत्तरपदस्याऽजादेर्नुडागमः स्यात् । अनश्वः । अर्थाऽभावेऽव्ययीभावेन सहाऽयं विकल्प्यते । 'रक्षोहागमलघ्वसन्देहाः

त.] 'नलोपो नञः' इत्यत्राऽव्ययमेव नञ् गृह्यते, न तु प्रत्यय इति । तस्मान्नुडचि । 'ङः सि धुडि'त्यत्रेवाऽचीति सप्तम्याः षष्ठी प्रकल्प्यत इत्याह—अजादेरिति । अचा उत्तरपदविशेषणात् 'यस्मिन्विधि'रिति तदादिविधिर्लभ्यत इति भावः । अनश्व इति । नुटः परादित्वेनाऽपदान्तत्वान्ङमो ह्रस्वादिति ङमुण्न भवति । ननु विघ्नानामभावोऽविघ्नमित्यत्रापि परत्वात्तत्पुरुषः स्यात्, अव्ययीभावस्य निर्मक्षिकादौ सावकाशत्वात् । अन्यथा 'अनुपलब्धिः' अविवाद

बा.] अर्थाद्ब्राह्मणभिन्न इति पर्यवस्यति । केचित्तु नञ् भिन्नवाची, ब्राह्मणाद्भिन्न इत्यर्थ इत्याहुः । तदयुक्तं, ब्राह्मणाद्भिन्न इत्यर्थे पूर्वपदार्थप्राधान्यापत्तेः । तथाच 'उत्तरपदार्थप्रधानस्तत्पुरुष' इति भाष्योद्घोषो विरुध्येत । किंच—अते, अतस्मै, अतस्मादित्यादौ सर्वनामकार्यं शीभावस्मायादिकं न स्यात्, तच्छब्दार्थस्य नञर्थं प्रति विशेषणत्वेऽप्रधानत्वात्, 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्युक्तेः । तथा 'अस' इत्यादौ 'तदोः सः सावनन्त्ययोः' इति सर्वाद्यन्तर्गतत्यदादिकार्यं सत्वं च न स्यात् । 'अनेक'मित्यत्र एकवचनानुपपत्तिश्च । एकभिन्नस्य एकत्वाऽसंभवेन द्वित्वबहुत्वनियमेन च द्विबहुवचनापत्तेः । तथा सति 'अनेकमन्यपदार्थे' इति नोपपद्येत । 'एतत्तदोः सुलोपः'इत्यत्र अनञ्समासग्रहणं चात्र लिङ्गम् । तद्धि 'असः शिवः', 'अनेषः शिव' इत्यादौ सुलोपाऽभावार्थम् । तद्भिन्न एतद्भिन्न इत्यर्थे तु तच्छब्दार्थस्य उपसर्जनतया त्यदाद्यत्वानापत्तौ हल्ङ्यादिलोपस्य दुर्वारत्वात्तद्वैयर्थ्यं स्पष्टमेव । तस्मादुत्तरपदार्थप्राधान्यं भाष्योक्तमनुसृत्य आरोपितत्वमेव नञर्थ इति युक्तम् । विस्तरस्तु प्रौढमनोरमायां शब्दरत्ने मञ्जूषायां च ज्ञेयः।प्राचीनास्तु 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ।' इति पठित्वा-अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोअश्वेभ्यः, अधर्म इत्युदाजह्रुः । तत्र सादृश्यादिकं प्रकरणादिगम्यमित्याहुः ।

तस्मान्नुडचि । तच्छब्देन पूर्वसूत्रावगतो लुप्तनकारो नञ् परामृश्यते । उत्तरपद इत्यनुवृत्तमचीत्यनेन विशेष्यते । तदादिविधिः । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वा'दिति परिभाषया सप्तमी षष्ठीं प्रकल्पयति । तदाह—लुप्तनकारादिति । अनश्व इति । समासे सति नञो नकारस्य लोपे तत्परिशिष्टाऽकारस्य नुट् । टकार इत् । उकार उच्चारणार्थः । टित्त्वादाद्यवयव इति भावः । ङमुट् न कृतः, ङमुट्प्रसङ्गात् । ननु 'उत्तरे कर्मण्यविघ्नमस्तु' इत्यादौ विघ्नानामभाव इत्यर्थे नञ्तत्पुरुषे सति परवल्लिङ्गत्वेऽविघ्न इति स्यात् । नच अर्थाभावेऽव्ययीभावेन तत्सिद्धिरिति वाच्यम्, अव्ययीभावस्य निर्मक्षिकमित्यादौ सावकाशतया परत्वात्तत्पुरुषस्यैव प्रसङ्गादित्यत आह—अर्थाऽभावे इति । रक्षेति । पस्पशाह्निकभाष्ये इदं वाक्यम् । रक्षा च ऊहश्च आगमश्च लघु च असन्देहश्चेति द्वन्द्वः । 'परवल्लिङ्ग'मिति पुंस्त्वम् । अत्र सन्देहाऽभाव इत्यर्थेऽसन्देहशब्दस्य असन्देहा इति प्रयोगात्तत्पुरुषो विज्ञायते ।

शे.] मुख्यसमासचरमावयव एव रूढेरित्याहुः । तस्मान्नुट् । नञो नुडभावाय नाकनासत्ययोर्नलोपाऽभावे तद्धारणाय च 'तस्मा'दिति । ततो व्याख्यानाचाऽचीति सप्तमी षष्ठ्यर्थे, सप्तमीनिर्देशस्तु 'यस्मिन्विधिः' इति परिभाषाप्रवृत्तये । तदाह—अजादेरिति । नुक् तु न कृतः । ङमुट्प्रसङ्गात् । अनश्व इति । आरोपितोऽश्व इति बोधः । नञ् तु द्योतकः । तत्र तादात्म्यारोपस्य भेदसादृश्ययोः सतोरेव सत्त्वेन संसर्गारोपस्य तदभाव एव सत्त्वेनाऽऽरोपितत्वबोधे सादृश्याऽभावादीनामर्थतो बोध इति नाऽब्राह्मणपदाल्लोष्टादिप्रतीतिरित्यन्यत्र विस्तरः । अर्थाऽभावे इति । तत्राप्यारोपितो घट इत्येव बोधः । भेदेन तदारोपबोधेऽत्यन्ताभावबोधः, तादात्म्येन तदारोपबोधे भेदबोधः । अत्र च प्रकरणादिकं नियामकमिति बोध्यम् । विकल्प्यत इति । पूर्वपदार्थप्राधान्येऽव्ययीभाव उत्तरपदार्थप्राधान्येऽयमित्यादिरीत्येति भावः । न्यायसिद्धेऽर्थे लिङ्गमप्याह—रक्षोहेति । 'असन्देहा' इत्यस्य आरोपितः सन्देह इत्यर्थः । सन्देहाऽभावः प्रयोजनमिति यावत् । अव्ययीभावेन द्वन्द्वे हि परवल्लिङ्गेनाऽसन्देहा इत्यनुपपन्नमिति भावः । इदं पस्पशायां भाष्ये । असंहितमिति संहितासञ्ज्ञासूत्रे भाष्ये वार्तिकम् । द्रुतामित्यायां मध्याविलम्बितवृत्तौ संहिताऽभाव इति तदर्थः । परे तु—भाष्ये नञ्तत्पुरुषोऽन्यपदार्थप्रधानः, उत्तरपदस्य धर्मपरतया न विद्यते ब्राह्मण्यं यस्मिन्सोऽब्राह्मणः । बहुव्रीहिस्तु तस्य धर्मिपरत्वे चरितार्थः । अत एव 'नञोऽस्त्यर्थानामुत्तरपदलोपश्च' इति 'अनेकम्' इति सूत्रस्थं वार्तिकं सङ्गच्छते । एतेन तत्त्वेऽपवादत्वादयं बहुव्रीहेर्बाधकः स्यादिति कैयटोक्तमपास्तम् । 'असः' इत्यादौ सर्वादिकार्यं तु 'एतत्तदोः सुलोपोऽकोरनञ्समासे' इति ज्ञापकात्सिद्धम् । अत्र पक्षे 'अवर्षा हेमन्तः' इत्यादौ विशेष्यगतलिङ्गवचनापत्तिर्दोष उक्तः । तत्र यद्यपि लिङ्गदोषो 'लिङ्गमशिष्यं लोकाश्रयत्वात्' इति परिहर्तुं शक्यते तथापि वचनदोषः स्थितः । ततः 'पूर्वपदार्थप्रधानस्तर्हि भविष्यति' । तत्रापि पक्षे 'असः' इत्यादिसिद्धिः प्राग्वदेव । न च पूर्वपदस्याऽव्ययत्वेन तदर्थप्रधानस्य लिङ्गसङ्ख्यायोग्यां कथं योग इति वाच्यम्? । शब्दशक्तिस्वभावाद्यत्वे नञोऽसत्त्वभूतार्थाभिधायित्वेऽपि समासे सत्त्वरूपार्थाभिधायित्वेन तद्योगसम्भवात् । यद्वा गुणवचनाना-

प्रयोजनमि'ति, अहुतायामसंहितमिति च भाष्यवार्तिकप्रयोगात् । तेनानुपलब्धिरविवादोऽविघ्नमित्यादि सिद्धम् । * नञो नलोपस्तिङि क्षेपे । अ पचसि त्वं जाल्म ! । 'नैकधे'त्यादौ तु 'न'शब्देन सह 'सुप्सुपे'ति समासः । नभ्राण्नपान्नवेदा नासत्या नमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ।६।३।७५। [भ्राडिति क्विबन्तः]। पादिति शत्रन्तः । 'वेदा' इत्यसुन्नन्तः । न सत्या असत्याः । न असत्या नासत्याः । न मुञ्चतीति नमुचिः । न कुलमस्य [नकुलम्] । न खमस्य [नखम्] । न स्त्रीपुमान् । [नपुंसकम्] । स्त्रीपुंसयोः पुंसकभावो निपात-

त.] इति न सिद्ध्येदित्याशङ्क्याह–अर्थाभावेऽव्ययीभावेन सहेत्यादि । अविघ्नमिति । यद्यप्यविद्यमाना विघ्ना यस्मिन्निति बहुव्रीहिणा 'अविघ्नं कर्मे'त्यादिप्रयोगः सिध्यति, तथापि 'उत्तरे कर्मण्यविघ्नमस्तु' इत्यादिप्रयोगा अव्ययीभावं विना स्वरसतो न सिध्यन्तीति भावः । नञो नलोप इति । तिङन्तेन समासाऽभावादप्राप्ते वचनम् । अपचसीति । कुत्सितं पचसीत्यर्थः । नशब्देनेति । नञा समासे त्वनेकधेत्येव स्यादिति भावः । नभ्राट् । सत्सु साधवः सत्याः । 'तत्र साधुः' इति यत् । न सत्या असत्याः । न असत्या नासत्याः । इह बहुवचनमविवक्षितम् । तेन 'नासत्यावश्विनौ दस्रौ' इति सिद्धम् । नमुचिरिति । 'सर्वधातुभ्य इन्' । 'इगुपधात्किदि'ति कित्त्वान्न गुणः ।

बा.] अव्ययीभावे 'रक्षोहागमलघ्वसन्देह'मिति स्यात् । अहुतायामसंहितमिति । 'परः सन्निकर्षः संहिते'ति सूत्रे पठितमिदं वार्तिकम् । अहुतायां वृत्तौ संहिताऽभाव इत्यर्थः । अत्र अव्ययीभावे सति असंहितमिति प्रयोगादव्ययीभावेऽपि अर्थाऽभावो नञा गम्यो भवतीति विज्ञायते । अन्यथा तत्पुरुषे सति परवल्लिङ्गत्वादसंहितेति स्यात् । ततश्च नञा गम्येऽभावे तत्पुरुषाऽव्ययीभावयोर्विकल्प इति स्थितम् । तेनेति । अनुपलब्धिरित्यत्र, अविवाद इत्यत्र च तत्पुरुषः, अविघ्नमित्यत्र अव्ययीभावश्च सिध्यतीत्यर्थः । शब्देन्दुशेखरे त्वन्यथा प्रपञ्चितम् । नञो नलोपस्तिङि क्षेपे इति । 'न लोपो नञः' इति सूत्रस्थवार्तिकमिदम् । नञो नकारस्य लोपः स्यात्तिङि परे निन्दायामिति वक्तव्यमित्यर्थः । अपचसि त्वं जाल्मेति । कुत्सितं पचसीत्यर्थः । अत्र अ इति भिन्नं पदं तिङन्तेन समासाऽभावात् । वार्तिकमिदं प्रसङ्गादुपन्यस्तम् । नञ्समानार्थकेन 'अ' इत्यव्ययेनापि सिद्धमिदमिति वार्तिकं विफलमेव । केचित्तु असादेव वार्तिकादव्ययेषु 'अ' इत्यस्य पाठोऽप्रामाणिक इत्याहुः । ननु नैकधेत्यत्रापि नञ्समासे 'न लोपो नञः' इति नकारस्य लोपे 'तस्मान्नुडचि'ति नुटि अनेकधेत्येव स्यादित्यत आह—नैकधेत्यादौ त्विति । एतदर्थमेव 'न'मिति सूत्रे, 'न लोपो नञः' इति सूत्रे च ञकारानुबन्धग्रहणमिति भावः । नभ्राण्नपात् । सुगमम् । अनुवर्तमान

शे.] माश्रयतो लिङ्गादिवत्समासाऽर्थः प्रतियोगितया यद्द्रव्यं श्रितस्तत्स्थलिङ्गादि समासस्य भविष्यति । एतेनात्र पक्षे 'अवर्षा हेमन्तः' इत्यादौ हेमन्ताद्याश्रयगतलिङ्गसङ्ख्याप्रसङ्ग इति कैयटोक्तमपास्तम् । अभावेन प्रतियोगिनोऽपि स्वज्ञानाद्याश्रयणेन तस्याप्याश्रयत्वात् । स्वघटितसमासघटकेनोपस्थित्या च तस्यैवाश्रयस्य ग्रहणौचित्यात् । अन्यथा तद्दोषदूषितपक्षोर्ध्वमाश्रितेऽपि पक्षे तद्दोषानुवृत्तौ भाष्यस्य निर्दलतापत्तिः । एतत्समकक्षतया 'अथ वा पुनरस्तूत्तरपदार्थप्रधानः' इत्युक्तेरसङ्गतिश्च । त्वद्रीत्या हि 'अस्तु तर्ह्युत्तरपदार्थे' इति वक्तुमुचितम् । एतत्पक्षद्वयेऽप्यनेकमित्यादावेकवचनाऽसिद्धिं वक्ष्यमाणां मनसि निधायोत्तरपदार्थप्रधानत्वं सिद्धान्तितम् । तत्पुरुषस्योत्सर्गतस्तत्प्रधानत्वाच्च । अत्र पूर्वपदार्थप्रधानत्वपक्षेऽपवादत्वेनाऽव्ययीभावस्य बाधनाञ्ञाऽव्ययीभावाऽभावोऽवश्यं स्वीकार्यः । अन्यथाऽव्ययीभावाऽसिद्धिरूपदूषणानुपन्यासेन भाष्यस्य न्यूनतापत्तिः । तस्मादत्यन्ताभावार्थकनञः क्रियादिप्रतियोगिकाऽभावबोधकत्वेनोत्तरपदार्थेनानन्वयादसामर्थ्येन नाऽव्ययीभावः–'अमाक्षिकम्' इत्यादौ । न सन्देह इत्यादौ सन्देहस्य गुणत्वेन भवत्येव तदभावबोधो नञा । एतदेवाभिप्रेत्य भाष्ये उक्तम्–'प्रसज्यायं क्रियागुणौ ततः प्रतिषेधति' इति । 'असन्देह' इत्यादौ चारोपितः सन्देह इति भेदेनारोपज्ञानात्तदत्यन्ताऽभावप्रतीतिः । किञ्चाऽर्थाभावशब्दे नञो घटकतयाऽस्य सूत्रगृहीताऽव्ययतयाऽनेन नाऽव्ययीभावः । सूत्रगृहीताव्ययेन 'अव्ययम्' इति समासाऽभावस्य तत्र सूत्रे उपपादितत्वात् । अत्र चेदं भाष्यमपि मानम् । 'असंहित'मित्यत्र सन्धानं संहितमिति भावे क्तः । आरोपितं सन्धानम् । आरोपितः परः सन्निकर्ष इत्यर्थे तदभावात्संहितासञ्ज्ञा न प्राप्नोतीत्यर्थ इति न तदसङ्गतिः । संहितशब्दः 'परः सन्निकर्षः' इति सूत्रबलात्स्त्रीलिङ्गो, वार्त्तिकप्रामाण्यात् क्लीबोऽपि । अत एव 'संहितव'दित्यादिप्रातिशाख्यतद्भाष्ययोः प्रयुक्तम् । अत एव 'परः सन्निकर्षः संहिता चेदहुतायामसंहितमि'ति वार्त्तिकं, 'परः सन्निकर्षः संहिता चेदहुतायां वृत्तौ हि संहितासञ्ज्ञा न प्राप्नोती'ति शेषपूरणेन व्याख्याय हुतायामेव हि परः सन्निकर्षो नाऽहुतायामित्यनेनासंहितमित्यंशोऽर्थतो हेतुत्वेन व्याख्यातो भाष्ये । 'न प्राप्नोती'त्यंशस्य तद्व्याख्यानत्वे हि असामर्थ्यात्समासानापत्तिः । त्वद्रीत्या संहितासञ्ज्ञाऽभावः प्राप्नोतीत्येवं वदेत्, वार्त्तिककृतो हेत्वकथनेन न्यूनता चेत्याहुः । प्रसङ्गादाह–नञो नलोपस्तिङीति । तिङन्तेन समासाऽभावादप्राप्तौ वचनम् । अपचसीत्यस्य–कुत्सितं पचसीत्यर्थः । अत एव नञ्समानार्थः 'अ'शब्दोऽव्ययेष्वप्रामाणिक इति बोध्यम् । नञा समासेऽनेकधेत्येव स्यादत आह—नशब्देनेति । एकशब्दस्येति भावः । ततो वा प्रकारे । प्रकारेऽनेकस्य [illegible] । एवमेव [illegible] नान्तरीयकत्वयः साधवः ।

मांस्। न क्षरतीति नक्षत्रम् । क्षरतेः क्षीयतेर्वा क्षत्रमिति निपात्यते । न क्रामतीति नक्रः। क्रमेर्डः। न अकमस्मिन्निति नाकः । **नगोऽप्राणिष्वन्यतरस्याम्** ।६।३।७७। नग इत्यत्र नञ् प्रकृत्या वा । नगाः, अगाः पर्वताः । अप्राणिष्विति किम् ? । अगो वृषलः शीतेन । 'नित्यं क्रीडे'त्यतो नित्यमित्यनुवर्तमाने—। **कुगतिप्रादयः** ।२।२।१८। एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः । 'गतिश्चे'त्यनुवर्तमाने—। **ऊर्यादिच्विडाचश्च** ।१।४।६१। एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । उररीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । * **कारिकाशब्दस्योपसंख्यानम्** । कारिका-क्रिया । कारिकाकृत्य । **अनुकरणं चाऽनितिपरम्** ।१।४।६२। खाट्कृत्य । अनितिपरं किम्—। खाडिति कृत्वा निरष्ठीवत् । **आदराऽनादरयोः सदसती** ।१।४।६३।

त.] क्षरतेः क्षीयतेर्वेति । 'क्षर सञ्चलने' भ्वादिः । 'क्षि निवासगत्योः' तुदादिः । कुगति । 'कु'शब्दोऽत्राव्ययं गृह्यते, न तु पृथिवीवाचको, गत्यादिसाहचर्यात् । ऊर्यादिच्विडाचश्च । 'उपसर्गाः क्रियायोगे' इत्यतोऽनुवर्तनादाह—क्रियायोग इति । च्विडाचौ कृभ्वस्तियोगे विहितौ, तत्साहचर्यादूर्यादीनामपि तत्रैव गतिसंज्ञा । तेनेह न:—ऊरी पक्त्वा । माधवादिग्रन्थे तु आविःप्रादुःशब्दौ मुक्त्वा अन्येषां करोतिनैव योगे गतिसंज्ञे'ति स्थितम् । तथैवोदाहरति—ऊरीकृत्येति । एतच्च मनोरमानुसारेणोक्तम् । वस्तुतस्तु ऊरीभूयेति भाष्योदाहरणाद्दिङ्मात्रमुदाहरति, ऊरीकृत्येत्यवतरितुं युक्तम् । संज्ञाफलं समासः, तत्फलं च ल्यबिति बोध्यम् । ऊरी उररी—एतावङ्गीकारे । आविःशब्दस्य तु साक्षात्प्रभृतिषु पाठात्कृञो योगे गतिसंज्ञाविकल्पः, कृभ्वस्तियोगे त्वनेन नित्यमिति बोध्यम् । कथं तर्हि 'वारुणीमदविशङ्कमथाविश्चक्षुषो भवदसाविव रागः' इति माघ इति चेत् ? । अत्राहुः—'ते प्राग्धातोः' इति सूत्रस्य प्रयोगनियमार्थत्वपक्षे प्रकृतेऽनुपपत्तावपि संज्ञानियमार्थत्वपक्षे दोषलेशोऽपि नास्तीति । शुक्लीति । 'कृभ्वस्तियोगे संपद्यकर्तरि च्विः' । 'अस्य च्वौ' इतीकारः । पटपटाकृत्येति । 'डाचि बहुलं द्वे भवतः' इति पटच्छब्दस्य द्वित्वम् । 'अव्यक्तानुकरणाद् द्व्यजवरार्द्धादि'ति डाचि टिलोपः । 'नित्यमाम्रेडिते डाची'ति तकारपकारयोः पकार एकादेशः । निपातसंज्ञायाः समावेशार्थः [सूत्रे] चकारः । तेन ऊरीकृतमित्यत्र 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरे क्रियमाणे निपातप्रयुक्तमाद्युदात्तत्वं भवति । कारिकेति । भावे 'पर्यायार्हणे'ति ण्वुच् । तदाह—क्रियेति । 'क्रियायोगे' इत्यनेन कारिकाशब्दस्य विशेषणाच्छ्लोकवाची कारिकाशब्दोऽत्र न गृह्यत इति भावः । क्रियाशब्दस्याऽत्र मर्यादास्थितिरर्थः । यत्न इत्यन्ये । अनुकरणं चा । 'ते प्राग्धातोः' इत्यस्य संज्ञानियमपक्षेऽनितीति व्यर्थमिति मत्वा पृच्छति—अनितिपरं किमिति । इतरस्तु प्रयोगनियमपक्षे खाडित्यनुकरणस्येतिशब्दे परे गतिसंज्ञानिवारणायाऽनितिपरमि-

बा.] इति । 'समासविधयो वक्ष्यन्ते' इति शेषः । कुगतिप्रादयः । समस्यन्त इति । स तत्पुरुष इत्यपि ज्ञेयम् । कुत्सितः पुरुष इति । नित्यसमासत्वादस्वपदविग्रहः । कुत्सितार्थकस्य 'कु' इत्यव्ययस्यैवात्र ग्रहणं, न तु पृथ्वीपर्यायस्य, गत्यादिसाहचर्यात् । गतिश्चेत्यनुवर्तमान इति । क्रियायोग इति चेति बोध्यम् । ऊर्यादिच्वि । च्वि-डाचौ प्रत्ययौ । ऊरीकृत्येति । ऊरीत्यव्ययमङ्गीकारे, तस्य कृत्वेत्यनेन गतिसमासः । समासेऽनञ्पूर्वे क्त्वो ल्यप् । शुक्लीकृत्येति । अशुक्लं शुक्लं कृत्वेत्यर्थः । 'कृभ्वस्तियोगे' इत्यभूततद्भावे च्विः । गतिसमासे सति क्त्वो ल्यप्, 'वेरपृक्तस्ये'ति वलोपः । 'अस्य च्वौ' इति ईत्वम् । पटपटाकृत्येति । 'पटपटा' इति शब्दं कृत्वेत्यर्थः । 'अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच्' इति पटच्छब्दाड्डाचि द्वित्वम्, टिलोपः । 'नित्यमाम्रेडिते डाची'ति तकारपकारयोः पकार एकादेशः । गतिसमासे क्त्वो ल्यप् । कारिकाशब्दस्योपसङ्ख्यानमिति । 'गतिसंज्ञाया' इति शेषः । कारिकाशब्दं व्याचष्टे—कारिका क्रियेति । 'स्त्रियां क्ति'न्नित्यधिकारे धात्वर्थनिर्देशे ण्वुल् । कारिकाकृत्येति । क्रियां कृत्वेत्यर्थः । द्वितीयान्तस्य गतिसमासे क्त्वो ल्यप्, सुब्लुक् । कारिकाशब्दोऽत्र न कर्त्रीवाची, न श्लोकवाची च, व्याख्यानात् । अनुकरणं चा । अनुकरणं गतिसंज्ञं स्यादितिपरं वर्जयित्वेत्यर्थः । खाट्कृत्येति ।

शे.] शत्रन्त इति । 'पातेः क्विपि निपातनात्तुक्' इति 'उभे वनस्पत्यादिषु' इति सूत्रे वृत्तिः । 'नासत्या' इत्यन्तानि चत्वारि पृथक्पदानि । एते निपात्यन्त इत्यर्थः । समासे हि 'नवेदोनासत्या' इति स्यात् । 'नासत्या' इति बहुवचनं वैचित्र्यार्थम्, न तु बहुवचनान्तस्यैव साधुत्वार्थम्, 'नासत्यावश्विनौ दस्रौ' इत्यमरविरोधात् । अश्विनोरेवायं साधुः । तेनाऽन्यत्र 'असत्यः' इत्येवेति हरदत्तः । नमुचिशब्दे औणादिकः किप्रत्ययः । क्षीयतेरिति पाठे 'क्षीष् हिंसाया'मिति दिवादिः, तस्याऽऽकृतिगणत्वात् । क्षियतेरिति ह्रस्वपाठे 'क्षि निवासगत्योः' तुदादिः । एषु नञैव समासः पूर्वपदप्रकृतिस्वरार्थः, निषेधार्थकनशब्दान्तराऽभावाच्च। कुगति प्रा। कुशब्दः पापार्थोऽव्ययमेवाऽत्र । गत्यादिसाहचर्यात् । तेनाव्ययपूर्वपदप्रकृतिस्वरः । समर्थेनेति । समर्थपदं तृतीयया विपरिणम्यत इति भावः । ऊर्यादि । क्रियायोग इति । 'उपसर्गाः' इत्यतस्तदनुवर्तते । अत एव सञ्ज्ञाविधावपि च्विडाजंशे तदन्तविधिः । ऊर्यादयो निपाता भवति, निपाताः सन्तः क्रियायोगे गतिसञ्ज्ञा इत्यर्थः । कारिका क्रियेति । मर्यादास्थितियत्नरूपेण

सत्कृत्य । असत्कृत्य । भूषणेऽलम् ।१।४।६४। अलङ्कृत्य । भूषणे किम् ? । अलङ्कृत्वौदनं गतः । पर्याप्तमित्यर्थः । 'अनुकरण'मित्यादित्रिसूत्री स्वभावात्कृञ्विषया । अन्तरपरिग्रहे ।१।४।६५। अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् ? । अन्तर्हत्वा गतः । हतं परिगृह्य गत इत्यर्थः । कणेमनसी श्रद्धाप्रतीघाते ।१।४।६६।- कणेहत्य पयः पिबति । मनोहत्य । कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते । मनःशब्दोऽप्यत्रैव । पुरोऽव्ययम् ।१।४।६७। पुरस्कृत्य । अस्तं च ।१।४।६८। अस्तमिति

त.] त्यावश्यकमिति प्रत्युदाहरति-खाडिति कृत्वेति । सत्यां संज्ञायामेष प्रयोगो नैव स्यात्किन्तु 'इति खाटकृत्ये'त्येव स्यादिति भावः । न च 'इति खाटकृत्ये'ति न भवति, इतेः परस्यानुकरणस्य गतिसंज्ञानिषेधादिति वाच्यम्, 'अनितिपर'मित्यत्र इतिः परो यस्मात्तदितिपरं, न इतिपरमनितिपरमिति बहुव्रीहिघटितनञ्तत्पुरुषाश्रयणात् । स्यादेतत्-अनुकरणस्येतिशब्द-परत्वे क्रियायोगाऽभावाद्गतिसंज्ञा नास्तीति खाडिति कृत्वेति रूपं निर्बाधं, किमनेनाऽनितिपरग्रहणेनेति चेत्, अत्राहुः- इतिकृत्वेति समुदाय एवंकृत्वेत्यर्थे वर्तते । तथा च इतिशब्दः क्रियाविशेषक इति तद्घटितसमुदायस्य क्रियावाचकत्वादस्त्येव क्रियायोग इति । हतं परिगृह्यति । हत्वा गमनं द्विधा, हतं त्यक्त्वा परिगृह्य चेति । आद्यमुदाहरणं, द्वितीयं तु प्रत्युदाहरणम् । 'अपरिग्रहे' इति च प्रयोगोपाधिः, नतु वाच्यकोटिनिविष्टमिति भावः । कणेहत्येति । अत्यन्तमभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः । तथा च श्रद्धाया अपगमात्तत्प्रतीघातो गम्यते । प्रत्युदाहरणं तु कणे हत्वा गतः । सूक्ष्मस्तण्डुलावयवः कणः । तस्मिन् हत्वेत्यर्थः । पुरस्कृत्येति । 'पूर्वाधरावराणा'मित्यसिप्रत्ययान्तोऽयमव्ययम् । 'नमस्पुरसो'रिति विसर्गस्य सः । 'अमुं पुरः पश्यसी'त्यत्र तु 'स्थित'मित्यध्याहारेण दर्शि प्रत्यगतित्वात्सत्वाऽभावः । अव्ययं किम् ? । पुरं पुरौ पुरः कृत्वा गतः । अस्तं च । अव्ययमिति किम् ? । अस्तं कृत्वा काण्डं गतः । क्षिप्त-

वा.] खाडिति शब्दं कृत्वेत्यर्थः । गतिसमासे क्त्वो ल्यप् । खाडिति कृत्वेति । न चात्र इतिशब्देन व्यवहितत्वे क्रियायोगाऽभावादेव गतिसंज्ञा न भविष्यति तत्किमनितिपरग्रहणेनेति वाच्यं, यथाकथंचित्क्रियायोगसत्त्वात् । 'ते प्राग्धातोः' इति सूत्रं तु 'ते गत्युपसर्गा धातोः प्रागेव प्रयोज्याः, न तु परत' इति प्रयोगनियमपरमेवेति भावः ।

आदरानादरयोः । सदिति असदिति च अव्यये आदराऽनादरयोः क्रमेण विद्यमाने गतिसंज्ञके स्त इत्यर्थः । सत्कृत्येति । आदरं कृत्वेत्यर्थः । असत्कृत्येति । अनादरं कृत्वेत्यर्थः । गतिसमासे क्त्वो ल्यप् । भूषणेऽलम् । भूषणे विद्यमानमलमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । अलंकृत्येति । कटकादिधारणेन परिष्कारं कृत्वेत्यर्थः । कृञ्विषयेति । कृञ्योग एव भवतीत्यर्थः । वस्तुतस्तु सङ्कोचे प्रमाणाऽभावाद्धात्वन्तरयोगेऽपि त्रिसूत्रीप्रवृत्तिर्युक्ता । अत एव 'अलं भुक्त्वा ओदनं गत' इति वृत्तिकृता प्रत्युदाहृतम् । अन्तरपरि । अपरिग्रहे वर्तमानमन्तरित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । हतं परिगृह्येति । हत्वा गमनं हतमपरिगृह्य परिगृह्य वा भवति । तत्र आद्यमुदाहरणं, द्वितीयं प्रत्युदाहरणमित्यर्थः । अपरिग्रह इति प्रयोगोपाधिरेव, न तु वाच्यकोटिप्रविष्टम् । कणेमनसी । कणेशब्दो मनश्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञकौ स्तः । अत्यन्ताभिलाषः=श्रद्धा, तस्या निवृत्तिः=प्रतीघातः । कणेहत्येति । गतिसमासे क्त्वो ल्यप् । मनोहत्येति । 'पयः पिबती'त्यनुषज्यते । ननु समासे कृते 'कणे' इति सप्तम्याः कथं न लुगित्यत आह-कणेशब्द इति । ननु श्रद्धाप्रतीघातस्य कथमिहावगतिः, श्रद्धावाचकशब्दाऽभावात् । मनसो घाते सति कथं वा पयःपानमित्यत आह-अभिलाषातिशये इति । 'कणेशब्द' इत्यनुषज्यते । 'परावरयोगे चे'ति सूत्रेण क्त्वा । अभिलाषनिवृत्तिपर्यन्तं पयः पिबतीत्यर्थः । श्रद्धाप्रतीघाते किम् ? । कणे हत्वा गतः । सूक्ष्मस्तण्डुलावयवः कणः, तद्विषये हत्वा गत इत्यर्थः । मनो हत्वा गतः । विषपानादौ मनः प्रवृत्तिं प्रतिवध्य गत इत्यर्थः । पुरोऽव्ययं । पुर इत्यव्ययं गतिसंज्ञकं स्यात् । पुरस्कृत्येति । गतिसमासे क्त्वो ल्यप् । अव्ययं किम् ? । पुरम्, पुरौ,

शे.] त्यर्थः । धात्वर्थनिर्देशे ण्वुल् । दासीश्लोकवाचिनस्तु न ग्रहणं, व्याख्यानादिति भावः । अनितिपरं किमिति । 'ते प्राग्धातोः' इत्यस्य सञ्ज्ञानियमार्थत्वे व्यर्थमिति प्रश्नः । प्रयोगनियमार्थत्वाऽभिप्रायेणोत्तरम् । भाष्यकृता तु सञ्ज्ञानियमार्थत्वमाश्रित्येदं, 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति सूत्रद्वयञ्च प्रत्याख्यातम् । अत एव 'सुकटङ्कराणि' 'स्वाढ्यम्भव'मित्यादिभाष्यप्रयोगाः सङ्गच्छन्ते । 'कटं सुकराणी'त्यादि त्वनभिधानेन वारणीयमत्र पक्षे । खाडितीति । एतद्विशेषणाऽभावे प्रयोगनियमशास्त्रादेवं-प्रयोगोच्छेद एव स्यादिति भावः । अनितिपरमिति चात्र बहुव्रीहिः । अनिताविति वक्तव्ये परग्रहणन्तु अनुकरणकृतावनितिपरत्वविवक्षार्थम् । तेन 'श्रौषड्वौषडि'ति कृत्वा' इत्यादौ व्यवहितेऽपि निषेधसिद्धिरेतद्बलादेव । 'ते प्रा'गित्यादावपि गत्याकृतिनिर्देशः । एतत्प्रकरणे आकृतिपरतायां तस्य तात्पर्यग्राहकत्वात् । अत एव 'अभ्युद्धरति' इत्यादावुभयोः पूर्वप्रयोग इति दिक् । आदराना । अनादर इति बहुव्रीहिः । अतः 'पाखण्डिनमसत्कृत्ये'त्यादि सिद्धम् । तत्पुरुषे हि यत्रादरप्रसक्तिस्तदीयाऽनादर एव स्याद्गुरुमसत्कृत्येत्यादौ । कणेमनसी । 'श्रद्धाप्रतीघाते' इति विशेष्यम् । कणेहत्येति । 'परावरयोगे च' इति क्त्वा । पुरोऽव्ययम् ।

मान्तमव्ययं गतिसंज्ञं स्यात् । अस्तङ्कृत्य । **अच्छ गत्यर्थवदेषु** ।१।४।६९। अव्ययमित्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः । अव्ययं किम् ? । जलमच्छं गच्छति । **अदोऽनुपदेशे** ।१।४।७०। अदःकृत्य अदःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम् । [ अदःकृत्वा अदः कुरु ] । **तिरोऽन्तर्धौ** ।१।४।७१। तिरोभूय । **विभाषा कृञि** ।१।४।७२। तिरःकृत्य । तिरस्कृत्य । तिरः कृत्वा । **उपाजेऽन्वाजे** ।१।४।७३। एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य । उपाजेकृत्वा । अन्वाजेकृत्य । अन्वाजेकृत्वा । दुर्बलस्य बलमाधायेत्यर्थः । **साक्षात्प्रभृतीनि च** ।१।४।७४। कृञि वा गतिसंज्ञानि स्युः । च्व्यर्थ इति वाच्यम् । साक्षात्कृत्य । साक्षात्कृत्वा । लवणङ्कृत्य । लवणं कृत्वा । मान्तत्वं निपातनात् । अनत्याधान उरसि-

त.] मित्यर्थः । **अच्छमिति** । सत्यां हि गतिसंज्ञायां निपातसंज्ञावत्त्वेनाव्ययत्वात्सुब्लुक् स्यादिति भावः । **अदःकृत्येति**। यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम् । **अदःकृतमिति** । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । **प्रत्युदाहरणमिति** । अदः कृत्वा अदः कुर्वित्यादीत्यर्थः । **तिरोऽन्तर्धौ** । अन्तर्धौ किम् ? । तिरोभूत्वा स्थितः । पार्श्वतो भूत्वेत्यर्थः । **विभाषा कृञि** । **तिरः कृत्वेति** । गतित्वाऽभावपक्षे 'तिरसोऽन्यतरस्या'मिति-सत्वमपि न भवति, तद्विधौ गतिग्रहणानुवृत्तेः । माधवस्तु-पराभवे 'तिरस्कार' इति प्रयोगदर्शनात्सत्वविधौ गतिग्रहणानुवृत्तिं केचिन्नेच्छन्तीत्याह । **उपाजेऽन्वाजे** । एतौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्तेते । तदाह-**दुर्बलस्येति** । **साक्षात्प्रभृतीनि** । साक्षात् । मिथ्या । आम् । अद्धा । लवणम् । उष्णम् । शीतम् । उदकम् । आर्द्रम् । गतिसंज्ञासंनियोगेन लवणादीनां पञ्चानां मकारान्तत्वं निपात्यते । प्रादुस् । नमस् । आविस् इत्यादि । आकृतिगणोऽयम् । **साक्षात्कृत्येति** । असाक्षाद्भूतं यथा साक्षाद्भवति तथा कृत्वेत्यर्थः । च्व्यन्तेषु तु पूर्वविप्रतिषेधात् 'ऊर्यादिच्विडाचश्चे'ति नित्यैव गतिसंज्ञा । तेन लवणीकृत्येत्यत्र मान्तत्वं न भवति। तद्धि पाक्षिकं । गतिसंज्ञा-

बा.] पुरः कृत्वा गतः । **अस्तं च** । पूर्वसूत्रादव्ययमित्यनुवर्तत इत्याह-**मान्तमव्ययमिति** । **अस्तङ्कृत्येति** । तिरोधानं प्राप्येत्यर्थः । अव्ययं किं ? । काण्डमस्तं कृत्वा । प्रक्षिप्तं कृत्वेत्यर्थः । **अच्छ गत्यर्थ** । गत्यर्थधातुषु, वदधातौ च प्रयुज्यमानेषु अच्छेत्यव्ययं गतिसंज्ञं स्यात् । **अच्छगत्येति** । गतिसमासे क्त्वो ल्यप् । **अच्छोद्येति** । वदधातोः क्त्वा । गतिसमासे क्त्वो ल्यप् । अच्छेत्यव्ययमाभिमुख्ये । तथथा-बर्हिरच्छैतीति । तदाह-**अभिमुखमिति** । **जलमच्छं गच्छतीति** । अत्राऽच्छशब्दस्य नाव्ययत्वं, न गतिसंज्ञा, नापि 'प्राग्रीश्वरान्निपाताः' इत्यधिकृतनिपातसंज्ञा । निपातत्वे सति हि अव्ययत्वाद्विभक्तिलुक् स्यादिति भावः । **अदोऽनुपदेशे** । अदश्शब्दोऽनुपदेशे गतिसंज्ञः स्यात् । **अदः कृतमिति** । गतिसमासे क्त्वो ल्यप् । अमुं यज्ञं कृत्वेत्यर्थे तु सुब्लुक् च । **अदः कृतमिति**। 'गतिरनन्तरः' इति स्वरः फलम् । यदा स्वयमेव पर्यालोचयति तदेदमुदाहरणम् । **परं प्रतीति** । अदः कृत्वा अदः कुर्वित्यादावित्यर्थः । **तिरोऽन्तर्धौ** । अन्तर्धिः=व्यवधानम्, तत्र तिरसित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । **तिरोभूयेति** । गतिसमासे क्त्वो ल्यप् । व्यवहितो भूत्वेत्यर्थः । **विभाषा कृञि** । कृञि प्रयुज्यमाने तिरसित्यव्ययं गतिसंज्ञं वा स्यादित्यर्थः । **तिरस्कृत्य तिरः कृत्येति** । गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप् । 'तिरसोऽन्यतरस्या'मिति सत्वविकल्पः । **तिरः कृत्वेति** । गतित्वाऽभावपक्षे सत्वमपि न भवति, तद्विधौ गतिग्रहणानुवृत्तेरित्याहुः । केचित्तु तिरस्कार इति परिभवे प्रयोगदर्शनात्सत्वविधौ गतिग्रहणं नानुवर्तयन्ति । **उपाजेऽन्वाजे** । **उपाजेकृत्येति** । गतिसंज्ञापक्षे गतिसमासे क्त्वो ल्यप् । अन्वाजेकृत्येत्यपि तथैव । 'उपाजे' 'अन्वाजे' इत्यव्यये दुर्बलस्य बलाधाने वर्तेते । तदाह-**दुर्बलस्येति** । **साक्षात्प्रभृतीनि च** । शेषपूरणेन सूत्रं व्याचष्टे-**कृञि वेति** । साक्षादित्यव्ययम् । **च्व्यर्थ इति** । अभूततद्भावे गम्ये सतीति वक्तव्यमित्यर्थः । **साक्षात्कृत्येति** । अप्रत्यक्षं प्रत्यक्षं कृत्वेत्यर्थः । गतित्वपक्षे क्त्वो ल्यप् । तत्र सुब्लुकमाशङ्क्याह-**मान्तत्वमिति** । लवणम्, उष्णम्, शीतम्, उदकम्, आमिति पञ्चानां साक्षात्प्रभृति-

शे.] 'पुरोभूय' 'पुरोगत्य' इत्यप्युदाहरणम् । कृञोयोगे एवेति नियमे मानाऽभावात् । अव्ययपदमनुवर्त्तते इत्याशयेनाह-**मान्तमव्ययमिति** । तेन काण्डमस्तं कृत्वेत्यत्र न । अस्तं=क्षिप्तम् । **जलमच्छङ्गच्छतीति** । 'प्राग्रीश्वरात्' इत्यधिकारान्निपातत्वेऽव्ययत्वे च विभक्तिलुक् स्यादिति भावः । सप्तमीनिर्देशेऽपि 'तस्मिन्' इति परिभाषा न प्रवर्त्तते, क्रियायोग इत्यनुवृत्तेः । एतेनाऽनुस्वारव्यवधानात्कथमत्र प्राप्तिरित्यपास्तम् । **उपाजेन्वाजे**शब्दौ एदन्तौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य बलाधाने वर्तेते । **च्व्यर्थे इति** । च्व्यन्ते तु पूर्वविप्रतिषेधेन नित्यैव सञ्ज्ञेति भाष्ये स्पष्टम् । इदं प्रायिकम् । अत एव 'नमस्करोति' इत्यादौ च्व्यर्थाऽभावेऽप्यनेन गतित्वमाहुः । अन्ये तु स ऊर्यादौ स्वरादौ चेति विकल्पफलसिद्धिमाहुः । **मान्तत्वमिति** । गतिसञ्ज्ञासन्नियोगेन 'लवणम्-उष्णं-शीतम्-उदकम्-आर्द्रम्' इति पञ्चानामित्यर्थः । **'उरसि' 'मनसि'** इति विभक्तिप्रतिरूपकौ

मनसी ।१।४।७५। उरसिकृत्य । उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसिकृत्वा । निश्चित्येत्यर्थः। अत्याधानमुपश्लेषणं, तत्र न । उरसि कृत्वा पाणिं शेते । मध्ये पदे निवचने च ।१।४।७६। एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः । नित्यं हस्ते पाणावुपयमने ।१।४।७७। कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य । प्राध्वं बन्धने ।१।४।७८। प्राध्वमित्यव्ययम् । प्राध्वङ्कृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः । प्रार्थनादिना त्वानुकूल्यकरणे-प्राध्वं कृत्वा । जीविकोपनिषदावौपम्ये ।१।४।७९। जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । औपम्ये किम् ? । जीविकां कृत्वा । प्रादिग्रहणमगत्यर्थम् । सुपुरुषः । अत्र वार्तिकानि-प्रादयोगताद्यर्थे

त.] संनियोगेनेह गणे निपातनात् । भाष्यकृता 'लवणशब्दस्य लवणीशब्दस्य वा विकल्पेन लवणशब्द आदिश्यते तस्य च संज्ञाविकल्प' इत्युक्तम् । उभयथापि त्रैरूप्यं निर्बाधम् । अनत्या । उरसिमनसी विभक्तिप्रतिरूपकौ । मध्ये पदे । 'विभाषा 'कृञी'ति वर्तते, चकाराद्'नत्याधाने' इति च । एषामनत्याधानरूपार्थविशेषे एदन्तत्वमविशेषेण निपात्यते, न तु गतिसंज्ञासंनियोगेन । अनत्याधाने किम् ? । पदे कृत्वा शिरो नमति । वाचं नियम्येति । निवचनं हि वचनाऽभावः । अर्थाऽभावेऽव्ययीभावः । नित्यं हस्ते । उपयमनरूपार्थ एवैतयोरेदन्तत्वमौदन्तत्वं च निपात्यते । हस्तेकृत्येति । परिणीयेत्यर्थः । उपयमने किम् ? । हस्ते कृत्वा कार्षापणं गतः । स्वीकारमात्रमिति पक्षे तु नाऽलमिति बुद्ध्या परावृत्य दानार्थं गति इति योज्यम् । एवं तावद्गतिसमासानुदाहृत्य प्रादिसमासान्वक्तुमारभते--प्रादिग्रहणमिति। सुपुरुष इति । क्रियायोगाऽभावाद्गतित्वाऽभावः । अव्यवस्थया समासप्रसक्तौ व्यवस्थार्थं वचनानि पठ्यन्ते—

बा.] गणे मान्तत्वं निपात्यत इत्यर्थः । अनत्याधाने । 'उरसि' 'मनसि' इति विभक्तिप्रतिरूपके अव्यये गतिसंज्ञे वा स्तोऽनत्याधाने । उरसिकृत्येति । गतित्वपक्षे क्त्वो ल्यप् । इह अत्याधानं न गम्यत इत्याह-अभ्युपगम्येत्यर्थ इति । मनसिकृत्येति । गतित्वपक्षे क्त्वो ल्यप् । इहापि नाऽत्याधानं गम्यत इत्याह--निश्चित्येत्यर्थ इति । अत्याधानशब्दं विवृण्वंस्तस्य प्रयोजनमाह---उपश्लेषणमिति । संयोग इत्यर्थः । उरसि कृत्वेति । उरसि पाणिं निधाय शेत इत्यर्थः । अत्र पाणिसंश्लेषणावगमान्न गतिसंज्ञेति भावः । मध्येपदे । गतित्वे तदभावे च त्रयाणामेदन्तत्वं निपात्यते । मध्येकृत्येति । गतिसमासे क्त्वो ल्यप् । मध्यं कृत्वेत्यर्थः । पदेकृत्येति । गतिसमासे क्त्वो ल्यप् । पदं कृत्वेत्यर्थः । निवचनेकृत्येति । वचनाऽभावं कृत्वेत्यर्थः । तदाह-वाचं नियम्येत्यर्थ इति । वचनस्याभावो निवचनम् । अर्थाभावेऽव्ययीभाव इति भावः । नित्यं हस्ते । शेषपूरणेन सूत्रं व्याचष्टे-कृञीति । हस्ते इति पाणाविति च शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमन इति यावत् । हस्तेकृत्य, पाणौकृत्येति । कन्यां स्वीकर्तुं पाणिं गृहीत्वेत्यर्थः । एदन्तत्वमौदन्तत्वं चानयोर्निपात्यते । उपयमने किं ?। हस्ते कृत्वा सुवर्णं गतः। अन्यदीयमिति बुद्ध्या दातुं परावृत्त इत्यर्थः । प्राध्वं बन्धने । प्राध्वमिति न द्वितीयान्तमित्याह-प्राध्वमित्यव्ययमिति । बन्धने गम्ये प्राध्वमित्यव्ययं गतिसंज्ञकं स्यादित्यर्थः । प्राध्वङ्कृत्येति । गतिसमासे क्त्वो ल्यप् । अत्र प्राध्वमिति मान्तमव्ययं बन्धनेन आनुकूल्ये वर्तते । तदाह-बन्धनेनेति । बन्धनग्रहणस्य प्रयोजनमाह--प्रार्थनादिनेति । जीविकोपनि । उपमैव औपम्यं, तस्मिन्विषये जीविकाशब्द उपनिषच्छब्दश्च कृञा योगे गतिसंज्ञौ स्तः । जीविकामिवेति । अशनपानादिजीवनोपायो जीविका । तामिव अवश्यं कृत्वेत्यर्थः । जीविकाकृत्येति । गतिसमासे क्त्वो ल्यप् । उपनिषदमिव कृत्वेति । उपनिषद्वेदान्तभागः, तामिव रहसि ग्राह्यत्वेन कृत्वेत्यर्थः । उपनिषत्कृत्येति । गतिसमासे क्त्वो ल्यप् । उभयत्रापि सुब्लुक् । तदेवं 'कुगतिप्रादयः' इत्यत्रत्यगतिसमासाः प्रपञ्चिताः । ननु गतिग्रहणेनैव सिद्धे प्रादिग्रहणं व्यर्थमित्यत आह-प्रादिग्रहणमगत्यर्थमिति । सुपुरुष इति । अत्र क्रियायोगाऽभावादगतित्वेऽपि समासः । सोः पूजार्थकत्वेऽपि धातुवाच्यक्रियायोगाऽभावान्न गतित्वम् । भाष्ये तु 'कुगतिप्रादयः' इति सूत्रमपनीय तत्स्थाने 'क्वाङ्स्वतिदुर्गतयः समस्यन्त इति वक्तव्य'मित्युक्त्वा 'कुब्राह्मणः, 'आकडारः', 'सुब्राह्मणः,' 'अतिब्राह्मणः, 'दुर्ब्राह्मणः', 'ऊरीकृत्ये'त्युदाहृतम् । 'स्वती पूजायां', 'दुर्निन्दायाम्', 'आङीषदर्थे', 'कुः पापार्थे' इति सौनागव्याकरणवचनमिति भाष्ये स्पष्टम् । अत्र वार्तिकानीति ।

शे.] निपातौ । मध्ये पदे । 'विभाषा कृञि' इति, 'अनत्याधान' इति चानुवर्त्तते । तत्रचैषामेदन्तत्वं निपात्यते । सप्तमी तु न, मध्यं पदं कृत्वा, वाचं नियम्येति च प्रत्ययेन तस्या अनन्वितत्वात् । अनत्येति किम् ? । हस्तिनः पदे कृत्वा शिरः शेते । नित्यं हस्ते । उदाहरणे 'तत्पुरुषे कृति' इत्यलुक् । उपयमने किम् ?। हस्ते कृत्वा कार्षापणं गतः । प्राध्वम् । इदं मान्तमव्ययं बन्धनेनाऽऽनुकूल्ये वर्त्तते । कृञ्जात्येव । जीविका — जीवनोपायः । सुपुरुष इति । क्रियायोगाऽभावादगतित्वम् । अत्रेति । अव्यव-

**प्रथमया** । प्र गत आचार्यः प्राचार्यः। ***अत्यादयः क्रान्ताद्यर्थे द्वितीयया** । अति क्रान्तो मालामतिमालः। ***अवादयः क्रुष्टाद्यर्थे तृतीयया** । अव क्रुष्टः कोकिलया अवकोकिलः [वसन्तः] । ***पर्यादयो ग्लानाद्यर्थे चतुर्थ्या** । परि ग्लानोऽध्ययनाय पर्यध्ययनः । ***निरादयः क्रान्ताद्यर्थे पञ्चम्या** । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । ***कर्मप्रवचनीयानां प्रतिषेधः** । वृक्षं प्रति । **तत्रोपपदं सप्तमीस्थम्** ।३।१।९२। सप्तम्यन्ते पदे 'कर्मणी'त्यादौ वाच्यत्वेन स्थितं कुम्भादि, तद्वाचकं पदमुपपदसंज्ञं स्यात्, तस्मिंश्च सत्येव वक्ष्य-

---

त.] **प्रादय इति** । आदिशब्द उभयत्र प्रकारे । तेन दुराचारः पुरुषो दुष्पुरुष इत्यादि सिद्धम्। **प्रगत आचार्य इति** । अनेन गतार्थे वृत्तिमस्वपदविग्रहेण नित्यसमासतां च दर्शयति । एवं प्रगतः पितामहः प्रपितामहः । प्रमातामह इत्यादि। **अत्यादय इति** । आदिपदादभिगतो मुखमभिमुखः । उद्गतो वेलामुद्वेलः । प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि सिद्धम्। **अतिमाल इति** । 'गोस्त्रियो'रिति ह्रस्वः । **अवादय इति** । आदिपदात्परिणद्धो वीरुधा परिवीरुत् । संनद्धो वर्मणा संवर्मेति । **पर्यादय इति** । आदिपदादुद्युक्तः सङ्ग्रामाय-उत्सङ्ग्रामः । **अध्ययनायेति** । तादर्थ्ये चतुर्थी । गुरुकुलवासादिना परिग्लानोऽध्ययनार्थमित्यर्थः । **निरादय इति** । आदिपदादुत्क्रान्तः कुलादुत्कुलः । निर्गतमङ्गुलिभ्यो निरङ्गुलम् । **प्रतिषेध इति** । 'कुगतिप्रादयः' इति प्रसक्तसमासस्य वक्तव्यः प्रतिषेधः, स च 'सुराजा, अतिसखे'ति भाष्यादिप्रयोगात्स्वतिभिन्नानामेव कर्मप्रवचनीयानामित्यर्थः । **वृक्षं प्रतीति** । 'लक्षणेत्थंभूते'ति कर्मप्रवचनीयत्वविधिसामर्थ्यादिह समासो नेति चेत्, तर्हि अपि स्तुतमित्युदाहार्यम् । 'अपि स्तुयाद्विष्णु'मित्यादौ 'अपिः पदार्थसंभावने त्यस्य सावकाशत्वात्स्वरे विशेषसत्त्वाच्चेत्याहुः । **तत्रोपपदम्** । 'सप्तमीस्थ मित्येतद्व्याचष्टे—**सप्तम्यन्त इत्यादिना** । **तद्वाचकं पदमिति** । एतच्चोपपदमित्यन्वर्थसंज्ञाबलाल्लभ्यते । अतएव संज्ञाविधावपि सप्तमीग्रहणेन सप्तम्यन्तं गृह्यते । 'धातोः' इति पृथगधिकारबलात् 'संनिहिते धात्वधिकारे' इति लभ्यते ।

---

बा.] 'प्रादयो गताद्यर्थे समस्यन्ते इति वक्तव्य'मिति वार्तिकं पठित्वा तत्र व्यवस्थापकानि पञ्च वार्तिकानि सौनागव्याकरणसिद्धानि भाष्ये यानि पठितानि तानि प्रदर्श्यन्त इत्यर्थः। **प्रादय इति** । गताद्यर्थे विद्यमानाः प्रादयः समस्यन्त इत्यर्थः। **प्र गत आचार्य इति** । प्रेत्यस्य विवरणं गत इति, 'गत आचार्य' इत्येव अस्वपदविग्रहः, नित्यसमासत्वात् । अभिगतो मुखम् अभिमुखः, प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि । **अत्यादय इति** । क्रान्ताद्यर्थे अत्यादयः समस्यन्त इत्यर्थः । **अति क्रान्तो मालामिति** । अतिशब्दः क्रान्ते वर्त्तते। क्रान्तो मालामित्यस्वपदविग्रहः । तत्र क्रमुधातोरतिक्रमणमर्थः । **अतिमाल इति** । 'एकविभक्ति चे'ति मालाशब्दस्य उपसर्जनत्वात् 'गोस्त्रियोः' इति ह्रस्वः । **अवादय इति** । क्रुष्टाद्यर्थे अवादयः समस्यन्त इत्यर्थः । **अवकोकिल इति** । कोकिलया आहूत इत्यर्थः । **पर्यादय इति** । ग्लानाद्यर्थे पर्यादयः समस्यन्त इत्यर्थः । अध्ययनाय=अध्ययनार्थम् । तेन श्रान्त इत्यर्थः । परिरत्र ग्लाने वर्तते । **निरादय इति** । क्रान्ताद्यर्थे निरादयः समस्यन्त इत्यर्थः । **निष्कौशाम्बिरिति** । अतिमालवद्ध्रस्वः । निरित्यव्ययं निर्गमने वर्तते । **कर्मप्रवचनीयानां प्रतिषेध इति** । वार्तिकमेतत् । **वृक्षं प्रतीति** । 'लक्षणेत्थ'मिति कर्मप्रवचनीयत्वान्न प्रादिसमासः । इदं वार्तिकं भाष्ये प्रत्याख्यातम् । अथोपपदसमासं वक्ष्यन्नुपपदसंज्ञामाह— **तत्रोपपदं सप्तमीस्थम्** । अधिकारोऽयम् । 'सप्तमी'ति तदन्तग्रहणम् । सप्तम्यन्ते पदे वाच्यवाचकभावसम्बन्धेन तिष्ठतीति सप्तमीस्थम् । सप्तम्यन्तवाच्यमिति यावत् । धातोरित्यधिकारसूत्रादुत्तरसूत्रमिदम् । ततश्च तदधिकारान्तर्गतेषु 'कर्मण्य'णित्यादिसूत्रेषु यत्सप्तम्यन्तमुच्चारितं तदेव इह विवक्षितम् । एवंच तदुदाहरणे कुम्भं करोति कुम्भकार इत्यत्र सप्तम्यन्तवाच्यं कुम्भादीति पर्यवसन्नम् । कुम्भादेश्च उपपदसंज्ञायां प्रयोजनाऽभावात्तद्वाचकपदेषु विश्राम्यति । तथाच धातोरित्यधिकारान्तर्गते कर्मणीत्यादिसूत्रे यत्सप्तम्यन्तं 'कर्मणी'त्यादि, तद्वाच्यं यत्कुम्भादि, तद्वाचकं पदम् उपपदसंज्ञं स्यादित्यधिकृतं वेदितव्यमित्यर्थः फलितः । तदाह—**सप्तम्यन्ते पद इत्यादिना** । तत्र 'धातोः

---

शे.] स्थया समासप्राप्तौ व्यवस्थाऽर्थानीति भावः । **कर्मप्रवचनीयानामिति** । सा सञ्ज्ञा तु प्रतिस्तवनमित्यादौ षत्वाऽभावार्थेति बोध्यम् । भाष्ये तु "कर्मप्रवचनीयानां प्रतिषेधः—वृक्षं प्रति विद्योतते । व्यवहितानाश्च प्रतिषेधो वक्तव्यः। आ मन्द्रैरिन्द्र हरिभिर्याहि" इत्युक्त्वा 'सिद्धन्तु काङ्क्षुद्गतयः प्रादयः क्तार्थे' इत्यनेनेदं वचनद्वयमपि प्रत्याख्यातम् । "एतदेव सौनागैर्विस्तरतरकेण पठितम् । 'स्वती पूजायां, दुर्निन्दायाम्, आङीषदर्थे, कुः पापार्थे, प्रादयो गताद्यर्थे'" इत्याद्युक्तम्। एवञ्चैषामावश्यकत्वेन कर्मप्रवचनीये प्रासिरेव नेति तदाशयः । **तत्रोप** । अयमधिकारः । अत एवाऽमैव तुल्यविधानमित्यादि सङ्गच्छते । येनाऽमैव विधीयते तेन यस्योपपदसञ्ज्ञा विधीयत इति तदर्थात् । 'कर्मण्यण्' इत्यादौ 'कर्मणी'त्यादिः सौत्री प्रथमार्थे सप्तमी । 'धातोरण् भवति, कर्म चोपपदसञ्ज'मिति तदर्थः । अत्र सूत्रे सप्तमीपदं तदन्तपरम् । तदर्थं = तद्वाच्यम् । तदाह—**सप्तम्यन्ते पदे इति** । महासञ्ज्ञया, प्रथमार्थे सप्तमीबलेन च लब्धमर्थमाह—**तद्वाचकं पदमिति** । पदमत्र विभक्त्यन्तम्, 'स्तम्बकर्णयोः' इत्यादौ 'सुपी'त्यधिकारात् ।

माणः प्रत्ययः स्यात् । **उपपदमतिङ्** ।२।२।१९। उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्च समासः । कुम्भं करोतीति कुम्भकारः । इह—कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम् । अतिङ् किम् ?।

त.] तेन 'च्लि लुङी'त्यस्य लुङन्तेऽभूदित्यादावुपपदे धातोश्च्लिरित्यर्थो न भवति 'तत्र'ग्रहणं व्याचष्टे—**तस्मिन् सत्येवेति** । उपपदे सत्येवेत्यर्थः । तत्रग्रहणाऽभावे तु 'घः कर्मणि ष्ट्रन्'नित्यादाविव 'कर्मण्य'णित्यादावपि कर्मण्यभिधेयेऽणित्याद्यर्थः स्यात् । तथा च कर्तर्यण्प्रत्ययो न स्यात् । किंच सप्तम्यन्तनिर्देशस्योपपदसंज्ञार्थतया चरितार्थत्वात्केवलादपि धातोः कर्तर्यण्प्रत्ययः संभाव्येत । कृते तु 'तत्र'ग्रहणे कुम्भाद्युपपदस्य प्रत्ययोत्पत्तौ निमित्तत्वप्रतीत्या केवलादण्प्रत्ययशङ्कैव नास्ति । एवं स्थिते 'घः कर्मणी'त्यादौ क्वचिदर्थग्रहणं व्याख्यानादित्याहुः । अन्ये तु 'तत्रोपपद'मित्यस्य 'कर्मण्य'णित्यादेश्चैकवाक्यतया प्रवृत्तावुपपदसंज्ञाया निर्विषयत्वापत्तेस्तत्रग्रहणं विनापीष्टं सिध्यत्येवेत्याहुः । **समर्थेनेति** । तेन 'महान्तं कुम्भं करोती'त्यादौ नातिप्रसङ्गः । **अतिङन्तश्चेति** । सुबिति तु अनुवर्तत एवेति अतिङन्तमिति नोक्तमिति भावः । **कुम्भ अस्इति** । अमिति तु नोक्तं, कृद्योगे षष्ठीविधानात् । **अतिङ्**

बा.] कर्मणः समानकर्तृकात्' इति, 'धातोरेकाचो हलादेः' इति, 'धातो'रिति च क्रमेण त्रयो धात्वधिकाराः। तत्र प्रत्यासत्त्या तृतीयधात्वधिकारस्थसप्तम्यन्तस्यैव ग्रहणात् 'धातोरेकाचः' इत्यधिकारे 'च्लि लुङी'त्यत्र सप्तम्यन्तं न गृह्यते । अन्यथा कर्मणीत्यादाविव लुङन्ते अभूदित्यादावुपपदो धातोः च्लिरित्यर्थः स्यात् । ननु तत्रेति व्यर्थं, तृतीयधात्वधिकारस्य प्रकृतत्वादेव ग्रहणसंभवादित्याशङ्क्याह—**तस्मिंश्च सत्येवेति** । अयमाशयः—तत्रेति भिन्नं वाक्यं क्रमव्यत्यासेन योज्यम् । सप्तमीस्थमुपपदसंज्ञं स्यात् , 'तत्र'=तस्मिन्सति इति चाधिकृतं वेदितव्यमिति। तथाचोपपदे सति वक्ष्यमाणः प्रत्ययः स्यादिति 'तत्रे'त्यस्यार्थः फलति । तथाच 'कर्मण्य णि'त्यत्र इदं सूत्रमुपस्थितम् । कर्मणीति सप्तम्यन्तं प्रथमान्तत्वेन विपरिणम्यते । सप्तमीनिर्देशस्तु उपपदसंज्ञाप्रवृत्त्यर्थः । 'धातोरण्स्यात्कर्तर्यर्थे, कर्मवाचकं तु कुम्भादिपदमुपपदसंज्ञं प्रत्येतव्यम्, तस्मिन्नुपपदे सत्यत्र अण्स्या'दिति फलति । 'तस्मिन्सत्येवाऽण्स्या'दित्यभावे तु कारेत्येवं केवलादपि धातोः कर्तर्यर्थे अण्प्रत्ययः स्यात् । कर्मणीति सप्तम्यन्तनिर्देशस्तु कुम्भकार इत्यादौ उपपदसंज्ञां प्रापय्य'उपपदमति'ङिति नित्यसमाससंपादनेन कुम्भे त्यस्य कारेत्यस्य च साधुत्वप्रापणार्थतया चरितार्थः । 'तस्मिन्नुपपदे सत्येवाण्स्या'दित्युक्ते तु कुम्भाद्युपपदस्य अण्प्रत्ययोत्पत्तौ निमित्तत्वावगमान्न केवलादण्प्रत्ययः, उपपदसंज्ञायाः प्रत्ययविधिसंनियोगशिष्टत्वलाभात् । 'घः कर्मणि ष्ट्रन्' 'भुवो भावे' इत्यादौ सप्तम्यन्तमर्थनिर्देशपरमेव, व्याख्यानादिति भाष्यकैयटादिषु स्पष्टम् । **उपपदमतिङ्** । **सुबन्तमिति** । 'सुबामन्त्रिते' इत्यतस्तदनुवृत्तेरिति भावः । **समर्थेनेति** । प्रथमान्तं समर्थग्रहणं तृतीयान्ततया विपरिणम्यत इति भावः । **अतिङन्तश्च समास इति** । सूत्रे तिङिति तदन्तग्रहणमिति भावः । समासः तिङन्तघटितो न भवतीत्यर्थः । अतिङ् किम् ?, कारको व्रजति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति व्रजतावुपपदे कृञो ण्वुल् , अकादेशः । 'उपपदं समर्थेने'त्येतावत्युक्ते इहाप्युपपदसमासः स्यात् । अतोऽतिङ्ग्रहणम् । नचैवं सुबित्यनुवृत्तेः प्रयोजनाऽभाव इति वाच्यं, 'चर्मकार' इत्यत्र नलोपार्थ-

शे.] तत्प्रकृतिके सुबन्ते लक्षणा । अन्यथोपपदमितिमहासञ्ज्ञकसुबन्ताऽभावात् 'स्तम्बेरमः' इत्यादौ समासाऽनापत्तिः । समासविधायके उपपदप्रकृतिकसुबन्तग्रहणे 'सुप्यजातौ' इति णिनौ 'राजद्वर्षी'त्यादौ समासाऽनापत्तिः । तत्र हि सुबन्तमेवोपपदं न तु तत्प्रकृतिकम् । आवृत्त्याऽर्थद्वयपरत्वे गौरवं, महासञ्ज्ञाविरोधश्च । सुप्यजातावित्यादिविषये सुबन्तस्य सप्तम्यन्तपदवाच्यत्वरूपन्तस्त्वलमादायोपपदत्वं बोध्यम् । 'विभाषाऽग्रेप्रथमे'त्यादौ सुपोत्यधिकाराऽभावेऽपि महासंज्ञाबलात्तेषां तत्प्रकृतिकसुबन्ते लक्षणा बोद्धया । अत एव 'उपपदम्' इति सूत्रे 'अतिङ्ग्रहणादनयोर्योगयोः सुप्सुपेति निवृत्त'मि'ति भाष्ये उक्तम् । उप = समीपे उच्चारितं पदमुपपदम् । सामीप्यञ्च सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थेऽन्वयित्वमेव, न त्वानुपूर्व्यन्यवधानम् । कर्मण्यण्सूत्रे 'उष्ट्रप्रणाय' इति भाष्योदाहरणात्, 'धातोऽनुपसर्गे' इत्यत्रानुपसर्गग्रहणाच्च । 'गुरुं नमस्करोति' 'कन्यामलङ्करोती'त्यादौ हि भवन्तं शृणोतीत्यादाविवाऽनभिधानान्नाऽण् । 'अभिधानलक्षणाः कृत्तद्धितसमासा' इति 'अकर्त्तरि चे'ति सूत्रे भाष्योक्तेः । नन्वेवं 'तत्र'ग्रहणं व्यर्थं, प्रकृतधात्वधिकारविषयता त्वधिकारेणैव सिद्धेत्यत आह—**तस्मिंश्चेति** । अनेनोपपदसञ्ज्ञासन्नियोगशिष्टत्वं प्रत्ययविधेर्बोधयति । अन्यथाऽन्वाचयशिष्टत्वं सम्भाव्येत । प्रातिपदिकार्थे सप्तम्यामेवाऽस्य प्रवृत्त्या, भुवो 'भावे' इत्यादौ न प्रवृत्तिः । तद्व्यवस्था त्वनुनासिकत्वादिवल्लक्ष्यानुरोधेनैवेति बोद्धव्यम् । **उपपदम्** । 'सुबन्त'मिति महासञ्ज्ञाबललभ्यम् । अत एव 'राजयुध्वे'-त्यादौ नलोपः । 'पथानाहारको व्रजती'त्यत्र तु अतिङिति बहुव्रीहिणा 'तिङन्ताऽघटितः समास' इत्यर्थेन तदप्रवृत्तेः, तदाह—**अतिङन्तश्च समास इति** । कथमपि तिङन्ताऽघटित इत्यर्थः । **समास इति**। तत्सञ्ज्ञकः समुदाय इत्यर्थः । **कुम्भ असिति**। ननु 'अन्तरङ्गानपि' इति न्यायेनेतसञ्ज्ञालोपयोर्लुका बाधादिदमयुक्तमिति चेन्न, इत्वलोपबाधाऽबाधयोः फले विशेषाऽभावेन 'अन्तरङ्गानपि' इत्यस्याऽप्रवृत्तेः । **'अलौकिकं प्रक्रियावाक्य'**मित्यस्य समासप्रवृत्तियोग्यं लोके प्रयोगाऽनर्हमित्यर्थः । इह कीरव-

मा भवान् भूत्। 'माङि लुङि'ति सप्तमीनिर्देशान्माङुपपदम्। अतिङ्ग्रहणं ज्ञापयति-'सुपेत्येतन्नेहानुवर्तते' इति। पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्याऽतिङ्ग्रहणं तन्नापकृष्यते। सुपेति च निवृत्तम्। तथा च-गतिकारकोपपदानां

त.] किमिति। सुपेत्यधिकारात्किमनेनेति प्रश्नः। इतरो वक्ष्यमाणं ज्ञापकं मनसि निधाय प्रत्युदाहरति—**मा भवानिति**। समासाऽभावसूचनाय 'भवा'निति मध्ये प्रयुक्तम्। **पूर्वसूत्र इति**। 'कुगतिप्रादयः' 'गतिः' इति योगं विभज्य 'कुप्रादयः सुबन्ताः सुबन्तेन समस्यन्ते, गतिस्तु सुबन्तोऽतिङन्तेन समस्यते' इति व्याख्येयमित्यर्थः। **तथा चेति**। यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः, तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत

बा.] क्त्वात्। 'उपपदमतिङन्तं समर्थेन समस्यते' इति व्याख्याने तु सुबिति नानुवर्तेत। ततश्च 'चर्मकार' इत्यत्र नलोपो न स्यादिति भावः। **कुम्भमिति**। कुम्भं करोतीत्यर्थे 'कर्मण्य'णिति कर्मीभूतकुम्भवाचकपदे उपपदे कृञ्धातोः कर्तरि अण्प्रत्यये 'अचो ञ्णिती'ति वृद्धौ रपरत्वे कारशब्दः। तेन कुम्भशब्दस्य समासे कुम्भकारशब्द इत्यर्थः। ननु कुम्भं करोतीति कथं विग्रहप्रदर्शनम्, 'अतिङन्तः समास' इत्युक्तत्वादित्यत आह—**कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यमिति**। लोके प्रयोगानर्हत्वमलौकिकत्वम्। 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रभाष्यरीत्या अलौकिकविग्रहवाक्य एव समासप्रवृत्तिः। कुम्भं करोतीति तदर्थप्रदर्शनमात्रमिति भावः। कुम्भ अम्-कार इत्यपपाठः, कृद्योगे षष्ठ्या विधानात्। **मा भवान्भूदिति**। अत्र भूदिति तिङन्तेन माङः समासनिवृत्त्यर्थमतिङ्ग्रहणमिति भावः। भवानिति पदं तु समासाऽभावसूचनाय मध्ये प्रयुक्तम्। ननु माङस्तृतीयधात्वधिकारे सप्तमीनिर्दिष्टत्वं तु अदृष्टं येन तस्य उपपदत्वात्समासः प्रसज्यत इत्यत आह—**माङिति**। ननु अतिङ्ग्रहणं व्यर्थं, मा भवान्भूदित्यत्र सुपेत्यनुवृत्त्यैव समासनिवृत्तिसंभवादित्यत आह—**अतिङ्ग्रहणमिति**। एवंच उपपदमसुबन्तेन समस्यत इति फलितम्। गतिसमासोऽप्यसुबन्तेनेत्याह—**पूर्वसूत्र इति**। उत्तरसूत्रात्पूर्वसूत्रेऽनुवृत्तिरपकर्षः। 'कुप्रादयः' इति 'गति'रिति च योगो विभज्यते। कुप्रादयः सुबन्तेन समस्यन्ते। गतिस्तु समर्थेन समस्यते। अतिङन्तश्च समास इति व्याख्येयमिति यावत्। ततः किमित्यत आह—**तथा चेति**। 'गतिकारकोपपदानां कृद्भिः सह सुबुत्पत्तेः

शे.] प्रागेवास्य सञ्ज्ञासुत्तरमेव समासः, लोके प्रयोगानर्हत्वस्योभयत्रापि सत्त्वेनाऽविशेषादकृतेतत्संज्ञालोपमेवोच्चारितमित्यलम्। कृद्योगलक्षणा चात्र षष्ठी। न चान्तरङ्गा द्वितीया, प्रकल्प्यापवादविषयमुत्सर्गप्रवृत्तेः। अत्र षष्ठीसमासो न, उत्तरपदे विभक्त्युत्पत्तेः पूर्वमेवास्य प्रवृत्त्याऽन्तरङ्गत्वात्। कारकषष्ठीत्वेन षष्ठीसमासस्यापि ततः पूर्वं प्रवृत्तौ तु अस्तु सः। अस्य नित्यत्वेन तत्कृततत्पुरुषसञ्ज्ञाप्रयुक्तकार्याभावाऽभावेप्येतत्कृततत्सञ्ज्ञाप्रयुक्तस्य तस्यानपगमेनाऽदोषात्। एकस्या एव सञ्ज्ञाया उभाभ्यामपि प्रवृत्त्याऽविरोधेन युगपदेवोभाभ्यां सा। स्पष्टश्चेदमत्र भाष्ये। एवञ्च 'द्वितीया श्रिते'त्यादिसमासोऽप्युत्तरपदे सुबुत्पत्तेः प्रागेव। अत एव कारकेति सामान्यत एवोक्तम्। भाष्यकृता च तदंशे प्रमाणं नोपन्यस्तम्। 'परिभाषा न कर्तव्ये'ति प्रकृतसूत्रभाष्यं तु विशिष्टाया अकर्तव्यत्वपरम्। अत एव भाष्ये प्रत्याख्यानोत्तरमपि 'गतिकारकेति समासवचनात्' इत्युक्तम्। तेन कारकांशे वचनत्वमेव बोधितमिति दिक्। **मा भवानिति**। समासे सति व्यवहितप्रयोगो न स्यादिति सूचयितुं 'भवा'निति। इदमुपलक्षणम्—'कारको व्रजती'त्यादेर्भाष्योक्तस्य। किञ्च माङ उपपदत्वे महासञ्ज्ञाकरणबलात् 'मा कदाचिद्वर्णं भूत्' इति 'एच' इति सूत्रस्थे भाष्यप्रयोगे 'मा कदाचिदप्यवृत्तिर्भूत्' इति 'तद्धितार्थ' इति सूत्रस्थभाष्यप्रयोगे च द्वित्रिपदव्यवधाने प्रयोगो न स्यात्, यथा 'कर्तुं देवदत्तो घटं ग्रामं व्रजती'ति न प्रयोगः। किञ्च माङो नोपपदत्वम्। लुङ्विधौ माङीति सप्तम्याः प्रथमार्थत्वे मानाऽभावात्। तस्योपपदसञ्ज्ञायां फलाऽभावाच्च। तुमुन्विधौ तु 'क्रियार्थोपपदस्ये'त्यर्थमुपपदसञ्ज्ञाऽऽवश्यकेति दिक्।

**अतिङ्ग्रहणमिति**। न च 'कारको गत' इत्यत्र सुबन्तोपपदस्य समासव्यावृत्तये तिङन्तार्थक्रियावोधकाऽघटित इत्यर्थकं तदिति वाच्यम्, तस्य द्रव्यवाचितया तिङन्तार्थत्वाऽभावेन तेन तद्वारणस्याऽशक्यत्वात्। किञ्च गतादेर्द्रव्यवाचितया क्रियावाचकोपपदत्वाऽभावेन ण्वुल एव तत्राऽप्राप्तेः। क्रियावाचकशब्दग्रहणे क्रियायाः साध्यमात्रावस्थाया एव ग्रहणस्य 'गतिकारकोपपदात्' इति सूत्रे प्रकृतसूत्रे च भाष्ये ध्वनितत्वात्। प्रकृतसूत्रे 'उपपदमक्रिये'ति न्यासेऽक्रियेत्यस्येदं प्रत्युदाहरणमाशङ्क्याऽस्य क्रियावाचित्वाऽभावाद् षितम्। तत्र क्रियावाचित्वाऽभावादत्र प्रत्युदाहरणत्वं न, तुमुन् [न, ण्वुल् तु] भवतीत्यस्याऽन्याय्यत्वात्। न च धातोः क्रियावाचित्वेन तन्निबन्धनस्तुमुन् स्यादेवेति वाच्यम्, उपपदमिति महासञ्ज्ञया तुमुन्विधावपि पदत्वपर्यन्तं निवेशात्। तस्मात्तत्र तुमुन्ण्वुलोरसाधुत्वे एव भाष्यतात्पर्यम्। अर्थमात्रग्रहणे तु गुणीभूतादेरपि ग्रहणमिति गतपाकादियोगेऽपि कारकविभक्तिकृत्वसुचूक्त्वादीनां साधुत्वं भवत्येवेति भाष्यप्रदीपोद्द्योते विस्तरः। 'कारको व्रजतितरा'मित्यादेस्त्वनभिधानमेवेति भावः। **सुपेत्येतदिति**। 'सु'बित्यस्याप्युपलक्षणमिदम्। किञ्च कारको व्रजतीत्यस्यैव भाष्ये प्रत्युदाहृतत्वेन तद्व्यावृत्तेः सुबिति प्रथमान्तानुवृत्त्यैव सिद्ध्या तद्वैयर्थ्यमिति प्रथमान्तनिवृत्तिरेव तेन बोधयितुं युक्ता। परिभाषाऽकरणलाघवानुरोधेन तु भाष्ये सामान्यापेक्षज्ञापकमाश्रित्योभयोर्निवृत्तिरुक्ता। **पूर्वसूत्रेऽपीति**। तत्र गत्यंशेऽतिङित्यस्य सम्बन्धे फलाऽभावेन तिङन्ताऽघटितः समास इत्येवं

कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति सिद्धम् । व्याघ्री । अश्वक्रीती । कच्छपी । 'अमैवाव्ययेन

त.] इति भावः । कारकांशे तु 'कर्तृकरणे कृते'ति सूत्रस्थबहुलग्रहणमुक्तार्थे साधकमित्यपि मनोरमायां स्थितम् ।

**प्रागिति** । कृदन्ताच्चरमपदात्सुबुत्पत्तेः पूर्वं समास इत्यर्थः । प्रथमान्तसुब्ग्रहणं त्विहानुवर्तत एव, तेन 'राजदर्शी' त्यादौ पूर्वपदे नलोपादि कार्यं सिध्यति । परिभाषाफलं दर्शयन् गतिमुदाहरति—**व्याघ्रीति** । व्याजिघ्रतीति व्याघ्री । 'आतश्चोपसर्गे' इति इति कः । 'पाघ्राध्माधे'ङिति शस्तु संज्ञायां न भवति, व्याघ्रादिभिरिति निर्देशादिति वक्ष्यते । व्याङो 'घ्र'शब्देन गतिसमासः । स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत, तर्हि सुबुत्पत्तये सङ्ख्याद्यपेक्ष्यं, ततः प्रागेव लिङ्गयोग इति लिङ्गनिमित्तप्रत्ययेन टापा भाव्यं न तु ङीषा । घ्रशब्दमात्रस्य जातिवाचित्वाऽभावात्, ततो घ्राशब्देन समास इत्यदन्तत्वाऽभावाज्जातिलक्षणो ङीष् न स्यादिति भावः । यद्यप्युपपदत्वेनाप्येतत्सिद्धं तथापि गतिग्रहणमाङो घ्रशब्देन समासे पश्चाद्घ्राघ्रशब्देन विशब्दस्य समासार्थमावश्यकमेव । आङ्पूर्वाद्धातोः कप्रत्ययविधानादाङ्युपपदसंज्ञाभ्युपगमेऽपि विशब्दे तदनभ्युपगमादिति बोध्यम् । कारकमुदाहरति—**अश्वक्रीतीति** । अश्वेन क्रीता । 'कर्तृकरणे कृते'ति समासः । 'क्रीतात्करणपूर्वा'दिति ङीष् । सुबन्तेन समासे तु टापा भाव्यमित्यदन्तत्वाऽभावात् 'क्रीतात्करण—' इत्ययं ङीष् न स्यादिति ज्ञेयम् । उपपदमुदाहरति—**कच्छपीति** । कच्छेन पिबतीति कच्छपी । 'सुपि' इति योगविभागात्कः । इहापि समासस्य सुबन्ततापेक्षायां टाबेव स्यान्न ङीषित्यादि व्याघ्रीत्यत्रेव बोध्यम् । प्राचा तु 'उपपदमतिङन्तं समस्यते' इत्युक्तं, तदसत्, तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्यापत्त्या 'रजदर्शी' 'चर्मकार' इत्यादौ नलोपो न स्यात्, पदान्तत्वात् । प्राटितेत्यादौ 'अतो गुणे' इति पररूपं च स्यात् । स्यादेतत्—कच्छेन साधनेन पिबतीत्यर्थाभ्युपगमे कच्छस्य कारकत्वेन कच्छपीति रूपसिद्धौ नेदमुपपदस्याऽसाधारणोदाहरणमिति चेत्, एवं तर्हि 'माषवापिणी'त्युदाहर्तव्यम् । 'सुप्यजातौ' इति णिनौ कृते माषोपपदस्य कृदन्तेन समासे 'प्रातिपदिकान्ते'त्यादिना

बा.] प्राक्समासो वक्तव्य' इति प्राचीनव्याकरणोक्तं सिद्धं भवतीत्यर्थः । यद्यप्युक्तरीत्या गत्युपपदयोरेव लाभः, तथाप्येकदेशानुमतिद्वारा प्राचीनपरिभाषेयं सिध्यति । अथ परिभाषायाः फलं दर्शयितुं गतिसमासमुदाहरति—**व्याघ्रीति** । व्याजिघ्रतीति व्याघ्रः । व्याङ्पूर्वाद्घ्राधातोः 'आतश्चोपसर्गे' इति कः, 'आतो लोप इटि चे'त्यालोपः । 'पाघ्राध्माधेट्दृशः शः' इति तु न भवति, 'जिघ्रतेः संज्ञायां नेति वाच्य'मिति निषेधात् । आङो घ्रशब्देन गतिसमासः । आघ्रशब्देन वेर्गतिसमासः । तत्र यदि घ्रशब्दस्य सुबन्तत्वमपेक्ष्येत, तर्हि ङीप्रत्यये उत्पन्ने सुबुत्पत्तिः स्यात्, स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्याणां क्रमिकत्वस्य 'कुत्सिते' इति सूत्रस्थभाष्यदर्शितस्य 'ङ्याप्प्रातिपदिका'दित्यत्रास्माभिः प्रपञ्चितत्वात् । ततश्च सुबुत्पत्तये लिङ्गसङ्ख्याकारकं क्रमेणाऽपेक्ष्यमिति प्रथमं लिङ्गसंयोगे सति अदन्तत्वाट्टाप्स्यात् । न तु जातिलक्षणङीष्, घ्रशब्दमात्रस्य जातिवाचित्वाऽभावात् । ततश्च घ्राशब्देन सुबन्तेन समासे सति व्याघ्राशब्दस्याऽदन्तत्वाऽभावाज्जातिलक्षणो ङीष् न स्यादिति भावः । यद्यप्युपपदत्वेनाप्येतत्सिद्धं, तथापि गतित्वसंभवमात्रेणेदमित्याहुः । वस्तुतस्तु आङो घ्राशब्देन उपपदसमासः, 'आतश्चोपसर्गे' इति सप्तमीनिर्देशात् । वेस्तु आघ्रशब्देन गतिसमास इति तदंशे गतिसमासोदाहरणमित्याहुः । अथ कारकसमासमुदाहरति—**अश्वक्रीतीति** । अश्वेन क्रीतेति विग्रहे 'कर्तृकरणे कृता' इति समासः । 'क्रीतात्करणपूर्वा'दिति ङीष् । सुबन्तेन समासे तूक्तरीत्या पूर्वं टापि अदन्तत्वाऽभावान्ङीष् न स्यादिति भावः । उपपदसमासमुदाहरति—**कच्छपीति** । कच्छः—तीरं, तेन तस्मिन्वा पिबतीति

शे.] समासविशेषणतैव । अत एव 'प्रपचतितरा'मित्यादौ न गतिसमासः । किं तु 'उदात्तवता गतिमता च तिङा' इति वार्त्तिकेन समासः । तत्र 'तिङे'त्यस्य तिङ्घटितेनेत्यर्थः । 'सहे'ति योगविभागेन वा । तत्राऽर्थाधिकारानुरोधेनात्राऽपि अतिङन्तः समास इति व्याख्यातम् । अत एव 'अनवक्लृप्त्यमर्षयोः' इति सूत्रे किंवृत्तस्याधिकारादकिंवृत्तग्रहणानर्थक्यमित्युक्त्वा सामर्थ्यादुपपदसञ्ज्ञार्थन्तर्हीत्याशङ्क्याऽतिङितिप्रतिषेधात्सञ्ज्ञाऽऽनर्थक्यमित्युक्तं सङ्गच्छते । अतिङित्यस्योपपदविशेषणत्वे तदसङ्गतिः स्पष्टैव । उपपदमतिङन्तेनेति तु नार्थः, 'अतिङिति ज्ञापयति—अनयोर्योगयोर्निवृत्तं सुप्सुपेति । केनेदानीं सह समासः ?, समर्थेन' इति भाष्याऽसङ्गतेः, लुप्ततृतीयान्तत्वकल्पने मानाऽभावाच्च, भाष्यरीत्या प्रत्युदाहरणाऽभावाच्च । न चैवं तरबन्ते तद्वारणाय तत्र तस्य चारितार्थ्ये कथं तत्र सुपेत्यस्याऽसम्बन्धे तस्य ज्ञापकत्वमिति वाच्यम्, उपपदमिति सूत्रसम्बद्धेनैवाऽनेन तिङन्तव्यावर्त्तकेन प्राचीनपठितपरिभाषानुरोधेन सूत्रद्वयेऽपि सुप्सुपेत्येतदसम्बन्धज्ञापनात् । तदुक्तं भाष्ये—'अतिङ्ग्रहणं ज्ञापयति अनयोर्योगयोर्निवृत्तं सुप्सुपे'ति । तत्र पूर्वसूत्रे गत्यंशे एव तदसम्बन्धः परिभाषानुरोधादेव । तदाह—**तथा चेति** । कारकांशेऽप्येकदेशानुमत्येष्ट इति गम्यते । भाष्याच्च 'कर्तृकरणे' इति सूत्रविहितसमासो बहुलग्रहणात् क्वचित्सुबुत्पत्त्यनन्तरमपि । यथा—'सा हि तस्य धनक्रीते' त्यादौ । **प्राक्सुबुत्पत्तेरिति** । 'स्त्रीप्रत्ययोत्पत्तेः प्रा' गित्यपि बोद्धव्यम् । **अश्वक्रीतीति** । अश्वेन क्रीतेति करणस्य कृता समासः । 'क्रीतात्करणपूर्वा' इति ङीष् । सुबन्तेन समासे पूर्वं टाप्यदन्तत्वाऽभावात्स न स्यादिति भावः । व्याघ्यामपि आङो

।२।२।२०। अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम् । नेह 'कालसमयवेलासु तुमुन्' । कालः समयो वेला वा भोक्तुम् । अमैवेति किम् ? । अग्रेभोजम् । अग्रे भुक्त्वा । 'विभाषाग्रेप्रथमपूर्वेषु' इति क्त्वाणमुलौ । अमा चाऽन्येन च तुल्यविधानमेतत् । तृतीयाप्रभृतीन्यन्यतरस्याम् ।२।२।२१। 'उपदंशस्तृतीयाया'मित्यादीन्युपपदान्यमन्तेनाऽव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशम् ।

त.] पूर्वपदस्थान्निमित्तात्परस्य समासप्रातिपदिकान्तनकारस्य णत्वं सिध्यति । सुबन्तेन समासे त्वन्तरङ्गत्वाद्यान्तलक्षणेऽपि पश्चाद्वापिनीशब्देन समासे गर्गभगिनीत्यत्रेव णत्वं न स्यादित्येके । अन्ये तु कच्छेन हेतुना पिबतीत्यर्थविवक्षायां कच्छस्याऽकारकत्वात्कच्छपीत्युपपदस्योदाहरणं सम्यगेवेत्याहुः । अमैवाव्ययेन । पूर्वेण सिद्धे नियमार्थमिदम् । तुल्यविधानमिति । एतच्चाध्याहारेण लभ्यम् । तदेवेति । यस्मिन्नुपपदे येन वाक्येन अमेव विहितस्तदेवोपपदमव्ययेन समस्यते नान्यदित्यर्थः । नियमबललभ्योऽयमेवकारो न तु सूत्रस्थः । स्वादुङ्कारमिति । 'स्वादुमि णमुल्' । अव्ययेनेति किम् ? । कुम्भकारः । असति ह्यव्ययग्रहणे अमैव यत्तुल्यविधानं तदेव केनचित्समर्थेन समस्येत । तथा सति 'स्वादुङ्कारः' इत्यत्रैव समासः स्यान्न तु 'कुम्भकार' इत्यत्र । अथ पूर्वसूत्रवैयर्थ्यभीत्याऽव्ययविषयकनियम एव इति चेत्तर्हि अमन्तविषयक एव किं न स्यात् 'अमन्तेन यः समासः सोऽमैव तुल्यविधानस्ये'ति । तथा चाग्रेभोजमित्यत्र समासो मा भूत्, अग्रे भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भावः । तदेवेति किम् ? । कालो भोक्तुम् समयो भोक्तुम् । 'अमैवे'त्येवकारेणाऽमा चान्येन च तुल्यविधानस्योपपदस्य समासनिवारणेऽपि तुमुना तुल्यविधानस्य स्यादेवातस्तन्निवारणाय तदेवेत्युक्तम् । तृतीयाप्रभृतीन्यन्यतरस्याम् । उभयत्रविभाषेयम् । अमैव तुल्यविधानस्य प्राप्तेऽमा चान्येन च तुल्यविधानस्याऽप्राप्ते चारम्भात् । प्राप्ते यथा—'उपदंशस्तृतीयायाम्' । मूलकेनोपदंशं । मूलकोपदंशम् । अप्राप्ते यथा-'अव्ययेऽयथाभिप्रेताख्याने' इति क्त्वाणमुलौ । उच्चैःकारम् । इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः-'आदिर्णमुल्यन्यतरस्या'मित्याद्युदात्तत्वम् । असमासे तु उच्चैरित्यन्तोदात्तत्वम् । 'उदि चेडैसिः' इति व्युत्पत्तिपक्षे प्रत्ययस्वरस्य, अव्युत्पत्तिपक्षे तु 'फिषः' इत्यस्य च प्रवृत्तेरित्याहुः । मनोरमायां तूच्चैरित्यन्तोदात्तः, स्वरादिषु तथा पाठादिति

बा.] कच्छपो । 'सुपि स्थः' इत्यत्र 'सुपी'ति योगविभागात्कः, उपपदसमासः । तस्य सुबन्तापेक्षायामुक्तरीत्या टाबेव स्यान्न तु जातिलक्षणङीषिति भावः । अमैवाऽव्ययेन । 'अमैवे'त्यनन्तरं तुल्यविधानमित्यध्याहार्यम् । 'तुल्यार्थैरतुलोपमाभ्या'मिति तृतीया । अमैव तुल्येति । अम्प्रत्ययमात्रविधायकशास्त्रेण अमैव सह यस्य उपपदसंज्ञा विधीयते तदुपपदमव्ययेन समस्यत इति यावत् । पूर्वसूत्रेणैव सिद्धे नियमार्थमिदमित्याह—तदेवेति । विवरणवाक्ये द्वितीय एवकारो नियमलभ्यः, न तु सूत्रस्थः, तस्य अप्राप्ते अमा तुल्यविधानत्वेऽवधारणार्थत्वात् । स्वादुङ्कारमिति । स्वादुं कृत्वेत्यर्थः । 'ओदनं भुङ्क्ते' इति शेषः । 'स्वादुमि णमु'लिति णमुल् । स्वादुशब्दस्य मान्तत्वं निपातनात् । 'क्रुन्मेजन्तः' इत्यव्ययत्वम् । 'तदेवे'ति नियमस्य प्रयोजनमाह—नेहेति । 'उपपदसमास' इति शेषः । भोक्तुमिति । यद्यपि 'कालसमयवेलासु' इति सप्तमीनिर्देशात्कालसमयवेलानामुपपदत्वन्तथापि कालादीनामुपपदसंज्ञा तुमुना तुल्यविधानैव, न त्वमा । अतः कालादीनामुपपदत्वेऽपि न समास इत्यर्थः । अमैवेति किमिति । अमैवेत्येवकारः किमर्थ इति प्रश्नः । अमा चान्येन चेति । अम्प्रत्ययेन क्त्वाप्रत्ययेन च सह उपपदसंज्ञा अग्रेप्रथमपूर्वशब्दानां विहिता, ततश्च उपपदत्वस्य अमैव तुल्यविधानत्वाऽभावान्नोपपदसमास इति भावः ।

तृतीयाप्रभृतीनि । तृतीयाशब्देन 'उपदंशस्तृतीयाया'मित्यारभ्य 'अन्वच्यानुलोम्ये' इत्यन्तसूत्रोपात्तान्युपपदानि विवक्षितानि । अमेति, अव्ययेनेति चानुवर्तते । एवकारस्तु नानुवर्तते, अस्वरितत्वात् । अमेत्येतदव्ययविशेषणम् ।

शे.] ग्रशब्देन वैराग्रशब्देन गतिसमासः । कच्छपीत्यत्रापि सुपीति योगविभागात्के कच्छे पिबतीत्यर्थे उपपदसमासः । अमैवेति । 'तुल्यविधान'मित्यध्याहारलभ्यम् । सञ्ज्ञायास्तुल्यविधानत्वमाश्रित्य तत्सञ्ज्ञकस्य तुल्यविधानत्वमुक्तम् । येनाऽमेव विधीयते तेन यस्योपपदसञ्ज्ञा विधीयते तदुपपदमव्ययेन समस्यते नान्येन तुल्यविधानमित्यर्थः । तत्फलितमनुवदति—तदेवेति । कालादेस्त्वग्रप्रभृतेश्चाऽमैव तुल्यविधानत्वाऽभावान्न दोषः । 'अ'मिति णमुल्खमुञोः सामान्यग्रहणम् । तेन चोरङ्कारमित्यप्युदाहरणम् ।

तृतीया प्र । वा समस्यन्ते इति । यद्यपि उपपदनिमित्तकृद्विधौ समर्थपरिभाषोपस्थितेरुपपदसञ्ज्ञासूत्रे भाष्ये उक्तत्वेनोपपदकृदन्तयोर्व्यपेक्षा दुरुपपादा । कृतोऽसाधुत्वापत्तेः । अत एव 'महान्तं कुम्भं करोती'त्यत्र सविशेषणत्वे नाऽसामर्थ्यान्नाऽणिति 'तत्रोपपद'मित्यत्र भाष्ये स्पष्टम् । विशिष्टस्य तु नोपपदसञ्ज्ञा । अपदत्वात् । तथाप्येकार्थीभाव एव वाग्रहणात्सञ्ज्ञाऽभावोऽत्र, यथा गङ्गापारमित्यत्राव्ययीभावत्वाऽभावः । 'न च सञ्ज्ञाया भावाऽभावाविष्येते' इति भाष्ये 'महाविभाषये'ति शेषः । एवञ्च 'महता मूलकेनोपदंशं भुङ्क्ते' इत्यसमासेऽपि व्यपेक्षालक्षणं सामर्थ्यम् । विभक्तिस्तु प्रधानक्रियानुरोधित्वात्परत्वाच्च तृतीयैवेति निरूपितमन्यत्र । क्त्वा च । क्त्वेति तृतीयान्तम् । अलङ्कृत्वेति । 'अलङ्खल्वोः' इति सूत्रम्

**क्त्वा च** ।२।२।२२। तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैःकृत्य । उच्चैः कृत्वा । [नीचैःकृत्य । नीचैः कृत्वा] ।'अव्ययेऽयथाभिप्रेते'ति क्त्वा । तृतीयाप्रभृतीनीति किम् ? । अलं कृत्वा । खलु कृत्वा । **तत्पुरुषस्याङ्गुलेः सङ्ख्याव्ययादेः** ।५।४।८६। सङ्ख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच्स्यात् । द्वे अङ्गुली प्रमाणमस्य व्यङ्गुलं दारु । निर्गतमङ्गुलिभ्यो निरङ्गुलम् । **अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः** ।५।४।८७। एभ्यो रात्रेरच्स्याच्चात्सङ्ख्याव्ययादेः । *अहर्ग्रहणं द्वन्द्वार्थम् । अहश्च रात्रिश्चाऽहोरात्रः । सर्वा रात्रिः सर्वरात्रः ।

त.] स्थितम् । 'अमे'त्यनुवर्तत इत्याह-**अमन्तेनेति** । तेनेह न-पर्याप्तो भोक्तुम् । 'पर्याप्तिवचनेष्वि'ति तुमुन् । **क्त्वा च** । क्त्वेति तृतीयान्तम् । 'आतः' इति योगविभागादालोपः, 'क्वि स्कन्दिस्यन्दोः' इतिवदिति हरदत्तः । तन्न । सवर्णदीर्घेणापि तृतीयान्तत्वोपपत्तेः । **अलं कृत्वेति** । 'अलङ्खल्वोः प्रतिषेधयो'रिति सूत्रस्य 'उपदंशस्तृतीयाया'मित्यस्मात्पूर्वत्वान्नेह समासः । तत्पुरुषेऽसाधारणान्समासान्तानाह-**तत्पुरुषस्येति** । अलोन्त्यविधिं बाधित्वा 'प्रत्ययः' 'परश्चे'ति परत्वात्तत्पुरुषात्पर एवाऽच्प्रत्ययो भवति । यथा गापोष्टकः कित्त्वेऽपि गापाभ्यां पर एव टग्भवति, न त्वन्तावयवः । श्रमस्तु अनुबन्धकरणसामर्थ्यात्परविधिर्बाध्यते । एवं च लाघवात् 'तत्पुरुषादङ्गुले'रिति वक्तव्ये 'तत्पुरुषस्याऽङ्गुले'रिति तु समासान्तापेक्षया अवयवषष्ठीत्याहुः । **द्व्यङ्गुलमिति** । 'तद्धितार्थ' इति समासः । 'द्विगोर्नित्य'मिति मात्रचो लोप इति वृत्तिकृत् । मनोरमायां तु द्वयसचो लुगिति स्थितम् । **द्वन्द्वार्थमिति** । 'अह्नो रात्रि'रिति षष्ठीतत्पुरुषस्याऽसम्भवादिति भावः । नन्वहःशब्दस्याऽहस्तुल्यतायां, रात्रिशब्दस्य वा रात्रितुल्यतायां गौणत्वसम्भवादहश्चासौ रात्रिश्चेति कर्मधारयोऽस्त्विति चेन्न । मुख्यसम्भवे गौणग्रहणाऽयोगात् । 'हेमन्तशिशिरावहोरात्रे चे'त्यत्र द्वन्द्वे समासान्तदर्शनाच्च । **अहोरात्र इति** । 'जातिरप्राणिना'मित्येकवद्भावः । 'स नपुंसक'मित्येतद्बाधित्वा परत्वात् 'रात्राह्नाहाः' इति पुंस्त्वम् । एतेनैकवद्भावात् क्लीबतेति प्राचो ग्रन्थः परास्तः । 'मासेन स्यादहोरात्रः' इत्यादिग्रन्थविरोधाच्च । **सर्वरात्र इति** । 'पूर्वकालैके'ति समासः । **पूर्वरात्र इति** । 'पूर्वापराधरोत्तर'मित्येकदेशिसमासः । यदा तु रात्रिशब्दस्यैकदेशे लक्षणां स्वीकृत्य कर्मधारयोऽभ्युपगम्यते तदा पूर्वरात्रिरित्येव भवति ।

बा.] तदाह-उपदंशस्तृतीयायामित्यादिना । **मूलकोपदंशमिति** । 'उपदंशस्तृतीयाया'मिति णमुल् । अमैव तुल्यविधानत्वात्पूर्वसूत्रेण नित्ये प्राप्ते विकल्पोऽयम् । ननु 'मूलकेने'त्यस्य 'भुङ्क्ते' इत्यत्रैवान्वयादुपदंश इत्यत्रानन्वयादसामर्थ्यात्कथमिह समास इति चेत्, मैवम्—उपदंशनक्रियां प्रति हि मूलकस्य आर्थिकं कर्मत्वमादाय सामर्थ्यमुपपाद्यम् । तृतीया तु प्रधानक्रियानुरोधात्परत्वाच्चोपपाद्येत्यन्यत्र विस्तरः । **उच्चैःकारमिति** । उच्चैःकृत्वेत्यत्र तु 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' । तत्र 'उच्चैःकार'मित्यत्र उपपदत्वस्य अमैव तुल्यविधानत्वाऽभावात् 'अमैवाव्ययेने'त्यप्राप्तेऽनेन विकल्पः । समासपक्षे 'आदिर्णमुल्यन्यतरस्या'मिति कृदुत्तरपदप्रकृतिस्वर आद्युदात्तत्वम् । असमासपक्षे तु उच्चैरिति फिट्सूत्रेणाऽन्तोदात्तत्वमिति फले भेदः । **अमन्तेनेति** किम् ? । पर्याप्तो भोक्तुम् । 'पर्याप्तिवचनेषु' इति तुमुन् । **क्त्वा च** । 'तृतीयाप्रभृतीनी'ति पूर्वसूत्रमनुवर्तते । क्त्वेति तृतीयार्थे प्रथमा । टायां 'सुपां सुलुक्पूर्वसवर्णे'ति पूर्वसवर्णदीर्घ इत्यपरे । तदाह—**तृतीयेति** । ननु 'उपदंशस्तृतीयाया'मित्यतः प्रागेव 'समानकर्तृकयो'रिति क्त्वाविधेः पाठात्कथमुच्चैः कृत्वेत्युदाहरणमित्यत आह—**अव्ययेऽयथेति** । 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति सूत्रेणेत्यर्थः । **अलं कृत्वेति** । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इत्येतत् 'उपदंशस्तृतीयाया'मित्यतः पूर्वमेव पठितम् । अतस्तद्विहितक्त्वो मान्तेन सह समासाऽभावान्न ल्यबिति भावः । इत्युपपदसमासाः । अथ तत्पुरुषेष्वसाधारणसमासान्तान् वक्तुमुपक्रमते—**तत्पुरुषस्याङ्गुलेः** । 'अच्प्रत्यन्ववपूर्वा'दित्यतोऽजित्यनुवर्तते, 'समासान्त' इत्यधिकृतम् । तेन समासस्य अन्तावयव इति लभ्यते । प्रत्ययः परश्च इत्यधिकारादच्प्रत्ययस्य तत्पुरुषात्परत्वेऽपि तस्य तदवयवत्वादङ्गुलेरित्यवयवषष्ठी । अङ्गुलेरिति तत्पुरुषविशेषणं, तदन्तविधिः । तदाह-**संख्याव्ययादेरिति** । सङ्ख्या च अव्ययं च सङ्ख्याव्यये, ते आदी यस्येति विग्रहः । **द्व्यङ्गुलमिति** । तद्धितार्थ' इति द्विगुः । प्रमाणे द्वयसज्दघ्नञ्मात्रचः 'प्रमाणेलो द्विगोर्नित्य'मिति लुक् । द्व्यङ्गुलिशब्दादचि तस्य तद्धितत्वात्तस्मिन् परे 'यस्येति चे'ति इकारलोपः । **निरङ्गुलमिति** । 'निरादयः क्रान्ताद्यर्थे' इति समासः, अच्, इलोपः । **अहःसर्वैकदेश** । **एभ्यो रात्रेरिति** । अहन्, सर्व, एकदेश, सङ्ख्यात, पुण्य—एभ्यः परस्य रात्रिशब्दस्येत्यर्थः । अहन्नादिपूर्वपदकस्य रात्र्यन्तस्य तत्पुरुषस्येति यावत् । ननु अहरादौ रात्र्यन्तस्तत्पुरुषो नास्त्येव, अह्नो रात्रिरिति वा, अहश्चासौ रात्रिश्चेति वा, असंभवादित्यत आह-**अहर्ग्रहणं द्वन्द्वार्थमिति** । नन्व ब्रह्मणो यदहस्तस्यावयवभूता या मानुषी

शे.] उपदंशस्तृतीयायाम्' इत्यतः पूर्वमिति भावः । अथ तत्पुरुषाऽसाधारणसमासान्तानाह-तत्पुरुषस्य । **द्व्यङ्गुलमिति** । तद्धितार्थ इति समासः । **द्वन्द्वार्थमिति** । ब्रह्मणोह्नोऽवयवीभूता मानुषी रात्रिरित्याद्यर्थे षष्ठीतत्पुरुषायनभिधानमिति भावः । **सर्वरात्र**

पूर्वं रात्रेः पूर्वरात्रः। सङ्ख्यातरात्रः। पुण्यरात्रः। द्वयो रात्र्योः समाहारो द्विरात्रम्। अतिक्रान्तो रात्रिमतिरात्रः। राजाहःसखिभ्यष्टच् ।५।४।९१। एतदन्तात्तत्पुरुषाट्टच्स्यात्। परमराजः। अतिराजी। कृष्णसखः। अह्नष्टखोरेव ।६।४।१४५। [अह्नष्टखोरेव] टिलोपः स्यान्नान्यत्र। उत्तमाऽहः। द्वे अहनी भृतो द्व्यहीनः [क्रतुः]। तद्धितार्थे द्विगुः। 'तमधीष्ट' इत्यधिकारे 'द्विगोर्वे'त्यनुवृत्तौ 'रात्र्यहःसंवत्सराच्चे'ति खः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह-मद्राणां राज्ञी मद्रराज्ञी। अह्नोऽह्न एतेभ्यः ।५।४।८८। सर्वादिभ्यः परस्याऽहन्शब्दस्या-

त.] द्विरात्रमिति। 'सङ्ख्यापूर्वं रात्रं क्लीब'मिति वक्ष्यते। अह्नष्टखोरेव। 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदम्। एवकारस्त्वह्न एव टखयोरिति विपरीतनियमशङ्कानिरासार्थः। 'आत्माध्वानौ खे' इति प्रकृतिभावविधानेन तन्निरासे प्रतिपत्तिगौरवं स्यादिति भावः। टखोरेवेति किम्?। अह्ना निर्वृत्तमाह्निकम्। 'काला'दित्यधिकारे 'तेन निर्वृत्त'मिति ठञ्। टिलोपाऽभावात् 'अल्लोपोऽनः' इत्यकारलोपः। उत्तमाह इति। 'सर्वैकदेशसङ्ख्याते'त्यत्र उत्तमशब्दस्याऽपाठादह्नादेशो न। द्व्यहीन इति। समासान्तविधेरनित्यत्वाच्च टच्। सति तु तस्मिन्नह्नादेशः प्रसज्येत। न च नान्तस्य खे परे टिलोपविधिसामर्थ्यान्न टजिति वाच्यम्, 'अहीन' इत्यत्र तस्य सावकाशत्वात्।

अनित्यत्वादिति। अत्र च लिङ्गं 'शक्तिलाङ्गलाङ्कुशे'त्यत्र घटीग्रहणम्। मद्रराज्ञीति। यद्यत्र टच् स्यात्तदा 'भस्याऽढे—' इति पुंवद्भावे टिलोपे च मद्रराजीत्यनिष्टरूपं स्यादिति भावः। अह्नोऽह्न एतेभ्यः। एत-

बा.] रात्रिरिति षष्ठीतत्पुरुषः संभवतीति वाच्यम्, 'अहर्ग्रहणं द्वन्द्वार्थ'मिति भाष्यप्रामाण्येन एवंजातीयकतत्पुरुषस्य प्रयोगाऽभावोन्नयनात्। अहोरात्र इति। द्वन्द्वादच्, इलोपः, 'जातिरप्राणिना'मित्येकवत्त्वम्। 'स नपुंसक'मिति बाधित्वा 'रात्राह्नाहाः पुंसी'ति पुंस्त्वम्। सर्वा रात्रिः सर्वरात्र इति। सर्वा रात्रिरिति विग्रहे 'पूर्वकालैके'ति कर्मधारयः। अच्। इकारलोपः। 'रात्राह्नाहा' इति पुंस्त्वम्। 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वम्। एकदेशेऽप्यर्थग्रहणमित्यभिप्रेत्योदाहरति—पूर्वमिति। पूर्वं रात्रेरिति विग्रहे 'पूर्वापराधरोत्तर'मित्येकदेशिसमासः। अच्, इलोपः, 'रात्राह्ने'ति पुंस्त्वम्। सङ्ख्यातरात्र इति। सङ्ख्याता रात्रिरिति विग्रहे कर्मधारयः। 'पुंवत्कर्मधारये'ति पुंवत्त्वम्। पुण्यरात्र इति। पुण्या रात्रिरिति विग्रहे कर्मधारयः। 'पुंवत्कर्मधारये'ति पुंवत्त्वम्। अच्, इलोपः। 'रात्राह्ने'ति पुंस्त्वम्। द्विरात्रमिति। 'तद्धितार्थे'ति द्विगुः। सङ्ख्यादित्वादच्, इलोपः। 'सङ्ख्यापूर्वं रात्रं क्लीब'मिति नपुंसकत्वम्। अतिरात्र इति। 'अत्यादयः क्रान्ताद्यर्थे' इति समासः। अव्ययादित्वादच्, इलोपः, 'रात्राह्ने'ति पुंस्त्वम्। राजाहःसखिभ्यष्टच्। 'तत्पुरुषस्याङ्गुलेः' इत्यतस्तत्पुरुषस्येत्यनुवृत्तं पञ्चमीबहुवचनत्वेन विपरिणतं 'राजाहःसखिभ्यः' इत्यनेन विशेष्यते। तदन्तविधिः। तदाह—एतदन्तादिति। परमराज इति। परमश्चासौ राजा चेति विग्रहः। समासान्तष्टच्। 'नस्तद्धिते' इति टिलोपः। अतिराज इति। अतिक्रान्तो राजानमिति विग्रहः। 'अत्यादयः' इति समासः। टचि टिलोपः। कृष्णसख इति। कृष्णस्य सखेति विग्रहः। समासान्तष्टच्। 'यस्येति चे'ति इकारलोपः। अह्नष्टखोः। शेषपूरणेन सूत्रं व्याचष्टे—टिलोपः स्यादिति। टेरित्यनुवर्तते, 'अल्लोपोऽनः' इत्यस्माल्लोप इति चेति भावः। 'नस्तद्धिते' इत्येव सिद्धे नियमार्थमिदमित्याह—नान्यत्रेति। एवकारस्तु 'अह्न एव टखो'रिति विपरीतनियमव्यावृत्त्यर्थः। टखोरेवेति किम्?। अह्ना निर्वृत्तम् आह्निकम्। 'कालाट्ठञ्' इत्यधिकारे 'तेन निर्वृत्त'मिति ठञ्। टिलोपाऽभावादल्लोपः। टप्रत्यये उदाहरति—उत्तमाह इति। उत्तमं च तदहश्चेति विशेषणसमासः। 'राजाहःसखिभ्यष्ट'जिति टच्। 'अह्नष्टखोरेवे'ति टच्। अह्नष्टखोरेवे'ति प्रकृतसूत्रेण टिलोपः, 'रात्राह्नाहाः पुंसी'ति पुंस्त्वम्। खे उदाहरति—द्वे अहनी भृत इति। अत्यन्तसंयोगे द्वितीया। भृतः=परिक्रीत इत्यर्थः। 'द्व्यहीन' इत्यत्र प्रक्रियां दर्शयति—तद्धितार्थे द्विगुरिति। कोऽत्र तद्धित इत्यत आह—तमधीष्ट इत्यादि। तथाच द्व्यहन्शब्दात्खस्य ईनादेशे 'अह्नष्टखोरेवे'ति टिलोपे 'द्व्यहीन' इति रूपमित्यर्थः। नन्वत्र 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः कुतो न स्यात्। नच खे टिलोपविधिसामर्थ्यान्नाह्नादेश इति वाच्यम्, 'अहीन' इत्यत्र खे टिलोपविधेश्चरितार्थत्वादिति चेन्न, समासान्ते पर एवाह्नादेशविधानात्, प्रकृते तु समासान्तविधेरनित्यत्वात् 'राजाहःसखिभ्यः' इति न टच्। यद्यपि 'उत्तमाहः' इत्यत्र, 'द्व्यहीन' इत्यत्र च 'नस्तद्धिते' इत्येव टिलोपः सिद्धस्तथापि आह्निकमित्यादावावश्यकस्य नियमविधेर्विधिमुखेनापि प्रवृत्त्यभ्युपगमादिह तदुपन्यासः।

ननु मद्राणां राज्ञी मद्रराज्ञीत्यत्रापि लिङ्गविशिष्टपरिभाषया 'राजाहःसखिभ्यः' इति टच् स्यादित्याशङ्क्याह-लिङ्गेति।

शे.] 'पूर्वकालैके'ति समासः। 'पुंवत्कर्मधारये'ति पुंवत्, 'सर्वनाम्नो वृत्तिमात्रे' इति वा। अतिराजीति। उत्तरपदावयवत्वस्य भाष्याऽसंमतत्वेन टितोऽनुपसर्जनत्वान्ङीप्। द्व्यहीन इति। समासान्तविधेरनित्यत्वान्न टच्। अत एव 'द्विगोर्वे'त्यनुवर्तमाने 'रात्र्यहःसंवत्सराच्च' इति चरितार्थम्। समासान्ते हि ... अनित्यत्वादिति। अत एव समासान्त-

ऽह्नादेशः स्यात्समासान्ते परे । **अह्नोऽदन्तात्** ।८।४।७। अदन्तपूर्वपदस्थाद्रेफात्परस्याह्नो [ह्नादेशस्य] नस्य णः स्यात् । 'सर्वाह्णः । पूर्वाह्णः । सङ्ख्याताह्नः । द्वयोरह्नोर्भवः । 'कालाट्ठञ्' । 'द्विगोर्लुगनपत्ये' इति ठञो लुक् । द्व्यह्नः । स्त्रियामदन्तत्वट्टाप्—द्व्यह्ना । द्व्यह्नप्रियः । अत्यह्नः । **क्षुभ्नादिषु च** ।८।४।३९। एषु णत्वं न स्यात् । दीर्घाह्नी

त.] चच्छब्देन 'अहःसर्वैकदेश–' इति सूत्रस्थाः परामृश्यन्ते । सूत्रे तु तस्मिन्नहरादयो निर्दिष्टाश्चकारेण च संख्याव्यये अनुकृष्टे । तत्र सर्वेषां बुद्धिस्थत्वाऽविशेषेऽप्यहःशब्द इह न गृह्यते, असंभवादित्यशयेनाह—**सर्वादिभ्य इति । समासान्ते पर इति** । एतच्च प्रकरणाल्लब्धम् । भाष्ये तु अह्नादेशः प्रत्याख्यातः, 'अह्न एभ्योऽच्स्याट्चोऽपवादः' इति व्याख्यायाम्, 'अहष्टखोरेवे'ति नियमाट्टिलोपाऽभावे 'अल्लोपोऽनः' इत्यकारलोपात्सर्वाह्ण इत्यादिरूपसिद्धेः । **रेफादिति** । यदि तु लक्षे अहस्सु भव इत्यादिव्युत्पत्त्या 'लक्षाह्ण' इत्यपि प्रयोगोऽस्ति, तर्हि षादित्यपि बोध्यम् । 'रषाभ्या'मित्यधिकारात् । **ठञो लुगिति** । 'अणो लु'गिति वृत्तिकाराद्युक्तमयुक्तमिति भावः । प्रसङ्गादाह-**स्त्रियामिति** । नन्विह स्त्रीत्वं दुर्लभं, 'रात्राह्नाहाः पुंसी'ति वचनादिति चेन्मैवम् । सर्वमहः सर्वाह्ण इत्यादावुपक्षीणस्य तद्वचनस्य लुप्ततद्धितायामप्रवृत्तेः । 'लुपि युक्तव'दिति लिङ्गातिदेशो ह्यत्र प्रमाणम् । प्राकृतलिङ्गानुशासनानां लुप्तप्रत्ययेषु प्रवृत्तौ तद्वैयर्थ्यापत्तेः । अतएव लवणः सूपः लवणा यवागूरित्यादौ न क्लीबत्वम् । किं च 'द्विगुप्राप्तापन्ने'त्यादिना परवल्लिङ्गत्वे प्रतिषिद्धे तदपवादस्य 'रात्राह्नाहाः' इत्यस्याऽप्राप्तिरेवेति व्यह्नशब्दोऽयं विशेष्यनिघ्न एव, न तु नियतपुंलिङ्गः । एवं चाऽत्र भवार्थकतद्धिते लुप्तेऽपि 'यः शिष्यते स लुप्यमानार्थाभिधायी'ति न्यायेन भवार्थवस्तुनिष्ठस्त्रीत्वाभिधानमपि न्याय्यमेवेति दिक् । **टाबिति** । न चेह ठञन्तत्वान्ङीप्स्यादिति शङ्क्यं, ठञो लुप्तत्वात् । न च प्रत्ययलक्षणं, वर्णाश्रयत्वात् । 'ठञो योऽकारस्तदन्तान्ङी'बिति तत्र व्याख्यातत्वात् । अतएव वृत्तिकाराद्युक्ताऽणो लुक्पक्षेऽपि न ङीप्, 'अण्योऽकारः' इति तत्र व्याख्यातत्वात् । न चैवमपि टजन्तत्वान्ङीप्स्यादेवेति वाच्यम् । टचः समासान्ततया तदन्तस्य तद्धितार्थं प्रत्युपसर्जनत्वात् । अतएव हि आपिशलिना प्रोक्तमधीयाना ब्राह्मणी आपिशलेत्युदाहृतं भाष्ये । 'द्विगो'रिति ङीप्तु न शङ्क्य एव, 'अपरिमाणे'ति निषेधात् । अतष्टाबेवात्र युक्तः । तथैवोदाहरति–**द्व्यह्नेति** । 'अह्नोऽह्न' इति सूत्रेऽह्नादेशं प्रत्याख्याय 'अच्प्रत्यन्ववे'त्यतोऽचमनुवर्त्य 'टजपवादोऽ'जिति व्याचक्षाणस्य

बा.] **अनित्यत्वादिति** । समासान्तप्रकरणे लिङ्गविशिष्टपरिभाषा नेति 'ङ्याप्प्रातिपदिकात्' इत्यत्र भाष्ये उक्तत्वादिति भावः । **मद्रराज्ञीति** । नच टचि सत्यपि 'यस्येति चे'तीकारलोपे मद्रराजशब्दात् टित्त्वान्ङीपि मद्रराज्ञीति निर्बाधमिति वाच्यं, टचि हि सति 'भस्याऽढे तद्धिते' इति पुंवत्त्वे टिलोपे 'मद्रराजी'ति स्यादिति भावः । **अह्नोऽह्न एतेभ्यः** । पूर्वसूत्रे अहःसर्वैकदेशसङ्ख्यातपुण्यशब्दा निर्दिष्टाः । तत्र चकारेण सङ्ख्याव्यये अनुकृष्टे । अहन्शब्दवर्जं ते सर्वे एतच्छब्देन परामृश्यन्ते, नत्वहःशब्दः, अहःशब्दात्परस्य अहन्शब्दस्य तत्पुरुषे असंभवादित्यभिप्रेत्य व्याचष्टे-**सर्वादिभ्य इति । समासान्ते पर इति** । एतत्तु प्रकरणाल्लब्धम् । **अह्नोऽदन्तात्** । 'पूर्वपदात्संज्ञायाम्' इत्यतः पूर्वपदादित्यनुवृत्तमदन्तादित्यत्रान्वेति । 'रषाभ्यां नो णः' इति सूत्रं षकारवर्जमनुवर्तते । पूर्वपदादित्यनेन पूर्वपदस्थादिति विवक्षितम् । तदाह—**अदन्तपूर्वेति** । तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टार्थम् । लक्षेषु अहस्सु भवो लक्षाह्ण इत्यत्र णत्वार्थं षादित्यपि बोध्यम् । समासान्ते परे इति किम् ?। द्वे अहनी भृतो द्व्यहीनः । अत्र समासान्तविधेरनित्यत्वाट्टजभावेऽह्नादेशो न । **सर्वाह्ण इति** । सर्वमहरिति विग्रहे 'पूर्वकालैके'ति समासे 'राजाहःसखिभ्यः' इति टच्, अह्नादेशः । णत्वं । 'रात्राह्नाहाः' इति पुंस्त्वम् । **पूर्वाह्ण इति** । समासादि सर्वाह्णवत् । **सङ्ख्याताह्न इति** । सङ्ख्यातमहरिति विग्रहः । विशेषणसमासः, टच्, अह्नादेशः । निमित्ताऽभावान्न णत्वम् । पुण्यपूर्वस्य त्वग्रे वक्ष्यते । सङ्ख्यापूर्वस्य उदाहरति—**द्वयोरह्नोरित्यादि । द्व्यह्न इति** । तद्धितार्थे द्विगुः । टच् । ततो भवार्थे ठञ्, तस्य लुक्, अह्नादेशः । प्रसङ्गादाह—**स्त्रियामिति । द्व्यह्नेति** । द्वयोरह्नोर्भवेत्यर्थः । ठञ् । लुक् च पूर्ववत् । 'अपरिमाणबिस्ते'ति न ङीप् । ठञ्निमित्तस्तु ङीब्नेत्यपरिमाणबिस्तेत्यत्रोक्तम् । टचष्टित्त्वेऽप्युप-

शे.] प्रकरणे सा नेति ङ्याप्सूत्रे भाष्ये उक्तम् । **मद्रराज्ञीति** । टचि 'भस्याढे'ति इति पुंवत्त्वे टिलोपे मद्रराजीति स्यादिति भावः ।

**अह्नोऽद** । 'अत' इत्येव पूर्वपदविशेषणतया सामानाधिकरण्येनान्वयेऽदन्तपूर्वपदेत्यर्थलाभेऽन्तग्रहणं स्पष्टार्थम् । 'अह्न' इति नान्तानुकरणात्षष्ठी । **द्व्यह्नेति** । द्वयोरह्नोर्भवेत्यर्थः । इदं तद्धितार्थद्विगोर्विशेष्यनिघ्नत्ववादिनां मते । वस्तुतोऽस्य स्त्रीत्वमेव नास्ति । [तत्र] 'रात्राह्नाहाः' इति पुंस्त्वेन बाधात् । न चेदं सूत्रं रात्राह्नादिशब्दघटितसमासमात्रनिमित्तलिङ्गस्यान्तरङ्गस्यैव बाधकं न तु बहिर्भूततद्धितार्थनिमित्तलिङ्गस्यापीति वाच्यम् । सूत्रोपस्थितरात्राह्नादिशब्दार्थविशेष्यत्वप्राप्तस्यैव बाधापत्त्या बहिर्भूतसमाहारविशेष्यत्वप्राप्तस्य बाधाऽनापत्तेः । न च पुंस्त्वाधिकारे-अह्नाहान्ताः क्ष्वेडभेदा रात्रान्ताः प्रागसङ्ख्यकाः' इत्यनन्तरम्-'अर्धान्ताः प्रायलंप्राप्तापन्नपूर्वाः परोक्षया । तद्धितार्थे द्विगुः सङ्ख्या सर्वनामतदन्तकाः' इत्यस्यामरोक्तेन 'परं विरोधे शेषं तु ङ्के च

प्रावृट् । एवं चैतदर्थमह्ने त्यदन्तानुकरणक्लेशो न कर्तव्यः । 'प्रातिपदिकान्ते'ति णत्ववारणाय क्षुभ्नादिषु पाठस्यावश्यकत्वात् । अदन्तादिति तपरकरणान्नेह-परागतमहः पराऽह्णः । **न सङ्ख्यादेः समाहारे** ।५।४।८९। समाहारे वर्तमानस्य सङ्ख्यादेरह्नादेशो न स्यात् । सङ्ख्यादेरिति स्पष्टार्थम् । द्वयोरह्नोः समाहारो द्व्यहः । त्र्यहः । **उत्तमैकाभ्यां च** ।५।४।९०। आभ्यामह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह । 'पुण्यैकाभ्या'मित्येव सूत्रयितुमुचितम् । पुण्याहम् । [सुदिनाहम् । सुदिनशब्दः प्रशस्तवाची] । एकाहः । उत्तमग्रहणमुपान्त्यस्यापि सङ्ग्रहार्थमित्येके । सङ्ख्याताऽहः । **अग्राख्यायामुरसः** ।५।४।९३। टच्स्यात् । अश्वानामुर इव

त.] भाष्यकारस्य मते तु निर्विवाद एवात्र टाप् । कथं तर्हि कालनिर्णयदीपिकायां द्व्यह्नीति प्रयोग इति चेत्, अत्राहुः- द्वे अहनी यस्यां तिथाविति बहुव्रीहौ नान्तलक्षणो ङीब्बोध्यः । 'द्वयोरह्नोर्भव' इति व्याख्यानग्रन्थस्तु फलितार्थकथनपरतया ज्ञेय इति । सङ्ख्यादिभिन्नस्य तत्पुरुषस्य समाहारे वृत्त्यसम्भवादाह—**स्पष्टार्थमिति** । **पुण्याहमिति** । 'पुण्यसुदिनाभ्या'मिति क्लीबत्वं वक्ष्यति । **उपान्त्यस्यापीति** । यथा 'प्रथमयो'रिति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्, तथेहापि उत्तमग्रहणसामर्थ्यादन्त्ययोर्द्वयोर्ग्रहणम् । उत्तमौ चैकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषा-

बा.] सर्जनस्त्वाट्टिड्ढेति न ङीप् । वस्तुतस्तु स्त्रीत्वमेवाऽत्र नास्ति । 'रात्राह्नाहाः पुंसी'त्युक्तेरिति शब्देन्दुशेखरे प्रपञ्चितम् ।

सङ्ख्यापूर्वस्योदाहरणान्तरमाह-**द्व्यह्नप्रिय इति** । द्वे अहनी प्रिये यस्येति विग्रहः । तद्धितार्थ इत्युत्तरपदे द्विगुः । टच्, अह्नादेश इति भावः । अव्ययपूर्वस्योदाहरति—**अत्यह्न इति** । अहरतिक्रान्त इति विग्रहः । 'अत्यादय' इति समासः । टच्, अह्नादेश इति भावः । **क्षुभ्नादिषु च** । 'रषाभ्या'मित्यतो 'ण' इति, 'न भाभूपूकमी'त्यतो 'ने'ति चानुवर्तते । तदाह—**एष्विति** । **दीर्घाह्नी प्रावृडिति** । वर्षर्तौ प्रावृट्शब्दः स्त्रीलिङ्गः । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः । 'अन उपधालोपिनोऽन्यतरस्या'मिति ङीप् । 'अल्लोपोऽनः' इत्युपधालोपः । 'अह्नोऽदन्ता'दिति णत्वं तु क्षुभ्नादित्वान्नेति भावः । ननु क्षुभ्नादिषु 'दीर्घाह्नी'त्यस्य पाठो व्यर्थः, 'अह्नोऽदन्तात्' इत्यत्र हि 'अह्ने'त्यदन्तात् षष्ठ्यर्थे प्रथमा । अदन्तपूर्वपदस्थान्निमित्तात्परस्याऽह्नशब्दस्य नस्य णत्वं स्यादिति तदर्थः । दीर्घाह्नीत्यत्र च अह्नादेशस्याप्रसक्त्याऽदन्तत्वाऽभावादेव णत्वस्याऽप्राप्तौ किं तन्निवृत्त्यर्थेन क्षुभ्नादिपाठेनेत्यत आह—**एवं चेति** । एवं सति=दीर्घाह्नीशब्दस्य क्षुभ्नादिपाठे सति, एतदर्थम्-'अह्नोऽदन्ता'दिति णत्वनिवृत्त्यर्थम्, अह्नेत्यस्य अदन्तत्वानुसरणं, षष्ठ्यर्थे व्यत्ययेन प्रथमानुसरणं क्लेशावहं न कर्तव्यमित्यर्थः । क्षुभ्नादिपाठादेव णत्वनिवृत्तिसिद्धेरिति भावः । ननु दीर्घाह्नीत्यस्य णत्वाऽभावाय किं क्षुभ्नादिपाठोऽभ्युपगम्यतामुत 'अह्ने'त्यस्याऽदन्तत्वमित्यत्र विनिगमनाविरह इत्यत आह—**प्रातिपदिकान्तेति** । अथ 'अह्नोऽदन्ता'दित्यत्र पूर्वपदविशेषणेऽदन्तादिति तपरत्वस्य प्रयोजनमाह—**अदन्तादिति** । **पराह्न इति** । 'प्रादयो गताद्यर्थे' इति समासः, टच्, अव्ययात्परत्वादह्नादेशः । परेति पूर्वपदस्याऽदन्तत्वाभावान्न णत्वमिति भावः । **न सङ्ख्यादेः** । **अह्नादेश इति** । 'अह्नोऽह्नः' इत्यतस्तदनुवृत्तेरिति भावः । ननु सङ्ख्यादिभिन्नस्य तत्पुरुषस्य समाहारेऽभावादेव सिद्धे सङ्ख्यादेरिति व्यर्थमित्यत आह—**स्पष्टार्थमिति** । **द्व्यह इति** । समाहारे द्विगुः । टच्, 'रात्राह्ने'ति पुंस्त्वम् । सङ्ख्यादित्वात्प्राप्तस्याऽह्नादेशस्य निषेधः । **त्र्यह इति** । त्रयाणामह्नां समाहार इति विग्रहः । समासादि द्व्यहवत् । **उत्तमैकाभ्यां च** । ननु उत्तमशब्दात्परस्याऽहन्शब्दस्याऽह्नादेशाऽप्रसक्तेरुत्तमग्रहणं व्यर्थमित्यत आह—**उत्तमशब्द इति** । उत्तमशब्दोऽन्त्ये वर्तते । यथा द्वादशाहे 'उदयनीयातिरात्र उत्तममहः' इति । अन्त्यमिति गम्यते । 'अहःसर्वैकदेशसङ्ख्यातपुण्या'दित्युपात्तेषु अन्त्यः पुण्यशब्दो विवक्षित इत्यर्थः । तर्हि 'पुण्यैकाभ्या'मित्येव कुतो न सूत्रितमित्याशङ्क्य स्वतन्त्रेच्छत्वान्महर्षेरित्याह—**पुण्यैकाभ्यामित्येवेति** । **पुण्याहमिति** । पुण्यमहरिति विग्रहे विशेषणसमासः, टच्, टिलोपः । 'पुण्यसुदिनाभ्यां चे'ति नपुंसकत्वम् । **एकाह इति** । एकमहरिति विग्रहे 'पूर्वकालैके'ति समासः । टच्, टिलोपः । **उपान्त्यस्यापीति** । 'लक्षणये'ति शेषः । पुण्येत्यनुक्त्वा उत्तमग्रहणमेव लक्षणाबीजम् । उत्तमे च एकं चेति द्वन्द्वः, सौत्रं द्विवचनमिति भावः । **सङ्ख्याताह इति** । सङ्ख्यातमहरिति विग्रहे विशेषणसमासः, टच्, टिलोपः । 'रात्राह्नाहा' इति पुंस्त्वम् । उपान्त्यसङ्ख्यातशब्दपूर्वकत्वान्नाऽह्नादेशः ।

शे.] शिष्टप्रयोगतः' । इत्युक्तेरह्नाहान्ता इत्यनेन प्राप्तस्य पुंस्त्वस्य 'तद्धितार्थे द्विगु'रिति परोपगत्वेन परत्वाद्बाध इति वाच्यम् । कोशस्य लोकव्याकरणसिद्धलिङ्गानुवादकत्वात् व्याकरणैकवाक्यतया तद्धितार्थे द्विगुरित्यत्र रात्राह्नाहान्तातिरिक्तस्यैव ग्रहणात् । अन्यथा 'प्राप्तापन्ने'त्यनेनापि परत्वाद्बाधे 'प्राह्णः' [परागतमह्नः पराह्णः] इत्याद्यसिद्ध्यापत्तेरिति दिक् । **क्षुभ्नादिषु च** । तत्पुरुषातिरिक्तोऽहन्शब्दान्तः समासः सर्वोऽपि क्षुभ्नाद्यन्तर्गण एवेति युवादिषु पाठ इति भाष्येणाऽविरोधस्तद्ध्वनयन्नाह-**अदन्तानुकरणेति** । तत्पक्षे षष्ठ्याः स्थाने व्यत्ययेन प्रथमा । **स्पष्टार्थमिति** । समाहारेऽन्यस्य वृत्त्यभावात् । **पुण्याहमिति** । 'पुण्यसुदिनाभ्या'मिति क्लीबत्वम् ।

अश्वोरसम्। मुख्योऽश्व इत्यर्थः। **अनोश्माऽयःसरसां जातिसंज्ञयोः** ।५।४।९४। टच्स्याज्जातौ संज्ञायां च। उपानसम्। अमृताश्मः। कालायसम्। मण्डूकसरसमिति जातिः। महानसम्। पिण्डाश्मः। लोहितायसम्। जलसरसमिति संज्ञा। **ग्रामकौटाभ्यां च तक्ष्णः** ।५।४।९५। ग्रामस्य तक्षा ग्रामतक्षः। साधारण इत्यर्थः। कुट्यां भवः कौटः। स्वतन्त्रः। स चासौ तक्षा च–कौटतक्षः। **अतेः शुनः** ।५।४।९६। अतिश्वो वराहः। अतिश्वी सेवा। **उपमानादप्राणिषु** ।५।४।९७। अप्राणिविषयकोपमानवाचिनः शुनष्टच्स्यात्। आकर्षःश्वेव आकर्षश्वः। अप्राणिषु किम्?। वानरःश्वेव वानरश्वा। **उत्तरमृगपूर्वाच्च सक्थ्नः** ।५।४।९८। चादुपमानात्। उत्तरसक्थम्। मृगसक्थम्। पूर्वसक्थम्। फलकमिव सक्थि-फलकसक्थम्। **नावो द्विगोः** ।५।४।९९। नौशब्दान्ताद्द्विगोष्टच्स्यान्न तु तद्धितलुकि। द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः। 'द्विगोर्लुगनपत्ये' इत्यत्र 'अची'त्यस्यापकर्षणाद्धलादेर्न लुक्। पञ्चनावप्रियः। द्विनावम्। त्रिनावम्। अतद्धितलुकीति किम्?। पञ्चभिर्नौभिः क्रीतः पञ्चनौः। अर्द्धाच्च

---

त.] माशयः। **अग्राख्यायाम्** । पञ्चम्यर्थे सप्तमी। अग्रं प्रधानम्। अग्रवाची य उरःशब्दस्तदन्तात्तत्पुरुषाट्टच्स्यात्। अग्राख्यायां किम्?। देवदत्तस्योरो देवदत्तोरः। **ग्रामकौटाभ्यां** । 'जातिसंज्ञयोः' इति नानुवर्तते। ग्रामेति किम्?। राज्ञस्तक्षा राजतक्षा। **अतिश्व इति** । श्वानमतिक्रान्तो जवेनेत्यर्थः। **अतिश्वीति** । नीचेत्यर्थः। **आकर्षःश्वेवेति** । 'उपमितं व्याघ्रादी'ति समासः। आकृष्यतेऽनेन खलादिगतं धान्यमित्याकर्षः काष्ठविशेषः। उपमानात्किम्?। निष्क्रान्तः शुनो निःश्वा। **फलकसक्थमिति** । अतएव ज्ञापकादसामान्यवचनेनाप्युपमानस्य समास इति माधवः। **द्विनावरूप्य इति** । 'हेतुमनुष्येभ्यः–' इति रूप्यः। **पञ्चनौरिति** । आर्हीयष्ठक्। 'अध्यर्धपूर्वे'ति लुक्।

---

बा.] **अग्राख्याया** । शेषपूरणेन सूत्रं व्याचष्टे—**टच् स्यादिति** । पञ्चम्यर्थे सप्तमी। अग्रं प्रधानं, तद्वाची य उरश्शब्दस्तदन्तात्तत्पुरुषाट्टच्स्यादित्यर्थः। 'अग्र्याख्याया'मिति पाठान्तरम्। अग्रे भवमग्र्यं। मुख्यमिति यावत्। **अश्वानामुर इवेति** । उरो यथा प्रधानं तथेत्यर्थः। उरश्शब्दस्य मुख्ये वृत्तौ लक्षणाबीजमिदम्। **अश्वोरसमिति** । उरश्शब्देन मुख्यवाचिना षष्ठीसमासः। टच्। 'परल्लिङ्गम्' इति नपुंसकत्वम्। अग्राख्यायामिति किं?। देवदत्तस्योरः देवदत्तोरः। **अनोऽश्मायस्** । **उपानसमिति** । उपगतमन इति प्रादिसमासः। **अमृताश्म इति** । अमृतोऽश्मेति विग्रहः। टचि टिलोपः। **कालायसमिति** । कालम् अय इति विग्रहः। टच्। 'परवल्लिङ्ग'मिति नपुंसकत्वम्। **मण्डूकसरसमिति** । षष्ठीसमासः। टच्। जातिविशेषा एते। महानसं, पिण्डाश्मः, लोहितायसं, जलसरसमिति संज्ञाविशेषाः। **ग्रामकौटाभ्यां च** । **आभ्यां टजिति** । ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्तात्तत्पुरुषाट्टच्स्यादित्यर्थः। **ग्रामतक्ष इति** । टचि टिलोपः। **साधारण इति** । ग्रामे यावन्तो जनाः सन्ति तावतां विधेय इत्यर्थः। **कुट्यां भव इति** । कुटीमेकां क्रयादिना सम्पाद्य तत्र यो वसति, न तु परकीयभूमिप्रदेशे स कौट इत्यर्थः। फलितमाह–**स्वतन्त्र इति** । **कौटतक्ष इति** । टचि, टिलोपः। **अतेश्शुनः** । अतीत्यव्ययात्परो यः श्वन्शब्दस्तदन्तात्तत्पुरुषाट्टजित्यर्थः। **अतिश्व इति** । श्वानमतिक्रान्त इति विग्रहः। अत्यादय इति समासः। टचि, टिलोपः। श्वापेक्षयाधिकवेगवान्वराह इत्यर्थः। **अतिश्वी सेवेति** । श्वानमतिक्रान्तेत्यर्थः। श्वापेक्षया नीचा सेवेति यावत्। टच्। टिलोपः। टित्वान्ङीप्, यस्येति चेत्यकारलोपः। **उपमानादप्राणिषु** । **आकर्षःश्वेवेति** । आकृष्यते कुसूलादिगतधान्यमनेनेत्याकर्षः—पञ्चाङ्गुलो दारुविशेषः। 'उपमितं व्याघ्रादिभिः' इति समासः। टच्। टिलोपः, आकर्षश्व इति रूपम्। उपमानात्किम्?। शुनो निष्क्रान्तो निःश्वा। **उत्तरमृग** । 'उत्तर' 'मृग' 'पूर्व' एभ्य, उपमानाच्च परो यः सक्थिशब्दस्तदन्तात्तत्पुरुषाट्टच्स्यादित्यर्थः। **उत्तरसक्थमिति** । उत्तरं सक्थीति विग्रहः। पूर्वं सक्थीति विग्रहे 'पूर्वकालैके'ति समासः। **फलकसक्थमिति** । फलकमिव सक्थीति विग्रहे मयूरव्यंसकादित्वात्समासः। सर्वत्र टच्, टिलोपः। **नावो द्विगोः** । **न तु तद्धितलुकीति** । 'गोरतद्धितलुकी'त्यतो मण्डूकप्लुत्या तदनुवृत्तेरिति भावः। **द्विनावरूप्य इति** । तद्धितार्थे समासः, टच्, आवादेशः। 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः'। तस्य 'द्विगोर्लुगनपत्ये' इति लुकमाशङ्क्याह—**द्विगोर्लुगनपत्ये इत्यत्रेति** । **अपकर्षणादिति** । 'गोत्रेऽलुगची'त्युत्तरसूत्रादित्यर्थः। **पञ्चनावप्रिय इति** । पञ्च नावः प्रिया यस्येति विग्रहे उत्तरपदे द्विगुः, टच्, आवादेशः। **द्विनावमिति** । द्वयोर्नावोः समाहार इति विग्रहे द्विगुः। टच्। आवादेशः। 'स

---

शे.] अग्र्याख्या। अग्रे भवोऽग्र्यो मुख्यः। अग्र्येत्यादि किम्?। देवदत्तस्योरो देवदत्तोरः। उपानसमिति। प्रादिसमासः। अतिश्व इति। ततोऽधिकवेगवानित्यर्थः। सेवेति। नीचेत्यर्थः। आकर्षश्व इति। पञ्चाङ्गुलो धान्यादिकर्षकः काष्ठविशेष आकर्षः। उपमानात्किम्?। शुनो निष्क्रान्तो निःश्वा। फलकसक्थमिति। मयूरव्यंसकादित्वात्समासः। नावो। मण्डूक-

।५।४।१००। अर्द्धान्नावष्टच्स्यात् । नावोऽर्द्धम्—अर्द्धनावम् । क्लीवत्वं लोकात् । **खार्याः प्राचाम्** ।५।४।१०१। द्विगोरर्धाच्च खार्याष्टज्वा स्यात् । द्विखारम् । द्विखारि । अर्द्धखारम् । अर्धखारी । **द्वित्रिभ्यामञ्जलेः** ।५।४।१०२। [ आभ्यामञ्जलेः ] टज्वा स्याद्विगौ । द्व्यञ्जलम् । द्व्यञ्जलि । अतद्धितलुकीत्येव । द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः । **ब्रह्मणो जानपदाख्यायाम्** ।५।४।१०४। ब्रह्मान्तात्तत्पुरुषाट्टच्स्यात्समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । **कुमहद्भ्यामन्यतरस्याम्** ।५।४।१०५। आभ्यां ब्रह्मणो वा टच्स्यात्तत्पुरुषे । कुत्सितो ब्रह्मा कुब्रह्मः । कुब्रह्मा । **आन्महतः समानाधिकरणजातीययोः** ।६।३।४६। महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाब्रह्मः । महाब्रह्मा ।

---

त.] **खार्याः । द्विगोरिति** । खारीशब्दान्ताद्विगोरित्यर्थः । **अर्द्धखारीति** । 'परवल्लिङ्ग'मिति स्त्रीत्वम् । **अर्द्धखारमिति** । अर्द्धनावमिव क्लीवत्वं लोकात् । **टज्वा स्याद्विगाविति** । द्विगाविति किम् ? । द्वयोरञ्जलिः—द्व्यञ्जलिः । **द्व्यञ्जलमिति** । समाहारे द्विगुः । **अतद्धितलुकीत्येवेति** । एतच्च पूर्वसूत्रेऽपि बोध्यम् । **अञ्जलिभ्यां क्रीत इति** । नात्राऽञ्जलिः पाणिद्वयं, तस्य मूल्यत्वाऽसंभवात्, किन्तु अञ्जलिपरिमितो व्रीह्यादिर्विवक्षितः । ततश्च परिमाणत्वाद्व्यञ्जलिरित्यत्र ठञ् । तस्य तु 'अध्यर्धपूर्वे'ति लुक् । **ब्रह्मणो** । जनपदे भवो जानपदः । 'द्व्येकयो'रितिवद्भावप्रधानो निर्देशस्तस्याख्यायां, प्रत्यासत्त्या समासेनेत्येतल्लभ्यते । तदाह—**समासेन जानपदत्वमिति** । कस्येत्याकाङ्क्षायां संनिधानाद्ब्रह्मण इति लभ्यते । **सुराष्ट्रब्रह्म इति** । 'सप्तमी'ति योगविभागात्समासः । जानपदेति किम् ? । देवब्रह्मा नारदः । **कुब्रह्म इति** । ब्राह्मणपर्यायो ब्रह्मन्शब्दः । **आन्महतः** । तकार उच्चारणार्थो, न तु सवर्णग्रहणार्थ इत्याह—**आकारोऽन्तादेशः स्यादिति** । इहोत्तरपदाऽधिकारे पूर्वपदमाक्षिप्यते ।

---

बा.] नपुंसकम्' इति नपुंसकत्वम् । **त्रिनावमिति** । तिसृणां नावां समाहार इति विग्रहः । द्विनाववत् । **पञ्चनौरिति** । तद्धितार्थे समासः । आर्हीयष्ठक्, 'अध्यर्धे'ति लुक् । **अर्द्धाच्च** । अर्द्धशब्दात्परो यो नौशब्दस्तदन्तात्तत्पुरुषाट्टजित्यर्थः । **अर्धनावमिति** । 'अर्धं नपुंसक'मिति समासः, टच्, आवादेशः । अत्र 'परवल्लिङ्ग'मिति स्त्रीत्वमाशङ्क्याह—**क्लीबत्वं लोकादिति । खार्याः प्राचाम्** । खारीशब्दान्ताद्विगोरर्धपूर्वकात्खारीशब्दान्तात्तत्पुरुषाच्चेत्यर्थः । **द्विखारमिति** । द्वयोः खार्योः समाहार इति विग्रहे द्विगुः । टच् । 'यस्येति च' । 'स नपुंसक'मिति नपुंसकत्वम् । टजभावपक्षे 'स नपुंसक'मिति नपुंसकत्वान्नपुंसकह्रस्वः । **अर्धखारमिति** । खार्या अर्धमिति विग्रहः । 'अर्धं नपुंसक'मिति समासः, टच्, यस्येति च । क्लीवत्वं लोकात् । **अर्धखारीति** । पूर्ववत्समासः । टजभावपक्षे 'परवल्लिङ्ग'मिति स्त्रीत्वम् । एकविभक्तावषष्ठ्यन्तवचनादुपसर्जनत्वाऽभावान्न ह्रस्वः । 'अर्धखारि' इति क्वचिद्ध्रस्वान्तपाठः । तदा क्लीवत्वं लोकात्, ततो नपुंसकह्रस्वः । **द्वित्रिभ्यामञ्जलेः** । शेषपूरणेन सूत्रं व्याचष्टे—**टज्वा स्यादिति । द्विगाविति । द्व्यञ्जलमिति** । द्वयोरञ्जल्योः समाहार इति विग्रहे द्विगुः, टच्, 'यस्येति च', 'स नपुंसकम्' । **द्व्यञ्जलीति** । समाहारे द्विगुः । टजभावे सति नपुंसकह्रस्वत्वम् । **अतद्धितलुकीत्येवेति** । अनुवर्तत एवेत्यर्थः । **अञ्जलिभ्यां क्रीत इति** । अञ्जलिशब्दोऽञ्जलिपरिमितधान्यादौ वर्तते, केवलस्याऽञ्जलेर्मूल्यत्वाऽसम्भवात् । परिमाणत्वाट्ठञ् । 'अध्यर्धे'ति तस्य लुक् । **ब्रह्मणो जानपदाख्यायां** । जनपदे भवो जानपदः । भावप्रधानो निर्देशः । तस्य केनाख्येत्याकाङ्क्षायां प्रकृतत्वात्समासेनेति लभ्यते । तदाह—**समासेनेत्यादि । जानपदत्वमित्यनन्तरं** 'ब्रह्मण' इति शेषः । **सुराष्ट्रे ब्रह्मेति** । ब्रह्मशब्दोऽत्र पुंलिङ्गः । ब्रह्मा—विप्रः । 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः' इत्यमरः । सप्तमीति योगविभागात्समासः । टच्, टिलोपः, 'परवल्लिङ्ग'मिति पुंस्त्वम् । जानपदेति किं ? । देवब्रह्मा नारदः । **कुमहद्भ्याम् । कुब्रह्मेति** । टजभावे रूपम् । 'कुगतिप्रादयः' इति समासः । **कुब्रह्म इति** । टचि रूपं, टिलोपः । अथ महत्पूर्वस्य टज्विकल्पमुदाहरिष्यन्विशेष-

---

शे.] पुंस्त्वाऽद्धितलुकीत्यनुवर्तते । परवल्लिङ्गतया स्त्रीत्वं प्राप्नोतीत्यत आह—**क्लीबत्वमिति । द्विगोरिति** । खारीशब्दान्ताद्विगोरित्यर्थः । अत्राऽप्यतद्धितलुकीत्येव । तेन द्वाभ्यां खारीभ्यां क्रीतो द्विखारिरित्येव । उदाहरणेऽर्धखारमित्यादौ क्लीवत्वं प्राग्वत् । **अर्द्धखारीति** । 'एकविभक्तावषष्ठ्यन्ते'ति वचनादुपसर्जनत्वाऽभावेन न ह्रस्वः । ह्रस्वपाठे तु लोकतो नपुंसकत्वे नपुंसकह्रस्वत्वम् । **अञ्जलिभ्यामिति** । तत्परिमितधान्यादिनेत्यर्थः । अस्य परिमाणत्वाट्ठञः 'अध्यर्धे'ति लुक् । जनपदे भवो जानपदः । भावप्रधाननिर्देशस्तदाह—**समासेति** । प्रत्यासत्तिलभ्यमेतत् । 'कस्ये'त्याकाङ्क्षायां सन्निधानाद्ब्रह्मण इति लभ्यते । **सुराष्ट्रे इति** । अधिकरणस्य शेषत्वविवक्षया षष्ठीसमासोऽत्र बोद्धव्यः । सप्तमीति योगविभागस्तु न भाष्यारूढः । जानपदेति किम् ? । देवब्रह्मा नारदः । **कुब्रह्म इति** । ब्राह्मणपर्यायो ब्रह्मन्शब्दः । [illegible] वाऽर्थः । तत्रापि मूर्तित्रय-

महादेवः । महाजातीयः । समानाधिकरणे किम् ? । महतः सेवा महत्सेवा । लाक्षणिकं विहाय प्रतिपदोक्तः 'सन्महद्'दिति समासो ग्रहीष्यते चेद्, महाबाहुर्न स्यात् । तस्मात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येति परिभाषा नेह प्रवर्तते, समानाधिकरणग्रहणसामर्थ्यात् । आदिति योगविभागादात्वम् । 'प्रागेकादशभ्य' इति निर्देशाद्वा । एकादश । महतीशब्दस्य 'पुंवत्कर्मधारये'ति पुंवद्भावे कृते आत्वम् । महाजातीया ॥ **महदात्वे घासकरविशिष्टेषूपसङ्ख्यानं पुंवद्भावश्च** । असामानाधिकरण्यार्थमिदम् ।

त.] तच्च महता विशेषितमिति तदन्तविधिर्लभ्यते । 'ग्रहणवता' इति निषेधस्तु प्रत्ययविधिविषय इत्युक्तत्वात् । तेन महाबाहुवदतिमहाबाहुरिति प्रयोगो भवति । 'परममहत्परिमाण'मित्यत्र तु परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुषोऽभ्युपगम्यत इति न तत्राऽऽत्वप्रसक्तिरिति वृद्धाः । यत्तु वर्द्धमानेनोक्तम्—'इष्टकेषीकामालानामित्यत्र तदन्तविध्युपसङ्ख्यानसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्ति, तेन परममहत आत्वं ने'ति, तद्भाष्यकैयटविरुद्धम् । तथाहि—'येन विधि'रिति सूत्रे पदाधिकारे प्रयोजनमिष्टकचितं पक्वेष्टकचितमिति भाष्ये उदाहृतं, कैयटेन च पदशब्देन उत्तरपदं गृह्यत इति व्याख्यातम् । एतदेवाऽर्थतः काशिकायामुपनिबद्धं न तु 'इष्टकेषीके'त्यत्र कात्यायनोक्तमुपसङ्ख्यानमस्ति । ननु प्रतिपदोक्तसमासे यदुत्तरपदं तस्मिन्नेव परे आत्वं स्यान्नान्यत्रेति किमनेन समानाधिकरणग्रहणेनेत्यत

बा.] आह—आन्महतः । 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारस्थमिदं सूत्रम् । 'उत्तरपदे' इत्यनुवृत्तं समानाधिकरणपदेऽन्वेति, न तु जातीये इति, तस्य प्रत्ययत्वात् । तदाह—**महत आत्वमित्यादिना** । **महाब्रह्म इति** । महांश्चासौ ब्रह्मा चेति विग्रहः । 'सन्महद्'दित्यादिना समासः । आत्वम् । सवर्णदीर्घः । 'कुमहद्भ्या'मिति टच् । टिलोपः, 'परवल्लिङ्ग'मिति पुंस्त्वम् । **महाब्रह्मेति** । टजभावे आत्वे रूपम् । अथ प्रसङ्गादुक्तमात्वविधिं प्रपञ्चयिष्यन्समानाधिकरणे पुनरुदाहरति—**महादेव इति** । जातीये उदाहरति—**महाजातीय इति** । महत्सदृश इत्यर्थः । 'प्रकारवचने जातीयर्' । आत्वं, सवर्णदीर्घः । **समानाधिकरणे किमिति** । 'आन्महतो जातीये चे'त्येवास्तु, चकारादुत्तरपदसमुच्चये सति महत आत्वं स्यादुत्तरपदे जातीये च परत इत्यर्थलाभादेव महादेव इत्यादिसिद्धेः किं समानाधिकरणेनेति प्रश्नः । **महत्सेवेति** । अत्र षष्ठीसमासे आत्वनिवृत्त्यर्थं समानाधिकरणग्रहणमिति भावः । ननु षष्ठीसमासो लाक्षणिकः, समस्यमानपदं विशिष्यानुच्चार्य सामान्यशास्त्रत एव निर्वर्तितत्वात् । 'सन्महद्'दित्ययं समासस्तु सन्महदादिशब्दं समस्यमानं विशिष्योच्चार्य विहितत्वात्प्रतिपदोक्तः । ततश्च लक्षणप्रतिपदोक्तपरिभाषया 'आन्महतो जातीये चे'त्यत्र 'सन्महद्'दिति प्रतिपदोक्तसमासोत्तरपदग्रहणे सति तत एव षष्ठीसमासोत्तरपदनिराससंभवाद्व्यर्थमेव समानाधिकरणग्रहणमिति शङ्कते—**लाक्षणिकमित्यादिना** । परिहरति—**महाबाहुर्न स्यादिति** । महान्तौ बाहू यस्येति विग्रहः । अस्य समासस्य 'अनेकमन्यपदार्थे' इति सामान्यविहितत्वात्प्रतिपदोक्तत्वाऽभावात्तदुत्तरपदे परे आत्वं न स्यादतः समानाधिकरणग्रहणमित्यर्थः । ननु कृतेऽपि समानाधिकरणग्रहणे लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तेर्दुर्वारत्वान्महाबाहुरित्यत्रात्त्वं न स्यादेवेत्यत आह—**तस्मादिति** । तच्छब्दार्थमाह—**समानाधिकरणग्रहणसामर्थ्यादिति** । एवं च लक्षणप्रतिपदोक्तपरिभाषां बाधित्वा लाक्षणिकस्यापि ग्रहणार्थं समानाधिकरणग्रहणमिति भावः । नच सुमहान्तौ बाहू यस्य स सुमहाबाहुरित्यत्र कथमात्त्वम् ? । आत्त्वविधेः पदाङ्गाधिकारस्थत्वाऽभावेन तदन्तविध्यभावादिति वाच्यम्, उत्तरपदाक्षिप्तपूर्वपदस्य महता विशेषणे सति तदन्तविधिलाभात् । 'परममहत्परिमाणवा'नित्यत्र तु महतः परिमाणं महत्परिमाणं, परमं महत्परिमाणमिति षष्ठीसमासगर्भः कर्मधारय इति दिक् । ननु 'आन्महतः' इत्यत्र महत एव ग्रहणात् 'द्व्यष्टनः' इत्युत्तरसूत्रे द्व्यष्टनोरेव ग्रहणादेकादशेत्यत्र कथमात्त्वमित्यत आह—**योगविभागादात्त्वमिति** । योगविभागस्य भाष्याऽदृष्टत्वादाह—**निर्देशाद्वेति** । **एकादशेति** । एकश्च दश चेति द्वन्द्वः । एकाधिका दशेति वा । 'आन्महत' इत्यत्र लिङ्गविशिष्टपरिभाषया महतीशब्दस्यापि जातीयर्प्रत्यये परे महाजातीयेति स्यादित्यत आह—**महतीशब्दस्येति** । नच परत्वात्पुंवत्त्वं बाधित्वा आत्वं स्यादिति वाच्यम्, 'आन्महतः' इत्यत्र लिङ्गविशिष्टपरिभाषा न प्रवर्तत इति ङ्याप्सूत्रे भाष्ये उक्तत्वादिति भावः । **महदात्वे इति** । 'घास' 'कर' 'विशिष्ट'-एषु परतो महत आत्वं पुंवत्त्वं च वक्तव्यमित्यर्थः । ननु 'आन्महतः' इत्यात्वे 'पुंवत्कर्मधारये'ति पुंवत्त्वे च सिद्धे किमर्थमिदमित्यत आह—**असामानाधिकरण्यार्थमिति** । महा-

शे.] सत्तायास्तन्त्रेषु प्रसिद्धत्वात् । आन्महतः । ग्रहीष्यत इति । एवञ्च समानाधिकरणग्रहणं व्यर्थमिति भावः । **महाबाहुरिति** । बहुव्रीहिः । ननूत्तरसूत्रे द्व्यष्टनोरेव ग्रहणादेकादशेत्यत्राऽऽत्वं न स्यादत आह—**आदितीति** । योगविभागस्य भाष्यानारूढत्वादाह—**निर्देशाद्वेति** । 'अन्येषामपि दृश्यते' इति दीर्घत्वमिति परे । **कृते आत्वमिति** । 'आन्महत' इत्यत्र लिङ्गविशिष्टपरिभाषाऽभावस्य ङ्याप्सूत्रे भाष्ये च कथया सत्वात्पुंवत्त्वं बाधित्वाऽऽत्वं स्यादिति न शङ्क्यमिति भावः । 'महद्भूतश्चन्द्रमा'

महतो महत्या वा घासो महाघासः । महाकरः । महाविशिष्टः ॥ * अष्टनः कपाले हविषि । अष्टाकपालः ॥ * गवि च युक्ते । गोशब्दे परे युक्त इत्यर्थे गम्येऽष्टन आत्वं वक्तव्यमित्यर्थः । अष्टागवं शकटम् । 'अच्प्रत्यन्ववे'त्यत्राऽजिति योगविभागाद्बहुव्रीहावप्यच् । अष्टानां गवां समाहारः–अष्टागवम् । तद्युक्तत्वाच्छकटमष्टागवमिति वा ॥ द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ।६।३।४७। आत्स्यात् । द्वौ च दश च द्वादश । अधिका दशेति वा । द्वाविंशतिः । अष्टादश । अष्टाविंशतिः । अबहुव्रीह्यशीत्योः किम् ? । द्वित्राः । द्व्यशीतिः ॥ * प्राक् शतादिति वक्तव्यम् । नेह । द्विशतम् । द्विसहस्रम् । त्रेस्त्रयः ।६।३।४८।

त.] आह—महाबाहुरिति । बहुव्रीहिरयम्, स च सामान्यशास्त्रनिर्वृत्तत्वाल्लाक्षणिक इति भावः । अष्टनः कपाल इति । कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः । अष्टाकपाल इति । 'संस्कृतं भक्षाः' इत्यणः 'द्विगोर्लुगनपत्ये' इति लुक् । 'अध्यर्धपूर्वे'त्यणो लुगिति केषांचिद्व्याख्यानं तु प्रामादिकं,'संस्कृत'मित्यणोऽनार्हीयत्वात् । त्रेस्त्रयः । सन्धिवेलादिषु त्रयोदशीति पाठात्सान्तोऽयमादेश इति ध्वनयन्नाह—त्रयस्स्यादिति ।

बा.] कर इति । महतो महत्या वा कर इत्यर्थः । महाविशिष्टइति । महतो महत्या वा विशिष्टः । अधिक इत्यर्थः । अष्टन इति । कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थः । अष्टाकपाल इति । अष्टसु कपालेषु संस्कृतः पुरोडाश इत्यर्थे तद्धितार्थे द्विगुः । 'संस्कृतं भक्षाः' इत्यण् । 'द्विगोर्लुगनपत्ये' इति लुक् । आत्वं । सवर्णदीर्घः । गवि च युक्ते । वार्तिकमिदम् । तत्सूचयितुमाह–वक्तव्यमित्यर्थ इति । अष्टागवं शकटमिति । अष्टौ गावो यस्येति बहुव्रीहिः । आत्वं, सवर्णदीर्घः । अष्टभिर्गोभिर्युक्तमित्यर्थः । ननु 'गोरतद्धितलुकी'ति टज्विधेस्तत्पुरुषमात्रविषयत्वादष्टागवमिति कथमित्यत आह–अच्प्रत्यन्ववेत्यत्रेति । तत्पुरुषत्वेऽष्टगवशब्दष्टजन्त एवेत्याह–अष्टानामिति । तथा च समाहारद्विगोस्तत्पुरुषत्वात् 'गोरतद्धितलुकी'ति टच्सुलभ इत्यर्थः । नन्वष्टानां गवां समाहार इत्यर्थे शकटे कथमन्वयः, युक्तार्थवृत्तित्वाऽभावात्, कथं वा आत्वमित्य आह–तद्युक्तत्वादिति । समाहारद्विगुरूपतत्पुरुषाट्टचि व्युत्पन्नस्य अष्टगवशब्दस्य लक्षणया अष्टभिर्गोभिर्युक्ते वर्तमानस्य आत्वमित्यर्थः । द्व्यष्टनः । शेषपूरणेन सूत्रं व्याचष्टे–आत्स्यादिति । द्विशब्दस्य अष्टन्शब्दस्य च सङ्ख्यावाचके उत्तरपदे परे आत्स्यान्न तु बहुव्रीह्यशीत्योरित्यर्थः । द्विशब्दस्योदाहरति–द्वादशेति । द्वौ च एकश्च द्व्येकाः, द्व्यधिक एकः द्व्येक इत्यादौ तु नास्ति, 'एकादिनवान्तानां परस्परं द्वन्द्वतत्पुरुषौ न स्तः' इति 'चार्थे' इति सूत्रे भाष्ये ध्वनितत्वादिति शब्देन्दुशेखरे स्थितम् । द्वाविंशतिरिति । द्वौ च विंशतिश्चेति समाहारद्वन्द्वः । 'स नपुंसक'मिति क्लीबत्वं तु न, किंतु लोकात् स्त्रीत्वम् । इतरेतरयोगस्तु न, अनभिधानात् । द्व्यधिका विंशतिरिति तत्पुरुषो वा । अथाऽष्टन्शब्दस्योदाहरति–अष्टादशेति । अष्टौ च दश चेति द्वन्द्वः । अष्टाधिका दशेति वा । अष्टाविंशतिरिति । अष्टौ च विंशतिश्चेति समाहारद्वन्द्वः । स्त्रीत्वं लोकात् । अष्टाधिका विंशतिरिति वा । द्वित्रा इति । द्वौ वा त्रयो वेति विग्रहः । 'सङ्ख्ययाव्यये'ति बहुव्रीहिः । 'बहुव्रीहौ संख्येये ड'जिति डच् । बहुव्रीहित्वादत्र द्विशब्दस्य आत्वं न । द्व्यशीतिरिति । द्वौ चाशीतिश्चेति समाहारद्वन्द्वः । स्त्रीत्वं लोकात् । द्व्यधिका अशीतिरिति वा । अत्राशीति-

शे.] इत्यादौ च्व्यन्ते गौणत्वान्नात्वमिति भाष्ये स्पष्टम् । महतो महत्या वेति । 'पुंवद्भावश्चे'ति चोऽन्वाचये इति भावः । 'समुच्चये चशब्दः, पुंस्त्वसंनियोगेनैव चाऽऽत्वम् । अत एव भाष्ये स्त्रियामेवोदाहृत'मिति मतान्तरं कैयटे स्पष्टम् । अष्टनः क । हविषि किम् ? । अष्टानां कपालानि—अष्टकपालानि । बहुव्रीहावपीत्ति । तत्पुरुषे एव समासान्तः सुलभ इति न, यतो बहुव्रीहावप्यच्समासान्तः सुलभ इत्यर्थः । एतेनास्य साधारणत्वाद्बहुव्रीहावपीति चिन्त्यमित्यपास्तम् । योगविभागस्य भाष्येऽदर्शनादाह–समाहार इति । एवञ्च 'गोरतद्धिते'ति टजिति भावः । एकादिनवान्तानां द्वन्द्वतत्पुरुषयोः 'चार्थे द्वन्द्वः' इति सूत्रस्थभाष्ये ध्वनिताऽनभिधानादाह—द्वादशेति । द्वाविंशतिरिति । समाहारद्वन्द्वे स्त्रीत्वं लोकात् । इतरेतरयोगस्तु न, तत्सूत्रभाष्ये एव ध्वनितानभिधानात्, द्व्यधिका विंशतिरिति तत्पुरुषो वा । द्व्यधिकेत्यत्र सङ्ख्या, सङ्ख्येयं वाऽन्यपदार्थः । एकादीनां वृत्तिविषये, विंशत्यादीनां च सर्वत्र सङ्ख्यापरत्वस्यापि सत्त्वात् । तेन 'द्वाविंशतिर्गवाम्' 'द्वाविंशतिर्गावः' इत्युभयं सिद्धम् । तत्र द्वन्द्वे सङ्ख्येत्यनेन पूर्वपदप्रकृतिस्वरत्वं, तत्पुरुषे समासान्तोदात्तत्वमिति बोद्धव्यम् । भाष्ये द्व्यधिका विंशतिर्द्वाविंशतिरिति समानाधिकरणसमासे स्वरो न सिद्ध्यति । सङ्ख्येत्यस्य द्वन्द्वविषयत्वात् । 'अस्तु तर्हि द्वन्द्वः' इत्यस्य द्वन्द्वोऽपीत्यर्थः । 'स्वरो न सिद्ध्यति' इत्यस्य सोऽपीष्टः स्वरो न सिद्ध्यतीत्यर्थं इति केचित् । परे तु भाष्ये समानाधिकरणसमासोक्तिरेकदेशिनः । सा च स्वराऽसिद्ध्या दूषिता । ततोऽ'स्तु तर्हि द्वन्द्व' इति सिद्धान्त्युक्तिः । तस्मादितरेतरयोगद्वन्द्ववत्समानाधिकरणतत्पुरुषस्याप्यनभिधाने एव भाष्यस्वरसः । इदमप्यन्नाख्यानोपायमात्रम् । वस्तुतः सङ्ख्यान्तराणि निरस्तावयवान्येवैकविंशत्यादीनि । अत एव तेभ्यः संख्याकार्यकत्वसुजादिसिद्धिः, अन्यथा स्वाङ्गसमुदाये स्वाङ्गकार्याभाववदिहापि सङ्ख्याकार्यं न स्यादित्याहुः । त्रयसिति

त्रिशब्दस्य त्रयस् [ आदेशः ] स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः । बहुव्रीहौ तु-त्रिदश । त्रिदशाः । सुजर्थे बहुव्रीहिः । अशीतौ तु-त्र्यशीतिः । प्राक् शतादित्येव । त्रिशतम् । त्रिसहस्रम् । **विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्** ६।३।४९। द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु । **एकादिश्चैकस्य चाऽदुक्** ।६।३।७६। एकादिर्नञ् प्रकृत्या स्यादेकस्य चाऽदुगागमश्च । नञो विंशत्या सह समासे कृते एकशब्देन सह तृतीयेति योगविभागात्समासः । अनुनासिकविकल्पः । एकेन न विंशतिः । एकान्नविंशतिः । एकाद्नविंशतिः । एकोनविंशतिरित्यर्थः । * षष उत्वं दतृदशधासूत्तरपदादे[ः] ष्टुत्वं च, धासु वेति वाच्यम् । षोडन् । षोडश । षोढा । षड्धा । परवल्लिङ्गं द्वन्द्व-

त.] सुजर्थे बहुव्रीहिरिति । 'सङ्ख्ययाव्यये'त्यादिने'ति शेषः । एकादिरिति । 'अदु'गिति च्छेदः । पररूपं तूच्चारणसामर्थ्यान्न भवति । धासु वेति । 'सङ्ख्यायां विधार्थे' इत्यादिना विहितस्य धाप्रत्ययस्यैवेह ग्रहणम्, 'प्रत्ययाऽप्रत्यययो'रिति परिभाषया । तेनेह न—षड् दधातीति षड्धा । 'आतोऽनुपसर्गे कः' टाप् । षोडन्निति । षड् दन्ता

बा.] परत्वाद्द्विशब्दस्याऽऽत्वं न । प्राक्शतादिति । 'द्व्यष्टनः सङ्ख्याया'मित्येतच्छतप्रभृतिसङ्ख्याशब्दे परे न भवतीति वक्तव्यमित्यर्थः । द्विशतमिति । द्वौ च शतं चेति समाहारद्वन्द्वः । द्व्यधिकं शतमिति वा । एवं द्विसहस्रमित्यत्रापि । त्रेस्त्रयः । सन्धिवेलादिषु त्रयोदशीति पाठात्सकारान्तोऽयमादेश इत्याह-त्रयस्स्यादिति । पूर्वविषये इति । प्राक्शतात्सङ्ख्याशब्दे उत्तरपदे परतो, न तु बहुव्रीह्यशीत्योरित्यर्थः । त्रयोदशेति । त्रयश्च दश चेति, त्र्यधिका दशेति वा विग्रहः । सुब्लुकि त्रिशब्दस्य त्रयस्, रुत्वम्, उत्वम्, आद्गुणः । एवं त्रयोविंशतिरित्यपि । त्रिदशा इति । त्रिरावृत्ता दशेत्यर्थः । 'बहुव्रीहौ सङ्ख्येये डच्' इति डच् । नन्वत्र त्रिरित्यस्य 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' इति सुजन्तत्वात्समासेऽपि सुचः श्रवणापत्तिरित्यत आह-सुजर्थे बहुव्रीहिरिति । सुजर्थे क्रियाभ्यावृत्तौ लक्षणया विद्यमानस्य त्रिशब्दस्यैवात्र 'सङ्ख्ययाव्यये'ति बहुव्रीहिर्न तु सुजन्तस्येत्यर्थः । त्र्यशीतिरिति । त्रयश्चाऽशीतिश्चेति समाहारद्वन्द्वः । स्त्रीत्वं लोकात् । त्र्यधिकाऽशीतिरिति वा । त्रिशतमिति । त्रयश्च शतं चेति समाहारद्वन्द्वः, त्र्यधिकं शतमिति वा । एवं त्रिसहस्रमित्यपि । विभाषा चत्वारिंशत् । व्यवहितस्यापि 'द्व्यष्टनो'रित्यस्य सम्बन्धाय-सर्वेषामिति । द्व्यष्टनोस्त्रेश्चेत्यर्थः । तदाह-द्व्यष्टनोस्त्रेश्चेति ।

एकादिश्च । 'न लोपो नञः' इत्यतो 'नञ' इति षष्ठ्यन्तमनुवर्तते । तच्च प्रथमया विपरिणम्यते । 'नभ्राण्नपात्' इत्यतः प्रकृत्येत्यनुवर्तते । तदाह-एकादिर्नञ्प्रकृत्येति । एक आदिर्यस्येति विग्रहः । एकस्य चादुगागमश्चेति । आदु'गिति 'अदु'गिति वा च्छेदः । नञो विंशत्येति । न विंशतिरिति विग्रहे नञ्समासे सति 'नविंशति' शब्दस्यैकशब्देन तृतीयान्तेन सह एकेन नविंशतिरिति विग्रहे समास इत्यन्वयः । ननु तत्कृतत्वाद्यभावात्कथमिह तृतीयासमास इत्यत आह-योगविभागादिति । अनुनासिकविकल्प इति । तृतीयासमासे कृते सुब्लुकि एकनविंशतिरिति स्थिते 'न लोपो नञः' इति प्राप्तस्य नकारलोपस्य प्रकृतिभावान्निवृत्तौ एकशब्दस्याऽऽदुगागमः, तत्र ककार इत्, उकार उच्चारणार्थः । कित्त्वादन्तावयवः, सवर्णदीर्घः, एकाद्-नविंशतिरिति स्थिते 'यरोऽनुनासिके' इति दकारस्य पक्षेऽनुनासिकनकार इत्यर्थः । अदुगागमपक्षेऽपि पररूपं तु अकारोच्चारणसामर्थ्यान्न भवति । एकेन न विंशतिरिति । विग्रहवाक्यम् । एकेन हेतुना विंशतिर्न भवतीत्यर्थः । एकान्नविंशतिः, एकाद्नविंशतिरिति । अनुनासिकत्वे तदभावे च रूपम् । एकोनविंशतिरित्यर्थ इति । 'पर्यवस्यती'ति शेषः । एकेन ऊनेति विग्रहः । 'पूर्वसदृशे'ति समासः । सा चासौ विंशतिश्च । षष उत्वमिति । दतृशब्दे दशन्शब्दे च उत्तरपदे परे धाप्रत्यये च परे षष्शब्दस्य उत्वम्, उत्तरखण्डस्य दतृशब्दस्य दशन्शब्दस्य धाप्रत्ययस्य च आदेर्दकारस्य धकारस्य च ढुत्वं च वक्तव्यमित्यर्थः । 'ढुत्व'मित्येव छेदः, न तु ष्टुत्वमिति, प्रयोजनाऽभावात् । 'धासु वा' इति बहुवचनाद्विधार्थधाप्रत्ययस्यैव ग्रहणमिति भाष्यम् । धाप्रत्यये परे षष उत्वं वा स्यात् । ढुत्वं तूत्वपक्षे तदभावपक्षे च पूर्ववाक्यान्नित्यमेवेति कैयटः । उत्वपक्ष एव नित्यं ढुत्वमिति हरदत्तः । षोडन्निति । षड् दन्ता यस्येति बहुव्रीहौ 'वयसि दन्तस्य

शे.] सान्त आदेशो, व्याख्यानादित्याह-त्रयस्स्यादिति । सुजर्थे इति । 'सङ्ख्ययाऽव्यये'ति समासः । सुजर्थेनेतिपाठे तदर्थेन त्रिशब्देनेत्यर्थः । व्यवहितद्व्यष्टन्सम्बन्धाय-सर्वेषामिति । एकादिश्च । अत्रैकशब्दः सङ्ख्यावाच्येव, प्रसिद्धत्वात् । तृतीयेतीति । सहेति योगविभागात्, मयूरव्यंसकादित्वाद्वेति तु न्याय्यम् । धास्विति । धा प्रत्यय एव, व्याख्यानात् । तेन षड् दधातीति षड्धेत्यत्र न । 'आतोऽनुपसर्गे' इति कः । स्त्रियां टाप् । धासु वेत्यनेनोत्वस्यैव विकल्पः । तेन ढुत्वं नित्यमेव । तेनोत्वाऽभावेऽपि षड्ढेत्येति कैयटः । उत्वपक्षे नित्यं ढुत्वमिति हरदत्तः, तदनुसारेणाह—षड्धेति । अत्र कैयटोक्तं युक्तम् ।

तत्पुरुषयोः ।२।४।२६। एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धपिप्पली । * द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः । पञ्चसु कपालेषु संस्कृतः—पञ्चकपालः पुरोडाशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै अलङ्कुमारिः । अतएव ज्ञापकात्समासः । निष्कौशाम्बिः । **पूर्ववदश्ववडवौ** ।२।४।२७। द्विवचनमतन्त्रम् । अश्ववडवौ ।

---

त.] अस्य षोडन् । 'वयसि दन्तस्ये'ति दत्रादेशः । **परवल्लिङ्गम्** । इतरेतरयोगे द्वन्द्वोऽत्र गृह्यते न समाहारे द्वन्द्वः, 'स नपुंसक'मित्यपवादस्य वक्ष्यमाणत्वात् । सूत्रे 'द्वन्द्वतत्पुरुषयो'रिति न सप्तमीद्विवचनम् , तथात्वे द्वन्द्वे तत्पुरुषे च यत्परपदं तद्वल्लिङ्गं पूर्वपदस्यातिदिश्येत,परपदस्य संबन्धिशब्दत्वेन पूर्वपदाक्षेपकत्वात् , ततश्च मयूरीकुक्कुटावित्यत्र पूर्वपदे ईकारनिवृत्तिप्रसङ्गः । कुक्कुटमयूर्यौ, अर्द्धपिप्पलीत्यादौ तु पूर्वपदे स्त्रीप्रत्यय उत्पद्येत । किं तु षष्ठीद्विवचनमित्याशयेनाह—**एतयोरिति** । द्वन्द्वतत्पुरुषार्थयोरित्यर्थः । एवं चानुप्रयोगेऽपि तदेव लिङ्गं सिद्धम् । उपमेये षष्ठ्यभ्युपगमाद्वतिरपि षष्ठ्यन्तादेवेत्याशयेनाह—**परपदस्येवेति** । भाष्ये तु 'लिङ्गमशिष्यं, लोकाश्रयत्वाल्लिङ्गस्ये'ति प्रत्याख्यातमिदं सूत्रम् । अस्मिंश्च प्रत्याख्याने तुल्यन्यायत्वाल्लिङ्गानुशासनं सर्वमेव प्रत्याख्यातं, तथापि तत्प्रौढिवादमात्रम् । अन्यथा व्याकरणस्यैव वैयर्थ्यप्रसङ्गात् । **गतिसमासेष्विति** । गतिग्रहणं प्रादीनामुपलक्षणं, मुख्यस्य गतेरसंभवादित्याशयेनोदाहरति—**निष्कौशाम्बिरिति** । **अतन्त्रमिति** । अत्र च लिङ्गं 'पूर्वव'द्ग्रहणम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः । इह समासार्थस्य वा पूर्ववल्लिङ्गातिदेशः, उत्तरपदार्थस्य वा, उभयथाप्यश्ववडवौ

---

बा.] दतृ' इति दत्रादेशः,ऋकारस्य इत्त्वम् । अन्त्यषकारस्य उत्त्वम् ।आद्गुणः। दकारस्य ष्टुत्वेन डकारः । सुप्रत्यये उगित्त्वान्नुम् । सुलोपः । संयोगान्तलोपः । तस्याऽसिद्धत्वान्न दीर्घः । षोडन्निति रूपम् । **षोडशेति** । षट् च दश चेति, षडधिका दशेति वा विग्रहः । अन्त्यस्य षकारस्य उत्त्वम् , आद्गुणः, दकारस्य ष्टुत्वेन डकारः । हरदत्तमतमनुसृत्य उत्त्वाऽभावपक्षे 'धासु वे'त्यस्योदाहरति—**षड्धेति** । 'सङ्ख्याया विधार्थे धा' । अन्त्यस्य षकारस्य उत्त्वाभावपक्षे तु ष्टुत्वमपि न भवति । 'झलां जशोऽन्ते' इति जश्त्वेन षकारस्य ड इति भावः । उत्त्वपक्षे उदाहरति—**षोढेति** । धाप्रत्ययः, अन्त्यस्य षकारस्य उत्त्वम् , आद्गुणः, ष्टुत्वेन धस्य ढ इति भावः । कैयटमते तूत्वाऽभावपक्षेऽपि ष्टुत्वं नित्यमेव । षड्ढा । कैयटमतमेव युक्तम् ,षोढा-षड्ढा इत्येव भाष्ये उदाहृतत्वादिति शब्देन्दुशेखरे स्थितम् ।

**परवल्लिङ्गं** । 'परव'दिति षष्ठ्यन्ताद्वतिः । तदाह-**एतयोः परपदस्येवेति** । द्वन्द्वपदमत्र इतरेतरयोगद्वन्द्वपरं, समाहाद्वन्द्वे 'स नपुंसक'मित्यस्य तदपवादत्वात् । **कुक्कुटमयूर्याविमे इति** । अत्र द्वन्द्वे अवयवलिङ्गेनाऽनियमे प्राप्ते नियमार्थमिदम् । **अर्धपिप्पलीति** । 'अर्धं नपुंसकम्' इति तत्पुरुषः । अस्यैकदेशिसमासस्य पूर्वपदार्थप्रधानतया पूर्वपदलिङ्गे प्राप्ते उत्तरपदलिङ्गार्थं विधिः । अत्र 'द्वन्द्वतत्पुरुषयोः' इति षष्ठ्यन्तमर्थपरम् । द्वन्द्वतत्पुरुषार्थयोरित्यर्थः । एवंच 'कुक्कुटमयूर्याविमे' इत्यनुप्रयोगेऽपि तदेव लिङ्गम् । **द्विगुप्राप्तेति** । 'द्विगु' 'प्राप्त' 'आपन्न' 'अलंपूर्व' 'गतिसमास'-एतेषु परवल्लिङ्गस्य प्रतिषेधो वक्तव्य इत्यर्थः । **पञ्चस्विति** । उत्तरपदस्य नपुंसकत्वात्समासस्य नपुंसकत्वं प्राप्तं, न भवति, किन्तु विशेष्यलिङ्गमेव । **प्राप्तजीविक इति** । अत्रोत्तरपदस्य जीविकाशब्दस्य यल्लिङ्गं तत्समासस्य न भवति । अलंपूर्वस्योदाहरति—**अलंकुमारिरिति** । अत्र उत्तरपदकुमारीलिङ्गं समासस्य न भवति । नन्वत्र तदर्थादियोगाऽभावान्न चतुर्थीसमासः । 'पर्यादयो ग्लानाद्यर्थे' इत्यपि न भवति, तस्य समासस्य नित्यत्वेन 'अलं कुमार्यै' इति भाष्ये विग्रहप्रदर्शनानुपपत्तेरित्यत आह—**अत एवेति** । 'एकविभक्ति चे'ति कुमारीशब्दस्योपसर्जनत्वाद्ध्रस्वः । गतिसमासमुदाहरति—**निष्कौशाम्बिरिति** । अत्र कौशाम्बीशब्दलिङ्गं समासस्य

---

शे.] भाष्येऽपि षड्ढेत्येव पाठस्य प्रायेणोपलम्भात् । **षोडन्निति**। बहुव्रीहौ 'वयसि दन्तस्य' इति दत्रादेशः । **परवल्लिङ्गं**। समाहारे 'स नपुंसकम्' इत्यस्य बाधकत्वाद्द्वन्द्वपदमितरेतरयोगविषयम् । तत्रोद्भूतावयवभेदस्य समुदायस्य तद्द्वन्द्वार्थतयाऽवयवलिङ्गेनाऽनियमे प्राप्ते नियमार्थमिदम् । तत्पुरुषे त्वेकदेशिसमासे पूर्वपदार्थप्रधाने परलिङ्गाऽप्राप्त्या विध्यर्थम् । 'द्वन्द्वतत्पुरुषयो'रिति षष्ठ्यन्तमर्थपरम् । तेनानुप्रयोगेऽपि तल्लिङ्गम् । शब्दार्थयोरभेदाच्च सूत्रे तथा निर्देशस्तदाह-**परपदस्येवेति** । परपदार्थस्येव समासार्थस्य लिङ्गमित्यर्थः । **द्विगुप्राप्तेति** । द्विगुग्रहणम् 'एकविभक्ती'तिसूत्रस्थकैयटानुरोधेन । वस्तुतस्तद्व्यर्थम् । 'परवल्लिङ्ग'मित्यस्य परपदाक्षिप्तोपस्थितपूर्वपदप्रयुक्तलिङ्गमात्रबाधकत्वेन तद्धितार्थद्विगावेतदप्राप्तेः । समाहारद्विगौ नपुंसकत्वमेव प्रायेणेष्यते । अत एव भाष्ये निषेधवार्तिके द्विगुग्रहणं नोक्तम् । यत्तु अलंशब्देन 'पर्यादयो ग्लानाद्यर्थे' इति समास इति, तन्न । तस्य नित्यसमासत्वेनालं कुमार्यै इति भाष्योक्तविग्रहानुपपत्तेरत आह—**अत एव ज्ञापकादिति** । अत एवालंशब्दयोगे चतुर्थीविधानं सार्थकम् । गतिसमासपदं गतेः समासो येनेति बहुव्रीहिणा 'कुगती' इति सूत्रपरम् । तच्चान्यत्र फलाऽभावात्प्रादिपरमेवेत्याह—**निष्कौशाम्बिरिति** । 'द्वन्द्वैकदेशिनी'रिति न्यासेनाऽयं प्रतिषेधो भाष्ये प्रत्याख्यातः । **अतन्त्रमिति** । अत एव 'पूर्वव'दिति चरितार्थम् ।

अश्ववडवान् । अश्ववडवैः । **रात्राह्नाहाः पुंसि** ।२।४।२९। एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अनन्तरत्वात्परवल्लिङ्गतापवादोऽप्ययं परत्वात्समाहारनपुंसकतां बाधते । अहोरात्रः । रात्रेः पूर्वभागः पूर्वरात्रः । पूर्वाह्णः । द्व्यहः । **सङ्ख्यापूर्वं रात्रं क्लीबम्** । द्विरात्रम् । द्विरात्रम् । गणरात्रम् । **अपथं नपुंसकम्** । ।२।४।३०। तत्पुरुष इत्येव । अन्यत्र तु—अपथो देशः । कृतसमासान्तनिर्देशान्नेह—अपन्थाः । **अर्द्धर्चाः पुंसि च**

त.] शोभनावित्यनुप्रयोगेऽपि पुंस्त्वं सिध्यति । ननु समासार्थस्य पुंस्त्वेऽपि स्वाश्रयस्त्रीत्वस्याऽनिवर्तनाट्टापः श्रवणप्रसङ्गः । न चातिदेशवैयर्थ्यं, शसि नत्वप्रवृत्त्या, अनुप्रयोगे पुंलिङ्गत्वलाभेन च तत्सार्थक्यादिति चेदत्राहुः—इहैव निपातनात्, 'अश्ववडवपूर्वापराधरोत्तराणा'मित्यत्र निपातनाद्वा टापो निवृत्तिरिति । **अहोरात्र इति** । प्राचा तु अहोरात्रमित्युदाहृतं, तच्चेति प्रागेवोक्तम् । अत्र वदन्ति—'रात्राह्नाहाः' इत्यनेन रात्रादीनामेव पुंस्त्वं विधीयते । तदन्तस्य तु 'परवल्लिङ्ग'मित्येव सिध्यति । अतएव भिन्नविषयत्वात् 'विप्रतिषेधे परं कार्य'मिति न प्रवर्तते । एवं च 'रात्राह्नाहाः' इति पुंस्त्वाऽप्रवृत्त्या समाहारे 'स नपुंसक'मित्येव भवति, परवल्लिङ्गापवादत्वादिति । तन्न । उक्तरीत्या द्व्यहत्र्यहादावपि नपुंसकत्वप्रसङ्गात् । न चेष्टापत्तिः । द्व्यहत्र्यह इति प्राचाप्युदाहृतत्वेन स्वमूलग्रन्थेन सह विरोधापत्तेः । 'ते तु त्रिंशदहोरात्रः' इत्यादिकोशविरोधाच्च । तस्माद्रात्र्याद्यन्तस्यैवायं पुंस्त्वविधिः 'द्वन्द्वतत्पुरुषयो'रिति प्रक्रमणात्, तथा च भिन्नविषयत्वाऽभावात् 'रात्राह्नाहाः' इति पुंस्त्वं समाहारनपुंसकतां परत्वेन बाधत एव । **सङ्ख्यापूर्वमिति** । अत्र च 'अपथपुण्याहे नपुंसके' 'सङ्ख्यापूर्वा रात्रिः' इति लिङ्गानुशासनसूत्रं मूलम् । सङ्ख्याग्रहणेषु कृत्रिमाऽकृत्रिमन्यायो न प्रवर्तते 'व्यष्टनः सङ्ख्याया'मिति सूत्रेऽशीतिपर्युदासादित्याशयेनोदाहरति—**द्विरात्रम् गणरात्रमिति** । गणानां बहूनां रात्रीणां समाहार इति विग्रहः । **अपथं नपुंसकम्** । **तत्पुरुष इत्येवेति** ।

बा.] न भवति । यद्यपि निरादिसमास एवायं, न तु गतिसमासः, प्रादिग्रहणमगत्यर्थमित्युक्तेः, तथापि गतिसमासग्रहणं प्रादिसमासोपलक्षणमित्याशयः । **पूर्ववदश्ववडवौ** । 'अश्वश्च वडवा चे'ति द्वन्द्वे परवल्लिङ्गं बाधित्वा पूर्ववल्लिङ्गार्थमिदम् । 'अश्ववडवाविति द्वन्द्वः पूर्वपदस्य लिङ्गं लभते' इत्यर्थे बहुवचने विभक्त्यन्तरे च न स्यादित्यत आह-**द्विवचनमतन्त्रमिति** । उपलक्षणमिदम् । द्विवचनं विभक्तिश्चेति द्वयमपि अविवक्षितमित्यर्थः । 'पूर्वव'द्ग्रहणमत्र लिङ्गम् । अन्यथा निपातनादेव सिद्धे किं तेनेति भावः । **रात्राह्नाहाः** । 'द्वन्द्वतत्पुरुषयो'रित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणतं रात्रादिभिर्विशेष्यते, तदन्तविधिः । रात्राह्नाहान्तद्वन्द्वतत्पुरुषाः पुंसीत्यर्थः । फलितमाह-**एतदन्ताविति** । परवल्लिङ्गतापवादः । नन्वहोरात्र इति समाहारद्वन्द्वे 'स नपुंसक'मिति नपुंसकत्वप्रसङ्गः । नच नपुंसकत्वस्याप्ययं पुंस्त्वविधिरपवाद इति वाच्यं, 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा'निति न्यायेनाऽस्य पुंस्त्वविधेः परवल्लिङ्गतामात्रापवादत्वात् । तस्मादहोरात्राविति इतरेतरद्वन्द्व एवेहोदाहर्तुमुचित इत्यत आह-**अनन्तरत्वादिति** । **अयमिति** । 'पुंस्त्वविधि'रिति शेषः । **अहोरात्र इति** । अहश्च रात्रिश्च तयोः समाहार इति द्वन्द्वे परत्वान्नपुंसकत्वम् । अपवादत्वात्परवल्लिङ्गमपि बाधित्वाऽनेन पुंस्त्वम् । 'अहःसर्वैकदेशे'त्यच् । **पूर्वाह्ण इति** । अह्नः पूर्वमित्येकदेशिसमासः । 'राजाहःसखिभ्यः' इति टच् । 'अह्नोऽह्नः' इत्यह्नादेशः । परवल्लिङ्गं नपुंसकं च बाधित्वा पुंस्त्वम् । **द्व्यह इति** । द्वयोरह्नोः समाहार इति विग्रहे द्विगुः, टच्, 'न सङ्ख्यादेः समाहारे' इत्यह्नादेशनिषेधः । परवल्लिङ्गं बाधित्वा पुंस्त्वम् । उत्तरपदस्याऽहन्शब्दस्याऽकारान्तत्वाऽभावान्न स्त्रीत्वं, समासान्तस्य समासभक्तत्वात् । **सङ्ख्यापूर्वं** । लिङ्गानुशासनसूत्रमिदम् । न त्वष्टाध्यायीस्थं सूत्रं, नापि वार्तिकम्, भाष्ये अदर्शनात् । 'रात्राह्नाहाः पुंसी'त्यस्यायमपवादः । **द्विरात्रमिति** । समाहारद्विगुः । 'अहःसर्वैकदेशे'त्यच् । **गणरात्रमिति** । गणशब्दो बहुपर्यायः, 'बहुगणवतु' इति सङ्ख्यात्वम् । गणानां रात्रीणां समाहार इति द्विगुः । अच् । **अपथं नपुंसकं** । न-पन्था इति विग्रहे नञ्समासे नञो नस्य लोपे 'ऋक्पूः' इत्यप्रत्यये टिलोपे अपथशब्दः, स नपुंकमित्यर्थः । परवल्लिङ्गतापवादः । **तत्पुरुष इत्येवेति** । 'परवल्लिङ्ग'मित्यतस्तदनुवृत्तेरिति भावः । द्वन्द्वग्रहणं तु नानुवर्तते, अयोग्यत्वात् । **अन्यत्र**

शे.] अन्यथा निपातनादेव सिद्धे किं तेन । समुदायस्य पूर्ववल्लिङ्गत्वेऽपि उत्तरपदेऽश्ववडवपूर्वापराधरोत्तराणामिति निर्देशाट्टापो निवृत्तिः । अश्ववडवाविति तु समुदायस्यावन्तत्वाऽभावाच्छीभावाऽप्राप्त्या वृद्ध्या सिद्धम् । अतिदेशस्त्वनुप्रयोगे चरितार्थः स्यात् । अश्ववडवशब्दार्थः पूर्ववल्लिङ्गं लभते इत्यर्थात् । **रात्राह्ना** । द्वन्द्वतत्पुरुषपदमनुवर्त्तते । इदं प्राप्तापन्नालंप्रादिसमासेष्वपि । अत एव परवदिति सूत्रे एकदेशिग्रहणं कृत्वा प्राप्तेत्यादि भाष्ये प्रत्याख्यातम् । 'अत्रैवं तत्पुरुषग्रहणं कार्यमिति तद्भावः । अत एव प्राह्णः सर्वाह्ण इत्यादिसिद्धिः, पुण्यसुदिनाभ्यामिति च चरितार्थम् । अस्यैकदेशिसमासविषयत्वे तु तद्वैयर्थ्यं स्पष्टमेव । **द्व्यह इति** । अकारान्तोत्तरपदत्वाऽभावान्न स्त्रीत्वम् । **गणरात्रमिति** । समाहारे द्विगुः । इदं तत्पुरुषाधिकारे लिङ्गानुशासने पाठात्, प्रतिप्रसवविधिलाघवानुरोधाच्च समाहारद्विगावेव प्रवर्त्तते इति भावः । **तत्पुरुषइत्येवेति** । तादृशद्वन्द्वाऽसंभवादिति भावः । **अपन्था**

।२।४।३१। अर्द्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्द्धर्चः । अर्द्धर्चम् । ध्वजः । ध्वजम् । एवं तीर्थ, शरीर, मण्डप, यूप, [यूष] देह, अङ्कुश, कलश-इत्यादि । **जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्** ।१।२।५८।एकोऽप्यर्थो वा बहुवद्भवति । ब्राह्मणाः पूज्याः । ब्राह्मणः पूज्यः । **अस्मदो द्वयोश्च** ।१।२।५९।एकत्वे द्वित्वे च विवक्षितेऽस्मदो बहुवचनं वा स्यात् । वयं ब्रूमः । पक्षे-अहं ब्रवीमि । आवां ब्रूव इति वा । ॐ **सविशेषणस्य प्रतिषेधः** । पटुरहं ब्रवीमि । **फल्गुनीप्रोष्ठपदानां च नक्षत्रे** ।१।२।६०। द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात् । पूर्वे फल्गुन्यौ । पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे । पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् ?। फल्गुन्यौ माणविके । **तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्** ।१।२।६३।

---

**त.]** द्वन्द्वग्रहणं तु नानुवर्तते, अयोग्यत्वादिति भावः । **अपन्था इति**। 'पथो विभाषा' इति समासान्तविकल्पः । इदं सूत्रं शक्यमकर्तुम् । 'पथः सङ्ख्याव्ययादेः' इति वक्ष्यमाणवार्तिकेन गतार्थत्वात् । प्रसङ्गादाह—**अर्द्धर्चा इति** । इह केषांचिदर्थभेदेन व्यवस्थेष्यते । सा च व्यवस्था,-मद्यमकरन्दमाक्षिकाणां वाची मधुशब्दो द्विलिङ्गः, चैत्रादि-वाची तु पुंलिङ्गः, भूतः पिशाचे द्विलिङ्गः, क्रियावचनस्तु विशेष्यलिङ्ग इत्येवं यथायथं ज्ञेया । 'अर्द्धर्चाः पुंसि च' 'स नपुंसक'मित्यनयोर्मध्ये 'जात्याख्याया'मिति चतुःसूत्र्याः सङ्गतिरिह चिन्त्या । बहूनां वचनं प्रतिपादनमिति व्याख्या-नात्फलितोऽन्नातिदेश इत्याशयेनाह—**एकोऽप्यर्थो वा बहुवदिति** । एवंच विशेषणादपि सिद्धमिति ध्वनयन्नु-दाहरति—**ब्राह्मणाः पूज्या इति** । जात्याख्यायां किम् ? । देवदत्तो यज्ञदत्तः । एकस्मिन्किम् ? । व्रीहियवौ ।

**अस्मदो द्वयोश्च** । चात् 'एकस्मिन् बहुवचनमन्यतरस्या'मिति च वर्तते । तदेतदाह—**एकत्वे द्वित्वे च विवक्षित इत्यादि** । **फल्गुनीप्रोष्ठपदानां च** । चकारेण द्वयोरनुकर्षणादाह—**द्वित्व इति** । **फल्गुन्यौ माणविके इति** । फल्गुनीशब्दात् 'नक्षत्रेण युक्तः कालः' इत्यण् । तस्य 'लुबविशेषे' इति लुप् । ततो जातार्थे 'फल्गुन्यषाढाभ्यां टाऽनौ' इति टः । टित्त्वान्ङीप् । न चायं गौणः, यौगिकत्वात् । तथा च गौणमुख्यन्यायाऽप्रवृत्त्या

---

**वा.]** **त्विति** । बहुव्रीहावित्यर्थः । **अपन्था इति** । 'पथो विभाषा' इति समासान्तविकल्पः । 'पथः संख्याव्ययादेः' इति वक्ष्यमाणवार्तिकेन गतार्थमेवेदं सूत्रम् । **अर्धर्चाः** । बहुवचनात्तदादीनां ग्रहणमित्याह-**अर्धर्चादय इति** । **अर्धर्चमिति** । ऋचोऽर्धमिति विग्रहे 'अर्द्धं नपुंसक'मिति समासः । 'ऋक्पूः' इति अच् । परवल्लिङ्गं स्त्रीत्वं बाधित्वा पुंनपुंसकत्वविकल्पः । **जात्याख्यायाम्** । आकृत्यधिकरणन्यायेन घटादिशब्दानां जातिवाचकत्वाज्जातेश्चैक-त्वादेकवचनमेव स्यादित्यारम्भः । जातिशब्दे एकत्वे बहुवचनं वा स्यादित्यक्षरार्थः । तथा सति 'ब्राह्मणा भोज्या' इत्यादौ विशेषणान्न स्यादित्याशङ्क्य एकस्मिन्नर्थे विद्यमानः शब्दो बहूनर्थान् वक्ति, एकार्थो बहुवद्भवतीति लभ्यते इत्यभिप्रेत्याह-**एकोऽप्यर्थ इति** । बहुत्वप्रयुक्तं कार्यं लभत इत्यर्थः । **अस्मदो द्वयोश्च** । **सविशेषणस्येति** । 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः' इत्यत्र तु अवयवगतबहुत्वाभिप्रायं बहुवचनम् । **फल्गुनी** । 'नक्षत्रे' इति प्रथमाद्विवचनम् । नक्षत्रे यद्यभिधीयते इत्यर्थः । चेन द्वयोरित्यनुकर्षः । तदाह-**द्वित्वे इति** । **पूर्वे प्रोष्ठपदे इति** । स्त्रीत्वादौङः शीभावः । 'प्रोष्ठपदा भाद्रपदा स्त्रिया'मित्यमरः । **फल्गुन्यौ माणविके इति** ।

---

**शे.]** **इति** । 'पथो विभाषा' इति समासान्तनिषेधः । 'भविष्यति मर्यादा' इति सूत्रस्थस्त्रिशद्रात्रः पञ्चदशरात्र इति भाष्यप्रयोगो लोका-श्रयत्वाल्लिङ्गस्य सिद्धः । **अर्द्धर्चाः** । बहुवचनादाद्यर्थावगतिः । ननु लिङ्गप्रकरणं व्यर्थम्, अर्द्धनावमित्याद्यर्थं लोकाश्रयत्वाल्लिङ्ग-स्येत्यस्यावश्यकत्वादिति चेत्सत्यम् । 'जात्याख्याया'मित्यादिसूत्रसमूहवदिष्टापत्तेः । तद्ध्वनयन्प्रकृतानुपयुक्तान्यपि तानि व्या-चष्टे—**जात्याख्यायामित्यादि** । जातेः प्राधान्येनाऽऽख्यायामित्यर्थः । भावप्रत्ययं विना प्राधान्येन जातिबोधे यवादिशब्दानां साधुत्वे इदमेव सूत्रं मानम् । तस्या विशेष्यत्वे च वाह्याद्यन्वयो व्यक्तिघटितपरम्परया बोद्धव्यः । तत्र जातेरेकत्वेनैकवचनमेव प्राप्नोतीत्ययमारम्भः । एकत्वचात्र बहुवचनार्थः । एकस्मिन्नर्थे वर्तमानः शब्दो बहूनामर्थानां वचनं=बोधको भवतीत्यर्थादर्थाति-देशोऽयमित्याह—**एकोऽप्यर्थं इत्यादि** । तदुक्तं भाष्ये–'यावद्ब्रूयादेकोऽर्थो बहुवद्भवतीति, तावदेकस्मिन्बहुवचनमिति' इति । एकत्वेऽर्थे बहुत्वप्रयुक्तं कार्यमतिदिश्यते इत्ययमपि कार्यातिदेश एवेत्यन्यत्र विस्तरः । एतच्च भाष्ये प्रत्याख्यातम् । जातौ सङ्ख्यान्वये एकवचनस्य, व्यक्तौ सङ्ख्यान्वये बहुवचनस्य सिद्धत्वात् । एवञ्च यथोत्तरं मुनीनां प्रामाण्यात्सूत्रोक्तार्थे प्रयोगाणाम-साधुत्वमेव । एतेन यत्र वने एक एवाऽऽम्रवृक्षस्तत्र जातिपरत्वे 'आम्राः सन्ती'ति प्रयोगसाधुत्वार्थमिदमित्यपास्तम् । **सविशेष-णस्येति** । इदं मुख्यार्थे बहुवचननिषेधाय । यदा त्वस्मच्छब्दस्य स्वघटिते उद्भूतावयवभेदे समुदाये लक्षणा तदा बहुवचनं भव-त्येव । तेन 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता' इत्यादि सिद्धम् । 'गार्ग्योऽहं ब्रवीमी'त्यादावप्ययं निषेधः । उत्तम-पुरुषानुरोधेनात्राऽहमित्यस्यैव विशेष्यत्वात् । **फल्गुनी** । 'नक्षत्रे' इति प्रथमाद्विवचनम् । नक्षत्रे यद्यभिधीयेते इत्यर्थः । चेन द्वयोरित्यनुकर्षः । **फल्गुन्यौ माणविके इति** । फल्गुनीषु जातो इत्यर्थे 'फल्गुन्याषाढाभ्यां टाऽनौ' इति टः । टित्त्वान्ङीप् । एकस्यां

बहुत्वं द्वित्ववन्नवत्ति । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । तिष्येति किम् ? । विशाखानुराधाः । नक्षत्रेति किम् ? । तिष्यपुनर्वसवो माणवकाः । **स नपुंसकम्** ।२।४।१७। समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् । *** अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः** । पञ्चमूली । [पञ्चपूली] । ***आबन्तो वा** । पञ्चखट्वी । पञ्चखट्वम् । ***अनो नलोपश्च वा द्विगुः स्त्रियाम्** । पञ्चतक्षी ।

---

त.] नक्षत्रग्रहणमावश्यकमिति भावः । **तिष्यपुनर्वस्वोः** । **विशाखानुराधा इति** । विशाखे चानुराधाश्चेति विग्रहः । **तिष्यपुनर्वसव इति** । तिष्यपुनर्वसुशब्दाभ्यां पूर्ववत् 'नक्षत्रेण युक्तः कालः' इत्यण्, 'लुबविशेषे' इति च लुप् । ततो जातार्थे सन्धिवेलादिसूत्रेण अण्, तस्य तु 'श्रविष्ठाफल्गुन्यनुराधे'त्यादिना लुक् । नक्षत्र इत्यनुवर्तमाने पुनर्नक्षत्रग्रहणं पर्यायाणामपि यथा स्यादित्येतदर्थमित्याकरः । एवं च 'सिध्यपुनर्वसू' इत्यपि सिध्यतीति दिक् । बहुवचनस्य किम् ?, इदं तिष्यपुनर्वसु । 'चार्थे द्वन्द्व' इति समाहारद्वन्द्वोऽयम् । **स नपुंसकम्** । 'अनन्तरस्ये'ति न्यायोऽत्र नाश्रीयते, तथात्वे द्विगुसङ्ग्रहो न स्यादित्याशयेनाह—**द्विगुर्द्वन्द्वश्चेति** । अत्र व्याचक्षते—प्रकरणादेवानुवायलाभे 'स'ग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य सङ्ग्रहार्थम्, तेन 'सञ्ज्ञापरिभाष'मित्यादि सिद्धमिति । **पञ्चगवमिति** । 'तद्धितार्थ'इत्यादिना समाहारे द्विगुः । **दन्तोष्ठमिति** । 'द्वन्द्वश्च प्राणी'त्यादिना समाहारे द्वन्द्वः । **पञ्चखट्वमिति** । नपुंसकह्रस्वः । **पञ्चखट्वीति** । उपसर्जनह्रस्वत्वे सत्यदन्तत्वात् 'द्विगो'रिति स्त्रीत्वपक्षे ङीप् । **अनो नलोपश्चेति** । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधादप्राप्तो नलोप इति भावः । इह वाशब्दः

---

बा.] फल्गुनीनक्षत्रयुक्तकाले जाते इत्यर्थः । 'नक्षत्रेण युक्तः' इत्यण् । 'लुबविशेषे' इति लुप् । ततो जातार्थे 'फल्गुन्यषाढाभ्यां टाऽनौ' इति टः । टिड्ढाण्ङीप् । **तिष्यपुनर्वस्वोः** । **विशाखानुराधा इति** । विशाखे च अनुराधाश्चेति विग्रहः । **तिष्यपुनर्वसव इति** । तिष्यश्च पुनर्वसू चेति विग्रहः । तिष्यशब्दात्पुनर्वसुशब्दाच्च 'नक्षत्रेण युक्तः' इत्यण् । 'लुबविशेषे' इति लुप् । ततो जातार्थे सन्धिवेलाद्यण् । 'श्रविष्ठाफल्गुनी'त्यादिना लुक् । 'जात्याख्याया'मित्यादिचतुःसूत्र्या अत्र सङ्गतिश्चिन्त्या । **स नपुंसकं** । 'द्विगुरेकवचन'मिति द्विगुः, 'द्वन्द्वश्च प्राणी'ति द्वन्द्वश्च तच्छब्देन परामृश्येते । तौ च समाहारार्थावेव विवक्षितौ, व्याख्यानात् । तदाह—**समाहारे इति** । **पञ्चगवमिति** । पञ्चानां गवां समाहार इति द्विगुः । **दन्तोष्ठमिति** । दन्ताश्च ओष्ठौ चेति विग्रहः । 'द्वन्द्वश्च प्राणी'ति समाहारद्वन्द्वः । **अकारान्तेति** । अकारान्तमुत्तरपदं यस्येति विग्रहः । 'स नपुंसक'मित्यस्यापवादः । **पञ्चमूलीति** । समाहारद्विगुः, स्त्रीत्वं, 'द्विगोः' इति ङीप् । **आबन्तो वेति** । 'स्त्रियां वे'ति वक्तव्यमित्यर्थः । **पञ्चखट्वमिति** । समाहारद्विगुः । नपुंसकत्वे ह्रस्वः । **पञ्चखट्वीति** । उपसर्जनह्रस्वत्वे अदन्तत्वात्, 'द्विगोः' इति ङीप् ।

**अनो नलोपश्चेति** । 'अन' इत्यावर्तते । एकं प्रथमया विपरिणतं द्विगुरित्यत्रान्वेति । तदन्तविधिः । अनन्तो द्विगुः स्त्रियां वा स्यात्, अनो नस्य लोपः स्यादित्यर्थः । वाग्रहणं स्त्रियामित्यत्रैव संबध्यते, न तु नलोपेऽपि । तेन स्त्रीत्वाऽभावेऽपि नलोपः । **पञ्चतक्षीति** । पञ्चानां तक्ष्णां समाहार इति द्विगुः, स्त्रीत्वं, नलोपः, 'द्विगोः' इति ङीबिति भावः । **पञ्चतक्षमिति** । समाहारद्विगुः । स्त्रीत्वाऽभावपक्षे 'स नपुंसक'मिति नपुंसकत्वं, नलोप इति भावः । न चान्तर्वर्तिनीं विभक्तिमाश्रित्य तक्षन्शब्दस्य सुबन्तत्वेन पदत्वात् 'न लोपः प्रातिपदिके'त्यनेन नलोपो

---

शे.] तु तारायां नैतयोः प्रयोगः, उद्भूतावयवभेदे समुदाय एव रूढत्वात् । **तिष्यपुनर्वस्वोः** । नक्षत्र इत्यनुवर्त्तते । तिष्यपुनर्वसुशब्दयोरभिधेये नक्षत्रे वर्त्तमानो यो नक्षत्रवाचिनां द्वन्द्व इत्यर्थः । तेन पर्यायाणामपि सिद्ध्यति । **पुनर्वसू इति** । तिष्य एका तारा, पुनर्वसू द्वे तारे । 'छन्दसि पुनर्वस्वोः' इति निर्देशात् । तदाह—**तिष्यश्च पुनर्वसू चेति** । **विशाखेति** । विशाखे चाऽनुराधाश्चेति द्वन्द्वः । **माणवका इति** । 'नक्षत्रेण युक्तः' इत्यणो 'लुबविशेषे' इति लुपि, जातार्थे 'सन्धिवेला' इत्यणि, तस्य 'श्रविष्ठाफल्गुनी'त्यादिना लुक् । बहुवचनस्य किम् ?, इदन्तिष्यपुनर्वसु [इति] । समाहारद्वन्द्वः । अत एव 'समाहारद्वन्द्वः प्राण्यङ्गादीनामेवे'ति 'द्वन्द्वश्चे'त्यादीनां नार्थः । न चैवमप्यत्र 'जातिरप्राणिना'मिति नित्यैकवद्भावे बहुवचनाऽभावात्सूत्रं व्यर्थमिति वाच्यम् । तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिनः, 'आपोमयः प्राणः' इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् । स्पष्टं चेदं भाष्ये । नक्षत्रसमासे इति तु नोक्तम् । यस्तिष्यस्तौ पुनर्वसू येषां ते तिष्यपुनर्वसव उन्मुग्धाः । अवयवभूतास्तिष्यादयो वर्तिपदार्थः, तेषामेव विपर्यासबुद्धिविषयाणामुद्भूतावयवभेदः समुदायः समासार्थः । 'उन्मुग्धा' इत्यस्य विपर्यासबुद्धिविषया इत्यर्थः । 'अस्मद्' इत्यादीन्यपि व्यर्थानि, 'आचार्याः कथयन्ती'त्यादौ शक्तिगतस्यावयवगतस्य वा बहुत्वस्यारोपेणेवेहापि तदारोपेणैव सिद्धेरिति । स्पष्टप्रतिपत्त्यर्थमिति चेल्लिङ्गानुशासनमपि तथेति भावः । **उच्छृङ्खलास्तु**—'कालोपसर्जने' इत्यत एकशेषप्रकरणान्तं तुल्यपदानुवृत्त्या प्रधानप्रत्ययार्थवचनेन तुल्यमित्यर्थात्सर्वमिदं सूत्रकृतैव प्रत्याख्यातमित्याहुः । **स नपुंस** । तच्छब्देन समाहारद्विगुद्वन्द्वौ परामृश्येते, व्याख्यानात् । **अकारान्तेति** । अत्र द्विगुः समाहारद्विगुरेव, स नपुंसकमित्यपवाद-

पञ्चतक्षम् । ॐपात्राद्यन्तस्य न । पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् । ॐपुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा । पुण्याहम् । सुदिनाहम् । ॐपथः सङ्ख्याव्ययादेः । सङ्ख्याव्ययादेः परः कृतसमासान्तः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पन्थास्त्रिपथम् । विरूपः पन्थाः—विपथम् । कृतसमासान्तनिर्देशान्नेह-सुपन्थाः । अतिपन्थाः । ॐ सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् । तत्पुरुषोऽनञ्कर्मधारयः

त.] क्रियामित्यनेन संबध्यते, न तु पूर्वेण । तेन नित्यो नलोप इत्याह-पञ्चतक्षमित्यादि । पात्राद्यन्तस्येति । 'क्लीत्व'मिति शेषः । आकृतिगणोऽयम् । सुदिनाहमिति । प्रशस्तपर्यायः सुदिनशब्दः, 'सुदिनासु समासु कार्यमेतत्प्रविचिन्वीत विशेषतः स्वयं च' इत्यादिप्रयोगात् । पथः सङ्ख्याव्ययेति । संख्याव्ययरूपो य आदिस्तस्मादित्यर्थः । त्रिपथं विपथमिति,—'ऋक्पूरब्धूः' इत्यप्रत्ययः । सुपन्थाः अतिपन्था इति । 'न पूजना'दिति समासान्तनिषेधः । कथं तर्हि 'व्यध्वो दुरध्वा विपथः कदध्वा कापथः समाः' इत्यमर इति चेत्, प्रमाद एवायमिति बहवः । मनोरमायां तु 'पथे गतौ' इत्यस्मात्पचाद्यचि पथति व्याप्नोतीति व्युत्पादितः पथशब्दोऽस्ति । तथा च त्रिकाण्डशेषः—'वाटः पथश्च मार्गः स्या'दिति । तेन पथशब्देन समासे पुंस्त्वमुपपन्नम् । न चैवं विपथसिद्धावपि कापथो न स्यात्कादेशस्य दुर्लभत्वादिति वाच्यम्, 'ईषदर्थे चे'ति तत्सम्भवात्, कुत्सायामर्थतः पर्यवसानादिति स्थितम् । केचित्तु—'पथः संख्ये'ति वार्तिके कृतसमासान्तस्यैव ग्रहणं न तु पचाद्यजन्तस्येत्यत्र बीजाऽभावाद्विपथः कापथ इति प्रयोगो दुरुपपाद एवेत्याहुः । अत्र माधवः—'परवल्लिङ्गापवादत्वात्तत्पुरुष एवेदं प्रवर्तते नान्यत्र । विपथा नगरी । बहुव्रीहिरयम् । पन्थानमतिक्रान्ता अतिपथा । इहापि न, 'द्विगुप्राप्ते'त्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति । सामान्ये नपुंसकमिति । अनियतलिङ्गविषयकमिदम् । तेनादिं पचति, प्रातरादिरिति पुंस्त्वमेव । मृदु पचतीति । क्रियाविशेषणत्वाद्द्वितीयान्तम् । धातूपात्तभावनां प्रति हि फलांशः कर्मीभूतः । तथा च फलसामानाधिकरण्ये-

वा.] भविष्यतीति वाच्यम्, 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधात् । पात्राद्यन्तस्य नेति । पात्रादिर्गणः । तदन्तस्य समाहारद्विगोर्न क्लीत्वमिति वक्तव्यमित्यर्थः । पञ्चपात्रं त्रिभुवनं चतुर्युगमिति । क्लीत्वाऽभावे 'स नपुंसक'मिति नपुंसकत्वमिति भावः । पुण्येति । पुण्यसुदिनाभ्यां परो योऽहन्शब्दस्तदन्तस्य तत्पुरुषस्य नपुंसकत्वं वक्तव्यमित्यर्थः । 'रात्राह्ने'त्यस्यापवादः । पुण्याहमिति । पुण्यम् अहरिति कर्मधारयः, 'राजाहः' इति टच्, टिलोपः । 'उत्तमैकाभ्यां चे'त्यत्यह्नादेशनिषेधः । सुदिनाहमिति । सुदिनम् अहरिति कर्मधारयः, टच्, टिलोपः । प्रशस्तपर्यायः सुदिनशब्द इति न पौनरुक्त्यम् । पथः सङ्ख्याव्ययादेरिति । 'नपुंसकत्वं वक्तव्य'मिति शेषः । संख्याव्ययेति समाहारद्वन्द्वः । संख्याव्ययमादिरिति कर्मधारयः, दिग्योगे पञ्चमी । पर इति शेषः । पथ इति कृतसमासान्तादकारान्तात्प्रथमा । तदाह—सङ्ख्याव्ययादेरिति । परवल्लिङ्गतापवादः । त्रिपथमिति । 'ऋक्पूः' इति अप्रत्ययः, टिलोपः । एवं विपथमित्यपि । 'प्रादयो गताद्यर्थे' इति समासः । सुपन्था अतिपन्था इति । 'स्वती पूजाया'मिति समासः । 'न पूजना'दिति समासान्तनिषेधः । आवश्यकत्वादनेन सिद्धे 'अपथं नपुंसक'मिति न कार्यम् । सामान्ये नपुंसकमिति । न्यायसिद्धमेतत्, विशेष्यविशेषणसंनिधाने सति क्लीत्वपुंस्त्वयोरनभिव्यक्तौ 'उभयोरन्तरं यच्च तदभावे नपुंसक'मिति लक्षणलक्षितनपुंसकत्वस्यैव न्याय्यत्वात् । अत एव 'दाण्डिनायने'ति सूत्रभाष्ये 'एकश्रुतिः स्वरसर्वनाम, नपुंसकं लिङ्गसर्वनामे'त्युक्तम् । मृदु पचतीति । क्रियाविशेषणमिदं द्वितीयान्तम् ।

शे.] त्वात् । पात्रादीति । क्लीत्वं नेत्यर्थः । त्रिसूत्रीत्यादिप्रयोगदर्शनात्सूत्रशब्दस्याऽत्र पाठ इति कैयटश्चिन्त्यः । बहुसूत्रमिति भाष्यप्रयोगस्तु प्रकरणेऽन्यपदार्थे बहुव्रीहिणा साध्यः । पुण्येत्यादि । 'रात्राह्ने'त्यस्यापवादः । पथः सं । कृतसमासान्त इति । 'पथ' इति कृतसमासान्तैकदेशानुकरणं प्रथमान्तमिति भावः । प्रतिपदोक्तपरिभाषा न प्रवर्त्तते, व्याख्यानात्, तदाह—त्रयाणां पन्था इति । 'ऋक्पूः' इति समासान्तः । 'विपथा नगरी' 'अतिपथे'त्यादौ च नेदम्, अर्धनावमितिवल्लोकाश्रयत्वाल्लिङ्गस्य । एतेन कापथ-विपथौ व्याख्यातौ । आवश्यकत्वादनेनैव सिद्धे 'अपथं नपुंसक'मिति सूत्रं न कार्यम् । 'सामान्ये नपुंसक'मिति अनियतलिङ्गविषयम् । तेनादिं पचतीत्याद्येव । आदिशब्दो नित्यं पुमान् । आद्यपाकानुकूलक्रियेत्यर्थः । न्यायसिद्धमेतत् । विशेष्यविशेषाऽसन्निधाने लिङ्गसर्वनाम्नो नपुंसकस्य न्याय्यत्वात् । 'लिङ्गसर्वनाम नपुंसक'मिति 'दाण्डिनायने'ति सूत्रे भाष्ये स्पष्टम् । अनेनैव क्रियाविशेषणानां नपुंसकत्वे सिद्धे 'क्रियाविशेषणानां क्लीवत्वं द्वितीयान्तत्वं चे'ति नापूर्वम् । धातूपात्तभावनां प्रति फलांशस्य कर्मतया तत्समानाधिकरणे क्रियाविशेषणे द्वितीयान्तत्वस्यापि सिद्धेः । तस्य क्रियाजनकत्वमपि स्वज्ञानद्वारा बोध्यम् । तद्बुद्ध्या पूर्वमुद्दिश्य क्रियायां प्रवृत्तेः, सम्प्रदानादेरिव । ज्ञानगतजनकत्वस्य च तद्विषये आरोपः । वाचनिकत्वे तु यत्र धात्वर्थस्य करणत्वेनान्वयस्तत्रापि स्यात्, यथा—तृप्तिकामः स्तोकेनौदनं पचतीत्यादौ । तृप्तिविषयकामनावत्कर्तृकः स्तोकविक्लित्तिकरणक ओदनकर्मकः पाक इति बोधः । तद्विषयकामनावत्कर्तृकत्वेन तस्या उद्देश्यत्वमर्थसिद्धम् । केषाञ्चित्तृप्त्या-

।२।४।१९। अधिकारोऽयम् । **संज्ञायां कन्थोशीनरेषु** ।२।४।२०। कन्थान्तस्तत्पुरुषः क्लीबं स्यात्सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयः, तेषां कन्था सौशमिकन्थम् । संज्ञायां किम् ? । वीरणकन्था । उशीनरेषु किम् ? । वाह्निकन्था । **उपज्ञोपक्रमं तदाद्याचिख्यासायाम्** ।२।४।२१। उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्, तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः=प्राथम्यं चेदाख्यातुमिष्यते । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः । **छाया बाहुल्ये** ।२।४।२२।

---

**त.]** द्वितीया । अतएव सङ्कल्प्यावित्यादौ कारकपूर्वकत्वाद्यण् । यत्र तु भावनां प्रति करणतया धात्वर्थविशेषोऽन्वेति तत्र तद्विशेषणानां तृतीयान्ततैव, 'ज्योतिष्टोमेन यजेते'त्यत्र यथा । एतच्च 'करणे यजः' इति सूत्रे वृत्तिपदमञ्जर्योः स्पष्टम् । **तत्पुरुषोऽनञ्** । नञ्समासकर्मधारयभिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभाग्भवतीति सूत्रार्थः । **उपज्ञो** । उपज्ञायत इत्युपज्ञा । 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपक्रम्यत इत्युपक्रमः । कर्मणि घञ् । 'नोदात्तोपदेशस्ये'ति वृद्धिप्रतिषेधः । उपज्ञा च उपक्रमश्चेति समाहारद्वन्द्वः । स चानुवर्तमानस्य तत्पुरुषस्य विशेषणम् । तच्छब्देन उपज्ञोक्रमौ परामृश्येते । तदेतत्सकलमभिप्रेत्याह—**उपज्ञान्त इत्यादि** । आख्यातुमिच्छा आचिख्यासेतीच्छासना इह विवक्षैव शब्दप्रवृत्तौ नियामिका, न तु वस्तुस्थितिरिति ज्ञाप्यते । तेन 'त्वदुपक्रमं सौजन्य'मित्याद्यपि सिध्यति । **पाणिनेरिति** । कर्तरि षष्ठी । **नन्दोपक्रममिति** । नन्दस्योपक्रममिति विग्रहः । **छाया बाहुल्ये** । बाहुल्ये सति या छाया तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः । इह कस्य बाहुल्य इत्यपेक्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्य

---

**बा.]** पचेर्हि विक्लित्त्यनुकूलव्यापारोऽर्थः । तत्र विक्लित्त्यंशे मृदुत्वमन्वेति । विक्लित्तिश्च व्यापारे साध्यत्वेनान्वेति । तथाच मृदु पाकं करोतीत्यर्थः । तथाच धातूपात्तव्यापारं प्रति कर्मीभूतेन विक्लित्त्यंशेन सामानाधिकरण्यान्मृद्विति द्वितीया । यत्र तु धात्वर्थः करणत्वेनान्वेति 'यजेत स्वर्गकामः' इत्यादौ, तत्र हि यागेन स्वर्गं कुर्यादित्यर्थः । तत्र क्रियाविशेषणस्य तृतीयान्तत्वमेव 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यादावित्यन्यत्र विस्तरः । **प्रातः कमनीयमिति** । रमणीयमित्यर्थः । अत्रापि 'प्रात'रित्यव्ययस्य विशेष्यस्याऽलिङ्गत्वात्तद्विशेषणस्य कमनीयशब्दस्यानव्ययस्य लिङ्गविशेषावगमकत्वाऽभावान्नपुंसकत्वमेवेति भावः । इदं चाऽनियतलिङ्गविषयम् । तेन आदिं पचति, प्रातरादिरित्यत्र न भवति, आदिशब्दस्य नियतलिङ्गत्वात् । **तत्पुरुषोऽनञ्** । नञ्समासकर्मधारयाभ्यां भिन्नस्तत्पुरुषो वक्ष्यमाणकार्यभागित्यर्थः । तदाह—**अधिकारोऽयमिति** । 'परवल्लिङ्गमित्यतः प्रा'गिति शेषः । **संज्ञायां कन्थो** । सुगममेव । **उपज्ञा** । उपज्ञायते=प्रथमं ज्ञायत इत्युपज्ञा । 'स्त्रियां क्ति'न्नित्यधिकारे 'आतश्चोपसर्गे' इति कर्मण्यङ् । उपक्रम्यते=आरभ्यते इत्युपक्रमः । कर्मणि घञ् । 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधः । उपज्ञा चोपक्रमश्चेति समाहारद्वन्द्वः । 'तत्पुरुष' इत्यस्य विशेषणमिदम् । तदन्तविधिः । 'स नपुंसक'मित्यतो 'नपुंसक'मित्यनुवर्तते । तदाह—**उपज्ञान्त उपक्रमान्तश्चेति** । तच्छब्देन उपज्ञोपक्रमौ विवक्षितौ । आदिशब्दो भावप्रधानः प्राथम्ये वर्तते । तयोरादिः=प्राथम्यं—तदादिः । तस्य आचिख्यासा=आख्यातुमिच्छा । विवक्षायामिति यावत् । तदाह—**तयोरादिरित्यादि** । **पाणिनेरुपज्ञेति** । कर्तरि षष्ठी । **पाणिन्युपज्ञं ग्रन्थ इति** । पाणिनिना प्रथमं ज्ञायमान इत्यर्थः । इदं प्रकरणं परवल्लिङ्गत्वस्य विशेष्यनिघ्नत्वस्य चापवादः । **नन्दोपक्रमं द्रोण इति** । नन्देनारभ्यमाण इत्यर्थः । कर्तरि षष्ठ्या समासः । **छाया बाहुल्ये** । छायया तत्पुरुषस्य विशेषणात्तदन्तविधिमभिप्रेत्याह—**छायान्त इति** । **पूर्वपदा-**

---

**शे.]** दिपु कर्मत्वव्यवहारस्तूद्देश्यत्वसामान्यादिति दिक् । तत्पुरुषोऽनञ् । 'परवल्लिङ्ग'मिति यावदधिकारोऽयम् । 'अनञ्कर्मधारय' इत्युक्तेर्नञ्तत्पुरुषस्य न कर्मधारयत्वम् । आरोपमात्रस्य नञ्द्योत्यत्वेन सामानाधिकरण्याऽभावात् । यद्वा पृथगुपस्थितयोः सामानाधिकरण्यव्यवहारः । नञ्समासे हि आरोपितोत्तरपदार्थे आरोपितधर्मकेऽर्थे वोत्तरपदस्य वृत्तिः, नञ् तु द्योतक इति तदभावः ।

**संज्ञायां क** । अनादिरिह सञ्ज्ञा । सा चोशीनरेषु तत्पुरुषभिन्ना नञ्समासकर्मधारयरूपा च नास्तीति नात्राधिकारप्रयोजनम् । इदं प्रकरणं परवल्लिङ्गत्वस्य विशेष्यनिघ्नत्वस्य चापवादः । **उपज्ञोप** । इह सना शास्त्रे विवक्षैव नियामिका न वस्तुस्थितिरिति सूच्यते । तेन 'त्वदुपक्रमं सौजन्यव्यवहार' इत्यपि । तत्र यद्यपि विवक्षा द्विविधा—प्रायोक्त्री लौकिकी च । प्रयोक्तृशब्देन व्यवहारार्थं प्रयोगकर्त्तारोऽस्मदादयः । लोकशब्देन विदितवेद्यः परावरज्ञः शिष्टः । लोके एतदेव शिष्टत्वं पृषोदरादिसूत्रभाष्योक्तम् । तथाप्यत्र नाद्या विवक्षिता । तेषामपभ्रंशप्रयोगे बाहुल्येन प्रवृत्तेः । तस्मादन्त्यैव । ते हि तत्रार्थे यं शब्दं धर्मबुद्ध्या प्रयुञ्जते तेषां शास्त्रविषयतेति 'तदस्य तदस्मिन् स्यादिति' इति सूत्रे भाष्ये स्पष्टम् । तेषामेवाभिधानानभिधाने अपि बोद्धव्ये । इह षष्ठीतत्पुरुषं विना तदादित्वाऽसम्प्रत्ययान्नाधिकारफलम् । उपज्ञायत इत्युपज्ञा । कर्मण्यङ् । पाणिनेरुपज्ञेति कर्तृषष्ठ्या समासः । उपक्रमे कर्मणि घञ् । पाणिनिसम्बन्ध्याद्यज्ञानविषय इत्यर्थः । **छाया बा** । बाहुल्ये सति या छाया तद्वाची यश्छायान्तस्तत्पुरुष इत्यर्थः । तत्र 'कस्य बाहुल्ये' इत्याकाङ्क्षायामावरकद्रव्यनिमित्तत्वाच्छायायास्तद्बाहुल्य इति गम्यते । तच्च पूर्वपद-

अन्येषामपि दृश्यते [ ।६।३।१३७ ] दीर्घ इत्यनुवर्तते । 'इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घः' । इच् समासान्तो वक्ष्यते । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वं च । केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं—केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं—दण्डादण्डि । मुष्टीमुष्टि । ओर्गुणः ।६।४।१४६। उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते । अवादेशः । बाहूबाहवि । 'ओरो'दिति वक्तव्ये गुणोक्तिः—संज्ञापूर्वको विधिरनित्य इति ज्ञापयितुम् । तेन

त.] भवतीत्यर्थः । अन्येषामपि दृश्यते । अत्र प्राञ्चा 'दृशिग्रहणात्कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वम्, आत्वं वाऽनचि' इत्युक्तम् । तत्र 'आत्वं वा' इत्यपाणिनीयम् । अतएव मुष्टामुष्टीत्युदाहरणमप्यप्रामाणिकमेव । एतच्च मनोरमायां स्पष्टम् । ओर्गुणः । तद्धिते किम् ? । पट्वी । नाव्योः । गुणोक्तिरिति । यद्यपि 'ओरो'दिति सूत्रितेऽपि 'भस्य' 'तद्धिते' इत्येवंरूपसंज्ञापूर्वकत्वमस्त्येव, तथापि विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वको विधिरिति भावः । यद्यपि 'ओ'दिति तपरस्तत्कालस्य संज्ञैव, तथापि इह तकार उच्चारणार्थः, तपरत्वे फलाऽभावात् ।

बा.] इतिशब्दो लौकिकप्रसिद्धप्रकारवचनः । 'केशाकेशी'त्यादिलौकिकप्रयोगे यावानर्थः प्रसिद्धस्तावत्यर्थेऽयं बहुव्रीहिर्भवतीत्यर्थः । अन्येषामपि दृश्यते । अनुवर्तते इति । 'ढ्रलोपे इत्यत' इति शेषः । 'नहिवृतिवृषी'त्यादिपूर्वसूत्रोक्तादन्येषामपि दीर्घो दृश्यत इत्यर्थः । अतिप्रसङ्गमाशङ्क्याह—कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घ इति । 'बहुव्रीहौ चेत् कर्मव्यतिहारे एव पूर्वपदान्तस्यैव दीर्घ' इत्यर्थः । तेन 'तुराषा'डित्यादौ दीर्घो निर्बाधः । दृशिग्रहणादयमर्थो लभ्यते । वक्ष्यत इति । 'इच्कर्मव्यतिहारे इति सूत्रेणे'ति शेषः । तिष्ठद्गुप्रभृतिष्विति । वृत्तिग्रन्थ एवात्र प्रमाणम् । अव्ययीभावत्वमिति । तत्र 'अव्ययीभावः' इत्यनुवृत्तेरिति भावः । अव्ययत्वमिति । 'अव्ययीभावश्चे इत्यनेने'ति शेषः । 'अव्ययादाप्सुपः' इति सुब्लुक् तत्फलमिति भावः । गृहीत्वेति । 'परस्पर'मिति शेषः । न च केशग्रहणस्य पुरुषकर्तृकत्वात् प्रवृत्तेश्च युद्धकर्तृकत्वात्समानकर्तृकत्वाऽभावात्कथमिह क्त्वाप्रत्यय इति वाच्यं, गृहीत्वेत्यनन्तरं 'स्थितयो'रित्यध्याहारात् । ततश्च अस्य केशेषु सः, तस्य केशेष्वयमित्येवं परस्परं गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहवाक्यं फलितम् । केशाकेशीति । केशेषु केशेष्वित्यनयोर्ग्रहणाद्यन्तर्भावेन वृत्तिघटकयोः समासे सति सुब्लुक् । पूर्वपदस्य दीर्घः । इच्समासान्तः । 'यस्येति चे'त्यकारलोपः । अव्ययत्वात्सुब्लुगिति भावः । अन्यपदार्थवृत्तित्वेऽपि एकशेषापवादोऽयं बहुव्रीहिसमासः, अप्रथमान्तार्थश्च, दण्डैश्चेति । अस्य दण्डैः सः, तस्य दण्डैरयमित्येवं परस्परं प्रहृत्य स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहार्थः । दण्डादण्डीति । दण्डैर्दण्डैरित्यनयोः प्रहरणाद्यन्तर्भावेन समासघटकयोः समासे सति सुब्लुक्, पूर्वपदस्य दीर्घः, इच्, 'यस्येति च' इति अकारलोपः । अव्ययत्वात्सुब्लुक् । मुष्टीमुष्टीति । अस्य मुष्टिभिः सः, तस्य मुष्टिभिरयमित्येवं परस्परं प्रहृत्य स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहः । मुष्ट्या मुष्ट्या इत्यनयोः समासे सति सुब्लुगादि पूर्ववत् । 'मुष्टामुष्टी'ति पूर्वपदान्तस्य आत्वमपाणिनीयमेव । ओर्गुणः । ओरित्युकारात्षष्ठ्येकवचनम् । तेन भस्येत्यधिकृतं विशेष्यते । तदन्तविधिः । 'नस्तद्धिते' इत्यनुवर्तते । तदाह—उवर्णान्तस्येति । बाहूबाहवीति । बाहौ बाहौ च परस्परं गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमिति विग्रहः । समासः, सुब्लुक्, पूर्वपदस्य दीर्घः, इच् । 'यस्येति चे'ति बाधित्वा ओर्गुणः, अवादेशः । अव्ययत्वात्सुपो लुक् । ननु गुण उकारस्थाने भवन् स्थानसाम्यादोकार एव भवति, ततश्च लाघवात् 'ओरो'रित्येव सिद्धे 'गुण' इति गुरुनिर्देशो व्यर्थ इत्यत आह—ओरोदिति ।

शे.] मिथालत्पृशन्कुचतटीम्' इत्यादि सङ्गच्छते । अयं विषयविशेष इति । ग्रहणादिरूपोऽन्यपदार्थक्रियारूपः, कर्मव्यतिहाररूपश्चेत्यर्थः । इतिशब्दश्चाऽत्र प्रकाशे । तत्त्वं च लोकप्रसिद्धत्वम् । तदुच्यते—'इतिशब्दो लौकिकीं विवक्षामनुसारयति' इति । कर्मव्यतिहारः—परस्परग्रहणादि । 'इच् कर्मव्यतिहारे' इति समासान्तस्यैतद्विषयतैव । इतिशब्दबलेन तत्राऽस्य प्रतिपदोक्तत्वात् । इतीति । तुराषाडित्याद्यर्थमावश्यकेनानेन सूत्रेणेत्यर्थः । तिष्ठद्गुष्विति । अत्र च वृत्त्यादि प्रमाणम् । द्विदण्ड्यादिपठिते उभाभ्यां हस्ताभ्यामित्यर्थके उभयाहस्तीत्यादौ विभक्त्यश्रवणायाऽव्ययत्वं, केशाकेशि कुर्वन्नित्यादौ पराङ्गवत्त्वायाव्ययीभावत्वम् । 'अव्ययानां न' इति निषेधस्याऽव्ययीभावेऽभावादिति बोद्धव्यम् । केचित्तु इच्प्रत्ययस्य स्वरादिषु पाठादव्ययत्वम्, अव्ययीभावत्वफलांशे न दृढतरं मानं, नापि तत्प्रयोगः प्रमित इत्याहुः । गृहीत्वेति । क्त्वाप्रत्ययोऽध्याहृतस्थित्यादिक्रियामादाय बोद्धव्यः । केशेषु केशेषु गृहीत्वा स्थितयोरिदं युद्धं प्रवृत्तमित्यर्थात् । ग्रहणकर्मत्वं प्रत्यासत्त्या केशादिविशिष्टपुरुषाणां बोद्धव्यम्, युद्धस्यानेककर्तृकत्वात् । केशादिपदद्वयप्रयोगात्, समासाच्च कर्मव्यतीहारस्य लब्धत्वेन 'व्यती'ति नोक्तम् । इदं सूत्रं वैयधिकरण्यार्थम् ।  ओरोदितीति । ओरित्यस्याप्युपलक्षणमिदम् । सञ्ज्ञापूर्वेति । इदं कैयटहरदत्ताद्यनुरोधेनोक्तम् । भाष्ये तु न दृश्यते । स्वयंभुव इदमित्यर्थेऽणि स्वायंभुवो

'स्वायम्भुव'मित्यादि सिद्धम् । सरूपे इति किम् ? । हलेन मुसलेन । **तेन सहेति तुल्ययोगे** ।२।२।२८। तुल्ययोगे वर्तमानं सहेत्येतत्तृतीयान्तेन प्राग्वत् । **वोपसर्जनस्य** ।६।३।८२। बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः । तुल्ययोगवचनं प्रायिकम् । सकर्मकः । सलोमकः ।

---

त.] 'ओरो' इत्येव वाऽस्तु । 'स्वं रूपं शब्दस्ये'ति तु प्रत्याख्यातमिति भावः । स्यादेतत्–तपरस्तत्कालस्य संज्ञा भवतीति 'गुरोरनृतः' इति प्लुतनिषेधस्यापि संज्ञापूर्वकत्वेनाऽनित्यत्वात्क्लृ३प्तशिखेत्यत्र प्लुतसिद्धये 'ऋलृक् सूत्रे ऋकारात्पृथक् लृकारोपदेशो व्यर्थः । सावर्ण्ये सत्यप्युक्तरीत्या लृकारस्य प्लुतसिद्धेरनित्यत्वज्ञापनस्य निष्फलत्वात् । न चैवमपि ऋदितामॢदित्कार्यमॢदितामृदित्कार्यं च वारयितुमनित्यत्वज्ञापनमावश्यकमिति वाच्यं, राजृभ्राजृभ्लृशक्लृ इति पृथगनुबन्धकरणसामर्थ्यात्, 'नाग्लोपिशास्वृदिताम्' 'लृदितः परस्मैपदेषु' इति पृथगनुवादसामर्थ्याच्च तत्कार्याणामसाङ्कर्यसिद्धेरिति चेदत्राहुः—'गुरोरनृतः' इत्यनेन ऋद्भिन्नस्य गुरोः प्लुतविधानात् 'अनृतः' इत्येतदनूद्यमानगुरुविशेषणत्वेनानुवादरूपमेव, न तु विधेयसमर्पकसंज्ञारूपं पदमिति ऋस्थानिकप्लुतनिषेधस्याऽनित्यत्वाऽसिद्ध्या क्लृ३प्तशिखेत्यत्र प्लुतो न सिध्यति, ततश्च तत्सिद्ध्यर्थमुक्तज्ञापनायोभयोपदेश आवश्यक इति । अन्ये तु–ऋकारात्पृथग्लृकार उपदेष्टव्य एव, ऋकारोपदेशेन लृकारस्याऽलाभात् । न च 'ऋलृवर्णयोर्मिथः सावर्ण्य'मिति वचनात्तल्लाभः शङ्क्यः । वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेरित्याहुः । **तेन सहेति** । तुल्ययोगे किम् ? । 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' । इह सहशब्दो न तुल्ययोगवचनः, भारकर्मकवहनक्रियायां पुत्राणामनन्वयात् । किं तु विद्यमानवचनः, दशसु पुत्रेषु विद्यमानेष्वित्यर्थः, एतच्च सहशब्दस्य विद्यमानार्थत्वमप्यस्तीति वक्तुमुक्तम् । प्रत्युदाहरणशरीरं तु 'सह पुत्रै'रित्येवेति बोध्यम् । तृतीया तु 'सहयुक्ते' इत्यनेनैव । **वोपसर्जनस्य** । उपसर्जनस्येति न सहस्य विशेषणम्, अव्यभिचारात् । किं तूत्तरपदेन संनिधापितस्य समासस्य । तच्चावयवद्वारकम् । उपसर्जनसर्वावयवकस्य समासस्येत्यर्थः । तदेतत्फलितमाह—**बहुव्रीहेरिति** । तेनेह न,–सहयुध्वा । सहकृत्वा । 'राजनि युधि कृञः' 'सहे चे'ति क्वनिपि उपपदसमासाविमौ । 'सहस्य सः संज्ञाया'मित्यतोऽनुवर्तनादाह—**सहस्य सः स्यादिति** । प्रायिक-

---

बा.] नचैवमपीह तद्धितसंज्ञापूर्वकत्वं दुर्वारमिति वाच्यं, विधेयसमर्पकं पदं यत्र संज्ञारूपं स एव संज्ञापूर्वकविधिरित्यभ्युपगमात् । नच 'ओ'दिति तपरस्तत्कालस्य संज्ञेति वाच्यं, विधीयमानत्वादेव तत्कालत्वासिद्ध्या तकारस्य उच्चारणार्थत्वात् । **स्वायम्भुवमिति** । स्वयम्भुवोऽपत्यमित्यर्थे अण्, स्वायंभुवः । संज्ञापूर्वकत्वेनानित्यत्वादोर्गुणाऽभावे उवङ्, आदिवृद्धिरिति भावः । 'स्वायम्भुव'मिति पाठे तस्येदमित्यण् । **हलेन मुसलेनेति** । अत्र असरूपत्वाद्धलामुसलीति न भवतीति भावः । **तेन सहेति** । **तुल्ययोगे इति** । युगपत्कालिकक्रियायोगे इत्यर्थः । **तृतीयान्तेनेति** । तेनेत्यनेन तल्लाभादिति भावः । **प्राग्वदिति** । समस्यते स बहुव्रीहिरित्यर्थः । असामानाधिकरण्यार्थं कबभावार्थं चेदम् । **वोपसर्जनस्य** । 'उत्तरपदे' इत्यधिकृतम् । 'सहस्य सः संज्ञाया'मित्यतः 'सहस्य स' इत्यनुवर्तते । उपसर्जनमस्यास्तीत्युपसर्जनः, मत्वर्थे अर्शआद्यच् । उत्तरपदाक्षिप्तसमासो विशेष्यम् । उपसर्जनवतः समासस्येत्यर्थः । यद्यपि सर्वेषामपि समासानां कश्चिदवयव उपसर्जनमेव, तथापि सामर्थ्यादुपसर्जनसर्वावयवकस्येति लभ्यते । तथा च उपसर्जनस्येत्यनेन बहुव्रीहेरिति लब्धम् । अवयवषष्ठ्येषा । तदाह—**बहुव्रीहेरवयवस्येत्यादिना** । बहुव्रीहेरिति किम् ? । सहयुध्वा । 'राजनि युधि कृञः', 'सहे चे'ति क्वनिप् । उपपदसमासः । अबहुव्रीह्यवयवस्य सहस्य सत्वं न । **सपुत्र इति** । सभावे रूपम् । पुत्रेण युगपदागत इत्यर्थः । **प्रायिकमिति** ।

---

शे.] लोकेऽसाधुरेव, भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् । भाष्याविचारितप्रयोजनकानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् । शौवादंष्ट्रो मणिरित्यत्र—'श्वदेरिञि' इति सूत्रस्थभाष्यप्रयोगात् 'अन्येषामपि दृश्यते' इत्यनेन तत्र दीर्घसत्त्वात्, श्वपुच्छमितिवद्दीर्घाऽभावे—अण् । एवमेव 'आगमशास्त्रमनित्यं' 'नञ्घटितमनित्यम्' 'आतिदेशिकमनित्यं' 'सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवानि'त्यादि भाष्यानुक्तं बोद्ध्यम् । **तेन सहेति** । तुल्ययोगः=एकेन गमनादिना योगः, तद्द्योतकं सहेत्येतदित्यर्थः । **वोपस** । अत्रोपसर्जनस्येति मत्वर्थीयाऽच्प्रत्ययान्तमुत्तरपदेन सन्निधापितस्य समासस्यावयवद्वारकं विशेषणं, लक्ष्यानुसारिव्याख्यानात् । सर्वत्र च कश्चिदवयव उपसर्जनमेवेति विशेषणसामर्थ्यादुपसर्जनसर्वावयवकस्येत्यर्थस्तदाह—**बहुव्रीह्यवयवस्येति** । व्यधिकरणा षष्ठीति भावः । तेनेह न सहकृत्वा । सहयुध्वा । 'राजनि युधि कृञः' 'सहे च' इति क्वनिप्, उपपदसमासः । सहकृत्वप्रिय इत्यत्रापि न, उपसर्जनसर्वावयवके बहुव्रीहौ यदुत्तरपदं प्रियशब्दः सहशब्दस्य तत्परत्वाऽभावात् । सहशब्देन द्वन्द्वस्तु नास्त्येव, चार्थे वृत्तेरभावात्, अनभिधानाच्च । व्याख्यानादेवोपसर्जनपदेन शास्त्रीयं लौकिकं च गृह्यते । तेन सपुत्रादेरुपसर्जनसर्वावयवकत्वं बोध्यम् । व्यधिकरणत्वात्पूर्वेणाऽप्राप्तौ वचनं, कबभावार्थश्च । **सपुत्र इति** । 'सप्तमी विशेषणे' इति न पुत्रस्य पूर्वनिपातः, 'प्रथमानिर्दिष्टम्' इत्यनेनोपसर्जनत्वात् । बन

प्रकृत्याऽऽशिषि ।६।३।८३। सहशब्दः प्रकृत्या स्यादाशिषि । स्वस्ति राज्ञे सहपुत्राय सहामात्याय । * अगोवत्सहलेष्विति वाच्यम् । सगवे सवत्साय सहलाय । बहुव्रीहौ सङ्ख्येये डजबहुगणात् ।५।४।७३। संख्येये यो बहुव्रीहिस्तस्माड्डच् स्यात् । [न तु बहुगणात्] । उपदशाः । अबहुगणात्किम् ? । उपबहवः । उपगणाः । अत्र स्वरे विशेषः । * सङ्ख्यायास्तत्पुरुषस्य वाच्यः, । निर्गतानि त्रिंशतो—निस्त्रिंशानि वर्षाणि चैत्रस्य ।

---

त.] मिति । 'विभाषा सपूर्वस्ये'त्यादिनिर्देशादिति भावः । सकर्मक इति । विद्यमानकर्मक इत्यर्थः । प्रकृत्याशिषि । कथं तर्हि 'यजमानस्य सपुत्रस्य सभ्रातृकस्य सपरिवारस्यायुरारोग्यैश्वर्याभिवृद्धिरस्तु' इत्यादिप्रयोगाः सङ्गच्छन्त इति चेत् । उच्यते—'ऐश्वर्याभिवृद्धिरस्त्विति भवन्तोऽनुगृह्णन्तु' इत्येतत्प्रार्थनावाक्यं, न त्वाशीर्वचनम् । यच्चाशीर्वचनं 'तथास्तु' इति, तत्र हि सपुत्रकेत्यादि न प्रयुज्यत एवेति न काप्यनुपपत्तिः । बहुव्रीहौ सङ्ख्येये । व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह—यो बहुव्रीहिस्तस्मादिति । 'उपगणा' इत्यत्र डचि सत्यसति च रूपे विशेषो नास्तीत्यत आह—स्वरे विशेष इति । डचि सति 'चितः' इत्यन्तोदात्तत्वं स्यात्, असति तु पूर्वपदप्रकृतिस्वर इत्यर्थः । न च सत्यपि डचि परत्वात्पूर्वपदप्रकृतिस्वर एव स्यादिति शङ्क्यं, 'चितः' इति स्वरस्य सतिशिष्टत्वात्, डचश्चित्करणस्य वैयर्थ्यापत्तेश्च । सङ्ख्याया इति । सङ्ख्यान्तस्य तत्पुरुषस्य चरमावयवो डज्वक्तव्य इत्यर्थः ।

---

बा.] इतिशब्दादिदं लभ्यते । 'विभाषा सपूर्वस्ये'त्यादिनिर्देशाच्चेति भावः । सकर्मक इति । विद्यमानकर्मक इत्यर्थः । अत्र तुल्ययोगाऽभावेऽपि सहस्य सः । प्रकृत्याशिषि । 'सहस्य सः संज्ञाया'मित्यतः सहस्येत्यनुवृत्तं प्रथमया विपरिणम्यते । तदाह—सहशब्द इति । प्रकृत्येति । स्वभावेन स्थितः स्यादित्यर्थः । सभावो नेति यावत् । स्वस्तीति । 'भूया'दिति शेषः । सहपुत्रायेति । 'तेन सहे'ति समासे कृते, आशीर्योगान्न सभावः । एवं-सहामात्यायेति । अगोवत्सेति । गोवत्सहलेषु परतः सहस्य प्रकृतिभावो नेत्यर्थः । सगवे इति । 'राज्ञे स्वस्ती'ति शेषः । अथ बहुव्रीहावसाधारणसमासान्तानाह—बहुव्रीहौ । सङ्ख्येये यो बहुव्रीहिरिति । 'सङ्ख्ययाव्यये'ति विहित' इति शेषः । तस्मादिति । बहुव्रीहाविति पञ्चम्यर्थे सप्तमीति भावः । डच्स्यादिति । समासान्तस्तद्धितश्चेति ज्ञेयम् । उपदशा इति । दशानां समीपे ये सन्तीति विग्रहः । 'सङ्ख्ययाऽव्यये'ति बहुव्रीहिः । सुब्लुक् । उपदशन्शब्दाड्डचि 'नस्तद्धिते' इति टिलोपः । उपबहवः । उपगणा इति । बहूनां समीपे ये सन्तीति, गणस्य समीपे ये सन्तीति च विग्रहः । 'बहुगणवतुडति सङ्ख्ये'ति सङ्ख्यात्वात् 'सङ्ख्ययाव्यये'ति समासः । अबहुगणादिति निषेधान्न डच् । ननूपगणा इत्यत्र डचि सत्यसति च रूपसाम्यात्किं तन्निषेधेनेत्यत आह—स्वरे विशेष इति । डचि सति 'चित' इति अन्तोदात्तत्वं स्यादित्यर्थः । सङ्ख्याया इति । सङ्ख्यान्ततत्पुरुषस्य समासान्तो डज्वक्तव्य इत्यर्थः । निस्त्रिंशानीति । 'निरादयः क्रान्ते'ति तत्पुरुषः, डच्, 'टे'रिति टिलोपः ।

---

शे.] पूर्वनिपाताऽनियमप्रसक्तिस्तत्रैव तत्प्रवृत्तेः । प्रायिकमिति । इतिशब्दादिदं लब्धम् । सकर्मक इति । स्वार्थे कः । अत एवाऽर्थेन सह निवृत्त इत्यर्थकः 'सार्थको निवृत्तः' इति द्वन्द्वसूत्रस्थभाष्यप्रयोगः सङ्गच्छते । एतच्च प्राचामनुरोधेन । परे तु सकर्मक इत्यादौ विद्यमानवाची कर्मादिसमानाधिकरणः सहशब्दः । तत्र च षष्ठ्यपवादतृतीयाया असम्भवान्नानेन समासः । सहैव पुत्रैरित्यादौ विद्यमानतावाची । तेषां विद्यमानत्वेऽपीत्यर्थं इति न दोषः । प्रकृते तु न सः, कर्मणो विद्यमानत्वे इत्यर्थाननुभवात् । एवञ्च 'अनेकमन्यपदार्थे' इत्येव समासः । 'सपूर्वाया' इत्यादिनिर्देशैर्वोपसर्जनस्येत्यत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या सादेशः सुलभः । सपूर्वेत्यत्र सर्वनामसङ्ख्ययोरित्यस्याऽप्रवृत्तिरनित्यत्वात् । अत एव 'संहितशफे'ति सूत्रे सहोरुरित्यस्य सह=विद्यमानावूरू यस्या इति विग्रहप्रदर्शनं कैयटादिभिः कृतमित्याहुः । प्रकृत्याशि । सपुत्रस्य यजमानस्यैश्वर्याभिवृद्धिरस्त्वित्याद्याशीर्वचनमसाध्वेवेति बोद्धव्यम् । बहुव्रीहौ सं । सङ्ख्येये वर्त्तमानसङ्ख्याशब्दान्तो यो बहुव्रीहिरित्यर्थः । पञ्चम्यर्थे सप्तमीत्याह—तस्मादिति । उपगणा इत्यत्र डचि सत्यसति रूपे विशेषाऽभावादित्याह—स्वरे विशेष इति । डच्यन्तोदात्तम्, अन्यथा पूर्वपदप्रकृतिस्वर इत्यर्थः । बहुगणयोर्यदा चतुरादिबोधकता तदा तत्समीपत्र्यादीनां बहुत्वाद्बहुवचनम् । अत्र प्रतिपदोक्तपरिभाषा न प्रवर्त्तते । तेन नव दश येषामिति 'अनेकम्' इति समासेऽपि नवदशा इति भवतीति ध्वनितं 'सङ्ख्यया' इति सूत्रे 'अशिष्यः सङ्ख्योत्तरपदः । सङ्ख्येयवार्थाभिधायित्वात्' इत्यनेन । तत्प्रत्याख्याने तु सङ्ख्येये वर्त्तमानबहुव्रीहेरित्यर्थान्न दोषः । मूलेऽपि सङ्ख्येये यो बहुव्रीहिरित्यनेन सूचितमिदम् । स्पष्टं चेदं समर्थसूत्रे 'सङ्ख्ययाव्यये'ति सूत्रे च भाष्यकैयटयोः । अत्र पक्षे कबपि, भाष्येऽनन्तरबहुव्रीह्यपेक्षया शेषस्य ग्रहणात् । अत एव बहुव्रीहौ सक्थ्यक्ष्णोरिति प्रकरणे एवेदं न कृतम् । सङ्ख्याया इति । अव्ययादेरिति बोद्धव्यम् । तेन गोविंशतिरित्यादौ न । स्पष्टं चेदमत्रैव भाष्ये । 'अन्यत्राधिकलोपा'दित्यपि भाष्ये उक्तं, द्व्यधिका विंशतिर्द्वाविंशतिरिति चोदाहृतम्, तत्तु वार्तिककृता स्वीकृत्योक्तम् । भाष्यकृता तु तत्र द्वन्द्वस्यैवाङ्गीकारात्तद्रीत्या तदनावश्यकम् । तत्पुरुषे हि पूर्वपदप्रकृतिस्वराऽसिद्ध्या द्वन्द्व एवात्रेति भाष्यकृतोक्तम् । द्वन्द्वसूत्रे द्व्यधिकेत्यादावव्ययादित्वा-

निर्गतस्त्रिंशतोऽङ्गुलिभ्यो—निस्त्रिंशः खड्गः । **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्** ।५।४।११३। व्यत्ययेन षष्ठी । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घे सक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ? । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । 'अक्ष्णोऽदर्शना'दित्यच् । **अङ्गुलेर्दारुणि** ।५।४।११४। अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दारुण्यर्थे । पञ्चाङ्गुलयो यस्य तत् पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते । बहुव्रीहेः किम् ? । द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः । तद्धितार्थे तत्पुरुषे 'तत्पुरुषस्याङ्गुले'रित्यच् । दारुणि किम् ? । पञ्चाङ्गुलिर्हस्तः । **द्वित्रिभ्यां ष मूर्ध्नः** ।५।४।११५। आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः । **॥ नेतुर्नक्षत्रे उब्वक्तव्यः** । मृगो नेता यासां रात्रीणां ता

---

**त.]** 'एकविंशति'रित्यादौ तु न भवति, 'अन्यत्राधिकलोपा' दिति वार्तिककारोक्तेः । **व्यत्ययेन षष्ठीति** । एतच्चोपलक्षणं, सप्तम्यपि व्यत्ययेनैव । तदाह—**स्वाङ्गवाचीत्यादि** । 'अद्रवं मूर्तिम'दित्यादिलक्षणलक्षितं स्वाङ्गं गृह्यते । तेन 'शोभनाक्षी प्रतिमे'त्यादिप्रयोगो निर्बाध एवेत्याहुः । **षच्स्यादिति** । षो ङीषर्थः । चस्तु 'चितः' इत्यन्तोदात्तार्थः । तेनात्र पूर्वपदप्रकृतिस्वरो न भवति । **स्थूलाक्षेति** । स्थूलानि अक्षीणि=पर्वाङ्कुराणि यस्याः सा । प्राचा तु स्थूलाक्षिरिक्षुरिति प्रत्युदाहृतम् । तन्न । 'अक्ष्णोऽदर्शना'दित्यचो दुर्वारत्वात् । यदपि समासान्तविधेरनित्यत्वात्स न कृत इति कैश्चिद्व्याख्यातं, तदसारम् । एवं हि षजपि तथैव न भविष्यतीति प्रत्युदाहरणस्याऽसङ्गतिप्रसङ्गात् । **द्व्यङ्गुलेति** । मात्रचो 'द्विगोर्नित्यम्' इति लुक् । **नेतुरिति** । नेता—नायकः । नक्षत्रे यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरित्यर्थः ।

---

**बा.]** त्रिंशतोऽधिकानीति यावत् । **निस्त्रिंश इति** । समासादि पूर्ववत् । त्रिंशदधिकाङ्गुलिरित्यर्थः । न च गवां विंशतिर्गोविंशतिरित्यत्रातिप्रसङ्गः शङ्क्यः, 'अव्ययादे'रिति विशेषणादिति भाष्ये स्पष्टम् । नन्वेकाधिका विंशतिरेकविंशतिरित्यत्र 'सङ्ख्ययाव्यये'ति समासे सति 'बहुव्रीहौ सङ्ख्येये' इति डच्शङ्क्यः, 'अन्यत्राधिकलोपा'दिति वार्तिकादित्यास्तां तावत् । **बहुव्रीहौ** । **व्यत्ययेनेति** । 'सक्थ्यक्ष्णो'रिति षष्ठी पञ्चम्यर्थे, 'व्यत्ययो बहुल'मिति छन्दसि वचनादित्यर्थः । 'छन्दोवत्सूत्राणि भवन्ती'ति भाष्यम् । 'बहुव्रीहा'विति सप्तमी व्यत्ययेन पञ्चम्यर्थे । तदाह—**स्वाङ्गवाचीति** । **सक्थ्यक्ष्यन्तादिति** । बहुव्रीहिविशेषणत्वात्तदन्तविधिरिति भावः । **षच्स्यादिति** । समासान्तस्तद्धितश्चेति ज्ञेयम् । **दीर्घसक्थ इति** । 'षच्' । 'यस्येति चे'ति लोपः । **जलजाक्षीति** । जलजे इव अक्षिणी यस्या इति विग्रहः । समासे षचि 'नस्तद्धिते' इति टिलोपः । षित्त्वान्ङीष् । षित्त्वं ङीषर्थमिति भावः । **दीर्घसक्थि शकटमिति** । दीर्घे सक्थिनी=सक्थिसदृशावीषादण्डौ यस्येति विग्रहः । अत्र सक्थिशब्दार्थयोरीषादण्डयोः 'अद्रवं मूर्तिमत्स्वाङ्ग'मित्यादिस्वाङ्गलक्षणाऽभावान्न षजिति भावः । अत्र 'स्वाङ्गा'दित्यस्य प्रत्युदाहरणान्तरमाह—**स्थूलाक्षेति** । स्थूलानि अक्षाणि=पर्वग्रन्थयो यस्या इति बहुव्रीहिः । अस्वाङ्गत्वादिह न षजिति भावः । ननु षजभावेऽपि नान्तलक्षणङीपि स्थूलाक्षिणीति स्यादित्यत आह—**अक्ष्णोऽदर्शनादित्यजिति** । षचि तु षित्त्वलक्षणङीष्स्यादिति भावः । **अङ्गुलेर्दारुणि** । बहुव्रीहावित्यनुवृत्तस्य पञ्चम्यर्थे सप्तम्यन्तस्य अङ्गुल्या विशेषणात्तदन्तविधिरित्यभिप्रेत्याह—**अङ्गुल्यन्तादिति** । **पञ्चाङ्गुलं दार्विति** । षचि 'यस्येति चे'तीकारलोपः । ननु दारुणः कथमङ्गुलय इत्यत आह—**अङ्गुलिसदृशावयवमिति** । अङ्गुलिसदृशा अवयवा यस्येति विग्रहः । **धान्येति** । कुसूलादिस्थितधान्याद्याकर्षकमिति यावत् । **उच्यत इति** । 'लक्षणये'ति शेषः । **द्व्यङ्गुलेति** । 'प्रमाणे द्वयस'जिति विहितस्य मात्रचो 'द्विगोर्नित्य'मिति लुक् । अबहुव्रीहित्वादत्र न षजिति भावः ।

तर्हि 'द्व्यङ्गुलि'रिति स्यादित्यत आह-**तद्धितार्थे इति** । षचि तु ङीष् स्यादिति भावः । **द्वित्रिभ्यां** । 'ष'इति लुप्तप्रथमाकं पदम् । **द्विमूर्ध इति** । द्वौ मूर्धानौ यस्येति विग्रहः । **त्रिमूर्ध इति** । त्रयो मूर्धानो यस्येति विग्रहः । समासान्तः । 'नस्तद्धिते' इति टिलोपः । षचि अनुवर्तमाने षग्रहणं चित्स्वरनिवृत्त्यर्थम् । **नेतुरिति** । नक्षत्रे विद्यमानो यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरब्वक्तव्य इत्यर्थः । **नेता—नायकः** । **मृगो नेतेति** । मृगः=मृगशीर्षम् । रात्रिनेता

---

**शे.]** भावाच्च अव्ययादेरित्याश्रित्यान्यत्राधिकलोपादिति न वक्तव्यमिति चात्र भाष्ये उक्तमित्याहुः । **व्यत्ययेन षष्ठीति** । सप्तम्यप्येवम्, तदाह—**बहुव्रीहेरिति** । स्वाङ्गम्—अद्रवं मूर्तिमदित्यादि । षचः षो ङीषर्थः । तदुदाहरति—**जलजाक्षीति** । चित्त्वमन्तोदात्तत्वाय । तेन पूर्वपदप्रकृतिस्वरो न । **स्थूलाक्षेति** । अक्ष्यत्र पर्वग्रन्थिः । षचि हि ङीष्स्यात् । **अङ्गुलिसदृशेति** । दारुणोऽप्राणितया मुख्याङ्गुल्यसंभवादिति भावः । **द्व्यङ्गुलेति** । मात्रचो द्वयसचो वा 'द्विगोर्नित्यम्' इति लुक् । 'तत्पुरुषस्याङ्गुलेः' इत्येतत्तु अदारुणि चरितार्थमिति भावः । द्वन्द्वाव्ययीभावव्यावृत्तिरप्येतत्फलम् । **द्वित्रिभ्याम्** । षचि प्रकृते षविधानं द्विमूर्ध इत्यादौ 'द्वित्रिभ्यां पाद्दन्मूर्धसु' इति पाक्षिकान्तोदात्तत्वाऽभावे पूर्वपदप्रकृतिस्वरार्थम् । षचि हि चित्त्वसामर्थ्यात्पूर्वपदप्रकृतिस्वरं बाधित्वा नित्यमन्तोदात्तत्वं स्यात् । विकल्पस्तु अनित्यतया समासान्ताऽभावे चरितार्थः । अनित्यत्वञ्च मूर्धस्विति निर्देशादेव

मृगनेत्रा रात्रयः । पुष्यनेत्राः । **अन्तर्बहिर्भ्यां च लोम्नः** ।५।४।११७। आभ्यां लोम्नोऽप् स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः । **अञ्नासिकायाः संज्ञायां नसं चास्थूलात्** ।५।४।११८। नासिकान्ताद्बहुव्रीहेरच् स्यात्, नासिकाशब्दश्च नसं प्राप्नोति, न तु स्थूलपूर्वात् । **पूर्वपदात्संज्ञायामगः** ।८।४।३। पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां, न तु गकारव्यवधाने । द्रुरिव नासिकाऽस्य द्रुणसः । खरणसः । अगः किम् ? । ऋचामयनं ऋगयनम् । 'अणृगयनादिभ्यः' इति निपातनाण्णत्वाऽभावमाश्रित्य 'अग' इति प्रत्याख्यातं भाष्ये । अस्थूलात्किम् ? । स्थूलनासिकः । *** खुरखराभ्यां वा नस्** । खुरणाः । खरणाः । पक्षे—अजपीष्यते । खुरणसः । खरणसः । **उपसर्गाच्च** ।५।४।११९। प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच्, नासिकाया नसादेशश्च । असंज्ञार्थम् [इदं] वचनम् । उन्नता नासिका यस्य स उन्नसः । 'उपसर्गादनोत्परः' इति सूत्रं । तन्नङ्क्त्वा

त.] **मृगनेत्रा इति** । मृगः—मृगशीर्षनक्षत्रम् । चन्द्रो नेता यस्य मृगनक्षत्रस्य 'चन्द्रनेता मृग' इत्यत्र तु न भवति, इह हि नेतृशब्दान्तो बहुव्रीहिर्नक्षत्रे वर्तते न तु नेतृशब्द इति । **खुरखराभ्यामिति** । 'नासिकायाः' इति वर्तते । केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम् । **खुरणा इति** । 'अत्वसन्तस्ये'ति दीर्घः । **उपसर्गाच्च** । उपसर्गग्रहणं

बा.] चन्द्रः । तद्योगान्नक्षत्रस्यापि बोध्यम् । **मृगनेत्रा इति** । मृगनेतृशब्दादप् , ऋकारस्य यण् , रेफः, टाप् । **पुष्यनेत्रा इति** । पुष्यो नेता यासामिति विग्रहः । **अन्तर्बहिर्भ्यां च** । **अन्तर्लोम इति** । अन्तर्लोमानि यस्येति विग्रहः । अप् । टिलोपः । एवं बहिर्लोमः । **अञ्नासिकायाः** । 'अ'जिति च्छेदः । 'नासिकाया' इत्यस्य बहुव्रीहेर्विशेषणत्वात्तदन्तविधिमभिप्रेत्याह—**नासिकान्तादिति** । नसमित्यनन्तरं 'प्राप्नोती'त्यध्याहार्यम् । उपस्थितत्वान्नासिकाशब्द इति लभ्यते । तदाह—**नासिकाशब्दश्च नसं प्राप्नोतीति** । **पूर्वपदात्** । 'रषाभ्या'मनुवृत्तम् । पूर्वपदशब्देन पूर्वपदस्थं लक्ष्यते । 'रषाभ्या'मित्यनेन लब्धो रेफः षश्च प्रत्येकमन्वेति । तदाह—**पूर्वपदस्थान्निमित्तादिति** । रेफषकारात्मकादित्यर्थः । 'अग' इति पञ्चम्यन्तम् । गकारभिन्नात्परस्येत्यर्थः । गकारात्परस्य नेति यावत् । तदाह—**न तु गकारव्यवधाने इति** । अनेन 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्यनुवृत्तिः सूचिता । अन्यथा 'अग' इत्यस्य वैयर्थ्यं स्यात् । खण्डपदत्वादप्राप्तौ वचनमिदम् । **द्रुरिवेति** । वृक्ष इवेत्यर्थः । **द्रुणस इति** । बहुव्रीहेरच् । नासिकाशब्दस्य नसादेशः । णत्वम् । **ऋगयनमिति** । 'ऋवर्णा'दिति वार्तिकस्याप्यत्रानुवृत्त्या णत्वं प्राप्तं गकारेण व्यवधानान्न भवतीति भावः । अत्र 'ऋचामयन'मिति विग्रहप्रदर्शनं चिन्त्यं, वाक्येन संज्ञानवगमात् । नच 'रघुनाथ' इत्यादौ संज्ञायां णत्वं शङ्क्यम् , णत्वेन चेत्संज्ञा गम्यत इत्यर्थात् । इह तु कृते णत्वे संज्ञात्वभङ्गापत्तेर्न णत्वम् । अत एव 'भूनोऽसंज्ञाया'मिति सूत्रभाष्ये 'य एते संज्ञायामिति विधीयन्ते, तेषु नैवं विज्ञायते संज्ञायामभिधेयायामिति । किं तर्हि ? । प्रत्ययान्तेन चेत्संज्ञा गम्यते' इत्युक्तम् । **खुरेति** । खुरखराभ्यां परस्य नासिकाशब्दस्य बहुव्रीहौ संज्ञायां नसादेशो वेति वक्तव्यमित्यर्थः । प्रकृतत्वादेव सिद्धे नसादेशवचनमच्प्रत्ययानुवृत्तिनिवृत्त्यर्थम् । **खुरणा इति** । खुराविव नासिके यस्येति विग्रहः । नसादेशः । 'पूर्वपदात्संज्ञाया'मिति णत्वम् । 'अत्वसन्तस्ये'ति दीर्घः । **खरणा इति** । खररूपा नासिका यस्येति विग्रहः । पक्षे 'खुरनासिक' इति 'खरनासिक' इति च न भवतीत्याह—**पक्षेऽजपीष्यते इति** । अच्प्रत्ययसहितो नसादेश इत्यर्थः । भाष्ये त्विदं न दृश्यते । **उपसर्गाच्च** । नन्वञ्नासिकाया इत्येव सिद्धे किमर्थमिदमित्यत आह—**असंज्ञार्थमिदमिति** । **उपसर्गादनोत्पर इति सूत्रमिति** । तत्र हि 'नश्च धातुस्थो'इति सूत्रान्नसिति लुप्तषष्ठीकम-

शे.] ज्ञायते । अन्यथा प्रक्रमाऽभेदाय मूर्द्धन्वित्येव वदेदिति 'द्वित्रिभ्याम्' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । **द्वित्रिभ्या**मित्यस्य ताभ्यां परो यो मूर्द्धन्शब्दस्तदुत्तरपदकबहुव्रीहेरित्यर्थात्समासान्ते कृतेऽपि तत्प्रवृत्तिरित्यलम् । 'अह्नोऽदन्तात्' इत्यन्तग्रहणाज्ज्ञापकादत्र प्रकरणे वर्णग्रहणे तदन्तग्रहणं नास्तीत्याशयेनाह—**पूर्वपदस्थादिति** । 'समानपदे' इत्यस्य अखण्डपदे इत्यर्थात्समासेऽप्राप्ते विद्ध्यर्थमिदम् । **भाष्ये इति** । प्रागयनम् , ऋगयनमित्यादीनान्त्वनभिधानमिति भावः । रघुनाथादिशब्दे तु णत्वे सञ्ज्ञात्वभङ्गापत्तेर्न णत्वम् । कृतणत्वेन चेत्सञ्ज्ञारूढ्यर्थौ गम्यत इति सूत्रार्थः । तदुक्तं 'भूनोऽसञ्ज्ञायाम्' सूत्रे भाष्ये—'य एते सञ्ज्ञायां विधीयन्ते तेषु नैवं विज्ञायते सञ्ज्ञायामभिधेयायामिति, किं तर्हि ?, प्रत्ययान्तेन चेत्सञ्ज्ञा गम्यते' इति । 'प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्ययः' इति कैयटः । रूढिः=रूढ्यर्थः । भाष्ये प्रत्ययान्तेनेति तत्तच्छास्त्रविधेयकार्योपलक्षणम् । एतन्मूलकमेव पठ्यतेऽभियुक्तैः—'सञ्ज्ञाशब्दा अनादिप्रयुक्ता नियतानुपूर्वीका एव सिद्धास्तत्रेदानीं कस्तद्विपरीतं प्रयोक्तुमर्हति' इति । **खुरखराभ्याम्** । अस्यादेशस्यैव स्थानिद्वारा समासान्तत्वेनाऽशेषत्वात् 'शेषाद्विभाषा' इति कबत्र विषये न । **पक्षेऽजपीति** । भाष्ये त्वेतन्न दृश्यते । **उपसर्गाद** । अनोत्किम् ? । प्रनो मुखतमित्यत्र णत्वं मा भूदिति । **तन्नङ्क्त्वेति** । 'अनोत्पर' इत्य-

भाष्यकार आह—**उपसर्गाद्बहुलम्** ।८।४।२८। उपसर्गस्थान्निमित्तात्परस्य नसो नस्य णः स्याद्बहुलम् । प्रणसः । *वेर्ग्रो वक्तव्यः । विगता नासिका यस्य [ सः ] विग्रः । *ख्यश्च । विख्यः । कथं तर्हि 'विनसा हतबान्धवे'ति भट्टिः ? । विगतया नासिकयोपलक्षितेति व्याख्येयम् । **सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः** ।५।४।१२०। एते बहुव्रीहयोऽच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्वः । शोभनं दिवाऽस्य सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव पादावस्य एणीपदः । अजपदः । प्रोष्ठो गौः, तस्येव पादावस्य प्रोष्ठपदः । **नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्** ।५।४।१२१। अच् स्यात् । अहलः । अहलिः ।

---

त.] प्रादीनामुपलक्षणं, नासिकाशब्दस्याऽक्रियार्थत्वेन तं प्रत्युपसर्गत्वाऽयोगात् । न च क्रियायोगाभावेऽप्युपसर्गत्वमस्त्विति शङ्क्यं, सावके [इति] अधिसावकमित्यव्ययीभावे 'उपसर्गात्सुनोती'ति सस्य षत्वप्रसङ्गात् । तदाह-**आदेरिति** । **उपसर्गादनोत्परः** । अनोत्परः किम् ? । प्रनो मुञ्चतमित्यत्र णत्वं मा भूत् । **तद्भाष्येति** । 'अनोत्पर' इत्यपनीय बहुलग्रहणं च कृत्वेत्यर्थः । अन्यथा प्रणो नयेत्यादावव्याप्तिः, प्र नः पूषेत्यादौ त्वतिव्याप्तिः प्रसज्येतेति भावः । **प्रणस इति** । प्रगता नासिका अस्येति विग्रहः । **कथं तर्हीति** । प्रत्यययोरन्यतरेण भाव्यमिति प्रश्नः । **नासिकयेति** । तथा च विनसेति न प्रथमान्तं, किं तु 'पद्दन्' इति नसादेशे तृतीयान्तमिति भावः । **शोभनं प्रातरस्येति** । अधिकरणशक्तिप्रधानस्य सामानाधिकरण्याऽसम्भवात्प्रातःशब्देन प्रातस्तनं कर्म लक्ष्यत इत्याहुः । 'प्रातःकल्प'मित्यत्रेव प्रातःशब्दो वृत्तिविषये शक्तिमत्पर इति न सामानाधिकरण्यानुपपत्तिरित्यन्ये । **एणीपदादिषु** निपातनात्पुंवद्भावः । **नञ्दुःसुभ्यो** । नन्वत्र हलिग्रहणं व्यर्थं, हलशब्दमादायाऽहल इति प्रयोगसम्भवात् । नच महद्धलं हलिः, तद्रहितोऽहलिस्तत्रैवार्थेऽहल इति प्रयोगार्थं तद्ग्रहणमिति वाच्यम्, अहल इत्यत्र महद्धलरहित इत्यर्थाऽप्रतीतेः । न चैवमप्यन्तोदात्तार्थमच्प्रत्ययविधानमावश्यकम्, अन्यथाऽहल इत्यत्र पूर्वपदप्रकृतिस्वरः स्यादिति शङ्क्यं, 'नञ्सुभ्या'मित्यनेनान्तोदात्तत्वविधानात् । अत्राहुः—शैषिकस्य कपो निवृत्त्यर्थं, 'दुर्हलः' इत्यत्रान्तोदात्तत्वार्थं च तदिति ।

---

बा.] नुवर्तते । 'रषाभ्यां नो णः' इत्यनुवर्तते । उपसर्गस्थाद्रेफषकारात्परस्य नसो नस्य णः स्यात्, ओत्परस्तु नकारो णत्वं न प्राप्नोतीत्यर्थः । खण्डपदस्थत्वादप्राप्ताविदं सूत्रम् । 'प्र ण आयूंषि तारिषत्' इत्याद्युदाहरणम् । अनोत्परः किम् ? । 'प्र नो मुञ्चतम्' । अत्र ओत्परकत्वान्न णत्वमिति स्थितिः । **तद्भाष्यस्थेति** । 'अनोत्परः' इत्यपनीय तत्स्थाने 'बहुल'मिति च कृत्वा भाष्यकार आहेत्यर्थः । तथाच फलितं सूत्रमाह-**उपसर्गाद्बहुलं** । **निमित्तादिति** । रेफाषकारात्मकादित्यर्थः । 'उपसर्गादनोत्परः' इति यथाश्रुते तु 'प्र णो नय' इत्यादावव्याप्तिः, 'प्र नः पूषा' इत्यादावतिव्याप्तिश्चेति भावः । **प्रणस इति** । प्रगता नासिका यस्येति विग्रहः । 'उपसर्गाच्चे'त्यच्, नासिकाया नस् । 'उपसर्गाद्बहुल'मिति णत्वमिति भावः । **वेरिति** । वेः परो यो नासिकाशब्दः स ग्रादेशं प्राप्नोतीति भावः । **विग्र इति** । विगता नासिका यस्येति विग्रहः, प्रकृतवार्तिकेन नासिकाशब्दस्य ग्रादेश इति भावः । विगता नासिका यस्येति विग्रहे अचि नसादेशे टापि च विनसेति भट्टिप्रयोगो न युज्यते, ग्रादेशस्यास्य नसादेशं प्रत्यपवादत्वादित्याक्षिपति-**कथं तर्हीति** । समाधत्ते-**विगतयेति** । विगता नासिका । प्रादिसमासः । अबहुव्रीहित्वान्न ग्रादेशः । किंतु टायां 'पद्द'न्निति नसादेशे विनसेति तृतीयान्तं रूपम् । 'उपलक्षिते'त्यध्याहार्यमिति भावः । **सुप्रात** । **सुप्रात इति** । अच्प्रत्ययः । 'अव्ययानां भमात्रे टिलोपः' । **सुश्व इति** । अच् । पूर्ववट्टिलोपः । **सुदिव इति** । शोभनं दिवा यस्येति विग्रहः । 'दिवे'त्याकारान्तमव्ययम् । 'अव्ययानां भमात्रे टिलोप' इति टिलोपः । **शारिकुक्ष इति** । शारिः—पक्षिविशेषः । अचि 'यस्येति चे'तीकारलोपः । **चतस्रोऽश्रय इति** । कोणा इत्यर्थः । अचि 'यस्येति चे'तीकारलोपः । **एण्या इवेति** । एणी—मृगी । **अजपद इति** । अजः-छागः, तस्येव पादावस्येति विग्रहः । एणीपदादिषु अच् निपातनात् । 'पादः पत्' । **नञ्दुःसुभ्यः** । शेषपूरणेन सूत्रं व्याचष्टे—**अच्स्यादिति** । **अहलः, अहलिरिति** । अविद्यमानो हलिर्यस्येति विग्रहः । हलिशब्द इदन्तो हलपर्यायः । तदन्तादचि 'यस्येति चे'तीकारलोपे तदभावे च रूपम् । यद्यपि हलशब्देन हलिशब्देन च रूपद्वयं सिद्धन्तथापि अनुक्तसमासान्तत्वाऽभावादत्र न कप् । **असक्थः, असक्थिरिति** । अविद्यमानं सक्थि यस्येति

---

शे.] पनीय बहुलग्रहणं कृत्वेत्यर्थः । अन्यथा प्रणो नयेत्यादावव्याप्तिः, प्र नः पूषेत्यादावतिव्याप्तिश्च स्यादिति भावः । अत्राप्युपसर्गग्रहणं प्राग्वदेव । **प्रणस इति** । प्रगता नासिका यस्येति विग्रहः । **विगतया नासिकयेति** । तत्र च 'पद्दन्' इति नसादेश इति भावः । **सुप्रातादौ** 'अव्ययानां भमात्रे' इति टिलोपः । **शारिकुक्षे** 'यस्य' इति लोपः । कुक्षीतीकारान्तपाठस्त्वपाठः, अच्प्रकरणविरोधात् । **चतुरश्रेति** तालव्यमध्यः । एणीपदादिषु पुंवद्भावो निपातनात् । **अहल इति** । अस्य वैकल्पिकत्वेऽप्यनुक्तसमासा-

असक्थः । असक्थिः । एवं दुःसुभ्याम् । शक्त्योरिति पाठान्तरम् । अशक्तः । अशक्तिः । **नित्यमसिच् प्रजामेधयोः ।५।४।१२२।** नञ्दुःसुभ्य इत्येव । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः । **धर्मादनिच्केवलात् ।५।४।१२४।** केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात् । कल्याणधर्मा । केवलात्किम् ? । परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ माभूत् । स्वशब्दो हीह न केवलं पूर्वपदं, किंतु मध्यमत्वादापेक्षिकम् । 'संदिग्धसाध्यधर्मे'त्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः । एवं तु

त.] **शक्त्योरिति** । आचार्येण केचिच्छात्रा 'हलिशक्त्यो'रिति पाठिता इति भावः । **नित्यमसिच्** । अकारोच्चारणं भत्वसम्पादनार्थम्, तेन सुप्रजसावित्यादौ 'यस्येति चे'त्यकारलोपः सिध्यति । अस्वरितत्वादेव अन्यतरस्याङ्ग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो विधानार्थम् । तेन 'अल्पमेधस' इति सिध्यतीति वृत्तिकारादयः । **धर्मादनिच्** । अनिचोऽकारश्चिन्त्यप्रयोजन इत्येके । अन्ये तु धर्मं करोत्याचष्टे वा, 'तत्करोती'ति ण्यन्तात्क्विपि धर्म्, परमो धर्म् यस्य सः परमधर्म् । एकदेशविकृतस्यानन्यत्वाद्धर्मशब्दोऽयमित्यकारोच्चारणमिह सप्रयोजनमेवेत्याहुः । बहुव्रीहिणात्र पूर्वपदमाक्षिप्यत इत्यनुपदमेव वक्ष्यति । तच्च 'केवला'दित्यनेन विशेष्यत इत्याह—**केवलात्पूर्वपदादिति** । प्राचा तूत्तरपदमपि विशेषितम् । प्रसादकृतापि केवलादिति धर्मशब्दस्य पूर्वपदस्य च विशेषणमिति व्याख्यातम्, तदुभयमपि चिन्त्यम् । आवृत्तौ मानाऽभावात्, धर्मपदविशेषणे प्रयोजनाऽभावाच्च । न च धर्मशब्दान्तं यत्रोत्तरपदं तद्व्यावृत्तिः फलमिति वाच्यं, तत्र बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वस्य धर्मपदेऽसम्भवादेवाऽदोषत्वात् । **मध्यमत्वादिति** । न च 'सर्वनामसङ्ख्ययो'रिति स्वशब्दस्य पूर्वनिपातः शङ्क्यः, आहिताग्न्यादेराकृतिगणत्वादिति हरदत्तादिभिः समाहितत्वात् । **आपेक्षिकमिति** । नन्वत एव केवलग्रहणं व्यर्थं, पूर्वशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यमपदव्यावृत्तिसम्भवादिति चेत् । अत्राहुः—पूर्वपदाक्षेपे तात्पर्यग्राहकत्वेन केवलपदस्य सार्थकत्वादिति । **कर्मधारयपूर्वपद इति** । नन्वत्राऽनिच् दुर्लभः, 'केवला'दित्यस्य समासानात्मकत्वादित्यर्थादिति चेत्, मैवम् । केवलग्रहणस्य समासानात्मकपूर्वपदपरत्वे मानाऽभावात् । 'निवृत्तिधर्मा हि स्थानी भवती'त्यादिप्रयोगविरोधाच्च । अस्मदुक्तार्थस्तु 'धृञ् धारणे' इति धातौ माधवग्रन्थे स्पष्टः । एतेन साध्यो धर्मोऽस्येति साध्यधर्मा, संदिग्धश्चासौ

बा.] विग्रहः । **एवं दुःसुभ्यामिति** । दुर्हलः, दुर्हलिः । दुःसक्थः, दुःसक्थिः । **शक्त्योरिति** । 'हलिशक्त्योः' इति केचित्पाणिनीयाः पठन्तीत्यर्थः । केचिच्छिष्याः पाणिनिना तथा पाठिता इति वदन्तीति भावः । **नित्यमसिच् । नञ्दुःसुभ्य इत्येवेति** । पूर्वसूत्रादनुवर्तत इति भावः । एतेभ्यः पराभ्यां प्रजामेधाशब्दाभ्यां नित्यमसिच्समासान्तः स्यात्, स तद्धित इत्यर्थः । असिचश्चकार इत् । इकार उच्चारणार्थः । 'अन्यतरस्या'मित्यनुवृत्तिनिवृत्त्यर्थं नित्यग्रहणम् । अस्वरितत्वादेव तदनुवृत्त्यभावे सिद्धे स्पष्टार्थमिति तत्त्वम् । **अप्रजा इति** । अविद्यमाना प्रजा यस्येति विग्रहः । 'नञोऽस्त्यर्थाना'मिति समासः । असिचि 'यस्येति चे'त्यकारलोपादप्रजस्शब्दात्सुबुत्पत्तिः । सौ तु 'अत्वसन्तस्ये'ति दीर्घः । 'हल्ङ्या'बिति सुलोपः । यद्यप्यकारं विना सिचि विहितेऽपि सिद्धमिदन्तथापि सिच्यभत्वेन आकारलोपाऽभावादप्रजास्शब्दात्सुबुत्पत्तौ, प्रथमैकवचने 'अप्रजा' इति रूपसिद्धावपि अप्रजसाविति न स्यात् । किंतु अप्रजासावित्यादि स्यात् । तस्मादकारोच्चारणं भत्वसंपादनार्थमावश्यकम् । **दुष्प्रजा इति** । दुर्गता प्रजा यस्येति विग्रहः । 'प्रादिभ्यो धातुजस्ये'ति समासः । असिजादि पूर्ववत् । 'इदुदुपधस्ये'ति षत्वम् । **सुप्रजा इति** । शोभना प्रजा यस्येति विग्रहः । असिजादि पूर्ववत् । **अमेधा इत्यादि** । अविद्यमाना मेधा यस्येति विग्रहः । असिजादि पूर्ववत् । केचित्तु नित्यग्रहणमन्यतो विधानार्थं, तेनाल्पमेधस इत्यादि सिध्यतीत्यप्याहुः । **धर्मादनिच्केवलात्** । 'पूर्वपदा'दित्यध्याहृत्य 'केवला'दित्यस्य तद्विशेषणत्वमाह—**केवलात्पूर्वपदादिति** । अनिचि चकार इत् । इकार उच्चारणार्थः । मध्यमपदत्वानाक्रान्तत्वं केवलपूर्वपदत्वम् । **कल्याणधर्मेति** । कल्याणो धर्मो यस्येति विग्रहः । अनिचि 'यस्येति चे'त्यकारलोपः । **परम इति** । परमः स्वो धर्मो यस्येति बहुव्रीहौ परमस्वधर्मशब्दे स्वशब्दस्य धर्मशब्दापेक्षया पूर्वपदत्वात्ततः परमस्वधर्मशब्दादप्यचः प्राप्तौ तन्निवृत्त्यर्थं केवलग्रहणमिति भावः । केवलग्रहणे कृते तु न दोष इत्याह-**स्वशब्दो हीह न केवलं पूर्वपदमिति । किं त्विति** । किं तु स्वशब्दो धर्मपदापेक्षया पूर्वत्वात्पूर्वपदं, न तु केवलं, मध्यमत्वात् । केवलशब्देन च पदान्तरराहित्य-

शे.] न्तत्वाऽभावादत्र न कप् । **नित्यम** । सरयेत्त्ववारणाय चस् न कृतः । अकारोच्चारणं सुप्रजसावित्यर्थम् । नित्यग्रहणं स्पष्टार्थमिति भाष्यस्वरसः । **धर्माद** । **केवलात्किमिति** । बहुव्रीहिणा पूर्वपदाक्षेपे तस्य च समासप्रथमावयवे रूढत्वेन ततः परत्वाऽभावेनैव त्रिपदबहुव्रीहौ न दोष इति प्रश्नः । उत्तरन्तु पूर्वपदशब्दस्य तत्प्रथमावयवे रूढौ न मानं । तदाह-**आपेक्षिकमिति** । परमस्वधर्म इत्यत्र स्वशब्दस्य सर्वनामसङ्ख्ययोः इति पूर्वनिपातो न, आहिताग्न्यादित्वात् । एवमेव जहत्स्वार्थेत्यत्रापि । केवल-

'परमस्वधर्मे'त्यपि साध्वेव, 'निवृत्तिधर्मा' 'अनुच्छित्तिधर्मे'त्यादिवत्। पूर्वपदं तु बहुव्रीहिणाऽऽक्षिप्यते। **जम्भा सुहरिततृणसोमेभ्यः** ।५।४।१२५। जम्भेति कृतसमासान्तं निपात्यते। जम्भो भक्ष्ये दन्ते च। शोभनो जम्भोऽस्य सुजम्भा। हरितजम्भा। तृणं भक्ष्यं यस्य, तृणमिव दन्ता यस्येति वा तृणजम्भा। सोमजम्भा। स्वादिभ्यः किम्? । पतितजम्भः। **दक्षिणेर्मा लुब्धयोगे** ।५।४।१२६। दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा मृगः। व्याधेन कृतव्रण इत्यर्थः। **इच् कर्मव्यतिहारे** ।५।४।१२७। कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात्समासान्तः। केशाकेशि। मुसलामुसलि। **द्विदण्ड्यादिभ्यश्च** ।५।४।१२८। तादर्थ्ये चतुर्थ्येषा। एषां सिद्ध्यर्थमिच् प्रत्ययः स्यात्। द्वौ दण्डौ यस्मिन्प्रहरणे तत्—द्विदण्डि प्रहरणम्। द्विमुसलि। उभाहस्ति।

त.] साध्यधर्मा चेति विग्रहः। स च सन्देहः साध्यधर्मद्वारक एव पर्यवस्यतीति केषाञ्चिद्व्याख्यानं परास्तम्। उक्तरीत्यैव साध्यस्य साक्षात्सन्दिग्धत्वलाभे तत्समर्थनप्रयासस्य व्यर्थत्वात्। **साध्वेवेति**। परमश्चासौ स्वश्च परमस्वः, स धर्मो यस्येति यदा विगृह्यते तदेत्यर्थः। **दक्षिणेर्मा**। लुब्धो-व्याधः। तद्योगादेवेर्मेनिष्पत्ताविदं निपातनं नान्यदेत्यर्थस्तदेतदाह—**व्याधेनेति**। 'वाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा' इति प्रयोगस्त्वौपचारिक इति कथंचिन्नेयः। **केशाकेशीति**। 'तत्र तेनेद'मिति कर्मव्यतिहारे बहुव्रीहिः। इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वेऽव्ययत्वम्। नन्वेवमिचश्चित्करणं व्यर्थम्, अव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधात्समासस्वरेणान्तोदात्तत्वसिद्धेः। अत्राहुः—विशेषणार्थं तदावश्यकमेव। तिष्ठद्गुप्रभृतिषु इकारमात्रपाठे हि सुगन्धिरित्यादावतिव्याप्तिप्रसङ्गात्। किञ्चात्राऽव्ययीभावसंज्ञया बहुव्रीहिसंज्ञा न बाध्यते, किं तु द्वयोः समावेश एव, उपजीव्यविरोधस्याऽन्याय्यत्वात्। एवं च स्वरार्थमपि चित्त्वं कर्तव्यमेवेति। **द्विदण्डीति**। समुदायनिपातनस्य विषयविशेषपरिग्रहार्थत्वाद्द्विदण्डा शालेत्यत्र त्विज् न भवति। **उभाहस्तीत्यादि**। इह निपातनादेवाऽयचः पाक्षिकत्वम्।

बा.] वाचिना मध्यमपदत्वानाक्रान्तत्वलाभादित्यर्थः। इदं च 'इजादे'रिति सूत्रभाष्ये स्पष्टम्। एवं च त्रिपदबहुव्रीहौ परमस्वधर्म इत्येव भवति। नत्वनिच्। 'सर्वनामसङ्ख्ययोरुपसङ्ख्यान'मिति स्वशब्दस्य पूर्वनिपातस्तु 'वाहिताग्न्यादिषु' इति पाक्षिकत्वान्न भवति। नन्वेवं सति सन्दिग्धः साध्यो धर्मो यस्य स 'सन्दिग्धसाध्यधर्मे'त्यत्र कथमनिच्। अत्र हि सन्दिग्धेति केवलं पूर्वपदं, धर्मशब्दस्तस्मात्परो न भवति। यस्मात्साध्यशब्दात्परो धर्मशब्दः, तत्तु न पूर्वपदत्वं, मध्यमपदत्वादित्यत आह-**सन्दिग्धेति**। सन्दिग्धश्चासौ साध्यश्चेति कर्मधारयः। सन्दिग्धसाध्यो धर्मो यस्येति कर्मधारयगर्भो बहुव्रीहिः। एवञ्च सन्दिग्धसाध्यशब्दस्य केवलपूर्वपदत्वात्तत्राऽनिच्निर्बाध इति भावः। **एवं चेति**। उक्तरीत्या परमश्चासौ स्वश्च परमस्वः, परमस्वो धर्मो यस्येति कर्मधाराश्रयणे तु केवलपूर्वपदत्वादनिच्। परमस्वधर्मेत्यपि साध्वेवेत्यर्थः। **निवृत्तीति**। निवृत्तिः धर्मो यस्येति, अनुच्छित्तिः धर्मो यस्येति च विग्रहः। अत्र समासे निवृत्तिशब्दस्य अनुच्छित्तिशब्दस्य च केवलपूर्वपदत्वाद्यथायोग्यमनिजिति भावः। नन्विह सूत्रे पूर्वपदशब्दस्याऽश्रवणादनुवृत्त्यभावाच्च कथं पूर्वपदादिति लभ्यत इत्यत आह—**पूर्वपदं त्विति**। **जम्भा सुहरित**। 'जम्भे'ति नकारान्तं पदम्। तदाह-**जम्भेति कृतसमासान्तमिति**। अनिजन्तमित्यर्थः। सु-हरित-तृण-सोम-इत्येतेभ्यः परो यो जम्भशब्दस्तदन्ताद्बहुव्रीहेरनिच्प्रत्ययो निपातित इति भावः। **जम्भो भक्ष्ये दन्ते चेति**। अत्र कोशो मृग्यः। **सुजम्भेति**। सुजम्भशब्दादनिचि 'यस्येति चे'त्यकारलोपः। **हरितजम्भेति**। हरितो जम्भो यस्येति विग्रहः। **तृणमिवेति**। तृणशब्दस्य दन्तवाचिना जम्भशब्देन सामानाधिकरण्यलाभाय तृणशब्दस्य तत्सदृशे लक्षणेति भावः। **सोमजम्भेति**। सोमः=चन्द्रः, स इव शुभ्रा जम्भाः=दन्ता यस्येति विग्रहः। सोमः=सोमलता वा, सैव जम्भः=भक्ष्यं यस्येति विग्रहः। **पतितजम्भ इति**। पतिता जम्भाः=दन्ता यस्येति विग्रहः। **दक्षिणेर्मा**। लुब्धो—व्याधः, तद्योगे 'दक्षिणेर्मा' इत्यनिच्प्रत्ययः, बहुव्रीहिश्च निपात्यते। दक्षिणे ईर्मं यस्येति विग्रहः। ईर्ममित्यस्य व्याख्यानं 'व्रण'मिति। व्यधिकरणत्वेऽपि बहुव्रीहिर्निपातनात्। अनिचि 'यस्येति चे'त्यकारलोपे 'दक्षिणेर्मे'ति रूपम्। लुब्धशब्दं विवृण्वन्नाह-**व्याधेनेति**। रोगादिना व्रणे तु दक्षिणेर्म इत्येवेति भावः। **इच्कर्मव्यतिहारे। समासान्त इति**। तद्धित इत्यपि ज्ञेयम्। **केशाकेशीति**। अत्र प्रक्रिया प्रागेव प्रदर्शिता। **द्विदण्ड्यादिभ्यश्च**। द्विदण्ड्यादिषु इदन्तानामेव निपातनात्तेभ्यः परत्वेन इच्प्रत्ययविधिरनर्थक इत्याशङ्क्य नेयं पञ्चमीत्याह-**तादर्थ्ये चतुर्थ्येषेति**। **द्वौ दण्डाविति**। कर्मव्यतिहाराभावेऽपि वैरूप्येऽपि बहुव्रीहिरिच्प्रत्ययश्च निपात्यते। **द्विदण्डीति**। दण्डादण्डीतिवत् प्रक्रिया। कर्मव्यतिहाराऽभावात् पूर्वपदस्य न दीर्घ इति विशेषः। **द्विमुसलीति**। द्वे मुसले यस्मिन् प्रहरणे इति विग्रहः। **उभाहस्ति**।



शे.] त्वञ्च सजातीयान्याऽभाववत्त्वम्। इदञ्च इजादेः इति सूत्रे भाष्ये स्पष्टम्। असिचोऽकारोऽदृष्टार्थ कृतसमासान्तमिति।

उभयाहस्ति । **प्रसंभ्यां जानुनोर्ज्ञुः** ।५।४।१२९। आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ । प्रगते जानुनी यस्य प्रज्ञुः । संज्ञुः । **ऊर्ध्वाद्विभाषा** ।५।४।१३०। ऊर्ध्वज्ञुः । ऊर्ध्वजानुः । **धनुषश्च** ।५।४।१३२। धनुरन्तस्य बहुव्रीहेरनङादेशः स्यात् । [ द्विधन्वा ] । शार्ङ्गधन्वा । **वा संज्ञायाम्** ।५।४।१३३। शतधन्वा । शतधनुः । **जायाया निङ्** ।५।४।१३४। जायान्तस्य बहुव्रीहेर्निङादेशः स्यात् । **लोपो व्योर्वलि** ।६।१।६६। वकारयकारयोर्लोपः स्याद्वलि । पुंवद्भावः । युवतिर्जाया यस्य युवजानिः । **गन्धस्येदुत्पूतिसुसुरभिभ्यः** ।५।४। १३५। एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात् । उद्गन्धिः । पूतिगन्धिः । सुगन्धिः । सुरभिगन्धिः । *गन्धस्येत्त्वे तदेकान्तग्रहणम् । एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः । सुगन्धि पुष्पं सलिलं च । सुगन्धिर्वायुः ।

---

त.] **प्रसंभ्याम्** । जानुशब्दस्यैकत्वेऽप्युपपदनिबन्धनं द्वित्वमाश्रित्य जानुनोरिति द्विवचननिर्देशः, तत्फलं तु स्थान-षष्ठीत्वस्फुटीकरणम् । 'जानुनः' इत्युक्ते तु किमियं पञ्चमी, प्रत्ययाधिकारात् ज्ञुरपि प्रत्यय इत्येवं सन्देहः स्यात्, तदेतद्ध्वनयन्नाह—**जानुशब्दयोर्ज्ञुरादेश इति** । **शार्ङ्गधन्वेति** । कथं तर्हि 'स्वलावण्याशंसाधृतधनुषमह्नाय तृणव'दिति पुष्पदन्तप्रयोग इति चेदत्राहुः—समासान्तविधेरनित्यत्वान्नात्रानुपपत्तिः । अनित्यत्वे प्रमाणं त्वश्वादिगणे राजन्शब्दपाठः । स हि 'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तार्थः । 'राजाहःसखी'ति टचो नित्यत्वे तु किं तेनेति । **लोपो व्योर्वलि** । 'व्योर्लोप' इति वक्तव्ये 'वेरपृक्तलोपाद्वलिलोपः पूर्वविप्रतिषेधेन' इति ज्ञापयितुमादौ विधेय-निर्देशः कृतः । तेन सुखीयतेः क्विपि सुखीरिति सिद्धम् । **गन्धस्येत्** । तकार उच्चारणार्थ इत्याशयेनाह—**इकारो-ऽन्तादेश इति** । 'आदेः परस्ये'तीह न भवति, 'समासान्ताः' इत्यधिकारात् । अत्र केचिदाहुः—इकारस्य प्रत्ययत्वेऽपि न क्षतिः, 'यस्येति [चे'ति] लोपेनोद्गन्धिरित्यादिरूपसिद्धेः । न च 'तित्स्वरित'मित्यन्तस्वरितत्वापत्तिर्न शङ्क्या, तकारस्योच्चारणार्थत्वाभ्युपगमात् । नापि षष्ठीनिर्देशादादेशत्वमेव न प्रत्ययत्वमिति वाच्यं, 'गापोष्ट'गित्या-दिप्रत्ययविधिष्वपि षष्ठीदर्शनादिति । **अविभागेनेति** । एवं च गुणवाचिन एव ग्रहणं, न तु द्रव्यवाचिन इति

---

बा.] **उभयाहस्तीति** । उभौ हस्तौ यस्मिन् प्रहरण इति विग्रहः । 'उभयोऽन्यत्रे'ति नित्यमयचि प्राप्ते निपातनेन विकल्प्यते । कर्मव्यतिहाराभावेऽपि दीर्घश्च । **प्रसंभ्यां** । **जानुशब्दयोरिति** । 'प्र' 'सम्' इति पूर्वपदद्वित्वादुत्तरप-दभूतजानुशब्दस्यापि द्वित्वं बोध्यम् । 'जानुन' इत्युक्ते तु 'प्रत्ययः, परश्चे'त्यधिकारात् पञ्चम्यन्तत्वसंभवाज्ज्ञोः प्रत्य-यत्वं च सम्भाव्येत । तस्यादेशत्वसिद्धये षष्ठीद्विवचननिर्देशः । तदाह—**ज्ञुरादेश इति** । **प्रज्ञुरिति** । 'प्रादिभ्यो धातुजस्ये'ति समासः । **संज्ञुरिति** । सङ्गते जानुनी यस्येति विग्रहः । **ऊर्ध्वाद्विभाषा** । ऊर्ध्वशब्दात् परो यो जानुशब्दस्तस्य ज्ञुरादेशो वा स्यात्, बहुव्रीहावित्यर्थः । **ऊर्ध्वज्ञुरिति** । ऊर्ध्वे जानुनी यस्येति विग्रहः ।

**धनुषश्च** । 'ऊधसोऽनङि'ति पूर्वसूत्रं स्त्रीप्रत्ययाधिकारे व्याख्यातं, तस्मादनङित्यनुवर्तते । तदाह-**अनङादेश इति** । ङित्त्वादन्तादेश इति भावः । **द्विधन्वेति** । द्वे धनुषी यस्येति विग्रहः । समासे द्विधनुशब्दे सकारस्य अनङादेशः । ङकार इत् । अकार उच्चारणार्थः । उकारस्य यणिति भावः । **शार्ङ्गधन्वेति** । शृङ्गस्येदं शार्ङ्गं । 'तस्येद'मित्यण्, तत् धनुर्यस्येति विग्रहः । समासे शार्ङ्गधनुःशब्दे सकारस्यानङ्, ङकार इत्, अकार उच्चार-णार्थः, उकारस्य यणिति भावः । महिम्नःस्तवे 'स्वलावण्याशंसाधृतधनुषमि'ति प्रयोगस्त्वार्षः । **वा संज्ञायां** । 'धनुषश्च' इत्युक्तोऽनङ् संज्ञायां वा स्यादित्यर्थः । **शतधन्वेति** । शतधन्वा नाम राजविशेषः स्यमन्तकोपाख्याने प्रसिद्धः । **जायाया निङ्** । **आदेश इति** । 'प्रत्ययः, परश्चे'त्यधिकारस्थत्वेऽपि ङित्त्वादन्तादेशोऽयमिति भावः ।

**लोपो व्योर्वलि** । 'व्' 'य्' अनयोर्द्वन्द्वात् षष्ठीद्विवचनम् । तदाह—**वकारयकारयोरिति** । **पुंवद्भाव इति** । 'स्त्रियाः पुंवदि'त्यनेने'ति शेषः । **युवजानिरिति** । जायाशब्दे यकारादाकारस्य निङ् । ङकार इत्, 'लोपो व्यो'रिति यकारलोपः । युवतिशब्दस्य पुंवत्त्वात्तिप्रत्ययस्य निवृत्तिः । नलोप इति भावः । **गन्धस्येदुत्** । 'गन्ध-स्य-इत्' इति च्छेदः । **एभ्य इति** । उत्-पूति-सु-सुरभि-एतेभ्य इत्यर्थः । **इकारोऽन्तादेश इति** । पूर्वोत्तर-साहचर्यादिकार आदेश एवेति भावः । समासान्ताधिकारात् 'आदेः परस्ये'ति न भवति । **उद्गन्धिरिति** । उद्गतो गन्धो यस्येति विग्रहः । **पूतिगन्धिरिति** । पूतिशब्दोऽसुरभौ । पूतिर्गन्धो यस्येति विग्रहः । **सुगन्धि-रिति** । शोभनो गन्धो यस्येति विग्रहः । **सुरभिगन्धिरिति** । सुरभिर्गन्धो यस्येति विग्रहः । सर्वत्र 'वायु'रिति विशेष्यम् । **तदेकान्तेति** । तस्य=विशेष्यभूतद्रव्यस्य, **एकान्तः**=एकदेश इव प्रतीयमान इत्यर्थः । अत्र गन्धस्य गुणस्य द्रव्यैकदेशत्वं न युज्यत इत्याशङ्क्य एकान्तशब्द एकदेशवदविभक्ते लाक्षणिक इत्याह—**एकान्त एकदेश इवेति** । **सुगन्धि पुष्पं सलिलं चेति** । अत्र गन्धस्य पुष्पात्सलिलाच्च द्रव्यात्पृथगलक्ष्यमाणत्वा-

---



दी.] अनिजन्तमित्यर्थः । **धनुषश्च** । ङ्सासाहचर्याङ्कित्करणाच्चास्यादेशत्वं निश्चित्याह-**अनङादेश इति** । **लोपो व्यो** । वलादौ

नेह-[सु]शोभना गन्धाः=द्रव्याण्यस्य सुगन्ध आपणिकः। **अल्पाख्यायाम्** ।५।४।१३६। सूपस्य गन्धो लेशो यस्मिंस्तत्-सूपगन्धि भोजनम्। घृतगन्धि। 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो'रिति- विश्वः। **उपमानाच्च** ।५।४।१३७। पद्मस्येव गन्धोऽस्य पद्मगन्धिः। **पादस्य लोपोऽहस्त्यादिभ्यः** ।५।४।१३८। हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्यात्समासान्तो बहुव्रीहौ। स्थानिद्वारेणाऽयं समासान्तः। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्यः किम्? हस्तिपादः। कुसूलपादः। **कुम्भपदीषु च** ।५।४।१३९। कुम्भपद्यादिषु पादस्य लोपो ङीप् च निपात्यते स्त्रियाम्। 'पादः पत्'। कुम्भपदी। स्त्रियां

**त.]** फलितोऽर्थः। **द्रव्याणीति**। अस्ति च गन्धशब्दो द्रव्यवचनः,'वहति जलमियं पिनष्टि गन्धा'निति प्रयोगात्, 'गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इति कोशाच्च। केचित्तु—'गन्धस्येत्वे' इति वार्तिके तदेकान्तशब्देन स्वाभाविकत्वं विवक्षितं, तेनागन्तुकस्य नेत्याहुः। तथा च भट्टिः—'आघ्रायिवान् गन्धवहः सुगन्धः' इति। व्याख्यातं च जयमङ्गलायाम्—'गन्धस्ये'त्यादिनेकारः समासान्तो न, 'गन्धस्येत्वे तदेकान्तग्रहण'मिति वचनात्। सुगन्ध आपणिक इति यथेति। अतएव 'भग्नबालसहकारसुगन्धौ' इत्यादीनां प्रामादिकत्वं दुर्घटवृत्तिकृतोक्तम्। **अल्पाख्यायाम्**। अल्पवाचिनो गन्धस्येकारान्तादेशः स्याद्बहुव्रीहौ। **सूपस्य गन्ध इति**। अतएव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। यद्वा फलितार्थकथनमेतत्। सूपो गन्धो यस्मिन्नित्येव विग्रहः। गन्धशब्दस्य विशेषणत्वेऽप्यस्मादेव ज्ञापकात्परनिपातः। **पादस्य**। यद्ययं लोपः समासान्तो न स्यात् 'आदेः परस्ये'त्यादेः स्यात्। शैषिकः कप् च प्रसज्येत, 'शेषाद्विभाषा' इत्यत्र समासान्तापेक्षस्य शेषस्याश्रयणात्। अत आह-**समासान्त इति**। कथं पुनरभावो भावस्यावयवः स्यात्तत्राह—**स्थानिद्वारेणेति**। वचनबलादौपचारिकमवयवत्वं गृह्यत इति भावः। **कुम्भपदीषु च**। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चायमर्थावगतिरित्यभिप्रेत्याह—**कुम्भपद्यादिष्विति**। इह गणे -कुम्भपदी एकपदी जानपदीत्येवं समुदाया एव पठ्यन्ते, तस्य च प्रयोजनं विषयविशेषपरिग्रह इत्याशयेनाह—**स्त्रियामिति**। यच्चेहोपमानपूर्वं संख्यापूर्वं च पठ्यते तस्य सिद्धे लोपे नित्यङीबर्थ

**बा.]**दिति भावः। **सु शोभना इति**। 'सु'इत्यस्य व्याख्यानं-शोभना इति। **गन्धा इति**। गन्धवन्त इत्यर्थः। 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति लुक्। **द्रव्याणीति**। चन्दनादीनीत्यर्थः। 'गन्धा' इत्यस्य विशेष्यमेतत्। गन्धशब्दस्य नपुंसकद्रव्यविशेषणत्वेऽपि नियतलिङ्गत्वात्पुंस्त्वं युज्यते। 'गन्धस्तु सौरभे नृत्ये गन्धके गर्वलेशयोः। स एव द्रव्यवचनो बहुत्वे पुंसि च स्मृतः' इति कोशात्। **गन्ध आपण इति**। अत्र गन्धशब्दवाच्यानां चन्दनादिद्रव्याणां विशेष्यभूतापणापेक्षया पृथग् लक्ष्यमाणत्वादित्त्वं नेति भावः। **अल्पाख्यायाम्**। अल्पवचने सति गन्धशब्दस्य इकारोऽन्तादेशः स्याद्बहुव्रीहावित्यर्थः। 'लेश' इति गन्धशब्दस्य विवरणम्। सूपस्य गन्धो यस्मिन्नित्येव विग्रहः। **सूपगन्धि भोजनमिति**। उत्पूतिसुसुरभिपूर्वकत्वाऽभावादेकान्तत्वाऽभावाच्चाऽप्राप्ते वचनमिदम्। व्यधिकरणपदानामपि क्वचिदस्ति बहुव्रीहिरिति मूल एवानुपदं वक्ष्यते। **घृतगन्धीति**। घृतस्य गन्धो लेशो यस्मिन्निति विग्रहः। गन्धशब्दस्याऽल्पवाचित्वे प्रमाणमाह—**गन्धो गन्धक इति**। **उपमानाच्च**। उपमानवाचिपूर्वपदात्परस्यापि गन्धशब्दस्य इकारोऽन्तादेशः स्याद्बहुव्रीहावित्यर्थः। **पद्मस्येवेति**। फलितार्थकथनमिदम्। पद्मगन्ध इव गन्धो यस्येति विग्रहः। पद्मपदं पद्मसंबन्धिगन्धसदृशे लाक्षणिकम्। 'सप्तम्युपमानपूर्वपदस्ये'ति समासः। **पादस्य लोपः**। 'अहस्त्यादिभ्य' इति च्छेदः। उपमानादित्यनुवर्तते। तदाह—**हस्त्यादिवर्जितादिति**। 'आदेः परस्ये'त्यप्रवृत्तये आह—**समासान्तो बहुव्रीहाविति**। शैषिकस्य कपो निवृत्त्यर्थमपि लोपस्य समासान्तत्वम्। अन्यथाऽनुक्तसमासान्तत्वात्कप्प्रसज्येत। नन्वभावात्मकस्य लोपस्य कथं समासान्तावयवत्वमित्यत आह-**स्थानीति**। **व्याघ्रस्येवेति**। फलितार्थकथनमिदम्। व्याघ्रपादाविव पादावस्येति विग्रहः। 'सप्तम्युपमानपूर्वपदस्ये'ति समासः। **कुम्भपदीषु च**। कुम्भपदीष्विति बहुवचननिर्देशाद्गणपाठाच्च कुम्भपद्यादिग्रहणमिति भावः। **ङीप् चेति**। 'पादोऽन्यतरस्या'मिति विकल्पापवाद इति भावः।

**शे.]** प्रत्यय इति त्वयुक्तम्, प्रत्ययस्याऽप्रकृतत्वात्, गौधेर इत्यसिद्धेश्च। पूर्वोत्तरसाहचर्यादिकार आदेशः। समासान्ता इत्यधिकारात् 'आदेः परस्य' इति न प्रवर्त्तते इत्याशयेनाह—**अन्तादेश इति**। **एकदेश इवेति**। 'तदेकान्तग्रहणम्' इति वार्तिकम्। गुणसमुदायो द्रव्यमिति पतञ्जलिमते गन्धोऽवयव इति तद्भाव इत्यन्ये। **अल्पाख्या**। अल्पशब्दोऽल्पत्वपरः। तथा च लेशवाचिनो गन्धशब्दस्य ग्रहणमित्याशयेनाह—**सूपस्य गन्धो लेश इति**। तत्र प्रमाणं कोशमाह-**गन्धो गन्धक इति**। नन्वभावस्य कथं समासान्तत्वमत आह-**स्थानिद्वारेणेति**। 'पादस्य पा'दिति नोक्तम्। प्रतिपदोक्ततयाऽस्यैव 'पादः पत्' इत्यत्र ग्रहणापत्तौ पादयतेः क्विपि [illegible] इत्यादयः **कुम्भपदी**। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चार्थावगतिः। स्त्रीलिङ्गानामेव

किम् ?। कुम्भपादः । **सङ्ख्यासुपूर्वस्य** ।५।४।१४०। पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् । **वयसि दन्तस्य दतृ** ।५।४।१४१। संख्यासुपूर्वस्य दन्तस्य 'दतृ' इत्यादेशः स्याद्वयसि । द्विदन् । चतुर्दन् । षट् दन्ता अस्य षोडन् । सुदन् । सुदती । वयसि किम् ? । द्विदन्तः करी । सुदन्तः [नटः] । **स्त्रियां संज्ञायाम्** ।५।४।१४३। दन्तस्य दतृ स्यात्समासान्तो बहुव्रीहौ । अयोदती । फालदती । संज्ञायां किम् ?। समदन्ती । **विभाषा श्यावारोकाभ्याम्** ।५।४।१४४। दन्तस्य दतृ वा बहुव्रीहौ । श्यावदन् । श्यावदन्तः । अरोकदन् । अरोकदन्तः । **अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च** ।५।४।१४५। एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः । **ककुदस्यावस्थायां लोपः** ।५।४।१४६। अजातककुत् । पूर्णककुत् । **त्रिककुत्पर्वते** ।५।४।१४७। त्रीणि ककुदान्यस्य त्रिककुत् । संज्ञैषा पर्वतविशेषस्य । त्रिककुदोऽन्यः । **उद्विभ्यां काकुदस्य** ।५।४।१४८। लोपः स्यात् । उत्काकुत् । विकाकुत् । काकुदं तालु । **पूर्णाद्विभाषा** ।५।४।१४९। पूर्णकाकुत् । पूर्णकाकुदः । **सुहृद्दुर्हृदौ मित्रामित्रयोः** ।५।४।१५०। सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृत्-मित्रम् । दुर्हृत्-अमित्रः ।

त.] वचनं, तेन 'पादोऽन्यतरस्या'मिति विकल्पो न भवति । **द्विदन्निति** । द्वौ दन्तावस्य जातौ । शिशुत्वावस्था त्विह गम्यते । 'उगिदचा'मिति नुम् । संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न । **षोडन्निति** । 'षष उत्वं दतृदशधे'त्यनेनोत्वष्टुत्वे । **सुदतीति** । 'उगितश्चे'ति ङीप् । **समदन्तीति** । 'नासिकोदरे'त्यादिना ङीष् । **श्यावदन्निति** । 'श्यावः स्यात्कपिशः' इत्यमरः । **अरोकदन्निति** । अरोकाः=अच्छिद्रा दन्ता यस्य सः । **अग्रान्त** । इहाऽनुक्तसमुच्चयार्थश्चकारः, तेन मूषिकदन्निति सिध्यतीत्याहुः । **अजातेति** । अजातं ककुदमस्येति विग्रहः । इह हि बाल्या-

बा.] **स्त्रियामिति** । कुम्भपद्यादीनां स्त्रीलिङ्गानामेव गणे पाठादिति भावः । **कुम्भपदीति** । कुम्भस्येव पादावस्येति विग्रहः । 'पादस्य लोपोऽहस्त्यादिभ्यः' इति लोपे सिद्धे तदनुवादेन नित्यं ङीबर्थं वचनम् । **सङ्ख्यासुपूर्वस्य** । शेषपूरणेन सूत्रं व्याचष्टे—**पादस्येति** । उपमानात्परत्वाऽभावादप्राप्तौ वचनम् । **द्विपादिति** । द्वौ पादावस्येति विग्रहः । **सुपादिति** । शोभनौ पादावस्येति विग्रहः । **वयसि दन्तस्य दतृ** । **द्विदन्निति** । द्वौ दन्तौ यस्येति विग्रहः । शिशुत्वं गम्यते । दन्तस्य दत्रादेशः । ऋकार इत् । उगित्त्वान्नुम् । सुलोपः । संयोगान्तलोपः । तस्याऽसिद्धत्वादुपधादीर्घो न । **चतुर्दन्निति** । चत्वारो दन्ता यस्येति विग्रहः । दत्रादि पूर्ववत् । **षोडन्निति** । षट् दन्ता यस्येति विग्रहः । दत्रादि पूर्ववत् । 'षष उत्त्व'मिति ष्टुत्वोत्त्वे । **सुदन्निति** । सु=शोभना दन्ताः समस्ता जाता यस्येति विग्रहः । वयोविशेषावगतये समस्तस्य निवेशः । **सुदतीति** । शोभना दन्ताः समस्ता यस्या इति विग्रहः । दत्रादेशः । 'उगितश्चे'ति ङीप् । **द्विदन्तः करीति** । हस्तिनः सर्वदा द्विदन्तत्वेन वयोविशेषानवगतिरिति भावः । **स्त्रियां संज्ञायाम्** । शेषपूरणेन सूत्रं व्याचष्टे—**दन्तस्येति** । वयोविशेषानवगमेऽपि प्राप्त्यर्थमिदम् । **अयोदतीति** । **फालदतीति** । संज्ञाविशेषाविमौ । **समदन्तीति** । समा दन्ता यस्या इति विग्रहः । 'नासिकोदरे'ति ङीष् । **विभाषा श्यावारोकाभ्यां** । शेषपूरणेन सूत्रं व्याचष्टे—**दन्तस्येति** । **श्यावदन्निति** । श्यावा धूम्रा दन्ताः यस्येति विग्रहः । 'श्यावः स्यात्कपिशो धूम्रः' इत्यमरः । **अरोकदन्निति** । अरोकाः=अदीप्ताः अच्छिद्रा वा दन्ता यस्येति विग्रहः । **अग्रान्त** । अग्रः=अग्रशब्दोऽन्तेऽवसाने यस्य स अग्रान्त इत्यभिप्रेत्योदाहरति—**कुड्मलाग्रदन्निति** । कुड्मलानां—मुकुलानाम्—अग्राणि, तानीव दन्ता यस्येति विग्रहः । शुद्धदन् । शुद्धदन्तः । शुभ्रदन्—शुभ्रदन्तः । वृषदन्—वृषदन्तः । वराहदन्—वराहदन्तः । **ककुदस्य** । अवस्थायां गम्यमानायां ककुदस्य लोपः स्याद्बहुव्रीहावित्यर्थः । आहारकालादिकृतोऽवयवनामुपचयोऽपचयश्चावस्थेत्युच्यते । बलीवर्ददोर्मूलगतो बाल्ये उद्भूतोऽवयवः ककुदम् । **अजातककुदिति** । अजातं ककुदमस्येति विग्रहः । बाल इत्यर्थः । **पूर्णककुदिति** । पूर्णं ककुदमस्येति विग्रहः । युवेत्यर्थः । **त्रिककुत्पर्वते** । पर्वतविशेषे गम्ये इत्यर्थः । त्रिककुदिति कृताऽकारलोपो निपात्यते । त्रीणि ककुदानि शृङ्गाणि यस्येत्यर्थः । **उद्विभ्यां काकुदस्य** । **लोप इति** । उद्विभ्यां परस्य काकुदस्य लोपः स्याद्बहुव्रीहावित्यर्थः । **उत्काकुदिति** । उन्नतं काकुदं यस्येति विग्रहः । काकुदशब्दं व्याचष्टे—**काकुदं तात्विति** । **पूर्णाद्विभाषा** । पूर्णात्परस्य काकुदस्य लोपो वा स्यादित्यर्थः । पूर्णं काकुदं यस्येति विग्रहः । **सुहृद्दुर्हृदौ** । यथासङ्ख्यमभिप्रेत्योदाहरति—**सुहृन्मित्रमिति** । सु शोभनं हृदयं यस्येति विग्रहः ।

शे.] गणे पाठादाह—**स्त्रियामिति** । यदिहोपमानपूर्वं सङ्ख्यापूर्वं च तस्य सिद्धे लोपे नित्यं ङीबर्थं वचनम् । **अष्टापदीत्यत्र** निपातनाद्दीर्घत्वम् । **द्विदन्निति** । शिशुत्वावस्थाप्रतीतिः । **समदन्तीति** । 'नासिकोदर' इत्यादिना ङीष् । **श्यावः**=श्यामः, कपिशः । **अरोकः**=अदीप्तिरच्छिद्रो वा । **ककुदस्य** । कालाहारादिकृता अवयवोपचयादयो वस्तुधर्मा अवस्थेत्युच्यन्ते । अजातककुत्त्वेन बाल्यं पूर्णककुत्त्वेन तारुण्यं गम्यते । अवस्थायां किम् । श्वेतककुदः । **संज्ञैषेति** । एवं च पर्वत इत्यस्य तद्विशेष इत्यर्थः । व्यूढ=

अन्यत्र सुहृदयः । दुर्हृदयः । उरःप्रभृतिभ्यः कप् ।५।४।१५१। व्यूढोरस्कः । प्रियसर्पिष्कः । इह—पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीरिति एकवचनान्तानि पठ्यन्ते । द्विवचनबहुवचनान्तेभ्यस्तु 'शेषाद्विभाषे'ति विकल्पेन कप् । द्विपुमान् । द्विपुंस्कः । (ग) अर्थान्नञः । अनर्थकम् । नञः किम् ? । अपार्थम् ।

इनः स्त्रियाम् । ।५।४।१५२। बहुदण्डिका नगरी । अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका । स्त्रियां किम् ? । बहुदण्डी, बहुदण्डिको ग्रामः । शेषाद्विभाषा ।५।४।१५४। अनुक्तसमासान्ताच्छेषाधिकारस्थाद्बहुव्रीहेः कप् वा स्यात् । महायशस्कः । महायशाः । अनुक्तेत्यादि किम् ? । व्याघ्रपात् । सुगन्धिः । शेषाधिकारस्थात्किम् ? । उपबहवः । उत्तरपूर्वा ।

त.] वस्था गम्यते । उरःप्रभृतिभ्यः कप् । उरः प्रभृत्यन्ताद्बहुव्रीहेः कप्स्यात् । 'समासार्थोत्तरपदान्ताः समासान्ताः' इति पक्षे तु बहुव्रीहेश्चरमावयवेभ्य उरःप्रभृतिभ्यः कबिति व्याख्येयम् । तद्धितत्वात्कस्य नेत्वम् । व्यूढोरस्क इति । व्यूढं विशालमुरो यस्य सः । 'सोऽपदादौ' इति विसर्जनीयस्य सः । प्रियसर्पिष्क इति । 'इणः षः' इति विसर्गस्य षत्वम् । एकवचनान्तानीति । 'नद्यृतश्चे'ति सिद्धे लक्ष्मीशब्दपाठस्त्विह एकवचनान्तलक्ष्मीशब्दावयवकबहुव्रीहेरेव नित्यं कप्, अन्यत्र 'शेषा'दिति विकल्प एवेति नियमार्थः । तेन 'अकृशमकृशलक्ष्मीश्चेतसा शंसितं सः' इति भारविप्रयोगः सिद्धः । अकृशा लक्ष्म्यो यस्येति विग्रहः । यत्तु प्राचोक्तं—'नद्यृतश्चे'ति कप्, बहुलक्ष्मीक इति । तदयुक्तम् । सङ्ख्यावाचिबहुशब्दस्यैकवचनान्तत्वाऽभावात्प्रकृतनियमेन वारितत्वात् । बह्वी अधिका लक्ष्मीर्यस्येति विग्रहे वैपुल्यवाचिन एकवचनान्तत्वसंभवेऽपि विशेषविधेर्बलीयस्त्वेन 'उरःप्रभृतिभ्यः कप्' इत्येव वक्तुमुचितत्वात् । यदा तु 'नियमशास्त्राणां निषेधमुखेन प्रवृत्ति'रित्याश्रीयते तदा प्राचोक्तमपि सम्यगेवेति ज्ञेयम् । अर्थान्नञ इति । गणसूत्रमिदम् । अनर्थकेनापीति । कथं तर्हि 'सुपथी नगरी'ति हलन्तेपूक्तं, कपोऽत्र दुर्वारत्वात् । न च 'न पूजनात्' इत्यनेन 'ऋक्पूरब्धूः—' इत्यस्यैव कपोऽपि निषेधः शङ्क्यः । षचः प्राचीनानामेव स निषेध इति वक्ष्यमाणत्वात् । कप्प्रत्ययस्य षच उत्तरत्वात् । सत्यम् । समासान्तविधेरनित्यत्वात्साधुरिति समाधेयम् । 'युवोरनाकौ' इति सूत्रे सुपथीति भाष्याच्चेत्युक्तम् । बहुवाग्मिकेति । 'वाचो ग्मिनिः' । शेषाद्वि । यद्यत्र प्रागुक्तकप्मात्रापेक्षः शेषः स्यात्तर्हि व्याघ्रपात्सुगन्धिरित्यादावपि स्यादतः समासान्तापेक्षः शेष इह गृह्यत इत्याह—अनुक्तसमासान्तादिति । व्याघ्रपादिति । स्थानिद्वारा लोपोऽपि समासान्तापेक्ष इत्युक्तम् । सुगन्धिरिति । 'गन्धस्ये'दित्यादिना इत्समासान्तः । प्रियपथ इति । 'ऋक्पूः-'इत्यप्प्रत्ययः समासान्तः । उपबहव

बा.] उरःप्रभृतिभ्यः कप् । बहुव्रीहौ समासान्तस्तद्धित इति विशेषः । तद्धितत्वात् ककारस्य नेत्संज्ञा । व्यूढोरस्क इति । व्यूढं=विशालम् उरः=वक्षो यस्येति विग्रहः । कप् । 'सोऽपदादौ' इति सत्वम् । प्रियसर्पिष्क इति । प्रियं सर्पिर्यस्येति विग्रहः । कप् । 'इणः ष' इति षत्वम् । ननु द्वौ पुमांसौ यस्य स द्विपुमानित्यनुपपन्नम्, उरःप्रभृतिषु पुमानिति पुंस्शब्दस्य पाठादित्यत आह—इहेति । गणेऽविभक्तिकानामेव पाठः । इह तु केषांचिदेकवचनान्तानामेवं पाठस्तद्विवक्षार्थ इति भावः । द्विपुंस्क इति । 'संपुंकाना'मिति सः । अर्थान्नञ इति । गणसूत्रम् । नञः परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कप् स्यादिति तदर्थः । अनर्थकमिति । अविद्यमानोऽर्थो यस्येति विग्रहः । अपार्थम्—अपार्थकमिति । अपगतोऽर्थो यस्मादिति विग्रहः । अत्र नञ्पूर्वकत्वान्न नित्यः कबिति भावः । इनः स्त्रियाम् । इन्नन्तात् कप् स्याद्बहुव्रीहावित्यर्थः । बहुदण्डिका नगरीति । दण्डोऽस्या अस्तीति दण्डी । 'अत इनिठनौ' इति इनिः । बहवो दण्डिनो यस्यामिति विग्रहः । बहुवाग्मिकेति । वागस्यास्तीति वाग्मी । 'वाचो ग्मिनिः' इति ग्मिनिप्रत्ययः । नकारादिकार उच्चारणार्थः । तद्धितत्वाद्गकारस्य नेत्संज्ञा, चकारस्य कुत्वम्, जश्त्वम्, वाग्मीति रूपम् । बहवो वाग्मिनो यस्यामिति विग्रहः । अत्रेन अनर्थकत्वेऽपि 'अनिनस्मन्'निति वचनात्तदन्तस्याप्यत्र ग्रहणमिति भावः । बहुदण्डी बहुदण्डिको ग्राम इति । बहवो दण्डिनो यस्मिन्निति विग्रहः । अत्र समासस्याऽस्त्रीलिङ्गत्वान्न नित्यः कबिति भावः । शेषाद्विभाषा । इतः पूर्वं येभ्यः समासान्ता विहितास्तेभ्योऽन्यः शेषः । तदाह—अनुक्तसमासान्तादिति । शेषाधिकारस्थादिति । 'शेषा'दित्यनेन शेषाधिकारस्थादित्यपि विवक्षितमिति भावः । महायशस्क इति । महत् यशः यस्येति विग्रहः । 'आन्महतः' इत्यात्त्वे, कपि, 'सोऽपदादौ' इति सत्वम् । महायशा इति । कबभावे 'अत्वसन्तस्ये'ति दीर्घः । व्याघ्रपादिति । 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्युक्तसमासान्तोऽयम्, स्थानिद्वारा लोपस्यापि समासान्तत्वात् । सुगन्धिरिति । 'गन्धस्येदुत्पू-

शे.] विशालम् । तद्धितत्वात्कस्य नेत्वम् । 'सोऽपदादौ' इति सः । प्रियसर्पिष्के 'इणः षः' । एकवचनान्तानीति । सर्वत्र गणे निर्विभक्तिकपाठस्यैव दृष्टत्वेन केषांचित्सविभक्तिकानां पाठस्तद्विवक्षार्थस्तदाह—द्विवचनेत्यादि । अनुक्तसमासान्तादिति ।

सुपुत्रः । तन्त्रादिना शेषशब्दोऽर्थद्वयपरः । **आपोऽन्यतरस्याम्** ।७।४।१५। कप्यावन्तस्य ह्रस्वो वा स्यात् । बहुमालाकः । बहुमालकः । कबभावे तु—बहुमालः । **न संज्ञायाम्** ।५।४।१५५। 'शेषा'दिति प्राप्तः कब्न स्यात्संज्ञायाम् । विश्वे देवा अस्य विश्वदेवः । **ईयसश्च** ।५।४।१५६। ईयसन्तोत्तरपदाच्च कप् । बहवः श्रेयांसोऽस्य बहुश्रेयान् । 'गोस्त्रियो'रिति ह्रस्वे प्राप्ते । **ॐईयसो बहुव्रीहेर्नेति वाच्यम्** । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी । बहुव्रीहेः किम् । अतिश्रेयसिः । **वन्दिते भ्रातुः** ।५।४।१५७। पूजितेऽर्थे यो भ्रातृशब्द-

त.] इति । 'संख्ययाव्यये'त्यादिना समासः । **उत्तरपूर्वेति** । 'दिङ्नामे'त्यादिना समासः । **सपुत्र इति** । 'तेन सहेती'त्यादिना समासः । अयं भावः—'शेषो बहुव्रीहि'रित्यतः शेषपदम् 'अनेकमन्यपदार्थे' इत्येतस्मिन्नेव सूत्रेऽनुवर्तते, 'सङ्ख्ययाव्ययासन्ने'त्यादिषु च निवर्तते । तथा च शेषाधिकारस्थत्वाऽभावादुपबहव इत्यादिषु कप्प्रत्ययो नेति । एवं च 'अनेकमन्यपदार्थे' इति सूत्रात्पृथक् 'सङ्ख्ययाव्ययासन्ने'त्यादीनामारम्भः कबभावार्थमप्यावश्यक इति स्थितम् । ननु सकृदुच्चरितस्य शेषशब्दस्याऽनुक्तसमासान्तपरत्वं शेषाधिकारस्थपरत्वं च कथमित्यत आह—**तन्त्रादिनेति** । 'अर्थभेदेन शब्दभेदः', 'सत्यप्यर्थभेदे शब्दस्याऽभेदः' इति मतद्वयम् । आद्ये आवृत्तिर्द्वितीये तन्त्रमिति विवेकः । यत्तु वदन्ति—'प्रतिपदोक्ताः समासान्ताः स्वविषये बाधका भवन्ति, तत्किमनुक्तसमासान्तपरेण शेषग्रहणेने'ति । तन्न । 'ऋक्पूः' इत्यादीनां समासान्तरे चरितार्थतया 'प्रियपथ' इत्यादौ परेण कपा बाधापत्तेः ।

**ईयसश्च** । नित्यो वैकल्पिकश्च कप्सर्वोऽपि निषिध्यते । **बहुश्रेयानिति** । अतिशयेन प्रशस्यः—श्रेयान् । 'द्विवचनविभज्योपे'तीयसुन् । 'प्रशस्यस्य श्रः' । 'शेषाद्विभाषे'ति कप्प्राप्तः । **बहुश्रेयसीति** । 'नद्यृतश्चे'ति नित्यं प्राप्तः

बा.] ती'ति कृतसमासान्तोऽयम् । **प्रियपथ इति** । 'ऋक्पू'रिति कृतसमासान्तोऽयम् । **उपबहव इति** । सङ्ख्याव्यये'ति बहुव्रीहिरयं, न शेषाधिकारस्थः । **उत्तरपूर्वेति** । अयमपि 'दिङ्नामान्यन्तराले' इति बहुव्रीहिः न शेषाधिकारस्थः । **सपुत्र इति** । 'तेन सह' इत्ययमपि बहुव्रीहिः न शेषाधिकारस्थः । ननु सकृदुच्चारिताच्छेषशब्दात् कथमर्थद्वयलाभ इत्यत आह—**तन्त्रादिनेति** । आदिना आवृत्तिसंग्रहः । एकमनेकोपयोगि तन्त्रम् । उच्चारयित्रा तन्त्रेणोच्चारिताच्छब्दादावृत्त्या बोध इति बोध्यम् । 'श्वेतो धावती'त्यादौ सकृदुच्चारणेऽपि 'श्वा इतो धावति, श्वेतगुणको धावती'त्येवमनेकार्थबोधदर्शनादिति भावः । **आपोऽन्यतरस्याम्** । **कपीति** । 'न कपी'त्यतस्तदनुवृत्तेरिति भावः । **आबन्तस्येति** । प्रत्ययग्रहणपरिभाषया लब्धमिदम् । **ह्रस्वो वेति** । 'शृदृप्रां ह्रस्वो वा' इत्यतस्तदनुवृत्तेरिति भावः । 'न कपी'ति नित्यं निषेधे प्राप्ते विकल्पार्थमिदं वचनम् । **बहुमालाक इति** । बह्व्यो माला यस्येति विग्रहः । ह्रस्वपक्षे 'बहुलमालक' इति भवति । कपो वैकल्पिकत्वात् पक्षे बहुमालः । सर्वत्र 'स्त्रियाः पुंवदि'ति पुंवत्वम् ।

**न संज्ञायाम्** । **शेषादिति प्राप्त इति** । 'अनन्तरस्ये'ति न्यायात् 'शेषाद्विभाषा' इति विहितस्य कप एवायं निषेधो, नतु व्यवहितस्य 'नद्यृतश्चे'त्यादिकप इति भावः । **विश्वे देवा अस्येति** । अत्र संज्ञायां समासस्य नित्यत्वाल्लौकिकविग्रहप्रदर्शनं चिन्त्यमेव । **ईयसश्च** । बहुश्रेयसीशब्दे श्रेयसीशब्दस्यैव प्रत्ययग्रहणपरिभाषया ईयसन्तत्वादाह—**ईयसन्तोत्तरपदादिति** । बहुव्रीहिणा उत्तरपदादित्याक्षिप्यत इति भावः । **न कबिति** । 'न संज्ञेयसो'रिति वक्तव्ये पृथग्योगकरणान्नित्यस्य वैकल्पिकस्य च कपोऽयं निषेध इति भावः । **श्रेयांस इति** । अतिशयेन प्रशस्ता इत्यर्थः । 'द्विवचनविभज्य' इति ईयसुन् । 'प्रशस्यस्य श्रः' इति श्रः, 'आद्गुणः' इति गुणः । **बहुश्रेयानिति** । शैषिकः कब्निषिध्यते । **ह्रस्वत्वे प्राप्त इति** । बह्व्यः श्रेयस्यो यस्येति बहुव्रीहिः । तत्र श्रेयसीशब्दस्योपसर्जनस्त्रीप्रत्ययान्तत्वात् 'गोस्त्रियो'रिति ह्रस्वत्वे प्राप्ते इत्यर्थः । **ईयसो बहुव्रीहेरिति** ।

शे.] सामान्यतः समासान्तापेक्षयैव शेष इत्यभिमानस्तद्वक्ष्यति—**प्रियपथ इति** । परे तु 'नैव कबपेक्षं शेषग्रहणम्, नापि समासान्तापेक्षं ; किन्तर्ह्यनन्तरो यो बहुव्रीह्यधिकारः सोऽपेक्ष्यते' इति भाष्योक्तेस्तदपेक्षयैव शेषो ग्राह्यः । 'समासान्ताश्च कबभावे सावकाशाः' इति समासान्तैः स्वस्वविषये कपो बाधेनोपपत्तौ शेषग्रहणं व्यर्थमिति न वाच्यम् । एवञ्च प्रियपथिक इत्यपि । अत एव 'बहुव्रीहौ सङ्ख्येये' इत्यस्यान्यत्र पाठः सार्थक इत्यन्यत्र विस्तर इत्याहुः । **शेषाधिकारेति** । इदं सङ्ख्ययेत्यादौ कबभावार्थमिति भाष्योक्तेर्ज्ञायते । सकृदुच्चारितादर्थद्वयलाभोऽसम्भवीत्यत आह—**तन्त्रादिनेति** । उच्चारयित्रा तन्त्रेणोच्चारितं बोद्धुरावृत्त्या बोध इति बोद्धव्यम् । **आपोऽन्य** । 'न कपि' इत्यतः कपीत्यनुवर्त्तते । अनन्तरस्येति न्यायात् शेषादित्यस्यैव निषेध इत्याह—**शेषादितीति** । **विश्वे इति** । विश्वाख्यदेवगणविशेष इत्यर्थः । उद्भूतावयवभेदत्वाद्बहुवचनं विग्रहे । **विश्वदेव इति** । विश्वेदेव इति त्वपपाठः । 'न सञ्ज्ञेयसोः' इत्येव वक्तव्ये योगविभागसामर्थ्यात् 'ईयसश्च' इति 'नद्यृतश्च' इत्यस्यापि निषेधकमित्याह—**न कबिति** । **ईयसो बहुव्रीहौ पुंवदिति वचनम्** । ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत्, पुंवद्विषयकस्येकारस्य यथा न ह्रस्वस्तथाऽस्याणीति तदर्थः । तदर्थतः पठति—**ईयस इत्यादि** । अत्र सूत्रे 'ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्त-

स्तदन्ताच्च कप्स्यात्। प्रशस्तो भ्राता यस्य [स]प्रशस्तभ्राता। सुभ्राता। 'न पूजना'दिति निषेधस्तु 'बहुव्रीहौ सक्थ्यक्ष्णो' रित्यतः प्रागेवेति वक्ष्यते। वन्दिते किम्?। मूर्खभ्रातृकः। **नाडीतन्त्र्योः स्वाङ्गे** ।५।४।१५९। स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात्कब्न स्यात्। बहुनाडिः कायः। बहुतन्त्रीर्ग्रीवा। तन्त्रीधमनी। स्त्रीप्रत्ययान्तत्वाऽभावाद्ध्रस्वो न। स्वाङ्गे किम्?। बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा। **निष्प्रवाणिश्च** ।५।४।१६०। कबभावोऽत्र निपात्यते। प्रपूर्वाद्वयतेर्ल्युट्। प्रवाणी—तन्तुवायशलाका। निर्गता प्रवाण्यस्य निष्प्रवाणिः पटः। समाप्तवानः। नव इत्यर्थः। **सप्तमीविशेषणे बहुव्रीहौ** ।२।२।३५। सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम्। कण्ठेकालः। अतएव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। चित्रगुः।

त.] कब्लिङ्गविशिष्टपरिभाषया 'ईयसश्चे'ति प्रतिषिध्यते। **बहुनाडिरिति**। उपसर्जनह्रस्वः। **स्त्रीप्रत्ययान्तत्वाभावादिति**। 'अवितॄस्तॄतन्त्रिभ्यः' इतीप्रत्ययस्य 'स्त्रिया'मित्यधिकारेऽविहितत्वादिति भावः। **सप्तमीविशेषणे**। यदा कण्ठे किंचिदस्तीति ज्ञायते, तस्य विशेषणं काल इति, तदेदं सप्तमीग्रहणम्। अन्यदा तु तेन विनापि विशेषणत्वादेव सिद्धम्। **चित्रगुरिति**। न च 'उपसर्जनं पूर्व'मित्येवेदं सिध्यतीति वाच्यं, 'बहुव्रीहौ सप्तमी'त्युक्ते तत्र-

बा.] ईयसन्ताद्बहुव्रीहेः परस्य स्त्रीप्रत्ययस्य ह्रस्वो नेति वाच्यमित्यर्थः। **बहुश्रेयसीति**। 'नद्यृतश्चे'ति नित्यः कबिह निषिध्यते, लिङ्गविशिष्टपरिभाषया ईयस्ग्रहणेन स्त्रीप्रत्ययान्तश्रेयसीशब्दस्यापि ग्रहणादिति भावः। **बहुव्रीहेः किमिति**। ईयसो बहुव्रीहेरित्यत्रे'ति शेषः। **अतिश्रेयसिरिति**। श्रेयसीमतिक्रान्त इति तत्पुरुषोऽयमिति भावः। **वन्दिते भ्रातुः**। **पूजितेऽर्थे इति**। 'वदि अभिवादनस्तुत्यो'रित्युभयार्थकवदिधातोरिह उभयसाधारणपूजार्थकत्वमाश्रीयत इति भावः। **प्रशस्तभ्रातेति**। 'नद्यृतश्चे'ति प्राप्तः कबिह निषिध्यते। **सुभ्रातेति**। सु=शोभनो भ्राता यस्य स इति विग्रहः। अत्रापि 'नद्यृतश्चे'ति प्राप्तस्य कपो निषेधः। ननु 'न पूजना'दित्येव निषेधे सिद्धे किमर्थमिदमित्यत आह—**न पूजनादिति**। **प्रागेवेति**। एवंच 'नद्यृतश्चे'त्यादिकपस्तेन निषेधाऽप्राप्तौ इदं वचनमिति भावः। **नाडीतन्त्र्योः स्वाङ्गे**। **बहुनाडिः काय इति**। प्राणिस्थत्वात्स्वाङ्गत्वसूचनाय 'काय इति विशेष्यम्। उपसर्जनह्रस्वः। 'नद्यृतश्चे'ति प्राप्तः कब्न भवति। **बहुतन्त्रीर्ग्रीवेति**। बह्व्यस्तन्त्र्यो यस्या इति विग्रहः। वीणातन्तुषु तन्त्रीशब्दस्य प्रसिद्धत्वादाह—**तन्त्रीर्धमनीति**। बहुतन्त्रीशब्दे 'गोस्त्रियो'रिति ह्रस्वमाशङ्क्याह—**स्त्रीप्रत्ययान्तत्वाऽभावादिति**। 'अवितॄस्तॄतन्त्रीभ्य ईः' इत्यौणादिकस्य 'स्त्रिया'मित्यधिकारेऽविहितत्वादिति भावः। **निष्प्रवाणिश्च**। **प्रपूर्वादिति**। 'वेञ्तन्तुसंताने' इत्यस्मात्प्रपूर्वात् 'करणाधिकरणयोश्चे'त्यधिकरणे ल्युट्। प्रोयते अस्यामिति प्रवाणी। 'पूर्वपदात्संज्ञाया'मिति णत्वम्। **समाप्तवान इति**। समाप्तं वानं=वानक्रिया यस्येति विग्रहः। अत्र शैषिककबभावो निपात्यते। **सप्तमीविशेषणे**। 'उपसर्जनं पूर्व'मित्यतः पूर्वमित्यनुवर्तते। प्रत्ययग्रहणपरिभाषया सप्तमीति तदन्तग्रहणं। तदाह—**सप्तम्यन्तमिति**। **कण्ठेकाल इति**। 'कण्ठे तिष्ठतीति कण्ठेस्थः, स कालो यस्येति विग्रहः। 'सुपी'ति योगविभागात्कः। 'सप्तम्युपमानपूर्वपदस्ये'ति बहुव्रीहिसमासः, स्थशब्दलोपश्चे'ति 'अनेकमन्यपदार्थे' इति सूत्रे भाष्ये स्पष्टम्। 'अमूर्धमस्तका'दिति सप्तम्या अलुक्। **अत एवेति**। यद्यपि कण्ठेस्थशब्दः प्रथमान्त एवात्र बहुव्रीहौ पूर्वपदं, तस्य कालशब्देन सामानाधिकरण्यमस्त्येवेति कथं सप्तमीग्रहणं व्यधिकरणपदबहुव्रीहिज्ञापकम्। किंच विशेषणत्वादेव सिद्धे किं वा सप्तमीग्रहणेन?। तथापि यदा स्थपदमनादृत्य 'कण्ठे' इत्यस्याधिकरणत्वं, तस्य च कालरूपे उत्तरपदार्थे उपसङ्क्रमस्तदा 'कण्ठे' इत्यस्याऽप्रथमान्तत्वाद्बहुव्रीहेरप्रसक्तेस्तत्र सप्तम्यन्तस्य पूर्वनिपातविधिरभित्तिचित्रायितः स्यात्। ततश्च सप्तमीग्रहणादप्रथमान्तोऽपि बहुव्रीहिः क्वचिदस्तीति विज्ञायते इति योज्यम्। तेन 'सच्छास्त्रजन्मा हि विवेकलाभः' इत्यादि सिद्धम्।

शे.] व्यम्। न वक्तव्यम्। पुंवद्वचनात्सिद्धम्' इति भाष्योक्तेरनेन नपुंसकह्रस्वस्यापि निवृत्तिः। अन्यथा वचनेन वचनप्रत्याख्यानाऽसङ्गतिः। मम तु नपुंसकह्रस्वनिवृत्त्यर्थमावश्यकेन युज्यते प्रत्याख्यानमिति दिक्। **बहुश्रेयसीति**। लिङ्गविशिष्टपरिभाषया निषेधः। 'नद्यृतश्च' इति नित्यं कप्प्राप्तः। अभिवादनस्तुतिरूपोभयार्थकवदिधातुनोभयसाधारणपूजा लक्ष्यत इत्याशयेनाह—**पूजित इति**। एतेन स्तुत्यर्थकस्यैवात्र ग्रहणमिति वृत्त्यादिध्वनितं निर्बीजमिति सूचितम्। **सुभ्रातेति**। 'नद्यृतश्च' इति कप् प्राप्तः। **स्त्रीप्रत्ययान्तत्वाभावादिति**। 'अवितॄस्तॄन्त्रिभ्य ईः' इत्यौणादिकत्वादिति भावः। **ल्युडिति**। प्रोयतेऽस्यामित्यधिकरणे इति भावः। **समाप्तवान इति**। समाप्तं वानं=वयनक्रिया यस्येत्यर्थः। **सप्तमीवि**। सप्तम्यन्तस्य कर्त्राद्यन्वयद्वारैव क्रियान्वयाद्विशेषणत्वेन सिद्धे[ऽत्र] वैयधिकरण्येऽपि समासज्ञापनार्थं सप्तमीग्रहणम्। विशेषणपदं च ब्राह्मणवसिष्ठन्यायेन तदतिरिक्तविशेषणपरं, तदाह—**अत एवेति**। **चित्रगुरिति**। [अन्यपदार्थापेक्षया] उभयोरपि प्रथमानिर्दिष्टत्वेन एकविभक्तित्वेन वाऽनियमे

*सर्वनामसङ्ख्ययोरुपसङ्ख्यानम् । सर्वश्वेतः । द्विशुक्लः । [त्रिशुक्लः] । *मिथोऽनयोः समासे सङ्ख्या पूर्वम् । शब्दपरविप्रतिषेधात् । द्व्यन्यः । *सङ्ख्याया अल्पीयस्याः । द्वित्राः । * द्वन्द्वेऽपि । द्वादश *वा प्रियस्य । गुडप्रियः । प्रियगुडः । *गड्वादेः परा सप्तमी । गड्डुकण्ठः । क्वचिन्न । वहेगड्डुः । निष्ठा ।२।२।३६। निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः । *जातिकालसुखादिभ्यः परा निष्ठा वाच्या । सारङ्गजग्धी । मासजाता । सुखजाता । प्रायिकं चेदम् । कृतकटः । पीतोदकः । वाऽऽहिताग्न्यादिषु

त.] कौण्डिन्यन्यायेनोपसर्जनपूर्वत्वस्य बाधापत्तेरतो विशेषणग्रहणं कृतम्। सर्वनामेति। कथं तर्हि 'तः परो यस्मात्स तपरः' इति, कथं च 'जहत्स्वार्था वृत्तिः' इति ? । इह हि जहत्स्वं पदं यं स जहत्स्वः, सोऽर्थो यस्यामिति बहुव्रीहिगर्भो बहुव्रीहिः । तथा च स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातेन भाव्यमिति चेत् । अत्राहुः-सूत्रभाष्यप्रयोगात्स्वपरशब्दयोर्न पूर्वनिपातः । राजदन्तादित्वाद्वा सिद्धमिति । द्विशुक्ल इति । यद्यपि सर्वनामत्वेनैव द्विशब्दस्य पूर्वनिपातत्वं सिध्यति, तथापि 'त्रिशुक्ल' इत्यादिसिद्धये वार्तिके सङ्ख्याग्रहणं कृतम् । ननु सङ्ख्याया अल्पाच्तरत्वेन 'सङ्ख्यासर्वनाम्नो'रिति वाच्ये विपरीतोच्चारणमयुक्तमित्याशङ्क्याह—मिथोऽनयोरिति । विपरीतोच्चारणमेवात्र लिङ्गमिति भावः । अल्पीयस्या इति । अल्पार्थवाचिकाया इत्यर्थः । गड्वादेरिति । आदिशब्दः प्रकारवाची । तेन पद्मं नाभौ यस्य पद्मनाभः । ऊर्णा नाभौ यस्य । 'ङ्यापोः–' इति ह्रस्वः । ऊर्णनाभ इति सिध्यतीत्याहुः । जातिकालेति । एतच्च 'जातिकालसुखादिभ्योऽनाच्छादना'दित्यनेन ज्ञापितमिति भावः । सारङ्गजग्धीति ।

बा.] चित्रगुरिति । उभयोरपि प्रथमानिर्दिष्टत्वेन विग्रहे नियतविभक्तिकत्वेन चान्यतरस्य पूर्वनिपाते प्राप्ते उत्तरपदविशेषणस्यैव पूर्वनिपातार्थं विशेषग्रहणमिति भावः । सर्वनामसङ्ख्ययोरिति । 'बहुव्रीहौ पूर्वनिपातस्ये'ति शेषः । सर्वश्वेत इति । सर्वः श्वेतो यस्येति विग्रहः । उभयोरपि गुणवचनत्वेन विशेषणविशेष्यभावे कामचारादन्यतरस्य पूर्वनिपाते प्राप्ते सर्वनामत्वात्सर्वशब्दस्यैव पूर्वनिपातः । उपसर्जनत्वेऽपि भूतपूर्वगत्या सर्वनामत्वम् । त्रिशुक्ल इति । त्रयः शुक्ला यस्येति विग्रहः । उभयोरपि कामचारेण पूर्वनिपाते प्राप्ते सङ्ख्यात्वात्त्रिशब्दस्यैव पूर्वनिपातः । 'द्विशुक्ल' इत्यत्र तु सर्वनामत्वादेव सिद्धम् । ननु द्वौ अन्यौ यस्य द्व्यन्य इति बहुव्रीहौ सर्वनामसङ्ख्ययोरन्यतरस्य पाक्षिकः पूर्वनिपातः स्यादित्यत आह—मिथोऽनयोरिति । सर्वनामसङ्ख्ययोरित्यर्थः । सङ्ख्या पूर्वमिति । 'प्रयोज्ये'ति शेषः । शब्दपरेति । एकस्मिन्नेव सूत्रे सर्वनामसङ्ख्ययोः समासोपात्तत्वेऽपि सर्वनामसङ्ख्याशब्दयोः सङ्ख्याशब्दस्य पाठतः परत्वमादाय विप्रतिषेधसूत्रप्रवृत्तेरित्यर्थः । सङ्ख्याया अल्पीयस्या इति । न्यूनाधिकसङ्ख्यावाचकशब्दानां समासे न्यूनसङ्ख्यायाः पूर्वप्रयोग इति वक्तव्यमित्यर्थः । द्वित्रा इति । द्वौ वा त्रयो वेति विग्रहे 'सङ्ख्ययाव्यये'ति बहुव्रीहिः । ननु 'द्वन्द्वे घी'त्यतो 'द्वन्द्वे' इत्यनुवृत्तौ 'अल्पाच्तर'मिति सूत्रभाष्येऽस्य वार्तिकस्य पाठाद्बहुव्रीहौ कथमस्य प्रवृत्तिरित्यत आह—द्वन्द्वेऽपीति । इदं च वार्तिकं द्वन्द्वेऽद्वन्द्वेऽपि प्रवर्तत इत्यर्थः । द्वादशेति । द्वौ च दश चे'ति द्वन्द्वः । तत्पुरुषे तु शतानां विंशतिः विंशतिशतमित्युदाहार्यम् । 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति सूत्रभाष्ये सहस्राणां शतमित्यर्थे शतसहस्रमिति भाष्यकैयटयोः प्रयोगोऽत्र मानमिति शब्देन्दुशेखरे स्थितम् । वा प्रियस्येति । बहुव्रीहौ पूर्वं प्रयोगो वक्तव्य इत्यर्थः । गड्वादेः परा सप्तमीति । 'बहुव्रीहौ योज्येति वक्तव्य'मिति शेषः । गड्डुकण्ठ इति । गड्डुः कण्ठे यस्येति विग्रहः । गड्डुर्नाम ग्रीवादिगतो दुर्मांसगोलः । असंज्ञात्वात् 'हलदन्तात्' इत्यलुङ् न । क्वचिन्नेति । व्याख्यानमेवात्र शरणम् । वहेगड्डुरिति । वहः=स्कन्धः, तस्मिन् गड्डुः–दुर्मांसग्रन्थिर्यस्येति विग्रहः । निष्ठा । निष्ठान्तमिति । 'क्तक्तवतू निष्ठे'ति वक्ष्यति, तदन्तमित्यर्थः । कृतकृत्य इति । कृतं कृत्यं येनेति विग्रहः । उभयोरपि क्रियाशब्दत्वाद्विशेषणत्वे कामचारादन्यतरस्य पूर्वनिपाते प्राप्ते निष्ठान्तस्य पूर्वनिपातः । जातिकालेति । 'जातिकालसुखादिभ्यो-

शे.] प्राप्ते उत्तरपदार्थविशेषणस्यैव पूर्वनिपातार्थं विशेषणग्रहणमिति भावः । सर्वनामसङ्ख्ययोरिति । श्वेतशुक्लयोरुदाहरणे विशेषणत्वं बोद्धव्यम् । 'वन्येतरा' 'हस्तदक्षिण' इत्यादौ राजदन्तादित्वात्परनिपातः । सर्वश्वेत इति । वचनसामर्थ्याद्भूतपूर्वगत्या सर्वनामत्वं बोद्धव्यम् । त्रिशुक्ल इति पाठः । द्विशुक्ल इत्यादौ द्विशब्दस्य सर्वनामत्वादेव सिद्धेः । शब्दपरेति । अत एव वार्त्तिकेऽल्पाचोऽपि परनिपातः । सङ्ख्याया इति । सङ्ख्यावाचकानां समासेऽल्पार्थवाचिकाया इत्यर्थः । 'द्वन्द्वे घि' इति सूत्रे पठितमपीदं द्वन्द्वाऽद्वन्द्वसाधारणं, तदाह–द्वित्रा इति । द्वादशेति च । सहस्राणां शतमित्यर्थेऽपि शतसहस्रमित्येव । स्पष्टं चेदं 'तदस्मिन्नधिकम्' इत्यत्र भाष्ये । वा प्रियस्येति । इदं बहुव्रीहावेव । तेन 'तेन सह' इत्युदाहरणे सहप्रिय इत्यत्र न, 'सप्तमीविशेषणे' इत्यत्रोपसङ्ख्यानात् । गडवाद्याहिताग्नी–आकृतिगणौ । अत्र वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणादाह--क्वचिन्नेति । एतद्वृत्तौ स्पष्टम् । निष्ठा । कृतकृत्ययोः क्रियाशब्दत्वादनियमे प्राप्ते वचनम् । चारुस्मितेत्यादि आहिताग्न्यादित्वात्साधु । जातिकालेति ।

।२।२।३७। आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् । *प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ । अस्युद्यतः । दण्डपाणिः । क्वचिन्न । विवृतासिः । * इति बहुव्रीहिः ॥ * ॥

अथ द्वन्द्वः ।

**चार्थे द्वन्द्वः** ।२।२।२९। अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोग-समाहाराश्चार्थाः। परस्परनिरपेक्षस्याऽनेकस्य एकस्मिन्नन्वयः समुच्चयः । अन्यतरस्यानुषङ्गिकत्वे[नान्वयो]ऽन्वा-

---

त.] सारङ्गो जग्धो यया सा । 'अस्वाङ्गपूर्वपदाद्वे'ति ङीष् ॥ कथं तर्हि 'चारुस्मितश्चारुहसितः' इत्यादि ? । अत्राहुः— 'नपुंसके भावे क्तः' इति क्तस्य न पूर्वनिपातः, निष्ठाशब्देन विहितस्यैवेह ग्रहणादिति । क्वचिन्नेति । आहिता-ग्न्यादित्वकल्पनादनभिधानाद्वेति भावः । इति तत्त्वबोधिनीव्याख्यायां बहुव्रीहिप्रकरणम् ।

**चार्थे द्वन्द्वः** । 'अनेकमन्यपदार्थे' इत्यतोऽनेकमित्यनुवर्तते, 'सुबामन्त्रिते—' इत्यस्मात्सुबपि । 'समासः' इति, 'विभाषा' इति चाऽधिक्रियत एव । तदाह—**अनेकं सुबन्तमित्यादि** । **चार्था इति** । चशब्दद्योत्या

---

या.] ऽनाच्छादनात्क्तः' इति स्वरविधिना ज्ञापितमिदमिति भाष्ये स्पष्टम् । जातिपूर्वस्योदाहरणमाह—**सारङ्गजग्धीति**। सारङ्गः=हरिणः, जग्धः=भक्षितो यया इति विग्रहः । 'अस्वाङ्गपूर्वपदाद्वे'ति ङीष् । कालपूर्वस्योदाहरति— **मासजातेति** । मासो जातो यस्या इति विग्रहः । टाप् । सुखपूर्वस्योदाहरति—**सुखजातेति** । सुखं जातं यस्या इति विग्रहः । **प्रायिकमिति** । व्याख्यानमेवात्र शरणम् । **कृतकट इति** । कृतः कटो येनेति विग्रहः । अत्र कटत्वस्य जातित्वेऽपि न कृतशब्दस्य परनिपातः । **पीतोदक इति** । पीतमुदकं येनेति विग्रहः । उदकत्वस्य जातित्वेऽपि न पीतशब्दस्य परनिपातः । **वाऽऽहिताग्न्यादिषु** । 'निष्ठायाः पूर्वं प्रयोग' इति शेषः ।

**आहिताग्निरिति** । आहिताः=आधानेन संस्कृता अग्नयो येनेति विग्रहः । **प्रहरणार्थेभ्य इति** । आयुधार्थेभ्य इत्यर्थः । निष्ठायामुदाहरति—**अस्युद्यत इति** । असिः उद्यतो येनेति विग्रहः । सप्तम्या उदाहरति—**दण्डपाणि-रिति** । दण्डः पाणौ यस्येति विग्रहः । 'निष्ठे'त्यस्य 'सप्तमीविशेषणे' इत्यस्य चाऽयमपवादः । **क्वचिन्नेति** । व्याख्यानमेवात्र शरणम् । **विवृतासिरिति** । विवृतः=कोशान्निष्कासितोऽसिर्येनेति विग्रहः । एवंजातीयान्याहिता-ग्न्यादित्वकल्पनया समाधेयानीत्याहुः । इति बालमनोरमायां बहुव्रीहिसमासः ।

अथ द्वन्द्वसमासनिरूपणम् । **चार्थे द्वन्द्वः** । 'सुबामन्त्रिते' इत्यतः 'सुबिति, 'अनेकमन्यपदार्थे' इत्यतो-ऽनेकमिति चानुवर्तते । समास इति विभाषेति चाधिकृतं । तदाह—**अनेकमित्यादिना** । कश्चार्थ इत्यत आह—

---

शे.] 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तः' इत्यन्तोदात्तविधायकेन ज्ञापितम् । वाग्रहणानुवृत्तेराह—**प्रायिकमिति** । **क्वचिन्नेति** । तेषामाहिताग्न्यादित्वमिति भावः । **इति बहुव्रीहिः** ।

**चार्थे** । 'अनेकमन्य' इत्यतोऽनेकमित्यनुवर्त्तते । तत्फलं 'स्त्रग्वाग्दृषदं' 'होतृपोतृनेष्टोद्गातारः' इत्यादौ यथायथं समासान्ताऽऽनङोर्मध्ये प्रवृत्तिर्न, अन्ते एव च तत् प्रवृत्तिः । अत्र वदन्ति—द्वन्द्वः प्रथमान्तानामेव न परिनिष्ठितविभक्त्यन्तानाम् । 'चैत्रेण मैत्रेण च कृत'मिति वाक्येऽवयवकर्तृत्वस्यैव प्रतीतेः, 'चैत्रमैत्राभ्यां कृत'मिति समासे समुदायकर्तृत्वस्यैव प्रतीतेः, तस्य वाक्यस्य समाससमानार्थत्वाऽभावेन तस्य तद्वाक्यत्वाऽभावात् । अत एव 'यदग्नये च प्रजापतये च' इत्यादौ व्यस्ते प्रत्येकं देवतात्वप्रतीतिः, 'अग्नीषोमाभ्याम्' इत्यादौ समुदाये देवतात्वप्रतीतिरिति व्यवस्था सिद्ध्यति । तस्यापि तद्वाक्यत्वे तु समास इव तत्रापि समुदाये देवतात्वप्रतीतिरेव स्यात् । अत एव 'न ङिसम्बुद्ध्योः' इति सूत्रे भाष्ये— 'न ङिसबुद्ध्योरनुत्तरपदे' इति वार्त्तिके संबुद्धिग्रहणं न कार्यम्, राजवृन्दारकेत्यादौ संबुद्ध्यन्तानां न समासः । इह तावत्स-माससमानार्थकेन वाक्येन भवितव्यम्, समासेन च । यश्चेहार्थो वाक्येन गम्यते नासौ जातु चित्समासेन गम्यते; अवयवसंबो-धनं वाक्येन गम्यते, समुदायसंबोधनं समासेन' इत्युक्तम् । संबोधनविभक्त्यन्तस्याभिमुखीभावफलकत्वेन प्रत्येकमेवाभिमुखी-भावप्रतीत्या क्रियान्वयेन परस्परमसामर्थ्यमिति तद्भावः । यदा समानाधिकरणस्थलेऽपि समासो न, तदा व्यधिकरणानां द्वन्द्वः सुतरां नेति परिनिष्ठितविभक्त्या समासेऽपि राजपुरोहिताविति न तदुदाहरणम् । एवञ्च व्यधिकरणतृतीयाद्यन्तानामपि क्रियाद्यन्वे-वान्वयेन क्रियाजनकत्वरूपकारकत्वस्य प्रत्येकमेव बोधेन वाक्यसमासयोर्न समानार्थत्वम् । एतेन 'कटं भीष्मम्'इत्यादौ प्रत्येकं कर्मतयोभयोः क्रियान्वयेऽपि पार्ष्णिकपरस्परान्वयेन सामर्थ्यमादाय समास इति मीमांसकम्मन्योक्तमपास्तम् । राजवृन्दारकेत्या-दावपि पार्ष्णिकान्वयेन सामर्थ्यमादाय समासापत्तौ भाष्याऽसङ्गतेः । 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति न्यासे-ऽपि समुदायद्वाराऽवयवानामपि तिङ्सामानाधिकरण्येन समुदायकर्तृत्वोक्त्याऽवयवकर्तृत्वस्याप्यभिहितत्वेन समुदायप्राधान्येऽप्य-वयवेभ्यः प्रथमा भवत्येव । अत एव तत्र चैत्रो मैत्रश्च गच्छतः, तौ पचत इत्यादि नित्यद्विवचनान्ताख्यातप्रयोग एवेति दिक् ।

**परस्परनिरपेक्षस्येति** । तत्त्वं चैकस्य क्रियान्वयोत्तरमपरस्याऽऽवृत्त्या तदन्वयात् । **अनेकस्येति** । तेनैकस्य सापेक्षत्वेऽपि

चयः । मिलितानामन्वय इतरेतरयोगः । समूहः समाहारः । तत्रेश्वरं गुरुं च भजस्वेति समुच्चये, भिक्षामट गां चानयेत्यन्वाचये च न समासोऽसामर्थ्यात् । धवखदिरौ । संज्ञापरिभाषम् । अनेकोक्तेः–होतृपोतृनेष्टोद्गातारः ।

---

**त.]** इत्यर्थः । **एकस्मिन्निति।** भजनादावित्यर्थः । **ईश्वरं गुरुंच भजस्वेति।** क्रियायां द्रव्ययोः समुच्चयोऽयम् । तथा राज्ञो गजश्चाश्वश्चेति द्रव्ये द्रव्ययोः समुच्चयः । पटः शुक्लो रक्तश्चेति द्रव्ये गुणयोः । रक्तः पटः कुण्डलं चेति गुणे द्रव्ययोरित्यूह्यम् । **भिक्षामट गां चानयेति** । अत्र ह्यदर्शनाद्गामनानयन्नपि भिक्षामटत्येव । अनटंस्तु भिक्षां न गामानयति । तथा अटन्नपि नाऽन्विष्य गामानयति । अतो भिक्षाऽटनस्यैव प्राधान्यं, गवानयनस्य त्वानुषङ्गिकता । **असामर्थ्यादिति** । एकार्थीभावाऽभावादित्यर्थः । तथाहि बहुव्रीहिघटकपदानां कर्माद्यन्तर्भावेणेव

---

**बा.]** **समुच्चयेति।** 'चाऽन्वाचयसमाहारेतरेतरसमुच्चये' इत्यमरः। तत्र समुच्चयं निर्वक्ति-**परस्परेति** । **एकस्मिन्निति** । एकस्मिन् क्रियापदे आवृत्ते एकस्य असमस्यमानपदस्य प्रथममन्वयः, तदनन्तरमन्यस्यान्वयो यत्र, तत्र समुच्चयश्चार्थ इत्यर्थः । यथा—'ईश्वरं गुरुं च भजस्वे'ति । तत्र हि चशब्दयोगाद्गुरोरीश्वरसापेक्षत्वम्, न त्वीश्वरस्य गुरुसापेक्षत्वं, तस्य चकारयोगाऽभावात् । अत एवात्र एक एव चशब्दः प्रयुज्यते । एवंच 'ईश्वरं च भजस्व' गुरुं च भजस्वे'ति वाक्यद्वयं पर्यवस्यति । अथाऽन्वाचयं लक्षयति—**अन्यतरस्येति** । यत्राऽन्यतरस्य पदस्यैकस्मिन् क्रियापदे आनुषङ्गिकत्वेन परार्थप्रवृत्तिविषयत्वेनान्वयः, इतरस्य तु पदस्यान्यस्मिन् क्रियापदे उद्देश्यत्वेनान्वयश्च तत्रान्वाचयश्चार्थ इत्यर्थः । यथा–'भिक्षामट गां चानये'ति । 'अट गतौ' । भिक्षामटनेन प्राप्नुहीत्यर्थः । भिक्षामट, तदा गौः सन्नता चेत्तामप्यानय, नतु गवानयने ऐदंपर्येण प्रयतितव्यमिति तात्पर्यार्थः । इतरेतरयोगं लक्षयति—**मिलितानामिति** । परस्परापेक्षितानां समुदितानामेकस्मिन् क्रियापदेऽन्वयो यत्र, तत्रेतरेतरयोगः परस्परसाहर्ये चार्थः प्रत्येतव्य इत्यर्थः । यथा धवश्च खदिरश्च धवखदिराविति । अत्र परस्परसाहित्यसूचनाय चकारद्वयप्रयोगः । अथ समाहारं लक्षयति–**समूहः समाहार इति** । परस्परसाहित्यमित्यर्थः । यथा संज्ञापरिभाषयोः समूहः संज्ञापरिभाषमिति । तत्रेतरेतरयोगद्वन्द्वे साहित्यं द्रव्यविशेषणम् । यथा धवखदिरौ छिन्द्धीति । समुदिताविति गम्यते । समाहारद्वन्द्वे तु समूहो विशेष्यम् । यथा 'संज्ञापरिभाष'मिति । तयोः समूह इति गम्यते । 'संज्ञापरिभाषमधीयते' इत्यादौ समूहस्य क्रियान्वयस्तु समूहिद्वारा बोध्य इत्यलम् । **तत्रेति** । तेषु चार्थेषु समुच्चयेऽन्वाचये च न द्वन्द्वसमास इत्यन्वयः । **ईश्वरं गुरुं च भजस्वेति** । समुच्चयोदाहरणमिदम् । 'भिक्षामट गां चानये'त्युदाहरणं चानुपदमेव व्याख्यातम् । **असामर्थ्यादिति** । 'ईश्वरं गुरुं चे'त्यत्रोक्तरीत्या ईश्वरगुरुशब्दयोः परस्परनिरपेक्षयोरावृत्ते 'भजस्वे'ति पदे क्रमेणान्वयात्परस्परमन्वयाऽभावादसामर्थ्यम् । 'भिक्षामट गां चानये'त्यत्र तु भिक्षागवोरटने आनयने च क्रमेण परस्परवार्तानभिज्ञयोरेवान्वयात्परस्परान्वयाभावादसामर्थ्यं स्पष्टमेव । ततश्च इतरेतरयोगसमाहारयोरेव चार्थयोः परस्परसाहित्यसत्त्वात्समर्थत्वेन द्वन्द्वसमासः । विस्तरस्तु मञ्जूषायां द्रष्टव्यः ।

इतरेतरयोगमुदाहरति-**धवखदिराविति** । धवश्च खदिरश्चेति द्वन्द्वः । धवो–वृक्षविशेषः, खदिरः–प्रसिद्धः, तौ समुदिताविति बोधः । समाहारे तूदाहरति—**संज्ञेति** । संज्ञा च परिभाषा च तयोः समाहार इति विग्रहः । समाहारस्यैकत्वादेकवचनम् । 'स नपुंसक'मिति नपुंसकत्वम् । ननु 'चार्थे द्वन्द्वः' इत्यत्र 'सुप्सुपे'त्यनुवृत्त्यैव धवखदिरावित्यादिसिद्धेरनेकग्रहणानुवृत्तिर्व्यर्थेत्यत आह—**अनेकोक्तेरिति** । **होतृपोत्रिति** । होता च पोता च नेष्टा च

---

**शे.]** न दोष इति भावः । समुच्चये चशब्देन समभिव्याहृतपदार्थे इतरसापेक्षत्वं बुद्ध्यते, तदसमभिव्याहृते तु न । अत एवात्रैकचशब्दप्रयोग एव । **एकस्मिन्निति** । एकधर्मावच्छिन्ने इत्यर्थः । **अन्वय इति** । यत्रैवमन्वयस्तत्र समुच्चयश्चशब्दार्थ इत्यन्वयः;न त्वन्वय एव समुच्चय इति भ्रमितव्यम् । अन्वयो विशेष्यतया, विशेषणतया वा । तत्राऽन्त्यो वक्ष्यमाणोदाहरणे । आद्यस्तु 'देवदत्तः पचति हसति चे'त्यादौ क्रियासमुच्चये । **आनुषङ्गिकत्वमनुद्देश्यत्वम्** । अन्यस्य प्राधान्यश्च तत्संबन्धिक्रियाया अवश्यकर्त्तव्यत्वरूपम् । अन्वाचये आनुषङ्गिकत्वं व्याप्यत्वं च समभिव्याहृतक्रियागतश्चाऽर्थः । **मिलितानामिति** । परस्परापेक्षाणामुद्भूतावयवभेदसमूहरूपाणामित्यर्थः । **अन्वय इति** । एकधर्मावच्छिन्नेनाऽन्वय इत्यर्थः । तेन नीधातोः संयोगजनकव्यापारानुकूलव्यापारवाचकतया द्विकर्मत्वेऽपि 'अजां ग्रामं नयति' इत्यादौ न चकारप्रयोगो, नापि समासः, एकधर्मावच्छिन्नेऽन्वयाऽभावात् । अत एवात्राऽनेकचकारप्रयोगः । यत्रैवमन्वयस्तत्रेतरेतरयोगस्तादृशसमूहश्चार्थ इत्यन्वयः । समूहे उद्भूतावयवभेदत्वञ्चावयवगतसंख्यारोपवत्त्वं, प्रत्यवयवं समूहरूपत्वारोपो वा । **समूह इति** । अनुद्भूतावयवभेदः समूह इत्यर्थः । तत्रेतरेतरयोगे उद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकवृत्तिधर्मरूपमेव प्रवृत्तिनिमित्तम् । समाहारे त्वतिरिक्तत्वेनैव समूहस्य भानात्समूहत्वं प्रवृत्तिनिमित्तमिति विशेषः । **असामर्थ्यादिति** । अनेकसुबन्तानां चार्थे वृत्त्यभावेनैकार्थीभावरूपसामर्थ्याऽभावात् । किं च तत्र चार्थश्च समभिव्याहृते विशेषणम्, समासस्त्वन्यपदार्थप्राधान्ये इव चार्थप्राधान्ये एव । स्पष्टश्चेदं सर्वमत्र सूत्रे भाष्ये । तत्र हि–'चार्थस्या-

द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु–होतापोतानेष्टोद्गातारः । राजदन्तादिषु परम् ।२।२।३१। एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः । धर्मादिष्वनियमः । अर्थधर्मौ । धर्मार्थौ । दम्पती । जम्पती । जायापती । जायाशब्दस्य दम्भावो जम्भावश्च वा निपात्यते । आकृतिगणोऽयम् । द्वन्द्वे घि ।२।२।३२। द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ । *अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे । हरिगुरुहराः । हरिहरगुरवः ।

त.] द्वन्द्वघटकपदानां चार्थान्तर्भावेण एकार्थीभाव आवश्यकः, 'समर्थः पदविधिः' इति परिभाषितत्वात्, 'चार्थे द्वन्द्वः' इत्युक्तेश्च । न चेतरेतरान्वये परस्परनिरपेक्षाणामेकार्थीभावः संभवति येन समुच्चयान्वाचयावेकार्थीभावान्तर्भूतौ स्याताम् । ततश्चेतरयोगे समाहारे च परस्परसाहित्यसत्त्वात्समासो भवति, न तु समुच्चयान्वाचययोः । परं त्वितरेतरयोगे साहित्यं विशेषणं, द्रव्यं तु विशेष्यं, समाहारे तु साहित्यं प्रधानं, द्रव्यं विशेषणमिति विवेक्तव्यम् । ननु 'नीलोत्पल'मित्यादौ चशब्दान्तर्भावेण विग्रहदर्शनादेकार्थीभावसत्त्वाच्च द्वन्द्वो दुर्वारः स्यात् । मैवम् । 'विशेषणं विशेष्येणे'ति सामानाधिकरण्ये विहितया तत्पुरुषसंज्ञया द्वन्द्वसंज्ञाया बाधात् । तस्यास्त्वसामानाधिकरण्ये सावकाशत्वात् । सामानाधिकरण्याऽभावविवक्षायां तु 'प्रमाणप्रमेये'त्यादाविव नीलोत्पलादावपि द्वन्द्वे इष्टापत्तिरेव । होतृपोत्रिति । उत्तरपदपरत्वाऽभावादनयोरानङ् न । राजदन्तादिषु । इह द्वन्द्वतत्पुरुषयोः पाठेऽपि 'अर्थधर्मौ' इत्याद्यभिप्रायेणाऽस्य द्वन्द्वेषूपन्यासः । द्वन्द्वे घि । 'अनेक'मिति सर्वेषामेव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वाऽविशेषादनियमप्राप्तावयमारम्भः । यत्र त्वनेकं घ्यन्तं तत्र द्वयोरपि पूर्वनिपातनियमः स्यादत आह—अनेकप्राप्तावेकत्रेति । अत्र व्याचख्युः—आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते, न प्रतिव्यक्त्यावृत्त्या । तत्रैकस्य पूर्वनिपाते सति जातौ लक्षणं प्रवृत्तमेवेति न पुनः प्रवर्तते । व्यक्तिपक्षस्त्विह नाश्रीयते, लक्ष्यानुरोधादिति । हरिहर-

बा].उद्गाता चे'तिं विग्रहे बहूनामपि द्वन्द्वार्थमनेकग्रहणमिति भावः। 'आनङृतो द्वन्द्वे' इति नेष्टृशब्दस्यैव उत्तरपदपरकत्वादानङ्, नतु होतृपोतृशब्दयोरपि, उत्तरपदस्य मध्यमपदव्यवहितत्वेन होतृपोतृशब्दयोरुत्तरपदपरकत्वाऽभावात् । ननु तर्हि 'होतापोतानेष्टोद्गातार' इति कथमित्यत आह–द्वयोरिति । होता च पोता चेति द्वयोर्द्वन्द्वः । होतृशब्दस्य आनङ् । ततश्च नेष्टा च उद्गाता चेति द्वयोर्द्वन्द्वः । नेष्टृशब्दस्यानङ् । ततो होतापोतारौ च नेष्टोद्गातारौ चेति द्वन्द्वद्वयगर्भो द्वन्द्वः । तत्र नेष्टोद्गातृशब्दे उत्तरपदे होतापोतृशब्दस्य आनङित्यर्थः । आनङि ङकार इत् । ङित्वादन्तादेशः । अकार उच्चारणार्थः । अन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वान्नस्य लोपः । नेष्टोद्गातृशब्दे आद्गुणश्च । राजदन्तादिषु परम् । 'उपसर्जनं पूर्व'मित्यनुवर्तते । तदाह–एष्विति । राजदन्तादिष्वित्यर्थः । पूर्वप्रयोगार्हमित्यतः प्राक् 'उपसर्जन'मिति शेषः । राजदन्त इति । दन्तशब्दस्य षष्ठीतत्पुरुषेऽप्रधानतयोपसर्जनत्वेऽपि परनिपातः । इह गणे राजदन्ताग्रेवणादिशब्दास्तत्पुरुषाः, विष्वक्सेनार्जुनादयो द्वन्द्वाश्च पठिता अतो द्वन्द्वप्रकरणे तदुपन्यासः । विष्वक्सेनार्जुनावित्यत्र 'अजाद्यदन्त'मित्यर्जुनशब्दस्य पूर्वनिपाते प्राप्ते परनिपातः । धर्मादिष्वनियम इति । गणसूत्रमिदम् । अन्यतरस्य पूर्वनिपात इत्यर्थः । अर्थधर्माविति । अजाद्यदन्तशब्दस्य पूर्वनिपातनियमे प्राप्ते तदनियमो वक्तव्य इत्यर्थः । निपात्यत इति । पाक्षिको राजदन्तादिगण इत्यर्थः । पत्युरभ्यर्हितत्वेऽपि परनिपातश्च । आकृतिगणोऽयमिति । वृत्तौ तु कृत्स्नोऽयं गणः पठितः । द्वन्द्वे घि । 'पूर्व'मित्यनुवर्तते । तदाह–पूर्वं स्यादिति । हरिहराविति । हरिशब्दस्य घित्वात्पूर्वनिपातः । ननु 'हरिहरगुरव' इत्यत्र गुरुशब्दस्यापि घित्वात्पूर्वनिपातः स्यादित्यत आह–अनेकेति । अनेकस्य घिसंज्ञकपदस्य द्वन्द्वप्राप्तौ सत्यामेकस्य घिसंज्ञकस्य पूर्वनिपातनियमः । शेषेऽन्यस्मिन् घिसंज्ञकपदविषये पूर्वनिपातस्य विकल्प इत्यर्थः । इदं 'अल्पाच्तर'मिति सूत्रे भाष्ये

शे.] ऽसत्त्वभूतत्वात्तदर्थसमासस्याप्यलिङ्गाऽसंख्यता प्राप्नोति' इत्याशङ्क्य स्वभावेन परिहृतम्। गुणवचनवद्द्रव्याश्रितः समासार्थस्तद्द्रव्यलिङ्गसङ्ख्याग्राहक इति च समाहितम् । अतो नेदं भाष्यं समाहारविषयम्, तस्य समूहद्रव्यलिङ्गादिग्राहित्वाऽभावात् । नन्वेवं 'परवत्' इति सूत्रस्थस्य 'अवयवावेवापेक्षितपरस्परौ द्वन्द्वाऽर्थौ न तु तद्व्यतिरिक्तः समुदायोऽस्ति' इति कैयटग्रन्थस्याऽसङ्गतिरिति चेत् । न, तस्यात्यन्तव्यतिरिक्तो नेत्यर्थात् । अपेक्षितपरस्परावित्यनेन च समूहरूपता उद्भूतावयवभेदता च दर्शिता। अत एव यद्वाऽवयवव्यतिरिक्तः समुदायोऽर्थः, स चावयवलिङ्गेन लिङ्गवान्' इति तदुक्तपक्षान्तरावबोधाऽविशेष इत्यन्यत्र निरूपितम् । 'अहरहर्नयमानो गामश्वं पुरुषं पशुं'मित्यादौ न समासः । अहरहःपदेन विनिगमनाविरहात् परस्परसाहित्यावगतावपि तस्य चकाराऽवाच्यत्वात् । यत्र विग्रहे चैतदेव द्योत्यं साहित्यं तत्रैव समासो नान्यत्रेति स्पष्टं भाष्ये । चार्थबलादेवं सति तात्पर्ये समभिव्याहृतक्रियायामेककालिकत्वादि गम्यते इति दिक् । 'प्राच्यभरतेषु' इति निर्देशात्सामान्यशब्दस्योपात्तविशेषातिरिक्तपरत्वे सहविवक्षासंभवेन द्वन्द्वो भवत्येव । तेन 'गोबलीवर्द'मित्यादिसिद्धिः । राजदन्तादिषु । इदं सर्वसमासविषयम्, षष्ठीसमासकर्मधारयद्वन्द्वानां तत्र पाठात् । धर्मादिष्विति । द्वन्द्व एवेदम् । राजदन्ताद्यन्तर्गणसूत्रमेतत् । जम्पतीति । अभ्यर्हित-

**अजाद्यदन्तम्** ।२।२।३३। इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ । *बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः । *घ्यन्तादजाद्यदन्तं विप्रतिषेधेन । इन्द्राग्नी । **अल्पाच्तरम्** ।२।२।३४। शिवकेशवौ । *ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण । हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समाक्षराणां किम् ? । ग्रीष्मवसन्तौ । *लघ्वक्षरं पूर्वम् । कुशकाशम् । *अभ्यर्हितं च । तापसपर्वतौ । *वर्णानामानुपूर्व्येण । ब्राह्मणक्षत्रियविट्शूद्राः । *भ्रातुर्ज्यायसः । युधिष्ठिरार्जुनौ । **द्वन्द्वश्च प्राणितूर्यसेनाऽङ्गानाम्** ।२।४।२। एषां द्वन्द्व

त.] **गुरव इति** । हरगुरुशब्दयोर्न नियमः प्रवर्तत इति भवः । **अजाद्यदन्तं** । 'समुद्राभ्राद्धः' 'लक्षणहेत्वोः क्रियायाः' इत्यादिनिर्देशादनित्यमिदं प्रकरणम् । तेन 'स सौष्ठवौदार्यविशेषशालिनी'मिति भारविप्रयोगः सङ्गच्छते । **अल्पाच्तरम्** । अतएव निपातनात्स्वार्थे तरप्, कुत्वचुत्वयोरभावश्च । यदि तु प्रकर्षे तरप् स्यात्तदा द्वयोरेव नियमः स्यात्, द्विवचनान्तोपपदत्वविषय एव तरपो विधानात् । ततश्च 'धवखदिरपलाशा' इत्यादौ बहुषु नियमो न स्यात् । **ऋतुनक्षत्राणामिति** । ऋतूनामानुपूर्व्यं प्रादुर्भावकृतं, नक्षत्राणां तूदयकृतम् । **अभ्यर्हितं च** । 'वासुदेवार्जुनाभ्यां वुनि'ति निर्देशेनेदं ज्ञाप्यत इति चतुर्थे भाष्यम् । 'अल्पाच्तरम्' 'अजाद्यदन्त'मिति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति 'सर्वतोऽभ्यर्हितं पूर्व'मिति तत्रैव सूत्रे वक्ष्यते । **युधिष्ठिरार्जुनाविति** ।

बा.] स्पष्टम् । जातिपक्षे तावदाकृतिं पुरस्कृत्य सर्वासु व्यक्तिषु तत्तच्छास्त्राणि सकृदेव प्रवर्तन्ते, सकृच्छ्रुतत्वात्, न तु प्रतिव्यक्ति, तथा सति प्रतिव्यक्त्यावृत्तिप्रसङ्गात् । ततश्च अनेकघिसंज्ञकसमवाये एकस्य घिसंज्ञकस्य पूर्वनिपाते सति पुनः शास्त्रं न प्रवर्तते, सकृत्प्रवृत्त्यैव शास्त्रस्य शान्ताकाङ्क्षत्वात् । व्यक्तिपक्षस्तु नेहाश्रीयते, लक्ष्यानुरोधादित्याहुः । **हरिहरगुरव इति** । हरगुरुशब्दयोर्न नियम इति भावः । **अजाद्यदन्तम्** । **इदमिति** । अजादित्वे सत्यदन्तमित्यर्थः । **ईशकृष्णाविति** । अत्र कृष्णस्याऽदन्तत्वेऽप्यजादित्वाऽभावान्न पूर्वनिपातः । **बहुष्वनियम इति** । 'वक्तव्य' इति शेषः । ननु इन्द्राग्नी इत्यत्र घित्वादग्निशब्दस्य पूर्वनिपातः किं न स्यादित्यत आह—**घ्यन्तादिति** । घ्यन्तशब्देन 'द्वन्द्वे घि'ति सूत्रं विवक्षितम् । ल्यब्लोपे पञ्चमी । विप्रतिषेधसूत्रेण 'द्वन्द्वे घि'त्येतद्बाधित्वा 'अजाद्यदन्त'मिति प्रवर्तते इत्यर्थः । **अल्पाच्तरम्** । अल्पः=अल्पसङ्ख्योऽच्यस्य तदल्पाच्, तदेवाऽल्पाच्तरम् । अत एव निपातनात्स्वार्थे तरप्, कुत्वाऽभावश्च । अल्पसङ्ख्याऽच्कं पदं द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः । **शिवकेशवाविति** । हरिहरयोरन्यतरोत्कर्षवादस्य पाषण्डवादत्वादिति भावः । यदि तु 'द्विवचनविभज्य' इत्यतिशयार्थे तरप्स्यात्, तदा 'धवखदिरपलाशा' इत्यत्र बहुषु न स्यादिति प्राञ्चः । शब्देन्दुशेखरे तु प्रकर्षार्थक एवायं तरबिति स्थितम् । **ऋतुनक्षत्राणामिति** । समानसङ्ख्याऽच्कानाम् ऋतूनां नक्षत्राणां च द्वन्द्वे आनुपूर्व्येण=क्रमेण पूर्वनिपातो वक्तव्य इत्यर्थः । **हेमन्तशिशिरवसन्ता इति** । त्रयाणामृतूनामानुपूर्व्यं लोकप्रसिद्धम् । एवं कृत्तिकादिनक्षत्राणामपि । **ग्रीष्मवसन्ताविति** । विषमाक्षरत्वान्न वसन्तस्य पूर्वनिपातः, किंतु अल्पाच्त्वाद्ग्रीष्मस्य पूर्वनिपातः । **लघ्वक्षरं पूर्वं** । लघु अक्षरमच् यस्य तद्द्वन्द्वे पूर्वं प्रयोज्यमिति वक्तव्यमित्यर्थः । **कुशकाशमिति** । समाहारद्वन्द्वोऽयम् । **अभ्यर्हितं चेति** । श्रेष्ठः पूर्वः प्रयोज्य इति वक्तव्यमित्यर्थः । **तापसपर्वताविति** । पर्वतस्य स्थावरजन्मतया तापसस्य तदपेक्षया अभ्यर्हितत्वं बोध्यम् । भाष्ये तु मातापितराविल्युदाहृतम् । 'गर्भधारणपोषाभ्यां पितुर्माता गरीयसी'त्यादिस्मृतेरिति तदाशयः । **वर्णानामानुपूर्व्येणेति** । एषां क्रमेण पूर्वनिपातः । 'ब्रह्म-

शे.] त्वात्पत्युः पूर्वनिपातः प्राप्तः । **निपात्यत इति** । राजदन्तादिगणे पाठेनेति भावः । अयं राजदन्तादिरित्यर्थः । **अल्पाच्तरम्** । यथाकथंचिदतिशयमारोप्य'गरीयांसम्' इत्यादिभाष्यप्रयोगे ईयसुनिव इह तरप् । अत एव 'अतन्त्रं तरनिर्देशः' इति भाष्यं सङ्गच्छते । 'उच्चैस्तराम्' इति सूत्रे च भाष्ये स्पष्टमिदम् । तत्प्रयोगश्चाऽदृष्टार्थः । अत एव 'स्वरितात्संहितायामनुदात्तानाम्' इति सूत्रेऽनुदात्तानामित्यत्र शब्दसंस्कारार्थमेव बहुत्वं विवक्ष्यते न तु तत्कार्यान्वयीति कैयटः । 'मृदङ्गशङ्खतूणवाः' इत्यादौ द्वन्द्वोत्तरपदो द्वन्द्व इति बोद्धव्यम् । 'तन्त्रं तरनिर्देशः' इति भाष्योक्तपक्षान्तरे मुख्योऽतिशयोऽर्थ इत्यर्थः; तदाऽपि प्रकृतसूत्रेऽतिशय एव विवक्षितो न तु द्वयोरित्यंशः । तेन 'शङ्खदुन्दुभिवीणानाम्' इति बहुष्वपि सिद्ध्यति । 'यदेतदल्पाच्तरमिति, तदल्पाजिति वक्ष्यामि' इति भाष्यस्य यतः कुतश्चित्सर्वस्याप्यल्पाच्त्वात्सामर्थ्यादतिशयार्थे भविष्यतीत्यर्थः । अत्र पक्षेऽल्पाच्त्वं यत्किंचिदपेक्षया, अतिशयस्तूपात्ताऽपेक्षया । अतन्त्रपक्षे तु अतिशयः सर्वथाऽविवक्षित एव, अल्पाच्त्वञ्चोपात्तापेक्षयैवेति स्पष्टं भाष्ये । तन्त्रपक्षेऽपि द्वयोरित्यंशाऽविवक्षणादतन्त्रपक्षस्यैव ज्यायस्त्वमत्र । अस्याऽत्यन्तस्वार्थिकतरब्ज्ञापकत्वमिति तु न युक्तम् । तन्त्राऽतन्त्रविचारस्य भाष्येऽसङ्गत्यापत्तेः । न हि सर्वथाऽर्थाऽभावे एवं विचारः संभवति । मम तु आरोपितत्वेऽतन्त्रत्वं, मुख्यत्वे तन्त्रत्वमिति तत्सङ्गतिः । कुत्वचुत्वयोरभावश्च निपातनात् । अत्रापि बहुष्वनियमः । **आनुपूर्व्येणेति** । ऋतूनामानुपूर्व्यं-प्रादुर्भावकृतम्, नक्षत्राणामुदयकृतं बोद्धव्यम् । अनित्यमिदं प्रकरणम्, 'लक्षणहेत्वोः' इति निर्देशात् । **घ्यन्तादिति** । अजाद्यदन्ताद्यल्पाच्तरं लघ्व-

एकवत्स्यात् । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थं

त.] इन्द्रपुत्रत्वाद्विष्णोरंशत्वाच्छूरत्वाद्वाऽभ्यर्हितत्वमर्जुनेऽप्यस्तीति न तेन नियमः सिध्यतीति भावः। द्वन्द्वश्च प्राणि। प्राणितूर्यसेनानामङ्गानीति बहुवचनान्तेनाऽङ्गशब्देन षष्ठीसमासः। अङ्गशब्दश्च प्रत्येकमन्वेति। तेन प्राण्यङ्गानां प्राण्यङ्गैरेव, तूर्याङ्गानां तूर्याङ्गैरेव, सेनाङ्गानां सेनाङ्गैरेव यो द्वन्द्वः स एकवद्भवति न तु व्यतिरेकेण। तेनेह न-मार्दङ्गिकाश्वारोहौ। अत्र प्राणिसेनयोरङ्गं नामाऽवयवः। तूर्यस्य त्वङ्गं नामोपकारकं बोध्यम्। एषां द्वन्द्व इति। प्राण्यङ्गानां द्वन्द्वः, तूर्याङ्गानां द्वन्द्वः, सेनाङ्गानां द्वन्द्व इत्यर्थः। 'द्विगुरेकवचन'मित्यत एकवचनं वर्तते। तत्रैकं वक्तीति व्युत्पत्त्या एकत्वविशिष्टः समाहाररूपो योऽर्थस्तत्प्रतिपादकः स्यादित्यर्थं मन्वानः फलितमाह-**एकवत्स्यादिति**। **पाणिपादमिति**। यद्यप्यत्र 'जातिरप्राणिना'मित्येव सिद्धं, तथापि द्रव्यप्राधान्येऽपि भवत्विति प्राणिग्रहणमित्येके। प्राणिपणवाविति व्यतिकरे मा भूदिति नियमार्थं वचनमित्यन्ये। **मार्दङ्गिकेति**। मृदङ्गवादनं शिल्पमस्येत्यर्थे 'तदस्य शिल्प'मिति ठक्। एवं 'पाणविक' इत्यपि। **रथिकाश्वारोहमिति**। रथेन चरन्तीति रथिकाः। 'पर्पादिभ्यः ष्ठ'न्निति ष्ठन्। ते चाश्वारोहाश्च तेषां समाहारः। ननु 'चार्थे द्वन्द्वः' इत्यनेन समाहारद्वन्द्वः सिद्धः तस्य चैकत्वादेकवचनमपि सिद्धमिति किमनेनेत्याशङ्क्याह-**नियमार्थमिति**। **समाहार एवेति**। 'समाहारे प्राण्यङ्गादीनामेवे'ति विपरीतनियमोऽत्र न भवति, 'तिष्यपुनर्वस्वो'-

बा.] क्षत्रियविट्शूद्रा वर्णाः' इत्यमरः। तेषामानुपूर्व्यं तु 'प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीते'-त्यादितैत्तिरीयब्राह्मणादिसिद्धम्। **भ्रातुर्ज्यायस इति**। ज्येष्ठभ्रातुः पूर्वनिपात इत्यर्थः। अत्र 'द्वन्द्वे घि' 'अजाद्यदन्त'मिति विधिद्वयम् 'अल्पाच्तर' 'लघ्वक्षरं पूर्वम्', 'ऋतुनक्षत्राणाम्', 'अभ्यर्हितं च' 'भ्रातुर्ज्यायसः' इति विधिभिः परत्वाद्बाध्यते। भाष्ये तु 'सर्वत एवाभ्यर्हितं पूर्वं निपतती'ति मतान्तरं स्थितम्। **द्वन्द्वश्च प्राणि**। 'प्राणितूर्यसेनाङ्गानी'ति द्वन्द्वगर्भषष्ठीसमासः। द्वन्द्वान्ते श्रूयमाणोऽङ्गशब्दः प्रत्येकं संबध्यते, इत्यभिप्रेत्याह—**एषामिति**। प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानां चेत्यर्थः। **द्वन्द्व इति**। समाहारद्वन्द्व इत्यर्थः। 'द्विगुरेकवचन'मिति पूर्वसूत्रे 'समाहारग्रहणं कर्तव्य'मिति वार्तिकस्यात्राप्यनुवृत्तेः। **एकवदिति**। 'एकवचन'मित्यनुवर्तते। एकं वक्तीत्येकवचनम्। ल्युट्। सामान्याभिप्रायं नपुंसकम्। **पाणिपादमिति**। पाण्योः पादयोश्च समाहार इति विग्रहः। अत्र समाहारे एकवत्त्वं, 'स नपुंसक'मिति नपुंसकत्वं च। पाण्योः पादयोश्च प्राण्यवयवत्प्राण्यङ्गोदाहरणमिदम्।

अथ तूर्याङ्गद्वन्द्वे उदाहरति—**मार्दङ्गिकपाणविकमिति**। मृदङ्गपणवशब्दौ वाद्यविशेषपरौ। इह तु तद्वादनेऽपि वर्तेते। मृदङ्गवादनं शिल्पमस्येत्यर्थे 'शिल्प'मिति ठक्। मार्दङ्गिकपाणविकयोः समाहार इति विग्रहः। तूर्याङ्गत्वादेकवचनम्। तूर्याङ्गत्वं च तद्वादकतया बोध्यम्। 'स नपुंसक'मिति नपुंसकत्वम्।

सेनाङ्गद्वन्द्वे उदाहरति—**रथिकाश्वारोहमिति**। रथेन चरन्तीति रथिकाः। 'पर्पादिभ्यः ष्ठन्'। रथिकानामश्वारोहाणां च समाहार इति विग्रहः। सेनावयवत्वादेकवत्त्वम्। पूर्ववन्नपुंसकत्वम्। ननु समाहारद्वन्द्वे समाहारस्य विशेष्यत्वात्तस्य चैकत्वादिदं सूत्रं व्यर्थमित्यत आह—**समाहारस्यैकत्वादिति**। **समाहार एवेति**। न त्वितरेतरयोगः। एषां द्वन्द्वे नियमार्थं सूत्रमित्यर्थः। एवमुत्तरसूत्राण्यपि समाहार एवेति नियमार्थानि। नचेतरेतरयोगद्वन्द्वे एषामेकवत्त्वविधानार्थमिदं सूत्रमस्तु। तथा च 'पाणिपाद' इति पुंलिङ्गमेकवचनान्तं रूपं फलमिति वाच्यं, 'समाहारग्रहणं कर्तव्य'मिति पूर्वसूत्रस्थवार्तिकस्यात्रानुवृत्तेः, एकव-

शे.] क्षरम् ऋतुनक्षत्राणामिति अभ्यर्हितश्चेति भ्रातुर्ज्यायस इति च विप्रतिषेधेन। सर्वतोऽप्यभ्यर्हितं पूर्वम्। 'वासुदेवार्जुनाभ्याम्' इति निर्देशात्। **द्वन्द्वश्च**। अत्र तूर्याङ्गशब्देन वादका एवेति 'अल्पाच्तरम्' इत्यत्र भाष्ये ध्वनितम्। अङ्गशब्द आद्यन्तयोरवयवपरः, मध्ये तूपकारकपरः। अङ्गशब्दस्य च प्रत्येकमन्वयः, तत्रैकप्राण्याद्यङ्गकद्वन्द्वाऽसंभवेनान्यग्रहणस्यावश्यकत्वे प्रत्यासत्त्या तत्तद्वाक्योपस्थितप्राण्यङ्गाद्येव द्वितीयं गृह्यते। तेन 'मार्दङ्गिकाश्वारोहौ' इति सिद्धम्। एवमेव 'अध्वर्युक्रतुः' इत्यादौ बोद्धव्यम्। एकवचनशब्दश्च योगेनैकत्वविशिष्टबोधकपरः, तदाह—**एकवदिति**। एकार्थबोधकपदवदित्यर्थः। **पाणिपादमिति**। प्राण्यङ्गत्वेन प्राणित्वात् 'जातिरप्राणिनाम्' इत्यनेन न सिद्धिः। **नियमार्थमिति**। एतच्च 'विभाषा वृक्षे'ति सूत्रे भाष्यकैयटयोः स्पष्टम्। न चैतानि इतरेतरयोग एकवद्भावविधानार्थानि कुतो न भवन्ति, 'पाणिपादः' इति च तत्फलमिति वाच्यम्। द्विगुरेकवचनम् इति साहचर्येण, व्याख्यानेन चानुवादत्वस्यैवौचित्येनाऽत्रत्यद्वन्द्वपदस्य समाहारद्वन्द्वपरत्वात्। तत्र तदनुवादेनैकत्वविधाने फलाऽभावात्। प्राण्यङ्गाद्यनुवादेन एकवचनद्वन्द्वविधयो नियमार्थाः-'एतेषां समाहार एवे'ति। तदाह-**समाहार एवेति**। ध्वनितं चेदं 'विशिष्टलिङ्ग' इत्यादौ 'समाहारे द्वन्द्वः स्या'दिति व्याख्यानेन। 'द्विगुरेके'ति सूत्रेऽनुवाद फलन्तु तत्रैवोक्तम्। विपरीतनियमाऽभावबीजं 'तिष्यपुनर्वस्वोः' इति सूत्रे उक्तम्। अनुवादे यदा प्रतिपन्ना प्रमाणान्तरावगतमप्यर्थं कार्यान्तरार्थं प्रयोगः। प्रतिपाद्यते तदाऽनुवादः, तदाह-**सिद्धस्येति**। प्रकृते चोद्यप्रतिष्ठयोरनुवादः। [illegible] कठकालापा इत्यपि।

समाहारे किम् ?। प्रावृट्शरदौ ॥ इति द्वन्द्वः ॥

अथ एकशेषप्रकरणम् ।

अथैकशेषः। 'सरूपाणाम्' । रामौ । रामाः । ॥ विरूपाणामपि समानार्थानाम् । वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ । कुटिलदण्डौ । वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।१।२।६५। यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धः किम् ?। गर्गगार्ग्यायणौ । यूना किम् ?। गर्गगार्ग्यौ । तल्लक्षणः किम् ?। भागवित्तिभागवित्तिकौ । कृत्स्नं किम् ?।

---

त.] जम् । द्वन्द्वगर्भे द्वन्द्वे तु वाक्यद्वयसजम् । इति द्वन्द्वः ।

द्वन्द्वापवादत्वेनाह—अथैकशेष इति । विरूपाणामिति । रूप्यते बोध्यत इति व्युत्पत्त्या सौत्रस्य रूपशब्दस्याऽर्थपरतापि व्याख्यानात्सूत्राक्षरैरेव लब्धुं शक्यत इति प्रागेव व्याख्यातम् । वृद्धो यूना । 'अपत्यमन्तर्हितं वृद्ध'मिति पूर्वाचार्यैः परिभाषितस्य पाणिन्युक्तगोत्राऽपरपर्यायस्येह ग्रहणं, कृत्रिमेण यूना साहचर्यात् । तदाह—गोत्रं शिष्यत इति । 'गोत्रं यूना' इत्येव तु न सूत्रितम्, 'अपत्याधिकारादन्यत्र लौकिकं गोत्रग्रहण'मिति सिद्धान्तात् । तेन औपगवश्चानन्तरः, औपगविश्च युवेत्यत्र नैकशेषः । भागवित्तीति । भगवित्तस्य गोत्रापत्यं भागवित्तिरित्यस्यापत्ये यूनि 'वृद्धाट्ठक्सौवीरेषु बहुल'मिति कुत्सायां ठक् । इह कुत्सा सौवीरत्वं चाधिकमपेक्ष्यते ननु

---

बा.] त्विट् चेति विग्रहः । षान्तत्वाट्टच्, जश्त्वस्याऽसिद्धत्वादिति भावः । छत्रोपानहमिति । छत्रं च उपानच्चेति विग्रहः । हान्तत्वाट्टच् । प्रावृट्शरदाविति । प्रावृट् च शरच्चेति विग्रहः । इतरेतरयोगद्वन्द्वत्वान्न टजिति भावः ।

इति द्वन्द्वसमासः ।

अथैकशेषो निरूप्यते । तदेवं द्वन्द्वे निरूपिते तदपवादमेकशेषप्रकरणमारभते—अथैकशेष इति । 'निरूप्यते' इति शेषः । तत्रैकशेषसूत्राणि व्याचिख्यासुः पूर्वं व्याख्यातमपि सूत्रं सन्दर्भशुद्धये आह—सरूपाणामिति । तदुदाहरणमपि स्मारयति—रामौ रामा इति । विरूपाणामिति । 'सरूपाणा'मित्यनेन सूत्रेणार्थभेदेऽपि शब्दैकरूप्ये एकशेष उक्तः, एकार्थकत्वे विरूपाणामप्येकशेषो वक्तव्य इत्यर्थः । वक्रदण्डश्चेति । अत्र शब्दवैरूप्येऽप्यर्थैक्यादन्यतरः शिष्यत इति भावः । वृद्धो यूना । रूपतोऽर्थतश्च भेदेऽपि प्राप्त्यर्थमिदम् । यूनेति । 'जीवति तु वंश्ये युवे'ति वक्ष्यमाणयुवप्रत्ययान्तेनेत्यर्थः । सहोक्ताविति । अध्याहारलब्धमेतत् । गोत्रमिति । वृद्धशब्देन 'अपत्यं पौत्रप्रभृति गोत्र'मिति सूत्रोक्तं गोत्रं विवक्षितम् । 'अपत्यमन्तरितं वृद्ध'मिति पूर्वाचार्यपरिभाषितत्वादिति भावः । गोत्रप्रत्ययान्त'मिति यावत् । न च 'गोत्रं यूने'त्येव कुतो न सूत्रितमिति वाच्यम्, 'अपत्याधिकारादन्यत्र गोत्रग्रहणेन लौकिकं गोत्रं विवक्षितमिति सिद्धान्तज्ञापनार्थत्वात् । शिष्यत इति । शेषे इति कर्मणि घञन्तमनुवर्तत इति भावः । तल्लक्षण इति । स=गोत्रप्रत्ययो युवप्रत्ययश्च, लक्षणं=निमित्तं यस्येति विग्रहः । विशेषः=वैलक्षण्यम् । तथाच गोत्रयुवप्रत्ययान्तयोर्विशेषः=वैरूप्यम्, तल्लक्षणश्चेत्=गोत्रयुवप्रत्ययनिमित्तकश्चेदित्यर्थः । अन्यनिमित्तको न चेदित्यर्थः सिद्धः । तदाह–गोत्रयुवेति । कृत्स्नमिति । एवकारलभ्यमिदम् । गार्ग्यश्चेति । गर्गस्य गोत्रापत्यं गार्ग्यः । 'गर्गादिभ्यो यञ्' । गार्ग्यायण इति । गर्गस्य गोत्रापत्यं गार्ग्यः । तस्यापत्यं युवा गार्ग्यायणः । 'यञिञोश्चे'ति फक् । गार्ग्याविति । अत्र गार्ग्यशब्दस्य गार्ग्यायणशब्दस्य च गोत्रयुवप्रत्ययकृतमेव वैरूप्यमिति गोत्रप्रत्ययान्तो गार्ग्यशब्दः शिष्यत इति भावः । गर्गगार्ग्यायणाविति । गर्गश्च गार्ग्यायणश्चेति विग्रहः । अत्र गर्गशब्दस्य गार्ग्यायणशब्दस्य च युवप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तत्वाऽभावान्नैकशेष इति भावः । गर्गगार्ग्याविति । अत्र गर्गशब्दस्य, गार्ग्यशब्दस्य च गोत्रप्रत्ययमात्रकृतवैरूप्येऽपि गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यते, यूना सहोक्त्यभावादिति भावः । भागवित्तिभागवित्तिकाविति । भगवित्तस्य गोत्रापत्यं भागवित्तिः । अत इञ् । भागवित्तेः सौवीरस्यापत्यं युवा कुत्सितो भागवित्तिकः । 'वृद्धाट्ठक् सौवीरेषु' इति ठक् । अत्र भागवित्तिशब्दस्य भागवित्तिकशब्दस्य च न [गोत्र]युवप्रत्ययमात्रकृतं वैरूप्यं, कुत्सासौवीरत्वकृतस्यापि

---

शे.] चोशब्दस्यैव द्विवचने णित्त्वे 'सुपां सुलुक्' इत्याकार इत्याहुः । मातरपितरा । एकशेषस्य वैकल्पिकत्वाद्द्वन्द्वः । अत्र पूर्वपदेऽरङादेशो निपात्यते, उत्तरपदाधिकारात् । उत्तरत्र तु 'ऋतो ङी'ति सिद्धम् । पदद्वयेऽपि तन्निपातनमित्यन्ये । इति द्वन्द्वः ॥

अपवादसङ्गत्याऽऽह—अथेति । युवप्रत्ययमात्रेति । गोत्रयुवत्वप्रतीतिमात्रेत्यर्थः । तेन गर्गाश्च गार्ग्यायणाश्च गर्गा इति सिद्ध्यति । मात्रपदेन प्रत्ययार्थकुत्सनादेः प्रकृत्यर्थस्य च प्रतीतेर्व्यवच्छेदः । तदाह—कृत्स्नमिति । एतदेवकारलभ्यं, तत्कृत एव विशेषश्चेन्न तु तत्कृतातिरिक्त इत्यर्थात् । तल्लक्षणः किमिति । 'तल्लक्षण एवे'ति किमित्यर्थः । भागवित्तिके कुत्सने ठक् । कृत्स्नं किमिति । एवकारेण प्रकृत्यर्थस्यापि व्यावृत्तिः किमर्थेति प्रश्नः । 'तल्लक्षणविशेष' इत्येव सामर्थ्यात्तल्लक्षण एवेति

**गार्ग्यवात्स्यायनौ** । **स्त्री पुंवच्च** ।१।२।६६। यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । गार्गी च गार्ग्यायणौ च गर्गाः । अस्त्रियामित्यनुवर्तमाने 'यञञोश्चे'ति लुक् । दाक्षी च दाक्षायणश्च दाक्षी । **पुमान्स्त्रिया** ।१।२।६७। स्त्रिया सहोक्तौ पुमाञ्छिष्यते तल्लक्षण एव विशेषश्चेद् । हंसी च हंसश्च हंसौ ।

त.] युवत्वमात्रकृतं वैरूप्यम् । **गार्ग्यवात्स्यायनाविति** । इह प्रकृत्यंशे वैरूप्यं,न गोत्रादिकृतम् । **स्त्री पुंवच्च** । **वृद्धा स्त्रीति** । गोत्रप्रत्ययान्तं स्त्रीवाचकमित्यर्थः । पुंवद्भावकृतवैलक्षण्यं स्फुटीकर्तुं द्विवचनान्तेन विग्रहमाह—**गार्ग्यायणाविति** । **अनुवर्तमान इति** । 'तद्राजस्य बहुषु—' इत्यतः 'पुंव'दित्यर्थातिदेशस्य फलमनेन दर्शितम् । अन्यथा स्त्रीत्वस्याऽनिवर्तनाल्लुङ् न स्यात् । 'गर्गान्पश्ये'त्यत्र नत्वं च सिद्धम् । रूपातिदेशे तु नैतत्सिद्ध्येत्, सामान्यातिदेशे विशेषानतिदेशादित्याहुः । 'वृद्धो यूना' इत्याद्यनुवर्तनान्नेह—गार्गी च वात्स्यायनौ च ।
**पुमान्स्त्रिया** । 'वृद्धो यूने'ति निवृत्तम्, 'सरूपाणा'मिति त्वनुवर्तते, 'भ्रातृपुत्रौ' इत्युत्तरसूत्रारम्भात् । तेन 'हंसश्च वरटा चे'त्यत्र न भवति । अन्यथा स्यादेवाऽतिप्रसङ्गः । हंसत्वजातिसाम्येन शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वात् । स्यादेतत्—गौरियं, गौश्चायं,तयोः सहोक्तौ 'एतौ गावौ' इति नियमतो न स्यात्, तल्लक्षणविशेषाऽभावात् । किं तु स्त्रीवाचकस्य पुंवाचकस्य वा 'सरूपाणा'मित्येकशेषोऽनियमेन स्यात् । अत्राहुः—तदितरकृतविशेषाऽभावे तात्पर्याच्च दोष इति । 'इन्द्रेन्द्राण्यौ' इत्यादौ त्वेकशेषो न भवति, स्त्रीत्वपुंस्त्वेतरपुंयोगकृतविशेषस्य सद्भावात् । स्यादेतत्—'एतौ गावौ' इति नियमतो न स्या'दिति मनोरमादौ यदुक्तं, तत्कथं सङ्गच्छताम् ? । 'त्यदादितः शेषे पुंनपुंसकतः' इति नियमप्रवृत्त्या स्त्रीवाचिनो गोशब्दस्य शेषेऽपि 'एतौ गावौ' इति नियमतः प्रयोगः सिद्ध्यत्येवेति चेत् । अत्र केचित्—दिक्प्रदर्शनमात्रमिदम् । 'नीलौ गावौ' इति 'सुन्दरौ गावौ' इति नियमतो न

बा.] वैरूप्यस्य सत्त्वात् । अतो गोत्रप्रत्ययान्तो भागवित्तिशब्दो न शिष्यत इति भावः । **गार्ग्यवात्स्यायनाविति** । गर्गस्य गोत्रापत्यं गार्ग्यः, वत्सस्य गोत्रापत्यं वात्स्यः । गर्गादित्वाद्यञ् । वत्सस्यापत्यं युवा वात्स्यायनः । 'यञिञोश्चे'ति फक् । गार्ग्यश्च वात्स्यायनश्चेति विग्रहः । अत्र गार्ग्यशब्दस्य वात्स्यायनशब्दस्य च न गोत्रयुवप्रत्ययमात्रकृतं वैरूप्यं, प्रकृतिवैरूप्यस्य गोत्रयुवप्रत्ययमात्रकृतत्वाऽभावात् । अतो गोत्रप्रत्ययान्तो गार्ग्यशब्दो न शिष्यत इति भावः । **स्त्री पुंवच्च** । 'वृद्धो यूने'त्यनुवर्तते । वृद्धेति स्त्रीलिङ्गेन विपरिणम्यते । तदाह—**यूना सहोक्तौ वृद्धा स्त्री शिष्यत इति** । गोत्रप्रत्ययान्तः स्त्रीवाचकः शब्दः शिष्यत इति भावः । स्त्रीत्वस्य वैरूप्यकारणस्याधिकस्य सत्त्वात् पूर्वेणाऽप्राप्ते वचनमिदम् । **तदर्थ इति** । तस्य=शिष्यमाणस्य स्त्रीवाचकगोत्रप्रत्ययान्तस्यार्थः पुमानिव स्यादित्यर्थः । **गार्गी चेति** । गर्गस्यापत्यं स्त्रीत्यर्थः । गर्गादियञन्तात् 'यञश्चे'ति ङीप् । **गार्ग्यायणौ चेति** । गर्गायञन्ताद्यून्यपत्ये 'यञिञोश्चे'ति फक् । **गर्गा इति** । अत्र स्त्रीत्वकृतवैरूप्याधिक्येऽपि गोत्रप्रत्ययान्तः स्त्रीवाचको गार्गीशब्दः शिष्यते । स पुंवत् । तर्हि यञ् कुतो न श्रूयत इत्यत आह—**अस्त्रियामितीति** । उपलक्षणमिदम् । 'तद्राजस्य बहुषु तेनैवास्त्रियामि'त्यतोऽस्त्रियामिति, तेनैवेति, बहुष्विति चानुवर्तमाने सतीत्यर्थः । एतेन 'पुंव'दित्यस्य प्रयोजनमुक्तम् । गार्गी च गार्ग्यायणश्चेति विग्रहस्तु न दर्शितः । तथा सत्यबहुत्वाद्यञो लुगभावे सति पुंस्त्वे स्त्रीत्वे च रूपं तुल्यं—गार्ग्याविति । तत्र पुंवत्त्वं निरर्थकं स्यात् । उदाहरणान्तरमाह—**दाक्षी चेति** । दक्षस्य गोत्रापत्यं स्त्री दाक्षी । 'अत इञि'तीञन्तात् 'इतो मनुष्यजाते'रिति ङीष् । **दाक्षायणश्चेति** । दक्षस्यापत्यं पुमान् दाक्षिः, तस्यापत्यं युवा दाक्षायणः । 'यञिञोश्चे'ति फक् । दाक्षी च दाक्षायणश्चेति विग्रहे दाक्षीशब्दः शिष्यते । तस्य पुंवत्त्वे सति ङीषो निवृत्तौ दाक्षिशब्दात् प्रथमाद्विवचने 'दाक्षी' इति भवति । अत्र तल्लक्षणश्चेदेव विशेष इत्यप्यनुवर्तते । ततश्च भागवित्ती च भागवित्तिकश्च, गार्गी च वात्स्यायनश्चेत्यत्र न भवति । **पुमान्स्त्रिया** । **तल्लक्षण एवेति** । 'वृद्धो यूने'त्यस्तदनुवृत्तेरिति भावः । **हंसी चेति** । अत्र पुंस्त्वस्त्रीत्वमात्रकृतवैरूप्यात् पुंलिङ्गो हंसशब्दः शिष्यते । स्त्रीत्वपुंस्त्वकृतवैरूप्यादेव 'सरूपाणामि'त्यस्याऽप्राप्तिः । मातृमातरावित्यत्र जननीवाचकपरिच्छेत्तृवाचकमातृशब्दयोस्तु नायमेकशेषः, एकविभक्तौ सरूपाणामित्यनुवर्त्य एकविभक्तौ सरूपाणां स्त्रीत्वपुंस्त्वेतरकृतवैरूप्यरहितानामित्याश्रयणात् । इह च मातरावित्यत्र 'अप्तृ'न्निति दीर्घतदभावाभ्यामपि वैरूप्यात् । अत एव हंसश्च वरटा चेत्यत्रापि नेत्यलम् ।

शे.] लब्धे 'चेदेव'ग्रहणं स्पष्टार्थम् । स्त्रीपुम् । स्त्रीत्वस्य वैरूप्यकारणस्याऽधिक्यात्पूर्वेणाऽप्राप्तौ वचनम् । 'तल्लक्षणश्चे'दित्यादीहापि सम्बध्यते । तेन भागवित्ती च भागवित्तिकश्च, गार्गी च वात्स्यायनश्चेत्यादौ न । अर्थे पुंवत्त्वातिदेशे फलमाह—**अनुवर्तमाने इति** । 'तद्राजस्य बहुषु' इत्यतः । **पुमान् स्त्रिया** । अत्र विभक्तावित्यनुवर्तते । विभक्तौ तदितरकृतविशेषविरहश्चेदित्यर्थः । अत एव जननीपरिच्छेत्तृवाचकमातृशब्दयोर्नैकशेषः । **हंसाविति** । स्त्रीव्यक्तेरपि हंसत्वेन स्त्रीत्वाऽनालिङ्गिताया एव बोधेन नात्र ङीष् । ब्राह्मणीवत्सश्च ब्राह्मणवत्सा चेत्यादौ तु नेदम्, प्रधाने [illegible]मात्रकृतविशेषे पवैतत्प्रवृत्तेः ।

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम्** ।१।२।६८। भ्राता च स्वसा च भ्रातरौ ।पुत्रश्च दुहिता च पुत्रौ । **नपुंसकम-नपुंसकेनैकवच्चास्यान्यतरस्याम्** ।१।२।६९। अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः । शुक्ला शाटी । शुक्लं वस्त्रम् । तदिदं शुक्लम् । तानीमानि शुक्लानि । **पिता मात्रा** ।१।२।७०। मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । मातापितरौ । **श्वशुरः श्वश्र्वा** ।१।२।७१। श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत् । [श्वश्रूश्च श्वशुरश्च] श्वशुरौ । श्वश्रूश्वशुरौ । **त्यदादीनि सर्वैर्नित्यम्** ।१।२।७२। सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते । स च

---

त.]स्यादित्युदाहर्तव्यम् । अथवा एतशब्दोऽत्राऽदन्तः कर्बुरवाची । एतश्च एता च एतौ गावौ, कर्बुरौ गावौ । 'सरूपाणा-' मित्यनेन स्त्रीलिङ्गशेषे तु 'एते गावौ' इत्यपि स्यादिति यथाश्रुतमेव समर्थनीयमित्याहुः । तदपरे न क्षमन्ते । 'त्यदादितः शेषे' इति नियमाऽप्रवृत्तावपि 'पुमान्स्त्रिया' इति नियमप्रवृत्त्या 'नीलौ गावौ' 'एतौ गावौ' इति नियमतः सिद्ध्यत्येवेति । अत्र वदन्ति--'अद्वन्द्वतत्पुरुषविशेषणाना'मित्येतन्न्यायसिद्धमेव वचनम् । 'विशेष्ये यल्लिङ्गं तदेव विशेषणेष्वपी'ति सर्वसंमतत्वात्, एवं च द्वन्द्वतत्पुरुषविशेषणेष्विव एकशेषविशेषणेऽपि 'एतौ' इत्यत्र 'त्यदादितः शेषे' इत्यादिनियमाऽप्रवृत्त्या विशेष्यगतमेव लिङ्गं भवतीति स्त्रीवाचिगोशब्दस्य शेषे 'एते' इति स्यादेवेति 'एतौ गावौ' इति नियमतो न स्यादित्याक्षेपः सङ्गच्छत एवेति दिक् । **नपुंसकमन** । अन्यतरस्याङ्ग्रहणम् 'एकवच्चे'त्यनेनैवानन्तर्यात्संबध्यते, न त्वेकशेषेणेत्याशयेनाह—**क्लीबं शिष्यते तच्च वा एकवदिति** । अनपुंसकेनेति किम् ? । शुक्लं च शुक्लं च शुक्ले । अत्र 'एकवच्चे'ति न भवति । 'अस्य'ग्रहणम् 'अस्यैवैकशेषस्य एकवद्भावो यथा विज्ञायेते'त्येवमर्थम् । अन्यथा उत्तरत्राप्येकवदित्यस्यानुवृत्तिः शङ्क्येत । **शुक्लः पट इत्यादि** । 'शुक्लः शुक्ला शुक्ल'मित्येव विग्रहः, 'पटः पटी'त्यादिप्रदर्शनं तु शुक्लशब्दस्य गुणिलिङ्गत्वस्फोरणाय । **पिता मात्रा । श्वशुरः श्वश्र्वा** । नन्वेतत्सूत्रद्वयं व्यर्थं, पितृशब्देन मातापित्रोः, श्वशुरशब्देन श्वश्रूश्वशुरयोर्लक्षणया बोधसंभवात् । न च 'सरूपाणा'मित्यादिसूत्रसमूहवदिदमपि सूत्रद्वयं द्वन्द्वनिवृत्त्यर्थमावश्यकमिति वाच्यं, पक्षे तस्यापीष्टत्वादिति चेत् । अत्राहुः—पितृश्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोः केवलयोरुक्तविषये प्रयोगं वारयितुमारम्भणीयमेव सूत्रद्वयम्, अनभिधानमाश्रित्य प्रत्याख्यानस्याऽनुचितत्वादिति । **मातापितराविति** । 'पितुर्दशगुणं

---

बा.] **भ्रातृपुत्रौ** । स्वसृदुहितृभ्यां सहोक्तौ क्रमात् भ्रातृपुत्रौ शिष्येते । स्वरूपतोऽपि वैरूप्यादप्राप्तौ वचनम् । **नपुंसकम्** । अन्यतरस्याङ्ग्रहणमेकवदित्यनेनैवान्वेति, आनन्तर्यात्, नत्वेकशेषेणेत्याह—**तच्चेति** । **तल्लक्षण एवेति** । नपुंसकत्वाऽनपुंसकत्वमात्रकृतवैरूप्यं चेदित्यर्थः । **शुक्लः पटः शुक्ला शाटी शुक्लं वस्त्रमिति** । पटशब्दसमभिव्याहाराच्छुक्लशब्दः पुंलिङ्गः, शाटीशब्दसमभिव्याहारात्स्त्रीलिङ्गः, वस्त्रशब्दसमभिव्याहारे तु नपुंसकलिङ्गः, 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वती'त्यमरोक्तेरिति भावः । स च सा च तच्च तत् । अयं च इयं च इदं च इदम् । शुक्लश्च शुक्ला च शुक्लं च शुक्लम् । अत्र नपुंसकान्येव शिष्यन्ते एकवच्च भवन्ति । **तानीमानि शुक्लानीति** । नपुंसकत्वे एकशेषे सति एकवत्त्वाऽभावे रूपाणि । न चेतरेतरयोगविवक्षायां द्विबहुवचनान्तयोः, समाहारद्वन्द्वविवक्षायामेकवचनस्य च सिद्धत्वादेकवदिति व्यर्थमिति वाच्यम्, अत एवैकशेषप्रकरणस्य समाहारेऽप्रवृत्तिज्ञापनात् । तेन ओदनश्च ओदनं च तयोः समाहारे ओदनमिति न भवति । ओदनशब्दो ह्यर्धर्चादिः । ओदनश्च ओदनं चेति इतरेतरयोगद्वन्द्वेऽपि ओदनमिति न, अनभिधानात् । एवंच क्वचिदनभिधानस्यावश्याश्रयणीयतया द्वन्द्वमात्रस्यैकशेषविषयेऽनभिधानमाश्रित्य एकस्य शब्दस्यानेकार्थत्वं चाश्रित्य एकशेषप्रकरणं भाष्ये प्रत्याख्यातम् । **पिता मात्रा** । 'पुमान् स्त्रिये'त्यत्र 'सरूपाणा'मित्यनुवृत्तेरप्राप्ताविदं वचनं, विकल्पार्थं च । **मातापितराविति** । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इति स्मृत्या मातुरभ्यर्हितत्वात्पूर्वनिपातः । 'आनङृतः' इत्यानङ् । **श्वशुरः**

---

शे.] **नपुंसकम्** । अन्यतरस्यामित्येकवच्चेत्यनेनैव सम्बद्ध्यते, आनन्तर्यात्, त्वर्थंचशब्दाच्चेत्याह-**तच्च वेति** । अनपुंसकेनेति किम् ? । शुक्लश्च शुक्लश्च शुक्ले । 'अस्य'ग्रहणमस्यैवैकवद्भाव इति बोधनार्थम् । तेनान्यसूत्राणां समाहारद्वन्द्वविषये न प्रवृत्तिः । घटघटमित्यादि त्वनभिधानान्न । एवञ्चानभिधानस्यावश्यकत्वेन द्वन्द्वमात्रस्यैकशेषविषये तदाश्रित्यैकशब्दस्यानेकार्थत्वञ्चाश्रित्यैकशेषप्रकरणं भाष्ये प्रत्याख्यातम् । अन्यथैकशेषारम्भेऽपि गार्ग्यावित्यतो गार्ग्यगार्ग्यायणबोधो न स्यात्, तस्य तदर्थकत्वाऽभावादिति दिक् । गुणे शुक्लादिपदानां पुंस्त्वाद्गुणिपरताप्रकटनाय पटादिपदोपादानम् । एवञ्च गुणपरतायां नीलो रूपमित्याद्येव प्रयोगः । गुणिपरतायान्तु विशेष्यनिघ्नता । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु, तद्वति' इत्यमरोक्तेः । तद्वतीत्यस्य द्रव्ये विशेषणतापन्ना इत्यर्थ इति प्रामाणिकाः । **तल्लक्षण एवेति किम् ?** । हिमहिमान्यौ । अत्र महत्त्वादिकृतोऽपि विशेषः । **मातापितराविति** । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' इत्युक्तेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः । 'आनङ् ऋत' इत्यानङ् । [illegible] । श्वश्रूरपि मातृतुल्यत्वोक्तेरभ्यर्हि-

देवदत्तश्च तौ। ॐत्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते। स च यश्च यौ। [ सा च या च ये ]। पूर्वशेषोऽपि दृश्यत इति भाष्यम्। स च यश्च तौ। ॐत्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि। सा च देवदत्तश्च तौ। तच्च देवदत्ता च यज्ञदत्ता च तानि। पुंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते। तच्च देवदत्तश्च ते। ॐ अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तच्च सा च

त.]माता गौरवेणातिरिच्यते' इति स्मृतेर्मातुरभ्यर्हितत्वात्पूर्वनिपातः। 'आनङृतः' इत्यानङ्। श्वश्रूश्वशुराविति। 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' इति स्मृतेः श्वश्र्वा अभ्यर्हितत्वात्पूर्वनिपातः। त्यदादीनि सर्वैः। सर्वैः किम्?। त्यदादिभिन्नैरपि सहोक्तौ यथा स्यात्, प्रत्यासत्त्या 'त्यदादिभिरेव सहोक्तौ' इत्यर्थो मा भूत्। यत्परमिति। शब्दपरविप्रतिषेधादिति भावः। त्यदादित इति। आद्यादित्वात्तसिः। 'त्यदादीनां [स्त्री]शेषे सह विवक्षितेषु यः पुमान्, यच्च नपुंसकं, तद्वशेन लिङ्गप्रतिपादकानि भवन्तीति वाच्य'मित्यर्थः। कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव। अस्यापवादमाह—अद्वन्द्वेति। द्वन्द्वादिविशेषणानां पूर्वोक्तं न, किं तु विशेष्यनिघ्नतैवेत्यर्थः। नन्वेवं 'कुक्कुटमयूर्यौ' इत्यत्र उभयपदार्थप्रधानत्वेन उभयोरपि विशेष्यत्वाद्विशेष्यनिघ्नतायामपि 'कुक्कुटमयूर्याविमे' इति नियमतो न स्यादिति चेदत्र नव्याः—'परवल्लिङ्ग'मित्यनेन द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गवत्त्वादुत्तरपदलिङ्गस्यैव द्वन्द्वतत्पुरुषप्रतिपाद्यत्वेन तल्लिङ्गाधीनतैवाऽनुप्रयोगस्येति न काचिदनुपपत्तिरिति। मयूरीकुक्कुटाविमाविति। प्रकृतानुपयुक्तमप्येतत्प्रसङ्गादुक्तम्। तच्चेति। पिप्पल्यर्द्धम्। सा चेति। अर्धपिप्पली। तत्पुरुषविशेषणमुदा-

बा.] श्वश्र्वा। श्वश्रूश्वशुराविति। श्वश्र्वा अपि मातृतुल्यत्वोक्तेरभ्यर्हितत्वम्। 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' इति स्मृतेः। इह तल्लक्षणग्रहणानुवृत्तिः स्पष्टार्था, 'श्वशुरः श्वश्र्वा' इति शब्दग्रहणात्। त्यदादीनि। सर्वैरिति। त्यदादिभिरितरैश्चेत्यर्थः। ताविति। अत्र देवदत्तशब्दो निवर्तते। तच्छब्दस्तु शिष्यते। तद्देवदत्ताविति न भवति। सर्वैः किम्?। प्रत्यासत्त्या त्यदादिभिरेव सहोक्तावित्यर्थो मा भूदित्येतदर्थम्। त्यदादीनां मिथ इति। भाष्ये स्थितमेतत्। यत्परमिति। त्यदादिगणे यत्परं पठितं तच्छिष्यत इत्यर्थः। शब्दपरविप्रतिषेधाश्रयणादिति भावः। स च यश्च यौ, सा च या च ये इति। त्यदादिगणे यच्छब्दस्य तच्छब्दादूर्ध्वं पाठात् परत्वात्स एव शिष्यते इति भावः, पूर्वशेषोऽपीति। परशब्दस्येष्टवाचित्वात्क्वचित्पूर्वमपि शिष्यत इति भावः। अत्र 'द्विपर्यन्ताना'मिति न भवति। अहं च भवांश्चावामिति भाष्योक्तेः। त्यदादित इति। आद्यादित्वात्षष्ठ्यर्थे तसिः। त्यदादीनां स्त्रीशेषेऽपि सहविवक्षितेषु यः पुमान् यच्च नपुंसकं यद्वशेन लिङ्गप्रतिपादकानि भवन्तीत्यर्थः। कानीत्याकाङ्क्षायामर्थात्त्यदादीन्येव सम्बध्यन्ते। सा च देवदत्तश्च ताविति। अत्र तच्छब्दः शिष्यते, समभिव्याहृतदेवदत्तशब्दलिङ्गश्च। देवदत्तशब्दस्तु निवर्तत एव। पुंनपुंसकयोरिति। 'सहोक्ता'विति शेषः। परत्वादिति। 'पुंनपुंसकतो लिङ्गवचनानी'त्यत्र पुमपेक्षया नपुंसकस्य पाठतः परत्वावगमादित्यर्थः। अद्वन्द्वेति। द्वन्द्वतत्पुरुषविशेषणानां त्यदादीनां स्त्रीशेषे 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानी'त्येतन्न भवतीत्यर्थः। द्वन्द्व उदाहरति—कुक्कुटमयूर्याविमे इति। 'अयं च इयं च इमे'इत्यत्र 'त्यदादितः शेषे' इति पुंलिङ्गत्वं न भवति, किंतु विशेष्यनिघ्नतैव। यद्यपि द्वन्द्वे उभयपदार्थप्रधानत्वादुभयमपि विशेष्यन्तथापि 'परवल्लिङ्ग'मिति परपदलिङ्गत्वात्तदधीनतैव विशेषणस्येति बोध्यम्। न च अयं च इयं च इत्यत्र स्त्रीशेष एव न भवति, 'पुमान् स्त्रिये'त्युक्तत्वात्, अतः पुंनपुंसकतो लिङ्गविधेः प्रसक्तिः कथमिति वाच्यं, 'परवल्लिङ्ग'मिति हि द्वन्द्वतत्पुरुषार्थयोः परवल्लिङ्गविधिः। अतो द्वन्द्वविशेषणस्य तत्पुरुषविशेषणस्य चानुप्रयोगे तदेव लिङ्गमिति भाष्यकैयटयोः स्थितम्। ततश्च 'कुक्कुटमयूर्याविमे' इति उदाहरणे-अयं च इयं चेति विग्रहे 'पुमान् स्त्रिये'ति पुंशेषेऽपि 'परवल्लिङ्ग'मिति विशेषणत्वात्स्त्रीलिङ्गत्वे सति तस्य 'त्यदादितः' इति पुंवत्त्वं प्राप्तमनेन निषिध्यत इति नानुपपत्तिः। क्वचिन्मूलपुस्तकेषु तु 'मयूरीकुक्कुटा-

शे.] तत्वम्। त्यदादीनि सर्वैः। तदादिभिरन्यैश्चेत्यर्थः। यत्परमिति। गणीयमत्र परत्वम्। अत्र द्विपर्यन्तानामिति नियमो नास्ति, 'अहञ्च भवांश्च-आवाम्' इति भाष्योक्तेः। पुंनपुंसकत इति। स्त्रीशेषेऽपीति भावः। पुंनपुंसकयोस्त्विति। तयोः सहोक्तौ 'पुंनपुंसकतः' इति वचने परत्वान्नपुंसकं शिष्यते इत्यर्थः। इदं कैयटादौ स्पष्टम्। अत एव 'नपुंसकम्' इति सूत्रे भाष्ये शुक्लं च वस्त्रं, शुक्लश्च कम्बलः, तदिदं शुक्लं, ते इमे शुक्ले इत्युदाहृतं सङ्गच्छते। त्यदाद्यन्तर्गतयोरपि एकद्वयोर्नैकशेषः, अनभिधानात्। ध्वनितश्चेदं सरूपसूत्रे भाष्ये। द्वन्द्वोऽप्येतयोर्न, एकादिनवान्तानां द्वन्द्वाऽभावस्य 'चार्थे' इति सूत्रशेषे भाष्ये ध्वनितत्वात्। एवञ्च 'एकद्विकरणे हेतू महापातकपञ्चके। तृणवन्मन्यते कोपकामौ यः पञ्च कारयन्' इति नैषधपद्ये 'एकद्विकरणे' इत्यसाध्वेव। अनेकपदः षष्ठीतत्पुरुषोऽप्यसाधुरेवेति दिक्। अस्यापवादमाह—अद्वन्द्वेति। कुक्कुटमयूर्याविति। द्वन्द्वतत्पुरुषयोः परपदलिङ्गत्वेन तदधीनतैव विशेषणस्येति बोध्यम्। तत्पुरुषे [illegible] विशेषो बोध्यः। 'तथितो-

अर्धपिप्पल्यौ ते । ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ।१।२।७३। एषु सहविवक्षायां स्त्री शिष्यते । 'पुमान्स्त्रिया'-त्यस्यापवादः । गाव इमाः । ग्राम्येति किम् ? । रुरव इमे । पशुग्रहणं किम् ? । ब्राह्मणा इमे । सङ्घेषु किम् ? । एतौ गावौ । अतरुणेषु किम् ? । वत्सा इमे । [बर्करा इमे] । ॐअनेकशफेष्विति वाच्यम् । अश्वा इमे । इह सर्वत्रैकशेषे कृतेऽनेकसुबन्ताऽभावाद्द्वन्द्वो न । तेन शिरसी शिरांसीत्यादौ समासस्येत्यन्तोदात्तः, प्राण्यङ्गत्वा-

त.] हरति—अर्धपिप्पल्यौ ते इति । यद्यपि स्त्रीनपुंसकसाधारणः 'ते' इति प्रयोगस्तथापि 'तच्च तच्च सा च अर्धपिप्पल्यस्ताः' इत्याद्युदाहरणमूह्यम् । ग्राम्य । ग्रामे भवा गाम्याः । 'ग्रामाद्यखञौ' इति यः । लिङ्गद्वयेऽपि 'गावः' इति रूपस्य समानत्वात्स्त्रीलिङ्गशेषस्य फलमाह—इमा इति । एवं च 'इमे च इमाश्च इमाः' इति स्त्रीलिङ्गशेष एव भवति, न त्वत्र 'त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानी'ति पुंलिङ्गशेषः, 'गाव इमाः' इति भाष्योदाहरणादि-त्येके । अन्ये तु ग्राम्यपशुसङ्घविषयत्वाऽविशेषात् 'गावः' इतिवत् 'इमाः' इति च स्त्रीलिङ्गशेष एव स्यादिति नास्ति शङ्कावकाश इत्याहुः । एतौ गावाविति । एकशेषस्याऽनेकविषयत्वादेवाऽनेकपरिग्रहे सिद्धे सङ्घग्रहणसामर्थ्याद्बहूनां समुदायोऽत्र गृह्यत इति भावः । एकशेषे कृते इति । विभक्त्युत्पत्त्यनपेक्षत्वेनान्तरङ्गत्वादिति भावः । नन्वेवं विषयभेदात् 'द्वन्द्वापवाद एकशेषः' इत्युद्घोषः कथं प्रवर्तत इति चेत् ? । अत्राहु-र्यद्येकशेषो न स्यात्तर्हि विभक्तावुत्पद्यमानायां द्वन्द्वः स्यात्, कृते त्वेकशेष स न भवतीति तार्किकीं प्राप्तिमादायापवादोद्घोष इति । द्वन्द्वो नेति । एतेन 'कृतद्वन्द्वानामेकशेषः' इति भ्रमो निरस्तः । न च तथैवास्तु, फले विशेषाऽभावादिति

बा.] विमा'वित्यपि दृश्यते, तत्तु प्रकृतानुपयुक्तम्, अत्र मयूरीकुक्कुटाविति द्वन्द्वार्थस्य पुंलिङ्गतया इयं चायं च इमाविति तद्विशेषणस्यानुप्रयुज्यमानस्यापि 'पुमान् स्त्रिया' इति परिशिष्टस्य पुंलिङ्गस्य इदम्शब्दस्य स्त्रीत्वाऽप्रसक्त्या तत्र 'त्यदादितः शेषे' इति पुंस्त्वविधेरप्रवृत्तत्वेन 'अद्वन्द्वतत्पुरुषविशेषणाना'मिति निषेधस्यानुपयोगात् । तत्पुरुषे उदाहरति—तच्चेति । पिप्पल्या अर्धम्—अर्धपिप्पली । 'अर्धं नपुंसक'मिति तत्पुरुषः । अर्धपिप्पली च पिप्पल्यर्धं च—अर्धपिप्पल्यौ । तच्च सा च ते । तत्र पिप्पल्यर्धशब्दविशेष्याभिप्रायं 'त'दिति नपुंसकत्वम् । 'से'ति स्त्रीत्वं तु अर्धपिप्पलीति विशेष्याभिप्रायम् । अत्र 'पुमान् स्त्रिये'त्यस्य नैव प्रसक्तिः, किन्तु 'नपुंसकमनपुंसकेनैकव'दिति नपुंसकं शिष्टम् । तत्र 'परवल्लिङ्ग'मिति स्त्रीत्वम् । तस्य स्त्रीलिङ्गतया तद्विशेषणस्यापि 'परवल्लिङ्ग'मिति स्त्रीत्वम् । तस्य 'त्यदादितः शेषे' इति नपुंसकत्वं प्राप्तं निषिध्यते । एवंच 'ते' इति स्त्रीलिङ्गमेव सिध्यति । यद्यपि स्त्रीत्वे नपुंसकत्वे वा 'ते' इति द्विवचनस्य न कोऽपि विशेषः, तथाप्यर्धपिप्पल्यस्ता इत्युदाहार्यम् । तच्च तच्च सा चेति विग्रहः । ग्राम्यपशु । एष्विति । तरुणभिन्नेषु ग्राम्याणां पशूनां सङ्घेष्वित्यर्थः । इह अनपुंसकेनेत्यनुवर्तनादाह—पुमान्स्त्रियेत्यस्यापवाद इति । गौश्च गौश्च गौश्चे'ति पुंलिङ्गस्त्रीलिङ्गेषु गोशब्देषु सहविवक्षितेषु 'पुमान् स्त्रिये' त्येतद्बाधित्वा स्त्री शिष्यत इति भावः । ननु स्त्रीशेषे पुंशेषे वा न कोऽपि रूपभेद इत्यत आह—इमा इति । अनुप्रयोगे रूपभेदः फलमिति भावः । 'त्यदादितः शेषे' इति न भवति, 'गाव इमाः' इति भाष्यप्रयोगादित्याहुः । रुरव इमे इति । रुरुः—कृष्णाख्यो मृगः । अग्राम्यपशुत्वान्न स्त्री शिष्यते । किंतु 'पुमान् स्त्रिये'त्येकशेषः । तत-श्चानुप्रयोगे 'इमे' इति पुंलिङ्गत्वमेव । ब्राह्मणा इमे इति । ब्राह्मणी च ब्राह्मणश्चेति विग्रहः । अपशुत्वान्न स्त्री शिष्यते, किन्तु 'पुमान् स्त्रिये'त्येकशेषः । अन्यथा 'ब्राह्मण्य इमा' इति स्यात् । एतौ गावाविति । स्त्रीलिङ्ग-पुंलिङ्गयोः सहोक्तावसङ्घत्वान्न स्त्री शिष्यते । सङ्घशब्दो हि बहूनां समुदाये वर्तते, अन्यथा एकशेषस्यानेकविषय-त्वादेवाऽनेकपरिग्रहे सिद्धे किं तेनेति भावः । स्त्रीशेषे तु 'एते' इत्यनुप्रयोगे रूपं स्यात् । वत्सा इमे इति । वत्साश्च वत्साश्चेति विग्रहः । तरुणत्वान्न स्त्री शिष्यते । अन्यथा 'वत्सा इमा' इत्यनुप्रयोगः स्यात् । अनेकशफेष्विति वाच्यमिति । वार्तिकमिदम् । एकशफा अश्वादयः, तेषां सहोक्तौ 'ग्राम्यपश्वि'ति न भवति । अश्वा इमे इति । एकशफत्वान्न स्त्री शिष्यते । ततश्चानुप्रयोगे पुंलिङ्गत्वमिति भावः । ननु 'सरूपाणा'मिति सूत्रे 'तिष्यपुनर्वस्वोर्नक्षत्र-द्वन्द्वे' इत्यतो द्वन्द्वग्रहणानुवृत्त्या द्वन्द्वे एकशेष इति भाष्यात्कृते द्वन्द्वे एकशेषः स्यादित्यत आह—इहेति । इहो-दाहृतेषु एकशेषविषयेषु सर्वत्र प्रसक्तं द्वन्द्वमनवकाशत्वादेकशेषो बाधते । कृते त्वेकशेषेऽनेकाभावाद्द्वन्द्वो नेत्यर्थः । 'द्वन्द्वसमासे एकशेष' इति भाष्यं तु द्वन्द्वे प्रसक्ते सहविवक्षायामेकशेष इति व्याख्येयम् । ननु कृत एव द्वन्द्वे एकशेषो भवतु, का हानिरित्यत आह—तेनेति । द्वन्द्वात् प्रागेवैकशेषाश्रयणेनेत्यर्थः । कृते द्वन्द्वे एकशेषाभ्युपगमे

शे.] यौग इत्यादौ तदित्यन्ययम् । ग्राम्यप । अत्राऽनपुंसकेनेत्यनुवर्त्तते । तदाह पुमानिति । एतौ गावाविति । सङ्घशब्दश्च बहूनां समुदाये शक्त इति भावः । वत्सा इति । अपत्यमात्रवाचिनो वत्सशब्दस्य प्रकरणादिना तरुणपरत्वे इदं बोद्धव्यम् । वस्तुतो 'बर्करा इमे' इति प्रत्युदाहरणम् । बर्करः=तरुणः पशुः । एकशेषे कृते इति । अन्तरङ्गत्वाद्विभक्त्युत्पत्तेः प्रागित्यर्थः ।

देकवद्भावश्च न । पन्थानौ पन्थान इत्यादौ समासान्तो न । इत्येकशेषः ।

## अथ सर्वसमासशेषप्रकरणम् ।

कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । परार्थाभिधानं वृत्तिः । वृत्त्यर्थावबोधकं

---

त.] वाच्यमित्याह—तेनेति । पन्थानाविति । न चात्र 'इतोऽत्सर्वनामस्थाने' इति लिङ्गात्समासान्तः सुपरिहरः, 'इतोऽ'दित्युक्तेऽपि 'सौ' इत्यनुवृत्त्या 'पन्थाः' इति सिद्धेरिति वाच्यं, 'पथो विभाषा' इति समासान्ताऽभावे 'अपन्थानौ' इत्यादौ 'इतोऽ'दिति सूत्रस्य सावकाशत्वात् । इत्येकशेषः ।

प्रसङ्गादाह—कृत्तद्धितेत्यादि । पञ्च वृत्तय इति । पञ्चानां 'वृत्तिः' इति पूर्वाचार्याणां संज्ञा इहा-

---

बा.] 'शिरसी' इति द्विवचने शिरांसीति, बहुवचने च समासस्येत्यन्तोदात्तः स्यात्, प्राण्यङ्गत्वात् 'द्वन्द्वश्च प्राणी'त्यादिना एकवद्भावश्च स्यादित्यर्थः । आदिना शिरोभ्यां शिरोभिरित्यादिसङ्ग्रहः । पन्थानाविति । द्वन्द्वे कृते एकशेषाभ्युपगमे पन्थानौ पन्थानः, पथिभ्यां पथिभि'रित्यादौ 'ऋक्पू'रित्यप्रत्ययः समासान्तः स्यादिति भावः । नचात्र 'इतोऽत्सर्व-नाम्ने'ति सर्वनामस्थाने परेऽकारविधानाल्लिङ्गात्समासान्तः सुपरिहरः । 'इतोऽदि'त्युक्तेऽपि साविसनुवर्त्य 'पन्था' इति सिद्धेरिति वाच्यं, 'पथो विभाषे'ति समासान्ताऽभावेऽपन्थानावित्यादौ 'इतोऽदि'ति सूत्रस्य सावकाशत्वात् । इत्येकशेषः ।

अथ प्रसङ्गात्सर्वसमासोपयुक्तं प्रकीर्णकं प्रकरणमारभते—कृत्तद्धितेति । कृदन्ताः, तद्धितघटिताः, समासाः, एकशेषाः, सनादिप्रत्ययान्तधातवश्चेति वृत्तयः पञ्चविधा इत्यर्थः । वृत्तिसामान्यलक्षणमाह-परार्थाभिधानं वृत्तिरिति । 'समर्थः पदविधि'रिति सूत्रे भाष्ये स्थितमेतत् । अभिधानमिति करणे ल्युट् । सामान्ये नपुंसकम् । विग्रहवाक्यावयवपदार्थेभ्यः परः=अन्यो योऽयं विशिष्टैकार्थः, तत्प्रतिपादिका वृत्तिरित्यर्थः । प्रक्रियादशायां प्रत्येक-मर्थवत्त्वेन प्रथमविगृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादिका वृत्तिरिति यावत् । समुदायशक्तिश्च 'समर्थः पदविधि'रिति परिभाषया लभ्या । तत्र समासतद्धितयोः पदविधित्वं स्पष्टमेव, 'सुप्सुपे'त्यनुवर्त्य समास-विधानात्, सुबन्तात्तद्धितोत्पत्तेः वक्ष्यमाणत्वात् । कृतामपि केषाञ्चित् 'कर्मण्य'णिति उपपदनिमित्तकानां पदविधित्व-मस्त्येव । 'सुप आत्मनः क्य'जित्यादीनामपि पदविधित्वमस्त्येव । एकशेषविधावपि द्वन्द्व इत्यनुवृत्तेर्द्वन्द्वविषये तद्विधानादेकार्थीभावोऽस्त्येवेति मञ्जूषादौ विस्तरः । वृत्त्यर्थावबोधकमिति । यद्यपि वृत्तावेव समुदायशक्त्या

---

शे.] तेनेति । द्वन्द्वत्वसमासत्वयोरभावेनेत्यर्थः । एकवदिति । 'द्वन्द्वश्च प्राणी'त्येतत्कृतो नियम इत्यर्थः । पन्थानाविति । 'इतोऽत्' इति सूत्रन्तु पन्था इत्यत्र, मथिनादौ च चरितार्थम् । कृतद्वन्द्वानामेकशेषे हि द्वन्द्वाऽलौकिकविग्रहवाक्ये ऋक्पूरित्यनेन तत्प्राप्तिर्दुर्वारा । एवञ्च वैरूप्यादेकशेषो न स्यात् । एकं पथीति, अपरं पथेति । न चोत्तरमनर्थकम्, विशिष्टरूपोपादानाऽभावेन सरूपसूत्रेऽर्थवत्परिभाषाया अप्रवृत्तेः । एवञ्चैतद्भाष्ययोजनार्थमुत्तरपदावयवत्वस्वीकारः कैयटोक्तो विफल एव । किञ्चैवं विरूपाणा-मपीत्येकशेषस्य दुर्वारत्वाद्भाष्याऽसङ्गतिः । मम तूत्तरखण्डस्याऽनर्थकत्वान्न तत्प्राप्तिरिति भावः । इत्येकशेषः ।

प्रसङ्गादाह—कृदिति । परार्थाभिधानमिति । परार्थाभिधाने करणे ल्युट्, सामान्ये नपुंसकम् । परशब्दस्तदर्थपरस्तेन युक्तो-ऽर्थः=परार्थः । एवञ्च परस्यार्थेन संबद्धो यः स्वार्थस्तस्याभिधाभियोपस्थितिस्तत्करणमित्यर्थः । इतरार्थान्वितस्वार्थस्यैवोपस्थितिर्यद्घटकैरिति यावत् । यद्वा परेण=प्रधानशब्देन शब्दान्तरार्थस्याभिधानं=विशेषणत्वेन ग्रहणं, तत्करणमित्यर्थः । यत्रत्यप्रधानपदेनेतरविशेषणकस्वार्थ-स्यैवोपस्थितिरिति यावत् । मञ्जूषायाञ्चेदं विस्तरेण निरूपितम् । यद्वा परेणाऽप्रधानशब्देन शब्दान्तरार्थस्य विशेष्यत्वेन ग्रहणमि-त्यर्थः । सा चावयवशक्तिसहकृतसमुदायशक्तिसाध्या । अवयवशक्तिर्लोकसिद्धा, शास्त्रकल्पिता च । अन्त्या तद्धितादिप्रत्यये । समु-दायस्य वृत्त्याश्रयत्वेनैषामौपचारिको वृत्तिव्यवहारः प्राचाम् । सा च 'समर्थः पदविधिः' इति परिभाषावललभ्या । तत्र समास-तद्धितयोः पदोद्देश्यकविधित्वस्य स्पष्टत्वेन मानान्तरसिद्धैकार्थीभावस्य च सत्त्वेन परिभाषाप्रवृत्तिः स्पष्टैव । कृतामप्युपपदनिमित्त-कानां पदविधित्वं स्पष्टमेव । तत्साहचर्याच्चान्यत्रापि । अत एव पाचकादीनां क्रियाकारकभावसम्बन्धप्रवृत्तिनिमित्तकत्वमूलकः क्रियाशब्दत्वव्यवहारः । कृत्=कृदन्तः । तद्धितशब्दस्तद्घटितसमुदायपरः । अत एव बहुकचोर्न दोषः । एकशेषेऽपि द्वन्द्वे इत्यनु-वृत्त्या तद्विषये एतद्विधानेनैकार्थीभाव आवश्यकः, चार्थान्तर्भावेण बोधनार्थ इत्यभिमानः । वस्तुत एकशेषे परार्थान्वितस्वार्थोपस्थाप-कत्वाऽभावाद्वृत्तित्वे न मानम् । शिष्टपदेन स्ववृत्त्यैव तत्तत्समूहरूपार्थोपस्थानस्य भाष्ये स्पष्टमुक्तत्वात् । अत एव समर्थसूत्रस्या-धिकारत्वपक्षे एकशेषाऽसङ्ग्रहो भाष्ये नोक्त इति बोद्धव्यम् । सनादिषु क्यजादेः पदविधित्वं स्पष्टमेव । सनि 'स्वभावत एव वृत्त्य-वृत्त्योः सिद्धत्वाद्वा वचनं न कार्यम्' इति तत्प्रत्याख्यानपरभाष्यप्रामाण्यात्सः । प्रातिपदिकप्रकृतिकणिच्यपि सः । 'मुण्डयति माणवक'मित्यत्र सापेक्षत्वेनाऽसामर्थ्याद्वृत्त्या न भाव्यम्' इत्याशङ्क्य 'मौण्ड्यपरमुण्डशब्दात्प्रत्ययः, तस्य च साध्यत्वेन प्रतीयमान-तया क्रियात्वात्कारकैर्नित्यसाकाङ्क्षत्वान्न दोष' इति भाष्यात्, एतनेव 'व्याकरणं सूत्रयती'त्युपपद्यते । सूत्रशब्दस्य सूत्रणक्रिया-वचनत्वेन व्याकरणे तन्निरूपितकर्मत्वोपजननात् । षष्ठी तु न, सूत्रणक्रियाया ण्यन्तार्थत्वेऽपि कृत्प्रकृत्यर्थत्वाऽभावात् । क्रियाऽस-

वाक्यं विग्रहः। स द्विविधः । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः । यथा-राज्ञः पुरुषः । राजन् अस्-पुरुष सु इति । अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा ।

समासश्चतुर्विध इति तु प्रायोवादः, अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि 'सह सुपे'ति समासविधानात् । 'पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्व' इत्यपि प्राचां वादः प्रायोऽभिप्रायः । 'सूपप्रति' 'उन्मत्तगङ्ग' मित्याद्यव्ययीभावे, अतिमालादौ तत्पुरुषे, द्वित्रा इत्यादिबहुव्रीहौ, दन्तोष्ठमित्यादिद्वन्द्वे चाऽभावात् । तत्पुरुषविशेषः कर्मधारयः । तद्विशेषो द्विगुः । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव, तत्पुरुषस्य क्वचिदेवेत्युक्तम् । किंच-

त.] प्याश्रीयत इति भावः । तल्लक्षणमाह-**परार्थेति** । प्रत्ययार्थान्तर्भावेण परपदार्थान्तर्भावेण वा यो विशिष्टो[ऽर्थः] स परार्थः । स चाभिधीयते येन तत्परार्थाभिधानम् । अतएव तिङन्ते वृत्तिर्न भवति, तत्रैकार्थीभावानभ्युपगमात् । अन्यथा 'मृदु पचती'त्यादौ फले मृदुत्वान्वयो न स्यात्, 'सविशेषणानां वृत्तिर्न भवति, वृत्तस्य च विशेषणयोगोने' त्यभ्युपगमादित्येके । समर्थसूत्रे कैयटस्त्वाह-'परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र सा वृत्ति' रित्यर्थः । यथा राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते' इति । **अविग्रह इति** । लौकिकविग्रहरहित इत्यर्थः । **अस्वपदेति** । समस्यमानयावत्पदाऽघटित इत्यर्थः । **द्वन्द्वबहुव्रीह्योरेवेति** ।

बा.] विशिष्टैकार्थप्रतिपातिपादकता, नतु वाक्ये इति समर्थसूत्रे भाष्ये प्रपञ्चितम्, तथापि समासवृत्तियोग्यविभक्त्यन्तपदानां पृथक्प्रयुज्यमानानां समूहो विग्रहवाक्यमिति बोध्यम् । **परिनिष्ठितत्वादिति** । व्याकरणसंस्कृतत्वादित्यर्थः । **प्रयोगानर्ह इति** । व्याकरणसंस्कृतत्वाऽभावादित्यर्थः । 'यथे'त्युदाहरणप्रदर्शने । **राज्ञः पुरुष इति** । 'लौकिकविग्रहवाक्य'मिति शेषः । **राजन्-अस्-पुरुष-सु इति** । 'अलौकिकविग्रहवाक्य'मिति शेषः । **अविग्रहो नित्यसमास इति** । लौकिकविग्रहवाक्यरहित इत्यर्थः । समासस्य नित्यत्वादिति भावः । **अस्वपदेति** । समस्यमानपदसमानार्थकपदान्तरकृतविग्रहो वा नित्यसमास इत्यर्थः । संज्ञाविषयसमासे तु वाक्येन संज्ञानवगमेऽपि वृत्तिघटकपदज्ञापनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव । तत्र समासनित्यत्ववादस्तु वाक्यस्य वृत्तिसमानार्थकत्वाऽभावाद्गौण इत्याहुः । **चतुर्विध इति** । अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्वश्चेति चतुर्विध इत्यर्थः । **प्रायोवाद इति** । 'प्रायु'मित्यव्ययं बाहुल्ये । बाहुल्याभिप्रायकश्च तस्य चातुर्विध्यप्रवाद इत्यर्थः । कुत इत्यत आह-**अव्ययीभावेति** । **बहिर्भूतानामपीति** । 'समासाना'मिति शेषः । **प्रायोऽभिप्राय इति** । बाहुल्यतात्पर्यक इत्यर्थः । **सूपप्रतीति** । इह 'द्वन्द्वे चे'त्यनन्तरं श्रुतम्-'अभावा'दिति पदम्-अव्यीभावे इत्यनन्तरं, तत्पुरुषे इत्यनन्तरं, बहुव्रीहावित्यनन्तरं चान्वेति । सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्रधानतया, उन्मत्तगङ्गं देशः लोहितगङ्गं देश इत्यव्ययीभावेऽन्यपदार्थप्रधानतया पूर्वपदार्थप्राधान्याऽभावादित्यर्थः । अतिमालादौ तत्पुरुषे पूर्वपदार्थप्रधानतया उत्तरपदार्थप्राधान्याऽभावादित्यर्थः । 'द्वित्रा' इति बहुव्रीहौ उभयपदार्थप्रधानतयाऽन्यपदार्थप्राधान्याऽभावादित्यर्थः । 'दन्तोष्ठ'मित्यादिद्वन्द्वे समाहारस्यैव प्रधानतया उभयपदार्थप्राधान्याऽभावादित्यर्थः । **तत्पुरुषविशेषः कर्मधारय इति** । 'तत्पुरुषः समानाधिकरणः कर्मधारय' इत्युक्तेरिति भावः । **तद्विशेषो द्विगुरिति** । कर्मधारयविशेष इत्यर्थः । 'सङ्ख्यापूर्वो द्विगुः' इत्यादिरिति भावः । **अनेकपदत्वमिति** । द्वित्रिचतुरादिपदकत्वमित्यर्थः । 'अनेकम-

शे.] त्वचैषां वृत्तिविषयमेव । मौण्ड्यार्थकादिच्छाक्यच् तु न, अनभिधानात् । **वृत्त्यर्थावबोधकमिति** । 'आख्यातं तद्धितान्तस्य यत्किञ्चिदुपदर्शकम् । गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः' इति न्यायेन सर्वत्र विग्रहे वृत्तिसमान एव विशेष्यविशेषणभाव इति भावः । हरिकारिकायां तत्रेत्यस्याख्याते इत्यर्थः स्वरसतः प्रतीयते । स्पष्टश्चायमर्थः 'तद्धर्हति' इति सूत्रे, समर्थसूत्रे च भाष्ये इति निरूपितं **मञ्जूषायाम्** । **वाक्यमिति** । तत्र तत्समासघटकपदानां तत्तत्समासप्रवृत्तियोग्यविभक्त्यन्तानां पृथक्प्रयोगरूपमित्यर्थः । सञ्ज्ञाविषयसमासे वाक्येन सञ्ज्ञाऽनवगमेऽपि वृत्तिघटकपदज्ञापनाय समस्यमानपदार्थबोधकवाक्यप्रयोगो भवत्येव । नित्यसमासत्वव्यवहारस्तु तस्य वाक्यस्य वृत्तिसमानार्थत्वाऽभावेन गौणो बोद्धव्यः । **लौकिक इति** । शब्दतस्तत्सदृश इत्यर्थः । एतेन 'तदर्थोपदर्शकं न लोके प्रयुज्यते । 'पचतीति पाचक' इत्यादेः पाककर्त्ता पाचकपदबोद्धव्य इत्यादिक्रमेणार्थात्' इति परास्तम् । **अविग्रह इति** । लौकिकविग्रहरहित इत्यर्थः । नित्याधिकारीयसमासे समासघटकपदानां व्यपेक्षाया अभावेन लौकिकवाक्यस्याऽभावाच्छब्दतस्तत्सदृशवाक्याऽभावादिति भावः । एवञ्च वृत्तिवैकल्पिकत्वबोधनं, वृत्तिघटकपदस्वरूपबोधनं, तदर्थबोधनञ्च विग्रहप्रदर्शनफलं बोद्धव्यम् । **अस्वपदेति** । समस्यमानयावत्पदाऽघटित इत्यर्थः । **दन्तोष्ठमिति** । समाहारस्य प्रधानत्वात् । यद्यपि इतरेतरयोगेऽपि समूहस्यैव प्राधान्यं तथापि तत्र तस्योद्भूतावयवभेदस्यैव भानादुभयपदार्थप्रधानत्वमिति भावः । अत एव तत्र वर्तिपदार्थस्य नोपसर्जनत्वं, तद्रूपेणैव तस्य भानात् । अत एव 'द्वन्द्वे च' इति सर्वनामसञ्ज्ञानिषेधः सार्थकः । समाहारद्वन्द्वे

**सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा। सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥१॥**

[सुपां] सुपा—राजपुरुषः। तिङा-पर्यभूषयत् । नाम्ना—कुम्भकारः। धातुना,—कटप्रूः। अजस्रम् । तिङां तिङा-पिबतखादता। खादतमोदता। तिङां सुपा-कृन्त विचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा। 'एहीडादयोऽन्यपदार्थे' इति मयूरव्यंसकादौ पाठात्समासः। इति सर्वसमासशेषः।

## अथ समासान्तप्रकरणम्।

**ऋक्पूरब्धूःपथामानक्षे** ।५।४।७४। अ-अनक्ष इति च्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्ता-

त.] अनेकग्रहणतदनुवृत्तिभ्यां तद्विधानाद्बहुपदसमासत्वं तयोरेव संभवतीति भावः। **क्वचिदेवेति**। 'ब्रह्मजात' इत्यादौ। **नाम्नेति**। प्रातिपदिकेनेत्यर्थः। **कुम्भकार इति**। अत्र हि सुबुत्पत्तेः प्रागेवोपपदसमासः। **कटप्रूः अजस्रमिति**। 'क्विब्वचिप्रच्छी'ति वार्तिके, 'नमिकम्पी'ति सूत्रे च 'कटप्रूः' 'अजस्र'मिति निपातनाद्धातुना समासः। **पिबतखादतेति**। 'आख्यातमाख्यातेने'ति मयूरव्यंसकादौ पाठात्समासः। **इति सर्वसमासशेषः**।

**ऋक्पूर**। 'अ' इति लुप्तप्रथमैकवचनान्तं, 'समासान्ताः' इति त्वधिक्रियते, तदाह—**समासस्याप्रत्ययोऽन्तावयव इति**। 'अनक्षे' इत्येतत्सामान्यतः श्रुतमपि धुरैव संबध्यते, सामर्थ्यात्, नान्यैरित्याशयेन

या.] न्यपदार्थे' इति बहुव्रीहिगतस्यानेकग्रहणस्य द्वन्द्वविधावप्यनुवृत्तेरिति भावः। **क्वचिदेवेति**। 'ब्रह्मजात' इत्यादावित्यर्थः। **इत्युक्तमिति**। 'भाष्यादा'विति शेषः। **किंचेति**-अव्ययमिदं विशेषान्तरप्रदर्शने। **सुपां सुपेति**। सुबन्तानां-सुबन्तेन तिङन्तेन प्रातिपदिकेन धातुना च समासः। **अथेति** पूर्ववाक्यव्यवच्छेदे। **तिङामिति**। तिङन्तानां तिङन्तेन सुबन्तेन च समास इत्येवं षड्विधः समासो ज्ञेय इत्यर्थः। **सुपेति**। सुपेत्यस्योदाहरणं वक्ष्यत इत्यर्थः। **राजपुरुष इति**। 'राज्ञ' इत्यस्य षष्ठयन्तस्य 'पुरुष' इति सुबन्तेन समासः। **तिङेति**। सुपां तिङेत्यस्योदाहरणं वक्ष्यत इत्यर्थः। **पर्यभूषयदिति**। 'सह सुपे'त्यत्र 'सहे'ति योगविभागात्परीति सुबन्तस्य तिङन्तेन समासः। **नाम्नेति**। सुपां प्रातिपदिकेन समासे उदाहरणं वक्ष्यत इत्यर्थः। **कुम्भकार इति**। 'उपपदमति'ङिति कुम्भस्येति षष्ठयन्तस्य कारेति प्रातिपदिकेन समासः, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते'रित्युक्तेरिति भावः। **धातुनेति**। सुपां धातुना समासे उदाहरणं वक्ष्यत इत्यर्थः। **कटप्रूरिति**। 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च' इति वार्तिकेन 'प्रु गतौ' इति धातुना समासो निपातितः, नतु तिङन्तेनोपपदसमास इति भ्रमितव्यं, क्विब्विधाविह सप्तमीनिर्देशाऽभावेन उपपदत्वाऽभावात्। अथ सुपां धातुनोदाहरणान्तरमाह—**अजस्रमिति**। 'नमिकम्पिस्म्यजसकमिहिंसदीपो रः' इति सूत्रे रप्रत्ययविधौ जस्धातुना सह नञ्समासो निपातितः। **तिङां तिङेति**। समासे उदाहरणं वक्ष्यत इत्यर्थः। **पिबतखादतेति**। मयूरव्यंसकादित्वात्तिङन्तस्य तिङन्तेन समासः। **तिङां सुपेति**। समासे उदाहरणं वक्ष्यत इत्यर्थः। **कृन्तविचक्षणेति**। हे विचक्षण! कृन्त=छिन्द्धीत्यर्थः। इह तिङन्तस्य सुबन्तेन समासः कथमित्यत आह-**एहीडादय इति**। अत्र सुपां तिङेत्यनेनैव तिङां सुबन्तेनेत्यस्यापि ग्रहणात्समासस्य षड्विधत्वं चिन्त्यम्। पञ्चविधत्वमेव युक्तम्, उभयत्रापि सुतिङ्घटितत्वाऽविशेषादित्याहुः। अन्ये तु सुपां तिङेत्यनेन सुबन्तपूर्वपदकतिङन्तोत्तरपदकसमासस्य ग्रहणम्। **तिङां सुबन्तेनेत्यनेन** तु तिङन्तपूर्वपदकसुबन्तोत्तरपदकसमासस्य ग्रहणमित्याहुः।

## इति सर्वसमासशेषः।

अथ सर्वसमाससाधारणसमासान्ता निरूप्यन्ते—**ऋक्पूरब्धूः। छेद इति**। सूत्रे 'अ' इति लुप्तप्रथमान्तनिर्देश इति भावः। 'समासान्ता' इत्यधिकृतम्। ऋगादिभिः समासो विशेष्यते। तदन्तविधिः। तदाह—**ऋगाद्यन्तस्येति**। ऋक्, पुर्, अप्, धुर्, पथिन्-एतदन्तस्येत्यर्थः। **अप्रत्यय इति**। अकारात्मकप्रत्यय

शे.] तूपसर्जनत्वादेव तदभावः सिद्ध इति बोद्धयमिति केचित्। अनुवादकमेव 'द्वन्द्वे चे'ति,अत एव 'कुक्कुटमयूर्याविमे' इति द्वन्द्वे उपसर्जनह्रस्वत्वमाशङ्क्य द्वन्द्वेनेति वचनेन परिहृतम्। एवञ्चेतरेतरयोगेऽपि बहुव्रीहिलक्षणातिव्याप्तिरित्यन्ये। **अनेकेति**। त्र्यादीत्यर्थः। **क्वचित्**=ब्रह्मजातादौ। समासविभाजकोपाधिगणनाऽऽवश्यकी चेत्तत्राह-**सुपां सुपेति**। सुपामिति सर्वत्र सम्बध्यते 'अथ तिङा'मिति यावत्। तत्र 'सुपां तिङा' इत्यनेनैव तिङां सुबन्तेनेत्यस्य सङ्ग्रहात्पञ्चविधत्वमेव युक्तम्, उभयत्रापि सुतिङ्घटितत्वस्याऽविशिष्टत्वादिति **चिन्त्यम्**। यद्वाऽऽद्येन सुबन्तपूर्वपदकस्य ग्रहणमन्त्येन तिङन्तपूर्वपदस्येति भेदः। आगास्तिस्रो वृत्तय इमा अभिधानलक्षणाः। 'अभिधानलक्षणाः कृत्तद्धितसमासाः' इति 'अकर्तरि च' इति सूत्रे भाष्योक्तेः। अभिधानञ्च शिष्टानां ततोऽर्थबोधरूपं, तद्विपरीतमनभिधानमिति 'तदस्य तदस्मिन्स्यादिति' इति सूत्रे भाष्ये स्पष्टम्। **इति सर्वसमासशेषः**।

वयवः स्यात्। अक्षे या धूस्तदन्तस्य तु न। अर्द्धर्चः। अनृचबह्वृचावध्येतर्येव। नेह—अनृक्साम। बह्वृक्सूक्तम्। विष्णोः पूः—विष्णुपुरम्। क्लीबत्वं लोकात्। विमलाऽपं सरः। द्व्यन्तरुपसर्गेभ्योऽप ईत् ।६।३।९७। 'अप' इति कृतसमासान्तस्यानुकरणम्। पञ्चम्यर्थे प्रथमा। एभ्योऽपस्य ईत्स्यात्। द्विर्गता आपो यस्मिन्निति द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। 'समापो देवयजन'मिति तु समा आपो यस्मिन्निति बोध्यम्। कृतसमासान्तग्रहणान्नेह—स्वप्। स्वपी। ॐअवर्णान्ताद्वा। प्रेपम्। परेपम्। प्रापम्। परापम्। ऊदनो-

त.] व्याचष्टे-अक्षे या धूरिति। तदन्तस्य तु नेति। सूत्रे संबन्धिनोऽधिकरणत्वविवक्षया सप्तमी। तेन अक्षसंबन्धिनी या धूस्तदन्तस्य नेत्यर्थः। यद्यत्र 'अक्षे पूर्वपदे ने'ति व्याख्यायेत, तर्हि 'दृढधूरक्षः' इत्यत्र निषेधो न स्यात्। यदि तु 'अक्षे समासार्थे ने'ति व्याख्यायेत, तदा 'अक्षधू'रित्यत्र न स्यात्। तस्मादुभयसंग्रहार्थमुक्तव्याख्यानमेव ज्यायः। अर्द्धर्च इति। 'अर्द्धं नपुंसक'मिति समासः। 'अर्द्धर्चाः पुंसि चे'ति पुंस्त्वम्। अनृगित्यादि। अनुक्तसमासान्तत्वात् 'शेषाद्विभाषे'ति कप्प्रत्यये 'अनृच्कं' 'बह्वृच्क'मित्यपि बोध्यम्। विष्णुपुरमिति। यद्यपि पुरशब्देन समासेऽप्येतत्सिध्यति, तथापि 'विष्णुपू'रित्यनिष्टवारणाय सूत्रे पूर्ग्रहणम्। कृतसमासान्तस्येति। 'येन विधि'रिति सूत्रे 'आपस्तिष्ठन्ति स्वापस्तिष्ठन्ती'ति भाष्यादिति भावः। अन्तरीपमित्यादि। अन्तर्गताः, प्रतिकूलाः, सङ्गताश्चापो अस्मिन्निति विग्रहः। उपसर्गग्रहणं प्रादेरुपलक्षणार्थम्। समाप इति। अनुपसर्गत्वान्नेत्वमिति भावः। भाष्ये तु 'समाप ईत्वप्रतिषेधो वक्तव्यः' इत्युक्तम्। स च देवयजनरूपविशेषार्थपरः 'समीपसमृद्धी'ति निर्देशात्, 'समीप'मिति भाष्योदाहरणाच्चेति ज्ञेयम्। देवयजनमिति। देवा इज्यन्ते अस्मिन्निति व्युत्पत्त्या यज्ञभूमिः। स्वबिति। 'न पूजना'दिति समासान्ताऽभावः। अवर्णान्ताद्वेति। 'द्व्यन्त'रिति सूत्रे 'ईत्वमनवर्णा'दिति वक्तव्यम्। इह मांभूत् 'प्रापं परा'मिति भाष्योक्तेः, 'गतिश्चे'ति सूत्रे 'प्रेपं परेप'मिति भाष्योक्तेश्चेति भावः। ऊदनोः। दीर्घोच्चारणं क्वचिच्छाखायामवग्रहार्थम्। बह्वृचास्तु 'अनूपे गोमान् गोभिः' इत्यत्रा-

बा.] इत्यर्थः। अक्षे या धूरिति। अक्षसंबन्धिनी या धूरित्यर्थः। सूत्रे संबन्धिनोऽधिकरणत्वविवक्षया अनक्षे इति सप्तमी। 'अनक्षे' इति च धुर्शब्देनैव संबध्यते, अन्यैरसंभवादिति भावः। अर्धर्च इति। ऋचोऽर्धमिति विग्रहः। 'अर्धं नपुंसक'मिति समासः। अकारः समासान्तः। 'अर्धर्चाः पुंसि चे'ति पुंस्त्वम्। अनृचबह्वृचावध्येतर्येवेति। अविद्यमाना ऋचो यस्येति विग्रहः। बह्व ऋचो यस्येति बह्वृचः—ऋक्छाखीत्युदाहरणम्। 'अध्येतर्येवे'ति नियमस्य प्रयोजनमाह—नेहेति। अनृक्सामेति। अविद्यमाना ऋचो यस्मिन्निति विग्रहः। ऋच्यनध्यूढं प्रजापतेर्हृदयं साम। बह्वृक्सूक्तमिति। बह्वो ऋचो यस्मिन्निति विग्रहः। अथ पुर्शब्दान्तस्योदाहरति—विष्णोरिति। ननु पुर्शब्दस्य स्त्रीत्वात् 'परवल्लिङ्ग'मिति विष्णुपुरशब्दस्य स्त्रीत्वं युक्तमित्यत आत—क्लीबत्वं लोकादिति। अथाऽप्शब्दान्तस्योदाहरति—विमलापं सर इति। विमला आपो यस्मिन्निति विग्रहः। द्व्यन्तरुप। कृतसमासान्तस्येति। अकारप्रत्ययान्तस्येत्यर्थः। एभ्य इति। द्वि अन्तर् उपसर्ग-एतेभ्य इत्यर्थः। अपस्येति। अकारप्रत्ययान्तस्याऽप्शब्दस्येत्यर्थः। ईत्स्यादिति। 'आदेः परस्ये'ति परिभाषया आदेरकारस्येत्यर्थः। द्वयोर्गता इति। द्वयोः पार्श्वयोर्गता आपो यस्मिन्निति विग्रहः। व्यधिकरणपदो बहुव्रीहिः। अकारप्रत्ययः, ईत्त्वं, सवर्णदीर्घश्च। अन्तरीपमिति। अन्तर्गता आपो यस्मिन्निति विग्रहः। प्रतीपमिति। प्रतिकूला आपो यस्मिन्निति विग्रहः। उपसर्गात्परत्वादीत्त्वम्। समीपमिति। सङ्गता आपो यस्मिन्निति विग्रहः। उपसर्गात्परस्योदाहरणान्तरमिदम्। समापो देवयजनमिति। श्रुतिरेषा। अत्र उपसर्गात्परत्वाऽभावादीत्त्वं नेति भावः। देवा इज्यन्ते यस्मिन्निति देवयजनं यज्ञभूमिः। 'समाप' इति पुंस्त्वं छान्दसम्। भाष्ये तु 'समाप ईत्त्वं ने'त्युक्त्वा समापं नाम देवयजनमित्युदाहृतम्। तत्र समापशब्दो देवयजनविशेषवाच्येव विवक्षितः, 'समीपसमृद्धी'ति निर्देशात्, 'समीप'मिति भाष्ये उदाहरणाच्च। स्वबिति। शोभना आपो यस्येति विग्रहः। 'न पूजना' दिति समासान्तनिषेधः। अकृतसमासान्तत्वादीत्त्वं न। स्वपी इति। प्रथमाद्विवचनमिदम्। अवर्णान्ताद्वेति। अवर्णान्तादुपसर्गात्परस्याऽपस्य ईत्त्वं वा वक्तव्यमित्यर्थः। प्रेपं प्रापमिति। प्रगता आपो यस्येति विग्रहः। परेपं परापमिति। परागता आपो यस्येति विग्रहः। ऊदनोर्देशे। ईत्त्वस्याऽपवादः। ऊत्स्यादिति। 'आदेः

शे.] अ इति लुप्तविभक्तिकः सौत्रो निर्देश इति भावः। अक्षे या धूरिति। अक्षसम्बन्धिनी या धूरित्यर्थः। सम्बन्धिनोऽधिकरणत्वविवक्षया सप्तमी सूत्रे। अर्धर्च इति। 'अर्धर्चाः' इति पुंस्त्वम्। अध्येतर्येवेति। अध्येतृत्वयोग्यतावतीत्यर्थः। अध्ययनयोपस्थितत्वादृक्सम्बन्ध्येव। अनृक् सामेति। पक्षे कबपि-अनृच्कमित्यादि। द्व्यन्तरुप। अन्तरीपमित्यादेरन्तर्गताः, प्रतिकूलाः, सङ्गताश्चापोऽस्मिन्निति विग्रहः। उपसर्गग्रहणं प्रादेरुपलक्षणम्। समा आप इति। एवञ्चाऽप्रादित्वा-

देशे ।६।३।९८। अनोः परस्याऽपस्य ऊत्स्याद्देशे । अनूपो देशः । राजधुरा । अक्षे तु-अक्षधूः । दृढधूः-अक्षः । सखिपथः । रम्यपथो देशः । अच् प्रत्यन्ववपूर्वात्सामलोम्नः ।५।४।७५। एतत्पूर्वात्सामलोमान्तात्समासादच् स्यात् । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् । कृष्णोदक्पाण्डुसङ्ख्यापूर्वाया भूमेरजिष्यते । कृष्णभूमः । उदग्भूमः । पाण्डुभूमः । द्विभूमः त्रिभूमः प्रासादः । ※सङ्ख्याया नदीगोदावरीभ्यां च । पञ्चनदम् । सप्तगोदावरम् । 'अ'जिति योगविभागादन्यत्रापि—पद्मनाभः । अक्ष्णोऽदर्शनात् ।५।४।७६। अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः । गवामक्षीव गवाक्षः । अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुन-

त.] नूपशब्दं नावगृह्णन्ति । अनूप इति । अनुगता आपोऽस्मिन्नित्यनूपो देशः । 'जलप्रायमनूपं स्या'दित्यमरः । प्रतिसाममिति । अव्ययीभावः, प्रादिसमासो, बहुव्रीहिर्वा । एवमनुसामादावप्यूह्यम् । कृष्णोदगिति । 'अ'जिति योगविभागेन गतार्थमिदम् । एवमुत्तरवार्तिकमपि । 'कृष्णभूम' इत्यादयो बहुव्रीहयः । पद्मनाभ इति । 'पद्मं नाभावस्ये'ति विग्रहः । गड्वादित्वात्सप्तम्यन्तस्य परनिपातः । 'पद्माकारा नाभिरस्ये'ति वा । एवमूर्णनाभोऽपि ज्ञेयः । तत्र तु 'ङ्यापोः संज्ञाछन्दसो'रिति ह्रस्वो विशेषः । अक्ष्णो । दृश्यतेऽनेनेति दर्शनं चक्षुः, तद्वाचिनोऽक्षिशब्दस्य पर्युदासादमुख्यस्य ग्रहणमित्याशयेनाह—अचक्षुःपर्यायादिति । गवाक्ष इति । गावः-किरणाः । अक्षिशब्दो रन्ध्रवाची । षष्ठीसमासः । अचतुर । निपात्यन्त इति । निपातनफलं तु समासविशेषनियमः, टिलोपादिकं च ।

बा.] परस्ये'ति ज्ञेयम् । अनूपो देश इति । अनुकूला आपो यस्मिन्निति विग्रहः । अप्रत्ययः, ऊत्वं, सवर्णदीर्घश्च । 'अनूप' इत्यत्र ऊपोऽवग्रहणार्थं दीर्घोच्चारणमिति भाष्यम् । बह्वृचास्तु 'अनूपो गोमान् गोमि'रित्यत्र नावगृह्णन्ति । तदेवं 'ऋक्पूः' इति सूत्रगतोऽप्शब्दः प्रपञ्चितः । अथ धूर्शब्दान्तस्योदाहरति—राजधुरेति । राज्ञो धूरिति विग्रहः । धूर्शब्दोऽत्र राज्ये लाक्षणिकः । अकारप्रत्ययः । 'परवल्लिङ्ग'मिति स्त्रीत्वम् । टाप् । अक्षे त्विति । अक्षसंबन्धिनी या धूस्तदन्तादकारप्रत्ययो न । अक्षधूरिति । अक्षो नाम रथावयवदण्डविशेषः, यदग्रयोश्चक्रे आसज्येते तस्याक्षस्याग्रं धूः । अनेन 'अक्षे समासार्थे धुरो नाऽकारप्रत्ययः' इति व्याख्यानेऽत्र निषेधो न स्यादिति सूचितम् । दृढधूरक्ष इति । दृढा धूर्यस्येति विग्रहः । एतेनाऽक्षे पूर्वपदे धुरो नाकारप्रत्यय इति व्याख्याने अत्र निषेधो न स्यादिति सूचितम् । तदेवं 'ऋक्पू'रिति सूत्रे धूःशब्दः प्रपञ्चितः । अथ पथिन्शब्दस्योदाहरति—सखिपथाविति । सखा च पन्थाश्चेति द्वन्द्वः । अकारप्रत्ययः । 'नस्तद्धिते' इति टिलोपः । 'सखिपथ' इति पाठे तु सख्युः पन्था इति तत्पुरुषः । रम्यपथ इति । रम्यः पन्था यस्येति विग्रहः । अच्प्रत्यन्वव । एतत्पूर्वादिति । प्रति-अनु-अव-एतत्पूर्वकादित्यर्थः । प्रतिसाममिति । प्रतिगतं सामेति विग्रहः । अच् । 'नस्तद्धिते' इति टिलोपः । अनुसाममिति । अनुगतं सामेति विग्रहः । अच् । टिलोपः । अवसाममिति । अवकृष्टं सामेति विग्रहः । अच् । टिलोपः । प्रतिलोममिति । प्रतिगतं लोमेति विग्रहः । अनुलोममिति । अनुगतं लोमेति विगहः । अवलोममिति । अवगतं लोमेति विग्रहः । सर्वत्राऽच्, टिलोपः । कृष्णोदगिति । नेदं वार्तिकं । किं त्वच्प्रत्ययेत्यत्र अजिति योगविभागमूलाभियुक्तोक्तिरेषा । कृष्णेति । कृष्णा भूमिर्यस्य, उदीची भूमिर्यस्य, पाण्डुर्भूमिर्यस्य, द्वे भूमी यस्य, तिस्रो भूमयो यस्येति च विग्रहः । प्रासादः सर्वत्र विशेष्यः । सङ्ख्याया इति । इदमप्यजिति योगविभागमूलकमेव । सङ्ख्यायाः परो यो नदीशब्दो, गोदावरीशब्दश्च ताभ्यामजिष्यत इत्यर्थः । पञ्चनदमिति । पञ्चानां नदीनां समाहार इति विग्रहः । सप्तगोदावरमिति । सप्तानां गोदावरीणां समाहार इति विग्रहः । 'नदीभिश्चे'त्यव्ययीभावः । अचि 'यस्येति चे'ति लोपः । 'नाव्ययीभावा'दित्यम् । अन्यत्रापीति । 'अ'जिति शेषः । पद्मनाभ इति । पद्मं नाभौ यस्येति विग्रहः । वस्तुतस्तु योगविभागस्य भाष्येऽदर्शनात्पृषोदरादित्वमेवोचितम् । अक्ष्णोऽदर्शनात् । 'अदर्शना'दिति च्छेदः । दृश्यतेऽनेनेति दर्शनं—चक्षुः । करणे ल्युट् । अचक्षुर्वाचिन इति फलितम् । तदाह—अचक्षुःपर्यायादिति । गवामक्षीवेति । अक्षिशब्दस्तत्सदृशे लाक्षणिक इति सूचयितुमिवशब्दः प्रयुज्यते । मुख्यवृत्त्या चक्षुर्वाचकत्वाऽभावादच् । पुंस्त्वं लोकात् । अचतुर ।

शे.] त्रेत्वमिति भावः । स्वविति । 'न पूजनात्'इति समासान्तनिषेधः । 'कृष्णोदक्पाण्डु' इति 'सङ्ख्याया' इति च 'अच्प्रत्यन्वव' इत्यत्राऽजिति योगविभागसिद्धाभियुक्तोक्तिरिति बोद्धव्यम् । सङ्ख्याया इत्येतत् 'नदीभिश्च' इति विहितसमास एवेत्याहुः । भाष्ये योगविभागस्यादर्शनात् पृषोदरादित्वेनेदं सिद्धमिति केचित् । करणल्युडन्तदर्शनशब्दो योगरूढ्या चक्षुःपरः, तत्पर्युदासेऽक्षिपदं नत्सदृशपरमित्याशयेनाह—गवामक्षीवेति । धेन्वनडुहाविति । समाहारे तु 'द्वन्द्वाच्चुदे'ति टचैव सिद्धमिति भावः ।

गोष्ठश्वाः ।५।४।७७। एते पञ्चविंशतिरजन्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वार्यस्य अचतुरः । विचतुरः । सुचतुरः । *त्र्युपाभ्यां चतुरोऽजिष्यते । त्रिचतुराः । चतुर्णां समीपे [ये सन्ति ते] उपचतुराः । तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । उरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनाट्टिलोपः । पदष्ठीवम् । निपातनात्पादशब्दस्य पद्भावः । नक्तं च दिवा च नक्तन्दिवम् । रात्रौ च दिवा च रात्रिन्दिवम् । रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा च अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । 'सरजस'मिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु सरजः पङ्कजम् । निश्चितं श्रेयो निःश्रेयसम् । तत्पुरुष एव । नेह–निःश्रेयान् पुरुषः । पुरुषस्यायुः पुरुषायुषम् । ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् । ततो

त.] तदाह—आद्या इति । बहुव्रीहय इति । बहुव्रीहय एवेत्यर्थः । तेन तत्पुरुषे अचत्वारो विचत्वार इत्येव भवतीति भावः । एवमुत्तरत्राप्यवधारणमूह्यम् । त्रिचतुरा इति । त्रयश्चत्वारो वेति विग्रहः । 'सङ्ख्ययाव्ययासन्ने'ति बहुव्रीहिः । 'बहुव्रीहौ सङ्ख्येये' इति डचोऽपवादोऽच् । अक्षिभ्रुवमिति । प्राण्यङ्गत्वादेकवत् ।

ऊरू चाष्ठीवन्तौ चेति । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । 'जानूरुपर्वाऽष्ठीवदस्त्रिया'मिति च । ऊर्वष्ठीवं । पदष्ठीवमिति । प्राण्यङ्गत्वादेकवद्भावः । द्वन्द्वो निपात्यत इति । 'विरूपाणामपी'त्येकशेषं बाधित्वेति शेषः । सरजसमिति । 'अव्ययीभावे चाऽकाले' इति सहस्य सभावः । सरजः पङ्कजमिति । 'सरजसमकरन्दनिर्भरासु' इति माघप्रयोगस्तु चिन्त्य इति भावः । निःश्रेयानिति । 'निश्चितं श्रेयो येने'ति विग्रहः । 'निःश्रेयस्कः' इति

बा.] आद्यास्त्रयो बहुव्रीहय इति । बहुव्रीहय एवेत्यर्थः । भाष्यवाक्यमिदम् । अचतुर इति । 'नञोऽस्त्यर्थाना'मिति विद्यमानपदलोपः । विचतुर इति । विगतानि चत्वारि यस्येति विग्रहः । सुचतुर इति । सु=शोभनानि चत्वारि यस्येति विग्रहः । 'न पूजना'दिति निषेधो बाध्यते । त्र्युपाभ्यामिति । वार्तिकमिदम् । त्रि उप आभ्यां परो यश्चतुर्शब्दस्तस्मादजिष्यते । त्रिचतुरा इति । त्रयो वा चत्वारो वेति विग्रहः । 'सङ्ख्ययाव्ययासन्ने'ति बहुव्रीहिः । 'बहुव्रीहौ सङ्ख्येये ड'जिति डचं बाधित्वाऽच् । डचि तु टिलोपः स्यात् । उपचतुरा इति । त्रयः पञ्च वेत्यर्थः । 'सङ्ख्ययाव्यये'ति बहुव्रीहिः । अच् । तत एकादश द्वन्द्वा इति । द्वन्द्वा एवेत्यर्थः । इदमपि भाष्यवाक्यम् । स्त्रीपुंसाविति । स्त्री च पुमांश्चेति विग्रहः । अच् । स्त्रीपुमांसाविति न भवति । धेन्वनडुहाविति । धेनुश्च अनड्वांश्चेति विग्रहः । अच् । धेन्वनड्वाहाविति न भवति । समाहारद्वन्द्वे तु 'द्वन्द्वाच्चुदषहान्ता'दित्येव सिद्धम् । ऋक्सामे इति । ऋक्च साम चेति विग्रहः । अच् । टिलोपः । ऋक्सामनी इति न भवति । वाङ्मनसे इति । वाक् च मनश्चेति विग्रहः । अच् । वाङ्मनसी इति न भवति । अक्षिभ्रुवमिति । अच् । प्राण्यङ्गत्वादेकवत्त्वम् । अक्षिभ्रु इति न भवति । दारगवमिति । समाहारद्वन्द्वादच् । 'दारगु' इति न भवति । इतरेतरयोगद्वन्द्वे तु दारगावः । ऊर्वष्ठीवमिति । प्राण्यङ्गत्वादेकवत्त्वम् । ऊरू=सक्थिनी । अष्ठीवन्तौ=जानुनी । 'सक्थि क्लीबे पुमानूरुः' इति, 'जानूरुपर्वाष्ठीवदस्त्रिया'मिति चामरः । नन्वडित्वादनान्तत्वाच्च कथं टिलोप इत्यत आह–निपातनाट्टिलोप इति । पदष्ठीवमिति । पादौ चाऽष्ठीवन्तौ चेति द्वन्द्वादच् । प्राण्यङ्गत्वादेकवत्त्वम् । नन्वभत्वात्कथमिह पादशब्दस्य पद्भाव इत्यत आह–निपातनादिति । नक्तमिति मान्तमव्ययम् । दिवेत्याकारान्तमव्ययम् । नक्तंदिवेति द्वन्द्वादच् । 'यस्येति चे'त्याकारलोपः, 'अव्ययीभावश्चे'त्यव्ययत्वम्, नपुंसकत्वं च । 'नाव्ययीभावा'दित्यम्भावः । मान्तत्वमिति । रात्रौ च दिवा चेति द्वन्द्वे कृते सुब्लुकि कृते रात्रेर्मान्तत्वं निपात्यत इत्यर्थः । यस्येति चे'त्याकारलोपः, अम्भावश्च । अहर्दिवमिति । द्वन्द्वे कृते सुब्लुकि, 'लुका लुप्ते प्रत्ययलक्षणं ने'ति प्रत्ययलक्षणाऽभावात् 'रोऽसुपी'ति रत्वम्, अच्, 'यस्येति चे'त्याकारलोपः, अम्भावश्च । नन्वहन्शब्दार्थस्य दिवाशब्दार्थस्य च एकत्वात्साहित्याऽभावात्कथमिह द्वन्द्वः । अहर्व्यक्तिभेदमादाय द्वन्द्वप्रसक्तावपि 'विरूपाणामपि समानार्थकाना'मित्येकशेषो दुर्वार इत्यत आह–वीप्सायां द्वन्द्वो निपात्यत इति । 'नित्यवीप्सयो'रिति वीप्सायां द्विर्वचने कृते एकशेषं बाधित्वा द्वन्द्वो निपात्यत इत्यर्थः । सरजसमिति । रजोऽप्यपरित्यज्य इत्यस्वपदविग्रहः । रजः=धूलिः । साकल्ये सहशब्दस्य रजश्शब्देनाऽव्ययीभावः । 'अव्ययीभावे चाकाले' इति सहशब्दस्य सभावः । अच् । अव्ययीभाव इति । भाष्ये तथावचनादव्ययीभावस्य ग्रहणमिति भावः । सरजः पङ्कजमिति । रजोभिः परागैः सहेति विग्रहः । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्ये'ति सहस्य सः । बहुव्रीहित्वान्नाऽच् । निःश्रेयसमिति । कर्मधारयादच् । तत्पुरुष एवेति । तथा भाष्यादिति भावः ।



शे.] द्वन्द्वो निपात्यत इति । 'विरूपाणामपि' इत्येकशेषं बाधित्वेति भावः । सरजसमिति । 'अव्ययीभावे च' इति सहस्य सः ।

द्वन्द्वः—ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः—जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपम् उपशुनम् । टिलोपाऽभावः संप्रसारणं च निपात्यते । गोष्ठे श्वा गोष्ठश्वः । **ब्रह्महस्तिभ्यां वर्चसः** ।५।४।७८। [ ब्रह्महस्तिभ्यां वर्चसः ]अच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् । *पल्यराजभ्यां चेतिवक्तव्यम् । पल्यवर्चसम् । राजवर्चसम् । **अवसमन्धेभ्यस्तमसः** ।५।४।७९। अवतमसम् । संतमसम् । अन्धयतीत्यन्धम् । पचाद्यच् । अन्धं तमः—अन्धतमसम् । **श्वसीवसीयश्श्रेयसः** ।५।४।८०। वसुशब्दः प्रशस्तवाची, तत ईयसुनि वसीयः । श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयमाह । मयूरव्यंसकादित्वात्समासः । श्वोवसीयसम् , श्वःश्रेयसं

त.] केषाञ्चित्प्रत्युदाहरणमशुद्धम् ,'ईयसश्चे'ति कपो निषेधात् । **गोष्ठे श्वेति** । एतेन 'सप्तमीतत्पुरुष एवे'ति नियमो दर्शितः, तेन षष्ठीतत्पुरुषे 'गोष्ठश्वा' इत्येव । **ब्रह्मवर्चसमिति** । षष्ठीतत्पुरुषः । एवं हस्तिवर्चसमपि । **पल्येति** । पलं मांसमर्हती'ति पल्यो मांसभोजी, तदीयं वर्चः—पल्यवर्चसम् । **अवतमसमित्यादि** । अवहीनं संततं च तम इति विग्रहः । **अन्धयतीति** । 'अन्ध दृष्ट्युपघाते' चुरादिः । **अन्धमिति** । गाढमित्यर्थः । **श्वसो** । 'श्वस्-शब्दात्प्रशस्तवचनादीयसुनि'त्याकरविरुद्धं व्याचक्षाणा उपेक्ष्या इति ध्वनयति—**वसुशब्द इति** । **वसीय इति** । 'यः कामयेत वसीयान् स्या'मिति श्रौतप्रयोगोऽप्यत्रानुकूल इति भावः । **श्वस्शब्द इति** । कालवाच्यप्ययं, प्रकृते त्वर्थविशेषपरः, शक्तिस्वाभाव्यात्तमेवाह—**उत्तरपदार्थप्रशंसामिति** । उत्तरपदार्थभूतां प्रशंसामित्यर्थः । **आशीर्विषयमिति** । षष्ठीसमासः । विषयशब्दस्याऽजहल्लिङ्गत्वात्पुंलिङ्गनिर्देशः । 'उत्तरपदार्थप्रशंसाया आशीर्विषयता-

बा.] **निःश्रेयानिति** । निश्चितं श्रेयो यस्येति बहुव्रीहित्वान्नाऽजिति भावः । 'ईयसश्चे'ति निषेधान्न कप् । **पुरुषायुषमिति** । षष्ठीसमासादजिति भाष्यम् । **ततो द्विगू इति** । भाष्यवाक्यमिदम् । **द्व्यायुषं त्र्यायुषमिति** । द्वयोरायुषोः समाहार इति, त्रयाणामायुषां समाहार इति च विग्रहः । 'तद्धितार्थ'इति द्विगोरच् । **ततो द्वन्द्व इति** । भाष्यवाक्यमिदम् । **ऋग्यजुषमिति** । ऋचश्च यजूंषि च एषां समाहार इति समाहारद्वन्द्वः । **ततस्त्रयः कर्मधारया इति** । तथा भाष्यादिति भावः । **जातोक्ष इति** । जातश्चासावुक्षा चेति विग्रहः । अचि सत्युक्षन्शब्दे टिलोपः । **महोक्ष इति** । महांश्चासावुक्षा चेति विग्रहः । 'आन्महतः' इत्यात्वम् । अचि टिलोपः । **वृद्धोक्ष इति** । वृद्धश्चासावुक्षा चेति विग्रहः । अचि टिलोपः । **उपशुनमिति** । अव्ययीभावादच् , तथा भाष्यात् । नन्वत्र 'नस्तद्धिते' इति टिलोपः कुतो न स्यात् , 'अतद्धिते' इति पर्युदासात् 'श्वयुवमघोनामतद्धिते' इति कथं वा संप्रसारणं स्यादित्यत आह—**टिलोपाऽभावः संप्रसारणं च निपात्यत इति** । **गोष्ठश्व इति** । 'सप्तमीसमासाद'जिति भाष्यम् । अत एव भाष्यात्सप्तमीसमासः । टिलोपः । 'अतद्धिते' इति निषेधान्न संप्रसारणम् । षष्ठीतत्पुरुषे तु—गोष्ठश्वा । **ब्रह्म** । शेषपूरणेन सूत्रं व्याचष्टे—**अच्स्यादिति** । **ब्रह्मवर्चसमिति** । ब्रह्मणो वर्च इति विग्रहः । **हस्तिवर्चसमिति** । हस्तिनो वर्च इति विग्रहः । **पल्यराजभ्यामिति** । आभ्यां परो यो वर्चश्शब्दस्तस्मादपि अजिति वक्तव्यमित्यर्थः । **पल्यवर्चसमिति** । पलं मांसं, तदर्हति पल्यः । मांसभोजीत्यर्थः । तस्य वर्च इति विग्रहः । **राजवर्चसमिति** । राज्ञां वर्च इति विग्रहः । **अवसमन्धेभ्यस्तमसः** । अव सम् अन्ध एभ्यः परो यस्तमश्शब्दस्तस्मादच्स्यादित्यर्थः । **अवतमसमिति** । अवहीनं तम इति विग्रहः । प्रादिसमासः । **संतमसमिति** । संततं तम इति विग्रहः । प्रादिसमासः । **अन्धयतीत्यन्धमिति** । 'अन्ध दृष्ट्युपघाते' चुरादिः । दृष्टिं प्रतिबध्नातीत्यर्थः । **पचाद्यजिति** । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति पचादित्वप्रयुक्तोऽच्प्रत्यय इत्यर्थः । अचि णिलोपेऽन्धमिति रूपम् । गाढमित्यर्थः फलति । गाढस्यैव तमसो दर्शनप्रतिबन्धकत्वात् ।

**अन्धतमसमिति** । कर्मधारयादच् । **श्वसः** । 'श्व'सित्यव्ययात् परो यो वसीयश्शब्दः, श्रेयश्शब्दश्च तस्मादच्स्यादित्यर्थः । **वसुशब्दः प्रशस्तवाचीति** । 'यं कामयेत वसीयान् स्यादि'त्यादौ तथा दर्शनादिति भावः । **तत इति** । अतिशयेन वसुरिति विग्रहे 'द्विवचनविभज्योपपदे' इतीयसुनि, 'तुरिष्ठेमेयस्सु' इत्यनुवृत्तौ 'टे'रिति टिलोपे वसीयश्शब्द इत्यर्थः । **श्वस्शब्द इति** । यद्यपि श्वस्शब्दः कालविशेषवाची तथापि प्रकृते शब्दशक्तिस्वभावादुत्तरपदार्थगतां प्रशंसामाशीर्विषयं द्योतयतीत्यर्थः । आशिषो विषयः आशीर्विषयः, तमिति षष्ठीसमासः । प्रशंसाविशेषणम् । विषयशब्दस्य नित्यपुंलिङ्गत्वान्न स्त्रीलिङ्गता । एवंच श्वस्शब्द उत्तरपदार्थगतप्राशस्त्यस्य द्योतक इति फलितोऽर्थः । ननु तर्हि श्वस्शब्दस्योत्तरपदार्थगतप्राशस्त्यद्योतकत्वेऽप्युत्तरपदसामानाधिकरण्याऽभावात्कथं विशेषणसमास इत्यत आह—**मयूरेति** । तथाचाशीर्लिङ्गादिप्रयोग एवास्य साधुत्वमित्यभिप्रेत्योदाहरति—**श्वोवसीयस-**

शे.] **तत्पुरुष एवेति** । 'उत्तरपदार्थप्रधाने' इत्यादिः । **निःश्रेयानिति** ।—बहुव्रीहिः । 'ईयसश्च' इति निषेधान्न कप् । निष्क्रान्तः श्रेयस इति तत्पुरुषो वा । **पुरुषस्येति** । षष्ठीसमास एवेदम् । **शुन इति** । अव्ययीभाव एवेदम् । **उत्तरपदार्थप्रशंसामिति**

ते भूयात् । अन्ववतप्ताद्रहसः ।५।४।८१। अनुरहसम् । अवरहसम् । तप्तरहसम् । प्रतेरुरसः सप्तमीस्थात् ।५।४।८२। उरसि [इति] प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः । अनुगवमायामे ।५।४।८३। एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । 'यस्य चायामः' इति समासः । द्विस्तावा त्रिस्तावा वेदिः ।५।४।८४। अच्प्रत्ययष्टिलोपः समासश्च निपात्यते । यावती प्रकृतौ वेदिस्ततो द्विगुणा त्रिगुणा वाऽश्वमेधादौ, तत्रेदं निपातनम् । वेदिरिति किम् ? । द्विस्तावती त्रिस्तावती रज्जुः । उपसर्गादध्वनः ।५।४।८५। प्रगतोऽध्वानं प्राध्वो रथः । न पूजनात् ।५।४।६९। पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा । स्वतिभ्यामेव । नेह–परमराजः । पूजनात्किम् ? । गामतिक्रान्तोऽतिगवः । 'बहुव्रीहौ सक्थ्यक्ष्णो'रित्यतः

---

त.] माहे'ति पाठान्तरं क्वचिदस्ति । उभयथापि आशीर्विषयताया द्योतकोऽयमिति फलितोऽर्थः । अन्वव । इह

---

बा.]मिति । अतिशयेन प्रशस्तमित्यर्थः । श्वःश्रेयसमिति । अतिशयेन प्रशस्तमिति विग्रहे प्रशस्तशब्दादीयसुन्, 'प्रशस्यस्य श्रः' । 'प्रकृत्यैका'जिति प्रकृतिभावान्न टिलोपः । आद्गुणः । श्रेयसिति रूपम् । श्वस्शब्दस्तु उत्तरपदार्थगतप्रशंसाद्योतकः । 'श्वःश्रेयसं शिवं भद्र'मित्यमरः । 'ते भूया'दिति तु उभयत्रापि संबध्यते,–श्वोवसीयसं ते भूयात्, श्वःश्रेयसं ते भूयादिति । अन्ववतप्ताद्रहसः । अनु अव तप्त एतेषां समाहारद्वन्द्वः । एभ्यः परो यो रहश्शब्दस्तस्मादच्स्यादित्यर्थः । रहः–अप्रकाशप्रदेशः । अनुरहसमिति । अनुगतं रह इति विग्रहः । अवरहसमिति । अवहीनं रह इति विग्रहः । उभयत्र प्रादिसमासः । तप्तरहसमिति । तप्तं रह इति विग्रहः । प्रतेरुरसः । सप्तम्यर्थे द्योतकतया वर्तत इति सप्तमीस्थम् । सप्तम्यर्थद्योतकात् प्रतेः परो य उरश्शब्दस्तस्मादच् स्यादित्यर्थः । उरसीति । अनेन यदुच्यते तदेव प्रत्युरसमित्यनेनोच्यत इत्यर्थः । सप्तम्यर्थद्योतकः प्रतिः । तस्य विभक्त्यर्थे विद्यमानस्य 'अव्ययं विभक्ती'त्यादिनाऽव्ययीभाव इति भावः । अनुगवमायामे । एतदिति । अनुगवमित्येतदित्यर्थः । अनुना दीर्घत्वे द्योत्येऽच्प्रत्ययान्तो निपात्यत इत्यर्थः । आयामशब्दो दीर्घपर इति भावः । अनुगवं यानमिति । अनुगोशब्दादचि अवादेश इति भावः । यस्य चेति । 'यस्य चायामः' इत्यव्ययीभावसमासः । तथा च गोदैर्घ्यसदृशदैर्घ्यकं यानमित्यर्थः फलतीति भावः । द्विस्तावा । यावती प्रकृताविति । यतोऽङ्गकलापस्यातिदेशः सा प्रकृतिः । अश्वमेधस्य प्रकृतिरग्निष्टोमः, तत्राम्नाताऽङ्गकलापानामश्वमेधेऽतिदेशात् । तदुक्तं कल्पसूत्रेषु–'सर्वसोमक्रतूनामग्निष्टोमः प्रकृति'रिति । तस्मिन्नग्निष्टोमे वेदिपरिमाणं श्रुतम् । तत्र च 'त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची षट्त्रिंशत्, प्राची चतुर्विंशतिः, पुरस्तात्तिरश्ची'ति प्रकृतौ वेदिपरिमाणमुक्तम् । अस्यां तु वेद्यां ततो द्विगुणितं त्रिगुणितं च क्षेत्रपरिमाणमुक्तं कल्पसूत्रेषु–'अष्टाविंशत्यूनं पदसहस्रं महावेदि'रिति । पदग्रहणमत्र प्रक्रमस्याप्युपलक्षणम् । तथाच प्रकृतौ अग्निष्टोमे यावती वेदिस्तदपेक्षया द्विगुणा त्रिगुणा वा ऽश्वमेधादौ वेदिरस्ति, तत्र आश्वमेधिकवेद्यामभिधेयायां द्विस्तावेति त्रिस्तावेति च भवतीत्यर्थः । 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' इति द्विशब्दात् क्रियाभ्यावृत्तौ सुचि कृते द्विरिति त्रिरिति च रूपम् । तत् प्राकृतं परिमाणम् अस्या अस्तीति तावती । प्राकृतपरिमाणेति यावत् । द्विरिति तच्छब्दार्थे प्रकृतिपरिमाणेऽन्वेति । द्विः–तावतीति विग्रहः । द्विरावृत्तं प्राकृतं यत् परिमाणं तद्वत्याश्वमेधिकी वेदिरित्यर्थः । अत एव निपातनात्समासः, अच्प्रत्ययः, तावतीशब्दस्य 'भस्याऽढे' इति पुंवत्त्वे ङीपो निवृत्तौ प्रत्ययस्याऽडित्त्वेऽपि प्रकृतेर्नान्तत्वाऽभावेऽपि टिलोपः । द्विस्तावती त्रिस्तावती रज्जुरिति । अत्र वेद्यामप्रवृत्तेरच्प्रत्ययटिलोपसमासा न भवन्तीत्यर्थः । तथाच प्रत्युदाहरणे 'द्वि'रिति भिन्नं पदम् । उपसर्गादध्वनः । उपसर्गात् परो योऽध्वन्शब्दस्तस्मादच् स्यादित्यर्थः । प्राध्वो रथ इति । 'अत्यादयः' इति समासादच् । 'नस्तद्धिते' इति टिलोपः । न पूजनात् । 'परेभ्य' इत्यध्याहार्यम् । 'समासान्ता' इति पूर्वसूत्रमनुवर्तते । तदाह—पूजनार्थादिति । 'पूजायां स्वतिग्रहणं कर्तव्य'मिति वार्तिकमभिप्रेत्योदाहरति—सुराजेति । सु=शोभनो राजेति प्रादिसमासः । अतिराजेति । पूज्यो राजेत्यर्थः । उभयत्रापि 'राजाहःसखिभ्यः' इति टच् न भवति । स्वतिभ्यामेवेति । स्वतिभ्यां परो यो राजन्शब्दस्तस्मादेवेत्यर्थः, तथा वार्तिकादिति भावः । नेहेति । 'निषेध' इति शेषः । परमराज इति । परमश्चासौ राजा चेति विग्रहः । अतिगव इति ।

---

शे.] कर्मधारयः । श्रेयःशब्दोऽपि प्रशंसार्थ एव । आशीर्विषयमिति षष्ठीतत्पुरुषः । विषयशब्दो नित्यपुंलिङ्गः । एवञ्च श्वस्शब्द उत्तरपदार्थप्रशंसाया आशीर्विषयत्वद्योतक इति फलितम् । एतच्चैतद्वृत्तिविषयमेव । एवञ्चाशीर्लिङन्तप्रयोग एवास्य साधुत्वमिति वृत्तिः । सप्तमीस्थादिति । सप्तम्यर्थवृत्तेरित्यर्थः । अनुगवमिति । गोदैर्घ्यसदृशदैर्घ्यवद्यानमिति बोधः । द्विस्तावा । द्विरावृत्ता तावतीत्यर्थे सुच् । आवृत्तिक्रियाजन्मगणने सुच् । निपातनफलमाह ... यावतीति । यत्र सकलाङ्गोपदेशः सा प्रकृतिः । आवृत्तिक्रियान्तर्भावेण पूर्वपदस्य वृत्तिः । द्विगुणेति तु फलितार्थकथनम् । प्रत्युदाहरणे द्विः तावतीति भिन्ने पदे । उपस-

प्रागेवायं निषेधः। नेह—सुसक्थः। स्वक्षः। **किमः क्षेपे** ।५।४।७०। क्षेपे यः किंशब्दस्ततः परं यत्तदन्ता-त्समासान्ता न स्युः। कुत्सितो राजा किराजा। किंसखा। किंगौः। क्षेपे किम्। किंराजः। किंसखः। किंगवः। **नञस्तत्पुरुषात्** ।५।४।७१। समासान्तो न। अराजा। असखा। तत्पुरुषात्किम्? । अधुरं शकटम्।

**पथो विभाषा** ।५।४।७२। नञ्पूर्वात्पथो वा समासान्तः। अपथम्। अपन्थाः। तत्पुरुषादित्येव। अपथो देशः। अपथं वर्तते। इति समासान्तप्रकरणम्।

## अथाऽलुक्समासप्रकरणम्।

**अलुगुत्तरपदे** ।६।३।१। अलुगधिकारः प्रागानङः, उत्तरपदाधिकारस्त्वापादसमाप्तेः। **पञ्चम्याः स्तोकादिभ्यः** ।६।३।२। एभ्यः पञ्चम्या अलुक् स्यादुत्तरपदे। स्तोकान्मुक्तः। एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः।

---

त.] 'रहः' इत्यप्रकाशमुच्यते। 'अनुगतमवहीनं च रहः' इति प्रादिसमासः, 'अनुगतं रहोऽस्मि'न्नित्यादिबहुव्रीहिर्वा। **तप्तरहसमिति**। 'तप्तं च तद्रहश्चे'ति विग्रहः। परेणानधिगम्यमित्यर्थः। इत्यतः **प्रागिति**। 'प्राग्बहुव्रीहिग्रहणं कर्तव्य'मिति वार्तिकोक्तेरिति भावः। **किमः क्षेपे**। क्षेपग्रहणमिह शक्यमवक्तुं, प्रतिपदोक्तपरिभाषया 'किं क्षेपे' इति विहितसमासस्यैव ग्रहणात्। **किंराज इत्यादि**। किमत्र प्रश्ने। षष्ठीसमासः, कर्मधारयो वा। **नञस्त-त्पुरुषात्**। 'नञः' इति षष्ठी। नञः सम्बन्धी यस्तत्पुरुषो नञवयवकस्तस्मादित्यर्थः। **अपथमिति**। 'नस्तद्धिते' इति टिलोपः। 'अपथं नपुंसकम्' इति क्लीबत्वम्। **अपथं वर्तत इति**। अर्थाऽभावेऽव्ययीभावः।

## इति सकलसमाससाधारणाः समासान्ताः।

**अलुक्स्यादिति**। प्रसज्यप्रतिषेधोऽयम्। 'सुपो धातु'त्यादिना प्राप्तो लुङ् भवतीत्यर्थः। **स्तोका-न्मुक्त इति**। समासप्रयोजनमैकपद्यमैकस्वर्यं, विशेषणयोगाऽभावश्च। किंच 'स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिः' 'स्तोकान्मुक्तायाः स्तौकान्मुक्तेयः' इति समुदायात्तद्धितोत्पत्तिरपि प्रयोजनम्। न च प्राथमिकसमासिकल्को निषे-

---

बा.] 'अत्यादयः' इति समासः। अतः पूजनार्थत्वाऽभावाच्च टचो निषेधः। एवं 'परमराज' इत्यत्रापि। **इत्यतः प्रागिति**। 'प्राग्बहुव्रीहिग्रहणं कर्तव्य'मिति वार्तिकार्थसङ्ग्रहोऽयम्। **सुसक्थः स्वक्ष इति**। सु=शोभने सक्थिनी यस्य, सु=शोभने अक्षिणी यस्येति च विग्रहः। 'बहुव्रीहौ सक्थ्यक्ष्णो'रिति षच्। **किमः क्षेपे**। **किंराजा किंसखेति**। इह 'राजाहःसखिभ्यः' इति टज्न भवति, 'किं क्षेपे' इति समासः। **किंराजः किंसख इति**। किंशब्दोऽत्र प्रश्ने। कस्य राजा, को राजेति वा विग्रहः। निन्दानवगमाच्च टचो निषेधः। **नञस्तत्पुरुषात्**। शेषपूरणेन सूत्रं व्याचष्टे—**समासान्तो नेति**। नञ्पूर्वपदात्तत्पुरुषात्समासान्तो नेति फलि-तम्। **अधुरं शकटमिति**। अविद्यमाना धूर्यस्येति विग्रहः। नञ्पूर्वपदत्वेऽप्यतत्पुरुषत्वात् 'ऋक्पू'रिति समा-सान्तस्य न निषेधः। **पथो विभाषा**। **पथ इति**। पथिन्शब्दादित्यर्थः। **अपथमिति**। न पन्था इति विग्रहे नञ्तत्पुरुषः। 'ऋक्पूः' इत्यप्रत्यये सति 'नस्तद्धिते' इति टिलोपः। 'पथः सङ्ख्याव्ययादे'रिति नपुंसकत्वम्। **अप-न्था इति**। अप्रत्ययाऽभावे रूपम्। **तत्पुरुषादित्येवेति**। अनुवर्तत एवेत्यर्थः। **अपथो देश इति**। अविद्य-मानः पन्था यस्येति विग्रहः। बहुव्रीहित्वात् 'ऋक्पू'रित्यप्रत्ययस्य पाक्षिकोऽपि न निषेधः। **अपथं वर्तते इति**। अर्थाभावेऽव्ययीभावः। अतत्पुरुषत्वात् 'ऋक्पू'रित्यप्रत्ययस्य न पाक्षिकोऽपि निषेधः। **इति सर्वसमासान्ताः**।

अथाऽलुक्समासो निरूप्यते—**अलुगुत्तरपदे**। नाऽयं विधिः, 'राजपुरुष' इत्यादावतिप्रसङ्गात्, 'पञ्चम्याः स्तोकादिभ्यः' इत्याद्यारम्भाच्च। किंतु पदद्वयमधिक्रियते। अस्य कियत्पर्यन्तमनुवृत्तिरित्याह—**अलुगधिकारः प्रागानङ इति**। 'आनङ्ऋतः' इत्यतः प्रागित्यर्थः। **उत्तरपदेति**। षष्ठस्य तृतीये पादे आद्यमिदं सूत्रम्। इत उत्तरमेतत्पादपरिसमाप्तिपर्यन्तमुत्तरपदाधिकार इत्यर्थः। अत्रोत्तरपदाधिकारनियमे भाष्यमेव प्रमाणम्। **पञ्चम्याः स्तोकादिभ्यः**। **एभ्य इति**। स्तोकादिभ्यः परा या पञ्चमी तस्याः 'सुपो धातु' इति लुङ् न स्यादित्यर्थः। **उत्तर-पदे इति**। उत्तरशब्दः समासचरमावयवे रूढः, 'पदे' इत्येव सिद्धे उत्तरग्रहणात्। **स्तोकान्मुक्त इति**। एवमल्पा-

---

शे.] र्थाद। इदं प्रायुपलक्षणम्। **किंराज इति**। किमत्र प्रश्ने। षष्ठीसमासः, कर्मधारयो वा। **नञस्त**। **नञ इति**। नञ्पूर्वपद-कादित्यर्थः। **अपथमिति**। 'नस्तद्धिते' इति टिलोपः। 'पथःसङ्ख्याव्ययादेः' इति नपुंसकत्वम्। **अपथं वर्तत इति**। अर्थाभावे-ऽव्ययीभावः। 'ऋक्पूः' इति समासान्तः। नञाऽप्यव्ययीभावं स्वीकुर्वतां मत इदम्। **इति साधारणाः समासान्ताः**।

**उत्तरपदे इति**। उत्तरपदशब्दः समासचरमावयवे रूढः, पदे इत्येव सिद्धे उत्तरग्रहणात्। अयं न विधिः 'पञ्चम्याः स्तोकादिभ्यः' इत्यारम्भात्। तदाह—**अधिकार इति**। **स्तोकान्मुक्त इति**। द्विवचनान्तादिभिर्न समासोऽनभिधानात्। समास-फलमैकपद्यादि। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्। अप्रगीतमन्त्रसाध्य... [illegible] ... सुप्सुपेति समासस्तदाह—

उत्तरपदे किम् ? । निष्क्रान्तः स्तोकान्निःस्तोकः । *ब्राह्मणाच्छंसिन उपसङ्ख्यानम् । ब्राह्मणे विहितानि शस्त्राणि उपचाराद्ब्राह्मणानि, तानि शंसतीति ब्राह्मणाच्छंसी—ऋत्विग्विशेषः । द्वितीयार्थे पञ्चम्युपसङ्ख्यानादेव । **ओजःसहोऽम्भस्तमसस्तृतीयायाः** ।६।३।३। ओजसाकृतमित्यादि । *अञ्जस उपसङ्ख्यानम् । अञ्जसाकृतम् । आर्जवेन कृतमित्यर्थः । *पुंसानुजो जनुषान्ध इति च । यस्याऽग्रजः पुमान्स पुंसानुजः । जनुषान्धो जात्यन्धः । **मनसः संज्ञायाम्** ।६।३।४। मनसागुप्ता । **आज्ञायिनि च** ।६।३।५। 'मनस' इत्येव । मनसा [आ]ज्ञातुं शीलमस्य मनसाज्ञायी । **आत्मनश्च** ।६।३।६। आत्मनस्तृतीयाया अलुक्स्यात् । *पूरण इति वक्तव्यम् । पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । 'जनार्दनस्त्वात्मचतुर्थ एवे'ति

---

त.] घेन चरितार्थत्वाद्व्यस्तद्धितनिमित्तो लुग्दुर्वार इति शङ्क्यं, 'सुपो धातु' इति शास्त्रस्यैकत्वादविशेषेण लुग्वद्यस्यापि निषेधाभ्युपगमात् । इह 'स्तोकान्तिके'ति समासशास्त्रपठिता एव स्तोकादयो गृह्यन्ते न तु 'करणे च स्तोकाल्पकृच्छ्रे'ति सूत्रपठिताः । समासे सुपो लुकि प्रसक्ते विधीयमानेनाऽलुक्शास्त्रेण समासशास्त्रपठितानामविलम्बेनोपस्थितेर्व्याप्तिन्यायाच्च । 'स्तोकान्तिके'त्यत्र ह्यर्थग्रहणादन्यान्यपि बहूनि गृह्यन्ते । तदेतन्मनसि निधायाह—**एवमिति** । द्विवचनबहुवचनान्तानां तु समासो नेष्यते, अनभिधानात् । तेन 'स्तोकाभ्यां मुक्तः' इत्यादौ वाक्यमेव । **शस्त्राणीति** । 'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्र'मिति याज्ञिकानां व्यवहारः । **ओजःसहो** । **ओजसाकृतमिति** । 'कर्तृकरणे कृते'ति समासः । कथं तर्हि 'सततनैशतमोवृतमन्यतः' इति भारविः ? । अत्राहुः—'वृतु वर्तने' इत्यस्मात् 'घनर्थे कविधान'मिति भावे कप्रत्यये तदन्तेन षष्ठीसमासाश्रयणान्न दोष इति । यत्तु केवलपदाधिकार एव तदन्तविधिर्न तूत्तरपदाधिकारे । तथा च 'नैशतमसा' इति तृतीयाया अलुक् भवतीति दुर्घटवृत्त्यादावुक्तम् । तन्न । 'पदाङ्गाधिकारे' इत्यत्र 'इष्टकचितं, पक्वेष्टकचित मिति

---

बा.] न्मुक्तः । 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेने'ति समासः । अत्र पञ्चम्या अलुक् । **एवमिति** । आदिपदेन समासविधौ गृहीतानामन्तिकादीनां ग्रहणादिति भावः । अन्तिकादागतः, अभ्याशादागतः, दूरादागतः, विप्रकृष्टादागतः, कृच्छ्रादागतः । **निःस्तोक इति** । 'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'ति समासः । अत्र स्तोकशब्दस्य उत्तरपदपरकत्वाऽभावात्पञ्चम्या अलुक् न । 'स्तोकान्मुक्तः' इत्यादौ समासप्रयोजनं तु समासस्वरः, सर्वस्मात्स्तोकान्मुक्त इति विशेषणयोगाऽभावश्च । किंच स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिरित्यादौ समुदायात्तद्धितोत्पत्तिश्च । स्तोकान्मुक्तौ, स्तोकान्मुक्ता इति द्विबहुवचनान्तैर्न समासः, अनभिधानादिति भाष्ये स्पष्टम् । **ब्राह्मणाच्छंसिन उपसङ्ख्यानमिति** । 'पञ्चम्या अलु'गिति शेषः । ननु ब्राह्मणानि शंसतीत्यर्थे कथं पञ्चमी ? । विधायकवाक्यानि हि ब्राह्मणशब्देनोच्यन्ते,'कर्मचोदना ब्राह्मणानि' इति कल्पसूत्रात्, 'शेषे ब्राह्मणशब्दः' इति मन्त्रभिन्नवेदभागे ब्राह्मणशब्दस्य जैमिनिना सङ्केतितत्वाच्च । एतादृशब्राह्मणभागस्य न क्वापि शंसनं विहितम् 'ऋचः शंसति निविदः शंसती'ति श्रुतिष्वित्यत आह—**ब्राह्मणे इति** । **शस्त्राणीति** । ऋचां निविदां च सङ्घः शस्त्रम् । **उपचारादिति** । लक्षणयेत्यर्थः । **द्वितीयार्थे इति** । पञ्चम्या अलुगुपसङ्ख्यानबलादेव द्वितीयार्थे पञ्चमीत्यर्थः । **ओजस** । 'ओजस्', 'सहस्', 'अम्भस्', 'तमस्'—एषां समाहारद्वन्द्वः । एभ्यः परस्यास्तृतीयाया अलुक् स्यादुत्तरपदे इत्यर्थः । **ओजसाकृतमिति** । 'कर्तृकरणे कृता बहुल'मिति समासः । 'ओजो दीप्तौ बले' इत्यमरः । **इत्यादीति** । 'सहसाकृतम्', 'अम्भसाकृतम्' 'तमसावृतम्' । तमोवृतमिति तु असाध्वेव । शेषषष्ठ्या वा समासः । **अञ्जस उपसङ्ख्यानमिति** । अञ्जश्शब्दात्तृतीयाया अलुक उपसङ्ख्यानमित्यर्थः । **अञ्जसाकृतमिति** । अञ्जश्शब्द आर्जवे वर्तते, यथा क्षेत्रज्ञोऽञ्जसा नयतीत्यादौ तथा दर्शनात् । तदाह—**आर्जवेनेति** । **पुंसानुजः** । 'तृतीयाया अलुकि साधु'रिति शेषः । **यस्येति** । यस्य पुमान् पूर्वजः स पुंसा हेतुना अनुजः कनीयान् इत्यर्थः । **जनुषेति** । 'जनुर्जननजन्मानी'त्यमरः जनुषा=जन्मना हेतुना अन्ध इत्यर्थः । फलितमाह—**जात्यन्ध इति** । ब्राह्मण्यादिजातितुल्याऽन्ध्यवानित्यर्थः । उत्पत्तिप्रभृत्यन्ध इति यावत् । **मनसः संज्ञायां** । मनसस्तृतीयाया अलुक् स्यादुत्तरपदे इत्यर्थः । **मनसागुप्तेति** । कस्याश्चित्संज्ञेयम् । असंज्ञायां तु—मनोगुप्ता । **आज्ञायिनि च** । **मनस इत्येवेति** । अनुवर्तत एवेत्यर्थः । मनसस्तृतीयाया अलुक् स्यादाज्ञायिनि परे इत्यर्थः । असंज्ञार्थमिदम् । **ज्ञातुमिति** । प्रेरयितुमित्यर्थः । **मनसाज्ञायीति** । 'सुप्यजातौ' इति णिनिः । 'आतो युक्चिण्कृतो'रिति युक् । अत्र सूत्रभाष्ये 'आत्मनश्च पूरणे उपसङ्ख्यान'मिति वार्तिकं पठितम् । तत्रात्मनश्चेत्यंशं व्याख्यातुं पृथगुपादत्ते—**आत्मनश्चेति** । चकारात्तृतीयाया अलुगिति चानुकृष्यत इत्याह—**आत्मनस्तृतीयाया अलुगिति** । 'उत्तरपदे परे' इति शेषः । **पूरण इति वक्तव्यमिति** ।

---

शे.] शस्त्राणीति । ओजसेति । 'कर्तृकरणे' इति समासः । पुंसानुज इति । यस्य पुमानग्रजः स पुंसा हेतुनाऽनुज

बहुव्रीहिर्बोध्यः । पूरणे किम् ? । आत्मकृतम् । वैयाकरणाख्यायां चतुर्थ्याः ।६।३।७। 'आत्मन' इत्येव । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । 'चतुर्थी'ति योगविभागात्समासः । परस्य च ।६।३।८। परस्मैपदम् । परस्मैभाषा । हलदन्तात्सप्तम्याः संज्ञायाम् ।६।३।९। हलन्ताददन्ताच्च सप्तम्या अलुक्संज्ञायाम् । त्वचिसारः । गवियुधिभ्यां स्थिरः ।८।३।९५। आभ्यां स्थिरस्य सस्य षः स्यात् । गविष्ठिरः । अत्र गवीति वचनादेवाऽलुक् । युधिष्ठिरः । अरण्येतिलकाः । 'संज्ञाया'मिति सप्तमीसमासः । ॐ हृद्द्युभ्यां च ।

त.] भाष्योदाहरणादुत्तरपदाधिकारेऽपि तदन्तविधिप्रवृत्तेः। **जनुषेति** । 'जनुर्जननजन्मानी'त्यमरः। **आत्मनापञ्चम इति** । 'तृतीये'ति योगविभागात्समासः । इह प्रकृत्यादित्वात्प्रथमार्थे तृतीयेत्येके । 'आत्मना कृतः पञ्चमः' इति करोतिक्रियापेक्षा सेत्यन्ये । **बहुव्रीहिर्बोध्य इति** । एकस्याप्यौपाधिकभेदं परिकल्प्य वर्तिपदार्थत्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः । **वैयाकरणा** । व्याकरणे भवा वैयाकरणी । 'अणृगयनादिभ्यः' इत्यण् । सा चासावाख्या चेति कर्मधारयः । **आत्मन इत्येवेति** । इह 'आत्मनः' इत्यननुवर्त्य 'वैयाकरणाख्यायां चतुर्थ्या अलुगि'ति व्याख्याने तु 'परस्य चे'त्युत्तरसूत्रं त्यक्तुं शक्यमित्याहुः । **आत्मनेभाषा इति** । यद्यपीयमाख्या अष्टाध्याय्यां नास्ति, तथापि धातुपाठेऽस्तीति भावः । प्रकृतिविकृतिभावविरहात् 'रन्धनाय स्थाली'तिवत्समासाऽभावमाशङ्क्याह—**योगविभागादिति** । इहाऽलुग्विधिसामर्थ्यादपि समासः सुवचः । **परस्य च** । परशब्दस्य च या चतुर्थी तस्या अलुक् स्याद्वैयाकरणाख्यायाम् । **गवियुधि** । स्थिरशब्दोऽयम् 'अजिरशिशिरे'त्यौणादिकः किरच्प्रत्ययान्तस्तिष्ठतेर्निष्पन्नः । 'सात्पदाद्यो'रिति निषेधे प्राप्ते वचनारम्भः । **गवीति वचनादेवेति** । न च लुकं

बा.] नाऽत्र पूरणशब्दो गृह्यते, किंतु स्वरितत्वबलेन पूरणाधिकारविहितप्रत्ययग्रहणात् 'प्रत्ययग्रहणे' इति तदन्तविधिरित्यभिप्रेत्याह—**पूरणप्रत्ययान्ते इति** । **आत्मनापञ्चम इति** । आत्मा पञ्चम इत्यर्थः । प्रकृत्यादित्वात्प्रथमार्थे तृतीया । यद्वा आत्मकृतपञ्चमत्ववानित्यर्थः । करणे तृतीया । करोतिक्रियान्तर्भावेण तस्याः 'तृतीया तत्कृते'ति समासः । पक्षद्वयमपीदं भाष्ये स्थितम् । ननु सङ्कर्षणप्रद्युम्नाऽनिरुद्धास्त्रयो विष्णुव्यूहाः । जनार्दनस्तु एषां नियन्तेति विष्णुपुराणादौ स्थितम् । तत्रेदमाहुः पौराणिकाः—'जनार्दनस्त्वात्मचतुर्थ एवे'ति । तत्र तृतीयाया अलुकि 'आत्मनाचतुर्थ' इति भवितव्यमित्यत आह—**जनार्दनस्त्विति** । **बहुव्रीहिरिति** । आत्मा चतुर्थो यस्येति विग्रहे बहुव्रीहिरित्यर्थः । एकस्याप्यौपाधिकभेदं परिकल्प्य वृत्तिपदार्थत्वमन्यपदार्थत्वं च विवक्षणीयमिति भावः । तदिदं भाष्ये स्पष्टम् । **वैयाकरणाख्यायाम्** । **आत्मन इत्येवेति** । अनुवर्तत एवेत्यर्थः । न च 'आत्मनश्चे'त्यस्य वार्तिकत्वे कथमिह सूत्रे एतदनुवृत्तिरिति वाच्यं, 'सोऽपदादौ' इति सूत्रे पठितस्य 'काम्ये रोरेवेति वाच्य'मिति वार्तिकस्य 'इणः षः' इति सूत्रेऽनुवृत्तिवदुपपत्तेः । व्याकरणे भवा वैयाकरणी, सा चासावाख्या च वैयाकरणाख्या, तस्यां या चतुर्थी तस्या अलुगित्यर्थः । **आत्मनेभाषेति** । पूर्वाचार्यकृतमात्मनेपदस्य संज्ञान्तरमिदं धातुपाठे प्रसिद्धम् । **तादर्थ्ये चतुर्थीति** । तथा चात्मने इत्यस्याऽऽत्मार्थमित्यर्थः । आत्मगामिनि फले प्रायेण तद्विधानादिति भावः । ननु प्रकृतिविकाराऽभावात्कथमिह तादर्थ्ये चतुर्थ्याः समास इत्यत आह—**चतुर्थीति योगविभागादिति** । पस्पशाह्निकभाष्ये 'धर्माय नियमो धर्मनियम' इति भाष्यमिह लिङ्गम् । **परस्य च** । वैयाकरणाख्यायां परशब्दस्यापि चतुर्थ्या अलुगित्यर्थः । **हलदन्तात्** । **त्वचिसार इति** । अत एव ज्ञापकाद्यधिकरणपदो बहुव्रीहिः । 'वंशे त्वक्सारकर्मारत्वचिसारतृणध्वजाः' इत्यमरः । अथ हलन्तस्योदाहरणान्तरं वक्ष्यति—**युधिष्ठिर इति** । अत्र 'अजिरशिशिरस्थिरे'त्युणादिसूत्रेण स्थाधातोः किरचि स्थिरशब्दो व्युत्पादितः । तत्र 'आदेशप्रत्यययो'रिति षत्वस्य 'सात्पदाद्यो'रिति निषेधे प्राप्ते इदमारभ्यते—**गवियुधिभ्यां स्थिरः** । गवीति युधीति च सप्तम्या अनुकरणम् । 'स्थिर' इति प्रथमा षष्ठ्यर्थे । 'सहेः साडः सः' इत्यस्मात्स इति षष्ठ्यन्तमनुवर्तते । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् । तदाह—**आभ्यामिति** । ननु 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति परिभाषयाऽत्रादेशात्पूर्वमेव ङेर्लुकि प्रवृत्ते हलन्तत्वाऽभावात्कथमिहाऽलुगित्यत आह—**अत्र गवीति** । **युधिष्ठिर इति** । युध्धातोर्भवि

शे.] इत्यर्थः । **जनुषा**=जन्मना । **पूरणे इति** । स्वरितत्वबलात्तदधिकारविहितप्रत्ययग्रहणमत्र । यद्यपि 'उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्' [इति] 'हृदयस्य हृल्लेख' इत्यत्र ज्ञापयिष्यते तथापीहात्मन्शब्दात्पूरणे प्रत्ययाऽसंभवेन तदन्तग्रहणमित्याह—**पूरणप्रत्ययान्त इति** । उदाहरणे हेतुत्वात्प्रकृत्यादित्वाद्वा तृतीया । सुप्सुपेति समासः । यथाश्रुतभाष्यस्वरसस्तु 'आत्मनश्च पूरणे' इत्यस्य वार्तिकत्वे । एवं हि भाष्यम्—'आशायिनि च । आत्मनश्च पूरणे । आत्मनश्च पूरणे उपसङ्ख्यानं कर्त्तव्यम्' इति । वैयाकरणाख्यायामित्यत्र तु वार्तिकस्थस्यैवात्मन इत्यस्यानुवृत्तिर्बोध्या, काम्ये रोरित्यादेरिव । यद्वा परस्य चेत्यनेनैकं सूत्रम्, चेन परप्रतिद्वन्द्वितयाऽऽत्मन्शब्दस्य ग्रहणमिति तदाशयः । **योगविभागादिति** । 'सुप्सुपा' इति समास इत्युचितम् । गवि-

हृदिस्पृक्। दिविस्पृक्। **कारनाम्नि च प्राचां हलादौ** ।६।३।१०। प्राचां देशे यत्कारनाम, तत्र हलादावुत्तरपदे हलदन्तात्सप्तम्या अलुक्। मुकुटेकार्षापणम्। दृषदिमाषकः। पूर्वेण सिद्धे नियमार्थम् 'कारनाम्न्येव', 'प्राचामेव', 'हलादावेवे'ति। कारनाम्नि किम्?। अभ्याहितपशुः। कारादन्यस्यैतद्देयस्य नाम। प्राचां किम्?। यूथपशुः। हलादौ किम्?। अविकटोरणः। हलदन्तात्किम्?। नद्यां दोहो नदीदोहः। **मध्याद्गुरौ** ।६।३।११। मध्येगुरुः। ॐ अन्ताच्च। अन्तेगुरुः। **अमूर्धमस्तकात्स्वाङ्गादकामे** ।६।३।१२। कण्ठेकालः। उरसिलोमा। अमूर्धमस्तकात्किम्?। मूर्धशिखः। मस्तकशिखः। अकामे किम्?। मुखे कामोऽस्य मुखकामः। **बन्धे च विभाषा** ।६।३।१३। हलदन्तात्सप्तम्या अलुक्। हस्तेबन्धः। हस्तबन्धः। हलदन्तात् किम्?। गुप्तिबन्धः। **तत्पुरुषे कृति बहुलम्** ।६।३।१४। स्तम्बेरमः। [स्तम्बरमः]। कर्णेजपः।

---

त.] बाधित्वा परत्वादन्तरङ्गत्वाच्चाऽवादेशे 'हलदन्तात्सप्तम्याः' इत्येवाऽलुक् सिध्यतीति वाच्यम्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति लुको बलीयस्त्वादिति भावः। **हृदिस्पृक् दिविस्पृगिति**। हृदयं दिवं च स्पृशतीति विग्रहः। अलुग्विधिसामर्थ्यात्कर्मणि सप्तमी, कर्मणोऽधिकरणत्वविवक्षया वा। **अविकटोरण इति**। 'सङ्घाते कट'-जिति कटच्प्रत्ययान्तः। उरणो-मेषः। **बन्धे च विभाषा**। बन्ध इति घञन्तः। **हस्तेबन्ध इति**। बहुव्रीहि-

---

बा.] क्विपि युधशब्दात्सप्तम्येकवचनम्। हलन्तत्वादलुक्, षत्वं च। पाण्डवस्य धर्मपुत्रस्य नामेदम्। तदेवं हलन्तादलुकं प्रपञ्च्य अदन्तादलुकमुदाहरति—**अरण्येतिलका इति**। ननु तिलकशब्दस्य शौण्डादिगणेऽभावात्कथं तेन सप्तमीसमास इत्यत आह—**अत्र संज्ञायामिति**। **हृद्युभ्यां चेति**। हृच्छब्दाद्दिव्शब्दाच्च सप्तम्या अलुग्वक्तव्य इत्यर्थः। असंज्ञार्थमिदम्। **हृदिस्पृगिति**। 'पद्'भिति ङौ हृदयस्य हृदादेशः। हृदयं स्पृशतीत्यर्थः। **दिविस्पृगिति**। दिवं स्पृशतीत्यर्थः। इहोभयत्रापि सप्तम्या अलुग्विधानबलादेव कर्माणि सप्तमीति भाष्यम्। 'अमूर्धमस्तका'दित्यनेन त्वलुङ् सिध्यति, तत्र संज्ञायामित्यनुवृत्तेः। **कारनाम्नि**। **यत्कारनामेति**। राजग्राह्यो भागः करः, स एव कारः, तद्विशेषवाचक इत्यर्थः। **नियमार्थमिति**। 'प्राचां देशे हलादौ यदि भवति कारनाम्न्येव,' 'कारनाम्नि हलादौ चेत्प्राचामेव,' 'प्राचां कारनाम्नि चेद्धलादावेवे'ति नियमत्रयार्थमित्यर्थः। **अविकटोरण इति**। अविशब्दात्सङ्घाते कटच्। उरणो मेषः। **नद्यामिति**। नद्युत्तारणे तात्कालिको दोहः—करः। **मध्याद्गुरौ**। गुरुशब्दे परे मध्यशब्दात्सप्तम्या अलुक् स्यादित्यर्थः। असंज्ञार्थमिदम्। **अन्ताच्चेति**। सप्तम्या अलुक्स्याद्गुरौ परे इत्यर्थः। **अमूर्धमस्तकात्**। मूर्धमस्तकशब्दवर्जितात्स्वाङ्गवाचकात्सप्तम्या अलुक्स्यात्, न तु कामशब्दे उत्तरपदे इत्यर्थः। अत्र संज्ञायामित्यनुवर्तते। अत एव 'हृद्युभ्यां चे'त्यत्र हृद्ग्रहणमर्थवत्। **कण्ठेकाल इति**। शिवस्य नाम। **उरसिलोमेति**। कस्यचिन्नाम। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। **बन्धे च विभाषा**। शेषपूरणेन सूत्रं व्याचष्टे—**हलदन्तादिति**। **हस्तेबन्ध इति**। संज्ञायामिति सप्तमीतत्पुरुषोऽयम्। इह तत्पुरुष इति संबध्यते, 'बन्ध' इति घञन्तम्, अन्यत्र तु 'नेन्सिद्धे'ति निषेध इति स्पष्टं भाष्ये। **तत्पुरुषे कृति**। तत्पुरुषे सप्तम्या बहुलमलुक्स्यात्कृदन्ते उत्तरपदे संज्ञायामित्यर्थः। **स्तम्बेरम इति**। तृणसमूहः स्तम्बः, तस्मिन् रमत इति स्तम्बेरमो हस्ती। **कर्णेजप इति**। कर्णे जपति=परदोषमुपांश्वाविष्करोतीति कर्णेजपः पिशुनः।

---

शे.] युधिस्थिरशब्द उणादिकिरच्प्रत्ययान्तः। 'सात्पदाद्योः' इति निषेधे प्राप्ते इदम्। 'अन्तरङ्गानपि' इति न्यायेनाऽवादितः पूर्वं लुक्प्राप्त्या 'हलदन्तात्' इत्यस्याऽप्राप्तेराह—**वचनादेवेति**। **हृदिस्पृगिति**। 'अलुग्विधेर्ज्ञापकात्कर्मणि सप्तमी' इति भाष्यम्। 'अमूर्धमस्तकात्' इत्यनेन तु न सिद्धिस्तत्र सञ्ज्ञायामित्यनुवृत्तेः। **कारनाम्नि**। नामग्रहणं स्पष्टार्थम्। सञ्ज्ञायामित्यनुवृत्त्यैव सिद्धेः। **कारनाम्न्येवेति**। प्राग्देशनाम्नि चेत्कारनाम्न्येवेति। इदं वृत्त्यनुसारेण। भाष्ये त्वयं नियमो नोक्तः। अभ्यर्हितपश्वादेः सञ्ज्ञात्वमेव नेति कारनाम्नीति स्पष्टार्थमिति तदाशयः। अविशब्दात्संघाते कटच्। उरणो = मेषः। **नद्यामिति**। नद्युत्तारणे तात्कालिको दोहः—कार इत्यर्थः। वणिक्-पशुपाल-कर्षकेभ्यो राजग्राह्यो भागः करः, स एव कारः। हलादावित्यादिग्रहणं स्पष्टार्थम्। तत्र यूथपश्वादय उदग्देशे काराः, हलेद्विपदिकादयोऽविकटोरणश्च प्राग्देशे। प्राचामेवेति नियमोऽपि कैयटाद्यनुसारेण। भाष्ये तु—पूर्वेण नित्ये प्राप्ते कारनाम्नि प्राचामिति विकल्पार्थम्, तेन मुकुटेकार्षापणं मुकुटकार्षापणमित्याद्युभयम्, हलादाविति योगविभागेन नियमार्थम्, तेनाऽजादौ लुगेव-इति स्थितम्। 'कारनाम्नि वावचनार्थं चेदजादावतिप्रसङ्गः। नैष दोषः। योगविभागात्सिद्धम्। कारनाम्नि च प्राचाम्, ततो हलादौ। इदमिदानीं किमर्थम्?। नियमार्थम्। हलादावेव कारनाम्नीति—अविकटोरणः' इति हि भाष्यम्। **बन्धे च**। उत्तरसूत्रस्थतत्पुरुषपदमिहापकृष्यते, बन्ध इति घञन्तम्। अन्यत्र 'नेन्सिद्धे'

[ कर्णजपः ] । क्वचिन्न—कुरुचरः । **प्रावृट्शरत्कालदिवां जे** ।६।३।१५। प्रावृषिजः । शरदिजः । कालेजः । दिविजः । पूर्वस्यायं प्रपञ्चः । **विभाषा वर्षक्षरशरवरात्** ।६।३।१६। एभ्यः सप्तम्या अलुक् जे । वर्षेजः । वर्षजः । क्षरेजः । क्षरजः । शरेजः । शरजः । वरेजः । वरजः । **घकालतनेषु कालनाम्नः** ।६।३।१७। सप्तम्या विभाषाऽलुक्स्यात् । घे—पूर्वाह्णेतरे । पूर्वाह्णतरे । पूर्वाह्णेतमे । पूर्वाह्णतमे । काले—पूर्वाह्णेकाले । पूर्वाह्णकाले । तने पूर्वाह्णेतने । पूर्वाह्णतने । **शयवासवासिष्वकालात्** ।६।३।१८। खेशयः । खशयः । ग्रामेवासः । ग्रामवासः । ग्रामेवासी । ग्रामवासी । हलदन्तादित्येव । नेह—भूमिशयः । ॐ**अपो योनियन्मतुषु** । अप्सु योनिरुत्पत्तिर्यस्य सोऽप्सुयोनिः । अप्सु भवोऽप्सव्यः । अप्सुमन्तावाज्यभागौ । **नेन्सिद्धबध्नातिषु च** ।६।३।१९। इन्नन्तादिषु सप्तम्या अलुङ्न । स्थण्डिलशायी । साङ्काश्यसिद्धः । चक्रबन्धः । **स्थे च भाषायाम्** ।६।३।२०। सप्तम्या

---

त.] रयम् । तत्पुरुषे तु 'नेन्सिद्धबध्नातिषु चे'ति वक्ष्यमाणेन निषेध एवेत्याहुः । **अप्सव्य इति** । दिगादित्वाद्यति ओर्गुणे वान्तादेशः । प्राचा तु यतः स्थाने जं पठित्वा 'अप्सुजः' इत्युदाहृतं, तदाकरविरुद्धम् । 'जे चरे च वक्तव्यम् । अप्सुजः अप्सुचरः' इति भाष्ये वचनान्तरदर्शनाच्च । केचित्तु 'अप्सुजः' इत्युक्तोदाहरणद्वयेऽपि 'हलदन्ता'-दित्यलुकमाहुः । **अप्सुमन्ताविति** । कारीर्याम् 'अप्स्वग्ने सधिष्टव', 'अप्सु मे सोमो अब्रवी दित्याज्यभागमन्त्रौ स्तः । तत्र ह्यप्सुशब्दोऽस्तीति तद्द्वारा आज्यभागयोरप्यप्सुमत्त्वम् । प्राचा तु 'मतिषु' इति पठित्वा 'अप्सुमतिः' इत्युदाहृतम् । अत्र केचित्—अप्स्वित्येतदनुकरणशब्दः सप्तम्यन्तो,न वा ? । आद्ये सप्तम्यन्तात्प्रथमाया अभावेन मतुबेव दुर्लभः । अन्त्ये तु लुकः प्राप्तिरेव नास्ति, सप्तम्यभावात् । तथा च 'मतिषु' इति प्राचोक्तः पाठ एव युक्तः । न च स पाठो भाष्यादौ न दृष्ट इति वाच्यं, 'मतिषु' इति पाठस्य 'अप्सुमतिः' इत्युदाहरणस्य च भाष्यवृत्त्यादिपुस्तकेषु दृश्यमानत्वेन मतुष्विति पाठस्यैव क्वाप्यदर्शनात्, व्यर्थत्वाच्च । 'अस्यवामीयं' 'कयाशुभीयम्' इत्यादाविव लुकि कर्तव्ये 'प्रकृतिवदनुकरण'मित्यतिदेशाऽप्रवृत्त्यैवेष्टसिद्धेरित्याहुः । **नेन्सिद्ध** । **चक्रबन्ध इति** । तत्पुरुषे

---

बा.] 'स्तम्बकर्णयो रमिजपो'रित्यच् । उपपदसमासः । **क्वचिन्नेति** । बहुलग्रहणादिति भावः । **कुरुचर इति** । 'चरेष्टः' इत्यधिकरण उपपदे चरेष्टः । उपपदसमासः । यद्यपि हलदन्तादित्यनुवृत्त्यैव सिद्धमिदं,तथापि बहुलग्रहणादेव सिद्धे 'हलदन्ता'दिति, नानुवर्तनीयमिति भावः । **प्रावृट्शरत्** । प्रावृट्, शरत्, काल, दिव्—एषां सप्तम्या अलुक् स्याज्ज शब्दे परे संज्ञायामित्यर्थः । ननु 'हलदन्ता'दित्येव सिद्धे किमर्थमिदमित्यत आह—**पूर्वस्यैवायं प्रपञ्च इति** । विस्तर इत्यर्थः । **विभाषा वर्ष** । शेषपूरणेन सूत्रं व्याचष्टे—**एभ्यस्सप्तम्या इति** । **घकालतनेषु** । शेषपूरणेन सूत्रं व्याचष्टे—**सप्तम्या इति** । **घेति** । घे परे उदाहरणसूचनमिदम् । 'तरप्तमपौ घः' । **पूर्वाह्णेतरे इति** । अतिशायने सप्तम्यन्तात्तरप्तमपौ । अत एव तत्तद्विभक्त्यन्तात्तरप्तमपाविति विज्ञायते । **कालेति** । उदाहरणसूचनमिदम् । **पूर्वाह्णेकाले इति** । अत एव विशेषणादिसमासोऽपि तत्तद्विभक्त्यन्तानामेव । **तनेति** । उदाहरणसूचनमिदम् । **पूर्वाह्णेतने इति** । 'विभाषा पूर्वाह्णापराह्णाभ्या'मिति ट्युट्युलौ, तुट् च । **शयवास** । शय, वास, वासिन्—एतेषु परेषु कालभिन्नात्सप्तम्या अलुक् स्यादित्यर्थः । **अपो योनि** । योनिशब्दे यत्प्रत्यये मतुपि च परेऽप्शब्दात्सप्तम्या अलुक् स्यादित्यर्थः । **अप्सव्य इति** । दिगादित्वाद्यत् । 'ओर्गुणः' 'वान्तो यी'त्यवादेशः । **अप्सुमन्ताविति** । 'अप्सु' इति पदं यदीयमन्त्रयोरस्ति तावप्सुमन्तौ, आज्यभागाविति कर्मविशेषौ । **नेन्सिद्धबध्नादिषु च** । **चक्रबद्ध इति** । 'साधनं कृते'ति क्तान्तेन सप्तम्यन्तस्य समासः । **स्थे च भाषायाम्** । 'अनन्तरस्ये'ति न्यायात् 'तत्पुरुषे कृती'त्यस्यैवायं निषेधः । अत एव 'अनेकमन्यपदार्थे' इति सूत्रभाष्ये

---

शे.] ति निषेधः । स्पष्टं चेदं सर्वं भाष्ये । बहुलग्रहणेनैव सिद्धे हलदन्तादित्यनुवृत्तिर्व्यर्थेति ध्वनयन्नाह—**क्वचिन्न कुरुचर इति** । अत एव गोपुच्चरः सिद्धः । **विभाषा वर्ष** । लिङ्गविशिष्टग्रहणाद्वर्षासुजोऽपि । **घकाल** । घशब्देन तरतमौ । कालेति स्वरूपग्रहणम् । तनः = सतुट्ट्युट्युलौ । **पूर्वाह्णेतरे इति** । प्रकृत्यर्थप्रकर्षविवक्षया द्रव्यप्रकर्षसत्त्वादत्र घः । 'सायंचिरम्' इति सूत्रभाष्ये—'प्राह्णप्रगयोरेदन्तत्वनिपातनं व्यर्थमलुका सिद्धेः' इत्याशङ्क्य 'यदा सप्तम्यन्या विभक्तिः प्राह्णः सोढो यस्येत्यर्थं तत्' इत्युक्तेर्विभाषेत्युक्तिर्दृष्टस्यनुरोधेनेति बोध्यम् । 'विभाषा पूर्वाह्ण' इति सूत्रे दोषातनमित्यादौ 'अव्ययात्' इति लुकोऽनेनाऽलुकमाशङ्क्य 'समानकालस्य प्रत्ययनिमित्तलुक एवायमलुक्, अव्ययादिति त्वन्तरङ्ग' इति समाधानमभ्युपगमादत्र सूत्रे हलदन्तादित्यस्याऽननुवृत्तिः । अतिप्रसङ्गस्त्वनभिधानादेवेति बोध्यम् । **अपो योनि यन्मतुष्विति** । अयं पाठो भाष्यानुसारेण । **मतिष्विति** युक्तः पाठः । एकवचेत्यस्याऽतिप्रसङ्गव्याजेनाप्सुचरादिवदस्य भाष्ये उपन्यासात् । न ह्यप्सुमन्तावित्यत्र तस्य प्रसङ्गोऽस्ति । [illegible] । किं च मतुष्विति पाठे फलं चिन्त्यम् । अस्यवामीयमित्यादाविव लुकोऽप्राप्तेः । **चक्रबद्ध इति** । साधनकृतेन [illegible] 'साधनं कृता' इति समासः । **स्थे च** । अयं निषेधोऽनन्तरस्य [illegible]

अलुक् । समस्थः । भाषायां किम् ? । कृष्णोस्याखरेष्टः । **षष्ठ्या आक्रोशे** ।६।३।२१। **चौरस्य कुलम्** । आक्रोशे किम् ? । ब्राह्मणकुलम् । ***वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु** । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । *** आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च** । आमुष्यापत्यं आमुष्यायणः । नडादित्वात्फक् । अमुष्य पुत्रस्य भाव आमुष्यपुत्रिका । मनोज्ञादित्वाद्वुञ् । एवमामुष्यकुलिका । *** देवानांप्रिय इति च मूर्खे** । अन्यत्र देवप्रियः । *** शेपपुच्छलाङ्गूलेषु शुनः** । शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः । *** दिवश्च दासे** । दिवोदासः । **पुत्रेऽन्यतरस्याम्** ।६।३।२२। षष्ठ्याः पुत्रे परेऽलुग्वा निन्दायाम् । दास्याःपुत्रः । दासीपुत्रः । निन्दायां किम् ? । ब्राह्मणीपुत्रः । **ऋतो विद्यायोनिसंबन्धेभ्यः** ।६।३।२३। विद्या[संबन्ध]योनिसंबन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् । होतुरन्तेवासी । होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः । *** विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्** । नेह–होतृधनम् । **विभाषा**

त.] इत्यनुवृत्तेस्तत्पुरुष एवायं निषेधः । बहुव्रीहौ तु 'बन्धे च विभाषा' इति विकल्प एव । **पश्यतोहर इति** । 'पश्यन्तमनादृत्य हरती'त्यर्थः । 'षष्ठी चाऽनादरे' इति षष्ठी । **देवानामिति** । मूर्खा हि देवानां प्रीतिं जनयन्ति देवपशुत्वादिति मनोरमा । अयं भावः—ब्रह्मज्ञानरहितत्वात्संसारिणो मूर्खाः । ते तु यागादिकर्माण्यनुतिष्ठन्तः पुरोडाशादिप्रदानद्वारा देवानामत्यन्तं प्रीतिं जनयन्ति । ब्रह्मज्ञानिनस्तु न तथा, तेषां यागाद्यनुष्ठानाऽभावात् । अतो गवादिस्थानापन्नत्वान्मूर्खा एव देवपशव इति । **शेपपुच्छेति** । शुन इव शेपमस्य शुनःशेपः । यद्यपि शेपस्शब्दः सकारान्तः, 'गौर्लिङ्गं चिह्नशेपसोः' इत्यमरप्रयोगात्, तथापि शीङो निपातनादौणादिके पप्रत्यये अकारान्तोऽप्यस्त्येव ।

बा.] 'सप्तम्युपमानपूर्वपदस्ये'ति वार्तिकव्याख्यावसरे कण्ठेस्थः कालो यस्येति विग्रहे कण्ठेस्थशब्दस्य समासत्वमभ्युपगम्य उत्तरपदलोप उपन्यस्तः सङ्गच्छते । यदा तु 'अमूर्धमस्तका'दित्यस्याप्ययं निषेधः स्यात्तर्हि तदसङ्गतिः स्यात्, लुक्प्रसङ्गात् । **षष्ठ्या आक्रोशे** । 'अलुगुत्तरपदे' इति शेषः । आक्रोशो–निन्दा । **वाग्दिक्** । वाक्, दिक्, पश्यत्–एतेभ्यः परस्याः षष्ठ्या अलुक् स्यात्–युक्ति, दण्ड, हर एतेषु क्रमादुत्तरपदेषु परेष्वित्यर्थः । **वाचोयुक्तिरिति** । शब्दप्रयोग इत्यर्थः । **दिशोदण्ड इति** । अधिकरणस्य शेषत्वविवक्षायां षष्ठी । **पश्यतोहर इति** । पश्यन्तमनादृत्य हरतीत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । **आमुष्यायणेति** । वार्तिकमिदम् । एते निपात्यन्ते । **अमुष्येति** । अमुष्यापत्यमित्यर्थे 'नडादिभ्यः फगि'ति फकि आयन्नादेशे आदिवृद्धौ तद्धितान्तत्वात्प्रातिपदिकतया तदवयवत्वात्प्राप्तस्य सुब्लुको निषेधे नस्य णत्वे 'आमुष्यायण' इति रूपमित्यर्थः । अमुष्य पुत्र इति विग्रहे षष्ठीसमासे षष्ठ्या अलुकि 'अमुष्यपुत्र'शब्दः । अमुष्यपुत्रस्य भाव इत्यर्थे 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति वुञि अकादेशे पुत्रशब्दात्सुपो लुकि आदिवृद्धौ स्त्रीत्वाट्टापि 'प्रत्ययस्था'दितीत्वे आमुष्यपुत्रिकाशब्द इत्यर्थः । **एवमिति** । अमुष्य कुलमिति षष्ठीसमासे षष्ठ्या अलुकि अमुष्यकुलशब्दाद्वुञादिः पूर्ववदित्यर्थः । **देवानामिति** । वार्तिकमिदम् । मूर्खः–अज्ञः । 'दिवु क्रीडायाम्' । देवाः–क्रीडासक्ता मूर्खाः, तेषां प्रियोऽपि मूर्ख एव, मूर्खप्रियस्यावश्यं मूर्खत्वादिति 'अजेर्वी'त्यत्र कैयटः । **शेपपुच्छेति** । वार्तिकमिदम् । षष्ठ्या अलु'गिति शेषः । संज्ञायामिति भाष्यम् । **शुनश्शेप इति** । शुनः शेप इव शेपो यस्येति विग्रहः । 'मेढ्रो मेहनशेपसी' । शेफशब्दोऽप्यस्ति, 'शेफाय स्वाहा' इति दर्शनात् । **शुनःपुच्छ इति** । शुनः पुच्छमिव पुच्छं यस्येति विग्रहः । एवं शुनोलाङ्गूल इत्यपि । ऋषिविशेषाणां संज्ञा एताः । **दिवश्च दासे इति** । वार्तिकम् । 'षष्ठ्या अलु'गिति शेषः । **दिवोदास इति** । कश्चिद्राजर्षिरयम् । **पुत्रेऽन्यतरस्यां** । **निन्दायामिति** । 'आक्रोशे'इत्यनुवृत्तिलभ्यमिदम् । स्पष्टं चेदम् 'आनङृतः' इत्यत्र भाष्ये । **ऋतो विद्या** । एकत्वे बहुवचनम् । तदाह–**विद्यासंबन्धयोनिसंबन्धवाचिन ऋदन्तादिति** । **अलुक् स्यादिति** । 'उत्तरपदे परत' इति शेषः । विद्यासंबन्धवाचिनमुदाहरति— **होतुरन्तेवासीति** । ऋग्वेदविहितकर्मविशेषकर्ता होता । अतो होतृशब्दो विद्यासंबन्धप्रवृत्तिनिमित्तक इति भावः । **होतुःपुत्र इति** । विद्यासंबन्धवाचिन उदाहरणान्तरमिदम् । अथ योनिसंबन्धवाचिनमुदाहरति—**पितुरन्तेवासीति** । **पितुःपुत्र इति च** । ननु 'होतृधनं' पितृधन'मित्यत्राप्यलुक् स्यादित्यत आह—**विद्यायोनिसंबन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणमिति** । 'विद्यायोनिसंबन्धेभ्यः' इत्यत्र विद्यासंबन्धयोनिसंबन्धवाचिनोः

शे.] न्यायात् 'तत्पुरुषे कृति' इत्यस्यैव । अत एवाऽमूर्द्धमस्तकादित्यलुकि कण्ठेस्थः कालो यस्येति 'अनेकम्' इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते । **पश्यतोहर इति** । पश्यन्तमनादृत्येत्यर्थः । 'षष्ठी चानादरे' इति षष्ठी । **देवानामिति** । मूर्खाणामित्यर्थः । मूर्खश्च मूर्खप्रिय एवेत्यजेर्वीत्यत्र कैयटः । **निन्दायामिति** । आक्रोश इत्यनुवृत्त्या लब्धमिदम् । स्पष्टश्चेदम् 'आनङ् ऋत' इत्यत्र भाष्ये । एवञ्चारम्भसामर्थ्यादेव निन्दायां सिद्धेऽन्यतरस्यामिति स्पष्टार्थम् । **पितुःपुत्र इति** । प्रख्यातात्पितुरुत्पन्न इत्यर्थः ।

स्वसृपत्योः ।६।३।२४। ऋदन्तात्षष्ठ्या अलुग्वा स्वसृपत्योः परयोः । मातुःपितुर्भ्यामन्यतरस्याम् ।८।३।८५। आभ्यां स्वसुः सस्य षो वा स्यात् समासे । मातुःस्वसा । मातुःष्वसा । पितुःस्वसा । पितुःष्वसा । लुक्पक्षे तु—। मातृपितृभ्यां स्वसा ।८।३।८४। आभ्यां परस्य स्वसुः सस्य षः स्यात्समासे । मातृष्वसा । पितृष्वसा । समासे तु—मातुः स्वसा । पितुः स्वसा । इत्यलुक्समासः ।

## अथ समासाश्रयविधिः ।

घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।६।३।४३। भाषितपुंस्काद्यो ङी, तदन्तस्यानेकाचो ह्रस्वः स्याद्घरूपकल्पप्रत्ययेषु परेषु, चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रेत्यादि । ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते । चेलडादीनि वृत्तिविषये कुत्सनवाचीनि, तैः 'कुत्सितानि कुत्सनै'रिति समासः । ङ्यः किम् ? । दत्तातरा ।

त.] तथा च मन्त्रः 'यस्यामुशन्तः प्रहराम शेप'मिति । 'विह्वशेफसोः' इति पाठे तु शेफशब्दस्य सकारान्तत्वसङ्कैव नास्तीति बोध्यम् । शुनः पुच्छ इत्यादावपि बहुव्रीहिः । त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः । 'मातुःपितुर्भ्या'मिति सूत्रे 'समासेऽङ्गुलेः सङ्गः' इत्यतः समास इत्यनुवर्तितम्, तत्फलं दर्शयति—असमासे त्विति । वाक्ये वैकल्पिकमपि षत्वं नेत्यर्थः । इत्यलुक्समासः ।

घरूपकल्प । 'तरप्तमपौ घः' । 'प्रशंसायां रूपप्' । 'चिल वसने' । 'चेल'डिति पचादौ टित्पठ्यते ङीबर्थम् । प्रत्ययेष्विति । लेखग्रहणेन 'उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति ज्ञापयिष्य इति भावः । ब्राह्मणितरेति । 'जातेश्चे'ति निषेधात् 'तसिलादिषु' इति न पुंवद्भावः । चेलीति । पचादौ 'चेलट्'

बा.] पूर्वोत्तरपदयोर्ग्रहणमित्यर्थः । पूर्वोत्तरपदयोरुभयोरपि विद्यासम्बन्धयोनिसंबन्धान्यतरवाचित्वं विवक्षितमिति भावः । 'होतृधनं' 'पितृधन'मित्यत्र उत्तरपदस्य विद्यासंबन्धयोनिसंबन्धान्यतरवाचित्वाऽभावान्न षष्ठ्या अलुगिति भावः । अन्यतरसंबन्धवाचित्वस्य विवक्षितत्वादेव 'होतुःपुत्र' इत्यादि सिद्धम् । विभाषा स्वसृपत्योः । ऋदन्तादिति । 'विद्यासंबन्धयोनिसंबन्धान्यतरवाचिन' इति शेषः । ततश्च 'भोक्तृस्वसे'त्यत्र नातिव्याप्तिः । पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । अलुक्पक्षे विशेषमाह—मातुःपितुर्भ्यामन्यतरस्याम् । 'मातृपितृभ्यां स्वसे'ति पूर्वसूत्रात्स्वसेत्यनुवर्तते । षष्ठ्यर्थे प्रथमा । 'सहेः साडः सः' इति सूत्रात्स इति षष्ठ्यन्तं पदमनुवर्तते । 'अपदान्तस्य मूर्धन्यः' इत्यधिकृतम् । तदाह—आभ्यामिति । 'मातुः' 'पितु'रिति षष्ठ्यन्ताभ्यामित्यर्थः । समासे इति । 'समासेऽङ्गुलेः सङ्गः' इत्यतस्तदनुवृत्तेरिति भावः । 'मातुःष्वसा' 'पितुःष्वसे'ति अलुकि षत्वे रूपम् । 'मातुःस्वसा' 'पितुःस्वसे'त्यलुकि षत्वाऽभावे रूपम् । लुक्पक्षे त्विति । 'विशेषो वक्ष्यते' इति शेषः । मातृपितृभ्यां स्वसा । स्वसुरिति । सूत्रे षष्ठ्यर्थे प्रथमेति भावः । मातृष्वसा पितृष्वसेति । लुक्पक्षे नित्यमेव षत्वम् । आदेशप्रत्ययसकारत्वाऽभावादप्राप्ते षत्वविधिरयम् । षत्वविधौ समासग्रहणानुवृत्तेः फलं दर्शयति—असमासे त्विति । वाक्ये वैकल्पिकं षत्वमपि नास्तीत्यर्थः । इत्यलुक्समासः ।

अथ समासाश्रयविधिर्निरूप्यते—घरूप । 'उत्तरपदे' इत्यधिकृतं चेलडादिष्वन्वेति, नतु घरूपकल्पेषु; घशब्दवाच्यतरप्तमपोः रूपप्कल्पपोश्च प्रत्ययत्वात् । नच तदन्तग्रहणे सति तेषूत्तरपदत्वं संभवतीति वाच्यं, 'हृदयस्य हृल्लेख'त्यत्र उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाऽभाव इति भाष्ये उक्तत्वात् । 'स्त्रियाः पुंव'दित्यतो भाषितपुंस्कादित्यनुवृत्तम् । ङ्य इति तदन्तग्रहणं, केवलस्यानेकाच्त्वाऽभावात् । तदाह—भाषितपुंस्काद्यो ङीति । एतदर्थमेव 'स्त्रियाः पुंव'दित्यत्र भाषितपुंस्कादिति पञ्चम्यन्तमुपात्तं । तत्र 'भाषितपुंस्काया' इति षष्ठ्यन्तोपादाने तु इह तदनुवृत्तिर्न स्यात्, असंभवात् । नहि ङीप्रत्ययस्य तदन्तस्य भाषितपुंस्कत्वमस्ति । नच तत्रापि नार्थवत्स्यात्, अनूङिति पर्युदासात्स्त्रीप्रत्ययलाभेन तदन्तस्य भाषितपुंस्कत्वाऽभावादिति वाच्यम्, तत्र स्त्रिया' इत्यस्वरितत्वात्स्त्रीप्रत्ययग्रहणं नेत्युक्तत्वात् । ब्राह्मणितरा ब्राह्मणितमेति । अतिशायने तरप्तमपौ । नच 'तसिलादिष्व'ति पुंवत्त्वेन ङीपो निवृत्तिः शङ्क्या, 'जातेश्चे'ति निषेधात् । ब्राह्मणिरूपेति 'प्रशंसायां रूपप्' । । ब्राह्मणिकल्पेति । 'ईषदसमाप्तौ' इति कल्पप् । ब्राह्मणिचेलीति । 'चिल वसने' तस्मादचि चेलडिति पचादौ पठितम् । टित्त्वान्ङीप् । इत्यादीति । ब्राह्मणिमता । ब्राह्मणिहता । ब्रुव इति । ब्रूञ्धातोरचि कृते 'ब्रुवो वचि'रिति वच्या-

शे.] तत्पूर्वेति । विद्यायोनिसम्बन्धवाचकान्यतरपूर्वोत्तरपदक इत्यर्थः । तेन होतुःपुत्र इत्यादि सिद्धम् । मातुःपितुर्भ्यामिति रेफान्तानुकरणम् । विसर्गादावप्येकदेशविकृतन्यायेन ग्रहणम् । इत्यलुक्समासः ।



घरूप । घशब्देन तरतमौ । प्रत्ययेष्विति । लेखग्रहणेनोत्तरपदाधिकारे क्वचित् प्रत्ययग्रहणे तदन्ताऽग्रहणज्ञापनादिति

भाषितपुंस्कात्किम् ? । आमलकीतरा । कुवलीतरा । **नद्याः शेषस्यान्यतरस्याम्** ।६।३।४४। अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा स्यात् । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रीतरा । स्त्रितरा । *कृन्नद्या न । लक्ष्मीतरा । **उगितश्च** ।६।३।४५। उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात् । विदुषितरा । ह्रस्वाभावपक्षे तु 'तसिलादिष्वि'ति पुंवत् । विद्वत्तरा । वृत्त्यादिषु विदुषीतरेत्यप्युदाहृतं, तन्निर्मूलम् । **हृदयस्य हृल्लेखयदण्लासेषु** ।६।३।५०। हृदयं लिखतीति हृल्लेखः । हृदयस्य प्रियं हृद्यम् । हृदयस्येदं हार्दम् । हृल्लासः । लेखेत्यणन्तस्य ग्रहणम् । घञि तु–हृदयलेखः । लेखग्रहणमेव ज्ञापकम्,–उत्तरपदाधिकारे तदन्तविधिर्नास्तीति । **वा शोकष्यञ्रोगेषु** ।६।३।५१। हृच्छोकः । हृदयशोकः । सौहार्द्यम् । सौहृदय्यम् । हृद्रोगः । हृदयरोगः । हृदयशब्दपर्यायो हृच्छब्दोऽप्यस्ति । तेन सिद्धे प्रपञ्चार्थमिदम् । **पादस्य पदाज्याति-गोपहतेषु** ।६।३।५२। एषूत्तरपदेषु पादस्य 'पदे'त्यदन्त आदेशः स्यात् । पादाभ्यामजतीति पदाजिः ।

---

त.] इति पाठात् 'टिड्ढे'ति ङीप् । **आमलकीति** । आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिङ्गौ । **नद्याः** । उक्तादन्यः शेषः, स च द्विधेत्याह—**अङ्यन्तेति** । उपलक्षणमेतत् । 'भाषितपुंस्के'त्यपि नेह संबध्यत इत्याशयेनाह—**स्त्रीतरेति** । **उगितः परा या नदीति** । ईदूतोः केवलयोरपि नदीसंज्ञेत्याश्रित्येदमुक्तम् । **विदुषितरेति** । 'उगितश्चे'ति ङीपि 'वसोः संप्रसारणम्' । **वृत्त्यादिष्विति** । प्रक्रियातद्व्याख्यानादि चादिशब्दग्राह्याणि । **अणन्तस्य ग्रहणमिति** । अण्प्रत्ययसाहचर्याल्लेखशब्दोऽणन्त एव निर्दिष्ट इति भावः । नन्वेवं लेखग्रहणमेव व्यर्थं स्यादण्ग्रहणेनैव सिद्धेरत आह—**ज्ञापकमिति** । अतएव 'घरूपकल्पेषु तदन्तग्रहणं ने'ति व्याख्यातम् । **सौहार्द्यमिति** । ब्राह्मणादित्वात्ष्यञ्, 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिः । **पादस्य पद** । उत्तरसूत्रे पद्ग्रहणा-

---

बा.] देशस्य लघूपधगुणस्य च अभावो निपात्यत इत्यर्थः । **चेलडादीनीति** । समासवृत्तिविषये चेलड् ब्रुवगोत्रहता इत्युत्तरपदानि कुत्सनवाचीनीति कृत्वा 'कुत्सितानि कुत्सनै'रिति कर्मधारय इत्यर्थः । **आमलकीतरेति** । आमलकीशब्दस्य वृक्षवाचित्वे नित्यस्त्रीलिङ्गत्वाद्भाषितपुंस्कत्वाऽभावेन न ह्रस्व इति भावः । ननु 'न पदान्त'ेति सूत्रे भाष्ये बिम्बबदर्यामलकशब्दानां भाषितपुंस्कत्वावगमात्कथमामलकीशब्दस्य वृक्षविशेषे नित्यस्त्रीलिङ्गत्वमित्यरुचेराह—**कुवलीतरेति** । वृक्षविशेषे नित्यस्त्रीलिङ्गोऽयमिति भावः । अमरस्तु 'कर्कन्धूर्बदरी कोली घोण्टा कुवल-फनिले' इति नपुंसकत्वमाह । **नद्याः शेषस्या** । उक्तादन्यः शेषः । 'ङ्यन्तस्यानेकाच' इति पूर्वसूत्रे स्थितं, तदन्यत्वं च अनेकाचो ङ्यन्तत्वाऽभावे ङ्यन्तस्यानेकाच्त्वाभावेऽपि संभवति । तदाह—**अङ्यन्तनद्या ङ्यन्त-स्यैकाचश्चेति** । 'ऊङुतः' इति ब्रह्मबन्धुशब्द ऊङन्तः । भाषितपुंस्कस्येति तु नेहानुवर्तत इत्यभिप्रेत्योदाहरति—**स्त्रितरेति** । **कृन्नद्या नेति** । कृदन्ता या नदी तस्या ह्रस्वो नेति वाच्यमित्यर्थः । **लक्ष्मीतरेति** । 'लक्षेर्मुट् च' इति औणादिके ईप्रत्यये मुडागमे च लक्ष्मीशब्दः कृदन्त इति भावः । **उगितश्च** । **विदुषितरेति** । 'विदेः शतुर्वसुरिति वसुप्रत्ययः । उगिदन्तमिदम् । अनेकाच्त्वान्नद्याः शेषत्वस्याऽप्राप्तेरिदमिति भावः । **विद्वत्तरेति** । पुंवत्त्वे ङीपो निवृत्तौ विद्वत्तरेति रूपमित्यर्थः । **तन्निर्मूलमिति** । पुंवत्त्वस्य दुर्वारत्वादित्यर्थः । 'विद्वच्छ्रेयसोः पुंवत्त्वं न वक्तव्य'मिति वृत्तिः । परन्तु वचनमिदं भाष्याऽदृष्टत्वादुपेक्ष्यमिति भावः । अत्रोगितः परा या नदी-ति मूलं वर्णयोरेव नदीसंज्ञेति मताभिप्रायकम् । **हृदयस्य** । लेख, यत्, अण्, लास–एषु परेषु हृदयस्य हृदादेश इत्यर्थः । हृदयं लिखतीति हृल्लेखः । 'कर्मण्यण्' । **हृद्यमिति** । 'हृदयस्य प्रियः' इति यत्प्रत्ययः । **हार्दमिति** । 'तस्येद'मित्यण्, हृदादेशः । **हृल्लास इति** । घञन्तोऽयमिति भावः । **लेखेत्यणन्तस्य ग्रहणमिति** । अण्प्र-त्ययसाहचर्यादिति प्राञ्चः । व्याख्यानादिति तत्त्वम् । तर्हि लेखग्रहणमेव व्यर्थम्, अणैव सिद्धेरित्यत आह—**ज्ञापकमिति** । ज्ञाप्यांशमाह—**उत्तरपदाधिकारे तदन्तविधिर्नास्तीति** । तत्फलं तु घरूपकल्पब्ग्रहणे तदन्तविध्यभावः । **वा शोक** । **सौहार्द्यमिति** । ब्राह्मणादित्वाद्भावे ष्यञि 'हृद्भगसिन्ध्वन्ते' इत्युभयपदवृद्धिः । **सौहृदय्यमिति** । भावे ष्यञि हृच्छब्दत्वाऽभावादादिवृद्धौ 'यस्येति चे'ति लोपे रूपमिति भावः । **पादस्य पद** ।

---

शे.] भावः । ननु बिम्बीबदरीआमलक्यादयो भाषितपुंस्का इति 'न पदान्त'सूत्रस्थभाष्याल्लभ्यते इत्यरुचेराह—**कुवलीति** । **नद्याः शे** । भाषितपुंस्कादितीह न सम्बध्यते, तदाह—**स्त्रीतरेति** । **उगितः परेति** । विहितेति शेषः । तेनैषुमतोऽपत्यं स्त्री ऐषुमती, ततस्तरे ऐषुमतितरेत्यत्र नित्यं ह्रस्व इति 'युवोरनाकौ' इत्यत्र भाष्ये स्पष्टम् । पञ्चमीसमासेनाचः परस्मिन्निति स्थानिव-त्त्वेन व्यवधानं तु न, बहिर्भूततरनिमित्तस्य ह्रस्वस्य स्थानिवत्सूत्रदृष्ट्याऽसिद्धत्वेन तत्र तदप्रवृत्तेः । **निर्मूलमिति** । न हि स्वयमप्रवर्त्तमानोऽपि ह्रस्वः पुंवत्त्वं [पूर्वं] बाधते इति न्याय्यमिति भावः । शमिनीतरेति घिनुण्सूत्रभाष्यप्रयोगे तु ताच्छीलिकानां रूढिशब्दतया 'सञ्ज्ञापूरण्योश्च' इति निषेधान्न दोषः । **ज्ञापकमिति** । उत्तरपदं विशेष्यं कृत्वा तदन्तविधिर्नेत्यर्थः । एवञ्च तदंशे

पदातिः । 'अज्यतिभ्यां पादे चे'तीण्प्रत्ययः । अजेर्व्यभावो निपातनात् । पदगः । पदोपहतः । **पद्यत्यतदर्थे** ।६।३।५३। पादस्य पत्स्यादतदर्थे यति परे । पादौ विध्यन्ति—पद्याः शर्कराः । अतदर्थे किम् ? । पादार्थमुदकं पाद्यम् । ['पादार्घाभ्यां चे'ति यत्] । *** इके चरतावुपसंख्यानम्** । पादाभ्यां चरति पदिकः । पर्पादित्वात् ष्ठन् । **हिमकाषिहतिषु च** ।६।३।५४। पद्धिमम् । पत्काषी । पद्धतिः । **ऋचः शे** ।६।३।५५। ऋचः पादस्य पत्स्याच्छे परे । गायत्र्यौ पच्छः शंसति । पादं पादमित्यर्थः । ऋचः किम् ? । पादशः कार्षापणं ददाति । **वा घोषमिश्रशब्देषु** ।६।३।५६। पादस्य पत् । पद्घोषः । पादघोषः । पन्मिश्रः । पादमिश्रः । पच्छब्दः । पादशब्दः । ***निष्के चेति वाच्यम्** । पन्निष्कः । पादनिष्कः । **उदकस्योदः संज्ञायाम्** ।६।३।५७। उदमेघः । ***उत्तरपदस्य चेति वक्तव्यम्** । क्षीरोदः । **पेषंवासवाहनधिषु च** ।६।३।५८। उदपेषं पिनष्टि । उदवासः ।

---

**त.]** त्पदेत्ययमदन्तः, सौत्रो विभक्तिलुक् । तदाह—**अदन्त आदेश इति** । तेन 'पदगः' इत्यादि सिद्धम् । **पद्या इति** । 'विध्यत्यधनुषे'ति यत् । **पाद्यमिति** । 'पादार्घाभ्यां चे'ति यत् । पूर्वसूत्रे आज्यात्यादिषु प्राण्यङ्गस्यैव करणत्वसंभवादिहापि तद्वचन एव पादशब्दो गृह्यते, न परिमाणवचनः । तेन 'द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यं, त्रिपाद्य'मित्यत्र 'पणपादमाषे'ति यति पदादेशो न भवति । एतच्च वृत्तिहरदत्तग्रन्थयोः स्पष्टम् । **पत्काषीति** । 'सुप्यजातौ'विति णिनिः । **पद्धतिरिति** । कर्मणि क्तिन् । **ऋचः शे** । 'शे' इति शस्प्रत्ययस्येदमनुकरणम्, लोमादिषु पादशब्दस्य पाठाऽभावान्मत्वर्थे शो न संभवतीति भावः । **पच्छब्द इति** । 'सङ्ख्यैकवचनाच्च वीप्सायाम्'-मिति शस् । **उदमेघ इति** । सादृश्यात्पुरुषस्येयं संज्ञा । **उदपेषमिति** । 'स्नेहने पिषः' इति णमुल् । **उदधिरिति** ।

---

**बा.]** 'पदे'ति लुप्तप्रथमाकं पृथक्पदम् । **एष्विति** । आजि, आति, ग, उपहत—इत्येतेष्वित्यर्थः । **अदन्त इति** । उत्तरसूत्रे पदिति हलन्तस्य ग्रहणादिति भावः । **अजतीति** । 'अज गतिक्षेपणयोः' । **पदातिरिति** । पादाभ्यामततीति विग्रहः । 'अत गतौ' । **अज्यतिभ्यामिति** । पादे उपपदे अजधातोरतधातोश्च इण्स्यादिति तदर्थः । 'अजी'त्यस्य 'अजेर्व्यघञपो'रिति वीभावमाशङ्क्याह—**अजेर्व्यभावो निपातनादिति** । आजीति निर्देशादित्यर्थः । **पदग इति** । पादाभ्यां गच्छतीत्यर्थः । 'गमश्च', 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः' इति सूत्रस्थेन 'अन्येभ्योऽपि दृश्यते' इति वार्तिकेन गमधातोर्डः । तदन्ते गशब्दे परे पादस्यादन्तः पदादेशः । दकारान्तादेशे तु 'पद्ग' इति स्यात् । **पदोपहत इति** । पादाभ्यामुपहत इति विग्रहः । अत्रापि दकारान्तादेशे 'पदुपहत' इति स्यात् । **पद्यत्य** । पद—यति—अतदर्थे इति च्छेदः । **पद्या इति** । विध्यत्यधनुषेति यत्प्रत्ययः । **पाद्यमिति** । 'पादार्घाभ्यां चे'ति तादर्थ्ये यत्प्रत्ययः । **इके चरताविति** । चरत्यर्थे विहितस्य ठनो य इकादेशः, तस्मिन्परे पादस्य पत्स्यादित्युपसङ्ख्यानमित्यर्थः । **हिमकाषि** । एषु परेषु पादस्य पत्स्यादित्यर्थः । **पद्धिममिति** । पादस्य हिममिति विग्रहः । **पत्काषीति** । पादौ पादाभ्यां वा कषतीत्यर्थः । 'सुप्यजातौ' इति णिनिः । **पद्धतिरिति** । हन्यते इति हतिः । कर्मणि क्तिन् । पादाभ्यां हतिरिति विग्रहः । 'कर्तृकरणे कृते'ति समासः । **ऋचः शे** । शस्यं शस्प्रत्ययैकदेशस्यानुकरणात्सप्तमीत्यभिप्रेत्योदाहरति—**पच्छ इति** । 'सङ्ख्यैकवचनाच्च वीप्साया'मिति पादशब्दाच्छस् । 'तद्धितश्चासर्वविभक्ति'रित्यव्ययत्वम्, नत्विह लोमादिशस्य ग्रहणं, लोमादौ पादशब्दस्य पाठाऽभावात् । **पादशः कार्षापणं ददातीति** । कार्षापणाख्यपरिमाणविशेषं सुवर्णादिकं पादं पादं ददातीत्यर्थः ।

**वा घोषं** । शेषपूरणेन सूत्रं व्याचष्टे—**पादस्य पदिति** । **निष्के चेति** । 'पादस्य प'दिति शेषः । **उदकस्योदः** । उदकशब्दस्य 'उद' इत्यादेशः स्यादुत्तरपदे संज्ञायामित्यर्थः । **उदमेघ इति** । उदकपूर्णमेघसादृश्यात्कस्यचिदियं संज्ञा । **उत्तरपदस्य चेति** । उत्तरपदस्य उदकशब्दस्य उदइत्यादेशः स्यात्संज्ञायामित्यर्थः । **क्षीरोद इति** । क्षीरम् उदकस्थानीयं यस्येति विग्रहः । 'क्षीरोदं सरः' इति त्वसाध्वेव, असंज्ञात्वात् । **पेषंवास** । 'पेष'मिति णमुलन्तमव्ययम् । तस्मिन्वासवाहनधिषु च परत उदकशब्दस्य उदः स्यादित्यर्थः । असंज्ञार्थं वचनम् । **उदपेषं पिनष्टीति** । उदकेन पिनष्टीत्यर्थः । 'स्नेहने पिषः' इति णमुल् । कषादिषु यथाविध्यनुप्रयोगः । **उदवास इति** ।

---

**शे.]** उत्तरपदे इत्यस्याऽसम्बन्ध इति बोद्धव्यम् । हृच्छब्देन सिद्धे हृदयलेख इत्यादिनिवृत्त्यर्थमिदम् । **सौहार्दमिति** । ब्राह्मणादित्वात् ष्यञ् । 'हृद्भगसिन्ध्वन्ते' इत्युत्तरपदवृद्धिः । **प्रपञ्चार्थमिति** । प्रयोगद्वयमेष्वेव, अन्यत्र हृदयशब्द एवेति व्यवस्थार्थमिति भावः । **पादस्य पदा** । उत्तरसूत्रे पद्ग्रहणात्पदेत्यदन्तं लुप्तविभक्तिकं, तदाह—**अदन्त इति** । पादशब्दस्य 'स्वाङ्गशिटाम्' इत्याद्युदात्तत्वेऽप्ययमन्तोदात्तो निपातनात् । **पद्या इति** । 'विध्यत्यधनुषा' इति यत् । **पाद्ये** 'पादार्घाभ्यां च' इति यत् । पादस्येत्यत्र पादशब्दः प्राण्यङ्गवाच्येव, व्याख्यानात् । **इके इति** । पादिकेषु ... **पत्काषीति** । 'सुप्यजातौ' इति णिनिः । **पद्धतौ** कर्मणि क्तिन् । **ऋचः शे** । अत्र चतुर्थांशवाचिपादग्रहणम् । **उदकस्यो** । प्रसभोदं सर इति त्वसाध्वेव । उदकपर्यायोदशब्द-

उदवाहनः । उदधिघटः । समुद्रे तु पूर्वेण सिद्धम् । **एकहलादौ पूरयितव्येऽन्यतरस्याम्** ।६।३।५९।
उदकुम्भः । उदककुम्भः । एकेति किम् ? । उदकस्थाली । पूरयितव्ये किम् ? । उदकपर्वतः । **मन्थौदनसक्तु-**
**बिन्दुवज्रभारहारवीवधगाहेषु च** ।६।३।६०। उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः । [इत्यादि]।
**इकोह्रस्वोऽङ्यो गालवस्य** ।६।३।६१। इगन्तस्याऽङ्यन्तस्य ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्राम-
णीपुत्रः । इकः किम् ? । रमापतिः । अङ्य [इति] किम् ? । गौरीपतिः । गालवग्रहणं पूजार्थम् । अन्यतरस्या-
मित्यनुवृत्तेः । ***इयङुवङ्भाविनामव्ययानां च नेति वाच्यम्** । श्रीमदः । भ्रूभङ्गः । शुक्लीभावः ।
***अभ्रुकुंसादीनामिति वक्तव्यम्** । भ्रुकुंसः । भ्रुकुटिः । भ्रूकुंसः । भ्रूकुटिः । अकारोऽनेन विधीयत इति
व्याख्यान्तरम् । भ्रकुंसः । भ्रकुटिः । भ्रुवा कुंसो भाषणं शोभा वा यस्य स स्त्रीवेषधारी नर्तकः । भ्रुवः
कुटिः कौटिल्यम् । **एकतद्धिते च** ।६।३।६२। एकशब्दस्य ह्रस्वः स्यात्तद्धिते उत्तरपदे च । एकस्या आगतं
एकरूप्यम् । एकक्षीरम् । **ङ्यापोः संज्ञाछन्दसोर्बहुलम्** ।६।३।६३। रेवतिपुत्रः । अजक्षीरम् । त्वे च

---

त.] उदकं धीयतेऽस्मिन्निति विग्रहः । 'कर्मण्यधिकरणे चे'ति किप्रत्ययः । **मन्थौद** । **उदमन्थ इति** । द्रवद्रव्यसंस्कृताः
सक्तवो-मन्थः । 'उदकेन मन्थः' इति विग्रहे 'तृतीये'ति योगविभागात्समास इति हरदत्तः । **शुक्लीभाव इति** ।
'ऊर्यादिच्विडाचश्चे'ति च्व्यन्तत्वान्निपातत्वेऽव्ययत्वम् । **भ्रूकुंस इत्यादि** । 'भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्तकः'
इत्यमरः । 'तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रिया'मिति च । **एक तद्धिते च** । 'एके'ति लुप्तषष्ठीकं, तदाह—
**एकशब्दस्येति** । ह्रस्वविधानमस्य टाबन्ते एवोपयुज्यते न तु केवले, स्वभावत एव ह्रस्वत्वादतो व्याचष्टे—

---

बा.] उदकस्य वास इति विग्रहः । **उदवाहन इति** । करणे ल्युट् । उदकस्य वाहक इत्यर्थः । **उदधिघट इति** ।
उदकं धीयतेऽस्मिन्निति विग्रहः । 'कर्मण्यधिकरणे चे'ति किप्रत्ययः । असंज्ञात्वस्फोरणाय 'घट' इति विशेष्यम् ।
**समुद्रे त्विति** । तत्र उदधिशब्दस्य संज्ञात्वेन 'उदकस्योदः' इति पूर्वसूत्रेण सिद्धमित्यर्थः । **एकहलादौ** । हल्-
त्वस्य एकैकवर्णधर्मत्वादेव सिद्धे एकग्रहणादसंयुक्तत्वं लभ्यते । **पूरयितव्यं**=पूरणार्हं कुम्भादि । असंयुक्तहलादौ पूर-
यितव्यवाचके उत्तरपदे परे उदकस्य उद इत्यादेशः स्यादित्यर्थः । **मन्थौदन** । 'उदकस्य उदादेशो वे'ति शेषः ।
अपूरयितव्यार्थं वचनम् । **उदमन्थ उदकमन्थ इति** । उदकमिश्रो मन्थ इति विग्रहः । द्रवद्रव्यसंपृक्ताः सक्तवो
मन्थः । भर्जितयवपिष्टानि-सक्तवः । **उदौदन उदकौदन इति** । उदकमिश्र इत्यर्थः । **इत्यादीति** । उद-
सक्तवः, उदकसक्तवः । उदबिन्दवः, उदकबिन्दवः । उदवज्रः, उदकवज्रः । उदभारः, उदकभारः । उदहारः, उदक-
हारः । उदवीवधः, उदकवीवधः । उदगाहः, उदकगाहः । वीवधस्तु जलाद्याहरणयोग्य उभयतःशिक्यः स्कन्ध-
वाह्यः काष्ठविशेषः । **इको ह्रस्वो** । अङ्य इति च्छेदः । **ग्रामणीपुत्र इति** । कर्मधारयः, षष्ठीसमासो वा ।
नीधातोरीकारोऽयं, नतु ङीप्प्रत्यय इति भावः । ननु गालवग्रहणस्य विकल्पार्थकत्वं किं न स्यादित्यत आह—
**अन्यतरस्यामित्यनुवृत्तेरिति** । **इयङुवङ्भाविनामिति** । तदर्हाणामित्यर्थः । **श्रीमदः भ्रूभङ्ग इति** ।
श्रीभ्रूशब्दौ अजादिप्रत्यये परे इयङुवङर्हाविति भावः । **शुक्लीभाव इति** । अभूततद्भावे च्विप्रत्यये 'अस्य च्वौ'
इति ईत्वम् । 'च्वौ' इति दीर्घः । 'ऊर्यादिच्विडाचश्चे'ति निपातत्वादव्ययत्वमिति भावः । **अभ्रूकुंसादीना-**
**मिति** । भ्रूशब्दस्य उवङ्भावितया ह्रस्वनिषेधो यः प्राप्तः स नेत्यर्थः । **अकारोऽनेनेति** । 'अ भ्रूकुंसादीना'मिति
वार्तिके 'अ' इति लुप्तप्रथमाकं पृथक्पदम् । तथा च भ्रूकुंसादीनामवयवो यो भ्रूशब्दस्तस्य अकारोऽन्तादेशः स्या-
दिति व्याख्यानान्तरमित्यर्थः । **भ्रुवा कुंसो भाषणमिति** । तत्तदर्थज्ञापनमित्यर्थः । 'भ्रुकुंसश्च भ्रुकुंसश्च भ्रूकुं-
सश्चेति नर्तकः' इत्यमरः, 'भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियामि'ति च । **एक तद्धिते च** । एकेति लुप्तषष्ठीकम् । तदाह—
**एकशब्दस्येति** । 'स्त्रीप्रत्ययान्तस्ये'ति शेषः, अन्यथा ह्रस्वविधिवैयर्थ्यात् । **उत्तरपदे चेति** । चकारात्तदनुकर्ष
इति भावः । **एकरूप्यमिति** । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' । **एकक्षीरमिति** । एकस्याः क्षीरमिति
विग्रहः । **ङ्यापोः** । 'उत्तरपदे ह्रस्वः स्या'दिति शेषः । **रेवतिपुत्र इति** । कस्यचित्संज्ञेयम् । अथ छन्दसु-

---

शे.] स्त्रीकारे एकहलादावित्यस्य वैयर्थ्यम् । **समुद्रे त्विति** । सञ्ज्ञात्वादिति भावः । **एकहला** । सञ्ज्ञायान्तु पूर्वविप्रतिषेधेन
नित्यमेव । एकशब्दोऽसहायवाची । सहायश्च तुल्यजातीयको हलेव व्यवच्छिद्यत इति बोद्धव्यम् । प्रसिद्धत्वादेकशब्दः संख्यावा-
च्येव । सर्वस्यापि शब्दस्यैकहलादित्वात्सामर्थ्येनैकं हलमुच्चार्य यत्राऽजुच्चार्यते तत्रैवैतत्प्रवृत्तिरिति भाष्ये स्पष्टम् । असहायवाची तु
आकिञ्चिज्मात्रविषय इति तद्भावः । पूरयितव्यं = पूरणार्हम् । **शुक्लीभाव इति** । 'ऊर्यादिच्वि' इति निपातत्वेऽव्ययत्वम् ।
उवङ्भावित्वान्निषेधे प्राप्ते आह—अभ्रू इति । एकत । एकशब्दान्त्यस्य ह्रस्व इत्यर्थेन पुंनपुंसकयोर्विशेषाऽभावादाह—
एकस्या इति । रेवतिपुत्र इति सञ्ज्ञा । छन्दस्याह—अजक्षीरमिति । अजक्षीरेण जुहोतीति प्रयोगः । त्वे च । सञ्ज्ञाया

।६।३।६४। त्वप्रत्यये [परे] ङ्यापोर्वा ह्रस्वः। अजत्वम्। [अजात्वम्]। रोहिणित्वम्। [रोहिणीत्वम्]। ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ।६।१।१३। ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्पुत्रपत्योरुत्तरपदयोस्तत्पुरुषे। संप्रसारणस्य ।६।३।१३९। संप्रसारणस्य दीर्घः स्यादुत्तरपदे परे। कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। व्यवस्थितविभाषया ह्रस्वो न। स्त्रीप्रत्यये चानुपसर्जनेनेति तदादिनियमप्रतिषेधात्—परमकारीषगन्धीपुत्रः। उपसर्जने तु तदादिनियमान्नेह—अतिकारीषगन्ध्यपुत्रः। बन्धुनि बहुव्रीहौ ६।१।१४।

---

त.] एकस्या आगतमित्यादि। ष्यङः। इह तत्पुरुषपदेन पूर्वपदमुत्तरपदं चाक्षिप्यते, तत्र ष्यङा पूर्वपदस्य विशेषणात्तदन्तं गृह्यत इत्याह—ष्यङन्तस्येति। पुत्रपत्योरुत्तरपदयोरिति। 'पुत्रपत्यन्तयो'रिति व्याख्याने तु 'कारीषगन्ध्यापरमपुत्रः' इत्यादावतिप्रसङ्गः स्यादिति भावः। संप्रसारणस्य। 'उत्तरपदे' इत्यधिक्रियते। 'ढ्रलोपे' इत्यतो 'दीर्घ' इत्यनुवर्तते। तदाह—दीर्घः स्यादुत्तरपद इति। 'हलः' इति दीर्घोऽत्र न प्रवर्तते, प्रत्ययस्य लुका लुप्तत्वेनाङ्गसंज्ञाया अप्रवृत्तेः। कौमुदगन्ध्याया इति। कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या। 'तस्यापत्य'मित्यणि कृते 'अणिञो'रिति ष्यङादेशः। 'यङश्चाप्'। ननु 'कौमुदगन्धीपुत्रः' इत्यादौ 'इको ह्रस्वोऽङ्यो गालवस्ये'ति ह्रस्वेन भाव्यं, दीर्घविधानं तु पक्षे सावकाशमित्यत आह—व्यवस्थितविभाषयेति। नेहेति।

---

बा.] दाहरति—अजक्षीरमिति। अजायाः क्षीरमिति विग्रहः। 'परमं वा एतत्पयो यदजक्षीर'मिति तैत्तिरीये। त्वे च। शेषपूरणेन सूत्रं व्याचष्टे—त्वप्रत्यये ङ्यापोर्वा ह्रस्व इति। अजत्वं रोहिणित्वमिति। संज्ञात्वाऽभावाच्छन्दस्येवाऽयमिति वृत्तिः। अनुत्तरपदार्थं वचनम्। ष्यङः संप्रसारणं। प्रत्ययग्रहणपरिभाषया 'ष्यङ' इति तदन्तग्रहणम्। तदाह-ष्यङन्तस्य पूर्वपदस्येति। तस्य सूत्रस्य उत्तरपदाधिकारस्थत्वेऽपि तत्पुरुषग्रहणेन पूर्वपदलाभ इति भावः। उत्तरपदयोरिति। इदमपि तत्पुरुषपदलभ्यम्। यद्वा उत्तरपदाधिकारेण पूर्वपदमाक्षिप्यते। संप्रसारणस्य दीर्घ इति। 'ढ्रलोपे' इत्यतस्तदनुवृत्तेरिति भावः। उत्तरपदे इति। 'अलुगुत्तरपदे' इति तदधिकारादिति भावः। कौमुदगन्ध्यायाः पुत्र इति। विग्रहवाक्यमिदम्। कुमुदगन्ध इव गन्धो यस्य स कुमुदगन्धिः। 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहिः, कुमुदगन्धशब्दे पूर्वखण्डे उत्तरस्य गन्धशब्दस्य लोपश्च। 'उपमानाच्चे'तीत्वम्। कुमुदगन्धेरपत्यं स्त्रीत्यर्थे तस्यापत्यमित्यण्। 'अणिञोरनार्षयो'रिति तस्य ष्यङादेशः। 'यस्येति चे'तीकारलोपः। आदिवृद्धिः। 'यङश्चाप्'। कौमुदगन्ध्याशब्द इति भावः। कौमुदगन्ध्यायाः पुत्र इति षष्ठीसमासः। सुब्लुकि 'कौमुदगन्ध्या-पुत्र' इति स्थिते ष्यङः संप्रसारणेन यकारस्य इकारः। तस्य, तदुत्तराऽऽकारस्य च 'संप्रसारणाच्चे'ति पूर्वरूपेण इकारे 'संप्रसारणस्ये'ति दीर्घे 'कौमुदगन्धीपुत्र' इति रूपमिति भावः। 'हलः' इति दीर्घस्य तु नात्र प्रसक्तिः, संप्रसारणात् पूर्वस्य हलः संप्रसारणनिमित्तनिरूपिताङ्गावयवत्वाऽभावात्। कौमुदगन्धीपतिरिति। कौमुदगन्ध्यायाः पतिरिति विग्रहः। पूर्ववत्प्रक्रिया। 'इको ह्रस्वोऽङ्यो गालवस्ये'ति पाक्षिकं ह्रस्वमाशङ्क्याह—व्यवस्थितविभाषया ह्रस्वो नेति। अत्र तु व्याख्यानमेव शरणम्। स्यादेतत्। करीषं—गोमहिषादिपुरीषम्, करीषगन्ध इव गन्धो यस्य सः करीषगन्धिः, तस्यापत्यं स्त्री—कारीषगन्ध्या, परमा चासौ कारीषगन्ध्या च परमकारीषगन्ध्या, तस्याः पुत्रः परमकारीषगन्धीपुत्र इत्यत्रापि ष्यङः संप्रसारणं, तस्य दीर्घश्चेति स्थितिः। अत्र संप्रसारणं दुर्लभम्। ष्यङः करीषगन्धिशब्दादेव विहितत्वेन परमकारीषगन्ध्याशब्दस्य पूर्वपदस्य ष्यङन्तत्वाऽभावात्प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणादित्यत आह—स्त्रीप्रत्यये चेति। ष्यङः स्त्रियां विहितत्वात्स्त्रीप्रत्ययः। ततश्च 'स्त्रीप्रत्यये चानुपसर्जने ने'ति परिभाषया तदादिनियमाऽभावात्परमकारीषगन्ध्याशब्दोऽपि ष्यङन्त एवेति तत्र संप्रसारणे दीर्घे च 'परमकारीषगन्धीपुत्र' इति रूपमिति भावः। इयं परिभाषा 'ष्यङः संप्रसारण'मिति प्रकृत सूत्रे भाष्ये पठिता। तत्रानुपसर्जनग्रहणस्य प्रयोजनमाह—उपसर्जने त्विति। कारीषगन्ध्यामतिक्रान्तः अतिकारीषगन्ध्यः, 'अत्यादयः'

---

शे.] अभावाच्छन्दस्येवेदम्। अनुत्तरपदार्थं वचनम्। ष्यङः सं। अनुबन्धद्वयोच्चारणं पाशादिभ्यो यस्य, ष्यञो, 'वृद्धे'दिति ष्यङश्च व्यावृत्त्यर्थम्। सम्प्रसारणस्य। 'ढ्रलोपे' इत्यतो दीर्घ इत्यनुवर्त्तते 'उत्तरपदे' इत्यधिकारः। हल इत्यनेन तु नात्र दीर्घः। संप्रसारणात्पूर्वस्य हलः सम्प्रसारणनिमित्तनिरूपिताङ्गावयवत्वाभावात्। प्रत्यासत्त्या तादृशाङ्गावयवस्यैव तत्र ग्रहणात्। अत एव निरुतमित्यादौ न सः। कुमुदगन्धेरपत्यं स्त्रीत्यर्थेऽणः 'अणिञोः' इति ष्यङि यङश्चाप्। पूर्वान्तवत्त्वेन ष्यङन्तत्वात्संप्रसारणे पूर्वत्वे चासिद्धत्वेऽपि दीर्घविधिसामर्थ्यात्स्थानिवत्त्वेन सम्प्रसारणत्वाद्दीर्घः। ह्रस्वो नेति। 'इको ह्रस्वः' इत्यनेन प्राप्तः। परे तु ग्रामणिकुलमित्यत्र 'इक' इति ह्रस्वस्यावकाशः, ह्रस्ववैकल्पिकत्वेनाऽभावे कारीषगन्धीपुत्र इत्यादौ सम्प्रसारणस्येति सावकाशं, ह्रस्वप्रसङ्गे उभयप्राप्तौ परत्वात्संप्रसारणदीर्घत्वमेवेत्यत्रैव भाष्ये स्पष्टमित्याहुः। अतिकारीषेति। अत्यादयः इति समासे षष्ठीतत्पुरुषे ष्यङन्तत्व

बन्धुशब्दे उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ । कारीषगन्ध्या बन्धुरस्येति—कारीषगन्धीबन्धुः । बहुव्रीहाविति किम् ? । कारीषगन्ध्याया बन्धुः—कारीषगन्ध्याबन्धुः । क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया । ॐमातज्मातृकमातृषु वा । कारीषगन्धीमातः । कारीषगन्ध्यामातः । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । अस्मादेव निपातनान्मातृशब्दस्य मातजादेशः, 'नद्यृतश्चे'ति कब्विकल्पश्च । बहुव्रीहावेवेदम् । नेह—कारीषगन्ध्याया माता कारीषगन्ध्यामाता । चित्त्वसामर्थ्याच्चित्स्वरो बहुव्रीहिस्वरं बाधते । **इष्टकेषीकामालानां चिततूलभारिषु** ।६।३।६५। इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात् । इष्टकचितम् । पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारि । उत्पलमालभारि । **कारे सत्यागदस्य** ।६।३।७०। मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः । ॐअस्तोश्चेति वक्तव्यम् । अस्तुङ्कारः । ॐधेनोर्भव्यायाम् । धेनुम्भव्या । ॐलोकस्य पृणे । लोकम्पृणः । 'पृण'

---

**त.]** संप्रसारणमिह नेत्यर्थः । **अतिकारीषेति** । कारीषगन्ध्यामतिक्रान्तोऽतिकारीषगन्ध्यः, तस्य पुत्रः । **इष्टकचितमिति** । 'कर्तृकरणे कृते'ति तृतीयासमासः । **पक्वेष्टकचितमिति** । पदाधिकारात्तदन्तविधिः प्रवर्तत इति भावः । **मालभारीति** । 'मालां बिभर्ती'त्यर्थः । 'सुप्यजातौ' इति णिनिः । '**हारिषु**' इति पाठान्तरम् । **कारे सत्या** । 'अरुर्द्विष'दित्यतोऽनुवर्तनादाह—**मुम्स्यादिति** । सत्यङ्कारः-शपथकरणम् । अशपथेऽपि 'सत्यादशपथे' इति डाचं बाधित्वा परत्वान्मुमेव । **अगदङ्कारो** वैद्यः । **अस्तुङ्कारो**ऽभ्युपगमः । अस्त्विति तिङन्तप्रतिरूपकमव्ययम् । **धेनुम्भव्येति** । भविष्यन्ती धेनुरित्यर्थः । 'भव्यगेये'ति निपातनात्कर्तरि कृत्यः । धेनुश्चासौ भव्या चेति विग्रहः ।

---

**बा.]** इति समासे, उपसर्जनह्रस्वः । तस्य पुत्रोऽतिकारीषगन्ध्यपुत्रः । अत्र 'स्त्रीप्रत्यये तदादिनियमो ने'ति निषेधो न भवति, अनुपसर्जन एव स्त्रीप्रत्यये तस्य निषेधस्य प्रवृत्तेः । ष्यङ् त्वयं स्त्रीप्रत्ययोऽत्र उपसर्जन एव । अतस्तत्र तदादिनियमसत्त्वादतिकारीषगन्ध्यशब्दो नैव ष्यङन्त इति न संप्रसारणमिति भावः । **बन्धुनि बहुव्रीहौ** । **कारीषगन्धीबन्धुरिति** । अत्र पत्युत्तरपदत्वाऽभावात्तत्पुरुषत्वाऽभावाच्च पूर्वेण न प्राप्तिः । **मातज्मातृकमातृषु चेति** । वार्तिकमिदम् । मातच्, मातृक, मातृ-एषु परेषु ष्यङः संप्रसारणं वा वक्तव्यमित्यर्थः । मातचि उदाहरति—**कारीषगन्धीमातः, कारीषगन्ध्यामात इति** । मातृशब्दस्य मातजादेशः । अदन्तमेतत् ।

मातृके उदाहरति—**कारीषगन्धीमातृकः कारीषगन्ध्यामातृक इति** । 'नद्यृतश्चे'ति कप् । मातृशब्दे उदाहरति—**कारीषगन्धीमाता, कारीषगन्ध्यामातेति** । शैषिककबभावे रूपम् । ननु मातृशब्दस्य मातजादेशे किं प्रमाणं, 'नद्यृतश्चे'ति नित्यविधानात्पाक्षिककप्च दुर्लभ इत्यत आह—**अत एवेति** । **बहुव्रीहावेवेदमिति** । 'बन्धुनि बहुव्रीहौ' इति सूत्रे अस्य वार्तिकस्य पठितत्वादिति भावः । 'मातजि'ति चित्करणं स्वरार्थमित्याह—**चित्त्वसामर्थ्यादिति** । **इष्टकेषीका** । उत्तरपदे इत्यधिकृतम् । तल्लब्धं पूर्वपदमिष्टकादिभिर्विशेष्यते । तदन्तविधिः । व्यपदेशिवद्भावात्तेषामपि ग्रहणम् । उत्तरपदाधिकारस्यापि पदाधिकाराभ्युपगमात् 'पदाङ्गाधिकारे तस्य तदन्तस्य चे'ति वचनेन वा तेषां ग्रहणम् । 'इको ह्रस्वः' इत्यतो ह्रस्व इत्यनुवर्तते । तदाह—**इष्टकादीनां तदन्तानां चेति** । **इष्टकचितमिति** । इष्टकादिभिश्चितमिति विग्रहः । 'कर्तृकरणे कृते'ति समासः । तदन्तविधेः प्रयोजनमाह—**पक्वेष्टकचितमिति** । **इषीकतूलमिति** । इषीकायास्तूलमिति विग्रहः । तूलमग्रं । शष्पमित्यन्ये । **मुञ्जेषीकतूलमिति** । मुञ्जेषीकायास्तूलमिति विग्रहः । **मालभारीति** । 'सुप्यजातौ' इति णिनिः । [सूत्रे] **हारिष्विति** पाठान्तरम् । **कारे सत्यागदस्य** । शेषपूरणेन सूत्रं व्याचष्टे-**मुम्स्यादिति** । 'अरुर्द्विष'दित्यतस्तदनुवृत्तेरिति भावः । सत्यस्य अगदस्य च कारे परे मुम्स्यादिति फलितम् । मुमि मकार इत् । उकार उच्चारणार्थः । मित्त्वादन्त्यादचः परः । **सत्यङ्कार इति** । भावे घञ् । सत्यस्य कार इति विग्रहः । शपथकरणमित्यर्थः । **अगदङ्कार इति** । गदो-रोगः, तस्याऽभावः-अगदः । अर्थाभावे अव्ययीभावेन सह तत्पुरुषस्य विकल्पोक्तेः । अगदस्य कार इत्यर्थः । **अस्तोश्चेति** । 'कारे मु'मिति शेषः । **अस्तुङ्कार इति** । अस्त्विति तिङन्तप्रतिरूपकमव्ययमभ्युपगमे वर्तते । **धेनोरिति** । 'मुम्वक्तव्य' इति शेषः । **धेनुंभव्येति** ।

---

**शे.]** पूर्वपदमिति भावः । **मातजादेश इति** । स च कबभावपक्षे एव । ननु 'नद्यृत' इति कपः प्राप्त्या तदभावपक्षो दुर्लभोऽत आह—**कब्विकल्पश्चेति** । अयं मातजादेशो सम्बुद्धावपि, कारीषगन्धीमातरिति भाष्योदाहरणात् । **बहुव्रीहावेवेति** । तत्रैव भाष्ये उदाहरणात् । **चित्त्वेति** । 'मातच' इति शेषः । **इष्टकेषी** । असञ्ज्ञाच्छन्दोऽर्थं वचनम् । उत्तरपदाक्षिप्तपूर्वपदं विशेष्यीकृत्य तदन्तविधिरित्याह—**तदन्तानामिति** । **इष्टकचिते**— साधनं कृतेति समासः । **कारे स** । अरुर्द्विषदित्यतो मुमनुवर्त्तते । **सत्यंकार इति** । सत्यस्याऽशपथे वृत्तौ तु डाजेव । 'तत्रोपपदम्' इति सूत्रेऽप्युच्यन्ते उपपदेऽण् भवति न

इति मूलविभुजादित्वात्कः । *इत्येऽनभ्याशस्य । अनभ्याशमित्यः । दूरतः परिहर्तव्य इत्यर्थः । *भ्राष्ट्राग्न्योरिन्धे । भ्राष्ट्रमिन्धः । अग्निमिन्धः । *गिलेऽगिलस्य । तिमिङ्गिलः । अगिलस्य किम् ? । गिलगिलः । * गिलगिले च । तिमिङ्गिलगिलः । *उष्णभद्रयोः करणे । उष्णङ्करणम् । भद्रङ्करणम् । रात्रेः कृति विभाषा । ।६।३।७२। रात्रिंचरः । रात्रिचरः । रात्रिंमटः । रात्र्यटः । अखिदर्थमिदं सूत्रम् । खिति तु 'अरुर्द्विष'-दिति नित्यमेव वक्ष्यते । रात्रिंमन्यः । सहस्य सः संज्ञायाम् ।६।३।७८। उत्तरपदे । सपलाशम् । संज्ञायां किम् ? । सहयुध्वा । ग्रन्थान्ताधिके च ।६।३।७९। अनयोरर्थयोः सहस्य सः स्यादुत्तरपदे । समुहूर्तं

त.] गौतमस्मृतौ तु 'अधेनुभव्या' इत्यत्र आर्षत्वान्मुन्नेति बोध्यम् । लोकम्पृण इति । पृणधातुः प्रीणनार्थः । 'पृणतिः पूरणकर्मा' इति तु हरदत्तः । अनभ्याशमित्य इति । अभ्याशं=समीपं, तद्भिन्नमनभ्याशम् । 'एतिस्तुशास्वृदृजुषः' इति इणः क्यप् । भ्राष्ट्रमिन्ध इति । कर्मण्यणि उपपदसमासः । एवमग्निमिन्धोऽपि । गिलेऽगिलस्येति । गिलशब्दे उत्तरपदे अगिलस्य मुमित्यर्थः । तिमिङ्गिल इति । मत्स्यविशेषः । गिरतेर्मूलविभुजादित्वात्कः । 'अचि विभाषे'ति लत्वम् । गिलगिले चेति । 'गिलं गिलति इति गिलगिलः, तिमीनां गिलगिलः' इति विग्रहे इदमारब्धम् । रात्रेः कृति । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणाऽभावेऽपि रात्रिशब्दात्परत्र कृतोऽसंभवात्कृदन्त उत्तरपदेऽयं विधिरित्याशयेनोदाहरति—रात्रिंचर इति । यद्यप्याचारक्विबन्ताण्ण्वुलादिः संभवति, तथापि विलम्बितोपस्थितिकत्वात्स न गृह्यत इति भावः । नित्यमेवेति । पूर्वविप्रतिषेधेनेति भावः । रात्रिंमन्य इति । 'आत्ममाने खश्चे'ति खश् । खशः सार्वधातुकत्वात्तस्मिन्परे श्यन् । सहयुध्वेति । 'सहे चे'ति

बा.] नवप्रसवात्प्रागियमुक्तिः । भविष्यन्ती धेनुरित्यर्थः । 'भव्यगेये'ति कर्तरि निपातनात्कृत्यप्रत्ययः । धेनुश्चासौ भव्या चेति विग्रहः । मयूरव्यंसकादित्वाद्भव्याशब्दस्य परनिपातः । लोकस्य पृणे इति । 'मुम्वक्तव्य' इति शेषः । ननु लोकं पृणतीति विग्रहे कर्मण्यणि लघूपधगुणे रपरत्वे 'पर्ण' इति स्यादित्यत आह—मूलविभुजादित्वात्क इति । इत्येऽनभ्याशस्येति । 'मुम्वक्तव्य' इति शेषः । अनभ्याशमित्य इति । अभ्याशः—समीपम्, अनभ्याशं—दूरं । द्वितीयान्तमिदम् । इण्धातोः प्रापणार्थकात् 'एतिस्तुशा'सित्यादिना क्यप्, 'गम्यादीनामुपसङ्ख्यान'मिति द्वितीयासमासः । सुब्लुकि मुम् । दूरं प्रापयितव्यः, नतु समीपमित्यर्थं मनसि निधायाह—दूरतः परिहर्तव्य इति । भ्राष्ट्राग्न्योरिन्धे इति । 'मुम्वक्तव्य' इति शेषः । भ्राष्ट्रमिन्ध इति । भ्राष्ट्रं—धानादिभर्जनार्हं पात्रम्, तत् इन्द्धे—तापयतीति भ्राष्ट्रमिन्धः । कर्मण्यणि उपपदसमासः । सुब्लुकि, मुम् । अग्निमिन्ध इति । अग्निं प्रज्वलयतीत्यर्थः । गिलेऽगिलस्येति । 'अगिलस्ये'ति च्छेदः । गिले परे गिलभिन्नस्य मुम्वाच्य इत्यर्थः । तिमिङ्गिल इति । 'गॄ निगरणे' । तिमिः—मत्स्यविशेषः । तं गिलतीति मूलविभुजादित्वात्कः । 'ॠत इद्धातोः' इति रपरत्वे 'अचि विभाषे'ति लत्वम्, उपपदसमासः । सुब्लुकि मुम् । गिलगिल इति । अयमपि मत्स्यविशेषः । गिलगिले चेति । अगिलस्य मुम् वाच्य इत्यर्थः । तिमिङ्गिलगिल इति । गिलं गिलतीति गिलगिलः, तिमीनां गिलगिल इति विग्रहः । संबन्धसामान्ये षष्ठी । तिमिषु गिलगिल इति निर्धारणसप्तमी वा । 'संज्ञाया'मिति सप्तमीसमासः । उष्णभद्रयोः करणे इति । मुम्वाच्य इत्यर्थः । उष्णङ्करणं, भद्रङ्करणमिति षष्ठीसमासः । रात्रेः कृति । अस्य उत्तरपदाधिकारस्थत्वेन 'प्रत्ययग्रहणे तदन्तग्रहण'मिति तु इह न भवति । कृतः धातुप्रकृतिकत्वेन रात्रेः कृतोऽसंभवात्तदन्तविधिरित्यभिप्रेत्य आह—कृदन्ते परे इति । रात्रेर्मुम्वा स्यादित्यर्थः । रात्रिंचरः, रात्रिचर इति । सुप्युपपदे चरेष्टः, उपपदसमासः, सुब्लुकि पक्षे मुम् । रात्रिंमटः रात्र्यट इति । सुप्युपपदे मूलविभुजादित्वात्कः । उपपदसमासः । सुब्लुक् पक्षे मुम् । ननु 'रात्रिंमन्यः' इत्यत्रापि मुम्विकल्पः स्यादित्यत आह—अखिदर्थमिति । खिति त्विति । खिति तु इमं मुम्विकल्पं बाधित्वा पूर्वविप्रतिषेधेन 'अरुर्द्विषदजन्तस्ये'ति नित्यमेव मुमो विधानं कृदधिकारे वक्ष्यत इत्यर्थः । रात्रिंमन्य इति । 'आत्ममाने खश्चे'ति खश् । खशः शित्त्वेन सार्वधातुकत्वात्तस्मिन्परे 'दिवादिभ्यः श्यन्' इति श्यनि खित्त्वान्नित्यं मुमिति भावः । सहस्य सः । उत्तरपदे इति । शेषपूरणेनोक्तमिदम् । सहेत्यस्य स इत्यादेशः स्यादुत्तरपदे इत्यर्थः । 'वोपसर्जनस्ये'त्यस्यापवादः । सपलाशमिति । 'तेन सहे'ति बहुव्रीहिः । वनविशेषस्य संज्ञेयम् । सहयुध्वेति । 'सहे चे'ति क्वनिप् । असंज्ञात्वान्न समावः । ग्रन्थान्ताधिके च । ग्रन्थान्तश्च अधिकश्चेति

शे.] श्चेति विचारे सापेक्षत्वान्नेति भाष्योक्त्या च्वेः प्रत्ययोत्पत्तेः पूर्वमुत्पत्तिरित्यर्थलाभेन तद्देव ततः पूर्वं डाचः प्राप्तेः । न हि तदा मुमः प्राप्तिः, उत्तरपदपरत्वाऽभावात् । ध्यन्तेऽपि समासप्रवृत्तिकाल एव डचः प्रवृत्तिरित्याहुः । धेनुंभव्येति । मयूरव्यंसकादित्वात्समासः । अतो भव्यस्य परनिपातः । लोके पृणातीति विग्रहे कर्मण्यण् स्यादत आह—मूलेति । रात्रेः कृति । अत्र प्रकरणे

ज्योतिषमधीते । सद्रोणा खारी । **द्वितीये चानुपाख्ये** ।६।३।८०। अनुमेये द्वितीये सहस्य सः स्यात् । सराक्षसीका निशा । राक्षसी साक्षादनुपलभ्यमाना निशयाऽनुमीयते । **समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु** ।६।३।८४। समानस्य सः स्यादुत्तरपदे न तु मूर्धादिषु । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । यो नः सनुत्यः । 'तत्र भव' इत्यर्थे 'सगर्भसयूथसनुताद्यत्' । अमूर्धादिषु किम् ? । समानमूर्धा । समानप्रभृतयः । समानोदर्काः । **समानस्येति योगो विभज्यते** । तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति–काशिका । अथवा सहशब्दः सदृशवचनोऽप्यस्ति । सदृशः सख्या ससखीति यथा । तेनाऽयमस्वपदविग्रहो बहुव्रीहिः । समानः पक्षोऽस्येत्यादि । **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु** ।६।३।८५। एषु द्वादशसूत्तरपदेषु समानस्य सः स्यात् । सज्योतिः । सजनपद इत्यादि ।

---

त.] क्वनिप् । स्त्रियामपि 'वनो न हशः' इति निषेधान्ङीन्रौ न । **समुहूर्तमिति** । अन्तवचनेऽव्ययीभावः । 'अव्ययीभावे चाऽकाले' इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम् । **द्वितीये** । 'अप्रधानो यः स द्वितीयः' इति लोकप्रसिद्धम् । उपाख्यं=प्रत्यक्षं, तद्भिन्नमनुमेयं । तदाह—**अनुमेये इति** । **सराक्षसीकेति** । 'नद्यृतश्चे'ति कप् । **योगो विभज्यत इति** । एतदर्थमेव च्छान्दसमपि 'समानस्यच्छन्दसी'ति सूत्रमिहोपन्यस्तमिति भावः । **बहुव्रीहिरिति** । तेन 'वोपसर्जनस्ये'ति सहस्य सभावः प्राप्नोतीति भावः । **सज्योतिरिति** । समानं ज्योतिर-

---

बा.] समाहारद्वन्द्वः । **अनयोरर्थयोरिति** । 'विद्यमानस्ये'ति शेषः । **समुहूर्तमिति** । मुहूर्तविधिपरग्रन्थपर्यन्तं ज्योतिःशास्त्रमधीत इत्यर्थः । अन्तवचनेऽव्ययीभावः । 'अव्ययीभावे चाऽकाले' इत्यत्र कालपर्युदासादप्राप्ते सभावे ग्रन्थान्तग्रहणम् । **सद्रोणा खारीति** । द्रोणपरिमाणादधिकेत्यर्थः । मयूरव्यंसकादित्वात्सहशब्दस्याधिकवाचिनः समासः, सभावश्च । **द्वितीये चानुपाख्ये** । अप्रधानेऽसहाये द्वितीयशब्दो लाक्षणिकः । उपाख्यायते प्रतीयते उपलभ्यते इत्युपाख्यं=प्रत्यक्षम् । तदन्यदनुपाख्यम् । अनुमेयमिति यावत् । तदाह—**अनुमेय इति** । सहायवाचिन्युत्तरपदे परत इत्यर्थः । **सराक्षसीकेति** । 'तेन सहे'ति बहुव्रीहिः । 'नद्यृतश्चे'ति कप् । अनुमेयराक्षसीसहिता निशेत्यर्थः । तदाह—**राक्षसी साक्षादिति** । **समानस्य** । **न तु मूर्धादिष्विति** । मूर्धन्, प्रभृति, उदर्क–एषु परेषु नेत्यर्थः । **सगर्भ्य इति** । समाने गर्भे भव इत्यर्थः । **सयूथ्य इति** । समाने यूथे भव इत्यर्थः । **सनुत्य इति** । समाने नुते भव इत्यर्थः । सर्वत्र 'तद्धितार्थ' इति समासे समानस्य सभावः । **समानमूर्धेति** । समानो मूर्धा यस्येति विग्रहः । **समानप्रभृतय इति** । समानः प्रभृतिराद्यवयवो येषामिति विग्रहः । **समानोदर्का इति** । समान उदर्को येषामिति विग्रहः । तैत्तिरीये 'सजूर्ऋतुभिः, सजूर्विधाभिः, सजूर्वसुभिः, सजूरुद्रैः, सजूरादित्यैः, सजूर्विश्वैर्देवैः, सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यु सादयतामिह त्वा' इति मन्त्राः संसृष्टाः पञ्च पठिताः । पञ्चस्वपि मन्त्रेषु सजूर्ऋतुभिः, सजूर्विधाभिरित्ययम् आद्यवयवः, सजूर्देवैर्वयोनाधैरित्यन्तावयवश्च समानः, सजूर्वसुभिरित्यादिपञ्चानामेकैकस्य क्रमेणैकैकस्मिन्मन्त्रे मध्ये निवेश इति याज्ञिकमर्यादा । ननु लोके सपक्षादिशब्देषु कथं समानस्य सभाव इत्यत आह-**योगो विभज्यत इति** । तथा च 'समानस्य सः स्या'दिति वाक्यान्तरं संपद्यते । तत्र छन्दसीत्यभावाल्लोकेऽपि क्वचिद्भवतीति लभ्यत इति भावः ।

**सपक्ष इति** । समानः पक्षो यस्येति विग्रहः । **साधर्म्यमिति** । समानो धर्मो यस्य स सधर्मा । समानस्य सभावः । तस्य भावः साधर्म्यम् । ब्राह्मणादित्वात्ष्यञ् । **सजातीयमिति** । समाना जातिर्यस्येति विग्रहः । समानस्य सभावः । 'जात्यन्ताच्छ बन्धुनी'ति च्छः । **इत्यादीति** । 'सग्राम' इत्यादिसङ्ग्रहः । योगविभागस्य भाष्याऽदृष्टत्वाद्युक्त्यन्तरमाह—**अथवेति** । **तेनेति** । तेन=सदृशवचनेन सहशब्देन बहुव्रीहिरित्यन्वयः । तथा च 'वोपसर्जनस्ये'ति सहस्य सभाव इति भावः । ननु तर्हि समानः पक्षो यस्येति कथं विग्रहः, सहशब्दस्यैव विग्रहे प्रवेशौचित्यादित्यत आह—**अस्वपद इति** । वृत्तावेव सहशब्दः सदृशवचन इति भावः । **ज्योतिर्जनपद** ।

---

शे.] तदन्तविध्यभावेऽपि रात्रेः कृतोऽसम्भवात्कृदन्त इत्यर्थः । **नित्यमेवेति** । स्पष्टं चेदमत्र भाष्ये । **रात्रिमन्य इति** । 'आत्ममाने'इति खश् । श्यन् । **सहस्य** । सादेशो निपातनादुदात्त इति भाष्यम् । **सहयुध्वेति** । 'सहे च' इति क्वनिप्युपपदसमासः । **समुहूर्तमिति** । अन्तवचनेऽव्ययीभावः । मुहूर्तादिशब्दानां कालवाचिनामेव तत्प्रतिपादके ग्रन्थे कालत्वारोपेण प्रवृत्तेः 'अव्ययीभावे च' इत्यनेन न सः, 'अकाल'इति निषेधात् । **ज्यौतिषमिति** [–पाठे] । ज्योतिष इदमित्यर्थः । **द्वितीये चानु** । उपाख्यं=प्रत्यक्षं, तद्भिन्नेऽनुमेये सहायवाचिनि उत्तरपदे इत्यर्थः । अप्रधाने सहाये द्वितीयशब्दे इति हरदत्तः । **सराक्षसीकेति**—बहुव्रीहिः । 'नद्यृतश्च' इति कप् । **योगो विभज्यते इति** । छान्दसमपीदमेतदर्थमेवात्रोपन्यस्तम् । विभक्ते वोपसर्जनस्येत्यतो वेत्यनुवृत्त्या व्यवस्थितविभाषाश्रयणात् समानजातीयाद्यपीत्याहुः । योगविभागस्य भाष्यानुक्तत्वादाह–**अथ वेति** । **सदृशवचन इति** ।

**चरणे ब्रह्मचारिणि** ।६।३।८६। ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः-शाखा । ब्रह्म-वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरतीति ब्रह्मचारी । समानः सः-सब्रह्मचारी । **तीर्थे ये** ।६।३।८७। तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात् । सतीर्थ्यः-एकगुरुकः । 'समानतीर्थे वासी'ति यत्प्रत्ययः । **विभाषोदरे** ।६।३।८८। यादौ प्रत्यये विवक्षिते इत्येव । सोदर्यः । समानोदर्यः । **दृग्दृशवतुषु** ।६।३।८९। सदृक् । सदृशः । *दृक्षे चेति वक्तव्यम् । सदृक्षः ।वतुरुत्तरार्थः। **इदङ्किमोरीश्की**

त.] स्येति बहुव्रीहिः । यस्मिन्ज्योतिषि आदित्ये नक्षत्रे वा संजातं तदस्तमयपर्यन्तमनुवर्तमानमाशौचं सज्योतिरित्युच्यते । इह 'समानमध्यमध्यमवीराश्चे'ति प्रतिपदोक्त एव समासो न गृह्यते, 'सरूपाणामेकशेषः' इति लिङ्गात् । किंतु बहुव्रीहिरपी'ति हरदत्तः । **ब्रह्मचारीति** । 'व्रते' इति णिनिः । **सब्रह्मचारीति** । समानो ब्रह्मचारीत्यर्थः । ब्रह्मचारिणश्च समानत्वं-ब्रह्मणः समानत्वात् । ततश्च 'समाने ब्रह्मणि व्रतचारी'ति फलितोऽर्थः । **तीर्थे ये** । अकारो न विवक्षितः । 'प्रत्यये' इति विशेष्यं तु व्याख्यानाल्लभ्यते । तेन 'यस्मिन्विधि'रिति तदादिविधिरित्याह-**यादौ प्रत्यय इति** । **विवक्षित इति** । उत्तरपदमात्रनिमित्तः समासोऽन्तरङ्गः, समासप्रकृतिकसुबन्तात्तु यत्प्रत्ययः, अतस्तस्य परत्वं न संभवतीत्याशयेनेदमुक्तम् । **सोदर्य इति** । 'समानोदरे शयितः' इत्यर्थे प्रत्ययात्प्रा-

बा.] अच्छन्दोऽर्थं वचनमिदम् । **सज्योतिरिति** । समानं ज्योतिर्यस्येति विग्रहः । **एवं सजनपद इत्यादीति** । सरात्रिः, सनाभिः, सनामा, सगोत्रः, सरूपः, सस्थानः, सवर्णः, सवयाः, सवचनः, सबन्धुः । **चरणे ब्रह्मचारिणि** । समानस्येति स इति चानुवर्तते । 'उत्तरपदे' इत्यधिकृतम् । तदाह—**ब्रह्मचारिण्युत्तरपदे समानस्य सः स्यादिति** । 'चरणे' इति सप्तमी समानस्येत्यत्राऽन्वेति । चरणे विद्यमानस्येत्यर्थः । फलितमाह— **चरणे समानत्वेन गम्यमाने इति** । तत्र चरणपदं व्याचष्टे—**चरणः शाखेति** । वैदिकप्रसिद्धिरेवात्र मूलम् । ब्रह्मचारिपदं निर्वक्तुमाह—**ब्रह्म वेद इति** । 'वेदस्तत्त्वं तपो ब्रह्मे'त्यमरः । **तच्चरणार्थमिति** । तस्य=वेदस्य, चरणम्=अध्ययनं तच्चरणं, व्रतमपि ब्रह्मशब्देन विवक्षितमित्यर्थः । 'गौण्या वृत्त्ये'ति शेषः । **तच्चरतीति** । तद्व्रतं चरति=अनुतिष्ठतीत्यर्थे ब्रह्मचारिशब्द इत्यर्थः । 'सुप्यजातौ' इति णिनिः । **समानस्य स इति** । 'समानो ब्रह्मचारी'ति कर्मधारये सति प्रकृतसूत्रेण समानस्य सभावे सति 'सब्रह्मचारी'ति रूपमित्यर्थः । समानत्वं च वेदद्वारा बोध्यम् । तथाच समानवेदाध्ययनार्थं व्रतचारीति फलितोऽर्थः । भाष्ये तु समाने ब्रह्मणि व्रतं चरतीत्यर्थे चरेर्णिनिर्व्रतशब्दस्य लोपश्चाऽत्र निपात्यत इत्युक्तम् । **तीर्थे ये** । यशब्दादकारान्तात्सप्तम्येकवचनम्, अकारो न विवक्षितः, प्रत्यय इति विशेष्यमध्याहार्यम् । 'यस्मिन् विधि'रिति तदादिविधिः । तदाह—**यादौ प्रत्यये इति** । नाऽत्र यप्रत्ययान्ते तीर्थशब्दे परे इति व्याख्यातुं शक्यते, 'समानतीर्थे वासी'ति समानतीर्थशब्दात्कृतसमासादेव वासीति तद्धितार्थे यप्रत्ययविधानात् । स च यप्रत्ययोऽन्तरङ्गे सभावे कृते एव भवति । 'समर्थानां प्रथमाद्वे'ति सूत्रेण परिनिष्ठितादेव तद्धितोत्पत्तेर्वक्ष्यमाणत्वात्कृतेऽपि सभावे एकदेशविकृतन्यायेन भूतपूर्वगत्या वा समानतीर्थशब्दसत्त्वात् । अतो यप्रत्ययपरकत्वं समानशब्दस्य कथमित्यत आह—**विवक्षिते इति** । **सतीर्थ्य इति** । समाने तीर्थे वासीत्यर्थः । अत्र सामीप्ये सप्तमी । समानशब्दस्त्वेकपर्यायः । तीर्थशब्दो गुरौ, तदाह—**एकगुरुक इति** । तद्धितार्थे समासप्रवृत्तये तद्धितं दर्शयति—**समानेति** । 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ' इत्यमरः । **विभाषोदरे** । उदरशब्दे परे समानस्य सभावो वा स्यादित्यर्थः । **इत्येवेति** । अनुवर्तत एवेत्यर्थः । **दृग्दृशवतुषु** । 'समानस्य स' इति शेषः । **सदृक् सदृश इति** । समानो दृश्यते इत्यर्थे 'समानाऽन्ययोश्चे'ति दृशेः क्विन्, कञ् च । **दृक्षे चेति** । 'समानस्य सत्व'मिति शेषः । **सदृक्ष इति** । क्सोऽपि वाच्यः' इति दृशेः क्सः । **वतुरुत्तरार्थ इति** ।

शे.] अयं वृत्तिविषय एव, तदाह-**तेनायमस्वपदेति** । तेन=सहशब्देन समासे, अयं=वक्ष्यमाण इत्यर्थः । 'वोपसर्जनस्य' इति सादेशः । अत एव 'विभाषोदरे' इति चरितार्थम् । अन्यथा कर्मधारये सोदरसमानोदराभ्यां सपक्षादिवद्योगविभागेन सिद्धाभ्यां ययतोः रूपद्वयसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । सदृशार्थकसहशब्दस्य तु तत्र सादेशो दुर्लभः । अत्र पक्षे समानशब्देन समासे समानजातीयाद्येवेत्याहुः । **ब्रह्मचारीति** । 'व्रते' इति 'सुप्यजातौ' इति वा णिनिः । **समानः स इति** । तस्य समानत्वं वेदस्य व्रतस्य वा समानत्वात् । तस्य तत्त्वं चाऽध्येतृभेदाद्वेदभेदं व्रतभेदं वा परिकल्प्य बोद्धव्यम् । तेन समानवेदाध्ययननिमित्तंब्रह्मचारीत्यर्थः । समानं ब्रह्म वेदाध्ययनार्थं व्रतं चरतीत्यर्थो भाष्याल्लभ्यते । **तीर्थे ये** । अकारोऽत्र विवक्षितः । यशब्दे विवक्षिते इत्यर्थः । निरनुबन्धकपरिभाषा तु नात्र, तीर्थान्तान्निरनुबन्धकस्याऽसम्भवात् । स च प्रत्यय एव सम्भवतीति ध्वनयन्नाह-**यादाविति** । **समानतीर्थे इति** । सादेशोऽप्येकदेशविकृतन्यायेन समानतीर्थशब्दत्वम् । एवञ्च सतिशिष्टत्वात्स्वर एवोदाहरणे । एतदर्थमेव 'विवक्षित' इति व्याख्यातम् । **विभाषोद** ।अत्र ये इत्यनुवर्तते । विवक्षितसप्तमीत्वादत्रापि सतिशिष्टतया प्रत्ययस्वर एव । अन्यथा

।६।३।९०। इदङ्किमोरीश्की ।६।३।९०। दृग्दृशवतुषु इदम ईश्, किमः की स्यात् । ईदृक् । ईदृशः । कीदृक् । कीदृशः । वतूदाहरणं वक्ष्यते । ❀ दृक्षे च । ईदृक्षः । कीदृक्षः । 'आ सर्वनाम्नः' । ❀ दृक्षे च । तादृक् । तादृशः । तावान् । तादृक्षः । दीर्घः । सत्वोत्वे । अमूदृशः । अमूदृक् । अमूदृक्षः । समासेऽङ्गुलेः सङ्गः ।८।३।८०। अङ्गुलिशब्दात्सङ्गस्य सस्य मूर्धन्यः स्यात्समासे । अङ्गुलिषङ्गः । समासे किम् ? । अङ्गुलेः सङ्गः । भीरोः स्थानम् ।८।३।८१। भीरुशब्दात् स्थानस्य सस्य मूर्धन्यः स्यात्समासे । भीरुष्ठानम् । असमासे तु-भीरोः स्थानम् । ज्योतिरायुषः स्तोमः ।८।३।८३। आभ्यां स्तोमस्य सस्य मूर्धन्यः स्यात्समासे । ज्योतिःष्टोमः । आयुःष्टोमः । समासे किम् ? । ज्योतिषः स्तोमः । सुषामादिषु च ।८।३।९८। सस्य मूर्धन्यः । शोभनं साम यस्य सुषामा । सुषन्धिः । एति संज्ञायामगात् ।८।३।९९। सस्य मूर्धन्यः । हरिषेणः । एति किम् ? । हरिसक्थम् । संज्ञायां किम् ? । पृथुसेनः । अगकारात्किम् ? । विष्वक्सेनः । इण्कोरित्येव । सर्वसेनः । नक्षत्राद्वा ।८।३।१००। एति सस्य संज्ञायामगकारान्मूर्धन्यो वा । रोहिणीषेणः । रोहिणीसेनः । अगकारात्किम् ? । शतभिषक्सेनः । आकृतिगणोऽयम् । अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु ।६।३।९९। अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अन्यदीयः । अषष्ठीत्यादि किम् ? । अन्यस्याऽन्येन वाऽऽशीः-अन्याशीः । ❀कारके छे च नायं निषेधः । अन्यस्य कारकः, अन्यत्का-

---

त.] कसमानस्य सभावे कृते 'सोदराद्यः' इति यः । सभावाऽभावपक्षे तु 'समानोदरे शयित ओ चोदात्तः' इति यति 'समानोदर्यः' । सदृक्सदृश इति । 'समानान्ययोश्चेति वक्तव्य'मिति दृशेः क्विन्कञौ । दीर्घ इति । अदस आत्वे कृते सवर्णदीर्घ इत्यर्थः । एतच्च पूर्वोत्तरोदाहरणाऽन्वयि । भीरोः स्थानमिति । विसर्जनीयव्यवधानेऽपि षत्वप्राप्तिरस्ति । ज्योतिषः स्तोम इति । इह 'ज्योतिः स्तोमोऽय'मिति प्रत्युदाहर्तुमुचितम् । एति संज्ञायामिति । सुषामाद्यन्तर्गणसूत्रमेतत् । एवं 'नक्षत्राद्वा' इत्यपि । विष्वक्सेन इति । चर्त्वस्याऽसिद्धत्वाद्गकारेण व्यवधानमस्तीति भावः । अषष्ठ्य । अन्यदाशीरित्यादयः कर्मधारयाः । नायं निषेध इति । एतच्च 'अषष्ठी-

---

वा.] यत्तदेतेभ्यः परिमाणे वतुपः समानशब्दादसंभवादिति भावः । इदंकिमोरीश्की । 'ईश्' 'की' ति द्वे पदे । ईदृक् ईदृश इति । 'इदमिव दृश्यते' इत्यर्थे त्यदादिषु दृशेः क्विन्कञौ । ईशः शित्त्वं सर्वादेशत्वाय । वक्ष्यत इति । तद्धितप्रकरणे इयानित्युदाहरणं वक्ष्यत इत्यर्थः । दृक्षे चेति । इदंकिमोरीश्की वक्तव्यौ' इति शेषः । आ सर्वनाम्न इति । 'आ' इति लुप्तप्रथमाकम् । तादृक् तादृश इति । तदिव दृश्यत इत्यर्थे 'त्यदादिषु दृशः' इति क्विन्कञौ । तदो दकारस्य आत्वे सवर्णदीर्घः । तावानिति । तत्परिमाणमस्येति विग्रहे 'यत्तदेतेभ्य' इति वतुप् । तादृक्ष इति । तदिव दृश्यते इति विग्रहः । अमूदृगित्यत्र प्रक्रियां दर्शयति—दीर्घ इति । अदस आत्वे कृते सवर्णदीर्घः । तत ऊत्वमत्वे इत्यर्थः । 'अः से'रिति व्याख्यानेऽपि अकारेण आकारस्यापि ग्रहणादूत्वमत्वे । समासेऽङ्गुलेः सङ्गः । भीरोः स्थानम् । ज्योतिरायुषः स्तोमः । अत्र त्रिसूत्र्याम्-अङ्गुलेः सङ्गः, भीरोः स्थानं, ज्योतिषः स्तोमः, आयुषः स्तोम इत्याद्यर्थे प्रत्यासत्त्या तयोः पदयोः समासे सति उत्तरपदस्थस्य सस्य ष इत्यर्थः । तद्ध्वनयन् प्रत्युदाहरति—अङ्गुलेः सङ्ग इत्यादि । नेह 'इण्को'रित्यनुवर्तते, व्याख्यानात् । सुषामादिषु च । स्पष्टम् । एति संज्ञायामगात् । एकारे परे सस्य षः स्यादित्यर्थः । नक्षत्राद्वा । स्पष्टम् । अषष्ठ्यतृतीयास्थस्य । अषष्ठ्यामतृतीयायां च परतस्तिष्ठतीति अषष्ठ्यतृतीयास्थः, तस्य । अषष्ठीतृतीयान्तस्येत्यर्थः । 'अषष्ठीतृतीयास्थस्ये'त्येव सिद्धे नञ्द्वयोपादानं स्पष्टार्थम् । आशीरादिष्विति । आशीः, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग, छ-इत्येतेषु इत्यर्थः । दुकि ककार इत् । उकार उच्चारणार्थः । कित्त्वादन्तावयवः । अन्यदाशीरित्यादयः कर्मधारयाः । नायं निषेध

---

दी.] सादेशस्वरः स्यात् । तत्र सादेशपक्षे-'सोदराद्यः=समानोदरे शयित इत्यर्थे प्रथमोच्चारिताद्यो भवति स च सोदरात्पर' इति तदर्थः । सादेशाऽभावे तु 'समानोदरे शयितः' इति यत् । सोदरोपीति प्रयोगस्तु- समानमुदरं यस्येत्यर्थे अथवेत्याद्युक्तरीत्या सपक्षवत्सभावे बोद्धव्यः । 'वोपसर्जनस्य' इति विकल्पात् यत्र भ्राता सहोदर इत्यपि सिद्धम् । दृक्षे इति । सदृक्षास इति भाष्योदाहरणादस्य च्छान्दसत्वेऽपि सन्दर्भशुद्धयर्थमिहोपन्यासः । 'त्यदादिषु दृशोऽनालोचने कञ्च' 'समानान्ययोश्च' 'दृशेश्चे'ति कञ्क्विन्क्सः । दीर्घ इति । अन्त्यस्याऽऽत्वे कृते सवर्णदीर्घ इत्यर्थः । इदं पूर्वपरान्वयि । अमूदृगिति । अः सेरिति व्याख्यानेऽप्येवमेव । अकारेणाऽऽकारस्यापि ग्रहणात् । समासेऽङ्गुलेः सङ्गः, भीरोः स्थानं, ज्योतिषः स्तोमः, आयुषः स्तोम इत्याद्यर्थे प्रत्यासत्त्या तयोः पदयोः समासे सस्य ष इत्यर्थः । तद्ध्वनयन् प्रत्युदाहरति—ज्योतिषः स्तोम इति । एवं हि सङ्ग

रकः । अन्यस्यायमन्यदीयः । गहादेराकृतिगणत्वाच्छः । **अर्थे विभाषा** ।६।३।१००। अन्यदर्थः । अन्यार्थः । **कोः कत्तत्पुरुषेऽचि** ।६।३।१०१। अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् ? । कूष्ट्री राजा । ॐ **त्रौ च** । कुत्सितास्त्रयः कत्रयः । **रथवदयोश्च** ।६।३।१०२। कद्रथः । कद्वदः । **तृणे च जातौ** ।६।३।१०३। कत्तृणम् । **का पथ्यक्षयोः** ।६।३।१०४। कापथम् । काऽक्षः । अक्षशब्देन तत्पुरुषोऽक्षिशब्देन बहुव्रीहिर्वा । **ईषदर्थे** ।६।३।१०५। ईषज्जलं काजलम् । अजादावपि परत्वात्कादेशः । काऽम्लः । **विभाषा पुरुषे** ।६।३।१०६। कापुरुषः । कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव । ईषत्पुरुषः कापुरुषः । **कवं चोष्णे** ।६।३।१०७। उष्णशब्दे उत्तरपदे [कोः] कवं का च वा स्यात् । कवोष्णम् । कोष्णम् । कदुष्णम् । **पृषोदरादीनि यथोपदिष्टम्** ।६।३ १०९। पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषत उदरं पृषोदरम् । तलोपः । वारिवाहको बलाहकः । पूर्वपदस्य बः, उत्तरपदादेश्च

---

**त.]** तृतीयास्थस्ये'त्येव सिद्धे निषेधाऽनित्यत्वज्ञापनार्थाद्विर्नञ उपादानाल्लभ्यत इत्याहुः । **त्रौ चेति** । अनजाद्यर्थमिदं वार्तिकं, 'कन्थादिभ्यो ढकञि'ति निर्देशेनैव सिद्धम् । **कापथमिति** । कुत्सितः पन्थाः । 'ऋक्पूरब्धू'रिति समासान्तः । 'पथः सङ्ख्याव्ययादेः' इति नपुंसकत्वम् । **अप्राप्तविभाषेति** । 'ईषदर्थे' इत्यस्याननुवृत्तेरिति भावः ।

**पृषोदर । प्रकाराणीति** । आदिशब्दो हि न व्यवस्थावचनः, यथोपदिष्टपदानर्थक्यादिति भावः । **शिष्टैरिति** । अध्याहारलभ्यमिदम् । 'यथोपदिष्ट'मित्यत्र यथार्थेऽव्ययीभावः । उपदिशिश्चोच्चारणक्रियः । 'यानि यानि शिष्टैरुपदिष्टानि' इत्यर्थः । एवं स्थिते फलितमाह-**यथोच्चारितानि तथैवेति** । समासयदविषयकमिदम्, उत्तरपदाधि-

---

**बा.]** इति । 'अषष्ठ्यतृतीयास्थस्ये'ति निषेधः कारकच्छयोर्नास्तीत्यर्थः । भाष्योक्तमिदम् । **अर्थे विभाषा** । 'अन्यस्य दु'गिति शेषः । **कोः कत्तत्पुरुषेऽचि** । 'क'दिति च्छेदः । शेषपूरणेन सूत्रं व्याचष्टे-**अजादावुत्तरपदे इति** । **कदश्वः कदन्नमिति** । 'कुगती'ति समासः । **कूष्ट्रो राजेति** । कुत्सित उष्ट्रो यस्येति बहुव्रीहित्वान्न कदादेशः । **त्रौ चेति** । त्रिशब्दे परे कदादेशो वक्तव्य इत्यर्थः । उत्तरपदस्याऽजादित्वाऽभावाद्वचनम् । **रथवदयोश्च** । 'कोः कत्तत्पुरुषे' इति शेषः । **कद्रथः कद्वद इति** । 'कुगती'ति समासः । वदतीति वदः । कुत्सितो वदः कद्वदः । **तृणे च जातौ** । तृणशब्दे कोः कत्स्याज्जातौ वाच्यायाम् । **कत्तृणमिति** । तृणजातिविशेषोऽयम् । 'अस्त्री कुशं कुशो दर्भः पवित्रमथः कत्तृण'मित्यमरः । **का पथ्यक्षयोः** । पथिन्, अक्ष-अनयोः परतः कोः 'का' इत्यादेशः स्यादित्यर्थः । **कापथमिति** । कुत्सितः पन्था इति विग्रहः । 'कुगती'ति समासः । 'ऋक्पू'रित्यप्रत्ययः । 'पथः सङ्ख्याव्ययादे'रिति नपुंसकत्वम् । '**कापथ**' इति पाठे तु बहुव्रीहिः । काऽक्षशब्दे समासं दर्शयति—**अक्षशब्देन तत्पुरुष इति** । कुत्सितमक्षमिन्द्रियमिति विग्रहे 'कुगती'ति समास इत्यर्थः । **अक्षिशब्देनेति** । कुत्सिते अक्षिणी यस्येति विग्रहे 'बहुव्रीहौ सक्थ्यक्ष्णो'रिति षजित्यर्थः । **ईषदर्थे** । ईषदर्थे विद्यमानस्य कोः 'का' इत्यादेशः स्यादित्यर्थः । **काजलमिति** । ईषत्-जलमिति विग्रहे 'कुगतीति समासः । नित्यसमासत्वादस्वपदविग्रहप्रदर्शनम् । कुत्सित अम्लः काम्ल इत्यत्र 'कोः कत्तत्पुरुषेऽची'ति कदादेशमाशङ्क्याह—**अजादावपीति** । **विभाषा पुरुषे** । 'कोः का इत्यादेश' इति शेषः । **अप्राप्तविभाषेति** । ननु कोरीषदर्थकत्वे सति 'ईषदर्थे' इति नित्ये कादेशे प्राप्ते विकल्पसंभव इत्यत आह-**ईषदर्थे हीति** । वृत्त्यनुसारेणेदमुक्तं, पूर्वविप्रतिषेधस्य भाष्यानुक्तत्वात् । **कवं चोष्णे** । **कवं का च वेति** । विभाषेत्यनुवृत्तेरिति भावः । उभयाऽभावे कदादेशः । तथा च रूपत्रयम् । तदाह-**कोष्णं कवोष्णं कदुष्णमिति** । **पृषोदरादीनि** । आदिशब्दो न प्रभृतिवाची, गणपाठे पृषोदरादिपाठस्याऽदर्शनाद्यथोपदिष्टपदस्य वैयर्थ्याच्च । किंतु प्रकारवाची । तदाह—**पृषोदरप्रकाराणीति** । प्रकारः-सादृश्यं, तच्च शास्त्रोक्तलोपागमादेशादिरहितत्वेन बोध्यम् । व्याकरणशास्त्राऽगृहीतानीति यावत् । उपपूर्वको दिशिरुच्चारणार्थः । भावे क्तः । उपदिष्टमुपदेशः-उच्चारणं, तदनतिक्रम्य यथोपदिष्टम् । पदार्थानतिवृत्तावव्ययीभावः । शिष्टैरित्यध्याहार्यम् । तथा च फलितमाह-**शिष्टैर्यथोच्चारितानीति** । शिष्टास्तु शब्दतत्त्वसाक्षात्कारवन्तो योगिन इति

---

**शे.]** इत्यादिप्रथमानिर्देश आजसो भवति । अयम् = सुपामादिः, आकृतिगण इत्यर्थः । तेनैतयोर्गणसूत्रत्वमिति सूचितम् । **अषष्ठ्यतृतीयेति** । नञ्द्वयोपादानं स्पष्टार्थम् । कूष्ट्रे बहुव्रीहिः । इदमेव तत्पुरुषग्रहणमत्र प्रकरणेऽप्रतिपदोक्तसमासस्यापि ग्रहणं ज्ञापयति । तद्वक्ष्यति--अक्षिशब्देन बहुव्रीहिर्वेति । कापथे 'कुगति' इति समासः, 'ऋक्पूः' इत्यः, 'पथः संख्या' इति नपुंसकत्वम् ।अनीपदर्थमिदम् । **पूर्वविप्रषेधादिति** । भाष्यानुक्तमपि वृत्तिप्रामाण्यादादृतम् । **पृषोदरा** । आदिशब्दः प्रकारे । यथोपदिष्टमित्युक्तेः । उपदिष्टमिति कर्मणि क्तः । उपदेशः=उच्चारणम्, तस्य कर्त्राकाङ्क्षायां शिष्टैरित्यध्याहारलभ्यम् । शिष्टाश्च शब्दतत्त्वसाक्षात्कारवन्तो योगिन इति भाष्ये स्पष्टम् । उत्तरपदाधिकारस्समासविषयमिदम् । संज्ञासिद्धयोर्दृष्टान्तार्थमुपादानम् । यथा

लत्वम् । ॐ भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् । ॐ दिक्शब्देभ्यस्तीरस्य तारभावो वा । दक्षिणतारम् । दक्षिणतीरम् । उत्तरतारम् । उत्तरतीरम् । ॐ दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वं च । दुःखेन दाश्यते दूडाशः । दुःखेन नाश्यते दूणाशः । दुःखेन दभ्यते दूडभः । खल्त्रिभ्यः । दम्भेर्नलोपो निपात्यते । दुःखेन ध्यायतीति दूढ्यः । 'आतश्चे'-इति कः । ब्रुवन्तोऽस्यां सीदन्तीति बृसी । ब्रुवच्छब्दस्य 'बृ' आदेशः, सदेरधिकरणे डट् । आकृतिगणोऽयम् । संहितायाम् ।६।३।११४। अधिकारोऽयम् । कर्णे लक्षणस्याऽऽविष्टाऽष्टपञ्चमणिभिन्नच्छिन्नच्छिद्र-

त.] कारात् । निरुक्तादिशास्त्रसिद्धानामसमासपदानाम् 'उणादयो बहुल'मित्येव सिद्धेश्च । यद्यपि समासविषयकमेवेति नियमो न युज्यते, हंससिंहशब्दयोरपि प्राचां कारिकायामुदाहृतत्वात्, तथापि तत्कारिकायां यथाशब्दाध्याहारेण दृष्टान्तप्रदर्शनार्थं तयोरुपन्यासः कृतो न तु प्रकृतसूत्रोदाहरणत्वेनेति नियमोक्तिः सम्यगेवेत्याहुः । **वर्णागमा-दिति** । हन्तेः पचाद्यचि सगागमः । **विपर्ययादिति** । हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्यत्ययः । **दिक्शब्देभ्य इति** । वार्तिकमिदम् । 'दुरो दाशनाशे'त्यप्येवम् । **खल्त्रिभ्य इति** । दाशनाशदभेति त्रयोऽपि 'ईषद्दुःसुषु' इति खल्प्रत्ययान्ता इत्यर्थः । **बृसीति** । 'मुनीनामासनं बृसी' । **आकृतिगणोऽयमिति** । तेन-'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः ।' इत्यपि सङ्गृहीतम् । कृत्यान्ते उत्तरपदे अवश्यमः अन्तं पुमान्लुम्पेत् । अवश्यगन्तव्यः । अवश्यसेव्यः । तथा तुमः काममनसोः परतोऽन्तं लुम्पेत् । गन्तुकामः । गन्तुमनाः । समो हिततयोरन्तं वा लुम्पेत् । सहितः संहितः । सततः संततः । युट् घञ्, एतत्परो यः पचधातुस्तस्मिन्परे मांसस्याऽन्तं लुम्पेत् । मांस्पचनम् । मांस्पाकः । इह संयोगान्तलोपोऽपि शिष्टोच्चारणान्नेति बोध्यम् । **संहितायाम्** । तेन 'द्विगुणाकर्णः'इत्यादाववग्रहे दीर्घो न भवतीति सूत्राशयमुत्प्रेक्षयन्ति ।

वा] भाष्यकैयटयोः स्पष्टम् । **तलोप इति** । षष्ठीसमासे सुब्लुकि तलोपे 'आद्गुणः' इति भावः । **पूर्वपदस्येति** । 'वारिवाहक'शब्दे वारिशब्दस्य पूर्वपदस्य बकारः सर्वादेशः । वाहकशब्द उत्तरपदं, तदादेर्वकारस्य लकारादेश इत्यर्थः । **भवेद्वर्णागमाद्धंस इति** । हसधातोः पचाद्यचि अनुस्वारागमे 'हंस' इति रूपमित्यर्थः । हनधातोरचि सगागमे 'नश्चाऽपदान्तस्ये'त्यनुस्वार इत्यन्ये । **सिंहो वर्णविपर्ययादिति** । 'हिसि हिंसाया'मित्यतः पचाद्यचि इदित्त्वान्नुम् । 'नश्चे'त्यनुस्वारः । हकारस्य सकारः, सकारस्य हकारश्च । सिंह इति रूपमित्यर्थः । यद्यपि हंस-सिंहयोरुणादौ व्युत्पत्तिरुक्ता तथाप्युणादिसूत्राणां शाकटायनप्रणीतत्वेन शास्त्रान्तरत्वादिह व्युत्पादनं न दोष इत्याहुः । **गूढोत्मा वर्णविकृतेरिति** । गूढ आत्मा यस्येति बहुव्रीहावुत्तरपदादेराकारस्य उकारे आद्गुणे रूपमिति भावः । **वर्णनाशात्पृषोदरमिति** । पृषत्--उदरमित्यत्र तकारलोपे सति आद्गुणे पृषोदरमिति भवतीत्यर्थः । **दिक्छब्दे-भ्यस्तीरस्येति** । वार्तिकमिदम् । **दुरो दाशेति** । इदमपि वार्तिकम् । दुरित्यस्य दाश, नाश, दभ, ध्य— इत्येतेषु परेषु उत्वम्, उत्तरपदादेः ष्टुत्वं च वक्तव्यमित्यर्थः । **दूडाश इति** । दुर्--दाश इति स्थिते रेफस्य उत्वे सवर्णदीर्घः । दाशेर्दकारस्य ष्टुत्वेन डकारः । **दूणाश इति** । दुर्–नाश इति स्थिते रेफस्य उत्व सवर्णदीर्घः । नाशेर्नकारस्य ष्टुत्वेन णत्वम् । **दूडभ इति** । दुर्--दभ इति स्थिते रेफस्य उत्वं, सवर्णदीर्घः । दभेर्दकारस्य ष्टुत्वेन डकारः । **खल्त्रिभ्य इति** । 'दाशृ दाने' 'णश अदर्शने' ण्यन्तः, 'दभ हिंसाया'मिति त्रिभ्यो धातुभ्यः 'ईषद्दुस्सुषु' इति खल्प्रत्यय इत्यर्थः । ननु क्ङित्परकत्वाऽभावात्कथमिह 'अनिदिता'मिति नलोप इत्यत आह--**दम्भेर्नलोपो निपात्यत इति** । **दूढ्य इति** । दुर् ध्य इति स्थिते रेफस्य उत्वं सवर्णदीर्घः, धस्य ष्टुत्वेन ढत्वम् । **आतश्चेति** । 'ध्यै चिन्तायाम्' 'आतश्चोपसर्गे' इति कप्रत्यये 'आदेच उपदेशे' इति आत्त्वे 'आतो लोप इटि चे'त्याल्लोपे ध्यशब्द इत्यर्थः । **सदेरिति** । सद्धातोरधिकरणेऽर्थे डटि ङित्त्वसामर्थ्यादभस्यापि टेर्लोपे स इति रूपम् । ब्रुवत् स इति स्थिते उपपदसमासे सुब्लुकि ब्रुवच्छब्दस्य 'बृ' इत्यादेशे बृसशब्दात् 'टिड्ढे'ति ङीपि बृसीति रूपमिति भावः । 'दिक्छब्देभ्य' इत्यारभ्य एतदन्तः सन्दर्भः पृषोदरादीनीत्यस्यैव प्रपञ्चः । **आकृतिगणोऽय-मिति** । पृषोदरादिरित्यर्थः । तेन कर्तुकामः, कर्तुमना इत्यादिसङ्ग्रहः । **संहितायाम्** । सुगमम् । **कर्णे लक्ष-**

**णे.]** तयोरुणादित्वात्साधुत्वं तथा गूढोत्मादेः पृषोदरादित्वादित्यर्थ इत्येके । परे तु इदन्तद्धितविषयमपि । पुराणशब्देऽनेन तलोप इति सर्वादिसूत्रे कैयटात् । एवञ्च हंसादेरुणाद्यन्तत्वेन शास्त्रान्तरोक्तस्यापि अनेन साधुत्वं, सर्पिषेत्यादौ षत्वमप्यनेनैवेत्याहुः । दूडाशादौ रेफस्योत्वे सवर्णदीर्घः । ध्यशब्देन प्रत्ययान्तस्य ग्रहणम् । आगन्तुनाऽकारेण धीशब्दस्य च ग्रहणम् । तेन सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्माभवधीदित्यर्थकं 'मानः समस्य दूढ्यः' इति सिद्धम् । दुष्टं ध्यायतीति विग्रहे कारकपूर्वकत्वाद्यण् । श्रुतौ तु कप्रत्ययान्तं, ङस्स्थानिकस्वन्तन्तु न, अन्तस्वरिताऽसङ्गतेरिति दिक् । **संहितायाम्** । एतत्फलं द्दष्यचरितङन्तस्यातो

**सुवस्वस्तिकस्य** ।६।३।११५। कर्णशब्दे परे लक्षणवाचकस्य दीर्घः। द्विगुणाकर्णः। लक्षणस्य किम्?। शोभनकर्णः। अविष्टादीनां किम्?। विष्टकर्णः। अष्टकर्णः। पञ्चकर्णः। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः। **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ** ।६।३।११६। क्विबन्तेषु एषु परेषु पूर्वपदस्य दीर्घः। उपानत्। नीवृत्। प्रावृट्। मर्माविन्। नीरुक्। अभीरुक्। ऋतीषट्। परीतत्। क्वाविति किम्?। परिणहनम्। 'विभाषा पुरुषे' इत्यतो मण्डूकप्लुत्या विभाषाऽनुवर्तते। सा च व्यवस्थिता। तेन गतिकारकयोरेव। नेह—पटुरुक्। तिग्मरुक्। **वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्** ।६।३।११७। कोटरादीनां वने परे, किंशुलकादीनां गिरौ परे दीर्घः स्यात्संज्ञायाम्। **वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः** ।८।४।४। वनशब्दस्योत्तरपदस्य एभ्य एव णत्वं न त्वन्येभ्यः। इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः। तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः। अग्रेशब्दस्य तु

---

**त.]** **अधिकारोऽयमिति**। तेन 'विद्मा हि त्वा' इत्यादौ पदकाले 'द्व्यचोऽतस्तिङः' इति दीर्घो नेत्यादिप्रयोजनान्यूह्यानीति। **नहिवृति**। 'णह बन्धने', 'वृतु वर्तने', 'वृषु सेचने', 'व्यध ताडने', 'रुच दीप्तौ', 'षह मर्षणे', 'तनु विस्तारे'। **क्विबन्तेष्विति**। 'उत्तरपदेषु' इति शेषः। तेन 'दिवसेषु रुक्' इत्यादौ नातिप्रसङ्गः। **उपानदिति**। संपदादित्वात्कर्मणि क्विप्। निवर्तते इति **नीवृत्**। प्रवर्षति इति **प्रावृट्**। मर्माणि विध्यति इति **मर्मावित्**। व्यधेः 'ग्रहिज्ये'ति संप्रसारणम्। निरोचते इति **नीरुक्**। ऋतिं सहते **ऋतीषट्**। 'पूर्वपदा'दिति षत्वमिति हरदत्तः। 'सहेः पृतनर्ताभ्यां च'ेत्यत्र 'सहे'रिति योगविभागाच्चकारस्यानुक्तसमुच्चयार्थत्वादित्यन्ये। सुषामादेराकृतिगणत्वादित्यपरे। परितनोति इति **परीतत्**। 'गमः क्वौ' इत्यत्र 'गमादीनामिति वाच्य'मित्युक्तेर्नलोपः। **वनं पुरगा**। व्यत्ययेन षष्ठ्यर्थे प्रथमा इत्याह—**वनशब्दस्येति**। **एभ्य एवेति**। कृतदीर्घेभ्यः पुरगादिभ्य एव परस्य णत्वमित्यर्थः। 'एभ्यो वनस्यैव णत्वं नान्येषा'मिति विपरीतनियमशङ्का तु न भवति, वनादन्यस्मिन्नुत्तरपदे पुरगादीनां दीर्घान्तत्वाऽसंभवात्। **नियमार्थ इति**। अयं भावः—'पुरगामिश्रके'ति दीर्घनिर्देशादसंज्ञायां दीर्घाऽभावेन संज्ञायामेव

---

**बा.]** णस्य। दीर्घविधिः, 'ढ्रलोपे' इत्यतस्तदनुवृत्तेः। यत्पशूनां स्वामिविशेषसंबन्धज्ञानार्थं दात्रप्लवचक्राद्याकारचिह्नं क्रियते तल्लक्षणशब्देन विवक्षितम्। तेन 'लम्बकर्ण' इत्यादौ नातिप्रसङ्गः। **द्विगुणाकर्ण इति**। द्विगुणरेखौ कर्णौ यस्येति विग्रहः। 'अष्टकर्ण' इत्यादेरष्टसङ्ख्यालिपिचिह्नकर्ण इत्यादिरर्थः। अष्टसङ्ख्याकाररेखाचिह्नकर्ण इति वा। **नहिवृति**। **उपानदिति**। 'णह बन्धने' 'णो नः'। सम्पदादित्वात्कर्मणि क्विप्। उपनह्यते इत्युपानत्। पूर्वपदस्य दीर्घः। 'नहो धः'। निवर्तते इति नीवृत्। 'वृतु वर्तने' कर्तरि क्विप्, दीर्घः। प्रवर्षतीति प्रावृट्। 'वृषु सेचने' क्विप्। दीर्घः। मर्माणि विध्यतीति मर्मावित्। क्विप्। 'ग्रहिज्ये'ति संप्रसारणम्। उपपदसमासः, सुब्लुक्, नलोपः, दीर्घः। निरोचते इति नीरुक्, 'रुच दीप्तौ' क्विप्, दीर्घः। ऋतिं सहते इति ऋतीषट्। 'षह मर्षणे' क्विप्। दीर्घः, 'हो ढः', 'सात्पदाद्योः' इति षत्वनिषेधे प्राप्ते 'पूर्वपदा'दिति षत्वमिति हरदत्तः। सुषामादित्वादित्यपरे। परितनोतीति परीतत्। 'तनु विस्तारे' क्विप्, 'गमः क्वौ' इत्यत्र गमादीनामित्युपसङ्ख्यानादनुनासिकलोपः। तुक्, दीर्घः।

अथ पटुरुक्, तिग्मरुगित्यादौ दीर्घमाशङ्क्याह-**विभाषेति**। **पटुरुगिति**। पटु रोचत इति विग्रहः। उभयत्र कर्तरि क्विप्। पूर्वपदयोर्गतिकारकान्यतरत्वाऽभावान्न दीर्घः। व्यवस्थितविभाषाश्रयणे व्याख्यानमेव शरणम्। **वनगिर्योः**। वनगिर्योरिति सप्तमी। कोटरश्च किंशुलकश्च कोटरकिंशुलकौ, तावादी येषामिति विग्रहः। कोटरादीनां किंशुलकादीनां चेति लभ्यते। यथासङ्ख्यमन्वयः। तदाह—**कोटरादीनामित्यादिना**। 'पुरगावण'मित्युदाहरणानि वक्ष्यन्ते। तत्र णत्वविधिं दर्शयति—**वनं पुरगा**। वनमिति षष्ठ्यर्थे प्रथमा। इत्यभिप्रेत्याह—**वनशब्दस्येति**। **एभ्य इति**। पुरगा, मिश्रका, सिध्रका, सारिका, कोटर, अग्रे इत्येतेभ्य एव परस्य उत्तरपदस्य वनशब्दस्य यो नकारस्तस्य णत्वमित्यन्वयः। 'रषाभ्याम्' इत्यतो 'णो नः' इत्यनुवृत्तेः। सूत्रे 'अग्रे' इति सप्तम्यन्तस्यानुकरणम्। नन्विह भिन्नपदत्वात् 'अट्कुप्वा'ङिति णत्वस्याऽप्राप्तेरपूर्वविध्यर्थकत्वावश्यकत्वादेभ्य एवेति कथं नियमलाभ इत्यत आह—**इह कोटरान्ता इति**। इह=णत्वविधावुपात्ताः पुरगा मिश्रका सिध्रका सारिका कोटर इत्येवं पञ्च शब्दाः,

---

**शे.]** दीर्घः स्यादित्यर्थकेन 'द्व्यचोऽतस्तिङ' इत्यनेन 'विद्मा हित्वा गोपतिं शूरगोनाम्' इत्यत्र संहितायामिव विद्म हित्वेति पदकाले न दीर्घः। एतदधिकारस्थाऽन्यशास्त्राणान्तूत्तरपदाधिकारात्समास एव प्रवृत्त्या तत्र च संहिताया नित्यत्वान्न तेष्वस्याऽधिकारस्य फलमिति बोध्यम्। **कर्णे लक्षणस्य**। यत्पशूनां स्वामिविशेषसम्बन्धज्ञानार्थं दात्राकारादिचिह्नं क्रियते तदिह लक्षणम्। तेन लम्बकर्णसिद्धिः। **अष्टकर्ण** इत्यादेरष्टसङ्ख्यालिपिचिह्नकर्ण इत्यादिरर्थः। अष्टसङ्ख्यारेखाचिह्नकर्ण इति वा। **मर्माविदिति**। व्यधेः 'ग्रहिज्या' इति संप्रसारणम्। **सा च व्यवस्थितेति**। एतच्च प्रचुरलक्ष्यदर्शनादाश्रितम्। केचित्तु 'यथोपदिष्ट'मित्यनुवृत्त्या-

विध्यर्थः । पुरगावणम् । मिश्रकावणम् । सिध्रकावणम् । सारिकावणम् । कोटरावणम् । एभ्य एवेति किम् ? । असिपत्रवनम् । वनस्याग्रे अग्रेवणम् । राजदन्तादिषु निपातनात्सप्तम्या अलुक् । प्रातिपदिकार्थमात्रे प्रथमा । किंशुलुकागिरिः । **वले** ।६।३।११८। वलप्रत्यये परे दीर्घः स्यात्संज्ञायाम् । कृषीवलः । **मतौ बह्वचोऽनजिरादीनाम्** ।६।३।११९। अमरावती । अनजिरादीनां किम् ? । अजिरवती । बह्वचः किम् ? । व्रीहिमती । संज्ञायामित्येव । नेह—वलयवती । **शरादीनां च** ।६।३।१२०। शरावती । **इको वहेऽपीलोः** ।६।३।१२१। इगन्तस्य दीर्घः स्याद्वहे । ऋषीवहम् । कपीवहम् । इकः किम् ? । पिण्डवहम् । अपीलोः किम् ? । पीलुवहम् । ॐअपील्वादीनामिति वाच्यम् । दारुवहम् । **उपसर्गस्य घञ्यमनुष्ये बहुलम्** ।६।३।१२२। उपसर्गस्य

---

**त.]** णत्वमिति फलितम् । एवं च 'पूर्वपदात्संज्ञाया'मित्यनेनैव वनस्य णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ निर्देशो नियमार्थ एवेति । **विध्यर्थ इति** । असंज्ञात्वेन 'पूर्वपदात्संज्ञाया'मित्यस्याऽप्रवृत्तेरिति भावः । न च पुरगाग्रहणमपि विध्यर्थमेव, गकारव्यवधानेन 'पूर्वपदात्संज्ञाया'मित्यस्य प्राप्त्यभावादिति वाच्यम्, 'अगः' इत्यस्य पञ्चम्यन्तत्वं स्वीकृत्य 'गान्तात्पूर्वपदात्परस्य णत्वं ने'ति व्याख्यानात् । पुरगाशब्दस्य त्वकारान्तत्वात् 'अगः' इति निषेधस्याऽप्रवृत्तेः । अतएव 'अगः' इत्यस्य 'ऋगयन'मित्येकमेवोदाहरणमिति 'अणृगयनादिभ्यः' इति निर्देशाश्रयेण तत्प्रत्याख्यातमाकरे । **पुरगावणमित्यादि** । नरकविशेषस्य संज्ञा । **असिपत्रवनमिति** । 'एभ्यो वनस्यैवे'ति विपरीतनियमे तु णत्वमत्र दुर्वारमिति भावः । सप्तम्यर्थस्य प्रातिपदिकार्थेऽन्तर्भावादाह—**प्रथमेति** । किंशुलुकादीनामुदाहरणमाह—**किंशुलुकागिरिरिति** । आदिशब्दग्राह्यास्तु 'अञ्जनागिरिः' इत्यादयः ।

---

**बा.]** त एव वनगिर्योरिति दीर्घविधौ कोटरादिशब्देन विवक्षिता इत्यर्थः । ततः किमित्यत आह—**तेषामिति** । णत्वविधौ तावत्पुरगादिशब्दाः पञ्च दीर्घान्ता एव निर्दिष्टाः । दीर्घस्तु तेषां संज्ञायामेव 'वनगिर्योरिति'विहितः । एवंच एतेषामसंज्ञायां दीर्घाऽभावात्संज्ञायामेव 'वनं पुरगे'ति णत्वविधिरिति पर्यवस्यति । ततश्च तेषु वनशब्दनकारस्य 'पूर्वपदात्संज्ञायामगः' इत्येव णत्वे सिद्धे पुनरपि कृतदीर्घस्य पुरगादिपञ्चकस्य णत्वविधौ निर्देशो नियमार्थः संपद्यत इत्यर्थः । **अग्रेशब्दस्य त्विति** । णत्वविधावग्रेशब्दस्य निर्देशस्तु अग्रेवणशब्दे अपूर्वणत्वविध्यर्थ एव, न तु नियमार्थः । अग्रेवणशब्दस्याऽसंज्ञात्वादिति भावः । न च पुरगावणशब्दे गकारव्यवधानात् 'पूर्वपदात्संज्ञाया'मित्यस्य प्राप्त्यसंभवादत्र अपूर्वणत्वविध्यर्थमेव पुरगाग्रहणमिति वाच्यम्, 'अग' इति हि पञ्चमी, गकारान्तात्पूर्वपदात्परस्य णत्वं नेति लभ्यते । पुरगाशब्दस्त्वयमाकारान्त एव, न तु गकारान्त इति, तत्र अग इति निषेधाऽप्राप्त्या 'पूर्वपदात्संज्ञाया'मित्येव सिद्धे, पुरगाग्रहणमपि नियमार्थमेवेति भावः । **पुरगावणमित्यादयो** नरकविशेषाणां संज्ञाः । **असिपत्रवनमिति** । नरकविशेषोऽयम् । अत्र संज्ञात्वेऽपि 'पूर्वपदात्संज्ञाया'मिति णत्वं न भवति, एभ्य एवेति नियमादिति भावः । **अग्रेवणमिति** । वनशब्दस्य षष्ठ्यन्तस्य अग्रेशब्देन सह षष्ठीसमास इति भावः । ननु तर्हि 'सुपो धातु'ति सप्तम्या अपि लुक् स्यादित्यत आह—**राजदन्तादिष्विति** । अनेन वनशब्दस्य परनिपातोऽपि सूचितः । ननु सप्तम्यर्थप्राधान्यात्सप्तमी स्यादित्यत आह—**प्रातिपदिकेति** । सप्तम्यर्थस्य प्रातिपदिकेऽन्तर्भावादिति भावः । किंशुलुकादीनामुदाहरणमाह—**किंशुलुकागिरिरिति** । 'अञ्जनागिरि'रित्यप्युदाहार्यम् । **वले** । **कृषीवल इति** । कृषिरस्यास्तीति विग्रहे 'रजःकृष्यासुती'त्यादिना वलच् । **मतौ** । मतुप्प्रत्यये परे बह्वचो दीर्घः स्यात्संज्ञायां, न त्वजिरादीनामित्यर्थः । **अमरावतीति** । इन्द्रनगर्याः संज्ञेयम् । अमरा अस्यां सन्तीति विग्रहः । 'मादुपधायाश्चे'ति, 'संज्ञाया'मिति वा मस्य वः । **अजिरवतीति** । नदीविशेषस्य संज्ञेयम् । **वलयवतीति** । अनजिरादित्वेऽप्यसंज्ञात्वान्न दीर्घ इति भावः । **शरादीनां च** । 'मतौ दीर्घः संज्ञाया'मिति शेषः । अबह्वच्कत्वात्पूर्वेण न प्राप्तिः । **शरावतीति** । शरा अस्यां सन्तीति विग्रहः । नदीविशेषस्य नाम । **इको वहेऽपीलोः** । 'अपीलो'रिति च्छेदः । **इगन्तस्येति** । 'पूर्वपदस्ये'ति शेषः । **उपसर्गस्य** । **परीपाक इति** । पचेर्भावे घञ्,

---

**शे.]** ऽन्यत्र तं वारयन्ति । **एभ्य एवेति** । कृतदीर्घेभ्य इत्यर्थः । **कृतदीर्घाणामिति** । व्याख्यानात् । अत एव विपरीतनियमो न । अन्योत्तरपदे एषां दीर्घान्तत्वाऽसम्भवाच्च । **नियमार्थ इति** । 'पूर्वपदात्सञ्ज्ञायाम्' इत्येव सिद्धेः । दीर्घस्य सञ्ज्ञायामेव विधानादस्य णत्वस्य सञ्ज्ञायां प्रवृत्तेः । **विध्यर्थ इति** । अग्रेवणशब्दस्याऽसञ्ज्ञात्वादिति भावः । **पुरगावणमित्यत्र** 'अगः' इति प्रतिषेधस्तु न, अगकारान्तपूर्वपदादित्यर्थात् । **असिपत्रवनमिति** । नरकविशेषस्य सञ्ज्ञा । **वलप्रत्यय इति** । यथोपदिष्टमित्यनुवृत्तेरिति भावः । तेनाऽजन्ते वलधातौ न । अण इत्येव । नेह—भ्रातृवलः । 'रजः कृषी'त्यत्र 'अन्येभ्योऽपि दृश्यते'इत्युक्तेर्वलच्प्रत्ययः । उदाहरणे 'रजः कृषी'ति वलच् । संज्ञायामेवेदम् । तेन पुत्रवल इत्यादौ न । प्रत्ययनिमित्तत्वेऽपि सन्दर्भशुद्धये एषामुपन्यासः । शरादिराकृतिगणः । **इको वहे** । वहेः पचाद्यच् । उपसर्गात् घञोऽसम्भवेनतदन्त-

बहुलं दीर्घः स्याद्घञन्ते परे नतु मनुष्ये । परीपाकः । परिपाकः । अमनुष्ये किम् ? । निषादः । इकः काशे ।६।३।१२३। इगन्तस्योपसर्गस्य दीर्घः स्यात्काशे । वीकाशः । नीकाशः । इकः किम् ? । प्रकाशः । अष्टनः संज्ञायाम् ।६।३।१२५। उत्तरपदे दीर्घः । अष्टापदम् । संज्ञायां किम् ? । अष्टपुत्रः । चितेः कपि ।६।३।१२७। एकचितीकः । द्विचितीकः । नरे संज्ञायाम् ।६।३।१२९। विश्वानरः । मित्रे चर्षौ ।६।३।१३०। विश्वामित्रः । ऋषौ किम् ? । विश्वमित्रो माणवकः । *शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः । श्वादन्त इत्यादि ।

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि** ।८।४।५। एभ्यो वनस्य णत्वं स्यात् । प्रवणम् । कार्ष्यवणम् । इह षात्परत्वाण्णत्वम् । **विभाषौषधिवनस्पतिभ्यः** ।८।४।६। एभ्यो वनस्य णत्वं वा स्यात् । दूर्वावणम् । दूर्वावनम् । शिरीषवणम् । शिरीषवनम् । *द्व्यच्त्र्यच्भ्यामेव । नेह—देवदारुवनम् ।

---

त.] किंशुलुकेति किम् ? । कृष्णगिरिः । रामगिरिः । कृषीवल इति । 'रजःकृष्यासुती'त्यादिना मत्वर्थे वलच् । अमरावतीति । 'मादुपधायाश्चे'ति, 'संज्ञाया'मिति वा मतोर्मस्य वः । घञ्मात्रस्योत्तरपदत्वाऽसंभवादाह-घञन्त इति । निषाद इति । पुलिन्दो मनुष्यजातिः । 'निषीदत्यस्मिन्पाप'मिति निषादः । 'हलश्चे'त्यधिकरणे घञ् । कथं तर्हि दौवारिके प्रतीहारशब्दप्रयोग इति चेत् ? । अत्राहुः—प्रतीहारो द्वारम् । तास्थ्यात्ताच्छब्द्यमिति । एकचितीक इति । 'शेषाद्विभाषे'ति कप् । 'दंष्ट्रे'ति वार्तिके दीर्घान्तः पठ्यते । केचित्तु ह्रस्वान्तं पठित्वा 'श्वादंष्ट्रः' इति बहुव्रीहौ दीर्घमाहुः, न तु तत्पुरुषे । इह षादिति । 'कार्श्य' इति तालव्यपाठस्त्वनार्ष इति भावः । वनस्पतिभ्यो वनस्य णत्वमुदाहरति—शिरीषवणमिति । ननु 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पति'रित्यमरकोशाद्यस्य पुष्पं विनैव फलप्रादुर्भावः स वनस्पतिः, स चोदुम्बरादिः । शिरीषस्तु न तथा, तस्य पुष्पफलोभयसत्त्वादतो णत्वमिह कथमिति चेत् ? । अत्राहुः-वनस्पतिशब्देनात्र वृक्षमात्रमुपलक्ष्यते । अत्र च 'लुपि युक्तव'दिति सूत्रस्थं भाष्यं लिङ्गम् । तत्र हि व्यक्तिवचने किम् ? । शिरीषाणामदूरभवो ग्रामः शिरीषाः, तेषां वनं शिरीषवणमित्यत्र णत्वे कर्तव्ये वनस्पतित्वमप्यतिदिश्येतेत्युक्तम् । तच्च शिरीषाणां वनस्पतित्वे सङ्गच्छते नान्यथेति दिक् ।

---

बा.] उपधावृद्धिः । 'चजोः कु घिण्ण्यतो'रिति कुत्वम् । निषाद इति । पुलिन्दो नाम मनुष्यजातिविशेषः । निषीदत्यस्मिन् पापमिति निषादः । 'हलश्चे'त्यधिकरणे घञ् । दौवारिके प्रतीहारशब्दे दीर्घस्त्वप्रामाणिकः । यद्वा प्रतीहारो द्वारम्, तत्स्थत्वान्मनुष्ये गौणः । इकः काशे । नीकाश इति । पचाद्यजन्तत्वात्पूर्वेण न प्राप्तिः । अष्टनः संज्ञायाम् । शेषपूरणेन सूत्रं व्याचष्टे—उत्तरपदे दीर्घ इति । अष्टापदमिति । संज्ञात्वमनेनेपर्णीयम् । चितेः कपि । 'दीर्घ' इति शेषः । एकचितीक इति । 'अग्न्याधानस्थण्डिलविशेष' इति शेषः । एका चितिर्यस्येति विग्रहः । शैषिकः कप् । द्विचितीक इति । द्वे चिती यस्येति विग्रहः । नरे संज्ञायाम् । 'विश्वस्य दीर्घ' इति शेषः । 'विश्वस्य वसुराटो'रिति पूर्वसूत्राद्विश्वस्येत्यनुवर्तते । मित्रे चर्षौ । मित्रशब्दे परे विश्वस्य दीर्घः स्यादृषौ वाच्ये इत्यर्थः । शुनो दन्तेति । श्वन्शब्दस्य दन्तादिषु परतो दीर्घ इत्यर्थः । श्वादन्त इति । शुनो दन्त इति विग्रहः । श्वादंष्ट्रा । षष्ठीसमासः । दीर्घान्त एव दंष्ट्राशब्दो वार्तिके पठ्यत इति केचित् । ह्रस्वान्त इत्यन्ये । श्वादंष्ट्रः । बहुव्रीहिरयम् । श्वाकर्णः, श्वाकुन्दः, श्वावराहः, श्वापुच्छं, श्वापदः । 'श्वपुच्छमवनामित'मित्यप्याहुः ।

प्रनिरन्तः । एभ्य इति । प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर, पीयूक्षा-इत्येतेभ्य इत्यर्थः । वनस्येति । 'वनं पुरगे'त्यतस्तदनुवृत्तेरिति भावः । प्रवणमिति । प्रकृष्टं वनमिति विग्रहः । प्रादिसमासः । इहेति । 'कार्ष्यवण'मित्यत्र षकारात्परत्वेन णत्वं, नतु रेफात् परत्वमादाय, अडादिभिन्नषकारेण व्यवधानादिति भावः । एतेन कार्श्येति तालव्यशकारमध्यपाठोऽप्रामाणिक इति सूचितम् । तथा सति निमित्ताऽभावाण्णत्वाऽसंभवात्, अटकुप्वाङ्भिन्नेन शकारेण व्यवहिततया रेफस्य तन्निमित्तत्वाऽसंभवात् । निर्वणम्, अन्तर्वणं, शरवणम्, इक्षुवणम्, प्लक्षवणम्, आम्रवणं, कार्ष्यवणं, खदिरवणं, पीयूक्षावणम् । विभाषौषधि । वनस्य णत्वमिति । ओषधिवनस्पतिभ्यः परस्य वनस्य यो नकारस्तस्य णत्वं वेत्यर्थः । ओषधिभ्यः उदाहरति—दूर्वावणमिति । 'ओषध्यः फलपाकान्ताः' इत्यमरः । अथ वनस्पतिभ्य उदाहरति—शिरीषवणमिति । यद्यपि यः पुष्पैर्विना फलति स एव

---

शे.] विधिरित्याह—घञन्त इति । 'इकः काशे' इति पचाद्यजन्तार्थम् । 'अन्येषामपि' इति सूत्रस्थमित्युक्तेऽत्र प्रवक्ष्यति—शुनो दन्तेति । तत्प्रपञ्चत्वादेव श्वपुच्छमित्याद्यपि । यथादृश्यते तथा साध्विति तदर्थः । श्वा च वराहश्च श्ववराहं, 'येषाञ्च विरोधः' इत्येकत्वम् । प्रनिरन्तः । सञ्ज्ञायां 'वनं पुरगा' इति नियमादप्राप्तेऽसञ्ज्ञायां 'पूर्वपदात्सञ्ज्ञाया'मित्युक्तेऽप्राप्ते वचनं, शरादीनामोषधिवनस्पत्यन्यतरत्वात्तद्द्वारेण विकल्पे प्राप्ते वचनम् । असञ्ज्ञायामपीति । अस्य-बलः सञ्ज्ञायामिति नानुवर्तते इति तात्पर्यम् । विभाषौ । ओषध्यः—फलपाकान्ताः । वनस्पतिरत्र वृक्षमात्रम्, व्याख्यानात् । वनितं चेदं इति

* इरिकादिभ्यः प्रतिषेधो वक्तव्यः । इरिकावनम् । मिरिकावनम् । **वाहनमाहितात्** ।८।४।८। आरोप्य यदुह्यते तद्वाचिस्थान्निमित्तात्परस्य वाहननकारस्य णत्वं स्यात् । इक्षुवाहणम् । आहितात्किम् ? । इन्द्रवाहनम् । इन्द्रस्वामिकं वाहनमित्यर्थः । वहतेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात् । **पानं देशे** ।८।४।९। पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्य णत्वं स्याद्देशे गम्ये । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । पीयते इति पानम् । कर्मणि ल्युट् । **वा भावकरणयोः** ।८।४।१०। पानस्येत्येव । क्षीरपाणम् । क्षीरपानम् । * **गिरिनद्यादीनां वा** । गिरिणदी । गिरिनदी । चक्रणितम्बा । चक्रनितम्बा । **प्रातिपदिकान्तनुम्विभक्तिषु च** ।८।४।११। पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा स्यात् । प्रातिपदिकान्ते,—माषवापिणौ । नुमि,—व्रीहिवापाणि । विभक्तौ-माषवापेण । पक्षे माषवापिनावित्यादि ।

त.] **द्व्यच्त्र्यज्भ्यामेवेति** । व्यवस्थितविभाषाश्रयणादिति भावः । ओषधित्वात्प्राप्ते प्रतिषेधमाह-**इरिकादिभ्य इति** । एतदपि व्यवस्थितविभाषाज्ञानादेव सिद्धम् । **उशीनरा इति** । इह उशीनरशब्दस्तद्देशवासिषु भाक्तः । **कर्मणि ल्युडिति** । 'कृत्यल्युटो बहुल'मित्यनेन । **वा भाव** । आदेशार्थं आरम्भ इत्यप्राप्तविभाषा । **क्षीरपाणमिति** । पीतिः—पानं । 'ल्युट् चे'ति नपुंसके भावे ल्युट् । पीयते अनेनेति पानं । करणे ल्युट् । क्षीरस्य पानं क्षीरपाणम् । **गिरिनद्यादीनां वेति** । 'वक्तव्य'मिति शेषः । संज्ञायां प्राप्ते, असंज्ञायामप्राप्ते उभयत्र विभाषेत्याहुः । **माषवापिणाविति** । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । **व्रीहिवापाणीति** । कर्मण्यण् । **उत्तरपदं यदिति** । द्व्या-

बा.] उदुम्बरादिर्वनस्पतिः, 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पति'रित्युक्तेः । शिरीषवृक्षश्चायं पुष्पफलवानेव न वनस्पतिस्तथापि वनस्पतिशब्देनाऽत्र वृक्षसामान्यं विवक्षितम् । अत एव 'लुपि युक्तवद्व्यक्तिवचने' इति सूत्रे भाष्ये 'शिरीषवण'मित्यत्र शिरीषे वनस्पतित्वं व्यवहृतमिति दिक् । **द्व्यच्त्र्यज्भ्यामेवेति** । 'परस्य वनस्य णत्वं वाच्य'मिति शेषः । **देवदारुवनमिति** । प्रत्युदाहरणम् । **इरिकादिभ्य इति** । एभ्यः परस्य वनस्य णत्वप्रतिषेध इत्यर्थः । **वाहनमाहितात्** । वाहने आधीयते वहनाय यत्, नतु स्वयमेवारोढुं शक्नोति तदाहितम् । तदाह—**आरोप्येति** । **निमित्तादिति** । रेफषकारान्यतरस्मादित्यर्थः । **वाहननकारस्येति** । वाहनस्य यो नकारस्तस्येत्यर्थः । अनेन सूत्रे वाहनमिति षष्ठ्यर्थे प्रथमेति सूचितम् । **इक्षुवाहणमिति** । 'इक्षवो हि वहनाय परैरारोप्यन्ते, नतु स्वयमेवारोढुं शक्नुवन्ती'ति तेषामाहितत्वं बोध्यम् । आरोपितेक्षुयुक्तं शकटादिवाहनमिति यावत् । **इन्द्रवाहनमिति** । ऐरावतादाविन्द्रस्य स्वयमेवारोहणान्नाहितत्वमिति भावः । यदि कदाचिदन्येन वाहने आरोप्यते तदा आहितत्वमिन्द्रस्याप्यस्त्येव । यदा इन्द्रः स्वयमेवारोहति वाहनं, तदा प्रत्युदाहरणमिति मनसि निधायाह—**इन्द्रस्वामिकमिति** । ननु वहेः करणे ल्युटि कथमुपधादीर्घः, ञ्णित्प्रत्ययपरकत्वाऽभावादित्यत आह—**वहेर्ल्युटीति** । **पानं देशे** । 'पान'मिति षष्ठ्यर्थे प्रथमेत्यभिप्रेत्याह—**पानस्येति** । **उशीनरा इति** । देशविशेषे बहुवचनान्तोऽयम् । ननु पानशब्दस्य भावल्युडन्तत्वे क्षीरम्पानमिति कथं सामानाधिकरण्यमित्यत आह—**पीयते इति** ।

**वा भावकरणयोः** । **इत्येवेति** । अनुवर्तत एवेत्यर्थः । भावे करणे च यः पानशब्दस्तस्य उक्तविषये णो वा स्यादित्यर्थः । आदेशार्थं वचनम् । **क्षीरपानं क्षीरपाणमिति** । क्षीरस्य पानमिति विग्रहः । भावे करणे वा ल्युट् । पानक्रिया, पानपात्रं वेत्यर्थः । **गिरिनद्यादीनामिति** । पूर्वपदस्थान्निमित्तात्परस्य उत्तरपदस्थस्य नस्य णो वेत्युपसङ्ख्यानमित्यर्थः । गिरेर्नदीति विग्रहः । **चक्रनितम्बेति** । चक्रमिव नितम्बो यस्याः सा इति विग्रहः । **प्रातिपदिकान्त** । **पूर्वपदस्थादिति** । 'पूर्वपदात्संज्ञाया'मित्यतस्तदनुवृत्तेरिति भावः । **एषु स्थितस्येति** । प्रातिपदिकान्ते नुमि विभक्तौ च विद्यमानस्येत्यर्थः । **वा स्यादिति** । 'वा भावकरणयो'रित्यतस्तदनुवृत्तेरिति भावः । **प्रातिपदिकान्ते इति** । 'उदाहरणं वक्ष्यते'इति शेषः । **माषवापिणाविति** । माषान् वपते इति विग्रहः । 'बहुलमाभीक्ष्ण्ये' इति जातावपि सुप्युपपदे णिनिः । उपपदसमासः । वापिन्शब्दस्य कृदन्तत्वेन प्रातिपदिकत्वात्तदन्तनस्य णत्वमिति भावः । **नुमीति** । 'उदाह्रियते' इति शेषः । **व्रीहिवापाणीति** । 'कृषीवलकुलानी'ति शेषः ।

शे.] युक्तवद्' इति सूत्रे भाष्ये । **आरोप्येति** । अनेन वाह्यस्याऽचेतनत्वं, तत्तुल्यत्वं वा बोधितम् । **उह्यत इति** । सूत्रे भूतकालोऽविवक्षितः । तेन वाह्यं यदानारोपितं सन्निहितमात्रं तदापि भवतीति भावः । तदुक्तं भाष्ये-'आहितोपस्थितयोरिति वक्तव्यम्' इति, तथा 'वाहनं वाह्यादिति वक्तव्यं, यदा हि गर्गाणां वाहनम् अपविद्धं तिष्ठति तदा मा भूत्—गर्गवाहनम्' इति । 'यदा गर्गा वाह्यत्वेन विवक्षिता भवन्ति तदा णत्वं भवत्येव' इति कैयटः । **कर्मणि ल्युडिति** । बाहुलकादिति भावः । देशे किम् ? । दाक्षीणां पानं—दाक्षिपानम् । देश इत्यस्य देशवासिष्वित्यर्थः । **क्षीरपानमिति** । नपुंसके भावे, करणे वा ल्युट् । सर्पिष्पानमित्यादौ तु न, 'पदव्यवायेऽपि' इति निषेधात् । तस्य हि पदे परतोऽन्तो यः षकारस्ततः परस्य नस्य णो नेत्यर्थः,

*उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वम् । नेह—गर्गाणां भगिनी गर्गभगिनी । अतएव नुम्ग्रहणं कृतम् । अङ्गस्य नुम्विधानात्तद्भक्तो हि नुम् नतूत्तरपदस्य । किंच–प्रहिण्वन्नित्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम् । प्रेन्वनमित्यादौ तु क्षुभ्नादित्वान्न । * युवादेर्न । रम्ययूना । परिपक्वानि । 'एकाजुत्तरपदे णः' । नित्यमित्युक्तम् । वृत्रहणौ । हरिं मानयतीति हरिमाणी । नुमि,–क्षीरपाणि । विभक्तौ,–क्षीरपेण ।

---

त.] नुरोधेन तथा व्याख्यायत इति भावः । **गर्गभगिनीति** । इह भगिनीशब्द उत्तरपदं, न तु भगिन्शब्दः । अत्र च व्याख्याने नुम्ग्रहणमेव ज्ञापकमिति प्राचां मतमाह–**अतएवेति** । तदुक्तं ज्ञापकं विघटयति–**किंचेति** ।

**परिपक्वानीति** । 'कुमति चे'ति नित्यं णत्वं प्राप्तम् । **एकाजुत्तर** । प्राग्व्याख्यातमपि प्रकरणानुरोधेन स्मार्यते । **वृत्रहणाविति** । वृत्रं हतवन्तौ । 'ब्रह्मभ्रूणे'ति क्विप् । **हरिमाणीति** । मनेर्ण्यन्तात् 'क्विप् चे'ति क्विप् । 'गतिकारकोपपदाना'मित्यादिना सुबुत्पत्तेः प्राक्समासान्नकारान्तमुत्तरपदम् । नान्तत्वान्ङीप् । **क्षीरपा-**

---

**बा.]** व्रीहीन्वपन्ती'ति विग्रहः । कर्मण्यण् । व्रीहिवापशब्दान्नपुंसकात् 'जश्शसोश्शिः' 'नपुंसकस्य झलचः' इति नुमि 'सर्वनामस्थाने चे'ति दीर्घः । नुमो नस्य णत्वमिति भावः । **विभक्ताविति** । 'उदाह्रियते' इति शेषः । **माषवापेणेति** । तृतीयाविभक्तिस्थत्वान्नस्य णत्वम् । **इत्यादीति** । णत्वाऽभावपक्षे माषवापिनौ, माषवापानि, माषवापेनेत्युदाहार्यमिति भावः । ननु गर्गाणां भगिनी गर्गभगिनीत्यत्र ङीप्प्रत्ययप्रकृतिभूतभगिन्शब्दात्मकप्रातिपदिकान्तत्वान्नकारस्य णत्वविकल्पः कुतो न स्यादित्यत आह—**उत्तरपदं यत्प्रातिपदिकं तदन्तस्यैव णत्वमिति** । पूर्वपदेन उत्तरपदमाक्षिप्तम् । तच्च प्रातिपदिकस्यैव विशेषणं, नतु तदन्तस्य, नापि नुम्विभक्त्योः, असंभवादिति भावः ।

**नेहेति** । गर्गाणां भगिनी गर्गभगिनीति षष्ठीसमासे भगिनीशब्द उत्तरपदं, नतु तत्प्रातिपदिकं, प्रत्ययान्तत्वात् । लिङ्गविशिष्टपरिभाषया प्रातिपदिकग्रहणेन भगिनीशब्दस्य ग्रहणेऽपि तदन्तमीकार एव, नतु नकारः, अतो न तस्येदं पाक्षिकं णत्वमिति भावः । प्रातिपदिकस्योत्तरपदत्वविशेषणं सूत्रकारस्य संमतमित्याह—**अत एवेति** । प्रातिपदिकस्य उत्तरपदत्वविशेषणादेव, सूत्रकारेण कृतं नुम्ग्रहणमर्थवत् , अन्यथा तदनर्थकमित्यर्थः । कुत इत्यत आह—**अङ्गस्येति** । 'नपुंसकस्य झलचः' इति नुम्विधावङ्गस्येत्यनुवृत्तम् । तथाच झलन्तस्याऽजन्तस्य चाऽङ्गस्य क्लीबस्य नुम् स्यात्सर्वनामस्थाने इत्यर्थो लभ्यते । 'माषवापाणी'त्यत्र तु सर्वनामस्थानं प्रति माषवापशब्दोऽङ्गम् । तस्य माषवापशब्दस्य विहितो नुमागमस्तदवयव एव भवति, नतु उत्तरपदभूतवापशब्दस्यैवाऽवयवः । तथाच उत्तरपदभूतप्रातिपदिकान्तत्वाऽभावात् 'प्रातिपदिकान्ते'त्यनेन णत्वविकल्पस्याऽप्राप्तौ नुम्ग्रहणम् । प्रातिपदिकस्य उत्तरपदत्वविशेषणाऽभावे तु माषवापशब्दान्तावयवस्य नुमो माषवापेति प्रातिपदिकान्तावयवत्वस्य सत्त्वात् 'प्रातिपदिकान्ते'त्येव सिद्धे नुम्ग्रहणं व्यर्थं स्यादित्यर्थः । तदेवं प्रातिपदिकस्य उत्तरपदत्वविशेषणे नुम्ग्रहणं लिङ्गमिति स्थितम् ।

वस्तुतस्तु नेदं लिङ्गमित्याह–**किञ्चेति** । **किञ्चेति** विशेषप्रदर्शने । 'हिवि प्रीणने' भ्वादिः, इदित्त्वात् नुम् , लटः शत्रादेशः । 'माषवापाणी'त्यत्र नुमो नस्य प्रातिपदिकान्तत्वेपि प्रहिण्वन्शब्दे नुमो नस्य प्रातिपदिकान्तत्वाऽभावात् 'प्रातिदिकान्ते'त्यनेन णत्वविकल्पस्याऽप्राप्तेस्तदर्थं नुम्ग्रहणमावश्यकम् । अत उत्तरपदत्वस्य प्रातिपदिकविशेषणत्वे कथं नुम्ग्रहणं लिङ्गं स्यात् । तस्मादुत्तरपदविशेषणे भाष्यमेव शरणमिति भावः । ननु माषवापिणावित्यत्र 'वापिन्नि'ति प्रातिपदिकस्य कथमुत्तरपदत्वं, 'गतिकारकोपपदानां कृद्भिः सह समासवचन'मिति सुबुत्पत्तेः प्रागेव समासप्रवृत्तेरिति चेत् , न, उत्तरपदशब्दस्य समासचरमावयवे रूढत्वादित्यलम् । ननु 'इवि व्याप्तौ' इदित्त्वान्नुम् । ल्युटि अनादेशः । प्रकृष्टमिन्वनमिति प्रादिसमासे नुमो नकारस्य णत्वविकल्पः स्यादित्यत आह—**प्रेन्वनमिति** । **युवादेर्नेति** । 'उक्तणत्वविकल्प' इति शेषः । वार्तिकमिदम् । **रम्ययूनेति** । रम्यश्चासौ युवा चेति विग्रहः । प्रातिपदिकान्तनकार-

---

**शे.]** अन्तग्रहणसामर्थ्यात् । तेन सुसर्पिष्केणेत्यादौ णत्वं भवत्येव । सर्पिष्पानमित्यादौ सुबुत्पत्त्यनन्तरमेव समासः । अत एव निष्पानमिति तदुदाहरणं **भाष्ये** सङ्गच्छते । पदपदं पदत्वयोग्यपरं वा । **व्रीहिवापाणीति** । कर्मण्यण्, घञन्तेन बहुव्रीहिर्वा । जसः शिः,अदन्तत्वान्नुम् । **अत एवेति** । पूर्वपदाक्षिप्तेनोत्तरपदेन प्रातिपदिकस्य विशेषणादेवेत्यर्थः । उत्तरपदशब्दस्य समासचरमावयवे रूढत्वान्माषवापिणावित्यादावुत्तरस्य पदत्वं नेति न शङ्क्यम् । ज्ञापकं शिथिलमित्याह—**किञ्चेति** । पूर्वपदाक्षिप्तसमासप्रातिपदिकान्तस्येति व्याख्याय नुम्ग्रहणं **भाष्ये** न प्रत्याख्यातमिति तत्र णत्वस्येष्टत्वानुमानादिति भावः । **भाष्ये** समासरूपप्रातिपदिकान्तस्येत्यर्थकरणादङ्गस्येत्यादितदुपपादनग्रन्थोऽपि चिन्त्य एवेति **परे** । **णत्वार्थमपीति** । णत्वार्थमेवेत्यर्थः । **प्रेन्वनमित्यादौ त्विति** । प्रत्ययसंबन्धिनस्यैव धातुमध्यवर्तिनुमोऽपि नस्येत्यर्थः । एवं समुदाया एव तत्र पाठ्या इति द्वयोरपि नयोर्णत्वाऽभावसिद्धिरिति 'नुम्व्यवायेऽनुस्वाराऽभावे णत्वप्रतिषेधो वक्तव्यः' इति न कार्यमिति भावः । **युवादेर्नेति** । समस्ताः शब्दा युवादिषु, असमस्ताः शब्दाः क्षुभ्नादिष्विति भावः । अत एव युवादेर्नेति 'प्रातिपदिकान्ते'ति सूत्रे **भाष्ये** पठितम् । उभय-

रम्यविणा । **कुमति च** ।८।४।१३। कवर्गवत्युत्तरपदे प्राग्वत् । हरिकामिणौ । हरिकामाणि । हरिकामेण । **पदव्यवायेऽपि** ।८।४।३८। पदेन व्यवधानेऽपि णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन ।

---

त.] **णीति** । पिबतेः कर्मण्युपपदे 'आतोऽनुपसर्गे' इति कः । 'आतो लोप इटि चे'त्यालोपः । **रम्यविणेति** । रम्य-श्चासौ विश्चेति विग्रहः । तत 'आङो नाऽस्त्रियाम्' । नन्वन्तर्वर्तिनीं विभक्तिमाश्रित्य विशब्दस्य पदत्वात् 'पदव्यवायेपी'ति णत्वनिषेधः स्यात् । मैवम् । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधेन विशब्दस्य पदत्वा-ऽभावात् । 'स्वादिषु' इत्यनेन तु रम्यविशब्दस्यैव पदत्वं न तु विशब्दस्य । यस्मात्स्वादिविधिस्तस्यैव पदत्वाभ्यु-पगमात् । एवं च पुनर्भूणामित्यत्र णत्वं निर्बाधमेव, नामि परतो भूशब्दस्य पदत्वाऽभावात् । **कुमति च** । अनेकाजुत्तरपदार्थ आरम्भः । 'कौ' इत्येव तु न सूत्रितम् । 'यस्मिन्विधि'रिति तदादिविधौ कवर्गाद्युत्तरपद एव हरिकामाणीत्यादावयं विधिः स्यान्न तु वक्त्रयुगेणेत्यादौ, तथा च मतुबन्तनिर्देश आवश्यक इत्याह—**कवर्गवतीति** । **पदेन व्यवधान इति** । निमित्तनिमित्तिनोर्मध्ये पदे सति णत्वं नेत्यर्थः । **माषकुम्भवापेनेति** । माषकुम्भं वपतीति 'कर्मण्यण्' । उपपदसमासः । **चतुरङ्गयोगेनेति** । 'चत्वार्यङ्गान्यस्य, तेन योगः' इति मनोरमायां विगृहीतम् । तद्युक्तम् । 'उत्तरपदत्वे चाऽपदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधादङ्गशब्दस्याऽपदत्वात् । तस्मात् 'अङ्गानां योगोऽङ्गयोगश्चतुर्णामङ्गयोगः' इत्येव विग्रहीतव्यम् । न च 'चतुरङ्गेन योगः' इति विग्रहेऽप्यङ्गशब्द

---

बा.] त्वात्प्राप्तिः । **परिपक्वानीति** । इह नुमो नकारस्य 'प्रातिपदिकान्ते'तिविकल्पं बाधित्वा 'कुमति चे'ति नित्यं णत्वं प्राप्तम्, तदिह युवादित्वान्निषिध्यते । **एकाजुत्तरपदे णः** । अजन्तस्त्रीलिङ्गे पुनर्भूशब्दनिरूपणे व्याख्यातमपि प्रकरणानुरोधात्स्मर्यते । **नित्यमित्युक्तमिति** । 'आरम्भसामर्थ्यान्नित्यमिदं णत्व'मिति तत्रैवोक्तमित्यर्थः । **हरि-माणीति** । मनेर्ण्यन्तात् 'क्विप् चे'ति क्विपि 'गतिकारकोपपदाना'मिति सुबुत्पत्तेः प्राक् समासः । नान्तत्वान्ङीप् । अत्र 'मा'निति प्रातिपदिकमुत्तरपदं तदन्तत्वान्नकारस्य णत्वविकल्पे प्राप्ते नित्यं णत्वम् । **नुमीति** । 'उदाह्रियते' इति शेषः । **क्षीरपाणीति** । कर्मण्युपपदे पाधातोः 'आतोऽनुपसर्गे कः' इति कः, 'आतो लोप इटि चे'त्याल्लोपः । क्षीरपशब्दाज्जश्शसोश्शिः । अजन्तलक्षणो नुम् । दीर्घः । तस्य नित्यं णत्वम् । **विभक्ताविति** । 'उदाह्रियते' इति शेषः । **क्षीरपेणेति** । विभक्तिस्थत्वान्न नित्यं णत्वम् । विभक्तावुदाहरणान्तरमाह—**रम्यविणेति** । विः=पक्षी, रम्यश्चासौ विश्च, तेनेति विग्रहः । नचात्र 'पदव्यवायेऽपी'ति निषेधः शङ्क्यः । किमिह प्रत्ययलक्षणेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'सुप्तिङन्त'मिति पदत्वमभिमतम्, उत तृतीयाविभक्तौ परतः 'स्वादिषु' इति पदत्वम् ? । नाद्यः । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात् । न द्वितीयः । 'स्वादिषु' इत्यनेन हि रम्यविशब्दस्यैव पदत्वं लभ्यते, नतु विशब्दस्य, तृतीयाविभक्तेः समुदायादेव विधानात् । अत एव 'पुनर्भूणा'मित्यत्र नामि भूशब्द-मात्रस्य पदत्वाऽभावात् 'पदव्यवायेऽपि' इति निषेधाऽभावाण्णत्वमिति प्राञ्चः । अत्र यद्वक्तव्यं तत् 'पदव्यवायेऽपी'-त्यत्रानुपदमेव वक्ष्यते । **कुमति च** । **प्राग्वदिति** । प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य नित्यं णत्वं स्यादित्यर्थः । अनेकाजुत्तरपदार्थमिदम् । **हरिकामिणाविति** । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । प्रातिपदिकान्तत्वाण्णत्वम् । **हरिकामाणीति** । अजन्तलक्षणनुमो नित्यं णत्वम् । **हरिकामेणेति** । विभक्तिस्थस्योदाहरणम् । **पदव्यवाये-ऽपि** । **पदेन व्यवधाने इति** । 'पदेने'त्यनन्तरं 'निमित्तकार्यिणो'रिति शेषः । **न स्यादिति** । 'न भाभूपूकमि-गमी'त्यस्तदनुवृत्तेरिति भावः । **माषकुम्भवापेनेति** । माषाणां कुम्भो माषकुम्भः, तस्य वाप इति षष्ठीसमासः । अत्र निमित्तकार्यिणोः षकारनकारयोः कुम्भपदेन व्यवधानान्न णत्वम् । **चतुरङ्गयोगेनेति** । चत्वारि अङ्गानि

---

शे.] प्याकृतिगणौ । **वृत्रहणाविति** । वृत्रं हतवन्तावित्यर्थे 'ब्रह्मभ्रूणे'ति क्विप् । वृत्रहणीत्यप्युदाहरणम् । **हरिमाणीति** । मानयतेः क्विपि समासे ङीष् । **क्षीरपेणेति** । पिबतेः कर्मण्युपपदे 'आतोऽनुपसर्गे' इति कः । आतो लोपः । **रम्यविणेति** । रम्यश्चासौ विश्चेति विग्रहे आङो ना । नन्वन्तर्वर्त्तिविभक्त्या विशब्दस्य पदत्वात् 'पदव्यवायेऽपि' इति निषेधः स्यादिति चेन्न, 'अतद्धिते' इति वार्त्तिकैकवाक्यतया णत्वाश्रयातिरिक्ततद्धितभिन्ने परतः पदेन व्यवाये नेत्यर्थेनाऽदोषात् । व्यवधायकपदस्य णत्वाश्रयाति-रिक्ततद्धितभिन्नपरत्वे नेति यावत् । तत्प्रत्याख्याने तु पदे व्यवाय इति सप्तमीसमास इत्यर्थान्न दोषः । अत एव प्रत्याख्यानार-म्भयोः समफलता । **कुमति च** । कादावित्यर्थभिया काविति नोक्तम् । अनेकाजुत्तरपदार्थमिदम् । अत्र कवर्गवदुत्तरवदाक्षिप्त-समासस्य, विभक्त्याक्षिप्तप्रकृतेश्च प्रत्यासत्त्यैकत्वाश्रयणेऽपि चित्रगवीणामित्यादौ णत्वं भवत्येव । लिङ्गविशिष्टपरिभाषया विभक्ति-प्रकृतौ समासत्वात् । णत्वरहितपाठस्तु लेखकप्रमादात् । **पदेनेति** । निमित्तनिमित्तनोर्मध्ये पदेन व्यवधाने इत्यर्थः । पदेनेति किम् ?, चतुर्बहङ्गेण । बहुजयं प्रत्ययः । **माषकुम्भवापेनेति** । न च माषकुम्भस्य वापः, चत्वार्यङ्गानि यस्य, तेन योग इति विग्रहे 'उत्तरपदत्वे च' इति निषेधादङ्गकुम्भयोः पदत्वं दुर्लभमिति वाच्यम् । प्रत्यासत्त्योत्तरपदस्य कार्यित्व एव

*अतद्धित इति वाच्यम् । आर्द्रगोमयेण । शुष्कगोमयेण । कुस्तुम्बुरूणि जातिः ।६।१।१४३। अत्र सुण्निपात्यते । कुस्तुम्बुरुर्धान्याकम् । क्लीबत्वमतन्त्रम् । जातिः किम् ? कुतुम्बुरूणि । कुत्सितानि तिन्दुकीफलात्.]

उत्तरपदं नेति प्रत्ययलक्षणप्रतिषेधो न प्रवर्तत इति शङ्क्यं, तस्य पूर्वसमासस्योत्तरपदत्वात्, 'उत्तरपदत्वे चे'ति प्रतिषेधवचनस्यापि 'उत्तरस्य=समासचरमावयवस्य पदत्वे कर्तव्ये पदादिविधिभिन्ने प्रत्ययलक्षणं न प्रवर्तते' इत्यर्थाभ्युपगमाच्च । 'शाकपार्थिवादीनामुत्तरपदलोपः', 'प्रादिभ्यो धातुजस्ये'त्यादौ तूत्तरपदशब्देन समासचरमावयवमात्रं गृह्यते इति तत्र प्रत्ययलक्षणप्रवृत्त्यभावेऽपि न क्षतिः । इह तु पदत्वलाभाय प्रत्ययलक्षणप्रवृत्तिरपेक्षिता । एवं च 'माषकुम्भवापेने'त्यत्रापि कुम्भस्य वापः=कुम्भवापः । कुम्भशब्दः कुम्भपरिमितधान्ये भाक्तः । 'माषाणां कुम्भवापः' इति विग्रहीतव्यमिति नव्याः । केचित्तु—'अपदादिविधौ' इत्यत्र 'पदान्तविधौ' इत्यर्थं परिकल्प्य 'पदव्यवायेऽपी'त्यस्य पदान्तविधित्वाऽभावाचास्त्यत्र प्रत्ययलक्षणनिषेध इत्याहुः । तदपरे न क्षमन्ते । तथा हि सति लाघवात् 'पदान्तविधौ' इत्येव ब्रूयात्, न तु 'अपदादिविधौ' इति दिक् । [ किंचोत्तरपदत्वे इति वचनस्य पदान्तविधौ कर्तव्ये प्रतिषेध इत्यर्थाभ्युपगमे परमदण्डिनाविति 'ङमो ह्रस्वदचि'ति सूत्रस्थमनोरमाग्रन्थेनैव विरोध इत्यलमियता ] । अतद्धित इति । 'व्यवधायकपदस्य तद्धितश्चेत्परो न भवति, तदा निषेधः' इत्यर्थः । आर्द्रगोमयेणेति । इह गोशब्दः पदम् । 'उत्तरपदत्वे चे'ति निषेधोऽत्र न शङ्क्यः, गोमयशब्दस्योत्तरपदत्वात्, गोशब्दस्य च

वा.] रथगजतुरगपदातिरूपाणि यस्य तत् चतुरङ्गं=सैन्यम्, तेन योग इति विग्रहः । अत्र निमित्तकार्यिणोरङ्गपदेन व्यवधानान्न णत्वम् । उभयत्रापि कुम्भशब्दस्य अङ्गशब्दस्य च प्रत्ययलक्षणेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वं बोध्यम् । 'उत्तरपदे चाऽपदादिविधौ प्रतिषेधः' इति निषेधस्तु नात्र प्रवर्तते, उत्तरखण्डस्य कार्यभाक्त्वे सत्येव तत्प्रवृत्तेः । अत एव 'न हमताङ्गस्ये'त्यत्र परमवाचेत्येव तस्याः परिभाषाया उदाहरणमुक्तं भाष्ये । अत्र हि वाक्छब्दस्य उत्तरपदस्य कुत्वरूपकार्यभाक्त्वमस्तीति तस्य अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाऽभावात्कुत्वं न भवति । अत एव च 'कुमति चे'ति सूत्रे भाष्ये माषाणां कुम्भो माषकुम्भः, माषकुम्भस्य वापो माषकुम्भवापः । तेन माषकुम्भवापेनेत्यत्र 'पदव्यवायेऽपी'ति निषेधप्रवृत्तये 'प्रातिपदिकान्ते'ति णत्वप्रवृत्तिरुपन्यस्ता सङ्गच्छते । नचैवं सति रम्यविणेत्यत्र 'वि' इत्युत्तरखण्डस्य कार्यभाक्त्वाऽभावात् 'उत्तरपदत्वे चाऽपदादिविधौ' इति प्रत्ययलक्षणनिषेधस्याऽप्रवृत्तौ अन्तर्वर्तिविभक्त्याश्रयणेन 'पदव्यवायेऽपी'ति णत्वनिषेधः स्यादिति वाच्यं, पदे परे यत्पदं तेन व्यवाये णत्वं नेत्यर्थस्यैव भाष्यसंमतत्वात् । तच्च अनुपदमेव स्पष्टीभविष्यति । रम्यविणेत्यत्र च विशब्दस्यान्तर्वर्तिविभक्त्या पदत्वेऽपि तस्य पदपरकत्वाऽभावान्न णत्वनिषेधः । एतेन पुनर्भूणामित्यत्रापि णत्वं निर्बाधम् । अतद्धिते इति । अतद्धिते परे यत्पदं तेन व्यवधानेऽयं निषेधो, नतु तद्धितपरकपदेनेत्यर्थः । आर्द्रगोमयेणेति । गोः पुरीषं गोमयं । 'गोश्च पुरीषे' इति गोशब्दात् षष्ठ्यन्तात् मयट् तद्धितः, तद्धितान्तप्रातिपदिकावयवत्वात् सुपो लुक् । आर्द्रं गोमयमिति कर्मधारयः । यद्यपि प्रत्ययलक्षणेन अन्तर्वर्तिनीं विभक्तिमाश्रित्य गोशब्दो मयटि पदन्तथापि तस्य तद्धितपरकतया तेन व्यवधानेऽपि रेफात्परस्य णत्वं भवत्येव, अस्मिन् प्रकरणे अट्कुप्वाङ्नुम्व्यवायस्य अबाधकत्वात् । शुष्कगोमयेणेति । षात्परस्योदाहरणम् । भाष्ये तु 'पदान्तस्ये'ति पूर्वसूत्रात्पदग्रहणानुवृत्तिमभिप्रेत्य पदे परतः पदेन व्यवाये णत्वं नेत्याश्रित्य वार्तिकमिदं प्रत्याख्यातम् । अथ 'सुट् कात्पूर्वः' इत्यतः सुडित्यनुवृत्तौ कतिचित्सूत्राणि व्याख्यातुमुपक्रमते-कुस्तुम्बुरूणि । अत्रेति । जातिविशेषे वाच्ये कुस्तुम्बुरुशब्दः ससुट्को निपात्यत इत्यर्थः । कुस्तुम्बुरुर्धान्याकमिति । गुल्मविशेषे प्रसिद्धः । क्लीबत्वमतन्त्रमिति । अविवक्षितमित्यर्थः । वचनमप्यतन्त्रमिति बोध्यम् । कुतुम्बुरूणीति । धान्याकजातिवाचकत्वाऽभावान्न सुडिति भावः । तदाह—कुत्सितानि तिन्दुकीफलानीत्यर्थ इति । तुम्बुरुशब्दस्य तिन्दुकवाचकत्वे कोशां

शे.] तत्प्रवृत्तेः,अपदादिविधाविति पर्युदासेन पदान्तविधावेव तत्प्रवृत्तेश्च । न चैवमपि माषकुम्भ[illegible] 'गतिकारकोपपदानाम्' इत्यनेन वापादिभ्यः सुबुत्पत्तेः प्रागसमासे तेषां पदत्वं दुर्लभमिति [illegible] णत्वनिषेधाऽसिद्धिरिति वाच्यम् । तस्याऽनित्यत्वेनात्र सुबुत्पत्त्यनन्तरमेव समासेनाऽदोषात् । यत्तु 'कुमति च' इत्यत्र भाष्ये 'माषकुम्भवापेनेत्यत्र षष्ठीतत्पुरुषोत्तरपदषष्ठीतत्पुरुषे कुमति चेति नित्यणत्वेन भवितव्यं, [illegible] विभाषया' इत्युक्तं, तत्प्राप्तिनिरूपणं बोद्धव्यम् । यत्तु पतञ्जल्याद्यर्थं निषेध '[illegible]' [illegible] उदाहरणमिति, तन्न । पदव्यवायेऽपीत्येतच्चैकमपि तस्य 'अतद्धित' इति [illegible] परेः । अतद्धित इति [illegible] ।



सूत्रे [illegible] आह-अतन्त्रमिति । [illegible] ।

णीत्यर्थः । अपरस्पराः क्रियासातत्ये ।६।१।१४४। सुण्निपात्यते । अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्तीत्यर्थः । क्रियेति किम् ?। अपरपरा गच्छन्ति । अपरे च परे च सकृदेव गच्छन्तीत्यर्थः । गोष्पदं सेविताऽसेवितप्रमाणेषु ।६।१।१४५। सुट्, सस्य षत्वं च निपात्यते । गावः पद्यन्तेऽस्मिन्देशे स गोभिः सेवितो गोष्पदः । असेविते,—अगोष्पदान्यरण्यानि । प्रमाणे-गोष्पदमात्रं क्षेत्रम् । सेवितेत्यादि किम् ?। गोः पदं-गोपदम् । आस्पदं प्रतिष्ठायाम् ।६।१।१।१४६। आत्मयापनाय स्थाने सुट् निपात्यते । आस्पदम् । प्रेति किम् ?। आ पदात्-आपदम् । आश्चर्यमनित्ये ।६।१।१४७। अद्भुते सुट् । आश्चर्यं यदि स भुञ्जीत !। अनित्ये किम् ?। आचर्यं कर्म शोभनम् । वर्चस्केऽवस्करः ।६।१।१४८। कुत्सितं वर्चो वर्चस्कम्,—अन्नमलम् । तस्मिन् सुट् । अवकीर्यत इत्यवस्करः । वर्चस्के किम् ?। अवकरः । अपस्करो रथाङ्गम् । ।६।१।१४९। अपकरोऽन्यः । विष्किरः शकुनौ वा ।६।१।१५०। पक्षे विकिरः । 'वावचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो माभू'दिति वृत्तिस्तन्न । भाष्यविरोधात् । प्रतिष्कशश्च कशेः ।६।१।१५२। 'कश गतिशासनयो'रित्यस्य प्रतिपूर्वस्य पचाद्यचि सुट् निपात्यते षत्वं च । सहायः पुरोयायी वा 'प्रतिष्कश' इत्युच्यते । कशे किम् ?। प्रतिगतः कशां प्रतिकशोऽश्वः । यद्यपि कशेरेव

---

त.] 'स्वादिषु' इति पदत्वात् । गोष्पदम् । असेविते गोष्पदशब्दस्य वृत्त्यसंभवान्नञ्पूर्वकमुदाहरति—अगोष्पदानीति । गवां संचारो यत्र नैव संभवति तत्रापि सुडागमार्थमसेवितग्रहणमित्याहुः । आत्मयापनायेति । कालक्षेपाय, शरीरक्षपणाय वेत्यर्थः । आश्चर्यमिति । आङः परस्य चरेः सुट् । 'चरेराङि चाऽगुरौ' इति यत् । विष्किरः । 'कॄ विक्षेपे' इत्यस्मात् 'इगुपधे'त्यादिना कप्रत्यये सुडागमोऽनेन निपात्यते । षत्वं तु 'परिनिविभ्यः' इत्यनेन । विकिरग्रहणमिति । 'विष्किरः शकुनौ विकिरो वा' इति वृत्तिग्रन्थे पाठः, सूत्रपाठे तु विकिरग्रहणं नास्त्येवेति बोध्यम् । तस्यापीति । विकिरशब्दस्यापीत्यर्थः । कशेरेव कशेति । कशधातोरेव कशाशब्दो

---

बा.] मृग्यः । अपरस्पराः । स्पष्टम् । गोष्पदम् । असेविते गोष्पदशब्दस्य वृत्त्यसंभवान्नञ्पूर्वकमुदाहरति—अगोष्पदानीति । गवां सञ्चारो यत्र नैव संभवति तत्रापि सुडिति भावः । गोष्पदमात्रं क्षेत्रमिति । क्षेत्रस्याल्पप्रमाणत्वमनेन ज्ञाप्यते । अतो गोष्पदात् क्षेत्रस्याधिक्येऽपि न क्षतिः । आस्पदं प्रतिष्ठायाम् । आत्मेति । आत्मयापनं=शरीरसंरक्षणं, तदर्थं यत् स्थानं तस्मिन् गम्ये सुडित्यर्थः । आपदादापदमिति । आ पदादिति विग्रहे अव्ययीभावे आपदमिति भवतीत्यर्थः । 'आपदापद'मिति पाठे तु—आपदमित्यस्य आपदित्यर्थ इत्यर्थः । आश्चर्यमनित्ये । अद्भुते गम्ये आङ्पूर्वकस्य चरेः सुट् । 'चरेराङि चाऽगुरौ' इति यत् । अनित्यग्रहणमपनीय अद्भुते इति वक्तव्यमिति वार्तिकमभिप्रेत्याह—अद्भुते सुडिति । तेन आश्चर्यं नीला द्यौः, आश्चर्यमन्तरिक्षे यदबन्धनानि नक्षत्राणि न पतन्तीत्यादिसंग्रहः । अनित्ये इत्यनेन कादाचित्कतया अद्भुतं लक्ष्यत इत्युक्ते तु एतन्न सिध्येत् । वर्चस्केऽवस्करः । 'मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रिया'मित्यमरः ।

अपस्करो । 'स्याद्रथाङ्गमपस्करः' इत्यमरः । 'चक्रं रथाङ्गमि'ति च । विष्किरः । विकिरतीति विकिरः । 'कॄ विक्षेपे' 'इगुपधज्ञे'ति कः । शकुनौ गम्ये सुड्वा, 'परिनिविभ्यः' इति षत्वम् । 'नगौकोवाजिविकिरविविष्करपतत्त्रयः' इत्यमरः । वावचनेनैवेति । वृत्तिग्रन्थे 'विष्किरः शकुनौ विकिरो वे'ति सूत्रपाठः । तत्र वाग्रहणादेव सुड्विकल्पे सिद्धे विकिरग्रहणं विष्किरो विकिर इति शकुनावेवेति नियमार्थम् । अतः शकुनेरन्यत्र उभयोरपि शब्दयोः प्रयोगो नास्तीति लभ्यत इत्यर्थः । भाष्ये हि 'विष्किरः शकुनौ वे'ति सूत्रं पठित्वा वाग्रहणेन सुड्विकल्पः, नतु शकुनेरन्यत्र विकिरशब्दस्य प्रयोगो नेति स्थितम्, अन्यत्रापि 'विकिरं वैश्वदेविक'मित्यत्र दर्शनादिति भावः । प्रतिष्कशश्च कशेः । कशेरिति कश इत्यत्रान्वेति । तथाच कशधातोर्निष्पन्नस्य कशशब्दस्य प्रतेः परस्य सुट्

---

शे.] गोष्पदं से । असेविते सामर्थ्यान्नञ्पूर्वकमुदाहरति—अगोष्पदानीति । असेवित इति बहुव्रीहिः । तेन गवां सञ्चारो यत्र नैव कदाचित्तत्रैव नञ्पूर्वे सुडिति भाष्ये स्पष्टम् । गोष्पदं क्षेत्रमिति । क्षेत्रस्याऽल्पप्रमाणत्वमनेन बोध्यते । तेन गोष्पदात्क्षेत्रस्याऽधिकत्वेऽपि न क्षतिः । आत्मयापनं=शरीररक्षणमित्यर्थः । तत्फलकस्थानलाभः—प्रतिष्ठा । प्रकृते लाभविषयं स्थानं तथा, यथाऽऽस्पदमनेन लब्धम् । शरीररक्षणाय स्थानं लब्धमित्यर्थः । अद्भुते इति । अनित्यत्वेन कादाचित्कतयाऽद्भुतत्वं लक्ष्यते इति भावः । विकिरग्रहणमिति । 'विष्किरः शकुनौ विकिरो वा' इति तन्मते सूत्रपाठः । तस्यापि = विकिरशब्दस्यापि । भाष्येति । तत्र हि 'शकुनौ विकिरो वेति वाच्यम् । विष्किरः शकुनौ वेत्युच्यमाने शकुनौ तत्तुल्यजातीये चान्यत्रार्थे नित्यमेव विष्किरः स्यात्, सिद्धशब्दस्य विकल्पाऽयोगाच्छकुनौ वा अन्यत्र वेत्यधिकरणविकल्पस्यैव प्रतीतेः' इत्युक्त्वा न वक्तव्यम् । न वा वचनेन शकुनिरूपमधिकरणं सम्बध्यते, किन्तु निपातनं विष्किर इत्येतच्छकुनौ

कशा, तथापि कशेरिति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम्। तेन धात्वन्तरोपसर्गान्न। **प्रस्कण्वहरिश्चन्द्रावृषी** ।६।१।१५३। हरिश्चन्द्रग्रहणममन्त्रार्थम्। 'ऋषी' इति किम्?। प्रकण्वो देशः। हरिचन्द्रो माणवकः। **मस्करमस्करिणौ वेणुपरिव्राजकयोः** ।६।१।१५४। मकरशब्दोऽव्युत्पन्नस्तस्य सुडिनिश्च निपात्यते। वेण्विति किम्?। मकरो ग्राहः। मकरी समुद्रः। **कास्तीराऽजस्तुन्दे नगरे** ।६।१।१५५। ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम्। अजस्येव तुन्दमस्येति अजस्तुन्दं नाम नगरम्। नगरे किम्?। कातीरम्। अजतुन्दम्। **कारस्करो वृक्षः** ।६।१।१५६। कारं करोतीति कारस्करो वृक्षः। अन्यत्र-कारकरः। केचित्तु कस्कादिष्विदं पठन्ति न सूत्रेषु। **पारस्करप्रभृतीनि च संज्ञायाम्** ।६।१।१५७। एतानि ससुट्कानि निपात्यन्ते नाम्नि। पारस्करः। किष्किन्धा। (ग) **तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च**। तात्पूर्वं चत्वेन दकारो[ऽपि] बोध्यः। तद्बृहतोर्दकारतकारौ लुप्येते। करपत्योस्तु सुट्। 'चोरदेवतयो'रिति समुदायोपाधिः। तस्करः। बृहस्पतिः। (ग) **प्रायस्य**

त.] निष्पन्न इत्यर्थः। **धात्वन्तरेति**। 'प्रतिकशः' इत्यत्र प्रतिर्गमेरुपसर्गो, न तु कशेः, 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवे'ति न्यायादिति भावः। **अमन्त्रार्थमिति**। मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इत्यनेनैव सिध्यतीति भावः। **मस्कर**। मस्करशब्दादिनिना मत्वर्थीयेनेष्टसिद्धौ मस्करिग्रहणं 'परिव्राजक एवायं प्रयोगो यथा स्या'दित्येवमर्थमित्याहुः। **कातीरमिति**। 'ईषदर्थे' इति कोः कादेशः। **पारस्कर इति**। 'पारं करोती'ति विग्रहः। 'कृञो हेतुताच्छील्ये'ति टः। **किष्किन्धेति**। 'किमपि धत्ते' इति विग्रहे 'आतोऽनुपसर्गे कः'। टाप्। निपातनात्किमो द्वित्वं। पूर्वस्य मलोपः। सुट् षत्वं च। 'किं किं दधाती'ति विग्रहतां तु मते वीप्सायां द्वित्वं सिद्धम्। अन्यत्र तु निपातनादेव। वस्तुतस्तु रूढिशब्दा एते कथंचिद्व्युत्पाद्यन्त इत्यवयवार्थे नाग्रहः कार्यः। **तद्बृहतोरिति**। गणसूत्रमेतत्। **तादिति**। 'तलोपश्चे'त्यत्रे'ति शेषः। **प्रायस्येति**। गणसूत्रमेतदपि। 'प्रायः पापं विजानीया-

बा.] त्स्यादित्यर्थः। **कशेरेवेति**। कशधातोरेव कशाशब्दो निष्पन्न इत्यर्थः। **धात्वन्तरेति**। प्रतिगतः कशां प्रतिकश इत्यत्र गमिं प्रत्येव प्रतिरुपसर्गः, नतु कशिं प्रति, 'यत्क्रियायुक्ताः प्रादयः' इति नियमादित्यर्थः। **प्रस्कण्वहरिश्चन्द्रावृषी**। **अमन्त्रार्थमिति**। मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इति पूर्वसूत्रेणैव सिद्धमिति भावः। तत्सूत्रं वैदिकप्रक्रियायां व्याख्यास्यते। **मस्करमस्करिणौ**। यथासंख्यमन्वयः। मस्करिग्रहणात्परिव्राजक एव मस्करिशब्दः, अन्यत्र तु मकरीत्येवेत्याहुः। **कास्तीराऽजस्तुन्दे**। कास्तीरशब्दोऽजस्तुन्दशब्दश्च नगरे निपात्येते इत्यर्थः। **कारस्करो वृक्षः**। कारं करोतीति विग्रहः। 'कृञो हेतुताच्छील्ये' इति टः।

**पारस्करप्रभृतीनि च**। **पारस्कर इति**। पारं करोतीति विग्रहः। पूर्ववट्टः। **किष्किन्धेति**। किं=किमपि वानरसैन्यं धत्ते इति किष्किन्धा। 'आतोऽनुपसर्गे कः'। टाप्। निपातनात् किमो द्वित्वम्। मलोपः, सुट्, षत्वं च। रूढशब्दा एते कथञ्चिद्व्युत्पाद्यन्ते, एषामवयवार्थो न विचारणीयः। **तद्बृहतोरिति**। पारस्करादिगणसूत्रमेतत्। तच्छब्दे तकारस्याऽन्त्यस्याऽभावादाह—**तात्पूर्वमिति**। **तलोपश्चे**त्यत्र तकारात्पूर्वमित्यर्थः। तत्-चौर्यं- करोतीति विग्रहः। 'कृञो हेतुताच्छील्ये' इति टः। **बृहस्पतिरिति**। बृहती=वाक्, तस्याः पतिरिति विग्रहः। ['कुक्कुट्यादीनामण्डादिष्वि'ति] पुंवत्त्वम्, तलोपः। सुट्। 'वाग्वै बृहती, तस्या एष पतिः' इति

शे.] वा निपात्यते' इत्युक्तम्। एवञ्चाऽन्यत्र विकिरस्येष्टत्वं स्पष्टमेव लभ्यते। दृश्यते च 'विकिरं वैश्वदेविक'मिति प्रयोग इति दिक्। कृधातोः 'इगुपधज्ञाप्रीकिरः' इति केऽनेन सुट्। 'परिनिविभ्यः' इति षत्वम्। **कशेरेव कशेति**। कशधातोरेव कशाशब्द इत्यर्थः। इह च गमेः प्रतिरुपसर्गो न कशेरिति भावः। **अमन्त्रार्थमिति**। मन्त्रे तु 'ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे' इत्येव सिद्धमिति भावः। हरिश्चन्द्रो-राजर्षिः। **सुडिति**। वेणौ। **इनिश्चेति**। परिव्राजके। चात्सुडपि। इदं वृत्त्यनुसारेण। 'अयं नाकरोदयं नाकरोदतो माकृत कर्माणि, शान्त्या काम्यकर्महानिद्वारा सकलकर्मपरिहानिर्युष्माकं श्रेयसी'त्युपदेष्टा = मस्करी, परिव्राजकः। माङुपपदात्कृञ इनिर्माङो ह्रस्वः, सुट् च निपात्यत इति भाष्यकैयटयोः। इदमेव युक्तम्। वृत्तिमते मस्करशब्दादिनौ योगरूढ्या परिव्राजकबोधे सिद्धे मस्करिपरिव्राजकग्रहणवैयर्थ्यापत्तिरिति बोध्यम्। कातीरे-'ईषदर्थे च' इति कोः कादेशः। **कारस्करे** 'दिवाविभे'ति टः। **केचित्त्विति**। अत्राऽरुचिबीजन्तु पारस्करादिषु प्रत्यक्षतो दर्शनं, प्रकरणादिसर्गस्थाने एव तेन सत्वविधानं चेति। **न सूत्रेष्विति**। न गणसूत्रेषु इत्यर्थः। एवञ्च पारस्कराद्यन्तर्गणसूत्रमिदमिति बोध्यम्। **पारं करोतीति**। 'कृञो हेतु'इति टः। पारस्करो देशो नगरश्च। **तद्बृहतोरिति प्रायस्येति** च गणसूत्रे। **करपत्योस्तु सुडिति**। अतो न रुत्वम्। तद्बृहतोः सेत्यादेशे तु तद्दुर्वारम्। **बृहस्पतिरिति**। बृहत्याः पतिरिति 'कुक्कुट्यादीनामण्डादिष्वि'ति पुंवत्त्वम् 'वाग्वै बृहती, तस्या एव पतिः' इति दर्शनात्। तत्प्रत्याख्याने तु बृहतो वाक्समूहस्य पतिरिति विग्रहो बोध्यः। प्रायस्येति निर्देशादकारान्तः पुंल्लिङ्गस्तपो-

**चित्तिचित्तयोः । प्रायश्चित्तिः । प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् । इति समासाश्रयविधयः ।**

## अथ तद्धितेष्वपत्याधिकारप्रकरणम् ।

**समर्थानां प्रथमाद्वा ।४।१।८२।** इदं पदत्रयमधिक्रियते । प्राग्दिश इति यावत् । सामर्थ्यं परिनिष्ठितत्वम् । कृतसन्धिकार्यत्वमिति यावत् । **प्राग्दीव्यतोऽण् ।४।१।८३।** 'तेन दीव्यती'त्यतः प्रागणधिक्रियते ।

---

च्चित्तं तस्य विशोधन'मिति स्मृतिः । **आकृतिगणोऽयमिति** । तेन शतात्पराणि परश्शतानि कार्षाणीत्यादि सिद्धम् । इह 'सुप्सुपे'ति वा, 'पञ्चमी'ति योगविभागाद्वा समासः । राजदन्तादित्वाच्छतशब्दस्य परनिपातः, पारस्करादित्वात्सुट् । **इति समासाश्रयविधयः ।**

अपवादसङ्गत्या तद्धितान्विवक्षुस्तदीयमधिकारसूत्रमाह—**समर्थानामिति** । 'अन्यतरस्याङ्ग्रहणानुवृत्तेः समासोऽपी'ति वक्ष्यमाणमूलग्रन्थेन समासापवादत्वं सूचितम् । विधेयाऽनिर्देशादुत्तरत्र प्रकृतिविशेषाकाङ्क्षासत्त्वाच्च नाऽयं स्वतन्त्रो विधिरित्याह—**अधिक्रियत इति** । 'पदत्रय'मित्यनेन प्रत्येकं स्वरितत्वप्रतिज्ञा सूचिता । तत्प्रयोजनं तु कस्यचिन्निवृत्तावप्यपरस्याऽनिवृत्तिः, तथा च 'प्राग्दिशः' इति सूत्रे 'समर्थानां प्रथमा'दिति निवृत्तं, 'वा' इति त्वनुवर्तत एव'–इति वक्ष्यमाणमूलग्रन्थः सङ्गच्छते । **प्राग्दिश इतीति** । तत उत्तरेषां प्रत्ययानां स्वार्थिकत्वेन 'समर्थानां', 'प्रथमा'दिति पदयोः प्रयोजनं नेति भावः । ननु 'समर्थः पदविधि'रिति परिभाषया गतार्थत्वात् 'समर्थाना'मित्येतद्व्यर्थम् । न च पदविधित्वं नेति शङ्क्यं, 'घकालतनेषु' इत्यलुग्विधानात् 'सुबन्तात्तद्धितोत्पत्ति'रिति सिद्धान्तस्य सकलसंमतत्वादत आह–**सामर्थ्यमिति** । **कृतसन्धिकार्यत्वमिति** । अस्य फलं तु 'तस्यापत्य'मिति सूत्रे मूल एव स्फुटीभविष्यति । इह 'समर्थात्प्रथमाद्वे'ति वक्तुं युक्तम् । महोत्सर्गानाह—**प्राग्दीव्यत इत्यादिना** । सूत्रे 'दीव्य'दित्येकदेशोऽनर्थकोऽप्यवधित्वेनोपात्तः 'प्राग्रीश्वरा'दितिवदित्येके । अन्ये त्वाहुः—'दीव्य'दिति शत्रन्तम् । तेन देवनकर्ता अर्थ एवावधिरिति । **प्राग्दीव्यतीयेष्विति** । दीव्यतः प्राक्प्राग्दीव्यत् ।

---

बा.] च्छन्दोगब्राह्मणम् । **प्रायस्य चित्तिचित्तयोरिति** । गणसूत्रमिदम् । प्रायस्य चित्तिः चित्तं वेति विग्रहः । 'प्रायं पापं विजानीयाच्चित्तं तस्य विशोधन'मिति स्मृतिः । **वनस्पतिरिति** । वनस्य पतिरिति विग्रहः । **आकृतिगणोऽयमिति** । तेन शतात्पराणि परश्शतानीत्यादि सिद्धम् । **इति बालमनोरमायां समासाश्रयविधयः ।**

तदेवं समासप्रपञ्चं निरूप्य तद्धितप्रकरणमारभते—**समर्थानां प्रथमाद्वा** । विधेयस्याऽदर्शनान्नायं स्वतन्त्रविधिरिति मत्वाह—**इदं पदत्रयमधिक्रियत इति** । स्वरितत्वप्रतिज्ञाबलादिति भावः । अधिकारस्योत्तरावधिमाह—**प्राग्दिश इति यावदिति** । 'प्राग्दिशो विभक्ति'रिति सूत्रमुत्तरावधिरित्यर्थः । 'समर्थाना'मिति निर्धारणषष्ठी । प्राथम्यं च 'तस्यापत्य'मित्यादितत्तत्सूत्रेषु प्रथमोच्चारितत्वम् । समर्थानां मध्ये प्रथमोच्चारितादित्यर्थः । 'समर्थात्प्रथमाद्वे'ति सुवचम् । केचित्तु बहुवचनबलादनेकसमर्थसमवाय एवास्य प्रवृत्तिः । एवंच 'प्राग्दिशः' इत्यादिषु स्वार्थिकप्रत्ययविधिषु नाऽस्य प्रवृत्तिरिति लभ्यते इत्याहुः । ननु सुबन्तात्तद्धितोत्पत्तेर्वक्ष्यमाणत्वेन तद्धितविधीनां पदविधितया 'समर्थः पदविधि'रिति परिभाषयैव एकार्थीभावरूपसामर्थ्यलाभादिह समर्थग्रहणं व्यर्थमित्यत आह—**सामर्थ्यं परिनिष्ठितत्वमिति** । समर्थः पटुः शक्त इति पर्यायाः । शक्तत्वं च कार्योत्पादनयोग्यत्वम् । शब्दस्य च कार्यमर्थप्रतिपादनमेव । तच्छक्तत्वं च कृतेष्वेव सन्धिकार्येषु संभवति । तथाच कृतसन्धिकार्यत्वमेव सामर्थ्यमिह पर्यवस्यति । तदाह–**कृतसन्धिकार्यत्वमिति** । **प्राग्दीव्यतोऽण्** । 'तेन दीव्यति खनति जयति जित'मिति सूत्रस्थदीव्यतिशब्दैकदेशस्यानुकरणमिह दीव्यच्छब्दः । तेन च तद्घटितं तत्सूत्रं लक्ष्यते । तदाह—**तेन दीव्यतीत्यतः प्रागिति** । तथाच 'तस्यापत्य'मित्याद्युत्तरसूत्रेषु केवलमर्थनिर्देशपरेषु विधेय-

---

शे.] वाची प्रायशब्दः । 'प्रायो नाम तपः प्रोक्तं, चित्तं निश्चय उच्यते'इति स्मृतेः । 'प्रायः पापम्' इति स्मृत्यन्तरात्पापवाच्यपीति सर्वेष्टसिद्धिः । **इति लघुशब्देन्दुशेखरे समासाश्रयविधयः ।**

अवसरसङ्गत्या तद्धितप्रकरणमारमते–**समर्थानां** । **पदत्रयमिति** । तेन प्रत्येकं पदानां स्वरितत्वात् 'वा' इत्यस्य 'प्राग्दिशः' इत्युत्तरमपि सम्बन्धः । अवधिप्रदर्शनन्तु विशिष्टस्येति बोद्धव्यम् । 'तद्धितानामेकार्थीभाव एव प्रवृत्तिः, समर्थः पदविधि'रित्युक्तेरित्युक्तम् । **समर्थानामिति** । समर्थशब्दः शक्तपर्यायः । शक्तत्वं त्वर्थप्रतिपादकत्वम् । तच्च परिनिष्ठितस्यैव । तदाह—**कृतसन्धीति** । न हि 'सु—उत्थित' इत्यस्य कल्पनयाऽप्यर्थवत्त्वम् । 'समर्थाना'मिति निर्धारणषष्ठी । समर्थानां मध्ये प्रथमादित्यर्थः । तत्तत्सूत्रेषु प्रथमोच्चारितशब्दप्रतिपाद्यत्वञ्च प्रथमत्वम् । एवञ्चाऽनेकसमर्थसंभवे एवाऽस्य संबन्धः । 'शेषे' इत्यत्रापि तत्तत्समर्थविभक्त्यन्तविशिष्टोऽर्थ एव शेष इत्यनेकसमर्थसंभवः । स्वार्थिकेष्वनेकसमर्थाऽसंभवात् 'प्राग्दिशः' इत्युत्तरं नास्य संबन्ध इति बोद्धव्यम् । **प्राग्दीव्यतो** । 'तेन दीव्यती'ति सूत्रपठित [illegible] च्छब्दोऽत्र गृह्यते । तेन च 'एकदेशविकृत-

**अश्वपत्यादिभ्यश्च** ।४।१।८४। एभ्योऽण्स्यात्प्राग्दीव्यतीयेष्वर्थेषु । वक्ष्यमाणस्य ण्यस्यापवादः । **तद्धितेष्वचामादेः** ।७।२।११७। ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् । **किति च** ।७।२।११८। किति तद्धिते च तथा । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् । 'गाणपत्यो मन्त्र' इति तु प्रामादिकमेव । **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ।४।१।८५। दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् ।

त.] 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभाव' इति प्राञ्चः । 'प्राग्दीव्यत'मिति तूचितम् , 'झयः' इति टच्प्रवृत्ते'रिति केचित् । तन्न । 'झयः' इति टचः पाक्षिकत्वात् । अन्यथा 'उपसमिधमुपसमि'दिति तत्सूत्रस्थमूलोदाहरणस्याऽसङ्गत्यापत्तेः । न चाऽत्र टचोऽभावे 'अव्ययानां भमात्रे' इति टिलोपे 'प्राग्दीव्यतीय' इति रूपं न स्यादिति शङ्क्यम् । अव्ययीभावस्याव्ययत्वे प्रयोजनं 'लुङ्मुखस्वरोपचारः' इति परिगणनात् । प्राग्दीव्यति भवः प्राग्दीव्यतीयः । 'वृद्धाच्छः' । त्यप्तु न शङ्कनीय एव, 'अमेहक्वतसित्रेभ्य एव' इति परिगणनात् । 'लुङ्मुखस्वर' इत्यादिपरिगणनया ऽनव्ययत्वाच्च । **वक्ष्यमाणस्येति** । 'पत्युत्तरपदाण्ण्यः' इति वक्ष्यमाणस्य । **तद्धितेष्व** । अचां मध्ये आदिरजेवेति 'अचोऽञ्णिती'ति सूत्रादच इत्यनुवर्तत इत्याशयेन व्याचष्टे–**अच इति** । **वृद्धिः स्यादिति** । 'मृजेर्वृद्धि'रित्यतोऽनुवर्तत इति भावः । **किति च** । 'वाहीकः' इत्याद्यर्थमपीदं सुगमव्याख्यानायात्रैवोपन्यस्तम् । 'अचामादे'रिति निर्दिष्टस्थानिकत्वादिक्परिभाषाऽत्र नोपतिष्ठत इत्याशयेनोदाहरति–**आश्वपतमित्यादि** । **प्रामादिकमेवेति** । एतच्च हरदत्तग्रन्थे स्थितम् । यदि तु देवतार्थकाऽण्णन्ताच्चातुर्वर्ण्यादेराकृतिगणत्वात्ष्यञिति व्याख्यायते तदा निर्दुष्ट एवायं प्रयोगः । अश्वपति गणपति राष्ट्रपति कुलपति गृहपति पशुपति क्षेत्रपतीत्यश्वपत्यादिः । **दित्यदित्या** । पतिशब्दस्योत्तरपदशब्देन बहुव्रीहिं कृत्वा पश्चाद्द्वन्द्वः कार्यो, न तु द्वन्द्वोत्तरं बहुव्रीहिरित्याह–**पत्युत्तरपदाच्चेति** । 'पत्यन्ता'दित्युच्यमाने बह्वच्पूर्वादपि स्यादित्युत्तरपदग्रहणं कृतम् । **दैत्य इति** । ननु दितेर्देवताद्यर्थे ण्यः सावकाशः, 'इतश्चानिञः' इत्यपत्ये ढक् दौलेय इत्यादौ सावकाशः, तथा च दितेरपत्यमित्यत्रोभयप्रसङ्गे परत्वाड्ढक्स्यात् । मैवम् । 'ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्ध'मिति भाष्ये पूर्वविप्रतिषेधाश्रयणात् । अर्थविशेषे इति किम् ? । औडुपतम् । उडुपतिरस्य मन्त्रम् । 'तस्येदम्' 'पत्यन्तपुरोहितादिभ्यो'त्यण् । इह पूर्वविप्रतिषेधेन 'तस्येद'मित्यर्थे ण्यो न भवति, इदमित्यस्य सामान्यार्थत्वात् । कथं तर्हि 'दैतेयः' इति ? । अत्राहुः–'कृदिकारा'दिति ङीषन्तात् 'स्त्रीभ्यो ढक्' । ण्यस्तु न भवति, लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् । न च 'अन्तादिवच्चे'ति पूर्वस्यान्तवद्भावेन स्यादेव ण्य इति भ्रमितव्यम् । दितिशब्दान्ङीषि कृते 'यस्येति चे'ति लोपेन सवर्ण-

बा.] प्रत्ययविशेषाऽसंयुक्तेषु किं भवतीत्याकाङ्क्षायामणित्युपतिष्ठत इति लभ्यते । 'कस्माद्भवती'त्याकाङ्क्षायां 'समर्थात्प्रथमा'दिति प्रकृतिविशेषो लभ्यते । यत्र तु विधेयः प्रत्ययविशेषः श्रूयते तत्राऽणिति नोपतिष्ठते, अणित्यस्यौत्सर्गिकतया वैशेषिकेणेणादिना बाधात् । **अश्वपत्यादिभ्यश्च** । चकारात् 'प्राग्दीव्यतोऽ'णित्यनुकृष्यते । तदाह–**एभ्योऽण् स्यादिति** । दीव्यतः प्राक्–प्राग्दीव्यत् । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । 'झयः' इति टच् तु न, तस्य पाक्षिकत्वात् । प्राग्दीव्यति भवाः–प्राग्दीव्यतीयाः । 'वृद्धाच्छः' । 'अव्ययात्त्यबि'ति तु न, अव्ययीभावस्याव्ययत्वे 'लुङ्मुखस्वरोपचाराः प्रयोजन'मिति परिगणनात् । अत एव 'अव्ययानां भमात्रे टिलोपः' इत्यपि न भवति ।

ननु 'प्राग्दीव्यतोऽ'णित्येव सिद्धे किमर्थमिदं सूत्रमित्यत आह–**वक्ष्यमाणस्येति** । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति वक्ष्यमाणस्य पत्युत्तरपदत्वप्रयुक्तण्यप्रत्ययस्य बाधनार्थमित्यर्थः । **तद्धितेष्वचामादेः** । 'अचो ञ्णिती'त्यनुवर्तते । 'मृजेर्वृद्धि'रित्यतो वृद्धिरिति च । 'अचा'मिति निर्धारणषष्ठी । तदाह–**ञितीति** । **किति च** । **तथेति** । अचामादेरचो वृद्धिरित्यर्थः । इदं सूत्रं प्रकृतानुपयुक्तमपि व्याख्यासौकर्यायेहोपन्यस्तम् । **अपत्यादीति** । आदिना समूहाद्यर्थसङ्ग्रहः । **आश्वपतमिति** । अश्वपतेरणि आदिवृद्धौ 'यस्येति चे'तीकारलोपः । **गाणपतमिति** । अश्वपत्यादिषु गणपतिशब्दः पठित इति भावः । **गाणपत्य इति** । गणपतिर्देवता अस्य मन्त्रस्येति विग्रहः । **प्रामादिकमेवेति** । प्रमादादायातमित्यर्थः । गणपतिक्षेत्रपत्यादीनामश्वपत्यादिगणे पाठस्य वृत्तौ दर्शनादिति भावः । **दित्यदित्यादित्य** । **दित्यादिभ्य इति** । दिति, अदिति, आदित्य–एतेभ्य इत्यर्थः । **पत्युत्तरपदादिति** । पतिरुत्तरपदं यस्य तस्मादिति विग्रहः । **प्राग्दीव्यतीयेष्वर्थेष्विति** । 'प्राग्दीव्यत' इत्यनुवृत्तेरिति

शे.] मनन्यव'दिति न्यायेन दीव्यत्यर्थ उपस्थाप्यत इत्यर्थस्याऽवधित्वम् । अयमेव च निर्देशस्तस्य ज्ञापक इति बोद्धव्यम् । एकश्चाऽवधिमन्तोऽप्यर्था एवेति 'अत इ'ञित्यादौ नाऽस्य सम्बन्ध इति बोद्धव्यम् । **आदेरच इति** । तेन निर्दिष्टस्थानिकत्वादिक्परिभाषाया अप्रवृत्तिरिति बोद्धव्यम् । **प्रामादिकमेवेति** । गणपतिक्षेत्रपत्यादीनामश्वपत्यादिषु पाठादिति भावः । 'क्षेत्रपत्यचरुं निर्वपे'दिति तु च्छान्दसम् । **दित्यदि** । पत्यन्ता दिति [तु] ... तत्समासरूपं प्रातिपदिकं

अणोऽपवादः । दैत्यः । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः । यमाच्चेति काशिकायाम् । याम्यः । ॐ पृथिव्या ञाऽञौ । पार्थिवा । पार्थिवी । ॐदेवाद्यञञौ । दैव्यम् । दैवम् । ॐबहिषष्टिलोपो यञ्च । बाह्यः । ॐईकक्च । बाहीकः । ॐस्थाम्नोऽकारः । अश्वत्थामः । पृषोदरादित्वात्सस्य तः । ॐभवार्थे [तु] लुग्वाच्यः । अश्वत्थामा । ॐ लोम्नोऽपत्येषु बहुषु । [अकारः] । बाह्वादीञोऽपवादः । उडुलोमाः ।

---

त.] दीर्घाऽभावा'दिति । आदित्यशब्दाण्ण्यप्रत्यये 'यस्ये'ति लोपे 'हलो यमा'मिति पाक्षिको यलोपः । न चाल्लोपस्य स्थानिवत्त्वं, यलोपे 'न पदान्ते'ति तन्निषेधात्, 'पूर्वत्रासिद्धे न स्थानिव'दित्युक्तेश्च । काशिकायामिति । भाष्ये तु न दृष्टमिति भावः । अणन्तात्स्वार्थिकेन ष्यञा प्रयोगः सूपपादः । स्त्रियां ङीष्न भवति, षितां ङीषोऽनित्यत्वात् । ञाऽञोः फलभेदज्ञापनाय स्त्रीलिङ्गमुदाहरति—पार्थिवा । पार्थिवीति । बहिष इति । टिलोपवचनम् 'अव्ययानां भमात्रे' इत्यस्याऽनित्यतां ज्ञापयितुम् । तेन 'आरातीय' इति सिद्धम् । अश्वत्थामेति । भाष्योदाहरणात्तदन्तविधिः । न च बलवाचिनः स्थामन्शब्दस्यापत्येन योगाऽसंभवाद्वचनारम्भसामर्थ्यात्तदन्तविधिः स्यादिति वाच्यं, जातार्थे तत्संभवेन सामर्थ्योपक्षयात् । अश्वस्येव स्थाम यस्येति बहुव्रीहिः । उडुलोमा इति । उडूनि

---

बा.] भावः । अणोऽपवाद इति । विशेषविहितत्वादिति भावः । दैत्य इति । दितेरपत्यमिति विग्रहः । दितेर्ण्यप्रत्ययः । 'चुटू' इति णकार इत्, आदिवृद्धिः, 'यस्येति चे'तीकारलोपः । अदितेः, आदित्यस्य वेति । 'अपत्यादी'ति शेषः । आदित्य इति । जातार्थे ण्ये आदिवृद्धौ 'यस्येति चे'ति लोपे 'आदित्य' इति रूपम् । आदित्यशब्दाण्ण्ये आदिवृद्धौ 'यस्येति चे'ति लोपे 'यणो मयः' इति पूर्वयकारस्य द्वित्वे सति 'हलो यमा'मित्याद्ययकारस्य लोपे द्वियकारं रूपम् । द्वित्वाऽभावे लोपे चाऽसति द्वियकारमेव । असति द्वित्वे यकारलोपे च सत्येकयकारं रूपम् । अनपत्यत्वात् 'आपत्यस्य चे'ति यलोपो न । अदितेरपत्ये ण्ये, आदित्यशब्दात्पुनरपत्ये ण्ये 'आपत्यस्य चे'ति यलोपः प्राजापत्य इति । पत्युत्तरपदात् प्रजापतिशब्दाण्ण्ये आदिवृद्धौ 'यस्येति चे'ति लोपः । 'दैतेया' इति त्वसाध्वेव । साधुत्वश्रद्धाजाड्ये तु पृषोदरादित्वात्समाधेयम् । काशिकायामिति । भाष्ये त्विदं न दृश्यत इति भावः । याम्य इति । यमस्यापत्यादीति विग्रहः । पृथिव्या ञाऽञाविति । ञश्च, अञ् च वक्तव्यावित्यर्थः । पार्थिवेति । पृथिव्या अपत्यादीति विग्रहः । ञप्रत्यये 'चुटू' इति ञकार इत्, आदिवृद्धिः, 'यस्येति चे'ति लोपः । स्त्रियामदन्तत्वाट्टाप् । पार्थिवीति । अञि 'टिड्ढाण'ञिति ङीप् । ञप्रत्ययस्यैव विधौ ङीब् न स्यात् । अञ एव विधौ टाब् न स्यात् । तस्मादुभयविधिः । एतत्सूचनाय स्त्रीलिङ्गोदाहरणमिति बोध्यम् । देवादिति । देवशब्दाद्यञ्, अञ् च प्रत्ययौ प्राग्दीव्यतीयेष्वर्थेषु वक्तव्यावित्यर्थः । दैव्यं दैवमिति । 'देवस्यापत्यादी'ति विग्रहः । यञि अञि च आदिवृद्धौ 'यस्येति चे'ति लोपः । बहिष इति । 'बहि'सिति सकारान्तमव्ययम् । तस्मात्प्राग्दीव्यतीयेष्वर्थेषु यञ्, प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः । बाह्य इति । बहिर्भव इत्यादि विग्रहः । यञि टिलोपे आदिवृद्धिः । 'अव्ययानां भमात्रे टिलोप' इत्यस्याऽनित्यत्वज्ञापनार्थमिह टिलोपविधानम् । तेन आराद्भव आरातीय इत्यादि सिध्यति । ईकक्चेति । बहिष ईकक् च स्यात्, प्रकृतेष्टिलोपश्चेति वक्तव्यमित्यर्थः । बाहीक इति । बहिष ईककि टिलोपे 'किति चे'त्यादिवृद्धिः । स्थाम्न इति । स्थामन्शब्दादकारप्रत्ययः प्राग्दीव्यतीयेष्वर्थेषु वाच्य इत्यर्थः । अणोऽपवादः । अश्वत्थाम इति । अश्वस्येव स्थामा=स्थितिर्यस्येति विग्रहः । अश्वत्थाम्नोऽपत्यं, तत्र जात इत्यादिर्विग्रहः । प्रत्ययविधित्वेऽपि भाष्ये उदाहरणात्तदन्तविधिः । अश्वस्थामन्शब्दादकारप्रत्यये 'नस्तद्धिते' इति टिलोपः । अणि तु आदिवृद्धिः स्यात् । ननूदः परत्वाऽभावात्कथमिह सकारस्य थकार इत्यत आह—पृषोदरादित्वादिति । भवार्थे तु लुग्वाच्य इति । 'अकारप्रत्ययस्ये'ति शेषः । लोम्न इति । लोमन्शब्दाद्बहुषु अपत्येषु वाच्येषु अकारप्रत्ययो वक्तव्य इत्यर्थः । बाह्वादीञ इति । बाह्वादित्वप्रयुक्तस्यं इञोऽपवाद इत्यर्थः । उडुलोमा इति । उडूनि नक्षत्राणीव लोमानि यस्य स उडुलोमा, तस्यापत्यमिति विग्रहः । केवलस्य लोम्नोऽपत्ययोगाऽसंभवात्प्रत्ययविधित्वेऽपि

---

शे.] प्रति पतिशब्द उत्तरपदन्तस्यैव ग्रहणान्न दोषः । प्रत्ययविधौ तदन्ताऽग्रहणेन 'परमाऽदिति'शब्दान्न । ण्यादीनां पूर्वविप्रतिषेधेन पराऽणपवादबाधकत्वान्ङीपन्ताभ्यामपि लिङ्गविशिष्टपरिभाषया ण्यस्य प्राप्तेर्दैतेयादितेयावसाधू । न च लिङ्गविशिष्टपरिभाषाऽनित्या, अत्राऽप्रवृत्तौ मानाऽभावात्, दितिवनस्पतिभ्यामपत्यसमूहयोर्ण्यस्यैवेष्टताया भाष्याल्लाभाच्च, तयोः क्तिचि तदन्तान्ङीपि च दृढतरप्रमाणाऽभावाच्च, ङ्याप्सूत्रे भाष्ये लिङ्गविशिष्टपरिभाषादोषेष्वस्याऽनुक्तेश्च, 'दोषाः खल्वपि साकल्येन गणिताः' इति भाष्योक्त्याऽन्यत्राऽनित्यत्वे मानाऽभावाच्च । अकार इति । अश्वत्थाम्नोऽपत्यादीत्यर्थेऽयम् । लुग्वक्ष्यत इति । 'अन्तःपूर्वपदा'दित्यत्र भाष्ये इति भावः । लुग्वाच्य इति क्वचित्पाठः । लोम्न इति । केवललोम्नोऽपत्येन योगाऽभावात्तदन्तविधिः । 'अभिव्यक्तपदार्था ये' इति न्यायेन ... ग्रहणं न । अपत्यार्थस्यापि 'स्थाम्नोऽकारः' इत्यकारानुवृत्त्यनुरोधेन

उडुलोमान् । बहुषु किम् ? । औडुलोमिः । ॐ[सर्वत्र] गोरजादिप्रसङ्गे यत् । गव्यम् । अजादिप्रसङ्गे किम् ? । गोभ्यो हेतुभ्य आगतं गोरूप्यम् । गोमयम् । उत्सादिभ्योऽञ् ।४।१।८६। औत्सः । ॐअग्निकलिभ्यां ढग्वक्तव्यः । अग्नेरपत्यादि आग्नेयम् । कालेयम् । इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।४।१।८७। 'धान्यानां भवने' इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः ।

---

त.] नक्षत्राणीव लोमान्यस्येति विग्रहः । केवलस्यापत्येन योगाऽभावात्तदन्तविधिस्ततोऽकारष्टिलोपः । **गोरिति** । न केवलमपत्य एवायं, किं तु प्राग्दीव्यतीयेषु सर्वेष्वर्थेष्विति ज्ञेयम् । **गव्यमिति** । गवि भवं, गोर्देवता अस्य, गोरिदमित्यादिरर्थः । केचित्तु भाष्ये सर्वत्रग्रहणात्प्राग्दीव्यतीयेभ्योऽन्यस्मिन्नर्थेऽप्ययं यत् । तेन गवा चरति गव्य इत्याद्यपि भवतीत्याहुः । **गोरूप्यमित्यादि** । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' 'मयट् चे'ति रूप्यमयटौ । **उत्सादिभ्योऽञ्** । अणस्तदपवादानामिञादीनां चायमपवादः । इह 'बष्कयाऽसे' इति गणसूत्रम् । असे=असमासे । पूर्वाचार्यसंज्ञेयम् । बष्कयस्यापत्यादि बाष्कयः । असे किम् ? । गौबष्कयिः । 'असे' इति निषेधाल्लिङ्गादिह तदन्तविधिः, तेन धेनुशब्दस्येह पाठादधेनूनां समूह आधेनवमिति सिद्धम् । नन्वेवं धैनुकं गौधेनुकमित्यत्राऽञ्प्रवर्तेत, 'अचित्तहस्तिधेनो'रिति सूत्रे धेनुशब्दग्रहणाद्धैनुकमिति सिद्धावपि गौधेनुकं न सिद्ध्येदिति चेन्न, 'धेनुरनञ् इकमुत्पादयती'ति विशेषवचनस्य भाष्ये स्थितत्वात् । इकं—ठकमित्यर्थः । **अग्निकलिभ्यामिति** । अयं भावः—'साऽस्य देवता' इत्यधिकारे 'अग्नेर्ढ'गिति सूत्रं, 'दृष्टं सामे'त्यधिकारे 'कलेर्ढ'गिति वार्तिकं चापनीय प्राग्दीव्यतीयेष्विदमेव पठनीयम् । तेनाऽग्नेरपत्यम्, अग्निना दृष्टं साम, अग्नेरिदम्, अग्नौ भवम्, अग्नेरागतमाग्नेयमिति सिध्यति । तथा कलेरपत्यमित्याद्यर्थे कालेयमपि सिध्यतीति । एतेन 'यदकालयत् तत्कालेयस्य कालेयत्व'मिति श्रुतावर्थान्तरेऽपि ढको दर्शनात् 'कलेर्ढ'गिति सूत्रमपार्थकमिति मीमांसकोक्तिः परास्ता । वार्तिके सूत्रत्वोक्तिरप्यवैयाकरणमीमांसकप्रतारणार्थेति दिक् । **इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः** ।

**स्त्रीपुंसाभ्याम्** । प्रागित्यनुवर्तते । तदाह—**प्रागर्थेष्विति** । **पौंस्न इति** । इह 'स्वादिषु' इति पदत्वा-

---

बा.] तदन्तविधिः । अकारप्रत्यये सति 'नस्तद्धिते' इति टिलोपः । **औडुलोमिरिति** । उडुलोम्नोऽपत्यमिति विग्रहः । अत्रापत्यबहुत्वाऽभावादकारप्रत्ययो न । किंतु बाह्वादित्वादिञि टिलोप इति भावः । **सर्वत्र गोरिति** । लोम्नोऽपत्येष्विति पूर्ववार्तिकादपत्यग्रहणानुवृत्तिनिवृत्त्यर्थं 'सर्वत्र'ग्रहणम् । अपत्ये तदन्येषु च प्राग्दीव्यतीयेष्वर्थेषु गोशब्दादजादिप्रत्ययप्रसङ्गे सति यत्प्रत्ययो वाच्य इत्यर्थः । **गव्यमिति** । गवि भवं, गोरागतमित्यादि विग्रहः । अणपवादो यत् । **गोरूप्यं गोमयमिति** । 'हेतुमनुष्येभ्योऽन्यतरस्या'मिति रूप्य इत्यर्थः । 'मयड्वैतयो'रिति रूप्यमयटौ । हलादित्वान्नैतयोर्यत्प्रत्ययो बाधक इति भावः । **उत्सादिभ्योऽञ्** । 'प्राग्दीव्यतीयेष्वर्थेष्वि'ति शेषः । अणिञाद्यपवादः । 'दृष्टं सामे'ति सूत्रभाष्ये 'सर्वत्राऽग्निकलिभ्यां ढग्वक्तव्यः' इति वार्तिकं पठितम् । 'दृष्टं सामे'त्यर्थे ततोऽन्येष्वप्यर्थेषु ढग्वक्तव्य इत्यर्थः । 'तत्र सर्वत्रे'ति त्यक्त्वा लाघवात्प्राग्दीव्यतीयेष्वेवेदं वार्तिकं पठति—**अग्निकलिभ्यामिति** । **अपत्यादीति** । अग्निर्देवता अस्य इत्यादिसङ्ग्रहः । **आग्नेयं कालेयमिति** । ढकि एयादेशे कित्त्वादादिवृद्धौ 'यस्येति च' इति लोपः । **इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः** ।

अथाऽपत्याधिकारो निरूप्यते । **स्त्रीपुंसाभ्याम्** । भवनशब्देन 'धान्यानां भवने क्षेत्रे ख'ञिति सूत्रं विवक्षितम् । 'प्राग्दीव्यत' इत्यतः प्रागित्यनुवृत्तम् । तदाह—**धान्यानामिति** । **स्त्रीपुंसाभ्यामिति** । 'अचतुरे'त्यच् । स्त्रीशब्दात्, पुंस्शब्दाच्चेत्यर्थः । **स्त्रैण इति** । स्त्रिया अपत्यं, स्त्रीषु भवः, स्त्रीणां समूह इत्यादिविग्रहः । नञ्, वृद्धिः, णत्वम् । **पौंस्न इति** । पुंसोऽपत्यं, पुंसि भवः, पुंसां समूह इत्यादि विग्रहः । पुंस्शब्दात् स्नञि 'स्वादिषु

---

शे.] साधारणप्रत्ययेषु कथनम् । **इति साधारणाः प्रत्ययाः** ।

**स्त्रीपुंसाभ्याम्** । ननु—प्रकृताऽञ्संनियोगेनाऽकारसहितनगागमोऽस्तु । अकारसाहित्याच्च 'नस्तद्धिते' इति टिलोपो न । एवञ्चाऽञन्तत्वादेव ङीपि सिद्धे 'नञ्स्नञीक'गिति वार्तिके नञ्स्नञ्ग्रहणं न कार्यम् । न च गोत्रस्त्रीविवक्षायां 'जाते'रिति ङीषिष्टः, अञ्पक्षे तु ततः परत्वात् 'शार्ङ्गरवाद्यञः' इति ङीन्प्रसङ्ग इति वाच्यं, 'यञञोश्च' 'सङ्घाङ्कलक्षणेषु' इत्यत्रेव जातिलक्षणेऽपि ऋष्यपत्यस्यैव गोत्रस्य ग्रहणेन ङीप एव तत्राऽपीष्टत्वात् । यत्र त्वन्यत्रापि जातिकार्यमिष्यते तत्र तदारोपेण साध्यम् । अत एव 'स्त्रैणाः' इत्यत्र 'यञञोश्चे'ति लुक् न । स्त्रैणानां सङ्घ इत्यर्थे 'सङ्घाङ्के'त्यण्च न । तादृशस्त्रीविवक्षायामेतत्प्रकृतिकप्रयोगाऽनभिधानाच्चेति चेन्न, विवक्षितान्त्याऽकारविशिष्टागमस्याऽप्रसिद्धेः । नञेव तु न कृतः, पौंस्ने संयोगान्तलोपापत्तेः । न च 'स्त्रियो नञ्स्नञौ पुंसो भस्त्रे'ति कार्यम्, लाघवाऽभावात् । आकडारस्थत्वाऽभावेनाऽनया [भसंज्ञया] पदत्वबाधस्य न्यायेनाऽप्राप्तेश्चेत्यलम् । **द्विगोरिति** । हेतुहेतुमद्भावे षष्ठीत्याह—**द्विगोर्निमित्तमिति** । न चैवं पञ्चकपालीति-

**गोत्रे स्वैकोनसङ्ख्यानां प्रत्ययानां परम्परा । यद्वा स्वद्व्यूनसङ्ख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते ॥ १ ॥**

त.] इवाऽणेव भवति, न त्विञ् । **गार्ग्य इति** । गोत्रापत्ये 'गर्गादिभ्यो य'ञिति विशिष्य विधानादनन्तरापत्य इवात्र 'अत इञ्' न भवति, किं तु यञेव । स च गार्ग्यस्यापत्येऽपि भवति, न त्वत्र यञन्तात्फक्, 'एको गोत्रे' इति नियमात् । **नाडायण इति** । 'नडादिभ्यः फ'गिति गोत्रापत्ये विधानादत्रापि 'अत इञ्' न भवति, किंतु फगेव, स च नाडायनस्यापत्येऽपि भवति, न तु फगन्तादिञ्, उक्तनियमात् । नन्वेकस्मिन्गोत्रे युगपदनेकप्रत्ययाऽप्रसक्तेर्व्यर्थ-

बा.] उपगोर्गोत्रापत्ये 'तस्यापत्य'मित्यण् । **गार्ग्य इति** । गर्गस्य गोत्रापत्ये 'गर्गादिभ्य' इति यञ् । **नाडायन इति** । नडस्य गोत्रापत्ये 'नडादिभ्यः' इति फक् । 'गोत्र एक एव प्रत्ययः स्या'दित्येवोक्तौ त्वनन्तरापत्यप्रत्ययान्तादौपगव-शब्दादिञ्प्रत्ययो न निवार्येत । नियमस्य सजातीयविषयतया गोत्रप्रत्ययान्तादेव गोत्रप्रत्ययो वार्येत । अतोऽपत्य-ग्रहणमित्याहुः । नन्वेकस्मिन्गोत्रे युगपदनेकप्रत्ययाऽप्रसक्तेर्व्यर्थमिदं सूत्रमिति चेत्, मैवम्–अपत्यशब्दो हि पुत्र एव रूढ इत्येक पक्षः । पुत्रादिसाधारण इत्यन्यः पक्ष इति प्रकृतसूत्रभाष्ये स्थितम् । तदेतत् 'अपत्यं पौत्रप्रभृती'ति सूत्रव्याख्यावसरे प्रपञ्चितं चास्माभिः । तत्र प्रथमपक्षे उपगोः पौत्रे अपत्यप्रत्ययेन बुबोधयिषिते सति तस्य उपगु-पुत्रापत्यस्य उपगुं प्रत्यपत्यत्वाऽभावात् 'तस्यापत्य'मित्यण् न सम्भवति । ततश्च उपगुपुत्रे वाच्ये 'तस्यापत्य'-मित्यणा औपगवशब्दे व्युत्पादिते सति, औपगवस्यापत्ये वस्तुतः उपगोस्तृतीये गोत्रे विवक्षिते औपगवशब्दात् 'अत इ'ञिति इञि औपगविरित्यनेनैव उपगोस्तृतीयो बोधनीयः स्यात् । एवञ्च उपगोस्तृतीये विवक्षिते उपगोरण् औप-गवादिञिति प्रकृतिद्वयात्प्रत्ययद्वयमनिष्टं स्यात् । तत्र यद्यपि उपगोरणिष्टः, तथापि उपगोस्तृतीये विवक्षिते अनिष्ट-मिञ्प्रत्ययमणप्रत्ययो घटयतीति सोऽप्यनिष्ट एव । तथाच तन्नानिष्टप्रत्ययद्वयनिवृत्तये एको गोत्रे अपत्यप्रत्ययः स्या-दित्यनपत्येऽपि उपगोस्तृतीये अपत्यप्रत्ययो विधीयते । सच वस्तुतोऽणेव, न त्विञ्, अदन्तत्वाऽभावात् । विहिते च तस्मिन्नौपगवादिञपि निवर्तते, गोत्रे बुबोधयिषिते एकस्यैवापत्यप्रत्ययस्य विधेः । अतः प्रत्ययद्वयमाला निवर्तते । एवमुपगोश्चतुर्थे विवक्षिते तस्य उपगुं तत्पुत्रं च प्रत्यपत्यत्वाऽभावात् पौत्रं प्रत्येवापत्यत्वादौपगविशब्दात् 'यञिञो-श्चे'ति फकि प्रकृतित्रयादनिष्टा 'औपगवायन' इति प्रत्ययत्रयमाला स्यात् । उपगोः पञ्चमे विवक्षिते तु औपगवा-यनशब्दादिञि 'औपगवायनि'रित्येवं प्रकृतिचतुष्टयात्प्रत्ययचतुष्टयमाला स्यात् । षष्ठे तु औपगवायनिशब्दात्फकि 'औपगवायनायन' इत्येवं प्रकृतिपञ्चकात्पञ्च प्रत्ययाः स्युः । तदेवं फगिञोः परम्परायां मूलप्रकृतेरुपगोः शततमे गोत्रे विवक्षिते एकोनशतात्प्रकृतिभ्यः एकोनशतमनिष्टप्रत्ययाः स्युः । अत्र तृतीयप्रभृति कस्मिंश्चिद्गोत्रे विवक्षिते उपगुं प्रत्यनपत्येऽपि तस्मिन् 'एको गोत्रे' इत्यणेव भवति, नतु इञादि । यदा त्वपत्यशब्दः पुत्रपौत्रादिसाधारणस्तदा यद्यपि उपगोरनन्तरापत्ये पुत्रे इव पौत्रादिष्वपि विवक्षितेषु 'तस्यापत्य'मित्यणि औपगव इतीष्टं सिध्यति । तथापि उपगोरनन्तरापत्ये अणि सति औपगवस्यानन्तरापत्ये उपगोस्तृतीये विवक्षिते द्वितीयस्मादेकः प्रत्ययोनिष्टः प्रसज्येत । एवमुपगोश्चतुर्थे विवक्षिते सिद्धेऽपि उपगोरणि औपगवे, तस्मादिञि औपगविः, तस्मात्फकि औपगवायन इत्येवं प्रत्यय-त्रयमपि कदाचित्प्रसज्येत । तत्रापि उपगोर्मूलप्रकृतेरणिष्ट एव । इञ्फकौ तु प्रत्ययावनिष्टौ । तथा उपगोश्चतुर्थे विवक्षिते द्वितीयस्मादेकोऽनिष्टप्रत्ययः, तृतीयस्मादन्य इत्येवं प्रकृतिद्वयादनिष्टौ द्वौ प्रत्ययाविति पर्यवस्यति । एवं

शे.] जीवद्वंश्येन हि वृद्धाधीनेन भाव्यम् । यस्तु वृद्धाननादृत्य स्वातन्त्र्यं कुरुते स एवमुच्यते । एको गोत्रे । [**गोत्रे इति**] । अभिधित्सित इत्यर्थः । **एक एवेति** । सङ्ख्यावाची एकशब्दः, अधिकारलब्धापत्यप्रत्ययश्च विशेष्य इति भावः । अत एवाऽनन्त-रापत्यप्रत्ययान्तान्नापत्यप्रत्ययः । अपत्यग्रहणानुवृत्तिस्तु अनन्तरापत्यप्रत्ययान्ताद्गोत्रप्रत्ययवारणाय । अन्यथा नियमस्य तुल्यजा-तीयतया गोत्रप्रत्ययान्तादेव गोत्रप्रत्ययो वार्येत । उपगोरण्, गर्गादिभ्यो यञ्, नडादिभ्यः फक् । तत्तत्पितृसंबन्ध्येवाऽपत्यम् । 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यन्तोकन्तयोः समे' । इत्यमरात् । **तयोः**= पुत्रदुहित्रोः । अत एव पितामहोत्सङ्गे आसीनं दारकं कश्चित्पृच्छति–'कस्याय'मिति ? । स तत्पितरमेव व्यपदिशति नात्मानं । तदाह—**गोत्रे इति** । उपगोस्तृतीये वाच्ये औपगवादिञि अनिष्टा प्रत्ययपरंपरैव प्राप्नोति न तु कदाचिदप्यौपगव इत्यविशि-ष्टमिष्टं सिध्यति । एवं गर्गस्य तृतीये वाच्ये 'गर्गादिभ्यः' इत्याद्यारम्भसामर्थ्यात् परंपराऽपत्याऽपत्यवत्संबन्धे प्रवृत्त्येष्टसिद्धावपि गर्गादिञि ततः प्रत्ययान्तरे प्रत्यय[द्वय]परंपराऽनिष्टापि प्राप्नोतीति भावः । यद्यप्यनन्तरेऽणादीष्टमेव, तथाप्यनिष्टघटकत्वात् सोऽप्यनिष्टः । **परंपरेत्यस्य** 'प्रसज्यते' इत्यनेनान्वयः । परम्परैवेत्यर्थः । नन्वत्र पक्षे उपगोस्तृतीयेऽण्विध्यर्थत्वमस्य वाच्यं, प्रत्ययमालाव्यावृत्तये नियमार्थत्वञ्चेति गौरवम् । न च गोत्रपदेन गोत्राऽगोत्रसमुदायो लक्षणीयः, एकपदस्य सामर्थ्यात्साव-धारणम्, विधिमात्रार्थत्वे हि तद्व्यर्थमेव, 'गोत्रे' इत्युक्त्यैवौपगवादिभ्योऽणादिविधानेनेष्टसिद्धेः एवञ्च पुत्रे एकः, पौत्रेऽपरः, तदपत्ये चाऽपर इति गोत्राऽगोत्रसमुदाये बहूनां प्राप्तौ एक एवापत्यप्रत्यय इति नियमेनैकाभ्यनुज्ञादारा परमप्रकृतेर्विधिरपि परंपरा-

अपत्यं पितुरेव स्यात्ततः प्राचामपीति च । मतभेदेन तद्धान्यै सूत्रमेतत्तथोत्तरम् ॥ २ ॥

'पितुरेवापत्य'मिति पक्षे हि—उपगोस्तृतीये वाच्ये औपगवादिञ् स्यात् । चतुर्थे त्वजीवज्ज्येष्ठे सुतवंश्ये

---

त.] मिदं सूत्रमित्याशङ्क्य सूत्रारम्भफलं मतभेदेन व्यवस्थापयति—गोत्रे स्वैकोनेति । 'स्वं=गोत्रं, तदपेक्षया एकोनसङ्ख्यानां, तृतीये द्वयोः परम्परा, चतुर्थे त्रयाणां, पञ्चमे तु चतुर्णा'मित्यादिपरम्परा प्रसज्यत इत्यर्थः । तथाहि—उपगोस्तृतीये अणिञोः परम्परा, चतुर्थे त्वणिञ्फकाम्, पञ्चमे त्वणिञ्फगिञाम्, । यद्यप्यत्र 'यस्येति च' इति लोपेनाऽणादेरसत्त्वात् 'अणिञादीनां परम्परे'त्युक्तिर्न सङ्गच्छते, तथापि 'अणन्तादिञुत्पद्यते, इञन्तात्फगि'त्युपत्तिमात्राभिप्रायेण प्रत्ययपरम्पराभिधानं बोध्यम् । स्वद्व्यूनसङ्ख्येभ्य इति । स्वं=गोत्रं, तदपेक्षया द्व्यूनसङ्ख्येभ्यः प्रातिपदिकेभ्यः, तृतीये एकस्मादनिष्टोत्पत्तिः, चतुर्थे द्वाभ्यां, पञ्चमे त्रिभ्यः, इत्यादीत्यर्थः । अपत्यं पितुरेवेति । तथा चामरः—'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे' इति ।

मुख्यमतमाह—ततः प्राचामिति । पित्रपेक्षया ये प्राञ्चः पितामहप्रपितामहादयस्तेषामपीत्यर्थः । अत्रायमाशयः—अपत्यशब्दः क्रियानिमित्तो न त्वात्मजपर्यायः, 'न पतन्त्यनेनेत्यपत्य'मिति व्युत्पत्तेः 'पङ्क्तिविंशती'ति सूत्रे भाष्यकृता दर्शितत्वात्, बाहुलकात्करणे यत्प्रत्ययः । 'यन्निमित्तं यस्यापतनं तत्तस्यापत्य'मिति फलितोऽर्थः । तथा च 'पौत्रादिरपि पितामहादीनामपतनहेतु'रिति तेषामपत्यत्वं भवति । प्रसिद्धं च व्यवहितोऽपि पितामहादीनामुद्धर्तेति जरत्कार्वाद्युपाख्यानेषु । 'अपत्यं पौत्रप्रभृती'ति सूत्रमप्यत्रानुगुणम् । आद्यपक्षे हि 'अपत्यमिवापत्य'मिति गौणी वृत्तिराश्रयणीया स्यात् । अमरस्तु सूत्रभाष्यादिविरोधादुपेक्ष्य इति । तद्धान्यै इति । आद्यपक्षे प्रत्ययमाला-

---

बा.] पञ्चमे प्रकृतित्रयात्त्रयः प्रत्ययाः । षष्ठे प्रकृतिचतुष्टयाच्चत्वारः प्रत्यया इत्येवं मूलाच्छततमे गोत्रे अष्टनवतेरष्टनवतिरनिष्टप्रत्ययाः स्युः । तत्र 'एको गोत्रे' इति नियमविधिः—'गोत्रे एक एव प्रत्ययः स्या'दिति । तत्रापि प्रथमातिक्रमे कारणाऽभावान्मूलप्रकृतेर्यः प्रत्ययः प्राप्तुं योग्यः स एवेति फलति । सूत्रे एकशब्दः प्रथमपर्यायः । 'एके मुख्यान्यकेवलाः' इत्यमरः । मुखे भवो मुख्यः=प्रथमः । 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा' इति कोशान्तरम् । तथाच मूलप्रकृतेरेव गोत्रे विवक्षिते स्वयोग्यप्रत्ययलाभ इति व्याख्यान्तरम् । गोत्रे एकः प्रथम एवशब्दः प्रत्ययोत्पादक इति । तदेतत्सर्वं श्लोकद्वयेन संगृह्णाति—गोत्रे स्वैकोनेति । अत्र प्रथमश्लोकान्ते श्रुतं 'प्रसज्यते' इत्येतत्पदं पूर्वार्धे परम्परेत्यनन्तरमपि संबध्यते । तत्र स्वं=गोत्रं मूलपुरुषोपगवपेक्षया यत्संख्याकं तदपेक्षया एकोनसङ्ख्याकानामनिष्टप्रत्ययानां परम्परैवोक्तरीत्या प्रसज्येत, नतु कदाचिदपि गोत्रे औपगव इत्यणन्तमिष्टं सिध्यतीत्यर्थः ।

यद्वेति । स्वं=गोत्रं, तत् मूलपुरुषोपगवक्षया यत्सङ्ख्याकं तदपेक्षया द्व्यूनसङ्ख्याकप्रकृतिभ्यस्तावतां प्रत्ययानामनिष्टानामुत्पत्तिरुक्तरीत्या प्रसज्यत इत्यर्थः । ननु कथमिदं पक्षद्वयमित्यत आह—अपत्यमित्यादि मतभेदेनेत्यन्तम् । 'पुत्र एवापत्य'मिति पक्षे प्रथमः पक्ष उन्मिषतीति, 'पुत्रपौत्रादि साधारणोऽपत्यशब्द' इति पक्षे तु द्वितीयः

---

शे.] पत्याऽपत्यवत्सम्बन्धे प्रवर्तत इत्यनुमीयत इति वाच्यम्, एकग्रहणसामर्थ्येनैकाभ्यनुज्ञानादिरूपपूर्वोक्तार्थकल्पनापेक्षया पितामहादीनामप्यपत्यमित्येतत्कल्पनस्यैव युक्तत्वात् । अत एव 'अपत्यं पौत्रप्रभृती'ति सूत्रं स्वरसतः सङ्गच्छते । 'दशसु पुरुषेषु यस्य कुले विवाहिता शूद्रा नास्ति स सोमं पिबे'दित्युक्त्या यथा एकस्य पाते सर्वेषां पातस्तथा तद्रहितस्यैकस्य सर्वान्प्रत्यपातहेतुत्वेनापत्यत्वमपि युक्तमिति स्पष्टं भाष्ये । जरत्कार्वाद्युपाख्याने च स्पष्टमेवैकस्य सर्वान्प्रत्यपातहेतुत्वम् । अपतनादपत्यमिति च 'पङ्क्ती'ति सूत्रे भाष्ये स्पष्टम् । 'अपत्यं तोकं तयोः समे' इत्यमरस्य तु तयोः=तद्धटितसन्तानपरंपरयोरित्यर्थं इति नाऽसङ्गतिः । पितामहोत्सङ्गे स्थितस्य दारकस्य विषये 'कस्याय'मिति प्रश्नो जनकविषय एवेति तत्र पितृव्यपदेशेनोत्तरस्य नाऽसङ्गतिरित्यरुचेराह—स्वद्व्यूनेति । स्वं=गोत्रं, तदपेक्षया द्व्यूनसंख्येभ्यः प्रकृतिभूतेभ्योऽनिष्ट प्रत्ययोत्पत्तिरित्यर्थः । उपगोस्तृतीये एकस्मादौपगवादिञनिष्टः प्राप्नोति, चतुर्थे द्वाभ्यामित्यादीति भावः । अनिष्टोपपत्तिः—तन्मात्रं, न, त्विष्टाऽसिद्धिरित्यर्थः । अत्र पक्षे उपगोरणेष्टसिद्धावप्यौपगवादिञो निवृत्तये नियमार्थमेवेदम् । नन्वेवमप्यनन्तरापत्यप्रत्ययान्ताद्गोत्रे प्रत्ययो दुर्वारः । गोत्रे एकस्यैव कृतत्वेन नियमाऽबाधात् ! न च गोत्रपदेनापत्यसमुदायलक्षणया स परमप्रकृतेरेवेति वाच्यम् । 'अपत्य'मित्यनुवृत्त्यैव सिद्धौ गोत्रग्रहणवैयर्थ्यापत्तेरिति चेन्न, भाष्ये प्रत्याख्यातत्वेनेष्टापत्तेः । यद्वा गोत्रे बोधनीये एक एव शब्दः प्रत्ययप्रकृतिर्नानेक इत्यर्थः । यदि च प्रत्ययान्तात्प्रत्ययः स्यान्नैकः प्रत्ययप्रकृतिः स्यादिति । यद्वा एकशब्दः प्रथमवाची । प्रथमः शब्दो गोत्रे प्रत्ययमुत्पादयतीत्यर्थः । प्रथमत्वञ्च सर्वमूलत्वम् । सर्वं चैतद्भाष्ये स्पष्टम् । तद्धान्यै=आद्ये इष्टाऽसिद्धेः, प्रत्ययमालायाश्च निवृत्तये, अन्त्येऽनिष्टमात्रनिवृत्तये । तत्राऽऽद्योऽयुक्त इत्युक्तम् । तृतीये इति । तृतीयत्वं मूलपुरुषापेक्षया । 'यजमानपञ्चमाः' इत्यादौ विजातीयेनाऽपि सङ्ख्यापूरणदर्शनात् । औपगवादिति । तस्मादेवेत्यर्थः । न तूपगोरण्, तृतीयस्य तं प्रत्यपत्यत्वाऽभा-

औपगवेः फक्। इत्थं फगिञोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्ययाः स्युः । 'पितामहादीनामपी'ति मुख्यपक्षे तु-तृतीये वाच्ये उपगोरणा इष्टे सिद्धेऽपि अण्णन्तादिञपि स्यात्। ततश्चतुर्थे फगिति फगिञोः परम्परायां शततमे गोत्रेऽष्टनवतेरनिष्टप्रत्ययाः स्युः। अतो नियमार्थमिदं सूत्रम् । एवमुत्तरसूत्रेऽप्यूह्यम् ।

**गोत्राद्यून्यस्त्रियाम्** ।४।१।९४। यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा । गर्गस्य

---

त.] निवृत्तये, अन्त्ये तु स्वद्वयूनस्त्रयेभ्योऽनिष्टोत्पत्तिनिवृत्तये इत्यर्थः। **औपगवादिञ्स्यादिति**। तृतीयस्य उपगुं प्रति अनपत्यत्वादिति भावः। एवं चाऽसति सूत्रे अस्मिन्पक्षे औपगविरित्यनिष्टमेव स्यात् 'औपगव' इतीष्टं तु न सिध्यतीति बोध्यम्। **अजीवज्ज्येष्ठ इति**। जीवज्ज्येष्ठे जीवद्वंश्ये वा युवसंज्ञायां सत्यां गोत्रसंज्ञा नेति भावः।

**इष्टे सिद्धेऽपीति**। अस्मिन् पक्षे औपगवस्य यदपत्यं तदुपगोरप्यपत्यमिति उपगोरेश्च प्रत्ययः तदा 'औपगवः' इतीष्टं यद्यपि सिध्यति, तथाप्यौपगविरित्यनिष्टं प्राप्नोतीत्यर्थः। **तत इति**। इञन्तादित्यर्थः। **फगिञोरिति**। फगन्तादिञ्, इञन्तात्फक्, तदन्तात्पुनरिञित्यादिपरम्परायां सत्यामित्यर्थः। **नियमार्थमिति**। नन्वाद्यपक्षे तत्तत्पितृवाचकादेव प्रत्ययौ, न तु मूलभूतात्स्यात्, अनन्तरापत्ये मुख्यसंबन्धे चरितार्थस्याऽणादेर्गौणसंबन्धेऽपि प्रवृत्तेरन्याय्यत्वात्। तथा चौपगवापत्येन उपगोर्मुख्यसंबन्धाऽभावादत्राऽप्राप्ते विध्यर्थमेवेदं सूत्रं, न तु नियमार्थमिति औपगवशब्दादपि प्रत्ययो दुर्वार इति चेदत्राहुः—गोत्रे बोधनीये क्रमेणाऽनेकप्रत्ययप्रसङ्गे एक एवापत्यप्रत्ययः स्यादिति सूत्रार्थे कृते औपगवशब्दस्यापत्यप्रत्ययान्तत्वात्पुनरपत्यप्रत्ययस्ततो नोपपद्यते इत्यगत्या परम्परासम्बन्धाभ्युपगमेनोपगोरेव तदुत्पत्तिः, न त्वौपगवशब्दादिति सिद्धमिष्टमिति। अत्र केचिद्व्याचक्षते—'आद्यपक्षे प्रत्ययपरम्परायां प्राप्तायाम् 'एको गोत्रे' इत्यनेनैकः प्रत्ययो विधीयते। तथा चैको नाम्नैकजातीय इत्यर्थपर्यवसानान्मूलप्रकृतेर्योऽपत्यप्रत्ययोऽणादिस्तज्जातीय एव गोत्रे बोधनीये तत्तत्पितृवाचकाद्भवति 'अणन्तादण्, इञन्तादिञ्, यञन्ताद्यञिति। न चैवमणिञोः परम्परायां निवर्तितायामप्यौपगव इत्यत्राऽण्प्रत्ययपरम्परा स्यात्, तथा गार्ग्य इत्यादौ यञादिपरम्परेति वाच्यं, सत्यामपि तस्यामनिष्टाऽभावा'दिति। तच्चिन्त्यं। फगन्तात्फकि 'नाडायन' इत्यादावनिष्टप्रसङ्गादिति दिक्। **ऊह्यमिति**। 'अपत्यं पितुरेवे'ति पक्षे चतुर्थापत्यरूपे यूनि विवक्षिते 'गोत्राद्यूनी'ति नियमसूत्रे सत्यसति च गोत्रप्रत्ययान्तादेव युवप्रत्यय इति द्वयोः परम्परा, सा चेष्टत्वात् नियमेन व्यावर्त्यते। पञ्चमे तु यूनि नियमाऽभावे त्रयाणां परम्परा प्रसज्येत। षष्ठे तु चतुर्णामित्यादि। 'ततः प्राचामपी'ति द्वितीयपक्षे तु- गर्गाच्चतुर्थे यूनि मूलप्रकृत्यनन्तराभ्यामनिष्टोत्पत्तिः प्रसज्यते। पञ्चमे तु—मूलप्रकृत्यनन्तरयुवभ्यः। तथा नडाच्चतुर्थे यूनि पूर्ववद्द्वाभ्यामनिष्टोत्पत्तिः। पञ्चमे त्रिभ्यः। उपगोश्चतुर्थे वाच्ये तु मूलप्रकृतेरेकस्मादेवानिष्टोत्पत्तिः, न त्वनन्तरा-

---

बा.]पत्य उन्मिषतीति भावः। **तद्धान्यै इति**। तस्य=उक्तप्रकाराभ्यामनिष्टोत्पादनस्य हानिः=निवृत्तिः, तदर्थमिदमित्यर्थः। **तथोत्तरमिति**। 'गोत्राद्यून्यस्त्रिया'मित्युत्तरसूत्रमपि तथा योज्यमित्यर्थः। तत्रापत्यशब्दः पुत्र एव रूढ इति पक्षे अनिष्टं प्रपञ्चयति—**पितुरेवेत्यादिना** । **औपगवादिञ्स्यादिति** । 'अत इञ् इत्यनेने'ति शेषः । औपगवादेव इञ् स्यन्नतूपगोरणित्यर्थः, तृतीयस्य उपगुं प्रत्यपत्यत्वाऽभावादिति भावः। **चतुर्थे त्वित्यतः** पूर्वम् 'उपगो'रिति शेषः। **अजीवज्ज्येष्ठे इति**। जीवन् ज्येष्ठो यस्येति विग्रहः। जीवति तु ज्येष्ठे चतुर्थस्य 'भ्रातरि च ज्यायसी'ति युवसंज्ञया गोत्रत्वं बाध्येतेति भावः। **मृतवंश्ये इति**। मृतो—वंश्यो यस्येति विग्रहः। वंश्ये जीवति तु 'जीवति तु वंश्ये युवे'ति युवसंज्ञया गोत्रत्वं बाध्येतेति भावः। **औपगवेः फगिति**। 'यञिञोश्चेनेने'ति शेषः। **एकोनेति**। एकोनशतात्प्रकृतिभ्यः एकोनशतं प्रत्यया अनिष्टाः स्युरित्यर्थः। अथाऽपत्यशब्दः पुत्रपौत्रादिसाधारण इति पक्षे अनिष्टं प्रपञ्चयति—**पितामहादीनामपीति**। मुख्यपक्षत्वं त्वस्य भाष्ये पूर्वपक्षस्य निराकरणात् 'अपत्यं पौत्रप्रभृति' इति सूत्रस्वरसाच्च बोध्यम्। **इष्टे सिद्धेऽपीति**। तृतीयादीनामप्यपत्यत्वेन तत्र 'तस्यापत्य'मित्यणो निर्बाधत्वादिति भावः। **तत इति**। इञन्तादित्यर्थः। **अष्टनवतेरिति**। 'प्रकृतिभ्य' इति शेषः। **अनिष्टप्रत्ययाः स्युरिति**। 'अष्टनवति'रिति शेषः। **नियमार्थमिति**। यद्यप्युपगोस्तृतीयादिषु अपत्यप्रत्ययविध्यर्थत्वमेव प्रथमपक्षे, तथापि गर्गात्तृतीयादिषु विवक्षितेषु गोत्रविहितगर्गादियञा गार्ग्यशब्दस्येष्टस्य सिद्धावपि गर्गादिञि ततः फिञित्येवं प्रत्ययपरम्पराप्यनिष्टा प्राप्नोतीति नियमार्थत्वमपि प्रथमपक्षेऽप्यस्य सूत्रस्येति भावः। **एवमुत्तरसूत्रेऽप्यूह्यमिति**। तत्प्रकारस्तु उत्तरसूत्रे एव वक्ष्यते। **गोत्राद्यून्यस्त्रियाम्** । गर्गस्य गोत्रं गार्ग्यः, गर्गस्य

---

शे.] वादिति भावः। **एवमिति**। 'पितामहादीनामपी'ति सिद्धान्तपक्षे पञ्चमादौ यूनि तृतीयादुत्पत्तौ 'गार्ग्यायण' इतीष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरापत्ययुवप्रत्ययान्तादनिष्टमपि प्राप्नोतीति 'यूनि गोत्रादेव न तूक्तेभ्य' इति नियमार्थम्—गोत्राद्यूनीति।

युवापत्यं गार्ग्यायणः। स्त्रियां गोत्रत्वादेक एव प्रत्ययः। **अत इञ्** ।४।१।९५। अदन्तं यत्प्रातिपदिकं तत्प्रकृतिका-

---

त.] पत्यवाचकात् । ततो जातेऽप्यत इञि रूपानिष्टाभावादित्यादि यथासंभवं तत्रोह्यमित्यर्थः। **गोत्राद्यूनि**। असत्यस्मिन्सूत्रे मुख्यमते पञ्चमादौ यूनि विवक्षिते गोत्रप्रत्ययान्ताद्युवप्रत्ययोत्पत्ताविष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरेभ्युवभ्योऽपि स्यादिति पाक्षिकानिष्टे प्राप्ते नियमार्थमिदमित्याशयेनाह—**गोत्रप्रत्ययान्तादेवेति** । न तु मूलप्रकृत्यनन्तरयुवभ्य इत्यर्थः। मनोरमायां तु 'नतु युवप्रत्ययान्तादिति प्रथमपक्षेऽर्थ' इत्यपि स्थितम्। अत्र वदन्ति—पञ्चमादौ यूनि विवक्षिते तस्य यूनस्तृतीयं प्रत्यनपत्यत्वादप्राप्तौ विध्यर्थमेवेदं स्यान्न तु नियमार्थमिति युवप्रत्ययान्तात्प्रत्ययो दुर्वारः स्यात्। तस्मादिह 'पितुरेवापत्य'मिति पक्षो नाश्रयणीय इति। अन्ये त्वाहुः—आद्यपक्षे 'गोत्राद्यूनी'त्यावर्त्य एकेनाऽप्राप्तप्रत्ययं विधाय द्वितीयेन नियम्यते 'यूनि गोत्रादेव' इति। एवं च 'ततः प्राचामपी'ति पक्षेण सहास्यैकरूपता भवतीति। 'गोत्राच्चेयून्येवे'ति विपरीतनियमस्त्विह न कृतः, व्यावर्त्याऽलाभात् । न च शैषिकाश्छादयो व्यावर्त्या इति वाच्यं, 'गोत्रेऽलुगची'ति लिङ्गात्। **स्त्रियां त्विति**। यद्यत्र 'अस्त्रिया'मित्यस्यैकवाक्यतया 'स्त्रीभिन्ने यूनि गोत्रादेवे'त्यर्थः क्रियते, तर्हि स्त्रीषु युवसंज्ञाया अनिषेधाद्युवतिषु स्त्रीषु प्रत्ययानां परम्परा प्रसज्येत। न च 'एको गोत्रे' इत्यनेन निस्तारः, युवसंज्ञया गोत्रसंज्ञाया बाधात्। अथ 'स्त्रियां न युवप्रत्ययः' इति वाक्यभेदेनार्थः क्रियते, तदा गोत्रप्रत्ययेन युवतिर्नाभिधीयेत। ततश्च गार्ग्यस्यापत्यं स्त्री गार्गी न स्यात्। किं तु वाक्यमेव स्यात्। अतो 'युवसंज्ञानिषेधपरमेवेद'मित्याशयेन व्याचष्टे—**न युवसंज्ञेति**। अत्रायमाशयः—'अस्त्रिया'मिति योगो विभज्यते। 'यूनी'ति शब्दस्वरूपमनुवर्तते। परिभाषा चेयम्। यत्र युवसंज्ञाविधानं तत्र 'अस्त्रिया'मित्युपतिष्ठत' इति,—सिद्धस्य गतिरियम्। 'जीवति तु वंश्ये युवाऽस्त्रिया'मित्येव सूत्रयितुं युक्तम्। **अत इञ्**। 'घकालतने'ष्विति ज्ञापकात्सुबन्तादेव तद्धितोत्पत्तिरित्यभ्युपगमेऽप्यधिकृतप्रातिपदिकस्य न वैयर्थ्यं, किं तु प्रयोजनमस्तीति ध्वनयति—**अदन्तं यत्प्रातिपदिकमिति**। 'अत' इत्यस्य सुबन्तविशेषणत्वे तु दक्षयोरपत्यमित्यादिविवक्षायां दाक्षिरित्यादि

---

बा.] तृतीयः। 'गर्गादिभ्यः' इति गोत्रे यञ्। गार्ग्यस्य तृतीयः स गर्गस्य पञ्चमो युवापत्यं, तस्मिन्बुबोधयिषिते गार्ग्यशब्दात् गोत्रप्रत्ययान्तात् 'यञिञोश्चे'ति फकि 'गार्ग्यायण' इति रूपमिष्यते। तथा षष्ठादिष्वपि युवापत्येषु 'गार्ग्यायण' इत्येवेष्यते। तदिदमपत्यशब्दः पुत्रपौत्रादिसाधारण इति पक्षे यद्यपि सुलभमेव, गर्गात्तृतीयं गार्ग्यं प्रति पञ्चमादीनामप्यपत्यत्वात्, तथापि गर्गस्य पञ्चमाद्यपत्ये यूनि विवक्षिते गर्गान्मूलप्रकृतेरपि इञ् स्यात्। तथा गर्गस्य अन्तरापत्ये इञि गार्गिः, तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि 'गार्गायण' इत्यपि स्यात्। तथा गर्गस्य चतुर्थे यूनि गोत्रत्वाऽभावात् यञभावे इञि गार्गिः। तदपत्यत्वेन विवक्षिते गर्गस्य पञ्चमादौ यूनि गार्गेः फकि 'गार्गायण' इति स्यात् । गोत्रप्रत्ययान्तादेव गार्ग्यशब्दाद्गर्गस्य पञ्चमाद्यपत्ये यूनि फकि 'गार्ग्यायण' इत्येवेष्यते। तदर्थं 'गोत्रप्रत्ययान्तादेव यूनि प्रत्यया' इति नियमः क्रियते—'गोत्राद्यूनी'ति। तदाह—**यून्यपत्ये गोत्रप्रत्ययान्तादेवेति**। नतु मूलप्रकृतेस्तदनन्तरापत्यप्रत्ययान्ताद्युवप्रत्ययान्ताच्चेति भावः। नचापत्यशब्दः पुत्र एव रूढ इति पक्षे पञ्चमादौ यूनि चतुर्थापत्यप्रत्ययान्तादेव प्रत्ययः स्यात्, नतु तृतीयवाचिगोत्रप्रत्ययान्तादिति तत्र विध्यर्थमेवेदं स्यात्; नतु नियमार्थमिति वाच्यं, 'पुत्रपौत्रादिसाधारणोऽपत्यशब्द' इत्येव भाष्ये सिद्धान्तितत्वादिति भावः।

**स्त्रियां तु न युवसंज्ञेति**। इह 'अस्त्रिया'मिति योगो विभज्यते। यूनीत्यनुवर्तते। उभयमपि प्रथमया विपरिणम्यते। तथाच 'स्त्री उक्तयुवसंज्ञिका ने'ति फलितमिति भावः। नच स्त्रीभिन्ने यूनि गोत्रादेवेत्यर्थः कुतो नाश्रीयते, एवं सत्येकवाक्यत्वलाभादिति वाच्यं, पञ्चमादिषु युवतिषु प्रत्ययमालाप्रसङ्गात् । नच 'एको गोत्रे' इति नियमात्तन्निवृत्तिः संभवतीति वाच्यं, युवसंज्ञया गोत्रसंज्ञाया बाधात्। नच सत्यपि योगविभागे 'स्त्रियां न युवप्रत्यय' इति व्याख्यायतामिति वाच्यं, गोत्रप्रत्ययेन युवत्यभिधानानापत्तेरित्यलम्। **गर्गस्येति**। गर्गस्य पञ्चमादौ यूनि गार्ग्यशब्दाद्गोत्रे यञन्तात्फकि 'गार्ग्यायण' इति रूपमित्यर्थः । स्त्रियां युवसंज्ञानिषेधस्य प्रयोजनं दर्शयति—**स्त्रियामिति**। पञ्चमादियुवतीनां युवसंज्ञाविरहेण गोत्रत्वात्। 'एको गोत्रे' इति नियमाद्गार्गीत्येव भवति, नतु गार्ग्यायणीति रूपमित्यर्थः। 'स्त्रीभिन्ने यूनि गोत्रादेवे'त्यर्थाश्रयणे तु युवसंज्ञया गोत्रसंज्ञाया बाधात् 'एको गोत्रे' इत्यस्याऽप्रवृत्तेः प्रत्ययमाला स्यादिति भावः। **अत इञ्**। प्रातिपदिकादित्यधिकृतमता विशेष्यते, तदन्तविधिः। तदाह-**अदन्तं यत्प्रातिपदिकमिति**। 'तस्यापत्य'मित्यनुवृत्तं 'समर्थानां प्रथमाद्वे'ति च। ततश्च प्रथमोच्चारिततच्छब्दबोधितात्प्राति-

---

शे.] आद्ये तु पक्षे पञ्चमे यूनि चतुर्थात्प्रत्ययान्तादेव प्रत्ययः स्यान्न तु तृतीयवाचिगोत्रप्रत्ययान्तादिति विध्यर्थमेवेदं स्यान्न तु नियमार्थमिति 'पितामहादीनामपी'ति पक्ष एव ज्यायानिति बोद्धयम्। **स्त्रियान्तु नेति** । 'अस्त्रिया'मिति योगं विभज्य तत्र यूनीत्यनुवर्त्य द्वे अपि प्रथमया विपरिणमय्य स्त्री युवा नेत्यर्थ इति भावः। अत इत्यनेनाऽधिकृतप्रातिपदिकस्य विशेषणात्तदन्त-

त्षष्ठयन्तादिञ् स्यादपत्येऽर्थे । दाक्षिः । **बाह्वादिभ्यश्च** ।४।१।९६। बाहविः । औडुलोमिः । आकृतिगणोऽयम् । **सुधातुरकङ् च** ।४।१।९७। चादिञ् । सुधातुरपत्यं सौधातकिः । ॐव्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम् । **न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** ।७।३।३। पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः, किंतु ताभ्यां पूर्वौ क्रमादैचावागमौ स्तः । वैयासकिः । वारुडकिरित्यादि । गोत्रे कुञ्जा-

---

त.] न सिद्धयेदिति भावः । तपरः किम् ? । विश्वपोऽपत्यं वैश्वपः । 'प्रदीयतां दाशरथाये'त्यत्र तु 'तस्येद'मित्यण् । अपत्यत्वविवक्षायां त्विञेव । **बाह्वादिभ्यश्च** । 'बाधृ लोडने' इति धातौ 'केवलस्य बाहोरपत्ययोगाऽसंभवात्साम-र्थ्यात्तदन्तविधौ सौबाहविः' इति माधवोक्तं चिन्त्यमिति ध्वनयन्नाह—**बाहविरिति** । 'जानन्तिबाहविगार्ग्यगौत-मा'इत्याश्वलायनसूत्रप्रयोगाद्भाष्यवृत्त्याद्युदाहरणाच्च बाहुशब्दः संज्ञारूपोऽस्तीति भावः । **औडुलोमिरिति** । यद्यपि गणे बाहु कृष्ण युधिष्ठिर अर्जुन प्रद्युम्नेत्यादिषु केवलो लोमन्शब्दः पठितस्तथापि सामर्थ्यात्तदन्तग्रहणम् । 'तारका-प्युडु वा स्त्रियाम्' इत्यमरोक्त्या नक्षत्रवाच्युडुशब्दः । उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः । शरा इव लोमानि यस्य तस्यापत्यं शारलोमिः । बहुत्वे तु इञपवादोऽकारः प्रागेवाऽजन्तेषूक्तः । उडुलोमाः । शरलोमाः । इह प्रतिपदविधानेषु पुराणसिद्धाः संज्ञाशब्दा एव गृह्यन्ते, शीघ्रोपस्थितिकत्वात् । तेन इदानींतनो यो बाहुस्तस्या-पत्ये बाहव इत्यणेव, न त्विञ् । उक्तं च हरिणा-'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु' । अनर्थकं संदिग्धार्थकमप्रयुक्तं च क्रमेण विशेषणत्रयव्यावर्त्यम् । **तदुक्तिषु** । तत्सदृशेष्वित्यर्थः । अत एव संज्ञाश्वशुरस्यापत्यं श्वाशुरिरित्यत्र 'राजाश्वशुरा'दिति यच्च । मिमीते माता । तस्य स्वसा मातृस्वसा । इह 'मातृपितृभ्यां स्वसे'ति षत्वं न । नन्वेवं बाहवः श्वाशुरिरिति पूर्वोक्तौ न सिध्यत इति चेत् । मैवम् । अणिञोर्विधौ शब्दविशेषानुपादानादप्रसिद्धेष्वपि तत्प्रवृत्तेः । **व्यासेति** । वेदान्व्यस्यतीति वेदव्यासः । 'कर्मण्यण्' । भीमो भीमसेन इतिवदेकदेशग्रहणम् । **न य्वाभ्यां** । य्वाभ्यां किम् ? । न अर्थो यस्य नार्थः, तस्यापत्यं नार्थिः । पदान्ताभ्यां किम् ? । याज्ञिकः । ऐचो विषयप्रदर्शनाय 'ने'ति निषेधोक्तिः । तेनेह न-दाध्यश्विः, माध्वश्विः । न ह्यत्र य्वाभ्यां परस्य वृद्धिप्रसक्तिरस्ति । क्वचित्तु वृद्धिप्रसक्तिसत्त्वेऽपि नेष्यते । द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः । **वारुडकिरिति** । वरुडादयो जातिविशेषाः । वकारस्यापदान्तत्वात् 'न य्वाभ्या'मित्यैज ।

---

बा.] पदिकादिति लब्धं । सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात्सुबन्तादिति लभ्यते । सुप्चेहोपस्थितत्वात्षष्ठ्येव विवक्षिता । तथाच षष्ठ्यन्तात्प्रातिपदिकादिति लभ्यते । यद्यपि प्रातिपदिकं न षष्ठ्यन्तं, प्रत्ययग्रहणपरिभाषया प्रकृतिप्रत्यय-समुदायस्यैव लाभात् । तथापि प्रातिपदिकप्रकृतिकषष्ठ्यन्तादित्यर्थो विवक्षितः । तदाह—**तत्प्रकृतिकात्षष्ठ्यन्ता-दिति** । **दाक्षिरिति** । दक्षस्यापत्यमिति विग्रहः । इञ् । आदिवृद्धिः, 'यस्येति चे'त्यकारलोपः । 'प्रदीयतां दाशरथाय मैथिली'ति त्वार्षमिति 'तस्यापत्य'मित्यत्र निरूपितम् । प्रातिपदिकग्रहणाऽननुवृत्तौ त्वदन्तात्षष्ठ्यन्तादिति लभ्येत । तथा च दक्षयोरपत्यं दाक्षिरिति न सिध्येदिति भावः । **बाह्वादिभ्यश्च** । 'अपत्ये इ'ञिति शेषः । **बाहविरिति** । बाहुर्नाम कश्चिदृषिः, अथ 'ऋषयः' इत्यधिकृत्य 'बाहविर्गार्ग्यगौतमौ' इत्याश्वलायनसूत्रे दर्शनात् । बाहोरपत्यमिति विग्रहः । इञि, ओर्गुणः । **औडुलोमिरिति** । उडुलोम्नोऽपत्यमिति विग्रहः । इञि 'नस्तद्धिते' इति टिलोपः । आदिवृद्धिः, अदन्तत्वाऽभावादप्राप्तिः । **सुधातुरकङ् च** । **चादिञिति** । सुधातृशब्दात्षष्ठ्य-न्तादपत्येऽर्थे इञ्प्रत्ययः, प्रकृतेरकङादेशश्चेत्यर्थः । अकङो ङकार इत्, अकार उच्चारणार्थः । 'ङिच्चे'त्यन्तादेशः । तदाह—**सौधातकिरिति** । **व्यासेति** । व्यास, वरुड, निषाद, चण्डाल, बिम्ब—एभ्यश्च इञि प्रकृतेरकङादेश इत्यर्थः । **न य्वाभ्यां** । य्च वश्च य्वाविति विग्रहः । वकारादकार उच्चारणार्थः । तदाह—**यकारवकाराभ्या-मिति** । 'परस्ये'त्यध्याहारलभ्यम् । **न वृद्धिरिति** । 'मृजेर्वृद्धि'रित्यतस्तदनुवृत्तेरिति भावः । 'तु'शब्दो विशेष-प्रदर्शनार्थ इत्याह—**किंत्विति** । **ताभ्यामिति** । यकारवकाराभ्यामित्यर्थः । **पूर्वाविति** । पूर्वावयवावित्यर्थः । तेन आगमत्वं लभ्यते । तदाह—**ऐचावागमाविति** । ऐच्—प्रत्याहारः । यथासङ्ख्यं यकारात्पूर्व ऐकारः, वकारात्पूर्व औकारः । **वैयासकिरिति** । वेदान्व्यस्यति=विवधमस्यति—शाखाभेदेन विभजतीति वेदव्यासः ।

---

शे.] विधिरित्याह—अदन्तमिति । अस्यापत्यमिरित्यादौ व्यपदेशिवद्भावादिञ् बोद्धव्यः । **व्यासव** । व्यासोऽत्र वेदव्यास एव, प्रसिद्धत्वात् । **न य्वाभ्यां** । ननु वृद्धेरपवादावेताविति नैतद्विषये वृद्धेः प्रसक्तिः । न च विषयभेदे कथमपवादत्वं । विषयभेदेऽप्य-चिरादेशेन लुटो बाधस्य भाष्ये शङ्कितत्वात् । 'न तिसृ' इति निषेधेन लुटो न रादेशेन बाध इति समाहितमित्यन्यत् । एवञ्च नेति व्यर्थमिति चेन्न, यत्र य्वाभ्यां परस्य प्रसक्ताया वृद्धेर्निषेधस्तत्रैवैचावित्यैचोर्विषयनिर्देशार्थत्वात्तत्सत्त्वात् । तेन 'दाध्यश्वि'-रित्यादौ न । अयश्च लिङ्गो येनलाभ्यां तद्धितभावादि रिति वृद्धिरेव, तेन द्व्याशीतिके 'सङ्ख्यायाः संवत्सरे'ति

गिभ्यश्चफञ् ।४।१।९८। व्रातच्फञोरस्त्रियाम् ।५।३।११३। व्रातवाचिभ्यश्चफन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम् । कौञ्जायन्यः । बहुत्वे तद्राजत्वाल्लुग्वक्ष्यते । ब्राध्नायन्यः । स्त्रियां-कौञ्जायनी । गोत्रत्वेन जातित्वान्ङीष् । अनन्तरापत्ये—कौञ्जिः । नडादिभ्यः फक् ।४।१।९९। गोत्र इत्येव । नाडायनः । चारायणः । अनन्तरो-नाडिः । हरितादिभ्योऽञः ।४।१।१००। एभ्योऽञन्तेभ्यो यूनि फक् । हारितायनः । इह गोत्राधिकारेऽपि सामर्थ्याद्यून्ययम् । नहि गोत्रादपरो गोत्र प्रत्ययः । बिदाद्यन्तर्गणो हरितादिः । यञिञोश्च ।४।१।१०१। गोत्रे यौ यञिञौ तदन्तात् फक् स्यात् । 'अनातीत्युक्ते'रापत्यस्ये'ति यलोपो न । गार्ग्यायणः ।

त.] इत्यादीति । नैषादकिः, चाण्डालकिः, बैम्बकिः । गोत्रे कुञ्जा । इतः प्राक् 'एको गोत्रे' इत्यादि सूत्रद्वयं चेत्पठ्यते तर्ह्यत्रत्यं गोत्रग्रहणं त्यक्तुं शक्यमित्याहुः । च्फञो ञकारो वृद्ध्यर्थः । कौञ्जायन्यः । चकारस्तु 'व्रातच्फञो'रित्यत्र विशेषणार्थः । तेन 'अश्वादिभ्यः फञ्' आश्वायन इत्यत्र ञ्यो न भवति । अत्रेदमवधेयं-कौञ्जायन्य इत्यादावेकवचने द्विवचने च ञ्यस्य ञित्त्वादाद्युदात्तत्वमेव । बहुत्वे तु ञ्यस्य लुकि च्फञश्चकारञकारयोस्तुल्यबलयोर्विरोधे सति परत्वाञ्ञित्स्वरेणाद्युदात्तत्वे प्राप्ते भाष्यादौ 'तद्धितस्य कितः' इत्यत्र योगं विभज्य 'चितः' इत्यनुवर्त्य 'तद्धितस्य चितोऽन्तोदात्तत्वम्' इति व्याख्यानात् 'कौञ्जायनाः' इत्यत्रान्तोदात्ततैव भवति । न चैवं हि फञेवास्तु किमनेन गुरुनिर्देशेनेति वाच्यं, तथा हि सति 'व्रातफञोरस्त्रिया'मिति सूत्रप्रणयनापत्त्या नाडायनादिभ्योऽपि ञ्यः स्यादिति । कुञ्ज, ब्रध्न, शङ्ख, शकटेत्यादि । व्रातच्फञो । 'पूगाञ्ञ्योऽग्रामणी'त्यतोऽनुवर्तनादाह—ञ्यः स्यादिति । व्रातवाचिभ्यः 'कापोतपाक्यः' इत्युदाहरिष्यति । अस्त्रियां किम् ? । कपोतपाका स्त्री । तद्राजत्वादिति । 'ञ्यादयस्तद्राजाः' इति सूत्रेणे'ति शेषः । लुग्वक्ष्यत इति । 'तद्राजस्य बहुषु' इत्यनेने'ति शेषः । कौञ्जायनीति । इह सति ञ्यप्रत्यये योपधत्वात् 'जातेः' इति ङीषभावे टापि रूपे स्वरे च विशेषो बोध्य इत्याहुः । यञिञोश्च ।

बा.] कर्मण्यण् । अत्र नामैकदेशग्रहणम् । व्यासस्यापत्यमिति विग्रहः । इञ्प्रत्ययः । प्रकृतेरकङादेशः । अत्र यकारः पदान्तः । तस्मात्परस्य आकारस्य पर्जन्यवल्लक्षणप्रवृत्त्या आदिवृद्धिः प्राप्ता न भवति, किंतु यकारात्पूर्वं ऐकार आगमः । वैयासकिरिति रूपम् । स्वश्वस्यापत्यं सौवश्विरित्यत्र वकारात्परस्य न वृद्धिः, किन्तु ततः पूर्वं औकारः । नच ऐचो वृद्ध्यपवादत्वादेव वृद्ध्यभावसिद्धेस्तन्निषेधो व्यर्थ इति वाच्यं, यत्र य्वाभ्यां परस्य प्रसक्ताया वृद्धेर्निषेधस्तत्रैव ऐजागमाविति विषयनिर्देशार्थत्वात् । तेन दाध्यश्विरित्यादौ न । वृद्धिनिषेधोऽयं येन नाप्राप्तिन्यायेन आदिवृद्धेरेव । तेन द्वे अशीती भृतो 'द्व्याशीतिक' इत्यत्र 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' इत्युत्तरपदवृद्धिर्भवत्येव । वरुडादयो जातिविशेषाः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः । गोत्रे कुञ्ज । स्पष्टम् । इञोऽपवादः । च्फञि चञाविती । व्रातच्फञोः । व्रातश्च च्फञ्च इति द्वन्द्वाद्व्यत्ययेन पञ्चम्यर्थे षष्ठी । तदाह—व्रातवाचिभ्य इति । स्वार्थे ञ्यः स्यादिति । 'पूगाञ्ञ्योऽग्रामणीपूर्वा'दित्यतो 'ञ्य' इत्यनुवर्तते । स च स्वार्थिकः, 'ञ्यादयः प्राग्वुञः' इति स्वार्थिकेषु परिगणनादिति भावः । कौञ्जायन्य इति । कुञ्जस्य गोत्रापत्यमिति विग्रहः । च्फञि चञाविती । आयन्नादेशः, आदिवृद्धिः, ततो ञ्यः, ञकार इत्, 'यस्येति च' इत्यकारलोपः । तद्राजत्वादिति । 'ञ्यादयस्तद्राजाः' इति वचनादिति भावः । लुग्वक्ष्यते इति । 'तद्राजस्य बहुषु-इत्यनेने'ति शेषः । ब्राध्नायन्य इति । ब्रध्नस्य गोत्रापत्यमिति विग्रहः । च्फञादि पूर्ववत् । ञ्यविधावस्त्रियामित्यस्य प्रयोजनमाह—स्त्रियां कौञ्जायनीति । कुञ्जस्यापत्यं स्त्रीति विग्रहः । स्त्रीत्वादिह न ञ्यप्रत्यय इति भावः । अदन्तत्वादिह टापमाशङ्क्याह—गोत्रत्वेनेति । कृते तु ञ्यप्रत्यये योपधत्वाज्जातिलक्षणङीषभावे टाप् स्यादिति भावः । च्फञ्विधौ गोत्रग्रहणस्य प्रयोजनमाह—अनन्तरापत्ये कौञ्जिरिति । नडादिभ्यः फक् । इञोऽपवादः । अनन्तरो नाडिरिति । अनन्तरापत्यस्य गोत्रत्वाऽभावात्फगभावे इञेवेत्यर्थः । 'हरितादिभ्योऽञ' इत्यादि स्पष्टम् । यञिञोश्च । 'गोत्रे' इत्यधिकृतं यञिञोर्विशेषणं, नतु विधेयस्य फकः, व्याख्यानात् । तदाह—गोत्रे यौ यञिञाविति । सामर्थ्याद्यून्ययम् । न हि गोत्रप्रत्ययात् गोत्रप्रत्ययोऽस्ति, 'एको गोत्रे' इति नियमात् । अनातीति । गर्गस्य गोत्रं गार्ग्यः । गर्ग-

शे.] वृद्धिर्भवत्येव । पदान्ताभ्यां किम् ? । पतीति यन्, तस्य छात्रा 'याता' इत्यादौ माभूत् । पूर्वौ=पूर्वावयवौ । असत्त्वे हि दध्नाऽजश्च यजं, तस्मात्तत्र मब इत्यण्णन्ताच्छो न स्यात्, प्रातिपदिकत्याऽवृद्धत्वादिति हरदत्तः । गोत्रे कुं । गोत्रे बोध्येतत्सम्बन्ध्यपत्यमित्यर्थे कुञ्जादिभ्यः परः प्रत्यय इत्यर्थः । च्फञि ञकारः कौञ्जायनीत्यादौ वृद्ध्यर्थः । चकारो 'व्रातच्फञो'रित्यत्र विशेषणार्थः । व्रातच्फञो । 'पूगाञ्ञ्योऽग्रामणीपूर्वा'दित्यतो ञ्योऽनुवर्तते । तद्राजत्वादिति । 'ञ्यादयस्तद्राजाः' इत्यनेन । लुगिति । 'तद्राजस्य बहुषु' इत्यनेन ञ्यस्येति भावः । स्त्रियामिति । ञ्यप्रत्यये हि योपधत्वात्ङीष्न स्यात्, टाप् च स्यादित्यस्त्रियामित्युक्तमिति भावः । यञिञौः । अधिकृतं गोत्रे इति यञिञोर्विशेषणं । फक्तु यूनि । गोत्रे किम् ? । द्वैपमादिभ्य-

दाक्षायणः । **शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु** ।४।१।१०२। गोत्रे फक् । अञिञोरपवादः । आद्यौ बिदादी । शारद्वतायनो भार्गवश्चेत् । शारद्वतोऽन्यः । शौनकायनो वात्स्यश्चेत् । शौनकोऽन्यः । दार्भायण आग्रायणश्चेत् । दार्भिरन्यः । **द्रोणपर्वतजीवन्तादन्यतरस्याम्** ।४।१।१०३। एभ्यो गोत्रे फग्वा । द्रोणायनः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । अनादिरिह द्रोणः । अश्वत्थाम्न्यनन्तरे तूपचारात् । **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** ।४।१।१०४। एभ्योऽञ् गोत्रे, ये त्वत्रानृषयस्तेभ्य आनन्तर्ये । सूत्रे स्वार्थे ष्यञ् । बिदस्य गोत्रापत्यं बैदः । अनन्तरो बैदिः । बाह्वादेराकृतिगणत्वादिञ् । पुत्रस्यापत्यं

---

त.] अधिकारप्राप्तं गोत्रग्रहणं यञिञोर्विशेषणं न तु विधेयस्य फकः,व्याख्यानात् । तदेतदाह—**गोत्रे याविति** । गोत्रे किम् ? । 'द्वीपादनुसमुद्रं यञ्' द्वीपे भवो द्वैप्यः । सुतङ्गमादिभ्यश्चातुरर्थिक इञ् । सौतङ्गमिः । तदपत्ये फक्मा भूत् । **फक्स्यादिति** । सामर्थ्याद्गृन्ययम् । **शरद्वच्छुनक** । भृगुः शरद्वतोऽपत्यं न भवति, पूर्वभावित्वात् । एवं शुनकस्यापत्यं न भवति वत्सः । अतोऽत्र भार्गवश्च वात्स्यश्चाग्रायणश्चेति द्वन्द्वे 'अत्रिभृगु' इति 'यञिञोश्चे'ति च यथासंभवं लुग्बोध्यः । यद्यप्यत्र बहुत्वाऽभावात् 'अत्रिभृगु' इत्यादिना लुग्दुर्लभस्तथापि युगपदधिकरणवचनतायां वर्तिपदानां बह्वर्थत्वात्सौत्रत्वाद्वा स्यादेव लुक् । अतो व्याचष्टे—**भार्गवश्चेदिति** । **वात्स्यश्चेदिति च** । **अनादिरिति** । अश्वत्थाम्नः पिता यो महाभारते प्रसिद्धः, तदपेक्षयाऽन्य एवायं द्रोण इत्यर्थः । **अश्वत्थाम्नीत्यादि** । द्रोणाचार्यस्यानन्तरापत्ये अश्वत्थाम्नि 'द्रौणायन' इति प्रयोगो भाक्त इत्यर्थः । **अनृष्या** । 'अनृषी'ति पञ्चम्याः सौत्रो लुक् । अनृषिभ्य इत्यर्थः । **सूत्रे इति** । आनन्तर्य [इत्यत्र]इत्यर्थः । **स्वार्थ इति** । चातुर्वर्ण्यादेराकृतिगणत्वादिति भावः । बैदिरित्यत्र ऋष्यणमाशङ्क्याह—**बाह्वादेरिति** । बिद, उर्व, कश्यप, कुशिक, भरद्वाज, उपमन्यु, विश्वा-

---

बा.] दित्वाद्यञ् । गार्ग्यस्यापत्यं युवेत्यर्थे यञन्तात्फकि आयन्नादेशे 'अनाती'ति पर्युदासात् 'आपत्यस्य चे'ति यलोपाऽभावे णत्वे 'गार्ग्यायण' इति रूपमित्यर्थः । **दाक्षायण इति** । दक्षस्य गोत्रापत्यं दाक्षिः, अत इञ्, दाक्षेरपत्यं युवा दाक्षायणः । इञन्तात्फक् । गोत्रे किम् ? । सुतङ्गमस्यादूरभव इत्यर्थे 'सुतङ्गमादिभ्य इ'ञितीञि सौतङ्गमेरपत्ये न फक् । **शरद्वच्छुनक** । शेषपूरणेन सूत्रं व्याचष्टे—**गोत्रे फगिति** । **आद्यौ बिदादी इति** । शरद्वच्छुनकशब्दौ बिदादी । अतस्तदुभयविषयेऽञपवाद इत्यर्थः । दर्भविषये त्विञोऽपवाद इति स्पष्टमेव । दर्भः—कश्चिदृषिः । ऋष्यणं बाधित्वा बाह्वादित्वादिञ् । **आग्रायणश्चेदिति** । अग्रो नाम कश्चिदृषिः । नडादिफगन्तोऽयम् । **द्रोणपर्वत** । **अनादिरिति** । अश्वत्थाम्नः पिता यो महाभारते कलेरादौ प्रसिद्धः, तदपेक्षया अन्य एवायमनादिद्रोण इत्यर्थः । **अश्वत्थाम्नीति** । द्रोणाचार्यस्यानन्तरापत्ये अश्वत्थाम्नि 'द्रौणायन' इति प्रयोग इत्यर्थः । तदिदं 'बाह्वादिभ्यश्चे'ति सूत्रे भाष्ये स्पष्टम् । **अनृष्यानन्तर्ये** । 'अनृषी'ति लुप्तपञ्चमीकम् । बिदादिभ्योऽञिति द्विरावर्तते । तथा च 'अनृष्यानन्तर्ये विदादिभ्योऽ'ञिति कृत्स्नमेकं वाक्यं । 'बिदादिभ्योऽ'ञिति वाक्यान्तरं । तत्र द्वितीयं वाक्यं व्याचष्टे—**एभ्योऽञ्गोत्रे इति** । गोत्रे विवक्षिते बिदादिभ्योऽञ्स्यादित्यर्थः ।

अथ प्रथमं वाक्यं कृत्स्नसूत्रं व्याचष्टे—**ये त्विति** । अनृषिभ्यो बिदादिभ्योऽनन्तरापत्येऽञ्स्यादित्यक्षरार्थः । बिदादौ हि ऋषयोऽनृषयश्च पठिताः । तत्र येऽनृषयस्तेभ्योऽनन्तरापत्येऽञिति फलितमिति भावः । नन्वानन्तर्ये इति श्रवणादनन्तर इति कथमित्यत आह—**सूत्रे स्वार्थे ष्यञिति** । 'अनन्तरशब्दा'दिति शेषः । चतुर्वर्णादित्वादिति भावः । **बिदस्य गोत्रापत्यं बैद इति** । बिदस्य ऋषित्वात्ततो गोत्र एवाऽञिति भावः । ऋष्यणोऽपवादः । स्वरे विशेषः । नन्वनन्तरापत्येऽञभावे इञपवाद ऋष्यणेवोचित इति कथमनन्तरो बैदिरित्यत आह-**बाह्वादेरिति** । बिदादिगणस्थादनृषेरनन्तरात्येऽञमुदाहरति-**पौत्रो दौहित्र इति** । पुत्रस्यानन्तरापत्यमिति,

---

शे.] श्चातुरर्थिके इञि सौतङ्गमेरपत्ये माभूत् । **शरद्वच्छु** । भृगुवत्सपदे तदपत्येषु भृगुत्वाद्यारोपेण प्रयुक्ते । अन्यथा भृगुवत्सयोः शरद्वच्छुनकपूर्वभावित्वादसङ्गतिः स्पष्टैवेति **केचित्** । **अन्यः** = कृत्रिमपुत्रादिः । **आग्रायणो** नडादिफगन्तः । **दार्भिरिति** । अस्य ऋषित्वे तु बाह्वादित्वादिञ् । शरद्वच्छुनकौ बिदादी, ताभ्यां फकोऽभावेऽञ् । **अनादिरिति** । भारतप्रसिद्धोऽस्मदाद्यज्ञेयादिकाल इत्यर्थः । 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ।' इति हर्युक्तेः । **अभिव्यक्ते**त्यनेनाऽनाद्यर्थाभिधायित्वम् । तेन विशिष्टरूपोपादाने पदकार्ये एव चायम् । '**स्वतन्त्रा**' इत्यनेन गौणनिरासः । '**लोकविश्रुता**' इत्यनेनाऽप्रयुक्तं निरस्तम् । **तदुक्तिषु** = तत्सदृशेषु । 'बाह्वादिभ्यश्चे'ति सूत्रे भाष्येऽपि 'बाह्वादिप्रभृतिषु येषां दर्शनं लोकविदितादिपुरुषत्वरूपे लौकिके गोत्रभावे ततोऽन्यत्र प्रतिषेधः । बाहुनाम्न आधुनिकस्यापत्यं बाहव एव । 'सम्बन्धिशब्दानां कार्ये तत्सदृशात्प्रतिषेधः' इति चोक्तम् । तत्र 'गोत्रभावे' इति प्रकृताभिप्रायेण, तदेव ध्वनयताऽव्युत्पत्त्यनुवादेन 'सम्बन्धिशब्दाना'मित्याद्युक्तम् । एवञ्चाऽयं न्यायः सर्वविषय इति बोद्धयम् । बाह्वादिसूत्रे पाठाद्वद्धितविषय एवेति कश्चित् ।

पौत्रः। दौहित्रः। **गर्गादिभ्यो यञ्** ।४।१।१०५। गोत्र इत्येव। गार्ग्यः। वात्स्यः। **यञञोश्च** ।२।४।६४। गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम्। गर्गाः। वत्साः। बिदाः। उर्वाः। तत्कृते इति किम्? प्रियगार्ग्याः। स्त्रियां तु-गार्ग्यः स्त्रियः। गोत्रे किम्? द्वैप्याः। औत्साः। प्रवराध्यायप्रसिद्धमिह गोत्रम्। तेनेह न—पौत्राः। दौहित्राः। **मधुबभ्र्वोर्ब्राह्मणकौशिकयोः** ।४।१।१०६। गोत्रे यञ्। माधव्यो ब्राह्मणः। माधवोऽन्यः। बाभ्रव्यः कौशिकः [ऋषिः]। बाभ्रवोऽन्यः। यञ्जुशब्दस्य गर्गादिपाठात्सिद्धे नियमार्थमिदम्। गर्गादिपाठफलं तु लोहितादिकार्यम्। बाभ्रव्यायणी। **कपिबोधादाङ्गिरसे** ।४।१।१०७। गोत्रे यञ् स्यात्। काप्यः। बौध्यः। आङ्गिरसे किम्? कापेयः। बौधिः। **वतण्डाच्च** ।४।१।१०८। आङ्गिरस इत्येव। वातण्ड्यः। अनाङ्गिरसे तु गर्गादौ शिवादौ च पाठा-

त.] नर, 'परश्वो परशुं च' इत्यादि। **गर्गादिभ्यो**। गर्ग, वत्स, व्याघ्रपाद, पुलस्ति, बभ्रु, मण्डु, वतण्ड, कपि, कत, शकल, कण्व, अगस्ति, कुण्डिन, यज्ञवल्क, पराशर, जमदग्नि–इत्यादि। कथं तर्हि 'रामो जामदग्न्यः' इति। अनन्तरापत्ये ह्ययम्। सत्यम्। अनन्तरेऽपि गोत्रत्वारोपाद्बोध्यः। **यञञोश्च**। 'ण्यक्षत्रियार्षे'त्यतो लुगिति, तद्राजस्ये'ति सूत्राद्बहुषु तेनैवाऽस्त्रियामिति चानुवर्तते, 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्र इति च। तदाह—**गोत्रे यद्यञन्तमित्यादि**। प्रवराध्यायप्रसिद्धगोत्रवाचिनौ केवलौ यञञौ न भवत इति 'गोत्र' इत्यनेन तदन्तं विशेषितम्। **तदवयवयोरिति**। 'निर्दिश्यमानस्यादेशा भवन्ती'ति भावः। **प्रवराध्यायेति**। एतच्च 'स्त्रीपुंसाभ्या'मिति सूत्रे 'लौकिकस्य गोत्रस्य ग्रहण'मिति भाष्यमुपादाय कैयटेनोक्तमिति भावः। **तेनेह नेति**। यद्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्येत, तदा स्यादेवातिप्रसङ्ग इति भावः। **लोहितादीति**। 'सर्वत्र लोहितादी'त्यादिना ष्फः। ष्फेणोक्तेऽपि स्त्रीत्वे षित्त्वसामर्थ्यान्ङीषित्याशयेनाह—**बाभ्रव्यायणीति**। गर्गादिगण एव 'बभ्रुः, कौशिके' इति पाठ्यम्, एवं हि द्विर्बभ्रुग्रहणं न कर्तव्यं भवतीति हरदत्तादयः। **कापेय इति**। 'इतश्चाऽनिञः' इति ढक्। कपेर्गर्गादिगणे पाठो

बा.] दुहितुरनन्तरापत्यमिति च विग्रहः। यथायथमणिञोपरपवादेऽञ्। **गर्गादिभ्यो यञ्। गार्ग्यो वात्स्य इति**। गर्गस्य गोत्रापत्यमिति, वत्सस्य गोत्रापत्यमिति च विग्रहः। 'रामो-जामदग्न्यः', 'पाराशर्यो व्यास' इत्यादौ त्वनन्तरापत्ये गोत्रत्वारोपाद्यञित्याहुः। **यञञोश्च**। द्वितीयचतुर्थपादे इदं सूत्रं न त्विदं चातुर्थिकमपत्याधिकारस्थम्। तत्र प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। 'तद्राजस्य बहुषु तेनैवाऽस्त्रिया'मिति सूत्रं तद्राजस्येतिवर्जमनुवर्तते। 'ण्यक्षत्रिये त्यतो 'लु'गिति, 'यस्कादिभ्यो गोत्रे' इत्यतो 'गोत्रे' इति च। तदाह—**गोत्रे यदिति**। **एतयोरिति**। यञञोरित्यर्थः। प्रत्ययाऽदर्शनस्यैव लुक्त्वादिति भावः। **तत्कृते इति**। यञञ्प्रत्ययार्थगतबहुत्वे इति यावत्। **गर्गा इति**। गर्गस्यापत्यानीत्यादिविग्रहः। **प्रियगार्ग्या इति**। प्रियो गार्ग्यो येषामिति विग्रहः। अत्र यञर्थगतबहुत्वाऽभावान्न लुगिति भावः। **द्वैप्या इति**। द्वीपे भवा इत्यर्थः। 'द्वीपादनुसमुद्रं'मिति यञ्। **औत्सा इति**। उत्से भवा इत्यर्थः। 'उत्सादिभ्योऽञ्'। इहोभयत्रापि यञञोर्गोत्रवाचित्वाऽभावान्न लुगिति भावः। ननु पौत्रा दौहित्रा इत्यत्राप्यनृष्यविदादिलक्षणाऽञो लुक्स्यात्। न च तस्यानन्तरापत्यवाचित्वाद्गोत्रवाचित्वाऽभावान्न लुगिति वाच्यं, 'यूनि लु'गिति सूत्रभाष्ये अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्यते इति सिद्धान्तित्वादित्यत आह—**प्रवरेति**। 'कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः। 'तेषां यदपत्यं तद्गोत्रमित्याचक्षते' इति बोधायनीयादिप्रवराध्यायप्रसिद्धा भार्गवादय एवेह गोत्रत्वेन विवक्षिता इत्यर्थः। कैयटेन 'लौकिकस्य गोत्रस्य ग्रहण'मिति भाष्यमुपादाय तथैव व्याख्यातत्वादिति भावः। एवं च पौत्रा दौहित्रा इत्यादौ पौत्रदौहित्रयोस्तथाविधगोत्रवाचित्वाऽभावान्न लुगिति स्थितम्। विस्तरस्तु शब्देन्दुशेखरे ज्ञेयः।

**मधुबभ्र्वोः**। शेषपूरणेन सूत्रं व्याचष्टे—**गोत्रे यञिति**। मधुशब्दाद्बभ्रुशब्दाच्च गोत्रापत्ये यञ्स्याद्ब्राह्मणे कौशिके च यथासङ्ख्यं वाच्ये इत्यर्थः। **लोहितादिकार्यमिति**। ष्फ इत्यर्थः। लोहितादिर्गर्गाद्यन्तर्गण इति भावः। **बाभ्रव्यायणीति**। बभ्रोर्गोत्रापत्यं स्त्रीति विग्रहः। गर्गादियञि बाभ्रव्यशब्दात् 'सर्वत्र लोहितादिकतन्तेभ्यः' इति ष्फः। आयन्नादेशः, षित्त्वान्ङीषिति भावः। **कपिबोधादा**। **गोत्रे यञ्स्यादिति**। शेषपूरणमिदं। कपिशब्दाद्बोधशब्दाच्च आङ्गिरसात्मके गोत्रे गम्ये यञ्स्यादित्यर्थः। **कापेय इति**। अत्र गोत्रस्य अनाङ्गि-

शे.] **अनृष्या**। अनृषीति लुप्तप्रथमैकवचनान्तम्। **आनन्तर्ये**=अनन्तरापत्ये। इदं वृत्त्यनुसारेण। भाष्ये तु ऋषिभ्योऽनन्तरे नेत्यर्थोऽसमर्थसमासेन दर्शितः। ये त्वत्रानृषयः पठ्यन्ते तेभ्योऽनन्तरेऽपीति चोक्तम्। निषेधसामर्थ्यादेवात्र गोत्रे इत्यस्याऽसम्बन्ध इति तद्भावः। यूनि तु 'गोत्राद्यूनी'ति नियमान्न दोषः। **गर्गादि**। 'रामो जामदग्न्यः', 'पाराशर्यो व्यास' इत्यनन्तरे गोत्रत्वारोपाद्बोध्यम्। **यञञोः**। 'ण्यक्षत्रिये'त्यतो लुगिति, 'तद्राजस्य' सूत्राद्बहुषु तेनैवाऽस्त्रियामिति, 'यस्कादिभ्यः' इत्यतो गोत्र इति

यञणौ। वातण्ड्यः। वातण्डः। **लुक् स्त्रियाम्** ।४।१।१०९। 'वतण्डाच्चे'ति विहितस्य लुक् स्यात् स्त्रियाम्। शार्ङ्गरवादित्वान्ङीन्। वतण्डी। अनाङ्गिरसे तु—वातण्ड्यायनी। लोहितादित्वात् ष्फः। अणि तु वातण्डी। ऋषित्वाद्वक्ष्यमाणः ष्यङ् न। **अश्वादिभ्यः फञ्** ।४।१।११०। गोत्रे। आश्वायनः। (ग) **पुंसि जाते**। पुंसीति तु प्रकृतिविशेषणम्। जातस्य गोत्रापत्यं जातायनः। पुंसीति किम्? जाताया अपत्यं जातेयः। **भर्गात्त्रैगर्ते** ।४।१।१११। गोत्रे फञ्। भार्गायणस्त्रैगर्तः। भार्गिरन्यः। **शिवादिभ्योऽण्** ।४।१।११२। गोत्र इति

त.] लोहितादिकार्यार्थः। तेन कात्यायनीति सिध्यति। **बौधिरिति**। अनृषित्वादिञ्, बाह्वादित्वाद्वा। **वतण्डाच्च**। यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थं सूत्रम्। **लुक् स्त्रियाम्**। **विहितस्येति**। 'परिशेषितस्य वे'ति बोध्यम्। एतच्च 'आङ्गिरसे' इत्यनुवृत्त्या लभ्यते। यद्यपि 'वतण्डाल्लुक् स्त्रिया'मित्येकसूत्रकरणेऽपि 'आङ्गिरसे' इत्यनुवृत्त्या अनाङ्गिरसे यञणोर्लुगभावात् स्त्रियामिष्टं सिध्यति, तथापि पुंस्याङ्गिरसे यञणोरुभयोः प्राप्तिरनिष्टेति तद्वारणाय पृथक् सूत्रं कृतम्। **ऋषित्वादिति**। न चैवं 'ऋष्यन्धके'त्यणि सिद्धे शिवादिगणे वतण्डपाठो व्यर्थं इति वाच्यम्। गर्गादिपाठेन यञा बाधात्तन्निवृत्तये तत्पाठस्यावश्यकत्वात्। **ष्यङ्नेति**। 'अणिञोरनार्षयो'रिति सूत्रेणेति भावः। **अश्वादिभ्यः**। **गोत्र इति**। इह गणे–बैल्य, आनडुह्य, आत्रेय–इति गोत्रप्रत्ययान्तास्त्रयः पठ्यन्ते तेभ्यस्तु यून्येव। 'एको गोत्रे', 'गोत्राद्यूनी'ति वचनात्। तत्र बिलिर्नाम राजर्षिस्ततो 'वृद्धेत्कोसले'ति ष्यङ्। आनडुह्यशब्दो गर्गादिञन्तः। 'आत्रेय'शब्दो ढगन्त इति ज्ञेयः। **पुंसि जात इति**। गणसूत्रमिदम्। जातशब्दे पुंसि विद्यमाने फञित्यर्थः। कस्मादित्याकाङ्क्षायामर्थाज्जातशब्दादिति लभ्यते। **जाताया इति**। लिङ्गविशिष्टपरिभाषया, एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिः। **शिवादिभ्योऽण्**। ननु विशेषविहितानिञादीन्बाधित्वाऽणेवारम्भ-

बा.] रसत्वाद्यञभावे 'इतश्चानिञः' इति ढक्। **बौधिरिति**। अत्राप्यनाङ्गिरसत्वाद्यञभावे ऋष्यणं बाधित्वा बाह्वादित्वादिञिति भावः। कपेर्गर्गादौ पाठेऽपि आङ्गिरस एवेति नियमार्थं ग्रहणम्। तस्य गर्गादौ पाठस्तु लोहितादिकार्यार्थः। काप्यायनी। बोधशब्दात्तु अप्राप्ते विधिः। **वतण्डाच्च**। वतण्डस्य गर्गादौ शिवादौ च पाठाद्यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थमिदम्। **लुक्स्त्रियाम्**। **वतण्डाच्चेति विहितस्येति**। 'यञ' इति शेषः। **वतण्डीति**। वतण्डस्य गोत्रापत्यं स्त्री आङ्गिरसीति विग्रहः। यञो लुकि आदिवृद्धिनिवृत्तौ ङीनिति भावः। **वातण्ड्यायनीति**। अञि आदिवृद्धौ लोहितादिलक्षणः ष्फः, षित्त्वान्ङीषिति भावः। 'वतण्डाच्चे'ति विहितस्येत्यस्य प्रयोजनमाह—**अणि तु वातण्डीति**। शिवादित्वादणि गोत्रत्वेन जातित्वाज्जातिलक्षणे ङीषि तस्याऽणो वतण्डाद्विहितत्वेऽपि 'वतण्डाच्चे'ति विहितत्वाऽभावाच्च लुगिति भावः। ननु वतण्डादणि तस्य 'अणिञोरनार्षयो'रिति वक्ष्यमाणः ष्यङ् स्यादित्यत आह—**ऋषित्वादिति**। **अश्वादिभ्यः**। **गोत्रे इति**। शेषपूरणमिदम्। 'आङ्गिरसे' इति निवृत्तम्। **आश्वायन इति**। अश्वस्य गोत्रापत्यमिति विग्रहः। इञपवादः फञ्। **पुंसि जाते इति**। गणसूत्रम्। **प्रकृतिविशेषणमिति**। पुंसि विद्यमानो यो जातशब्दस्तस्माद्गोत्रे फञित्यर्थः। **जातेय इति**। 'स्त्रीभ्यो ढक्'। **भर्गात्त्रैगर्ते**। इदमपि गणसूत्रम्। त्रिगर्तो नाम भर्गस्य पुत्रः। तस्यापत्यं त्रैगर्तः। ऋष्यण्। तस्मिन्गोत्रे भर्गात्फञ्। **शिवादिभ्योऽण्**। **निवृत्तमिति**। वृत्तिकैयटयोस्तथोक्तत्वादिति भावः। 'यूनि लु'गिति

शे.] चानुवर्त्तते। प्रवराध्यायप्रसिद्धगोत्रवाचित्वं यञञोर्नास्तीत्यत आह—**यञन्तमिति**। निर्दिश्यमानपरिभाषालुक्सञ्ज्ञाभ्यां लब्धमर्थमाह—**तदवयवयोरिति**। **प्रवरेति**। [तादृशमपत्यप्रत्ययान्तमित्यर्थः]। एतदेव च लौकिकं गोत्रम्। एतत्सर्वं 'यूनि लुक्' 'गोत्राद्यवयवात्' 'स्त्रीपुंसाभ्या'मित्यादौ भाष्ये स्पष्टम्। **लोहितादिकार्यमिति**। स्त्रियां ष्फ इत्यर्थः। **आङ्गिरस इत्येवेति**। तत्र यञेवेत्यर्थः। तदाह—**अनाङ्गिरसे त्विति**। 'आङ्गिरस एवे'ति नियमस्तु न, गर्गादिपाठस्य वैयर्थ्यापत्तेः। स्त्रियां लुक्सत्त्वेन, 'यञोऽकार' इति व्याख्यानेन चास्य लोहितादिकार्यार्थं पाठ इति न वाच्यम्। शिवादिगणे पाठे मानन्तु 'लुक् स्त्रिया'मित्यनेन 'वतण्डाच्चे'त्यस्य विभाग एवेति बोद्धव्यम्। **विहितस्येति**। 'अनन्तरस्ये'ति न्यायलब्धमिदम्। **वक्ष्यमाण इति**। 'अणिञो'रिति सूत्रेणेत्यर्थः। तत्र प्रतिपदोक्तपरिभाषया ऋष्यण एव ग्रहणमिति न युक्तम्, इञंशे तदसम्भवेन तत्साहचर्यादणंशेऽपि तदप्रवृत्तेः। **परे तु** 'वतण्डाच्चे'ति सूत्रं माऽस्त्वित्याशयेन 'किमर्थमिदमुच्यते न गर्गादिभ्य इत्येव सिद्धं, लुक् स्त्रियामित्यपि तत्रैवोच्येते'त्याशङ्क्य 'आङ्गिरस इति विच्छिद्येते'त्युक्तं भाष्ये। तदाशयस्तु पूर्वपक्षे सम्यगेव, तत्र पूर्वसूत्रे आङ्गिरस इत्युक्त्वाऽनाङ्गिरसे यञभाववदत्रापि तदभाव एवोचितः, विधित्वस्यैवोचित्यात्। योगविभागसामर्थ्येन कपिबोधयोरिवाऽस्यापि गणे पाठाऽभाव एवानुमीयते। गणे पाठे तु आङ्गिरस इत्येतद्विच्छेदेनाऽनाङ्गिरसेऽपि यञ् स्यादिति। शिवादिगणपाठोऽपि यदि प्रामाणिकस्तदाऽनाङ्गिरसे चरितार्थस्य तस्याङ्गिरसे यञा बाधः। एवञ्चाऽनाङ्गिरसे वातण्ड्यायनीति

निवृत्तम् । शिवस्यापत्यं शैवः । गाङ्गः । पक्षे तिकादित्वात् फिञ् । गाङ्गायनिः । शुभ्रादित्वाड्ढक् । गाङ्गेयः । **अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः** ।४।१।११३। अवृद्धेभ्यो नदीमानुषीनामभ्योऽण् स्यात् । ढकोऽपवादः । यामुनः । नार्मदः । चिन्तिताया अपत्यं चैन्तितः । अवृद्धेभ्यः किम् ? । वासवदत्तेयः । नदीत्यादि किम् । वैनतेयः । तन्नामिकाभ्यः किम् ? । शोभनाया अपत्यं शौभनेयः । **ऋष्यन्धकवृष्णिकुरुभ्यश्च**

---

**त.]** सामर्थ्याद्भविष्यति किमनेनाऽण्ग्रहणेन । अत्राहुः-ऋषिषेणशब्दोऽत्र गणे पठ्यते, ततः प्राप्तमिञं बाधित्वा परत्वात् 'सेनान्तलक्षणे'ति ण्ये प्राप्ते इह पाठसामर्थ्याद्यथाप्राप्तप्रत्यय इञेव स्यान्न त्वण् । तथा चाऽत्राऽण्ग्रहणमावश्यकमित्येके । अणधिकारादणेव स्यान्नाऽन्य इत्यण्ग्रहणं स्पष्टप्रतिपत्त्यर्थमित्यन्ये । शिव, ककुत्स्थ, वतण्ड, जरत्कारु, विपाट् । तक्षन्, विश्रवण, रवण, ऋषिषेण, विरूपाक्षेत्यादि । **गोत्र इति निवृत्तमिति** । एतच्च वृत्तौ कैयटे च स्थितम् । यद्यपि 'गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारः' इति 'यूनि लु'गिति सूत्रस्थभाष्यकैयटाभ्यां लभ्यते, तथापि तन्मतान्तरमिति भावः । एवं चेतः प्रभृत्यपत्यसामान्ये प्रत्यया भवन्तीति स्थितम् । शुभ्रादित्वान्नित्यं ढकि प्राप्ते जरत्कारुशब्दोऽत्राणर्थं पठ्यते । जारत्कारवः । ढकि तु 'ढे लोपोऽकद्र्वाः' इत्युलोपः । जारत्कारेयः । कुञ्जादित्वात् 'गोत्रे कुञ्जादिभ्यः' इति नित्यं च्फञि प्राप्ते विपाट्शब्दोऽत्राऽणर्थं पठ्यते । वैपाशः । वैपाशायन्यः । 'सेनान्तलक्षणे'ति ण्यप्रत्यये 'उदीचामि'ञीति च प्राप्ते तक्षन्शब्दोऽत्राऽणर्थं पठ्यते, ण्यप्रत्ययेन समावेशोऽत्रेष्यते, न त्विञा । ताक्ष्णः । ताक्षण्यः । विश्रवणरवणशब्दावत्र पठ्येते, तौ च विश्रवःशब्दस्यादेशौ । विश्रवसोऽपत्यं-वैश्रवणः । रावणः ।

**अवृद्धाभ्यो** । 'अवृद्धेभ्यो नदीमानुषीनामभ्यः' इत्येव सूत्रयितुं युक्तमित्याशयेन व्याचष्टे-**अवृद्धेभ्य इत्यादिना** ।

---

**बा.]** सूत्रस्य भाष्यकैयटयोस्तु गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इति लभ्यते । तत्तु मतान्तरमित्येके । तदेव युक्तमिति शब्देन्दुशेखरे प्रपञ्चितम् । **अवृद्धाभ्यो नदी** । नदीमानुषीशब्दापेक्षमवृद्धाभ्य इति स्त्रीत्वम् । वस्तुतस्तु 'अवृद्धेभ्यो नदीमानुषीनामभ्य' इत्येव सूत्रयितुमुचितिमिति व्याचष्टे—**अवृद्धेभ्य इत्यादि** । ननु 'तस्यापत्य'मित्येव सिद्धे किमर्थमिदमित्यत आह—**ढकोऽपवाद इति** । चिन्तिता नाम काचिन्मानुषी । **वासवदत्तेय इति** । वासवदत्ता नाम काचिन्मनुष्यस्त्री । तस्या अपत्यमिति विग्रहः । वृद्धसंज्ञकत्वादणभावे ढगिति भावः । **वैनतेय इति** । विनताया अपत्यमिति विग्रहः । विनता नाम गरुडमाता, सा न मानुषी, नापि नदीति भावः । **शौभनेय**

---

**शे.]** चिन्त्यमेवेत्याहुः । **निवृत्तमिति** । इदं वृत्त्यनुसारेण । यूनिलुक्सूत्रभाष्ये 'गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकार' इति ध्वनितत्वात् । तत्र भाष्येऽपत्याधिकारात्परं शास्त्रीयगोत्रग्रहणे गार्ग्यायणादिभ्यो युवप्रत्ययान्तेभ्यः समूहादौ गोत्रत्वप्रयुक्तो वुञ् न स्यादित्याशङ्क्यापत्याधिकारात्परं प्रवराध्यायप्रसिद्धरूपलौकिकगोत्रग्रहणे 'गोत्रोक्षोष्ट्र' इति सूत्रे राजन्यमनुष्यग्रहणं ज्ञापकमित्युक्तम् । अनन्तरापत्ये गाङ्गेयादि तु जामदग्न्यादिवदारोपेण साधु । न चैवं गार्गीप्रभृतिभ्यो यूनि ढग्न स्यात्, यूनो गोत्रत्वाऽभावात्, सूत्रन्तु दात्तेयीत्यादौ चरितार्थमिति वाच्यम्, 'उदीचां वृद्धा'दिति सूत्रेऽगोत्रादित्युक्तिसामर्थ्येन, 'इतश्चे'ति सूत्रेऽनिञ इत्युक्तिसामर्थ्येन च गोत्रप्रत्ययान्तप्रकृतिभ्योऽप्येषां विशिष्य विधानेन तत्सामर्थ्याद्यञिञोश्चेतिवद्यून्युत्पत्तिसिद्धेः । शास्त्रीयगोत्रन्तु-युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । तदर्थकत्वञ्च वास्तवं, शास्त्रप्रक्रियानिर्वाहाय शास्त्रकल्पितं वा । परत्र लौकिकग्रहणमपि यत्र शास्त्रीयग्रहणे गमकाऽभावस्तत्रैव । अत एव 'कण्वादिभ्यो गोत्रे' इत्यत्र, 'अणिञो'रित्यादौ च शास्त्रीयस्यैव ग्रहणम् । राजन्यमनुष्यशब्दयोर्लोके जातिप्रकारकबोधजनकत्वेऽपि प्रक्रियादशायां 'राजश्वशुरा'दित्यादेर्गोत्राधिकारे पाठात्कल्पितं शास्त्रीयगोत्रार्थकत्वम् । अत एव राजन्यादिभ्य 'उदीचां वृद्धा'दिति फिञ्न । अत एव ग्लुचुकस्य युवापत्यं ग्लौचुकायन इत्यत्र फिञन्ताद्यूनि फिञ्न । वृत्तिमते तु स दुर्वारः । लौकिकञ्च प्रवराध्यायप्रसिद्धम् । लोके तत्रैव गोत्रव्यवहारात्, 'अणिञोः' 'स्त्रीपुंसाभ्या'मिति सूत्रस्थभाष्यस्वरसाच्च । न च 'शिवादिभ्यः' इत्यत्राऽण्ग्रहणं व्यर्थम् । न च बाधकबाधनार्थमिञ एव विधिस्यं स्यादतोऽण्ग्रहणम् । तद्बाधकस्यैवाऽभावात् । तत्रेञ्बाधनार्थं शिवादिभ्यो यथा विहितमित्येवाऽण्सिद्धेरिति प्रकृतसूत्रभाष्योक्तमसङ्गतं स्यात् । 'शिवादिभ्यो गोत्र एवेञ्नान्यत्रे'ति नियमेन चारितार्थ्येनाऽण्ग्रहणं विना तदसिद्धेरिति वाच्यं, विधिनियमसम्भवे विधेरेव ज्यायस्त्वेन विधित्वानुरोधेनाऽण एव विधिरिति भाष्याशयात् । अण्ग्रहणं त्वत्र पठिताद्दृषिषेणशब्दादिञ्बाधकस्य सेनान्तलक्षणण्यस्य सत्त्वेनेञ एव विधानं स्यान्न त्वण इतीति भाष्ये एव स्पष्टम् । तत्र शास्त्रीयस्य प्रत्ययान्तवाच्यत्वाल्लौकिकमपत्यप्रत्ययान्तं प्रवराध्यायप्रसिद्धमेव । यत्तु खण्डिकादिसूत्रे 'जनपदशब्दात्क्षत्रिया'दित्यधिकारस्थप्रत्ययान्तद्वन्द्वरूपात्क्षुद्रकमालवाद् 'गोत्रोक्ष' इति वुञि क्षौद्रकमालवकमित्युक्तं, तत्तत्र लौकिकगोत्रत्वारोपेण निर्वाह्यम् । अतिप्रसङ्गस्तु 'आरोपे सति निमित्तानुसरण'मिति न्यायेन परिहार्यः । 'अपत्याधिकारात्पर'मिति भाष्ये परशब्दोऽन्यपर्यायः । ततः पूर्वस्मिन् 'यञञोश्चे'ति लुग्विधायके 'स्त्रीपुंसाभ्या'मिति सूत्रभाष्येण लौकिकगोत्रग्रहणस्योक्तत्वादित्यन्यत्र विस्तरः । 'अवृद्धाभ्य' इत्यादेर्विशेष्यं-प्रकृतिभ्य इति । 'नदीमानुषीभ्य' इत्यप्यर्थद्वारकं तद्विशेषणं, तदाह—**अवृद्धेभ्य इत्यादि** । **ऋष्यन्धक** । अन्धकादयस्त्रयो वंशाः । ऋषयः--

।४।१।११४। ऋषयो मन्त्रद्रष्टारः । वासिष्ठः । वैश्वामित्रः । अन्धकेभ्यः— श्वाफल्कः । वृष्णिभ्यः— वासुदेवः । आनिरुद्धः । शौरिरिति तु बाह्वादित्वात् । कुरुभ्यः— नाकुलः । साहदेवः । इञ एवायमपवादो, मध्येऽपवादन्यायात् । अत्रिशब्दात्तु परत्वाड्ढक् । आत्रेयः । **मातुरुत्सङ्ख्यासंभद्रपूर्वायाः** ।४।१।११५। सङ्ख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण्प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः । आदेशार्थं वचनम् । प्रत्ययस्तूत्सर्गेण सिद्धः । स्त्रीलिङ्गनिर्देशोऽर्थापेक्षः । तेन धान्यमातुर्न । सङ्ख्येति किम् ? । सौमात्रः । शुभ्रादित्वा[त्-] द्वैमात्रेयः । **कन्यायाः कनीन च** ।४।१।११६। ढकोऽपवादोऽण्, तत्सन्नियोगेन कनीनादेशश्च । कानीनो व्यासः कर्णश्च । अनूढाया एवापत्यमित्यर्थः । विकर्णशुङ्गच्छगलाद्वत्स-

---

त.] आत्रेय इति । परत्वादयमृष्यणं बाधत इति भावः । **द्वैमातुर इति** । 'तद्धितार्थे' इत्यादिना समासः । अत्र 'द्वयोर्मात्रोरपत्य'मिति विग्रहो, न तु 'द्विमात्रोरपत्य'मिति । 'दिक्संख्ये संज्ञाया'मिति नियमेनाऽसंज्ञायां समासाऽसंभवात् । **धान्यमातुर्नेति** । 'अभिव्यक्तपदार्थाः' इत्यनेन जननीवाचिन एव ग्रहणे सिद्धेऽपि तस्य स्पष्टप्रतिपत्त्यर्थः स्त्रीलिङ्गनिर्देश इति भावः । 'अभिव्यक्ते'त्यस्याऽनित्यताया ज्ञापनार्थ इति त्वन्ये । **कन्यायाः** । ननु कन्या ह्यक्षतयोनिः, तस्याश्चाऽपत्यसंभव एव नास्तीत्याशङ्क्याह—**अनूढाया इति** । अविवाहिताया इत्यर्थः । **विकर्ण** ।

---

बा.] इति । शोभनाशब्दोऽयं न नदीमानुषीनामेति भावः । **ऋष्यन्धक** । प्रलीना वेदास्तपोबलवशाद्यान् अर्षन्ति= प्राप्नुवन्ति ते ऋषयः । तथा च तैत्तिरीये श्रुतम्—'अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्,त ऋषयोऽभवन्, तदृषीणामृषित्व'मिति । अजाः=नित्याः, पृश्नयः=शुक्लाः । शुद्धा इति यावत् । तान्तपस्यमानांस्तपश्चरतः स्वयम्भु=अनादि ब्रह्म वेदः अभ्यानर्षत् । 'ऋष गतौ' । आभिमुख्येन प्राप्नोत् । ते वेदस्य अर्षणादृषिशब्दवाच्या अभव'न्निति वेदभाष्यम् । 'सर्गादिसमये वेदान्सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ।' इति पुराणेषु प्रसिद्धं । कात्यायनप्रणीतसर्वानुक्रमणिकाख्यग्रन्थे स्पष्टमेतत् । तदाह—**ऋषयो मन्त्रद्रष्टार इति** । अन्धकशब्देन वृष्णिशब्देन कुरुशब्देन च अन्धकादिवंश्या विवक्षिताः । ऋषिविशेषवाचिभ्योऽन्धकादिवंश्यवाचिभ्यश्चापत्ये अण् स्यादित्यर्थः । इञोऽपवादः । ऋषिभ्य उदाहरति—**वासिष्ठः वैश्वामित्र इति** । **अन्धकेभ्य इति** । अन्धकवंश्यवाचिभ्य उदाह्रियते इत्यर्थः । **श्वाफल्क इति** । श्वफल्कस्यापत्यमिति विग्रहः । **वृष्णिभ्य इति** । वृष्णिवंश्यवाचिभ्य उदाह्रियत इत्यर्थः । **वासुदेव इति** । वसुदेवस्यापत्यमिति विग्रहः । **आनिरुद्ध इति** । अनिरुद्धस्यापत्यमिति विग्रहः । ननु शूरो नाम कश्चिद्वृष्णिवंश्यः, तस्यापत्यं शौरिः कथम्, अण्प्रसङ्गादित्यत आह—**शौरिरिति त्विति** । 'बाह्वादित्वा'दित्यनन्तरमिञा समाधेय'मिति शेषः । **कुरुभ्य इति** । कुरुवंश्यवाचिभ्य उदाह्रियते इत्यर्थः । नकुलसहदेवौ प्रसिद्धौ । नन्वत्रेरपत्यमित्यर्थे 'इतश्चानिञ' इति ढकि आत्रेय इति कथम्, ऋष्यणा इञ इव ढकोपि बाधौचित्यादित्यत आह—**इञ एवेति** । न तु ढक इत्यर्थः । **मातुरुत्** । **द्वैमातुर इति** । द्वयोर्मात्रोरपत्यमिति विग्रहः । 'तद्धितार्थे' इति समासः । अण् । ऋकारस्योकारः । रपरत्वम् । **एवं षाण्मातुरः सांमातुर इति** । समीचीना माता संमाता, संमातुरपत्यं सांमातुरः । अण् । उत् । रपरत्वं । **भाद्रमातुर इति** । भद्रा चासौ माता चेति विग्रहः । अणादि पूर्ववत् । ननु 'तस्यापत्य'मित्येव सिद्धेऽण्विधिर्व्यर्थ एवेत्यत आह—**आदेशार्थं वचनमिति** । उदादेशस्य अण्सन्नियोगेन विध्यर्थमित्यर्थः । ननु धान्यं यो मिमीते तस्यापि मातुर्ग्रहणं कुतो न स्यात् । तथा च तत्रापि द्वैमातुरादिकं प्राप्नोतीत्यत आह—**स्त्रीलिङ्गनिर्देशोऽर्थापेक्ष इति** । मातृगतं स्त्रीत्वं शब्दे आरोप्य 'सङ्ख्यासम्भद्रपूर्वाया' इति निर्दिश्यते । अतः स्त्रीलिङ्गस्य मातृशब्दस्य जननीवाचकस्य ग्रहणमित्यर्थः । **तेन धान्यमातुर्नेति** । अत्र मातृशब्दस्य परिच्छेत्तृवाचिनः पुंलिङ्गत्वादिति भावः । **सौमात्र इति** । सुमातुरपत्यमित्यर्थे 'तस्यापत्य'मित्यण् । सङ्ख्यासम्भद्रपूर्वत्वाऽभावात् नायमण्, उत्त्वमपि तत्सन्नियोगशिष्टत्वान्नेति भावः । ननु द्वैमात्रेय इति कथम्, सङ्ख्यापूर्वकतया अण उत्त्वस्य च दुर्वारत्वादित्यत आह—**शुभ्रादित्वादिति** । 'शुभ्रादिभ्यश्चे'ति ढकि रूपमित्यर्थः । **कन्यायाः क** । 'कनीने'ति लुप्तप्रथमाकम् । **ढक इति** । 'स्त्रीभ्यो ढ'गिति विहितस्येत्यर्थः । **कनीनादेशश्चेति** । 'प्रकृते'रिति शेषः । भारते व्यासः कर्णश्च

---

शे.] मन्त्रद्रष्टारः । ऋषिः-वेदस्तद्द्रष्टृत्वाच्च तेषां तत्त्वम् । **मातुरुत्** । अर्थगतं स्त्रीत्वं शब्दे आरोप्य 'पूर्वाया' इति निर्देशः । मातृशब्दस्य जननीवाचिन एव ग्रहणम्, अभिव्यक्तपदार्थकत्वात् । **द्वैमातुरे**—द्वयोर्मात्रोरपत्यमिति 'तद्धितार्थे' इति समासः । **तेन धान्येति** इदं चिन्त्यं, तादृशस्त्रीवारणायाभिव्यक्तेत्यस्यावश्यकत्वात् । लिङ्गविशिष्टपरिभाषया प्राप्तिः । **वैमात्रेय इति** । एवञ्च विमातृशब्दो न प्रत्युदाहार्य इति भावः । **अनूढाया एवेति** । न त्वक्षतयोनित्वं कन्यात्वमिति भावः । वत्सादीनां मूलपुरुषत्वाद्विकर्णा.

**भरद्वाजाऽत्रिषु** ।४।१।११७। अपत्येऽण् । वैकर्णो वात्स्यः [चेत्] । वैकर्णिरन्यः । शौङ्गो भारद्वाजः । शौङ्गिरन्यः । छागल आत्रेयः । छागलिरन्यः । केचित्तु 'शुङ्गे'त्याबन्तं पठन्ति । तेषां ढक् प्रत्युदाहरणम् । शौङ्गेयः । **पीलाया वा** ।४।१।११८। तन्नामिकाऽणं बाधित्वा 'द्व्यच' इति ढकि प्राप्ते पक्षेऽण् विधीयते । पीलाया अपत्यं पैलः । पैलेयः । **ढक् च मण्डूकात्** ।४।१।११९। चादण् । पक्षे इञ् । माण्डूकेयः । माण्डूकः । माण्डूकिः । **स्त्रीभ्यो ढक्** ।४।१।१२०। स्त्रीप्रत्ययान्तेभ्यो ढक् स्यात् । वैनतेयः । बाह्वादित्वात्सौमित्रिः । शिवादित्वात्सापत्नः । **द्व्यचः** ।४।१।१२१। द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् स्यात् । तन्नामिकाऽणोऽपवादः । दात्तेयः । 'पार्थ' इत्यत्र तु 'तस्येद'मित्यण् । **इतश्चाऽनिञः** ।४।१।१२२। इकारान्ताद् द्व्यचोऽपत्ये ढक् स्यात्

---

त.] वात्स्यादीनामपत्यप्रत्ययान्तानां द्वन्द्वे 'यञञोश्च' 'अत्रिभृगुकुत्से'ति सूत्राभ्यामपत्यप्रत्ययस्य लुक् । न चात्र वत्सादीनामेव द्वन्द्वोऽस्त्विति शङ्क्यं, मूलभूतानां तेषां विकर्णादीन्प्रत्यपत्यत्वाऽभावादतो व्याचष्टे—**वात्स्य इत्यादि** । 'युगपदधिकरणवचनतायां बहुत्वमस्ती'ति 'शरद्वच्छुनक' सूत्र एवोक्तम् । **पक्षे इञिति** । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः । **स्त्रीभ्यो ढक्** । बहुवचननिर्देशान्न स्वरूपस्य ग्रहणं, नाप्यर्थस्य, ढगर्थतया शुभ्रादिषु विमातृशब्दपाठात् । किं तु स्त्र्यधिकारोक्तटाबादेर्ग्रहणं, न तु विप्रकृष्टक्षिप्रादेरित्याशयेनाह—**स्त्रीप्रत्ययान्तेभ्य इत्यादिना** । तेन 'दरदोऽपत्यं दारदः' इत्यत्र ढक् न भवति । स्त्र्यर्थग्रहणे तु स्यादेवाऽत्र ढक् । दरच्छब्दो हि जनपदक्षत्रियवाचीति ततोऽपत्यार्थे 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' 'द्व्यञ्मगधे'त्यणि तस्य स्त्रियाम् 'अतश्चे'ति लुकि दरच्छब्दस्य स्त्र्यर्थवाचित्वात् । 'ढक् चे'ति वर्तमाने पुनरिह ढग्ग्रहणमण्संबद्धस्य ढको निवृत्त्यर्थम् । यद्यपि 'चानुकृष्टं नोत्तरत्रे'ति परिभाषया अणिह न प्रवर्तते तथापि तस्या अनित्यत्वज्ञापनाय ढग्ग्रहणमित्याहुः । **तस्येदमिति** । शिवादित्वादपत्य एवाऽणित्यन्ये । **इतश्च** । इतः किम् ? । दाक्षिः । अनिञः किम् ? । दाक्षायणः । द्व्यचः किम् ? । उदधेरपत्यमौदधः । काशिकायां तु 'मरीचेर्मारीचः' इत्युदाहृतं, तदसत् । बाह्वादित्वेनेञ्प्रवृत्तेः । न चास्य बाह्वादित्वमविवक्षितम्, 'मरीचिशब्दो बाह्वादिषु

---

बा.] कन्यायाः पुत्रौ इति प्रसिद्धम् । ननु कन्याया अप्रादुर्भूतयौवनत्वात्पुंसंयोगाऽभावात्कथमपत्यसम्बन्ध इत्यत आह- **अनूढाया इति** । अलब्धविवाहाया इत्यर्थः । एतच्च भाष्ये स्पष्टम् । **विकर्ण** । वत्सादिशब्दैस्तद्वंश्या विवक्षिताः । विकर्ण, शुङ्ग, छगल एभ्योऽण् स्यात्, वत्सवंश्ये भरद्वाजवंश्येऽत्रिवंश्ये चापत्ये इत्यर्थः । एतेन वत्सादीनां मूलपुरुषत्वाद्विकर्णादीन्प्रत्यपत्यत्वाऽसम्भव इति निरस्तम् । 'विकर्णादिभ्यो वात्स्यादिष्वेव ऋष्य'णिति नियमार्थं सूत्रं ।

**पीलाया वा** । 'अपत्येऽ'णिति शेषः । पीला नाम काचिन्मानुषी । **तन्नामिकाणमिति** । वाग्रहणाऽभावे त्वनेनाऽणा नित्यमेव ढको बाधः स्यात् । नच महाविभाषयाऽणः पाक्षिकत्वात्तदभावे ढक् भवत्येवेति वाच्यं, महाविभाषया अपवादे निषिद्धे उत्सर्गो न प्रवर्तत इति ज्ञापनात् । अन्यथा शैवः शैविरित्यादिः स्यात्, **ढक् च** । मण्डूको नाम ऋषिः । **पक्षे इञिति** । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः । **स्त्रीभ्यो ढक्** । स्त्रीशब्देन टाबादयः स्त्रीप्रत्ययाश्चातुर्थिका गृह्यन्ते, न त्वन्येऽपि स्त्रीवाचकाः, व्याख्यानादित्याह—**स्त्रीप्रत्ययान्तेभ्य इति** । विनता नाम गरुडमाता, तस्या अपत्यमिति विग्रहः । प्रत्ययग्रहणं किम् ? । दरत्कश्चित्क्षत्रियः, तस्यापत्यं स्त्री दरत् । 'द्व्यञ्मगधे'त्यण् । 'अतश्चे'ति तस्य लुक् । तस्या अपत्यं—दारदः । अत्र दरच्छब्दस्य स्त्रीलिङ्गत्वेऽपि स्त्रीप्रत्ययान्तत्वाऽभावान्न ढक् । ननु सुमित्राया अपत्यं सौमित्रिः, सपत्न्या अपत्यं सापत्न इति कथं, ढक्प्रसङ्गादित्यत आह—**बाह्वादित्वादित्यादि** । सापत्नशब्दे पुंवत्त्वं नेति प्रागेवोक्तम् । **द्व्यचः** । ननु 'स्त्रीभ्यो ढ'गित्येव सिद्धे किमर्थमिदमित्यत आह—**तन्नामिकेति** । **दात्तेय इति** । दत्ता नाम काचिन्मानुषी, तस्या अपत्यमिति विग्रहः ।

ननु पृथाया अपत्यं पार्थ इति कथम्, तन्नामिकाऽणं बाधित्वा 'द्व्यचः' इति ढक्प्रसङ्गादित्यत आह—**पार्थ इत्यत्रेति** । शिवादित्वादपत्य एवाऽणित्यन्ये । **इतश्चाऽनिञः** । अस्त्रीप्रत्ययान्तार्थमिदम् । दुलिः निधिश्च—कश्चित् ।

---

शे.] दीन्प्रत्यपत्यत्वाऽसम्भवाद्वत्सादयस्तदपत्ये आरोपितप्रवृत्तिनिमित्तका इत्याशयेनाह—वात्स्यश्चेदिति । पक्षे इति । पूर्वसूत्राद्वाग्रहणानुवृत्तेरिति भावः । स्त्रीभ्यो । स्त्रीशब्दः स्वर्यते । तेनाऽधिकार्थोऽवगतिरित्याशयेनाह—स्त्रीप्रत्ययेति । तदन्तप्रातिपदिकादित्यर्थः । तदन्तस्य प्रातिपदिकत्वञ्च लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वादीनां तद्विशिष्टे बोधनादक्षतम् । ते च टबादय एव, व्याख्यानात् । एतेन दरदोऽपत्यं दारद इत्यत्र न ढक् । तत्र दरदोऽपत्यं स्त्रीत्यर्थेऽणि स्त्रीप्रत्ययोत्पत्तेः प्रागेवाऽणः 'अतश्चे'ति लुक् । परे त्वत्र 'स्त्रीभ्य' इत्यर्थग्रहणमेव । अत एव पितृष्वसृमातृष्वसृभ्यां ढकि लोपविधानं सङ्गच्छते ; दरद्- इडविड्-पृथग्-उशिग्भ्योऽनभिधानाड्ढगभावः, शिवादिपाठाद्वा । ध्वनितञ्चेदं 'ऋष्यन्धके'ति सूत्रे भाष्ये इत्याहुः । निरूपितञ्चेदं भाष्यप्रदीपोद्द्योते । वाग्रहणनिवृत्तये पुनर्ढग्ग्रहणम् । शिवादित्वादिति । तत्र सपत्नेति पाठेऽपि लिङ्गविशिष्टपरिभाषया सपत्नीशब्दादपि भाष्यसामान्यचिन्तया ढकं बाधित्वाऽणिति बोध्यम् । तस्येदमितीति । शिवादित्वादित्युचितं, तस्याकृति-

ध्विजन्तात् । दौलेयः । नैधेयः । **शुभ्रादिभ्यश्च** ।४।१।१२३। ढक् स्यात् । शुभ्रस्यापत्यं शौभ्रेयः । [**विकर्णकुषीतकात्काश्यपे** ।४।१।१२४। अपत्ये ढक् । वैकर्णेयः । कौषीतकेयः । अन्यो—वैकर्णिः । कौषीतकिः । **भ्रुवो वुक् च** ।४।१।१२५। चाड्ढक् । भ्रौवेयः ] । **प्रवाहणस्य ढे** ।७।३।२८। प्रवाहणशब्दस्योत्तरपदस्याचामादेरचो वृद्धिः, पूर्वपदस्य तु वा, ढे परे । प्रवाहणस्यापत्यं प्रावाहणेयः । प्रवाहणेयः । **तत्प्रत्ययस्य च** ।७।३।२९। ढान्तस्य प्रवाहणस्योत्तरपदस्यादेरचो वृद्धिः, पूर्वपदस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः । प्रवाहणेयिः । बाह्यतद्धितनिमित्ता वृद्धि-र्ढाश्रयेण विकल्पेन बाधितुं न शक्यत इति सूत्रारम्भः । **कल्याण्यादीनामिनङ्** ।४।१।१२६। एषा-मिनङादेशः स्याड्ढक्च । काल्याणिनेयः । बान्धकिनेयः । **कुलटाया वा** ।४।१।१२७। इनङ्मात्रं विकल्प्यते

त.] पठ्यते' इति 'मिदचोऽन्त्यात्परः' इति सूत्रे भाष्ये स्थितत्वात् । **शुभ्रादिभ्यश्च** । चकारस्त्वाकृतिगणत्वद्योतनार्थं इत्याहुः । मृकण्डशब्दोऽत्र पठ्यते । मार्कण्डेयः । शुभ्र, मृकण्ड, अश्व, विमातृ, विधवा, गोधा, प्रवाहणेत्यादि । आकृतिगणोऽयम् । तेन 'पाण्डवेय' इत्यादि सिद्धम् । इहाऽदन्तेषु इञ् प्राप्तः, विधवाशब्दात्क्षुद्रालक्षणो ढक्, चतु-ष्पाज्जातिवाचिषु ढञ्, गोधाशब्दाड्ढ्रग्वचनात्सोऽपि भवति, क्वचिदौत्सर्गिकोऽण् प्राप्त इति बोध्यम् । **प्रवाहणस्य ढे** । उत्तरपदस्येत्यधिक्रियते । 'अर्धात्परिमाणे'त्यतः 'पूर्वस्य तु वा' इति अनुवर्तते । तदाह—**उत्तरपदस्या-चामादेरित्यादि** । नित्यमुत्तरपदवृद्धेः फलं तु 'प्रवाहणेयीभार्यः' इत्यत्र 'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधः । **तत्प्रत्ययस्य च** । 'प्रवाहणस्य' इति वर्तते । तच्छब्देन ढप्रत्ययः परामृश्यते । तदाह—**ढान्तस्येत्यादि** । **बाह्य-तद्धितनिमित्तेति** । ढक्प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्तेत्यर्थः । **कल्याण्यादीनाम्** । इह परस्त्रीशब्दः पठ्यते । 'परस्य स्त्री परस्त्री'ति षष्ठीसमासः । पारस्त्रैणेयः । परभार्यायामुत्पन्न इत्यर्थः । अनुशतिकादित्वादुभयपद-वृद्धिः । विदादिगणे तु 'परस्त्री परशुं चे'ति पठ्यते । 'प्राप्नोती'ति शेषः । तत्र परा चासौ स्त्री चेति कर्मधारयः ।

बा.] **आत्रेय इति** । अत्रिः-प्रसिद्धः । परत्वादयमृष्यणमपि बाधत इति भावः । **शुभ्रादिभ्यश्च** । **ढक् स्यादिति** । शेषपूरणम् । इञाद्यपवादः । **शुभ्रस्यापत्यमिति** । अस्त्रीत्वादप्राप्तौ ढगिति भावः । **विकर्णकुषीत** । **अपत्ये ढगिति** । शेषपूरणम् । 'काश्यप एवे'ति नियमार्थं शुभ्रादिभ्यः पृथक् पाठः । **भ्रुवो वुक् च** । **चाड्ढगिति** । भ्रूशब्दादपत्ये ढक् स्यात्प्रकृतेर्वुगागमश्च । वुकि ककार इत् । उकार उच्चारणार्थः । कित्त्वादन्तावयवः । **भ्रौवेय इति** । भ्रूर्नाम काचित्, तस्या अपत्यमिति विग्रहः । ढकि एयादेशे प्रकृतेर्वुकि आदिवृद्धिः । वुगभावे तु ऊकारस्य वृद्धौ आवादेशे 'भ्रावेय' इति स्यात् । **प्रवाहणस्य** । उत्तरपदस्येत्यधिकृतम् । 'तद्धितेष्वचामादे'रित्यतोऽचामादेरि-त्यनुवर्तते । 'मृजेर्वृद्धि'रित्यतो वृद्धिरिति, 'अर्धात्परिमाणस्य पूर्वस्य तु वे'त्यतः पूर्वस्य वेति च । तदाह— **प्रवाहणशब्दस्येति** । **प्रावाहणेयः प्रवाहणेय इति** । शुभ्रादित्वाड्ढकि पूर्वपदस्य पाक्षिकी आदिवृद्धिः । उत्तरपदस्य नित्यम् । उत्तरपदे आकारस्य वृद्धेः फलं तु 'प्रवाहणेयीभार्य' इत्यत्र 'वृद्धिनिमित्तस्य चे'ति पुंवत्त्व-प्रतिषेध एव । **तत्प्रत्ययस्य च** । पूर्वसूत्रे यदनुवृत्तं तत्सर्वमिहाप्यनुवर्तते । तच्छब्देन ढप्रत्ययः परामृश्यते । तदाह—**ढप्रत्ययान्तस्येति** । **प्रावाहणेयिः प्रवाहणेयिरिति** । शुभ्रादिढगन्तादिञ् । ननु पूर्वसूत्रेणैव सिद्धत्वादिदं व्यर्थमित्यत आह—**बाह्येति** । ढक्प्रत्ययान्ताद्बहिर्भूतो य इञ् तन्निमित्ता 'तद्धितेष्वचामादे'रिति नित्या आदिवृद्धिः । **ढाश्रयेणेति** । ढप्रत्यये परे विहितेनेति यावत् । तथाविधेन वृद्धिविकल्पेन पूर्वसूत्रविहितेन बाधितुं न शक्यते, भिन्ननिमित्तकत्वादित्यर्थः । पूर्वसूत्रं हि केवलढप्रत्ययान्ते ढप्रत्ययं परनिमित्तत्वेनाश्रित्य प्रवृत्तं ढन्निमित्तामादिवृद्धिं बाधत इति युक्तं, न त्विञ्प्रत्ययनिमित्तामपि नित्यामादिवृद्धिम् । अतस्तस्या अपि बाधनार्थमिदं सूत्रमित्यर्थः । इदं वृद्धिविधिद्वयमपि 'शुभ्रादिभ्यश्चे'त्यत्रैव वक्तुं युक्तम् । **कल्याण्या** । इनङि ङकार इत् । **काल्याणिनेय इति** । कल्याण्या अपत्यमिति विग्रहः । **बान्ध-किनेय इति** । बन्धक्या अपत्यमिति विग्रहः । अत्र गणे ङीप्रत्ययान्ता एव पठ्यन्ते । तेभ्यो ढक्सिद्ध

शे.] गणत्वात् । **इतश्च** । अनिञः किम् ? । दाक्षायणः । इतः किम् ? । दाक्षिः । **प्रवाहणस्य** । उत्तरपदस्येत्यधिकारः । 'अर्द्धात्परिमाणस्ये'त्यतः पूर्वस्य तु वेति चानुवर्त्तते, तदाह—**शब्दस्योत्तरपदेति** । शब्दस्येत्यवयवषष्ठी । प्रवाहणः—शुभ्रादिः । उत्तरपदस्य वृद्धिमत्त्वेऽपि तद्विधानं पूर्वपदस्य वृद्ध्यभावेऽपि 'वृद्धिनिमित्तस्ये'ति पुंवत्त्वप्रतिषेधार्थम् । 'जातेश्चे'ति निषेधस्त्व-स्मादेव ज्ञापकादनित्य इति बोद्धव्यम् । **तत्प्रत्य** । तच्छब्देन ढः परामृश्यते । प्रवाहणस्येति च वर्त्तते । **बाह्येति** । स चेञ् । इत उत्तरं **विकर्णेत्यादिभ्रौवेय**—इत्यन्तो ग्रन्थः । विपरीयलेखस्तु लेखकप्रमादात् । **कल्याण्यादि** । ढकि सिद्धेऽपीनङर्थ-

ढक्तु नित्यः पूर्वेणैव । कौलटिनेयः । कौलटेयः । सती भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः 'क्षुद्राभ्यो वे'ति पक्षे ढ्रक् । कौलटेरः । हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ।७।३।१९। हृदाद्यन्ते पूर्वोत्तरपदयोरचामादेरचो वृद्धिर्ञिति णिति किति च । सुहृदोऽपत्यं सौहार्दः । सुभगाया अपत्यं सौभागिनेयः । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तेषु भवः साक्तुसैन्धवः । चटकाया ऐरक् ।४।१।१२८। ॐचटकस्येति वाच्यम् । लिङ्गविशिष्टपरिभाषया स्त्रिया अपि । चटकस्य चटकाया वा अपत्यं चाटकैरः । ॐस्त्रियामपत्ये लुग्वक्तव्यः । तयोरेव स्त्र्यपत्यं चटका । अजादित्वाट्टाप् । गोधाया ढ्रक् ।४।१।१२९। गौधेरः । शुभ्रादित्वात्पक्षे ढक् । गौधेयः । आरगुदीचाम् ।४।१।१३०। गौधारः । रका सिद्धे आकारोच्चारणमन्यतो विधानार्थम् । जडस्यापत्यं जाडारः । पण्डस्यापत्यं पाण्डारः । क्षुद्राभ्यो वा

त.] परस्त्रिया अपत्यं-पारशवः । ब्राह्मणाच्छूद्रायां तेनैवोढायामुत्पन्नः । सा च जात्यन्तरयोगात्परस्त्री । न च परश्वादेशस्य स्थानिवद्भावात्पारशवेऽपि 'अनुशतिकादीनां चे'त्युभयपदवृद्धिः स्यादिति वाच्यं, सत्यादेशे पूर्वोत्तरपदसंप्रमोहात्तद-प्रवृत्तेः । इह गणे स्त्रीप्रत्ययान्तानां ढकः सिद्धत्वादिनङर्थं ग्रहणम् । अन्येषां तूभयार्थम् । कल्याणी, सुभगा, दुर्भगा, बन्धकी, परस्त्रीत्यादि । कुलटाया वा । शकन्ध्वादित्वात्पररूपमत एव निपातनाद्वा । सती भिक्षुक्यत्रेति । अत्र=इनङ्विधौ । तथा चोक्तममरेण—'अथ बान्धकिनेयः स्याद्बन्धुलश्चाऽसतीसुतः । कौलटेरः कौलटेयो भिक्षुकी तु सती यदि । तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः' इति । केचित्तु क्षुद्राया अपि इनङ तृतीयं रूपं कौलटिनेय इतीच्छन्ति । पक्षे ढ्रगिति । ढगपि पक्षे भवत्येवेति भावः । हृद्भग । 'पूर्वपदस्य चे'ति चकारेण 'उत्तरपदस्य' इत्यनुकृष्यते । तदाह—पूर्वोत्तरपदयोरिति । 'महते सौभगाये'त्यत्र तूद्गात्रादित्वादञ् । छान्दसत्वान्नोत्तरपदवृद्धि-रित्याशयः । 'चटकायाः' इति स्त्रीलिङ्गनिर्देशात्पुंसि न स्यादित्याशङ्क्याह—चटकस्येति वाच्यमिति । एवं च 'चटकादैरगि'त्येव सांप्रदायिकः पाठ इति न्यासकृदुक्तिर्वार्तिकविरोधादुपेक्ष्या । तयोरेवेति । तत्र टाबन्तात्तद्धित-लुकि 'लुक्तद्धितलुकी'ति टापो लुकि जातिलक्षणङीषं बाधित्वा अजादिलक्षणष्टाबिति भावः । गौधेर इति । ढस्य एयादेशे कृते 'लोपो व्यो'रिति यलोपः । आरगुदीचाम् । वचनादेव ढ्रगढकारकां पर्याये सिद्धे 'उदीचां'ग्रहणं पूजार्थम् । 'अरक्' इति न सूत्रितं, 'यस्येति चे'त्याकारलोपे 'गौधरः' इत्यनिष्टप्रसङ्गात् । अन्यत इति । अना-कारान्ताल्लक्ष्यानुरोधेन कुतश्चिदित्यर्थः । पण्डस्येति । पण्डो नपुंसकः, तस्यापत्यं तु कृत्रिमादिरिति । क्षुद्राभ्यः ।

बा.] एव । इनङेव तु विधीयते । कुलटाया वा । इनङ्मात्रमिति । व्याख्यानादिति भावः । पूर्वेणैवेति । 'स्त्रीभ्यो ढ'गित्यनेनेत्यर्थः । कुलानि गृहाणि अटतीति कुलटा । शकन्ध्वादित्वात्पररूपम् । अत्रेति । 'कुलटाया वे'ति सूत्रे इत्यर्थः । पक्षे ढ्रगिति । ढ्रगपि कदाचिद्भवतीत्यर्थः । कौलटेर इति । कुलटाया ढ्रकि ढकारस्य एयादेशे 'लोपो व्यो'रिति यकारलोप इति भावः । हृद्भग । हृदाद्यन्त इति । हृत्, भग, सिन्धु-एतदन्तेषु समासेष्वित्यर्थः । चकारादुत्तरपदस्येत्यनुकृष्यते । तदाह—पूर्वोत्तरपदयोरिति । सौहार्द इति । अणि उभयपदादिवृद्धिः । ऋकारस्य तु आकारो रपरः । सौभागिनेय इति । कल्याण्यादित्वाड्ढकि इनङि उभयपदा-दिवृद्धिरिति भावः । एतत्प्रसङ्गादेव इदं सूत्रमत्रोपन्यस्तम् । 'महते सौभगाय' इत्यत्र तु उद्गात्रादित्वाद्भावे अञ् । उत्तरपदादिवृद्ध्यभावश्छान्दसः । सिन्धव इति । अश्वा इत्यर्थः । चटकायाः । चटकाशब्दादपत्ये ऐरक्प्रत्ययः स्यादित्यर्थः । ननु स्त्रीलिङ्गनिर्देशात्पुंलिङ्गान्न स्यादित्यत आह—चटकादिति । सूत्रे 'चटकाया' इत्यपनीय 'चटका'-दिति वाच्यमित्यर्थः । तर्हि स्त्रीलिङ्गान्न स्यादत आह—लिङ्गेति । स्त्रिया अपीति । स्त्रीलिङ्गादप्यैरगित्यर्थः ।

तयोरिति । चटकस्य चटकायाश्चेत्यर्थः । ननु चटकेति कथं, जातित्वान्ङीष्प्रसङ्गादित्यत आह—अजादित्वा-दिति । गोधाया ढ्रक् । गौधेर इति । गोधाया अपत्यमिति विग्रहः । ढ्रकि ढकारस्य एयादेशे 'लोपो व्यो'रिति यलोपः । कित्त्वादादिवृद्धिरिति भावः । आरगुदीचां । गोधाया आरग्वा स्यादित्यर्थः । अन्यत इति । आकारान्तादन्यत् अदन्तं, तस्मादपि क्वचिद्विधानार्थमित्यर्थः । जाडार इति । रग्विधौ आकारो न श्रूयेतेति भावः । पण्डो—नपुंसकः, तस्यापत्यं क्षेत्रजातत्वादिना । क्षुद्राभ्यो वा । अङ्गहीना इति । चक्षुरादिकतिपयावयव-

शे.] मिदम् । ढक्तु नित्य इति । वृत्त्यादिव्याख्यानादिति भावः । पूर्वेण='स्त्रीभ्य' इत्यनेन । अत्र—इनङ्विधौ । पक्षे इति । तदभावे ढगित्यर्थः । हृद्भग । चादुत्तरपदस्य । 'महते सौभगाये'त्यादौ तूद्गात्रादित्वादञि छान्दसत्वान्नोत्तरपदवृद्धिः । स्त्रीलिङ्ग-निर्देशात्पुंसि न स्यादत आह—चटकस्येति । एवञ्च सूत्रे 'चटकाया' इति व्यर्थमित्याह—लिङ्गविशिष्टेति । अजादित्वा-दिति । अत्र सामान्येन द्वयोरनुकरणमिति भावः । क्षुद्राभ्यो । अर्थनिर्देशोऽयम् । तदभिधायिप्रकृतिभ्यश्चायं प्रत्ययः ।

।४।१।१३१। अङ्गहीनाः शीलहीनाश्च क्षुद्राः,ताभ्यो वा ढ्रक् । पक्षे ढक् । काणेरः । काणेयः । दासेरः । दासेयः । **पितृष्वसुश्छण्** ।४।१।१३२। अणोऽपवादः । पैतृष्वस्रीयः । **ढकि लोपः** ४।१।१३३। पितृष्वसुरन्त्य[स्य]लोपः स्याड्ढकि । अतएव ज्ञापकाड्ढक् । पैतृष्वसेयः । **मातृष्वसुश्च** ।४।१।१३४। पितृष्वसुर्यदुक्तं तदस्यापि स्यात् । मातृष्वस्रीयः । मातृष्वसेयः । **चतुष्पाद्भ्यो ढञ्** ।४।१।१३५। **ढे लोपोऽकद्र्वाः** ।६।४।१४७। कद्रूभिन्नस्योवर्णान्तस्य [भस्य] लोपः स्याड्ढे परे । कामण्डलेयः । कमण्डलुशब्दश्चतुष्पाजातिविशेषे । **गृष्ट्यादिभ्यश्च** ।४।१।१३६। एभ्यो ढञ् स्यात् । अण्ढकोरपवादः । गार्ष्टेयः । मित्रयोरपत्यम् । ऋष्यणि प्राप्ते ढञ् । **केकयमित्रयुप्रलयानां यादेरियः** ।७।३।२। एषां यकारादेरियादेशः स्याञ्ञिति णिति किति च तद्धिते परे । इति-इयादेशे प्राप्ते- **दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनि-**

---

त.] अर्थगतं स्त्रीत्वं शब्दे आरोप्य स्त्रीलिङ्गनिर्देशः । **गृष्ट्यादिभ्यश्च** । गृष्टि, हृषि, हलि, बलि, कुद्रि, अगस्ति, मित्रयु । **अण्ढकोरपवाद इति** । इहान्त्ययोर्द्वयोर्ऋषित्वादण् प्राप्तः, अन्येभ्यस्तु 'इतश्चानिञः' इति ढगिति विवेकः । **गार्ष्टेय इति** । सकृत्प्रसूता सर्वापि गृष्टिः, न तु गौरेव । अतोऽत्र न 'चतुष्पाद्भ्यः' इत्यनेन ढञ्सिद्धिः ।

**केकय** । केकयस्यापत्यं स्त्री 'कैकेयी' । 'जनपदशब्दात्क्षत्रियादञ्' । 'मैत्रेयिकया श्लाघ्यते' । मित्रयूनां भावेने-त्यर्थः । 'गोत्रचरणाच्छ्लाघात्याकारे'ति वुञ् । तत्र हि लौकिकं गोत्रं गृह्यते, लोके च 'ऋषिशब्दो गोत्रमिति प्रसिद्ध'मिति काशिका । एतच्च यदा मित्रयुशब्दोऽभेदोपचारात्तदपत्यसंताने वर्तते तदा बोध्यम्, अन्यथा 'मित्र-यूनामि'ति बहुवचनान्तेन विग्रहो न स्यात् । प्रलयादागतं 'प्रालेयम्' । इयादेशो वृद्धिं न बाधते, 'अचामादेरचो वृद्धिः,' 'यादेरियादेशः' इति भिन्नविषयत्वात्, अङ्गं तूभयोर्विशेषणं न तु कार्यीति हरदत्तः । आदिवृद्धेरपीदमेव सूत्रं विधायकमस्तु, किमनेन विषयभेदविचारेणेत्यन्ये । **दाण्डिनायन** । **निपात्यन्त इति** । दण्डिन्, हस्तिन्-भ्यां नडादित्वात्फक्, निपातनाट्टिलोपाऽभावः । वसन्तादिषु 'अथर्वन्' इति पठ्यते । 'अथर्वणा प्रोक्तो ग्रन्थ उप-

---

बा.] विकला इत्यर्थः । **शीलहीना इति** । सद्वृत्तहीना इत्यर्थः । यथेष्टपुरुषसंचारिण्य इति यावत् । 'अनियतपुंस्का अङ्गहीना वा क्षुद्राः' इति भाष्यम् । **पितृष्वसुश्छण्** । **पैतृष्वस्रीय इति** । पितृस्वसुरपत्यमिति विग्रहः । छस्य ईयादेशे आदिवृद्धिः । सकारादृकारस्य यण् । **ढकि लोपः** । 'पितृष्वसु'रित्यनुवर्तते । अलोऽन्त्यपरिभाषयाऽन्त्यस्य लोपः । तदाह—**पितृष्वसुरन्त्यस्य लोप इति** । ननु पितृष्वसुरपत्ये ढक एव दुर्लभत्वात्कथं तस्मिन्परे लोप-विधिरित्यत आह—**अत एवेति** । शुभ्रादित्वाड्ढगित्यन्ये । **पैतृष्वसेय इति** । ढकि अन्त्यस्य ऋकारस्य लोपे आदिवृद्धिः । 'मातृपितृभ्यां स्वसे'ति षत्वम् । **मातृष्वसुश्च**। चकाराच्छण्, ढकि लोपश्चानुकृष्यते । तदाह—**पितृ-ष्वसुर्यदुक्तमिति** । **चतुष्पाद्भ्यो** । चतुष्पादः—पशवः । तद्विशेषवाचिभ्योऽपत्ये ढञित्यर्थः । **ढे लोपोऽ-कद्र्वाः** । भस्येत्यधिकृतम् 'ओर्गुणः' इत्यत ओरिति षष्ठ्यन्तेनानुवृत्तेन विशेष्यते । तदन्तविधिः । तदाह—**कद्रूभिन्नस्येति** । 'अलोऽन्त्यस्ये'त्यन्त्यलोपः । ओर्गुणापवादः । **कामण्डलेय इति** । कमण्डलोरपत्यमिति विग्रहः । ढकि एयादेशे आदिवृद्धावुकारलोपः । ननु कमण्डलुशब्दवाच्यस्य जलपात्रस्याऽचेतनस्य कथमपत्ययोगः, तत्राह—**कमण्डलुशब्दश्चतुष्पाज्जातिविशेषे इति** । अत एव 'कमण्डलुपदे आदधीते'ति बह्वृचब्राह्मणं सङ्ग-च्छत इति भावः । **गृष्ट्यादिभ्यश्च** । **अण्ढकोरिति** । गृष्टि, हलि, बलि, कुठि, अगस्ति, मित्रयु एते गृष्ट्या-दयः । अत्राऽन्त्ययोर्ऋषित्वादण्प्राप्तः । अन्येभ्यस्तु 'इतश्चाऽनिञः' इति ढक्प्राप्त इति विवेकः । सकृत्प्रसूता मानुष्यादिरपि गृष्टिः, नतु गौरेव । ततश्च 'चतुष्पाद्भ्यः' इत्यनेन न प्राप्तिः । **केकयमित्रयु** । 'तद्धितेष्वचामादे'-रित्यतस्तद्धितग्रहणमनुवर्तते । 'अचो ञ्णिति' 'किति चे'त्यतो ञ्णितीति, कितीति च । तदाह—**एषामिति** । आदेशे यकारादकार उच्चारणार्थः । केकयस्यापत्यं स्त्री कैकेयी । 'जनपदशब्दात्' इत्यञ् । मैत्रेयिकया श्लाघते । मित्रयोर्भाव इत्यर्थे 'गोत्रचरणा'दिति वुञ् । प्रलयादागतं प्रालेयम् । अण् । अत्र सर्वत्र यादेरियादेश इत्युदाहर-णानि । **प्राप्ते इति** । मित्रयोरपत्ये ढञि एयादेशे मित्रयु-एय. इति स्थिते ओर्गुणं बाधित्वा यु इत्यस्य इयादेशे सति आद्गुणे मैत्रेयेय इति प्राप्ते सतीत्यर्थः । **दाण्डिनायन** । **एतानि निपात्यन्ते इति** । दण्डिनो हस्तिनश्चापत्यं दाण्डिनायनः, हास्तिनायनः । नडादित्वात्फक् । निपातनाट्टिलोपो न । अथर्वणा प्रोक्तो ग्रन्थ उपचारादथर्वा । तमधीते आथर्वणिकः । वसन्तादित्वाट्ठक् । निपातनाच्च टिलोपः । जिह्माशिनोऽपत्यं जैह्माशिनेयः । शुभ्रादित्वाड्ढक् । निपातनाच्च टिलोपः । वाशिनोऽपत्यं वाशिनायनिः । 'उदीचां वृद्धा'दिति फिञ् । निपातनान्न टिलोपः । भ्रूणहन्,

---

शे.] शीलहीनाः = अनियतपुंस्का दास्यादयः । अङ्गहीनाः = काणादयः । **अत एवेति** । शुभ्रादिपाठकल्पनद्वारेति भावः । प्रमाणान्तरमपि प्रागुक्तम् । **मातृष्व** । चात्पितृष्वसुरित्यनुकृष्यते, षष्ठ्या च विपरिणम्यते इत्याशयेनाह—**पितृष्वसुरिति** ।

**भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि** ।६।४।१७४। एतानि निपात्यन्ते। इति युलोपः । मैत्रेयः। मैत्रेयौ । **यस्कादिभ्यो गोत्रे** ।२।४।६३। एभ्योऽपत्यप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । मित्रयवः । **अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च** ।२।४।६५। एभ्यो गोत्रप्रत्ययस्य लुक् स्यात्, तत्कृते बहुत्वे नतु स्त्रियाम् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः । **बह्वच इञः प्राच्यभरतेषु** ।२।४।६६। बह्वचः परो य इञ्-प्राच्यगोत्रे भरतगोत्रे च वर्तमानः-तस्य लुक् स्यात् । पन्नागाराः।

त.] चारादथर्वा, तमधीते 'आथर्वणिकः'। शुभ्रादिषु 'जिह्माशिन्' इति पठ्यते,तस्यापत्यं जैह्माशिनेयः। वाशिनोऽपत्यं वाशिनायनिः । 'उदीचां वृद्धा'दिति फिञ् । भ्रूणहन्, धीवन्,-अनयोः ष्यञि तकारोऽन्तादेशो निपात्यते । भ्रूणघ्नो भावो भ्रौणहत्यम् । धैवत्यम् । 'हनस्तोऽचिण्णलोः' इत्यनेनैव हन्तेस्तत्वे सिद्धे तकारनिपातनं ज्ञापयति 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञान'मिति । तेन वार्त्रघ्नमित्यत्र तत्वं न । नन्वेवं 'प्रसुङ्भ्या'मित्यादौ 'अनुदात्तस्य चे'त्यम् दुर्वारः स्यात्, अम्विधौ धातोः स्वरूपग्रहणाऽभावात् । अत्राहुः-'मृजेर्वृद्धि'रिति सूत्रस्थभाष्यपर्यालोचनया 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवती'ति ज्ञापनार्थं तकारनिपातनमिति व्याख्येयम् । तेन न कोऽपि दोष इति । 'सरयू' इत्यस्याऽणि परे य्वादेर्वो निपात्यते । सरय्वां भवं 'सारव'मुदकम् । इक्ष्वाकोरपत्यं 'ऐक्ष्वाकः' । 'जनपदशब्दात्क्षत्रियादञ्' । उलोपो निपातनात् । इक्ष्वाकुषु जनपदेषु भवः । 'कोपधादण्' । ऐक्ष्वाकः । अत्राप्युलोपो निपातनादेव । अञणन्तयोर्द्वयोरप्येकश्रुत्या पाठात् । बहुत्वे तु 'अञस्तद्राजत्वाल्लुक्, 'अणस्तु ने'ति विशेषः । तथा च रघुः-'इक्ष्वाकूणां दुरापेऽर्थे' इति । मुरारिस्त्वाह 'ऐक्ष्वाकेषु च मैथिलेषु च फलन्त्वस्माकमद्याशिषः' इति । हिरण्यस्य विकारो हिरण्मयः । मयटि यादेर्लोपोऽत्र निपात्यते । **यस्कादिभ्यो** । अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इत्याशयेनाह—**अपत्यप्रत्ययस्येति** । 'ण्यक्षत्रियार्षे'त्यतो लुगित्यनुवर्तते, 'तद्राजस्ये'ति सूत्रात् 'बहुषु तेनैवास्त्रिया'मिति च, तदाह—**लुक् स्यादित्यादि** । तत्कृते इति किम् ?। प्रिययास्काः । बहुत्वे किम् ? । यास्कः । शिवाद्यण् । यस्क, लुह्य, द्रुह्य, कर्णाटक, वस्ति, कुद्रि, मित्रयु-इत्यादि । **अत्रि** । **गोत्रप्रत्ययस्येति** । अत्रि-

बा.] धीवन्-एतयोर्भावे ष्यञ् । नकारस्य तकारश्च निपात्यते । नच 'हनस्तोऽचिण्णलो'रित्यनेनैव तकारः सिद्ध इति शङ्क्यं, 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवती'ति परिभाषया 'हनस्तः' इति तत्वस्य धातुविहितप्रत्यये पर एव प्रवृत्तेः । इदमेव तकारनिपातनमस्यां परिभाषायां ज्ञापकमिति 'मृजेर्वृद्धि'रित्यत्र भाष्ये स्पष्टम् । तेन वार्त्रघ्नमित्यत्र तत्वं न । सरय्वां भवं सारवम्-उदकम् । अणि यू इत्यस्य व इत्यादेशो निपात्यते । इक्ष्वाकोरपत्यमैक्ष्वाकः । जनपदशब्दात्क्षत्रियादञ् । उकारलोपो निपात्यते । बहुत्वे तु तद्राजत्वाल्लुक् । इक्ष्वाकवः । इक्ष्वाकुषु जनपदेषु भवोऽप्यैक्ष्वाकः । कोपधादण् । उकारलोपश्च । सूत्रे ऐक्ष्वाकेत्यत्र अञणन्तयोर्ग्रहणम् । बहुत्वे तद्राजत्वादञो लुक् । अणस्तु नेति विशेषः । हिरण्यस्य विकारो हिरण्मयः । मयटि णकाराद्यकाराकारयोर्लोपः । **इति युलोप इति** । मित्रयु-एय इति स्थिते यु इत्यस्य लोपो निपातनादिति भावः । मैत्रेयीति 'टिड्ढाण'मिति ङीप् । **यस्कादिभ्यो** । नेदं सूत्रमपत्याधिकारस्थं, किंतु द्वैतीयीकम् । अतो गोत्रशब्देन प्रवराध्यायप्रसिद्धमेव गोत्रमिह विवक्षितम्, 'अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्यते' इति 'यूनि लुक्' 'इति स्त्रीपुंसाभ्या'मित्यादिसूत्रभाष्ये सिद्धान्तितत्वात् । 'ण्यक्षत्रियार्षे'त्यतो लुगित्यनुवर्तते । 'तद्राजस्य बहुषु तेनैवास्त्रिया'मिति सूत्रं तद्राजवर्जमनुवर्तते । तदाह-**एभ्योऽपत्यप्रत्ययस्येति** । **मित्रयव इति** । मित्रयोरपत्यानि पुमांस इत्यर्थः । गृष्ट्यादिढको लुकि आदिवृद्धिनिवृत्तिः । **अत्रिभृगु** । पूर्वसूत्राद्गोत्र इति, तत्र यदनुवृत्तं तच्च सर्वमिहानुवर्तते । तदाह—**एभ्यो गोत्रेति** । अत्रेः, भृगोः, कुत्सस्य, वसिष्ठस्य, गोतमस्य, अङ्गिरसश्च अपत्यानि पुमांस इति विग्रहाः । तत्र अत्रेः 'इतश्चाऽनिञः' इति ढकोऽनेन लुक् । इतरेभ्यस्तु ऋष्यण इति बोध्यम् । लुकि आदिवृद्धेर्निवृत्तिः । **बह्वच इञः** । प्राच्ये उदाहरति-**पन्नागारा इति** । पन्नागारस्यापत्यानीति विग्रहः । अत इञो लुक् । भरतगोत्रे उदाहरति-

शे.] **ढकोरिति**। इदन्तेभ्यो [ह्रष्टिहल्यादिभ्य] इतश्चेति ढक् प्राप्तः। **ढगिति**। गृष्ट्यादित्वात् । **इति युलोप इति** । 'ढे लोपः' इत्यस्य तु न प्राप्तिः, परेणेयादेशेन बाधात् । **अपत्यप्रत्ययस्येति** । प्रवराध्यायप्रसिद्धघटकस्येत्यर्थः । अपत्याधिकारादन्यत्र लौकिकं गोत्रमिति भावः । यस्कस्यापत्यं यास्कः । शिवाद्यण् । तदन्ताद्यूनि 'अणो द्व्यचः' इति फिञि 'यास्कायनय' इत्यत्र युवप्रत्ययस्य तु न लुक्, विहितविशेषणाश्रयणात् । वस्तुतोऽत्र शास्त्रीयं गोत्रम् । भाष्यरीत्या यस्कादिभ्यः शास्त्रीयगोत्र एव प्रत्ययविधानात् । अत एव 'वाऽन्यस्मि'न्निति सूत्रे गोत्रयूनोः समावेशे 'यास्कायनय' इत्यत्र दोषः शङ्कितो भाष्ये । अन्यथा सिद्धान्तेऽप्यस्य समाधेयत्वेन तथैवाचक्षुः परभाष्यास्सूक्तेरित्यलम् । 'तद्राजस्ये'ति सूत्रात् इत्यादि वर्तते । तत्कृतेतिकिम् ?। प्रिययास्काः । बहुत्वे किम् ?। यास्कः । **अत्रि** । अत्रिशब्दात् 'इतश्चे'ति ढक्, अन्येभ्य ऋष्यणिति बोध्यम् । **बहुत्वे इति** ।

युधिष्ठिराः । **न गोपवनादिभ्यः** ।२।४।६७। एभ्यो गोत्रप्रत्ययस्य लुक् न स्यात् । विदाद्यन्तर्गणोऽयम् । गौपवनाः । शैग्रवाः । **तिककितवादिभ्यो द्वन्द्वे** ।२।४।६८। एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् स्याद्द्वन्द्वे । तैकायनयश्च कैतवायनयश्च । 'तिकादिभ्यः फिञ्' । तस्य लुक् । तिककितवाः । **उपकादिभ्योऽन्यतरस्याम-द्वन्द्वे** ।२।४।६९। एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुग्वा स्याद्द्वन्द्वे चाऽद्वन्द्वे च । [ औपकायनाश्च लामकायनाश्च । 'नडादिभ्यः फक्' । तस्य लुक् । उपकलमकाः । औपकायनलामकायनाः ] । भ्राष्टककपिष्ठलाः । भ्राष्टकिकापिष्ठलयः । [ उपकाः । औपकायनाः ] लमकाः । लामकायनाः । **आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्** ।२।४।७०। एतयोरवयवस्य गोत्रप्रत्ययस्याऽणो यञश्च बहुषु लुक्स्यादवशिष्टस्य प्रकृतिभागस्य यथासङ्ख्यमगस्ति कुण्डिनच्

---

त.] शब्दात् 'इतश्चाऽनिञः' इति ढक् । इतरेभ्यस्तु ऋष्यणिति बोध्यम् । भरतगोत्रे उदाहरति-**युधिष्ठिरा इति** । बहुष्वेव लुक् । नेह—यौधिष्ठिरिः । कुरुलक्षणं ण्यं बाधित्वा बाह्वादित्वादिञ् । **विदाद्यन्तर्गणोऽयमिति** । 'यञ-ञोश्चे'ति लुगत्र प्राप्नोतीति भावः । **तिककितवादिभ्यो** । यद्यपि द्वन्द्वरूपाण्येव गणे पठ्यन्ते तिकादीनि पूर्व-पदानि कितवादीन्युत्तरपदानि, तथापि 'तिकादिभ्यः' इत्युक्ते पूर्वपदेष्वेव लुगाशङ्क्येत, इष्यन्ते तूत्तरपदेष्वपि, अतः 'तिककितवादिभ्यः' इत्युक्तम् । **तिककितवा इति** । अन्येऽप्यत्रोदाहर्तव्याः—औपकायनाश्च लामकायनाश्च । 'नडादिभ्यः फक्' तस्य लुक् । उपकलमकाः । भ्राष्टकयश्च कापिष्ठलयश्च । 'अत इञ' तस्य लुक् । भ्राष्टककपिष्ठलाः । कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च । 'अत इञ्' तस्य लुक् । कृष्णाजिनकृष्णसुन्दरा इत्यादि । **उपकादिभ्यो** । अद्वन्द्व-ग्रहणं 'द्वन्द्वे' इत्येतन्नाधिक्रियत इति स्फुटीकरणार्थम् । [ उपकादीनां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते 'उपकलमकाः' इत्यादयस्तेषां पूर्वेण नित्यमेव लुक्, अद्वन्द्वे त्वनेन विकल्प इति ज्ञेयम् ] । भाष्ये 'भ्राष्टकिकापिष्ठ-लयः' इत्युदाहरणात्तिककितवादिष्वस्य पाठोऽनार्ष इति कैयटः । तेनात्र द्वन्द्वेऽपि विकल्प एवोचित इत्याशयेनोदाह-रति–**भ्राष्टककपिष्ठला इत्यादि** । तिककितवादिषु पठितानामनेनाऽद्वन्द्व एव विकल्प इत्याशयेनोदाहरति— **लमकाः । लामकायना इति** । एवमन्येऽप्युदाहर्तव्याः । उपकाः औपकायनाः, भ्राष्टकाः भ्राष्टकायना इत्यादि ।

**आगस्त्य** । अगस्त्यशब्दादृष्यण्, कुण्डिनीशब्दात्तु गर्गादियञ । ननु कुण्डिनीशब्दस्य यञि 'भस्याढे' इति पुंव-द्भावे 'नस्तद्धिते' इति टिलोपः प्राप्नोति । न च 'संयोगादिश्चे'ति प्रकृतिभावः शङ्क्यः, 'अणी'ति तत्रानुवर्तनात् । मैवम् । अस्मादेव निपातनात्तस्याऽप्रवृत्तेः कौण्डिन्यः सिध्यति । चकारस्त्वन्तोदात्तार्थः । मध्योदात्तोहि कुण्डिनीशब्दः । कुण्डमस्त्यस्या इति मत्वर्थीयस्येनेरुदात्तत्वादादेशस्यापि कुण्डिनशब्दस्यान्तरतम्यान्मध्योदात्तत्वात् । **अवशिष्टस्य प्रकृतिभागस्येति** । न च प्रत्ययविशिष्टस्यादेशमात्रं विधीयतां किं लुग्विधानेनेति वाच्यम्, अगस्तीयाश्छात्रा इत्यनापत्तेः, लुकि हि सति 'गोत्रेऽलुगची'ति लुकि प्रतिषिद्धे वृद्धत्वाच्छः सिध्यति । प्रत्ययविशिष्टस्यादेशविधौ तु वृद्धत्वापगमे शैषिकोऽणेव स्यात् । कौण्डिनाश्छात्रा इति तूभयथापि सिध्यत्येव । छापवादस्य 'कण्वादिभ्यो गोत्रे'

---

बा.] **युधिष्ठिरा इति** । युधिष्ठिरस्यापत्यानीति विग्रहः । कुरुलक्षणं ण्यं बाधित्वा बाह्वादित्वादिञ् । तस्य लुक् । अबहुत्वे तु यौधिष्ठिरिः । **न गोप** । **बिदाद्यन्तर्गणोऽयमिति** । ततश्च अञः 'यञञोश्चे'ति प्राप्तस्य लुङ् नेति भावः । **तिककितव** । **तैकायनयश्च कैतवायनयश्चेति** । द्वन्द्वविग्रहप्रदर्शनम् । **तिककितवा इति** । 'द्वन्द्वे' इति सप्तमीनिर्देशात्पदद्वयादपि फिञो लुक् । **उपकादिभ्यो** । चकारमध्याहृत्याह–**द्वन्द्वे चेति** । एवं च अस्व-रितत्वादेव पूर्वसूत्राद्द्वन्द्वग्रहणाननुवृत्त्यैव सिद्धे अद्वन्द्वग्रहणं स्पष्टार्थमेव । नच 'द्वन्द्वे ने'ति निषेध एव किं न स्यादिति वाच्यं, द्वन्द्वानामपि गणे पाठात् । तदेतत्सूचयन्द्वन्द्वमुदाहरति–**भ्राष्टककपिष्ठला इति** । इञो वा लुक् । अद्वन्द्वे उदाहरति–**लमकाः लामकायना इति** । अश्वादिफञो लुग्विकल्पः । 'उपका' 'औपकायना' इत्याद्यप्युदाहार्यम् । **आगस्त्य** । **अगस्तयः** । **कुण्डिना इति** । अगस्त्यशब्दादृष्यणो लुक् । प्रकृतेरगस्त्या-देशः । कौण्डिन्यशब्दो गर्गादियञन्तः । बहुत्वे यञो लुक् । प्रकृतेः कुण्डिनादेशश्च । 'यस्कादिभ्यो गोत्रे' इत्या-

---

शे.] 'तत्कृते न तु स्त्रिया'मित्यपि बोद्धव्यम् । **युधिष्ठिरा इति** । बाह्वादित्वादिञ् । भरतानां प्राच्यत्वादेव सिद्धे पुनरुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणार्थम् । तेन 'इञः प्राचा'मिति लुक् भरतयूनोर्न, यौधिष्ठिरिः पिता, यौधिष्ठिरायणः पुत्र इति । **अन्त-र्गण इति** । गोपवनादयश्च बिदादौ प्राग्घरिताद्बोद्धव्याः । इदमत्रैव भाष्ये स्पष्टम् । 'गर्गभार्गविके'ति समुदायोऽत्र पठ्यते इति 'तद्राजस्ये'ति सूत्रभाष्ये, 'गोत्रेऽलुगची'ति सूत्रभाष्ये च ध्वनितम् । तत्फलं 'तद्राजस्ये'ति सूत्रे निरूपयिष्यामः । **तिककि** । अत्र पूर्वोत्तरपदयोरुभयत्रापि लुक्, अविशेषात् । **उपकादिभ्यो** । 'अद्वन्द्वे' इत्यस्य द्वन्द्व इति नानुवर्तते इत्यर्थस्तदाह—**द्वन्द्वे चाऽद्वन्द्वे चेति** । **भ्राष्टकिकापिष्ठलय इति** । इदं भाष्ये स्पष्टम् । एतेन भ्राष्टककपिष्ठलोऽपि तिककितवादिषु पठ्यते इति इत्युक्तमपास्तम् । **आगस्त्य** । अगस्त्यशब्दादृष्यणिति 'सूर्यतिष्ये'ति सूत्रे कैयटे स्पष्टम् । अगस्तिप्रकृतिकगर्गादियञन्ते तु

एतावादेशौ स्तः । आगस्त्यः । कौण्डिन्याः । **राजश्वशुराद्यत्** ।४।१।१३७। *राज्ञो जातावेवेति वाच्यम् । **ये चाभावकर्मणोः** ।६।४।१६८। यादौ तद्धिते परे अन्प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । श्वशुर्यः । जातिग्रहणाच्छूद्रादावुत्पन्नो राजनः । अन् ।६।४।१६७। अणि अन्प्रकृत्या स्यात् । इति टिलोपो न । अभावकर्मणोः किम् ? । राज्ञः कर्म भावो वा राज्यम् । **संयोगादिश्च** ।६।४।१६६। इन्प्रकृत्या स्यादणि परे । चक्रिणोऽपत्यं चाक्रिणः । **न मपूर्वोऽपत्येऽवर्मणः** ।६।४।१७०। मपूर्वोऽन्प्रकृत्या न स्यादपत्येऽणि । भाद्रसामः । मपूर्वः किम् ? । सौत्वनः । अपत्ये किम् ? । चर्मणा परिवृतश्चार्मणो रथः । अवर्मणः किम् ? । चक्रवर्मणोऽपत्यं चाक्रवर्मणः । * **वा हितनाम्न इति वाच्यम्** । हितनाम्नोऽपत्यं हैतनामः । हैतनामनः । **ब्राह्मो[ऽ]जातौ** ।६।४।१७१। योगविभागोऽत्र कर्तव्यः । 'ब्राह्म' इति निपात्यते अनपत्येऽणि । ब्राह्मं हविः । ततो '[ऽ]जातौ' ।

त.] इत्यण्प्रत्ययस्य प्रवृत्त्या तत्र विशेषाऽभावात् । **राजश्वशुराद्यत्** । क्रमेणाऽणिञोरपवादः । **जातावेवेति** । प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः । प्रत्ययस्त्वपत्य एव । एवं च पङ्कजादिवद्योगरूढ इति फलितोऽर्थः । **टिलोपो नेति** । 'नस्तद्धिते' इति प्राप्तष्टिलोपो नेत्यर्थः । **ब्राह्मो जातौ** । **योगविभागोऽत्रेति** । एकयोगत्वे त्वारम्भसामर्थ्यादनपत्ये जातौ 'ब्राह्मी'त्यत्राऽप्राप्तटिलोपसिद्धावपि 'ब्राह्मण' इति न सिद्ध्येत् । 'अन्' इति प्रकृतिभावस्य 'न मपूर्वोऽपत्ये' इति निषेधाट्टिलोपस्य दुर्वारत्वात् । किंच अजातौ ब्राह्ममित्यादि न सिद्ध्येत्, 'अन्' इति प्रकृतिभावस्य दुर्वारत्वादिति भावः । **ब्राह्म इति** । इह 'अपत्ये' इति न संबध्यते, अन्यथा निपातनमिदं व्यर्थं स्यात्, 'न मपूर्वे'ति प्रकृतिभावनिषेधाट्टिलोपसिद्धेरित्याशयेनाह—**अनपत्येऽणीति** । **ब्राह्ममिति** । 'ब्राह्मो मुहूर्तः',

बा.] रभ्य 'आगस्त्यकौण्डिन्ययोः' इत्यन्तं द्वैतीयीकम् । अथ प्रकृतं चातुर्थिकम्—। **राजश्वशुराद्यत्** । राजन्शब्दाच्छ्वशुरशब्दाच्चापत्ये यत्प्रत्ययः स्यादित्यर्थः । क्रमेण अणिञोरपवादः । **राज्ञो जातावेवेति** । जातिः समुदायवाच्या चेदित्यर्थः । **ये चाभा** । अनिति पूर्वसूत्रमनुवर्तते । 'प्रकृत्यैका'जित्यतः प्रकृत्येति । अत्राधिकारलब्धप्रत्ययो यकारेण विशिष्यते । तदादिविधिः । तदाह—**यादाविति** । **राजन्य इति** । 'क्षत्रियात्क्षत्रियायां स्वभार्यायामुत्पन्नो राजन्य' इति धर्मशास्त्रेषु प्रसिद्धम् । यत्प्रत्यये प्रकृतिभावान्न टिलोपः । **शूद्रादाविति** । क्षत्रियाच्छूद्रायां वा तदन्यस्यां वा अनूढायामुत्पन्न इत्यर्थः । **राजन इति** । अणि रूपम् । तत्र 'नस्तद्धिते' इति टिलोपे प्राप्ते—। **अन्** । 'इनण्यनपत्ये' इत्यतोऽणीत्यनुवर्तते । 'प्रकृत्यैका'जित्यतः प्रकृत्येति च । तदाह—**अणीति** । **राज्यमिति** । 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् । टिलोपः । **संयोगादिश्च** । **इन् प्रकृत्येति** । 'इनण्यनपत्ये' इत्यतः 'प्रकृत्यैका'जित्यतश्च तदनुवृत्तेरिति भावः । **चाक्रिण इति** । 'इनण्यपत्ये' इत्यत्रानपत्ये इति पर्युदासादप्राप्तिः । **न मपूर्वोऽपत्येऽवर्मणः** । **भाद्रसाम इति** । भद्रसाम्नोऽपत्यमिति विग्रहः । अणि टिलोपः । अनो मपूर्वत्वान्न प्रकृतिभावः । **सौत्वन इति** । सुत्वनोऽपत्यमिति विग्रहः । मपूर्वत्वाऽभावात्प्रकृतिभावः । **चार्मण इति** । 'परिवृतो रथः' इत्यणि टिलोपः । अण आपत्यत्वाऽभावात्प्रकृतिभावः । **वा हितनाम्न इति** । 'न मपूर्वः' इति प्रतिषेध' इति शेषः । **ब्राह्मो जातौ** । ब्रह्मन्शब्ददपत्ये अणि 'न मपूर्वोऽपत्ये' इति प्रकृतिभावनिषेधो जातावेवेत्यर्थः फलति । तथा सति ब्रह्मणोऽपत्यं ब्राह्मण इति जातिविशेषे न सिध्येत्, 'न मपूर्वः' इति प्रकृतिभावनिषेधे सति 'नस्तद्धिते' इति टिलोपस्य दुर्वारत्वात् । किंच ब्रह्मा देवता अस्य ब्राह्मं हविरिति न सिध्येत्, 'न मपूर्व' इति प्रकृतिभावनिषेधस्य जातावेवेति नियमितत्वेन अनिति प्रकृतिभावाट्टिलोपाऽसंभवात् । अत आह—**योगविभाग इति** । 'ब्राह्म' इत्येकं सूत्रम् । तत्र 'इनण्यनपत्ये' इत्यतोऽनपत्येऽणीत्यनुवर्तते । तदाह—**ब्राह्म इति निपात्यते**

शे.] 'यञञोश्चे'ति लुका सिद्धम् । कुण्डिनपर्यायनान्तकुण्डिन्शब्दात्तस्य भार्येत्यर्थे ङीपि निष्पन्नकुण्डिनीशब्दाद्गर्गादियञि 'भस्याऽढे' इति पुंवत्त्वे प्राप्तेऽत एव निपातनात्पुंवत्त्वाऽभाव इति 'भस्याऽढे' इत्यत्र भाष्ये स्पष्टम् । एतेन कुण्डिन्प्रकृतिकगर्गादियञन्तस्याप्यत्र ग्रहणमित्यपास्तम् । कुण्डिनीत्येव गर्गादिषु पाठात्ततो यञभावाच्च । **लुगिति** । तेनागस्तीनां छात्रा इत्यर्थविवक्षायां 'गोत्रेऽलुगचि'ति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टादेशनिवृत्तौ वृद्धत्वाच्छे 'आगस्तीया' इति सादिवृद्धिकसिद्धिरिति बोध्यम् । एतेन स्थानिवद्भावेन वृद्धत्वं सुलभमित्यपास्तम् । **येचा** । 'प्रकृत्यैका'जित्यतः प्रकृत्येत्यनुवर्त्तते । तत्र नेति वाच्ये प्रकृत्येत्युक्त्या 'अनन्तरस्ये'ति न्यायं बाधित्वाऽल्लोपो न इति लोपोऽपि निवार्यते इति 'मपूर्वे'ति सूत्रे भाष्ये स्पष्टं, तदाह—**राजन्य इति** । **शूद्रादाविति** । तज्जातीयस्त्रियामित्यर्थः । **टिलोपो**—'नस्तद्धिते' इति प्राप्तः । अल्लोपस्याप्युपलक्षणमिदम् । राज्ये—पुरोहितादित्वाष्यक् । **संयोगादिश्च** । 'इनण्यनपत्ये' इत्यत इनणीति वर्त्ततेऽनपत्य इति च निवृत्तम् । **ब्राह्मोऽ** । एकयोगत्वे अजातौ ब्राह्म इति निपात्यते इत्यर्थेऽपि ब्राह्मणो न सिद्ध्येत्, 'अन्' इति तु 'न मपूर्व' इति निषिद्धमत आह—**योगविभाग इति** । निपातनस्याऽसाधारणं प्रयोजनं कथयत आह—**अनपत्ये इति** । ब्राह्मो नारद इत्यादावपत्ये 'न मपूर्व' इति प्रकृतिभावनिषेधा-

अपत्ये जातावणि ब्रह्मणष्टिलोपो न स्यात् । ब्रह्मणोऽपत्यं ब्राह्मणः । अपत्ये किम् ? । ब्राह्मी औषधिः । औक्षमनपत्ये ।६।४।१७३। अणि टिलोपो निपात्यते । औक्षं पदम् । अनपत्ये किम् ? । उक्ष्णोऽपत्यम् औक्ष्णः । षपूर्वहन्धृतराज्ञामणि ।६।४।१३५। षपूर्वो योऽन् तस्य, हनादेश्च भस्याऽतो लोपोऽणि । ताक्ष्णः । औष्णघ्नः । धृतराज्ञोऽपत्यं धार्तराज्ञः । षपूर्वेति किम् ? । साम्नोऽपत्यं सामनः । अणि किम् ? । ताक्षण्यः । क्षत्राद्घः ।४।१।१३८। क्षत्रियः । जातावित्येव । क्षात्रिरन्यः । कुलात्खः ।४।१।१३९। कुलीनः । तदन्तादपि, उत्तरसूत्रेऽपूर्वपदादिति लिङ्गात् । आढ्यकुलीनः । अपूर्वपदादन्यतरस्यां यड्ढकञौ ।४।१।१४०। कुलादित्येव । पक्षे खः । कुल्यः । कौलेयकः । कुलीनः । पदग्रहणं किम् ? । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः । महाकुलादञ्खञौ ।४।१।१४१। अन्यतरस्यामित्यनुवर्तते । पक्षे खः । माहाकुलः । माहाकुलीनः । महाकुलीनः । दुष्कुलाड्ढक् ।४।१।१४२। पूर्ववत्पक्षे खः । दौष्कुलेयः । दुष्कुलीनः । स्वसुश्छः ।४।१।१४३।

त.] 'ब्राह्मः स्थालीपाकः' इत्याद्यप्युदाहरणम् । नन्वेवमपि ब्राह्मणो न सिध्यति, 'न मपूर्वः' इति प्रकृतिभावनिषेधादपत्येऽणि 'नस्तद्धिते' इति टिलोपप्रवृत्तेरत आह—जाताविति । इह मण्डूकप्लुत्या 'अपत्ये' इत्यनुवर्तते, 'न' इति च । तदेतदाह—अपत्ये जातावित्यादिना । अयमत्रार्थः—'अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवती'ति । केचिदिह 'अजातौ' इति छित्त्वा 'जातौ न भवती'ति व्याचक्षते । तस्मिंस्तु व्याख्याने 'ने'ति नानुवर्तनीयम् । जातौ किम् ? । ब्राह्मो नारदः । ताक्ष्ण इति । शिवादित्वात्, 'तस्येदम्' इति वाऽण् । ताक्षण्य इति । कारिलक्षणो ण्यः । कुलात्खः । केवलात्कुलशब्दात् 'अपूर्वपदा'दित्यादिना विशेषविहिताभ्यामपि यड्ढकञ्भ्यां खो न बाध्यते, तद्विधावन्यतरस्याङ्ग्रहणादित्याशयेनाह—कुलीन इति । लिङ्गादिति । अन्यथा 'ग्रहणवते'ति तदन्तविधिप्रतिषेधादपूर्वपदग्रहणं व्यर्थं स्यादिति भावः । आढ्यकुलीन इति । आढ्यश्चासौ कुलीनश्चेति कुलीनविशेषणत्वे कुलस्याढ्यत्वं न प्रतीयते । किं च ईकार उदात्त इति स्वरेऽपि विशेषोऽस्तीति भावः । बहुकुल्य इति । 'विभाषा

बा.] अनपत्येऽणीति । तथाच ब्रह्मन्शब्दादनपत्येऽणि अनिति प्रकृतिभावनिवृत्तेष्टिलोपः फलित इति मत्वोदाहरति—ब्राह्मं हविरिति । ब्रह्मा देवता अस्येति विग्रहः । 'सास्य देवते'त्यण् । ततो जातावितिं । ततो='ब्राह्म' इति सूत्रात्पृथगेव, जातावितिं सूत्रं कर्तव्यमित्यर्थः । इह 'न मपूर्वोऽपत्येऽवर्मणः' इति सूत्रादपत्ये इति, 'प्रकृत्यैका'जित्यतः प्रकृत्येति चानुवर्तते । तदाह—अपत्ये जातावितिं । ब्राह्मण इति । ब्रह्मणः सकाशात्सजातीयायां भार्यायामुत्पन्न इत्यर्थः । योगविभागस्त्वयं भाष्ये स्पष्टः । औक्षम् । शेषपूरणेन सूत्रं व्याचष्टे—अणि टिलोपो निपात्य इति । 'अन्' इति प्रकृतिभावापवाद इति भावः । औक्षमिति । टिलोपे रूपम् । औक्ष्ण इति । अपत्येऽणि टिलोपाऽभावेऽल्लोप इति भावः । ननु प्रकृतिभावादल्लोपो न स्यादत आह—षपूर्वहन् । 'अल्लोपोऽनः' इत्यनुवर्तते । 'भस्ये'त्यधिकृतं, तदाह—षपूर्व इति । ताक्ष्ण इति । 'तक्ष्णोऽण उपसङ्ख्यान'मिति कारिलक्षणण्यस्यापवादोऽण् । ताक्षण्य इति । 'सेनान्तलक्षणकारिभ्यश्च' इति ण्यः । क्षत्राद्घः । 'अपत्ये' इति शेषः । क्षत्रिय इति । घस्य इयादेशे 'यस्येति चे'त्यकारलोपः । क्षात्रिरन्य इति । क्षत्राच्छूद्रादावुत्पन्न इत्यर्थः । कुलात्खः । 'अपत्ये' इति शेषः । कुलीन इति । खस्य ईनादेशः । ननु 'समासप्रत्ययविधौ' इति तदन्तविधिनिषेधादाढ्यकुलीन इति कथमित्यत आह—तदन्तादपीति । आढ्यकुलीन इति । आढ्यकुलशब्दात्कर्मधारयात्खः । कुले आढ्यत्वप्रतीतिरत्र फलम् । कुलीनशब्देन कर्मधारये तु तदप्रतीतिरिति भेदः । अपूर्वपदादन्यतरस्याम् । कुलादित्येवेति । पूर्वपदरहितात्कुलादपत्ये यड्ढकञौ वा स्त इत्यर्थः । पक्षे ख इति । यड्ढकञोरभावपक्षे इत्यर्थः । बहुकुल्य इति । 'विभाषा सुपः' इपि बहुच्प्रत्ययो न पदम् । अतः पूर्वपदरहितत्वाद्यड्ढकञ्खा भवन्त्येवेत्यर्थः । महाकुलादञ्खञौ । अनुवर्तत इति । अन्यथा महाविभाषाधिकारे अपवादेन मुक्ते उत्सर्गस्याऽप्रवृत्तेः पीलाया वे'त्यत्रोक्तत्वात्पूर्वसूत्रोक्तः खो न स्यादिति भावः । तदाह—पक्षे ख इति । तथा सति आदिवृद्धिर्नेति भावः । दुष्कुलाड्ढक् । पूर्ववदिति । अन्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः । स्वसुश्छः । 'अपत्ये' इति शेषः । स्वस्रीय इति । छस्य ईयादेशः, ऋकारस्य यण् । भ्रातु-

शे.] ष्टिलोपः सिद्धः । एवञ्चात्र निपातनसामर्थ्यादपत्य इति न सम्बद्ध्यते । अजातावितिं असमर्थसमासः । अत्र मण्डूकप्लुत्याऽपत्य इति सम्बद्ध्यते । तदाह—अपत्ये जातावितिं । जातौ किम् ? । ब्राह्मो नारदः । औक्ष्ण इति । ननु प्रकृतिभावाल्लोपोऽपि न स्यादत आह—षपूर्वेति । ताक्ष्णे 'तक्ष्णोऽण उपसङ्ख्यान'मित्यण् । ताक्षण्ये—कारिलक्षणो ण्यः । क्षत्रात् 'घ' इति स्वरूपग्रहणं । व्याख्यानात् । लिङ्गादिति । अन्यथा प्रत्ययविधौ तदन्तविधिनिषेधात्तद्व्यर्थं स्यादिति भावः । आढ्यकुलीन इति । एवञ्च ईकार उदात्तः । कुले [च]आढ्यत्वप्रतीतिः । कुलीनशब्देन समासे तु तदप्रतीतिरिति भावः । बहुकुल्य इति । बहुच्प्रत्ययः । पक्षे ख इति । तेनाऽऽदिवृद्धिरहितमपि । पूर्ववदिति । 'अन्यतरस्यामित्यनुवृत्त्ये'ति शेषः ।

स्वस्रीयः । भ्रातुर्व्यच्च ।४।१।१४४। चाच्छः । अणोऽपवादः । भ्रातृव्यः । भ्रात्रीयः । व्यन्सपत्ने ।४।१।१४५। भ्रातुर्व्यन्स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये । भ्रातृव्यः शत्रुः । 'पाप्मना भ्रातृव्येणे'ति तूपचारात् । रेवत्यादिभ्यष्ठक् ।४।१।१४६। ठस्येकः ।७।३।५०। अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः । गोत्रस्त्रियाः कुत्सने ण च ।४।१।१४७। गोत्रे या स्त्री तद्वाचकाच्छब्दाण्णठकौ स्तः कुत्सायाम् । सामर्थ्याद्यूनि । गार्ग्या अपत्यं गार्गो गार्गिको वा जाल्मः । 'भस्याऽढे तद्धिते' इति पुंवद्भावाद्गार्ग्यशब्दाण्ण-

त.] सुपः' इति बहुच्प्रत्ययो न पदमिति अपूर्वपदत्वात्प्रत्ययत्रयं भवत्येति भावः । व्यन्स्यादिति । भ्रातुरपत्यं यदि शत्रुस्तदा भ्रातृशब्दाद्व्यन्नेव स्यान्न तु व्यच्छौ इत्यर्थः । समुदायेनेति । तद्धितप्रत्ययेन शत्रुरूपेऽपत्ये वाच्य इत्यर्थः । यत्तु वृत्तिकृतोक्तम्—'अपत्यार्थोऽत्र नास्त्येवे'ति, तदुपेक्ष्यं, भाष्यविरोधादिति मनसि निधायाह-पाप्मनेति । श्रुतिगतभ्रातृव्यशब्दस्य गतिं वदति-उपचारादिति । 'अस्त्री पङ्कं पुमान्पाप्मा पापं किल्बिषकल्मष'मित्यमरः । न हि पापं भ्रातुरपत्यं भवतीत्यतो भाक्त एवायं प्रयोग इति भावः । रेवत्या । रेवती, अश्वपाली, मणिपाली, द्वारपाली-इत्यादि । ठस्येकः । 'अङ्गस्ये'त्यनुवर्तनादाह-अङ्गात्परस्येति । 'अङ्गा'दिति ठकारविशेषणादठच्छकारस्य न भवति । कर्मठः । गोत्रस्त्रियाः । णित्वं तु ग्लुचुकायन्या अपत्यं ग्लौचुकायनो जाल्मः' इत्यत्र फिन्ताण्णे वृद्ध्यर्थमिति बोध्यम् । सामर्थ्याद्यूनीति । 'गोत्राद्यपरो गोत्रप्रत्ययो ने'त्युक्तत्वादिति भावः । गार्ग्या अपत्यमिति । पितुरसंविज्ञाने मात्रा व्यपदेशात्कुत्सा । गोत्रेति किम् ? । कारिकेयो जाल्मः । स्त्रियाः किम् ? ।

बा.] व्यंच्च । तकारः 'तित्स्वरित'मिति स्वरार्थ इति बोध्यम् । व्यन्सपत्ने । अपत्ये इति । प्रत्ययेनाऽपत्यमुच्यते । भ्रातृशब्दार्थस्तु न विवक्षितः । तथाच भ्रातृशब्दोत्तरत्वे व्यन्प्रत्ययार्थः शत्रुरिति भाष्ये स्पष्टम् । ननु 'पाप्मना भ्रातृव्येणे'ति कथं, पाप्मनोऽपत्यत्वाऽभावादित्यत आह-उपचारादिति । हिंसकत्वगुणयोगाल्लाक्षणिक इत्यर्थः ।

रेवत्यादिभ्यष्ठक् । 'अपत्ये' इति शेषः । ढगापवादः । ठस्येकः । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । तदाह—अङ्गात्परस्य ठस्येति । ठकारस्येत्यर्थः । रैवतिक इति । रेवत्या अपत्यमिति विग्रहः । ठकि ककार इत्, अकार उच्चारणार्थः । ठकारस्य इकोऽवन्त आदेशः । अङ्गात्किम् ? । कर्मठ इत्यत्र ठकारस्य न भवति । अत्र भाष्ये अङ्गसंबन्धिठस्येति व्याख्याने कर्मठ इत्यत्र सुपं प्रति कर्मठशब्दस्याङ्गत्वात्तदीयठस्य इकादेशमाशङ्क्य अङ्गसंज्ञानिमित्तं यष्ठकारस्तस्येको भवति, तादृशश्च ठकारः प्रत्यय एव भवति, नचेह ठकारः प्रत्यय इति समाहितम् । ततश्च ठकि अकार उच्चारणार्थः, ठकार एव प्रत्यय इति विज्ञायते । 'ठस्येति सङ्घातग्रहण'मित्यपि भाष्ये स्थितम् । अस्मिन्पक्षे ठकि अकार उच्चारणार्थो न भवति, सङ्घात एव प्रत्ययः, इकादेशे अकार उच्चारणार्थ एवेत्यलम् ।

गोत्रस्त्रियाः । 'ण' इति लुप्तप्रथमाकं । चाट्ठगनुकृष्यते । तदाह-गोत्रं या स्त्रीत्यादिना । सामर्थ्यादिति । 'एको गोत्रे' इति नियमादिति भावः । गार्ग्या अपत्यमिति । गर्गस्य गोत्रापत्यं स्त्री गार्गी । 'गर्गादिभ्यः' इति यञ् । 'यञश्चे'ति ङीप् । 'यस्येति चे'त्यकारलोपः । 'हलस्तद्धितस्ये'ति यकारलोपः । गार्ग्या अपत्यं युवेति विग्रहः । पितुरविज्ञाने मात्रा व्यपदेशः कुत्सनम् । यद्यपि णप्रत्यये ठक इकादेशे च 'यस्येति चे'ति लोपे गार्ग, गार्गिकः इति सिध्यति, तथापि वस्तुस्थितिमाह—पुंवद्भावादिति । 'भस्याऽढे' इति पुंवत्वे सति ङीपो निवृत्तौ भूतपूर्वगत्या स्त्रीवाचकत्वमादाय गार्ग्यशब्दाण्णठकावित्यर्थः । नच 'वृद्धिनिमित्तस्य चे'ति पुंवत्त्वनिषेधः शङ्क्यः, सौत्रस्यैवायं निषेधो न तु 'भस्याढे' इति वार्तिकस्येत्युक्तत्वात् । 'भस्याढे' इत्यस्य तद्धिते विवक्षिते प्रवृत्तिमभ्युपगम्य गार्ग्यशब्दादित्युक्तम् । तच्च समूहाधिकारे 'भिक्षादिभ्योऽ'णित्यत्र स्फुटीभविष्यति । स्त्रियाः किम् ? । औपगवस्यापत्यं युवा औप-

शे.] शत्रुरिति । अपत्ये इति कल्पितार्थेनान्वाख्यानमात्रमिति भावः । सपत्नशब्दे सह युद्धाय पततीति विग्रहे पतेर्नप्रत्ययः, सहस्य सादेश इत्याहुः । अङ्गस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यते, तदाह—अङ्गादिति । तेनाऽठच्छस्य न । अत्र ठस्येत्यागन्तुनाऽकारेणोच्चारणार्थेन निर्देशः । वर्णमात्रं स्थानि । ठगादिप्रत्ययेष्वपि वर्णमात्रं प्रत्ययः, उच्चारणार्थोऽकारः, आदेशस्त्वकारान्तः । अत एव वर्णग्रहणपक्षे 'कर्मठ' इत्यत्र दोषवारणायाऽङ्गस्य निमित्तं यष्ठकार इति भाष्ये व्याख्यातम् । यद्यपि सङ्घातग्रहणपक्षोऽपि भाष्ये उक्तः, अव्युत्पत्तिपक्षाश्रयणेन कण्ठादिषूणादिषु न दोषः, माथितिकेऽपि पञ्चमीसमासेनाऽल्लोपस्य स्थानिवद्भावान्न दोषः, सन्निपातपरिभाषया वा । 'कर्मठ' इत्यत्रार्थवत्परिभाषया न दोषः, तथापि लघुत्वाद्वर्णग्रहणपक्ष एव युक्त इति बोध्यम् । पुंवद्भावादिति । 'वृद्धिनिमित्तस्ये'त्यादिनिषेधः सौत्रस्यैव, न 'भस्याऽढे' इत्यस्येति भावः । स च प्रत्ययोत्पत्तेः प्रागेवेत्याह—गार्ग्यशब्दादिति । पुंवत्त्वेनाऽर्थस्य निवृत्तावपि भूतपूर्वगोत्रस्त्रीवाचकत्वं गृहीत्वाऽत्र णठकौ, तद्विवक्षामुपजीव्यैव पुंवत्त्वप्रवृत्तेः । स्त्रियाः किम् ? । औपगवस्यापत्यं युवौपगविः । प्रकरणादिगम्याऽत्र कुत्सा । गोत्रेति किम् ? । कारिकेयः । ... णित्वं ग्लुचुकायन्या अपत्यं-ग्लौचुकायन इत्यादौ वृद्ध्यर्थम् । वतण्ड्या अपत्यं-वातण्डो जाल्म इत्यत्र तु पुंवद्भावेन ङीब्लुकोर्निवृत्तौ मा सिद्धेति

ठकौ। 'यस्ये'ति लोपः। 'आपत्यस्ये'ति यलोपः। **वृद्धाट्ठक् सौवीरेषु बहुलम्** ।४।१।१४८। सुवीरदेशोद्भवाः सौवीराः। वृद्धात्सौवीरगोत्राद्यूनि बहुलं ठक्स्यात्कुत्सायाम्। भागवित्तेर्भागवित्तिकः। पक्षे फक्। भागवित्तायनः। **फेश्छ च** ।४।१।१४९। फिञन्तात्सौवीरगोत्रादपत्ये छः, ठक्च कुत्सने गम्ये। यमुन्दस्यापत्यं यामुन्दायनिः। तिकादित्वात्फिञ्। तस्यापत्यं—यामुन्दायनीयः। यामुन्दायनिकः। कुत्सने किम्?। यामुन्दायनिः। औत्सर्गिकस्याऽणो 'ण्यक्षत्रिये'ति लुक्। सौवीरेति किम्?। तैकायनिः। **फाण्टाहृतिमिमताभ्यां णफिञौ** ।४।१।१५०। **सौवीरेषु**। नेह यथासङ्ख्यम्, अल्पाच्तरस्य परनिपाताल्लिङ्गादिति वृत्तिकारः। भाष्ये तु यथासङ्ख्यमेवेति स्थितम्। फाण्टाहृतः। फाण्टाहृतायनिः। मैमतः। मैमतायनिः। **कुर्वादिभ्यो ण्यः** ।४।१।१५१। अपत्ये। कौरव्या ब्राह्मणाः। वावदूक्याः। ( ग ) **सम्राजः क्षत्रिये**। साम्राज्यः। साम्राजोऽन्यः। **सेनान्तलक्षणकारिभ्यश्च** ।४।१।१५२। एभ्यो ण्यः। 'एति संज्ञाया'मिति सस्य षः। हारि-

---

**त.]** औपगवस्यापत्यम् औपगविर्जाल्मः। कुत्सने किं?। गार्ग्यो माणवकः। **फाण्टाहृति**। 'कुत्सने' इति निवृत्तम्। वृत्तिमते णित्वस्य फलमस्तीति ध्वनयन्नुदाहरति—**मैमत इति**। न च भाष्यमतेऽपि 'फाण्टाहृताभार्यः' इत्यत्र 'वृद्धिनिमित्तस्ये'ति पुंवद्भावनिवृत्तिर्णित्वफलमस्तीति वाच्यम्, 'अस्त्रिया'मिति युवसंज्ञानिषेधाद्गोत्रसंज्ञासद्भावात् 'एको गोत्रे' इति नियमादिञन्तात्फाण्टाहृतिशब्दादन्यस्यापत्यप्रत्ययस्याऽभावात्फाण्टाहृताशब्दस्यैवाऽसत्त्वादिति भावः। **कुर्वादिभ्यो**। 'सौवीरेषु' इत्यपि निवृत्तम्। **कौरव्या ब्राह्मणा इति**। यत्तु 'कुरुनादिभ्यो ण्य' इति वक्ष्यति तस्य तद्राजत्वाद्बहुषु लुकि 'कुरवः क्षत्रियाः' इति भवति, न तु 'कौरव्याः' इति भावः। **वावदूक्या इति**। वदेर्यङन्तादूकप्रत्ययः। स चात्रैव गणे निपातनादित्याहुः। कुरु, गर्ग, वावदूक। **सम्राजः क्षत्रिये इति**। सम्राड्शब्दाण्ण्य इत्यर्थः। 'वामरथस्य कण्वादिवत्स्वरवर्जम्'। यञन्तस्य काण्व्यशब्दस्य यत्कार्यं तण्ण्यप्रत्ययान्तस्य वामरथ्यशब्दस्य स्यात्, आद्युदात्तं विनेत्यर्थः। बहुत्वे 'यञञोश्चे'ति लुक्। वामरथाश्छात्राः। 'कण्वादिभ्यो गोत्रे' इति छापवादोऽण्। वामरथी। वामरथ्यायनी स्त्री। 'यञश्च'। 'प्राचां ष्फ तद्धितः' इति ङीष्फौ। वामरथानि सङ्घाङ्कलक्षणानि। 'सङ्घाङ्कलक्षणेषु' इति छापवादोऽण्। सत्यङ्कार, पलभीकार, बुद्धिकार,

---

**बा.]** गविः। प्रकरणादिगम्या कुत्सा। गोत्रेति किं?। कारिकेयः। णस्य णित्वं तु ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायन इत्यत्र वृद्धयर्थम्। **वृद्धाट्ठक्सौ**। पूर्वसूत्राद्गोत्रेत्येकदेशोऽनुवर्तते। सौवीरेष्विति प्रकृतिविशेषणं। तदाह–**वृद्धादिति**। 'वृद्धिर्यस्याचामादि'रिति वृद्धिसंज्ञकादित्यर्थः। ठग्ग्रहणं णस्य अनुवृत्तिनिवृत्त्यर्थम्। **भागवित्तेरिति**। भगवित्तस्य सौवीरं गोत्रापत्यं–भागवित्तिः, तस्यापत्यं युवेत्यर्थे ठकि इकादेशे भागवित्तिक' इति रूपमित्यर्थः। **पक्षे फगिति**। 'यञिञोश्चे'-त्यनेने'ति शेषः। **फेश्छ च**। 'छे'ति लुप्तप्रथमाकम्। **यमुन्दस्येति**। यमुन्दो नाम सुवीरदेशे कश्चित्। **यामुन्दायनिरिति**। यामुन्दायनेरपत्यं युवेत्यर्थे कुत्सनाऽभावाच्छठगभावे 'तस्यापत्य'मित्यण्। 'ण्यक्षत्रियार्षे'ति तस्य लुगित्यर्थः। **तैकायनिरिति**। तैकायनेरपत्यं युवेत्यर्थेऽसौवीरत्वाच्छठगभावे 'तस्यापत्य'मित्यण्। 'ण्यक्षत्रिये'ति तस्य लुगिति भावः। **फाण्टाहृति**। **सौवीरेष्विति**। शेषपूरणमिदम्। सौवीरगोत्रादित्यर्थः। फाण्टाहृतस्य गोत्रापत्यं फाण्टाहृतिः, अत इञ्। तस्यापत्यं युवेति विग्रहः। **मैमत इति**। मिमतस्यापत्यमिति विग्रहः। मिमतशब्दे सौवीरगोत्रादिति न संबध्यते, व्याख्यानाद्गोत्रत्वाऽभावाच्चेति भावः। **कुर्वादिभ्यो ण्यः। अपत्ये इति**। शेषपूरणमिदम्। 'सौवीरेष्वि'ति निवृत्तम्। **कौरव्या ब्राह्मणा इति**। कुरुर्नाम कश्चिद्ब्राह्मणः। तस्यापत्यानीति विग्रहः। ण्यप्रत्यये ओर्गुणे अवादेशः। आदिवृद्धिः। यस्तु 'कुरुनादिभ्यो ण्यः' इति ण्यो वक्ष्यते, तस्य तद्राजत्वाद्बहुषु लुकि–'कुरवः क्षत्रियाः' इति भवति। एतत्सूचनार्थमेव बहुवचनं, 'ब्राह्मणा' इति विशेष्यं चोदाहृतम्। **वावदूक्या इति**। वावदूकस्यापत्यानीति विग्रहः। **सम्राजः क्षत्रिये इति**। कुर्वादिगणसूत्रम्। 'अपत्ये' इति शेषः। क्षत्रिय एवेति नियमार्थमिदम्। **साम्राजोऽन्य इति**। सम्राजः शूद्रादौ उत्पन्न इत्यर्थः। **सेनान्त**। एभ्य

---

**शे.]** बोद्धयम्। **वृद्धाट्ठक्**। गोत्रेत्येकदेशोऽत्रानुवर्तते। **सौवीरेष्विति** प्रकृतिविशेषणम्। 'भागवित्तितार्णबिन्दवाऽऽकशापेयेभ्य एवाय'मिति वृत्तिः। फिञन्तस्याऽसौवीरत्वाद्वृद्धादिति चिन्त्यप्रयोजनम्। एतदेव ध्वनयितुं वृद्धसञ्ज्ञासूत्रं नेहोपन्यस्तम्। फिञन्तस्य सौवीरगोत्रस्याऽभावादाह–**फिञन्तादिति**। तैकायनिः सौवीरोऽसौवीरश्च। तेनाऽत्र प्रत्युदाहरणत्वं, तैकायनीय इति भाष्योदाहृतश्च सङ्गच्छते। **फाण्टाहृ [ति]**। अत्रापि सौवीरगोत्र इति सम्बध्यते, मिमतेन तु तस्य न सम्बन्धो, व्याख्यानात्, गोत्रत्वाऽभावाच्च। वृत्त्युक्तमसङ्गतमित्याह–**भाष्ये त्विति**। पूर्वनिपातव्यवस्था तु नावश्यं सर्वत्र शास्त्रे आश्रीयते इति तदनाश्रयणं न

षेण्यः । लाक्षण्यः । कारिः—शिल्पी, तस्मात्—तान्तुवाय्यः । कौम्भकार्यः । नापित्यः । **उदीचामिञ्** ।४।१।१५३। हारिषेणिः । लाक्षणिः । तान्तुवायिः । कौम्भकारिः । नापितात्तु परत्वात्फिञेव । नापितायनिः । * **तक्ष्णोऽण उपसङ्ख्यानम्** । 'षपूर्वे'त्यनोऽकारलोपः । ताक्ष्णः । पक्षे—ताक्षण्यः । **तिकादिभ्यः फिञ्** ।४।१।१५४। तैकायनिः । **कौशल्यकार्मार्याभ्यां च** ।४।१।१५५। अपत्ये फिञ् । इञोऽपवादः । परमप्रकृतेरेवाऽयमिष्यते । प्रत्ययसंनियोगेन प्रकृतिरूपं निपात्यते । कोशलस्यापत्यं कौशल्यायनिः । कर्मारस्यापत्यं कार्मार्यायणिः । ***छागवृषयोरपि** । छाग्यायनिः । वृष्यायणिः । **अणो द्व्यचः** ।४।१।१५६। अपत्ये फिञ् । इञोऽपवादः । कार्त्र्यायणिः । अण इति किम् ? । दाक्षायणः । द्व्यचः किम् ? । औपगविः । ***त्यदादीनां फिञ्वा वाच्यः** । त्यादायनिः । त्यादः । **उदीचां वृद्धादगोत्रात्** ।४।१।१५७। आम्रगुप्तायनिः । प्राचां तु—आम्रगुप्तिः ।

---

**त.]** इत्यादि । **हारिषेण्य इति** । 'एति संज्ञाया'मिति षत्वस्याऽसिद्धत्वात्सेनान्तोऽयम् । **ताक्ष्ण इति** । उदीचामिञोपवादोऽयमण् । अस्मादुपसङ्ख्यानाच्छिवादिषु तक्षन्शब्दपाठोऽनार्ष इति गम्यते । वृत्तिकारस्तु—तक्षन्शब्दं शिवादिषु पठित्वा 'कारिलक्षणमुदीचामिञमयमण्बाधते, ण्यस्य तु बाधो नेष्यते' इत्याह । तदनुरोधेनास्माभिरपि तत्र तथैव व्याख्यातम् । फले विशेषाऽभावात् । **कौशल्य** । **परमप्रकृतेरेवायमिति** । यदि तु 'वृद्धेत्कोसले'ति ञ्यङन्तात्कोशलशब्दात्कारिलक्षणण्यन्तात्कर्मारशब्दाच्चायं विधिः स्यात्तदा यून्येव प्रसज्येतेति भावः । **छागेति** । दगुशब्दस्याप्युपलक्षणमेतत् । फिञ्प्रकरणे 'दगुकोसलकर्मारच्छागवृषाणां युट्चाऽऽदिष्टस्य' इति वार्तिकात् । **आदिष्टस्य** । आयन्नादेशस्येत्यर्थः । अन्यथा प्रातिपदोक्ते युटि कृते प्रत्ययादित्वाऽभावात्कौशल्यायनिरित्यादौ फस्यायन्नादेशो न स्यात्, युकि कृते तु 'दागव्यायनिः इत्यत्र ओर्गुणः, अन्यत्राऽल्लोपश्च न स्यादिति भावः । **कार्त्र्यायणिरिति** । कर्तुरपत्यं कार्त्रस्तस्यापत्यं तु कार्त्र्यायणिः । अत्र व्याचक्षते—कर्तृशब्दः कुर्वादिषु पठ्यते । तथा च

---

**बा.]** इति । सेनान्तलक्षणकारिभ्य इत्यर्थः । अकुर्वादित्वाद्वचनम् । **हारिषेण्य इति** । हरिषेणो नाम कश्चित् । 'एति संज्ञाया'मिति षत्वम् । तस्याऽसिद्धत्वात्सेनान्तत्वाण्ण्यः । **लाक्षण्य इति** । लक्षणमस्यास्तीति लक्षणः । अर्शआद्यच् । तस्यापत्यमिति विग्रहः । कारिपदं व्याचष्टे—**कारिः शिल्पीति** । **तस्मादिति** । कारिविशेषवाचिनो ण्ये सतीत्यर्थः । **तान्तुवाय्य इति** । तन्तुवायस्यापत्यमिति विग्रहः । **कौम्भकार्य इति** । कुम्भकारस्यापत्यमिति विग्रहः । **नापित्य इति** । नापितस्यापत्यमिति विग्रहः । **उदीचामिञ्** । सेनान्तलक्षणकारिभ्य इञ् स्यादुदीचां मते इत्यर्थः । **परत्वात्फिञेवेति** । 'उदीचां वृद्धा'दित्यनेनेति शेषः । **तक्ष्णोऽण उपसङ्ख्यानमिति** । 'उदीचां मते' इति शेषः । **ताक्ष्ण इति** । अणि प्रकृतिभावान्न टिलोपः । 'अल्लोपस्तु 'षपूर्वह'न्निति वचनाद्भवति । **पक्षे ताक्षण्य इति** । प्राचां मते कारित्वलक्षणो ण्य इत्यर्थः । 'ये चाऽभावकर्मणोः' इति प्रकृतिभावान्न टिलोपः । **तिकादिभ्य फिञ्** । इञोऽपवादः । **तैकायनिरिति** । फिञि आयन्नादेशः । **कौसल्य** । **परमप्रकृतेरेवेति** । कोसलकर्माराभ्यां फिञ्, तस्य युट् चेत्यर्थः । भाष्ये स्पष्टमेतत् । **छागवृषयोरपीति** । फिञ्, तस्य युट् चेति वक्तव्यमित्यर्थः । **अणो द्व्यचः** । **अपत्ये फिञिति** । शेषपूरणमिदम् । द्व्यचोऽण्प्रत्ययान्तादपत्ये फिञित्यर्थः । **कार्त्र्यायणिरिति** । कर्तुं छात्रः कार्त्रः । 'तस्येद'मित्यण् । कार्त्रस्यापत्यं कार्त्र्यायणिः । फिञि आयन्नादेशे णत्वम् । **दाक्षायण इति** । दक्षस्यापत्यं दाक्षिः । अत इञ् । दाक्षेरपत्यं दाक्षायणः । 'यञिञोश्चे'ति फक् । अण्णन्तत्वाऽभावान्न फिञिति भावः । **औपगविरिति** । उपगोर्गोत्रापत्यमौपगवः । तस्यापत्यमौपगविः-युवा । द्व्यच्त्वाऽभावान्न फिञिति भावः । कर्तुरपत्ये तु कुर्वादिगणे पाठाण्ण्य एवेति बोध्यम् । **त्यदादीनां फिञ्वा वाच्यः** । 'त्यादायनिः त्यादः' इति क्वचित्पुस्तके दृश्यते । तत्तु प्रामादिकं, 'त्यदादीनि चे'ति त्यदादीनां वृद्धत्वात् 'उदीचां वृद्धा'दित्येव सिद्धेः, भाष्येऽस्य वार्तिकस्याऽदर्शनाच्च । **उदीचां वृद्धा** । वृद्धसंज्ञकादगोत्रप्रत्ययान्तात्फिञ्स्यादुदीचां मते

---

**शे.]** यथासङ्ख्याऽभावसूचकमिति कैयटः । णस्य णित्त्वन्तु भाष्ये प्रत्याख्यातमेव । **पक्षे इति** । प्राचां मते इत्यर्थः । **तिकादिभ्यः** । तिकादिगणे कौरव्यः पठ्यते, स च 'कुरुनादिभ्यः' इति व्युत्पन्नः क्षत्रियगोत्रवाच्येव तत्र गृह्यते, नतु 'कुर्वादिभ्यः' इति व्युत्पन्नो ब्राह्मणगोत्रवाचीति 'ण्यक्षत्रिये'ति सूत्रस्थवृत्तिस्वरसः । **परमप्रकृतेरिति** । कोशलशब्दात्कर्मारशब्दाच्चेत्यर्थः । विकृतनिर्देशस्तर्हि व्यर्थः स्यादत आह—**प्रत्ययेति** । सूत्रे च कौशल्यायन्यादिप्रयोगे श्रूयमाणप्रकृतिभागानुकरणम् । आभ्यां परः फिञ् साधुरित्यर्थः । अन्ये तु आयन्नादेशोत्तरं प्रत्ययस्य युडागमो निपात्यते । अन्यथा प्रत्ययादित्वाऽभावात्स न स्यादित्याहुः । **कोशलस्यापत्यमिति** । सूत्रे दन्त्यपाठ इत्यन्ये । **छागेति** । अपिना दगोरपि । **कार्त्र्यायणिरिति** । कर्तुश्छात्रः कार्त्रः, तस्यापत्यमिति विग्रहः । 'अट्कुप्वा' इति णत्वम् । कर्तुरपत्ये तु कुर्वादिगणे कर्तृ इञिति पाठाण्ण्य एव । एतदुत्तरं—त्यदादीनां वा फिञ्वाच्यस्त्यादायनिस्त्यादः इति क्वचिद् दृश्यते, सोऽग्रन्थः । 'त्यदादीनि चे'त्यनेन तेषां वृद्धत्वात् 'उदीचां वृद्धा'दित्यनेन

वृद्धात्किम् ? । दाक्षिः । अगोत्रात्किम् ? । औपगविः । **वाकिनादीनां कुक्च** ।४।१।१५८। अपत्ये फिञ्वा स्यात् । वाकिनस्यापत्यं वाकिनकायनिः । वाकिनिः । **पुत्रान्तादन्यतरस्याम्** ।४।१।१५९। अस्माद्वा फिञ्सिद्धस्तस्मिन्परे पुत्रान्तस्य वा कुग्विधीयते । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः । **प्राचामवृद्धात्फिन्बहुलम्** ।४।१।१६०। ग्लुचुकायनिः । **मनोर्जातावञ्यतौ षुक्च** ।४।१।१६१। समुदायार्थौ जातिः । मानुषः । मनुष्यः । **जनपदशब्दात्क्षत्रियादञ्** ।४।१।१६८। जनपदक्षत्रिययोर्वाचकादञ् स्यादपत्ये । 'दाण्डिनायने-' ति सूत्रे निपातनाट्टिलोपः । ऐक्ष्वाकः । ऐक्ष्वाकौ । **क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्य-**

त.] 'कार्ग्यः' इत्येव वर्द्धमानेनोदाहृतं, तस्मादिह भर्तृहर्यादुदाहार्यमिति । **दाक्षिरिति** । 'वा नामधेयस्ये'ति वृद्धसंज्ञाऽभावपक्षे प्रत्युदाहरणमिदम् । पक्षान्तरे तु फिञ्भवत्येव । 'दाक्षायण्योऽश्विनीत्यादि ताराः' इत्यमरः । **वाकिनादीनां** । यदिह वृद्धमगोत्रं शब्दरूपं, तत्रागमार्थमेवेदं वचनम्, अन्येषां तूभयार्थम् । 'उदीचा'मित्यनुवर्तनाद्विकल्पः फलित इत्याह—**फिञ्वा स्यादिति** । **वाकिनकायनिरिति** । वचनं वाकः, सोऽस्यास्तीति वाकिनः । अतएव निपातनादिनन् । अगारे एधत इति गारेधः । पृषोदरादित्वादादिलोपः । शकन्ध्वादित्वात्पररूपम् । गारेधकायनिः । चर्मिवर्म्यादौ तूभयार्थम् । चर्मवर्मशब्दाभ्यां व्रीह्यादित्वादिनिः । **'चर्मिवर्मिणोर्नलोपश्चे'ति** गणसूत्रम् । चार्मिकायणिः । वार्मिकायणिः । कुकि कृते नकारस्याऽनन्त्यत्वान्नलोपाऽप्राप्तौ वचनम् । न च कुद् परादिरस्त्विति वाच्यं, फस्याऽनादित्वादायनादेशाऽभावप्रसङ्गात् । **वाकिनिरिति** । 'अत इञ्' । फिञभावे तत्संनियोगशिष्टः कुगत्र न भवति । एवं गारेधिः, चार्मिण इत्यादूह्यम् । **पुत्रान्तात्** । 'उदीचां वृद्धा'दित्यनुवर्तत इत्याशयेनाह—**वा फिञ्सिद्ध इति** । तेनैव सूत्रेण फिञि सिद्धे अनेन कुगेव वा विधीयत इति भावः । **प्राचामवृद्धात्** । प्राचांग्रहणं पूजार्थम् । अवृद्धादिति किम् ? । राजदन्तिः । बहुग्रहणान्नेह—दाक्षिः । **मानुषः । मनुष्य इति** । जातिशब्दावेतौ । **'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः'** । णत्वविधानार्थमिदम्, अणः सिद्धत्वात् । अनधीतवेदत्वान्मूढत्वं, विहितानानुष्ठानाच्च कुत्सितत्वम् । इदं च वचनं 'ब्राह्मणमाणवे'ति णत्वनिपातनाल्लब्धमित्याहुः । **जनपद** । **जनपदक्षत्रियेति** । जनपदवाची सन्यः क्षत्रियवाचीत्यर्थः । यद्यपि पाञ्चालादयो जनपदे बहुवचनान्ताः, क्षत्रिये त्वेकवचनान्ताः, तथापि प्रातिपदिकस्योभयवाचित्वमक्षतमेवेति बोध्यम् । जनपदशब्दात्किम् ? । द्रुह्योरपत्यं द्रौह्यवः । केवलक्षत्रियवाच्ययम् । क्षत्रियादिति किम् ? । ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिरिति वृत्तिकारादयः । बाह्वादिष्वस्य पाठादिदं प्रत्युदाहरणं चिन्त्यमित्यन्ये । **क्षत्रियसमानशब्दादिति** । समानः शब्दो यस्य जनपदस्य सोऽयं समानशब्दो जनपदः ।

बा.] इत्यर्थः । **आम्रगुप्तायनिरिति** । आम्रगुप्तस्यापत्यमिति विग्रहः । **प्राचां त्विति** । 'मते' इति शेषः । आम्रगुप्तिः । अत इञ् । **औपगविरिति** । उपगोर्गोत्रापत्यम् औपगवः, तस्यापत्यं युवा औपगविः । औपगवस्य गोत्रत्वात्ततो यूनि फिञभावे इञेवेति भावः । **वाकिनादीनां** । शेषपूरणेन सूत्रं व्याचष्टे—**अपत्ये फिञ्वेति** । चकारादुदीचामिति फिञिति चानुवर्तते इति भावः । तथा च वाकिनादिभ्यः फिञ् वा स्यात्, प्रकृतीनां कुगागमश्चेति फलितम् । **पुत्रान्तादन्यतरस्यां** । स्पष्टम् । **प्राचामवृद्धात्** । अवृद्धसंज्ञकादपत्ये बहुलं फिन् स्यादित्यर्थः । प्राचांग्रहणं पूजार्थम् । **ग्लुचुकायनिरिति** । ग्लुचुकस्यापत्यमिति विग्रहः । अवृद्धात्किम् । राजदन्तिः । बहुलग्रहणान्नेह—दाक्षिः । **मनोर्जातौ** । मनुशब्दादञ्-यत् एतौ प्रत्ययौ स्तः, तयोः परयोर्मनुशब्दस्य षुगागमश्च, प्रकृतिप्रत्ययसमुदायेन जातौ गम्यायामित्यर्थः । तदाह—**समुदायार्थौ जातिरिति** । नान्नाऽपत्यग्रहणं संबध्यत इति भावः । अन्यथा 'मानुषा' इत्यत्र 'यञञोश्चे'ति लुक्स्यादिति बोध्यम् । **जनपदशब्दात्** । जनपदो देशः, तद्वाचकशब्दो जनपदशब्दः, तथाभूतो यः क्षत्रियवाचकशब्दः, तस्मादित्यर्थः । फलितमाह—**जनपदक्षत्रिययोरिति** । **ऐक्ष्वाक इति** । इक्ष्वाकुर्नाम देशः, राजा च । तस्य राज्ञोऽपत्यमिति विग्रहे अञ्, अणोऽपवादः । स्वरे विशेषः । ओर्गुणं बाधित्वा 'दाण्डिनायने'ति सूत्रे निपातनादुकारस्य टेर्लोपः । **ऐक्ष्वाकाविति** । बहुवचने तु लुग्वक्ष्यत इति भावः । **क्षत्रियसमानेति** । क्षत्रियवाचकशब्देन समानशब्दो जनपदवाचकः, तस्मात्षष्ठ्यन्ता-

शे.] सिद्धेः, भाष्ये तस्याऽभावाच्च । **औपगविरिति** । यूनि—इञेवेति भावः । **वाकिनादीनां** । यदिह वृद्धमगोत्रं ततः फिञि सिद्धे आगमार्थमिदम्, अन्येषामुभयार्थम् । उदीचामित्यनुवर्त्तते इत्याशयेनाह—**वेति** । वृद्धादित्यनुवर्तत इत्याशयेनाह—**वा फिञ्सिद्ध इति** । **प्राचाम** । प्राचामिति पूजार्थम् । अवृद्धात्किम् ? । 'राजदन्तिः' । बहुलग्रहणान्नेह—दाक्षिः । **मनोर्जा** । जातौ किम् ? । मानवी प्रजा । **जनपद** । जनपदवाचकः सन् यः क्षत्रियवाचक इत्यर्थः । जनपदेति किम् ? । द्रुह्योर्द्रौह्यवाः । अत्राऽणेव । **क्षत्रियसमानेति** । क्षत्रियवाचकशब्देन समानो यः शब्दो जनपदवाचकस्ततः षष्ठ्यन्ताद्राजन्यर्थेऽपत्यवत्प्रत्यय

वत्। तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात्। पञ्चालानां राजा पाञ्चालः। * पूरोरण्वक्तव्यः। पौरवः। * पाण्डोर्ड्यण्। पाण्ड्यः। साल्वेयगान्धारिभ्यां च ।४।१।१६९। आभ्यामपत्येऽञ्। 'वृद्धेत्'-दिति ञ्यङोऽपवादः। साल्वेयः। गान्धारः। तस्य राजन्यप्येवम्। द्व्यञ्मगधकलिङ्गसूरमसादण् ।४।१।१७०। अञोऽपवादः। द्व्यच्-आङ्गः। वाङ्गः। सौह्मः। मागधः। कालिङ्गः। सौरमसः। तस्य राजन्यप्येवम्। वृद्धेत्कोसलाजादाञ्ञ्यङ् ।४।१।१७१। वृद्धात्-आम्बष्ठ्यः। सौवीर्यः। इत्-आवन्त्यः। कौन्त्यः। कौसल्यः। अजादस्यापत्यम्-आजाद्यः। कुरुनादिभ्यो ण्यः ।४।१।१७२। कौरव्यः। नैषध्यः। 'स नैषधस्यार्थपते'रित्यादौ तु शैषिकोऽण्। साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।४।१।१७३। साल्वो जनपदस्तदवयवा उदुम्बरादयः, तेभ्यः, प्रत्यग्रथादिभ्यस्त्रिभ्यश्च इञ्। अञोऽपवादः। औदुम्बरिः। प्रात्यग्रथिः।

त.] क्षत्रियेण समानशब्दः-क्षत्रियसमानशब्दः, तस्मात् 'तस्ये'ति षष्ठीसमर्थाद्राजनि वाच्ये अपत्यवत्प्रत्ययो भवतीत्यर्थः। **पञ्चालानां राजेति**। इह 'अवृद्धादपि बहुवचनविषया'दिति प्राप्तो वुञ्बाध्यते। **पूरोरिति**। पूरुशब्दो न जनपदवाचीति प्राग्दीव्यतीये अणि सिद्धे तद्राजसंज्ञार्थं वचनम्। जनपदवाचित्वे तु 'द्व्यञ्मगधे'त्येव सिद्धम्। **पाण्डोर्ड्यण्**। णित्करणं तु 'पाण्ड्याभार्यः' इत्यत्र 'वृद्धिनिमित्तस्ये'ति पुंवद्भावप्रतिषेधार्थम्। युधिष्ठिरपितृवाचिनो, गुणवाचिनश्च पाण्डोर्नेह ग्रहणं, 'जनपदशब्दा'दित्युक्ते तदधिपतिवाचिन एवोपस्थानात्। **वृद्धेत्**। तपरकरणं किम्? । कौमारः। कुमारीशब्दो हि जनपदक्षत्रियवचनः। **कुरुना**। नकार आदिर्येषां ते नादयः। कुरुशब्दाद् द्व्यज्लक्षणे अणि प्राप्ते, नादिभ्यस्त्वञि प्राप्ते [च] वचनम्। **उदुम्बरादय इति**। 'उदुम्बरास्तिलखला मद्रकारा युगंधराः। भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः' इति वृत्तिः। **औदुम्बरिरिति**। तैलखलिः। माद्रकारिः।

बा.] द्राजन्यर्थेऽपत्यवत्प्रत्यया भवन्तीत्यर्थः। वार्तिकमेतत्सूत्रसिद्धार्थकथनपरमित्याह-**तद्राजमिति**। 'जनपदशब्दा'-दित्यादिविहितानामञादीनां तद्राजसंज्ञा विहिता-'ते तद्राजाः' इति। प्रत्ययानां तद्राजत्वं तद्वाचकत्वाद्गौणम्। एवंच तद्राजवाचकास्तद्राजा इत्यन्वर्थसंज्ञैषा, नतु टिघुभादिवदवयवार्थरहिता। तथा च अञादिप्रत्ययानां तद्राजसंज्ञाकानां राजवाचकत्वमपि विज्ञायत इति राजन्यपि वाच्ये ते भवन्तीति विज्ञायत इत्यर्थः। **पञ्चालानामिति**। बहुवचनान्तमिदं देशविशेषनाम, भाष्ये तथैव प्रयोगदर्शनात्। 'द्व्यञ्मगधे'त्यत्र भाष्ये 'नैषो नाम जनपदः' इति दर्शनाद्देशवाचिनोऽप्येकवचनमिति ज्ञेयम्। जनपदशब्दादिति किम्? । द्रुह्योरपत्यं द्रौह्यवः। अणेव, तद्राजत्वाभावाद्बहुत्वे न लुक्। द्रौह्यवाः। क्षत्रियादिति किम्? । पञ्चालो नाम कश्चिद्ब्राह्मणः। तस्यापत्यं पाञ्चालिः। वैदेहिः। **पूरोरणिति**। पूरुशब्दस्य जनपदवाचित्वाऽभावात्प्राग्दीव्यतीयेऽणि सिद्धे तद्राजसंज्ञार्थं वचनम्। देशवाचित्वे तु 'द्व्यञ्मगधे'त्येव सिद्धम्। **पाण्डोर्ड्यणिति**। 'वाच्य' इति शेषः। इह श्वेतगुणवाचिनो, युधिष्ठिरपितृवाचिनश्च पाण्डोर्न ग्रहणं, 'जनपदा'दित्युक्तेः, तस्य च पाण्डुदेशाऽधिपतिराजत्वाऽभावात्। **पाड्य इति**। पाण्डोरपत्यं, पाण्डुदेशस्य राजा वेत्यर्थः। **साल्वेय**। ननु साल्वेयगान्धारिशब्दावव्युत्पन्नौ देशक्षत्रियोभयवाचिनौ, ताभ्यां जनपदशब्दादिञि सिद्धे किमर्थमिदमित्यत आह-**ञ्यङोऽपवाद इति**। **द्व्यञ्मगध**। **अञोऽपवाद इति**। जनपदशब्दादिति विहितस्याऽञोऽपवाद इत्यर्थः। **द्व्यजिति**। 'उदाह्रियते' इति शेषः। अङ्ग, वङ्ग, सुह्म-इत्येते द्व्यचो देशक्षत्रियवाचिनः। अङ्गस्यापत्यमिति विग्रहः। **तस्य राजन्यप्येवमिति**। अङ्गादिदेशस्य राजेति विग्रहः। **वृद्धेत्कोसला**। जनपदक्षत्रियोभयवाचकाद्वृद्धसंज्ञकादिदन्तात्, कोसलात्, अजादाच्चापत्ये ञ्यङित्यर्थः। **वृद्धादिति**। उदाह्रियते इत्यर्थः। **आम्बष्ठ्यः सौवीर्य इति**। आम्बष्ठसौवीरशब्दौ जनपदक्षत्रियोभयवाचकौ। **इदिति**। इदन्तोदाहरणसूचनमिदम्। **आवन्त्य इति**। अवन्तिशब्दो देशे राजनि च। **कौसल्य इति**। कोसलशब्दो देशे राजनि च। **अजादस्यापत्यमिति**। राजवाचकत्वे विग्रहोऽयम्। देशवाचकत्वे तु अजादानां राजेति विग्रहः। **कुरुनादिभ्यो ण्यः**। कुरुशब्दान्नकारादिभ्यश्च जनपदक्षत्रियवाचकेभ्योऽपत्ये राजनि च ण्यः स्यादित्यर्थः। **कौरव्य इति**। कुरोरपत्यं, कुरूणां राजेति वा विग्रहः। **नैषध्य इति**। निषधशब्दो देशे राजनि च। **शैषिक इति**। 'तस्येदमित्यनेने'ति शेषः। **साल्वावयव**। **उदुम्बरादय इति**। 'उदुम्बरास्तिलखला मद्रकारा युगन्धराः। भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः।' इति प्रसिद्धिः। 'द्व्यञ्मगधे'ति भाष्ये तु-बुध

शे.] इत्यर्थः। इदश्चात्रैव सूत्रे वार्तिकम्। तत्र प्राचामनुसारेणाह-अन्वर्थसञ्ज्ञेति। भाष्ये त्वस्यास्तत्त्वं नोक्तम्। किंच तत्त्वेऽपत्यवाचकत्वे सा न स्यात्। ञ्यादीनाञ्च सा न स्यादित्यन्ये। साल्वेय। साल्वेयसाल्वावव्युत्पन्नौ देशक्षत्रियोभयवचनौ। अत्र प्रकरणे सूत्रपाठात्। वृद्धेत्। 'इ'दिति तपरकरणात्कुमार्याः कौमारः। जनपदक्षत्रियोभयवाच्ययम्। उदुम्बरादय इति। उदुम्बरास्तिलखला मद्रकारयुगन्धराः। भूलिङ्गाः शरदण्डाश्च साल्वावयवसञ्ज्ञिताः इति। 'द्व्यञ्मगधे'ति सूत्र-

कालकूटिः । आश्मकिः । राजन्यप्येवम् । **ते तद्राजाः** ।४।१।१७४। अञादय एतत्संज्ञाः स्युः । **तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्** ।२।४।६२। बहुष्वर्थेषु तद्राजस्य लुक्स्यात्तदर्थकृते बहुत्वे न तु स्त्रियाम् । इक्ष्वाकवः । पञ्चाला इत्यादि । कथं तर्हि 'कौरव्याः पशव' इति । 'तस्यामेव रघोः पाण्ड्या' इति च ? । कौरव्ये पाण्ड्ये च साधव इति समाधेयम् । 'रघूणामन्वयं वक्ष्ये', 'निरुध्यमाना यदुभिः कथंचिदिति तु रघुयदुशब्दयोस्तदपत्ये लक्षणया । **कम्बोजाल्लुक्** ।४।१।१७५। अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ । ॐ **कम्बोजादिभ्य इति वक्तव्यम्** । चोलः । शकः । द्व्यज्लक्षणस्याऽणो लुक् । केरलः । यवनः । अञो लुक् । 'कम्बोजाः समरे' इति पाठः सुगमः । दीर्घादिपाठे तु कम्बोजोऽभिजनो येषामित्यर्थः । 'सिन्धुतक्ष-

**त.]** यौगन्धरिरित्यादीन्युदाहर्तव्यानि । **ते तद्राजाः** । **अञादय इति** । ततः प्राचीनास्तु तच्छब्देन न परामृश्यन्ते, गोत्रयुवसंज्ञाकाण्डेन विच्छेदात् । एतदर्थमेव तत्काण्डं मध्ये कृतमाचार्येणेत्याहुः । वस्तुतस्तु 'तद्राजे'त्यधिकृत्य 'जनपदशब्दात्क्षत्रियाद'मित्यादिसूत्राणामारम्भे गोत्रयुवसंज्ञाकाण्डस्य मध्ये पाठाऽभावेऽपि न क्षतिरित्यन्ये । **तद्राजस्य** । **तदर्थेति** । तद्राजप्रत्ययार्थेन कृत इत्यर्थः । तेनैवेति किम् ? । प्रियपाञ्चालाः । **साधव इतीति** । तथाच 'तत्र साधु'रिति यत्प्रत्ययस्य तद्राजत्वाऽभावाल्लुङ् नेति भावः । रघुयदुशब्दयोर्जनपदवाचित्वाऽभावादाभ्यां परस्य तद्राजसंज्ञा नेति लुकोऽप्रवृत्त्या राघवाणां यादवैरित्येव भवितव्यमित्याशङ्क्याह—**रघुयदुशब्दयोरिति** । **लक्षणयेति** । ततश्चोक्तार्थत्वादपत्यप्रत्ययो नाऽत्रोत्पन्न इति भावः । **कम्बोजाल्लुक्** । 'तद्राजस्य बहुषु इति प्रकरण एवेदं न कृतं, द्वयेकार्थवाचकस्याऽञो लुगभावप्रसङ्गात् । यद्यपि लुगधिकारे पुनर्लुग्विधानसामर्थ्याद्द्व्येकयोरप्यञो लुग्भविष्यत्येवेति वक्तुं शक्यं, तथाप्यतद्राजस्यापि लुक्प्रसङ्गशङ्कापत्तेर्लाघवाऽभावाच्च तत्प्रकरणे न कृतमित्याहुः । न चात्र अपत्ये लक्षणयैव 'कम्बोजः कम्बोजौ' इत्यादिरूपसिद्धौ किमनेन सूत्रेणेति शङ्क्यं, 'काम्बोज' इत्यादिपाक्षिकाऽनिष्टवारणाय सूत्रस्यावश्यकत्वात् । **सिन्धुतक्षेति** । कम्बोजशब्दस्य सिन्ध्वादित्वादण् । तस्य तु

**बा.]** अजमीढ-अजकन्दा अपि गृहीताः । **ते तद्राजाः** । ते इत्यनेन जनपदशब्दादित्याद्यारभ्य विहिता अञादयः परामृश्यन्ते । तदाह—**अञादय इति** । **तद्राजस्य** । 'ण्यक्षत्रियार्षे'त्यतो 'लु'गित्यनुवर्तते । 'तेने'त्यनन्तरं 'कृते बहुत्वे' इत्यध्याहारः । तदाह—**बहुष्विति** । **तदर्थकृतबहुत्वे इति** । अञादिप्रत्ययान्तमात्रार्थगतबहुत्वे सतीत्यर्थः । तेनेति किम् ? । प्रियो वाङ्गो येषां ते प्रियवाङ्गा इत्यत्र बहुत्वस्यान्यपदार्थगतत्वाद्वाङ्गशब्दात्परस्य न लुक् । यद्यपि वर्तिपदार्थविशिष्टान्यपदार्थगतं बहुत्वं वर्तिपदार्थगतमपि भवति, तथापि अण्प्रत्ययान्तार्थवाङ्गमात्रगतं न भवतीति न लुक् । एतदर्थमेवकारग्रहणम् । **इक्ष्वाकवः पञ्चाला इति** । 'जनपदशब्दा'दिति विहितस्य अञो लुकि आदिवृद्धिनिवृत्तिः । **इत्यादीति** । अङ्गाः वङ्गा इत्यादि बोध्यम् । **कथं तर्हीति** । 'कौरव्या' इत्यत्र ण्यप्रत्ययस्य, 'पाण्ड्य' इत्यत्र ड्यण्प्रत्ययस्य च तद्राजतया बहुषु लुक्प्रसङ्गादित्यर्थः । **साधव इतीति** । कौरव्यशब्दात् ,पाण्ड्यशब्दाच्च 'तत्र साधुः' इति यत्प्रत्यये 'यस्येति चे'त्यकारलोपे यत्प्रत्ययस्य तद्राजत्वाऽभावाच्च लुगित्यर्थः । ननु रघुयदुशब्दयोर्जनपदवाचित्वाऽभावात्प्राग्दीव्यतीयेऽणि तस्य तद्राजत्वाऽभावात्कथं बहुषु तस्य लुगित्याशङ्क्य परिहरति -**रघूणामिति** । **लक्षणयेति** । 'प्रयोग' इति शेषः । ततश्च नेदमपत्यप्रत्ययान्तमिति भावः । लक्षणाबीजं तु रघुयदुसमानवृत्तिकत्वं बोध्यम् । **कम्बोजाल्लुक्** । 'तद्राजा' इत्यनुवृत्तं षष्ठ्या विपरिणम्यते । कम्बोजात्परस्य तद्राजस्य लुक् स्यादित्यर्थः । अबहुत्वार्थं सूत्रम् । तदाह—**कम्बोजः कम्बोजाविति** । 'जनपदशब्दा'दिति विहितस्य अञो लुक् । **चोलः शक इति** । चोलशकौ देशविशेषौ, राजविशेषौ च । **द्व्यज्लक्षणस्येति** । 'द्व्यञ्मगधे'ति विहितस्येत्यर्थः । **केरल इति** । केरलयवनशब्दौ देशराजोभयवाचिनौ । **अञो लुगिति** । 'जनपदशब्दादिति विहितस्ये'ति शेषः ।

ननु 'काम्बोज' इति कथं, लुक्प्रसङ्गादित्यत आह--**कम्बोजाः समरे इति** । **दीर्घपाठे त्विति** । अचां मध्ये आदेरचो दीर्घभूतस्य पाठे त्वित्यर्थः । **अभिजन इति** । यत्र पूर्वैरुषितं सोऽभिजन इत्यग्रे वक्ष्यति । **सिन्धु-**

**शे.]** भाष्यात्-बुधाऽजमीढाऽजकन्दा अपि बोद्धयाः । **बहुष्वर्थेष्विति** । बहुत्ववदर्थेषु विद्यमानं यत्तद्राजान्तं तदवयवप्रत्ययस्य लुगित्यर्थः । तेनाऽऽङ्गश्च वाङ्गश्च कालिङ्गश्चेति विग्रहेऽङ्गवङ्गकलिङ्गा इत्यादौ लुक्सिद्धिः । द्वन्द्वे प्रत्येकमन्यसङ्ख्याप्रतिपादकविभक्त्यभावेन बहुत्वेनैव सर्वेषां प्रतीतेः । यद्वा तद्राजार्थसमूहगते बहुत्वे तद्राजस्य लुगिति न दोषः । **तदर्थेति** । तद्राजान्तमात्रार्थाश्रितमिति यावत् । तेनाङ्गचैत्रमैत्रा इत्यादौ न । तत्र चैत्रादावप्यन्वयेन बहुत्वस्य तदर्थमात्रार्थाश्रितत्वाऽभावात् । अत एव 'गार्ग्यकाश्यपगालवाना'मिति निर्देशः । तत्र गालव ऋष्यणन्तः । अन्यथा 'यञञोश्चे'ति लुक् स्यात् । भृगुवत्साग्रायणेष्विति निर्देशात्कचिल्लोप्यलोपिद्वन्द्वविषये 'तेनैवे'त्यङ्गवैकल्येऽपि प्रवृत्तिः । आग्रायणोऽत्राऽलोपी । **भृगौ**—'अत्रिभृगु' इति ऋष्यणो लुक् ।

शिलादिभ्योऽणञौ' इत्यण्। **स्त्रियामवन्तिकुन्तिकुरुभ्यश्च** ।४।१।१७६। तद्राजस्य लुक् स्यात्। अवन्ती। कुन्ती। कुरूः। **अतश्च** ।४।१।१७७। तद्राजस्याऽकारस्य स्त्रियां लुक् स्यात्। शूरसेनी। मद्री। कथं माद्रीसुताविति ?। ह्रस्व एव पाठ इति हरदत्तः। भर्गादित्वं वा कल्प्यम्। **न प्राच्यभर्गादियौधेयादिभ्यः** ।४।१।१७८। एभ्यस्तद्राजस्य न लुक्। पाञ्चाली। वैदर्भी। आङ्गी। वाङ्गी। मागधी। एते प्राच्याः। भार्गी। कारूशी। कैकेयी। केकयीत्यत्र तु जन्यजनकभावलक्षणे पुंयोगे ङीप्। युधा। शुक्रा। आभ्यां

---

त.] तद्राजत्वाऽभावाल्लुङ्नेति भावः। **अवन्ती। कुन्तीति**। 'वृद्धे'दिति ञ्यङो लुकि 'इतो मनुष्यजाते'रिति ङीष्। **कुरूरिति**। ण्यस्य लुक् 'ऊङुतः' इत्यूङ्। **अतश्च**। इह तद्राजेन अकारो विशेष्यते, न त्वकारेण तद्राजः। विशेषणेन तदन्तविधौ ञ्यङण्यादीनामप्यदन्ततद्राजत्वादनेनैव लुकि सिद्धे अवन्तिकुन्तिकुरुभ्यो लुग्विधायकस्य 'स्त्रियामवन्ती'ति सूत्रस्य वैयर्थ्यापत्तेः। न चेष्टापत्तिः, कौसल्येति रूपाऽसिद्धिप्रसङ्गादतो व्याचष्टे—**तद्राजस्याऽकारस्येति**। सूत्रे तपरकरणं विस्पष्टार्थमिति भावः। **शूरसेनीति**। अञो लुकि 'जाते'रिति ङीष्। न त्वनन्तलक्षणो ङीन्, 'अञो योऽकारस्तदन्ता'दिति व्याख्यानात्। **कारूशीति**। कुत्स उः करुः, तं वष्टि करूशः। 'वश कान्तौ' मूलविभुजादित्वात्कः। 'ग्रहिज्ये'ति संप्रसारणम्। तस्यापत्यं राजा वा कारूशः। स्त्रियां कारूशी। एतेन मूर्धन्योष्मोपधः पाठो निरस्तः। यौधेयादिभ्यो लुक्प्रतिषेधमुदाहर्तुमाह—**युधा। शुक्रेत्यादि**।

---

बा.] **तक्षेति**। सिन्ध्वादौ कम्बोजशब्दस्य पाठादिति भावः। **स्त्रियामवन्ति। अवन्ती कुन्तीति**। अवन्तेः कुन्तेश्चापत्यं स्त्री राज्ञी वेति विग्रहः। 'वृद्धेत्कोसले'ति ञ्यङोऽनेन लुकि 'इतो मनुष्यजाते'रिति ङीष्। **कुरूरिति**। 'कुरुनादिभ्यः' इति ण्यस्य लुक्। **अतश्च। तद्राजस्याकारस्येति**। 'अत' इति तद्राजविशेषणम्। तद्राजात्मकस्य अकारस्येत्यर्थः। **शूरसेनीति**। अञो लुकि प्रत्ययलक्षणमाश्रित्य अपत्यप्रत्ययान्तत्वेन जातित्वान्ङीष्। 'न लुमते'ति निषेधस्तु न, ङीष्विधेरङ्गकार्यत्वाऽभावात्। एवं मद्री। **न प्राच्य। एभ्य इति**। प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चेत्यर्थः। **एते प्राच्या इति**। 'क्षत्रिया' इति शेषः। यथायथमञोऽणश्च लुक्। भर्गादीनुदाहरति—**भार्गी, कारूशी, कैकेयीति। जन्यजनकभावेति**। अत्र यद्वक्तव्यं तत् 'पुंयोगादाख्याया'मित्यत्रोक्तम्।

अथ यौधेयादिभ्यो लुक्प्रतिषेधं दर्शयितुमाह—**युधा, शुक्रा** इत्यादिना। **ढगिति**। युधाया अपत्यं, शुक्राया

---

शे.] वत्से-'यञञोश्चे'ति यञो लुक्। तद्राजान्तेति व्याख्यानात् पाण्ड्यस्य पाञ्चालस्यापत्यं माणवकाः पाण्ड्याः पञ्चाला इत्यादौ युवप्रत्ययस्य 'ण्यक्षत्रिये'ति लुकि, युवबहुत्वे वर्त्तमानतद्राजप्रत्ययस्य लुक्सिद्धिः। वक्ष्यमाणरीत्या युवप्रत्ययस्यैवाऽजादिप्राग्दीव्यतीयस्य विषयसत्त्वात् प्राप्तो 'गोत्रेऽलुगची'त्यलुक्तु न, गोपवनादिषु गर्गभार्गविकाशब्दपाठेन यून्युपसङ्क्रान्तस्य तेनाऽलुगभावज्ञापनात्। तस्य हि ऋष्यणन्तभार्गवाद्युवबहुत्वे [वर्त्तमानस्य] इञो 'ण्यक्षत्रिये'ति लुकि युवबहुत्वे भार्गवस्य वृत्तेः 'अत्रिभृगु'वे'ति प्राप्तलुको निषेधाय गोपवनादिषु पाठः। अन्यथा 'गोत्रेऽलुगची'त्येव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। गर्गभृगूणां मैथुनिकेत्यर्थः। विशिष्टस्यैव गणे पाठाद्गर्गादियञो लुको न निषेधः। अस्य विशिष्टस्य पाठेऽन्यत्यभाष्यकैयटौ मानम्। न चैवमाङ्गप्रतिकृतय आङ्गा इत्यत्र लुगापत्तिः। 'यञञोश्चे'त्यत्र लौकिकगोत्रग्रहणात्प्रत्यासत्त्याऽपत्यबहुत्वे वर्त्तमानस्यैव तेन लुगङ्गीकारेण तत्साहचर्येणाऽस्यापि अपत्यतद्राजार्थान्यतरगतबहुत्वे एव प्रवृत्तेरदोषात्। पाञ्चालापत्ययौगिकपाञ्चालशब्दाद्बहुवचनान्ताद्युवप्रत्यये एकत्वद्वित्वयोः पाञ्चालः पाञ्चालावित्यत्र 'गोत्रेऽलुगची'त्यलुक्, युवप्रत्ययस्य 'ण्यक्षत्रिये'ति लुक्यपि प्रत्ययलक्षणेनाऽजादिप्राग्दीव्यतीयविषयसत्त्वात्। 'न लुमते'ति निषेधस्तु न, अस्य प्रत्ययोद्देश्यकत्वेऽप्यङ्गोद्देश्यकत्वाऽभावात्। प्रत्ययलक्षणसूत्रस्य नियमार्थत्वे तु 'गोत्रेऽलुगची'त्यत्राच्पदस्य हलादिभिन्नलाक्षणिकत्वं बोद्धयम्। एतेनाऽत्राऽल्विधित्वात्तत्पक्षे स्थानिवत्त्वस्याऽप्राप्तिरित्यपास्तम्। लक्षणायां स्थानिभूताऽलाश्रयविधिताया अस्याऽभावेन तत्प्राप्तेः। ध्वनितं चेदं 'जनपदशब्दा'दिति सूत्रे भाष्ये, प्रकृतसूत्रे च। अस्त्रियां किम् ?। आङ्ग्यः [स्त्रियः]। स्त्रीत्वं प्रधानमेवात्र गृह्यते। तेन पञ्चभिर्वाङ्गीभिः क्रीतः पञ्चवङ्ग इत्येव। बहुत्वन्त्वप्रधानमपि, व्याख्यानात्। तेनाङ्गानतिक्रान्तोऽत्यङ्ग इत्येवेति स्पष्टमत्रैव भाष्यकैयटयोः। **कथमिति**। बहुत्वे लुकः प्राप्तेरिति भावः। अतद्राजत्वान्न लुगित्युत्तरम्। **रघूणामिति**। रघुयदुशब्दयोर्जनपदसमानशब्दत्वाऽभावादिति प्रश्नः। **लक्षणयेति**। यद्यपि व्याकरणशास्त्रस्य साधुत्वनियामकतया तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्ययान्तस्यापत्यादिपदघटितसमासस्य [वाक्यस्य] च साधुत्वं धनेन केवलप्रकृतेस्तदर्थे लक्षणयाऽप्यसाधुत्वमेवौचितं, तथापि **लक्षणये**त्यस्य रघुत्वाद्यारोपेणेत्यर्थः। एवञ्च रघुत्वेनैव ततो बोध इति नाऽसाधुता, तत्संबन्ध्यपत्यमित्यर्थे त्वसाधुत्वैवेति स्पष्टं 'परश्च' 'पुंयोगा'दिति सूत्रे भाष्ये। **कम्बोजा**। अबहर्थमिदम्। **अवन्ती [कुन्ती] कुरूरिति**। अत्र ङीपूङोः 'लुक् तद्धितलुकि' इति लुक् न, अनुपसर्जनत्वात्। **अतश्च**। तपरकरणं स्पष्टार्थम्। **स्त्रियामित्यस्य** स्त्र्यपत्यार्थकस्येत्यर्थः। **शूरसेनीति**। अञो लुकि 'जाते'रिति ङीप्। नियतङ्गोत्रत्वारोपात्। **एते प्राच्या इति**। क्षत्रिया इत्यर्थः।

'द्व्यचः' इति ठक्। ततः स्वार्थे 'पर्श्वादियौधेयादिभ्योऽणञौ' इत्यञ्। 'शार्ङ्गरवाद्यञः' इति ङीन्। 'अतश्चे'ति लुकि तु ढगन्तत्वान्ङीप्युदात्तनिवृत्तिस्वरः स्यात्। यौधेयी। शौक्रेयी। **अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।४।१।७८।** त्र्यादीनामन्त्यमुत्तमं, तस्य समीपमुपोत्तमम्। गोत्रे यावणिञौ विहितावनार्षौ, तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात्। निर्दिश्यमानस्यादेशा भवन्ती-

---

त.] **अतश्चेति लुकि त्विति।** 'ञ्यादयस्तद्राजाः' इति वक्ष्यमाणत्वादञोऽस्य तद्राजत्वमस्तीति भावः। योपधत्वान्ङीषः प्राप्तिर्नेत्याशयेनाह—**ङीपीति।** **उदात्तनिवृत्तिस्वर इति।** 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीबुदात्तः स्यादित्यर्थः। सिद्धान्ते त्वञो लुगभावान्ङीन्याद्युदात्तत्वमिति ज्ञेयम्। स्यादेतत्। 'अतश्चे'ति सूत्रेण विधीयमानो लुक् चातुरर्थिकानामेव तद्राजानां भवतु संनिधानात्, न तु 'ञ्यादयस्तद्राजाः' इति पाञ्चमिकानामपि तद्राजानामिति किमनेन यौधेयादिग्रहणेन ?। सत्यम्। 'व्याप्तिन्यायेन पाञ्चमिकस्यापीह ग्रहण'मिति ज्ञापयितुं यौधेयादिग्रहणम्। तेन पार्श्वायणः स्त्रियां लुक् सिध्यति। तथा हि- पर्शुः क्षत्रियो जनपदेन समानशब्दः। तस्यापत्यं स्त्री। 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' 'द्व्यञ्मगधे'त्यण्, तस्य 'अतश्चे'ति लुक्। पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण्। तस्यापि लुकि 'ऊङुतः' पर्शूः। एवं रक्षसः क्षत्रियस्यापत्यं स्त्री रक्षाः। पूर्ववदण्द्वयस्यापि लुकि 'अत्वसन्तस्ये'ति दीर्घः। उक्तं च वार्तिककृता—'पर्श्वादिभ्यो लुग्वक्तव्यः। यौधेयादिप्रतिषेधो वा ज्ञापकः—पार्श्वादिलुगि'ति। **यौधेयीत्यादि।** शुधायाः शुक्राया अपत्यं स्त्रीति विग्रहः। **अणिञोः। उत्तममिति।** अव्युत्पन्नं प्रातिपदिकमिदं न तूच्छब्दात्तमप्। तेन 'किमेत्तिङव्ययघा-दि'त्याम् न शङ्क्यः। **गोत्रे याविति।** 'अपत्याधिकारादन्यत्र लौकिकं गोत्र'मिति नेह शास्त्रीयं गृह्यते। तथा च 'अनार्षयो'रिति पर्युदासादेव सिद्धे गोत्रग्रहणमिह त्यक्तुं शक्यम्। न चाऽत्र गोत्रग्रहणसामर्थ्याच्छास्त्रीयमेव गोत्रं गृह्यत इति वाच्यं, दैवदत्त्या याज्ञदत्त्येत्यादीनामनन्तरापत्येऽपीष्यमाणत्वात्। अतएवानुपदं वक्ष्यति 'कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्ये'ति। इदं च कौस्तुभानुसारि व्याख्यानमत्रत्यमूलानुगुणमपि 'दैवयज्ञि'सूत्रस्थेन 'अगोत्रार्थ'मित्यादिमूलग्रन्थेन सह विरुध्यत इति तत्रैव स्फुटीभविष्यति। यद्यपि स्त्रीप्रत्ययाः प्रकृतास्तथापि 'पत्युर्नो यज्ञसंयोगे' इति नकारस्येव ष्यङ आदेशत्वमेवोचितम्, 'अणिञो'रिति षष्ठीस्वरसादित्यभिप्रेत्याह—**ष्यङादेशः स्यादिति।** ष्यङः प्रत्ययत्वेऽपि लक्ष्यसिद्धिरप्रत्यूहेति मनोरमायां स्थितम्। नन्वयं 'ङिच्चे'त्यन्तादेशं बाधित्वा

---

बा.] अपत्यमिति विग्रहे तन्नामिकाऽणं बाधित्वा 'द्व्यचः' इति ढकि एयादेशे 'यस्येति चे'त्यकारलोपे आदिवृद्धिः। यौधेयशब्दात्, शौक्रेयशब्दाच्च 'पर्श्वादियौधेयादिभ्योऽणञौ' इति स्वार्थे तद्राजसंज्ञके पाञ्चमिके अञि 'यस्येति चे'त्यकारलोपे 'शार्ङ्गरवाद्यञः' इति ङीनि यौधेयी शौक्रेयीति रूपमिति भावः। नन्वत्र 'अतश्च' इत्यञो लुकि सत्यपि 'टिड्ढे'ति ङीपि, यौधेयी शौक्रेयीति सिद्धेरिह यौधेयादिग्रहणमनर्थकमित्यत आह—**अतश्चेति लुकि त्विति।** **उदात्तनिवृत्तीति।** 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीबुदात्तः स्यात्। सिद्धान्ते त्वञन्तत्वान्ङीनि आद्युदात्तत्वमिति भावः। **अणिञोः। त्र्यादीनामन्त्यमुत्तममिति।** तथा भाष्यादिति भावः। **तस्य समीपमुपोत्तममिति।** सामीप्येऽव्ययीभाव इति भावः। गुरु–उपोत्तमम्–उत्तमसमीपवर्ति ययोरिति विग्रहः। प्रातिपदिकादित्यधिकृतं षष्ठीद्विवचनेन विपरिणम्यते। उपोत्तमगुरुवर्णकयोः प्रातिपदिकयोरिति लभ्यते। 'अणिञो'रित्यनेन प्रत्ययग्रहणपरिभाषयाऽणिञन्तयोर्ग्रहणम्। 'गोत्रे' इत्येतत् अणिञोरन्वेति। ऋषेरविहितौ–अनार्षौ। इदमपि अणिञोर्विशेषणं। स्त्रियामित्यधिकृतम्। तदाह—**गोत्रे यावणिञावित्यादिना। आदेशः स्यादिति।** स्थानषष्ठीनिर्देशादादेशत्वलाभः। ननु अणिञन्तयोः ष्यङादेशोऽयमनेकाल्त्वात्सर्वादेशः स्यादित्यत आह—**निर्दिश्यमानस्येति।** तथा च अणिञोरेवायमादेश इति भावः। 'ङिच्चे'त्यन्तादेश इति तु न युक्तं, ङित्त्वस्य 'ष्यङः सम्प्रसारण'-

---

शे.] **जन्यजनकभावेति।** दाम्पत्यलक्षण एव पुंयोगस्तत्र गृह्यते इति मते गौरादित्वान् ङीषिति बोद्धव्यम्। **लुकि त्विति।** 'ञ्यादयः' इत्यञस्तद्राजत्वं। योधेयादिग्रहणादेव पाञ्चमिकानामपि 'अतश्चे'ति लुक्। तेन क्षत्रियजनपदोभयवाचिपर्शुशब्दाद् द्व्यचोऽणि तस्याऽतश्चेति लुकि, अनेन स्वार्थिकेऽणि, तस्याप्यनेन लुक्यूङि पर्शूरित्यादिसिद्धिः। एतेनाऽनन्तरत्वाच्चातुरर्थिकानामेव लुगित्यपास्तम्। **ङीपीति।** योपधत्वान्न ङीष्। अन्त्योऽकार[२] इति व्याख्यानाच्च न ङीनिति भावः। **उदात्तनिवृत्तीति।** 'अनुदात्तस्य च यत्रे'त्यनेन ङीबुदात्तः स्यात्। सिद्धान्ते त्वञन्तत्वान्ङीन्याद्युदात्तत्वमिति भावः। **अणिञो।** अत्र पारिभाषिकं गोत्रम्, 'गोत्रावयवा'दिति सूत्रारम्भसामर्थ्यात्। तद्ध्यनन्तरापत्यार्थं,'को गोत्रा दैवदत्तः ?,अनन्तरो,दैवदत्त्या याज्ञदत्त्ये'ति भारद्वाजीयोक्तिपरभाष्यात्। शास्त्रीयगोत्रं पृथग्भूते तत्सदृशेऽनन्तरापत्यप्रत्ययान्ते विध्यर्थम्। तेन युवापत्ये न। अतिप्रसङ्गस्त्वनभिधानान्नेति कैयटः। यदि तु अनन्तरापत्यप्रत्ययान्तदैवदत्त्यायाज्ञदत्त्ययोः क्रौड्यादिपाठं कृत्वा गोत्रावयवादिति प्रत्याख्यायते, तदा लौकिकगोत्रग्रहणेऽपि न दोष

त्यणिञोरेव । ष्यङावितौ । 'यङश्चाप्' । कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम् ? । वासिष्ठी । वैश्वामित्री । गुरूपोत्तमयोः किम् ? । औपगवी । आर्तिभागी । आहिच्छत्री । गोत्रे किम् ? । अहिच्छत्रे जाता आहिच्छत्री । **गोत्रावयवात्** ।४।१।७९। गोत्रावयवाः=गोत्राभिमताः कुलाख्यास्ततो गोत्रे

त.] परत्वात्सर्वादेशः स्यात् । 'ङिच्चे'त्यस्यानन्यार्थङित्त्वेष्वनङादिषु चरितार्थत्वात् । ष्यङोऽनुबन्धस्य 'यङश्चा'बिति विशेषणार्थतया सप्रयोजनत्वादित्याशङ्क्याह—**निर्दिश्यमानस्येति** । **ष्यङावितावित** । अनुबन्धद्वयकरणं ष्यङ इव ष्यङोऽपि 'यङश्चा'बित्यत्र सामान्यग्रहणार्थम् । न च 'ष्यङः संप्रसारण'मित्यत्र विशेषणार्थं तयोरुपयोगोऽस्ति । अन्यथा पाश्यापुत्रः पाश्यापतिरित्यत्र 'पाशादिभ्यो यः' इति यप्रत्ययेऽपि संप्रसारणप्रसङ्ग इति वाच्यं, 'यङः संप्रसारण'मित्येकानुबन्धेनापि तद्वारणात् । 'लोलूयापति'रित्यत्र त्यकारप्रत्ययेन व्यवधानात्संप्रसारणाऽभावः । 'कौमुदगन्धीपुत्र' इत्यत्र त्वेकादेशस्य पूर्वान्तत्वेन ग्रहणान्नास्ति व्यवधानमिति संप्रसारणं सिध्यति । **कौमुदगन्ध्येति** । अणः ष्यङ् । **वाराह्येति** । इञः ष्यङ् । अणिञोः किम् ? । ऋतभागस्यापत्यमार्तभागी । बिदादित्वादञ् । 'शार्ङ्गरवाद्यञः' इति ङीन् । 'टिड्ढे'त्यादिना ङीबिति तु वृत्तिकारः । 'अणिञो'रित्यत्र तु लौकिकं गोत्रं गृह्यते । 'गोत्रं च चरणै'रित्यत्र तु पारिभाषिकमेव गृह्यते । तेन जातित्वाऽभावान्ङीनः प्राप्तिर्नास्तीति स्थितस्य गतिमाहुः ।**गोत्रावयवात्** । अवयवशब्दोऽप्रधानवाची, अवयवश्चासौ गोत्रं चेति कर्मधारयः, निपातनाद्गोत्रशब्दस्य पूर्वनिपातः । **गोत्राभिमता इति** । 'गोत्र'मित्येवमभिमताः=गोत्रवाचित्वेन देशविशेषे प्रसिद्धाः, न तु प्रवराध्याये पठिता इत्यर्थः । प्रवराध्यायेऽपाठाच्चाऽप्राधान्यम् । **कुलाख्या इति** । कुलमाख्यायते यैरिति कुलाख्याः-पुणिकभुणिक-

बा.] मित्यादौ चरितार्थत्वात् । **कुमुदगन्धेरिति** । कुमुदगन्ध इव गन्धो यस्येति विग्रहः । 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यः, उत्तरपदलोपश्चे'ति बहुव्रीहिः, पूर्वखण्डे उत्तरपदस्य गन्धशब्दस्य लोपश्च । 'उपमानाच्चे'ति इत्त्वं । कुमुदगन्धेरपत्यं स्त्रीति विग्रहे अण् । 'यस्येति चे'ति इकारलोपः, आदिवृद्धिः, कौमुदगन्धशब्दः, तत्र धकाराद् णोऽकार उत्तमः । तत्समीपवर्ती गुरुः-गकारादकारः, 'संयोगे गुरु' इत्युक्तेः । नचाऽनुस्वारधकारव्यवहितत्वात्कथमुत्तमसमीपवर्तित्वं गकारादकारस्येति वाच्यं, 'येन नाव्यवधानं तेन व्यवहितेऽपी'ति न्यायेन हला व्यवधानस्याऽदोषत्वात् । नह्यणि परेऽव्यवहितो गुरुः क्वचिदस्ति । एवंच गुरूपोत्तमं प्रातिपदिकं कौमुदगन्धेत्यणन्तं, तदवयवस्य अणः ष्यङादेशे 'यङश्चा'बिति चापि कौमुदगन्ध्याशब्द इत्यर्थः । इञन्तस्योदाहरति—**वाराह्येति** । वराहस्यापत्यं स्त्रीति विग्रहः । अत इञ् । अकारलोपः । वाराहिशब्दः । तत्र इकार उत्तमः । रेफादाकार उत्तमसमीपवर्ती गुरुः । इञ इकारस्य ष्यङादेशः, चाबिति भावः । **वासिष्ठी वैश्वामित्रीति** । ऋष्यणन्तावेतौ । **औपगवीति** । अणन्तत्वेऽपि गुरूपोत्तमत्वाऽभावान्न ष्यङ् । **जातिलक्षण इति** । 'गोत्रं च चरणैः सहे'ति जातित्वम् । **आहिच्छत्रीति** । जातार्थे अणयं, नतु गोत्र इति न ष्यङ् । नच ष्यङ्प्रत्यय एव कुतो न विधीयते इति वाच्यं, तथा सति उदमेघस्यापत्यं स्त्रीति विग्रहेऽत इञि ष्यङि चापि औदमेघ्या, तस्या अपत्यं औदमेघेय इति न सिध्येत्, अस्यापत्यप्रत्ययत्वाऽभावेन यलोपाऽप्राप्तेरिति स्पष्टं भाष्ये । **गोत्रावयवात्** । गोत्रावयवशब्दं व्याचष्टे-**गोत्रावयवा गोत्राभिमता इति** । गोत्रं = कुलम्, अभिमतं=प्रख्यातं याभिरिति विग्रहः । कुलप्रख्यातिकृत इत्यर्थः । कुलव्यपदेशकृत इति यावत् । तदाह—**कुलाख्या इति** । कुलम् आख्यायते व्यपदिश्यते आभिरिति कुलाख्याः ।

शे.] इत्यन्ये । ङकारो 'यङश्चा'बित्यत्रास्यापि ग्रहणार्थः । षकारः सामान्यग्रहणाऽविघातार्थः, अन्यथैकानुबन्धत्वादस्यैव ग्रहणं स्यात्, तु ष्यङः । न च टापा सिद्धिः, अन्तोदात्तत्वाऽनापत्तेः । अयमादेश एव, न तु प्रत्ययः । औदमेध्याया अपत्ये स्त्रीभ्यो ढकि औदमेघेयाऽसिद्धेरिति भाष्ये स्पष्टम् । 'भढे' इत्युक्त्या पुंवत्त्वाऽप्राप्तेः; अस्यापत्यार्थकत्वाभावेन 'आपत्यस्ये'ति यलोपाप्राप्तेश्च । स्त्रियामिति विशिष्योक्त्या स्वार्थिकत्वेऽपि स्त्रीत्वरूपार्थार्थकतैवास्य, गोत्राऽणन्ताभिजितशब्दादत्यन्तस्वार्थिकयञस्तु विशेषानुक्तेः सकलस्वार्थबोधकतेति अपत्यार्थकत्वात्ततो 'गोत्रचरणा'दिति वुञि 'आपत्यस्ये'ति यलोपे आभिजितकसिद्धिरिति तदाशयः । नन्वादेशत्वे हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । बाह्वादित्वादिञ् । 'अचि शीर्षः' इति शीर्षादेशः । तत इञः ष्यङ् । हास्तिशीर्ष्या । अत्र शीर्षस्य स्थानिवत्त्वेन शिरस्शब्दत्वात् 'ये च तद्धिते' इति शीर्षन्नादेशः प्राप्नोति । टिलोपस्तु न, 'येचाभावकर्मणो'रिति प्रकृतिभावात् । स्पष्टञ्चेदं 'ये च तद्धिते' इत्यत्र भाष्ये इति चेन्न, 'ये च तद्धिते' इति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वात् । अत एव प्रकृतसूत्रे भाष्ये आदेशपक्षमुपक्रम्यैष पक्षो निर्दोष इत्युक्तम् । एवञ्च 'ये च तद्धिते' इति सूत्रे पूर्वपक्षयुक्तप्रयोगयोरनभिधानमेवेति तद्भावः । यद्वा क्रौड्यादिगणे तयोः पाठादत्र ष्यङः प्रत्ययत्वमेवेत्यणिञ्भ्यां व्यवधानादत्र शीर्षन्नादेशाऽभाव इत्याशयः । **गोत्रावयवात्** । अवयवशब्दोऽवन्तोऽप्रधानवाची । तेनाऽप्रधानं गोत्रं यत्कुलप्रतिष्ठाकरं तदुच्यते; तदाह—**गोत्राऽभिमता इति** ।

विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात् । अगुरूपोत्तमार्थं आरम्भः । पौणिक्या । भौणिक्या । **क्रौड्यादिभ्यश्च** ।४।१।८०। स्त्रियां ष्यङ् प्रत्ययः स्यात् । अगुरूपोत्तमार्थोऽनणिञ[न्ता]र्थश्चारम्भः । क्रौड्या । व्याड्या । [ गौकक्ष्या ] । ( ग ) **सूत युवत्याम्** । सूत्या । ( ग ) **भोज क्षत्रिये** । भोज्या । **दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम्** ।४।१।८१। एभ्यश्चतुर्भ्यः ष्यङ्वा । अगोत्रार्थमिदं, गोत्रेऽपि परत्वात्प्रवर्तते । पक्षे 'इतो मनुष्ये'ति ङीष् । दैवयज्ञ्या । दैवयज्ञी । इत्यादि । **इत्यपत्याधिकारः ।**

## अथ तद्धितेषु रक्ताद्यर्थकाः ।

**तेन रक्तं रागात्** ।४।२।१। रज्यतेऽनेनेति रागः । कषायेण रक्तं वस्त्रं काषायम् । माञ्जिष्ठम् । राग-

---

**त.]** मुखरप्रभृतयः । तैर्हि कुलमाख्यायते 'पुणिका वयं गोत्रेण' 'भुणिका वयं गोत्रेण' इति । **तत इति** । गोत्रावयवादित्यर्थः । **क्रौड्यादिभ्यश्च** । पञ्चमीनिर्देशात्प्रत्ययत्वमेवेहाश्रीयत इत्याह—**ष्यङ् प्रत्यय इति** । क्रौडि, व्याडि, आपिशलि, गौकक्ष्य—इत्यादि । गौकक्ष्यशब्दो गर्गादियञन्तस्तदर्थमाह—**अनणिञन्तार्थश्चेति** । **सूतेति** । गणसूत्रम् । सूतशब्दः ष्यङं लभते युवत्यां वाच्यायामित्यर्थः । **सूत्येति** । ष्यङि 'यङश्चाप्' । अन्यत्र तु क्रियाशब्दाट्टाप् । सूतजातिवाचिनस्तु ङीष् । सूती । **भोजेति** । इदमपि गणसूत्रम् । जातिलक्षणङीषोऽपवादः ष्यङ् । क्रियाशब्दात्तु टाबेव—भोजयतीति भोज्या । **दैवयज्ञि । चतुर्भ्य इति** । 'इञन्तेभ्य' इति शेषः । देवा यज्ञा यष्टव्या यस्य स देवयज्ञः । शुचिर्वृक्षो यस्य शुचिवृक्षः । सत्यमुग्रं यस्य सत्यमुग्रः । निपातनाद्विशेष्यस्य पूर्वनिपातः, मुमागमश्च । काण्डेन विद्धः काण्डेविद्धः । 'कर्तृकरणे कृते'ति समासः । निपातनात्काण्डशब्दस्यैकारः । पाठान्तरे कण्ठे विद्धमस्य, कण्ठे वा विद्धः कण्ठेविद्धः । 'अमूर्धमस्तकादि'त्यलुक् । एभ्यः सर्वेभ्योऽपत्ये 'अत इञ्' । **गोत्रेऽपि परत्वादिति** । तथा चोभयत्र विभाषेति भावः । अत्रेदमवधेयम्—'अणिञो'रिति सूत्रे यदि शास्त्रीयं गोत्रं गृह्यते तदा 'अगोत्रार्थमिद'मित्यादिग्रन्थः स्वरसतः संगच्छते । यदि तु लौकिकं गोत्रमेव तत्र गृह्यते तदा 'अणिञो'रि'ति नित्ये प्राप्ते विकल्पार्थमिदमित्येव व्याख्यातुमुचितमिति । **इत्यपत्याधिकारः ।**

---

**बा.]** कुलनामानीत्यर्थः । पुणिकादिशब्दैर्हि कुलं व्यपदिश्यते—'पुणिकाः वयं', 'मुणिकाः वय'मित्यादि । अवपूर्वकात् 'यु मिश्रणे' इति धातोरुपसर्गवशेन प्रख्यात्यर्थकात् पचाद्यचि अवयवशब्दः । कुलस्यावयवः प्रख्यापकशब्दः कुलावयव इति लभ्यत इति भावः । ननु पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह—**अगुरूपोत्तमार्थं इति** । गोत्रादवयुतं=मिश्रितम्—अनन्तरापत्यं, तदर्थमित्यपि भाष्ये स्पष्टम् । एवञ्च पूर्वसूत्रे अपत्याधिकारबहिर्भूतेऽपि पारिभाषिकमेव गोत्रं गृह्यत इति भाष्यस्वरसः । **पौणिक्येति** । पुणिकस्यापत्यं स्त्रीति विग्रहे अत इञन्तात् ष्यङि चाप् । एवं मौणिक्या । मनुष्यनामत्वे तन्नामिकाऽणः ष्यङ् । **क्रौड्यादिभ्यश्च** । 'प्रत्ययविधि'रिति भाष्योक्तं पक्षान्तरमाश्रित्याह—**ष्यङ्प्रत्यय इति** । पूर्वेण सिद्धे किमर्थमिदमित्यत आह—**अगुरूपोत्तमार्थोऽनणिञन्तार्थश्चेति ।** **क्रौड्येति** । क्रोडस्यापत्यं स्त्रीति विग्रहे अत इञन्तात् ष्यङ्, चाप् । इह 'त्र्यादीनामन्त्यमुत्तम'मित्युक्तेर्न गुरूपोत्तमत्वम् । मनुष्यनामत्वे त्वण् । 'गौकक्ष्य'शब्दो गर्गादिञन्तः । तस्य अनणिञन्तत्वेऽपि ष्यङ् । **सूत युवत्यामिति** । गणसूत्रमिदम् । सूतशब्दो युवत्यां ष्यङं लभत इत्यर्थः । **सूत्येति** । प्राप्तयौवनेत्यर्थः । जातौ तु सूतीत्येव । **भोज क्षत्रिये** । इदमपि गणसूत्रम् । **दैवयज्ञि । अगोत्रार्थमिति** । अनन्तरापत्यार्थमित्यर्थः । **प्रवर्तते इति** । 'विकल्प' इति शेषः । **पक्षे इति** । ष्यङभावपक्षे इत्यर्थः । **दैवयज्ञीति** । देवयज्ञस्यापत्यं स्त्रीति विग्रहे अत इञन्तात् ष्यङ्विकल्पः । **इत्यादीति** । शुचिवृक्षस्यापत्यं स्त्री शौचिवृक्ष्या—शौचिवृक्षी । सत्यमुग्रमस्येत्यर्थे—सत्यमुग्रः । निपातनान्मुम् । सत्यमुग्रस्यापत्यं स्त्री सात्यमुग्र्या—सात्यमुग्री । काण्डेन विद्धः काण्डेविद्धः । निपातनादेत्वम् । काण्डेविद्धस्यापत्यं स्त्री काण्डेविद्ध्या—काण्डेविद्धी । कण्ठेविद्धीति पाठान्तरम् । **इत्यपत्याधिकारः ।**

---

**शे.]** पुणिकमुणिकमुखरादि हि देशविशेषप्रसिद्धं कुलनाम । पुणिकादयोऽत इञन्ताः । किञ्च गोत्रादवयुतं=पृथग्भूतमनन्तरापत्यं, तदर्थश्चेदम् । भाष्यप्रामाण्यादर्थद्वयेऽपि सूत्रतात्पर्यम् । अनयोरुभयोरपि क्रौड्यादित्वकल्पने तु व्यर्थमेव सूत्रमिति बोध्यम् ।

**क्रौड्यादिभ्य इति** पञ्चमीनिर्देशादत्र प्रत्ययत्वमेवेत्याह—**प्रत्यय** इति । **सूतेत्यादि** गणसूत्रे । सूतशब्दाद्भोजशब्दाच्च प्रत्ययः । सूत्या=प्राप्तयौवना । जातौ सूतीत्येव । एवमक्षत्रिया भोजैव । क्रौड्यादिपठितगौकक्ष्यशब्दस्य ष्यङन्तत्वेऽपि 'गौकक्ष्यायाः प्रतिषेधः' इति वचनान्न सम्प्रसारणम् । तेन गौकक्ष्यापुत्र इत्येव । **दैवयज्ञि** । देवा यज्ञा यष्टव्या यस्य तदपत्यमित्यर्थः । कण्ठे विद्धमस्य । 'काण्डेविद्धी'ति पाठे—काण्डेन विद्ध इति समासेऽत एव निपातनात्काण्डस्यैकारः । सत्यमुग्रमस्येत्यर्थे निपातनान्मुक् । **अगोत्रार्थमिति** । अनन्तरापत्यार्थमित्यर्थः । **गोत्रे** = शास्त्रीये । एवञ्चोभयत्रविभाषेयमिति भावः । इदञ्च 'गोत्रावयवा'दित्यस्य पुणिकादिमात्रविषयत्वमिति वादिनां मते बोध्यम् । अन्यथा तु प्राप्तविभाषेवेति दिक् । **इत्यपत्याधिकारः ।**

किम् ?। देवदत्तेन रक्तं वस्त्रम् । **लाक्षारोचनाट्ठक्** ।४।२।२। लाक्षिकः । रौचनिकः । ✽ **शकलकर्दमाभ्यामुपसंख्यानम्** । शाकलिकः । कार्दमिकः । 'आभ्यामणपी'ति वृत्तिकारः । शाकलः । कार्दमः । ✽**नील्या अन्** । नील्या रक्तं नीलम् । ✽ **पीतात्कन्** । पीतकम् ✽ **हरिद्रामहारजनाभ्यामञ्** । हारिद्रम् । माहारजनम् । **नक्षत्रेण युक्तः कालः** ।४।२।३। पुष्येण युक्तं पौषमहः । पौषी रात्रिः । **लुबविशेषे** ।४।२।४। पूर्वेण विहितस्य लुप्स्यात् षष्टिदण्डात्मकस्य कालस्यावाऽन्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः । कथं तर्हि पुष्ययुक्ता पौर्णमासी पौषीति ?। 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति निर्देशेन पौर्णमास्यामयं

---

त.] **तेन रक्तं** । तृतीयान्तात्समर्थाद्यथाविहितं प्रत्ययाः स्युः । **रज्यतेऽनेनेतीति** । बाहुलकात्करणे घञ् । **राग इति** । रञ्जकद्रव्यमित्यर्थः । शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः । **लाक्षारोचनात्** । वृत्तिकृता तु वार्तिकस्थौ शकलकर्दमौ सूत्रे प्रक्षिप्तौ । 'शकलं त्वचि खण्डे च रागवस्तुनि वल्कले' इति विश्वः । **वृत्तिकार इति** । भाष्ये तु नैतद्दृष्टमिति भावः । **नील्येति** । नीली ओषधिविशेषः । अणपवादोऽयम् । **नक्षत्रेण** । नक्षत्रवाचकाः शब्दा वृत्तिविषये तद्युक्तं चन्द्रमसमभिदधानाः प्रत्ययं लभन्ते । **पुष्येणेति** । पुष्यसमीपस्थेन चन्द्रमसेत्यर्थः । एवं च पौषमह इत्यादिव्यवहारः सङ्गच्छते । सर्वेषामप्यह्नां पुष्ययोगसत्त्वेऽपि तत्समीपस्थचन्द्रमसा योगस्याऽसार्वत्रिकत्वात् । नक्षत्रेणेति किम् ?। चन्द्रेण युक्ता रात्रिः । कालः किम् ?। पुष्येण युक्तश्चन्द्रः । **लुबवि[शेषे]** । पूर्वसूत्रस्यानुवर्तनादिह 'नक्षत्रेण युक्तस्य कालस्याऽविशेषे गम्ये' इत्यर्थं उपलभ्यते, तदाह—**षष्टिदण्डेति** । 'अद्य पुष्यः' इत्युक्त्वा 'न ह्यो, न श्वः' इति विशेषे गम्यमानेऽपि अहोरात्रात्मककालस्यावान्तरविशेषानवगमाल्लुब्भवत्येवेति भावः ।'अविशेषे' इत्यत्र प्रसज्यप्रतिषेधाश्रयणात् 'पौषोऽहोरात्रः' इत्यत्र लुब्न भवति, षष्टिदण्डात्मकसमुदायरूपकालस्य प्रतीतावप्यवयवद्वयात्मकस्यापि विशेषस्यापि प्रतीतेरित्याशयेनाह—**विशेषश्चेन्नेति** । **अद्य पुष्य इति** । 'मूलेनावाहयेद्देवीं

---

बा.] अथ तद्धितचातुरर्थिकप्रकरणं निरूप्यते । **तेन रक्तं रागात्** । **रज्यत इति** । रज्यते वर्णान्तरं प्राप्यते अनेनेत्यर्थे रञ्जेः करणे घञि कृते 'घञि च भावकरणयो'रिति नलोपे 'चजोः कु घिण्ण्यतो'रिति कुत्वे उपधावृद्धौ रागशब्द इत्यर्थः । तथाच रागशब्देन रञ्जनसाधनं द्रव्यमुक्तं भवति । 'तेने'ति सामान्यनिर्देशः । तथाच तेन रक्तं= वर्णान्तरं प्राप्तमित्यर्थे, **रागात्**=रञ्जनद्रव्यवाचकात्तृतीयान्तादण् स्यादित्यर्थः, 'प्राग्दीव्यतोऽणि'त्यधिकारात् । **कषायेणेति** । कषायो धातुविशेषः, रञ्जनद्रव्यं, तेन रक्तं वर्णान्तरं प्राप्तं काषायमित्यर्थः । **माञ्जिष्ठमिति** । मञ्जिष्ठा नाम रञ्जनद्रव्यविशेषः । **लाक्षारोचनाट्ठक्** । अणोऽपवादः । **लाक्षिक इति** । 'पट' इति शेषः । लाक्षया रक्त इति विग्रहः । **रौचनिक इति** । रोचनया रक्त इति विग्रहः । **शाकलिक इति** । शकलं—रागद्रव्यविशेषः । **वृत्तिरिति** । भाष्ये तु नैतद्दृष्टम् । **नील्या अनिति** । 'वक्तव्य' इति शेषः । अणोऽपवादः । नीली ओषधिविशेषः । **'पीतात्कन्'** । अणोऽपवादः । पीतं हरितालकादि द्रव्यम् । **हरिद्रामहेति** । अणोऽपवादः । स्वरे विशेषः । हरिद्रा प्रसिद्धा । **महारजनं**—नाम रागद्रव्यविशेषः । **इति रक्ताधिकारः** ।

**नक्षत्रेण** । अस्मिन्नर्थे प्रथमोच्चारितान्नक्षत्रवाचकाच्छब्दात् प्राग्दीव्यतीयाः प्रत्यया यथायथं स्युरित्यर्थः । नक्षत्रयुक्तश्चन्द्रमा—नक्षत्रशब्देन विवक्षितः । **पुष्येण युक्तमिति** । पुष्ययुक्तचन्द्रमसा युक्तमित्यर्थः । **पौषमहरिति** । पुष्यशब्दादणि 'तिष्यपुष्ययोर्नक्षत्राऽणि यलोपः' इति यलोपः । **पौषी रात्रिरिति** । पुष्ययुक्तचन्द्रमसा युक्तेत्यर्थः । अणि यलोपे 'टिड्ढे'ति ङीप् । नक्षत्रेणेति किम् ?। चन्द्रेण युक्ता रात्रिः । कालः किम् ?। पुष्येण युक्तश्चन्द्रमाः । **लुबविशेषे** । **षष्टिदण्डेति** । षष्टिघटिकापरिच्छिन्ने काले एकैकस्मिन्नेकैकेन नक्षत्रेण चन्द्रमा युज्यत इति स्थितिः । तस्य षष्टिदण्डस्य कालस्य अवान्तरविशेषोऽहर्वा रात्रिर्वेति न गम्यते चेदित्यर्थः । **अद्य पुष्य इति** । अद्येत्यव्ययम् अहोरात्रवाचि अधिकरणशक्तिप्रधानम्, इह तु अधिकरणशक्तिविनिर्मुक्तोऽहोरात्रकालो विवक्षितः । तथाच अयमहोरात्रः पुष्ययुक्तचन्द्रमसा युक्त इत्यर्थः । अहर्वा रात्रिर्वेति विशेषानवगमादणो लुप् । **कथं तर्हीति** । पौर्णमास्याः षष्टिदण्डात्मिकाया अवान्तरविशेषानवगमादिह लुप् स्यादित्याक्षेपः । समाधत्ते—**विभाषेति** ।

---

शे.] **तेन रक्तम्** । 'राग'शब्दे करणे घञ् । रागवाचकात्करणकरञ्जनकर्मत्यर्थे प्रत्यय इत्यर्थः । 'कौमारे'ति पर्यन्तं 'तेने'ति वर्तते । **देवदत्तेनेति** । 'रागा'दित्यस्याऽभावे कर्तृतृतीयान्तस्यापि ग्रहणं स्यादिति भावः । **लाक्षारो** । रोचनाशब्देन समाहारद्वन्द्वः । **शाकलं**-रागद्रव्यविशेषः । **वृत्ति..र इति** । भाष्ये तु नैतद् दृष्टम् । **नक्षत्रेण युक्तः** । अश्विन्यादयः केवलनक्षत्रवाचकास्तद्युक्तचन्द्रवाचकाश्च । तत्राद्येऽप्रासिपूर्वकप्राप्तिरूपयोगस्याऽसम्भवादन्त्यग्रहणम् । सच संकल्पवाक्ये प्रसिद्धः । नक्षत्रशब्दोऽप्येवम् । 'अथ किं नक्षत्र'मित्यादिव्यवहारात् । 'नक्षत्रयुक्तचन्द्रमसा युक्त इत्यर्थे प्रथमात्प्रत्ययो भवति, यो युक्तः स चेत्काल' इति सूत्रार्थः । न च नक्षत्रवाचकादेव,अभिधानस्वाभाव्यात् । नक्षत्रेणेति किम् ?। चन्द्रेण युक्ता रात्रिः । कालः किं ?। पुष्येण युक्तं गगनम् ।

लुब्नेति ज्ञापितत्वात् । श्रवणशब्दात्त्वत एव लुप्, युक्तवद्भावाऽभावश्च । 'अबाधकान्यपि निपातनानि' । श्रावणी । **संज्ञायां श्रवणाऽश्वत्थाभ्याम्** ।४।२।५। विशेषार्थोऽयमारम्भः । श्रवणा रात्रिः । अश्वत्थो मुहूर्तः । संज्ञायां किम् ? । श्रावणी । आश्वत्थी । **द्वन्द्वाच्छः** ।४।२।६। नक्षत्रद्वन्द्वाद्युक्ते काले छः स्याद्विशेषे सत्यसति च । तिष्यपुनर्वसवीयमहः । राधानुराधीया रात्रिः । **दृष्टं साम** ।४।२।७। तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम । ॐ **अस्मिन्नर्थेऽण् डिद्वा वक्तव्यः** । उशनसा दृष्टम्—औशनम् । औशनसम् । **कलेर्ढक्** ।४।२।८। कलिना दृष्टं कालेयं साम । **वामदेवाड्ड्यड्ड्यौ** ।४।२।९। वामदेवेन दृष्टं साम वामदेव्यम् ।—सिद्धे यस्येति-

त.]श्रवणेने'त्यप्युदाहरणं बोध्यम् । द्वन्द्वाच्छः । विशेषे उदाहरणमाह—तिष्येत्यादि । अविशेषे तूदाहर्तव्यम् 'अद्य राधानुराधीय'मिति । न चात्र 'लुबविशेषे' इति अण इव छस्यापि लुप्स्यादिति वाच्यं, मध्येऽपवादन्यायरीत्या पूर्वोपस्थितस्याऽण एव तत्प्रवृत्तेः । यत्तु 'लुपं परत्वाद्बाधते छ' इति वृत्तिकृतोक्तं, तन्न, द्वयोर्युगपत्प्राप्त्यभावात् ।

**दृष्टं साम** । तृतीयान्ताद्दृष्टमित्यर्थेऽणादयः स्युर्यद्दृष्टं तच्चेत्साम । **अस्मिन्नर्थे इति** तथा च श्लोकवार्तिकं—'दृष्टे सामनि जाते वाप्यण् डिद् द्विर्वा विधीयते । तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते ।' इति । जातेऽर्थे यो द्विरण् स च वा डिदित्यन्वयः । शतभिषजि जातः शातभिषः, शातभिषजः । इह हि 'प्राग्दीव्यतः' इति प्राप्तोऽण् कालाट्ठञा बाधितः, स च 'सन्धिवेलादि' सूत्रेण प्रतिप्रसूयते इत्ययं द्विरुक्तोऽण् । **तीयादिति** । तीयादीकक् स्वार्थे भवतीत्यर्थः । द्वैतीयीकः । तार्तीयीकः । **न विद्याया इति** । विद्यावाचकात्तीयान्तादीकङ् भवतीत्यर्थः । द्वितीया विद्या । **गोत्रादङ्कवदिति** । गोत्रप्रत्ययान्तादङ्के यः प्रत्ययः स दृष्टे सामन्यपि भवति । औपगवेन दृष्टमौपगवकम् । इह

बा.]फाल्गुनीकार्तिकीचैत्रीशब्दानां नक्षत्राऽण्विशिष्टानां पौर्णमास्यां प्रयोगदर्शनेन, पौर्णमास्यां नक्षत्रयुक्तायां 'लुबविशेषे' इत्ययं लुब् नेति ज्ञापितत्वात्पौषी पौर्णमासीत्यत्र न लुबित्यर्थः । ननु तर्हि श्रवणयुक्तपौर्णमास्यां लुबभावात्कथं श्रवणेति निर्देश इत्यत आह—**श्रवणशब्दात्त्वत एव लुबिति** । 'श्रवणे'ति निपातनादेव पौर्णमास्यां लुबित्यर्थः । ननु 'कृत्तिका श्रवणः पुष्यः चित्रास्वात्योर्यदन्तर'मित्यादौ श्रवणशब्दस्य पुंलिङ्गत्वदर्शनेन तस्मादणो लुपि कृते 'लुपि युक्तवद्व्यक्तिवचने' इति पुंलिङ्गत्वावश्यंभावाच्छ्रवणेति कथं स्त्रीलिङ्गतेत्यत आह—**युक्तवद्भावाभावश्चेति** । 'निपातना'दिति शेषः । ननु तर्हि श्रावणीति नैव स्यादित्यत आह—**अबाधकान्यपीति** । इयं परिभाषा वृत्तौ स्थिता । सर्वादिसूत्रभाष्ये तु 'बाधकान्येव निपातनानी'त्युक्तम् । **संज्ञायाम्** । श्रवणाऽश्वत्थाभ्यां परस्य नक्षत्रप्रत्ययस्य लुप् स्यात्संज्ञायामित्यर्थः । ननु 'लुबविशेषे' इत्येव सिद्धे किमर्थमिदमित्यत आह—**विशेषार्थोऽयमारम्भ इति** । **श्रवणा रात्रिरिति** । श्रवणयुक्तचन्द्रमसा युक्ता रात्रिरित्यर्थः । 'विभाषा फाल्गुनीश्रवणे'ति सूत्रे श्रवणेति निर्देशस्य सामान्यापेक्षत्वादपौर्णमास्यामपि युक्तवद्भावो नेति विज्ञायते । अतः 'श्रवणा रात्रि'रिति सिद्धमिति प्रकृतसूत्रे भाष्ये स्पष्टम् । **अश्वत्थो मुहूर्त इति** । अश्वत्थो नाम अश्विनीनक्षत्रम् । तेन युक्तः अश्वत्थः—मुहूर्तविशेषो ज्यौतिषे प्रसिद्धः । **द्वन्द्वाच्छः** । **तिष्यपुनर्वसवीयमिति** । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू, ताभ्यां युक्तमहरिति विग्रहः । छस्य ईयादेशे ओर्गुणः । **राधानुराधीयेति** । राधेति विशाखानक्षत्रमुच्यते । राधा च अनूराधाश्च राधानूराधाः, तद्युक्ता रात्रिरित्यर्थः । **दृष्टं साम** । **तेनेत्येवेति** । अनुवर्तत एवेत्यर्थः । तेन दृष्टं सामेत्यर्थे तृतीयान्तादणादयः स्युरित्यर्थः । **अस्मिन्नर्थे इति** । 'दृष्टं साम' इत्यर्थे यः अण् स डिद्वेत्यर्थः । **औशनमिति** । अणि टिलोपपक्षे रूपम् । **कलेर्ढक्** । वार्त्तिकमिदम् । **वामदेवाड्ड्यड्ड्यौ** । **वामदेव्यमिति** । डित्त्वाट्टिलोपः । तित्त्वं स्वरार्थम् । ननु 'यस्येति चे'ति लोपेन सिद्धे किमर्थमिह डित्करणमिति चेत्, सत्यम्—ययतोरेव विधौ 'ययतोश्चाऽतदर्थे' इति नञः परस्य ययदन्तस्यान्तोदात्तस्वरविधावनयोर्ग्रहणं स्यात्, तदभावार्थं डित्करणं । डित्करणे सति तु स्वरविधावनयोर्न ग्रहणं, 'निरनुबन्धकग्रहणे सति न सानुबन्धकस्य ग्रहण'मितिं परिभाषया 'तदनुबन्धकग्रहणे सति नाऽतदनुबन्धकस्य' इति परिभाषया च तन्निवृत्तिर्भवति । एते तु परिभाषे इहैव ज्ञाप्येते । तथाच 'अवामदेव्य'मित्यत्राऽयं स्वरो न भवति । एतत्सङ्ग्राहकं भाष्यस्थं श्लोकं पठति—**सिद्धे यस्येत्यादि** । अत्र पूर्वार्धमाक्षेपपरम् । 'यस्य' इति लोपेन सिद्धे ययतौ किमर्थं डितौ कृतावित्यर्थः । **ग्रहणमिति** । वामदेव्यशब्दस्य नञ्स्वरे=नञाश्रयस्वरविधौ अतदर्थे='ययतोश्चातदर्थे'इति सूत्रे अनयोर्ड्यड्ड्ययोर्ग्रहणं मा भूदित्येतदर्थं डित्क-

शे.]अद्येति । 'अद्यतनमहोरात्र'मित्यादाविव 'राहोः शिर' इत्यादाविव च कल्पितभेदमादायाधारत्वोपपत्तिर्बोध्या । **पौर्णमास्यामिति** । अन्यत्र तु पुष्यः पञ्चमीत्येव । **अत एवेति** । तत्र श्रवणेत्युक्तेरेव । अनेन च पौर्णमास्यां लुब्नेत्यस्याऽनित्यत्वं ज्ञाप्यते । तेन श्रावणी । 'अबाधकान्यपी'ति वृत्तिमतं तु न युक्तं, 'बाधकान्येव निपातनानी'ति सर्वादिसूत्रे भाष्योक्तेः । **संज्ञायां श्रव** । 'विभाषे'ति सूत्रे श्रवणेत्युच्चारणाज्ज्ञापकादेवैतद्विषयेऽपि श्रवणशब्दे युक्तवद्भावो न । तेन 'श्रवणा रात्रि'रिति सिद्धम् । द्वन्द्वाच्छः । अत्राऽविशेष

लोपेन किमर्थं यतौ ङितौ । ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥ १ ॥ परिवृतो रथः ।४।२।१०। वस्त्रैः परिवृतो वास्त्रो रथः । रथः किम् ? । वस्त्रेण परिवृतः कायः । समन्ताद्वेष्टितः परिवृत उच्यते । तेनेह न—छात्रैः परिवृतो रथः । पाण्डुकम्बलादिनिः ।४।२।११। पाण्डुकम्बलेन परिवृतः पाण्डुकम्बली । पाण्डुकम्बलशब्दो राजास्तरणवर्णकम्बलस्य वाचकः । मत्वर्थीयेनेनिनैव सिद्धे वचनमणो निवृत्त्यर्थम् । द्वैपवैयाघ्रादञ् ।४।२।१२। द्वीपिनो विकारो द्वैपम् । तेन परिवृतो द्वैपो रथः । एवं—वैयाघ्रः । कौमारापूर्ववचने ।४।२।१३। 'कौमारे'त्यविभक्तिको निर्देशः । अपूर्वत्वे निपातनमिदम् । अपूर्वपतिं कुमारीं पतिरुपपन्नः—'कौमारः' पतिः । यद्वा अपूर्वपतिः—कुमारी, पतिमुपपन्ना 'कौमारी' भार्या । तत्रोद्धृतममत्रेभ्यः ।४।२।१४। शरावे उद्धृतः शाराव ओदनः । उद्धरतिरिहोद्धरणपूर्वके निधाने वर्तते । तेन सप्तमी । उद्धृत्य निहित इत्यर्थः । स्थण्डिला-

त.] 'गोत्रचरणाद्वु'ञिति वुञ् । वामदेवात् । ग्रहणं माऽतदर्थं इत्यादि । अतदर्थे 'ययतोश्चातदर्थे इति विहिते' नञ्स्वरे—नञाश्रितस्वरे ड्यड्यतोर्ग्रहणं मा भूदित्यर्थः । 'ययतोश्चे'ति सूत्रेण विधीयमानं नञः परस्य ययदन्तस्योत्तरपदस्यान्तोदात्तत्वमवामदेव्यशब्दे मा भूत् किंतु—अव्ययपूर्वपदस्वर एव यथा स्यादित्येतदर्थं ङित्करणमिति फलितोऽर्थः । न च कृतेऽपि ङित्वे 'ययतो'रित्यस्य प्रवृत्तिः कुतो नेति शङ्क्यं, 'निरनुबन्धकग्रहणे न सानुबन्धकस्य', 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये'ति परिभाषयोः सत्त्वात् । इमे च परिभाषे इहैव ङित्वेन ज्ञाप्येते । तत्राऽऽद्यायाः प्रयोजनं—'पूरणगुणे'ति सूत्रे तव्यग्रहणे तव्यतोऽग्रहणम् । द्वितीयस्यास्तु अड्ग्रहणे चङोऽग्रहणम् । 'श्वयतेरः' 'अङि परे' इति शेषः । अश्वत् । चङि परे तु न, अशिश्वियत् । परिवृतो । तृतीयान्तात्परिवृत इत्यर्थेऽणादयः स्युर्यः परिवृतः स चेद्रथो भवति । रथाच्छादनार्थं यद्वस्त्रकम्बलादिकं तत एव सर्ववेष्टनं भवति, न तु छात्रादिभ्य इत्याशयेनाह—समन्ताद्वेष्टित इति । परिः सर्वतोभावे वर्तत इति भावः । कौमारा । तेनेति निवृत्तम् । 'अपूर्व' इति भावप्रधानो निर्देश इत्याह—अपूर्वत्वे इति । अपूर्वत्वं तु स्त्रिया एवेष्यते, पुरुषस्तु अपूर्वभार्योऽस्तु वा मा वेत्यनाग्रहः । अपूर्वपतिमिति । न पूर्वं पतिर्यस्या इति बहुव्रीहिः । कौमारः पतिरिति । द्वितीयान्तात्कुमारीशब्दादुपयन्तरि प्रत्ययः । कौमारीति । इह कुमारीशब्दात्प्रथमान्तात्स्वार्थे प्रत्ययः, 'टिड्ढा'णिति ङीप् । तत्रोद्धृत । 'सास्मिन्पौर्णमासी'ति सूत्रात्प्राक् 'तत्रे'त्यधिकारः । पात्रवाचिभ्यः सप्तम्यन्तेभ्य उद्धृतमित्यर्थे यथाविहितं प्रत्ययाः स्युः । शाराव इति । भुक्तोच्छिष्ट इत्यर्थ इति वृत्तिकृत् । अवशिष्ट इति तदर्थः । 'उच्छिनष्टि, न सर्वं जुहोती'ति कल्पसूत्रव्यवहारात् । सप्तमीति । निधानक्रियापेक्षया अधिकरणत्वादिति भावः । स्थण्डिलात्

बा.] रणमित्यर्थः । परिवृतो रथः । 'तेने'त्यनुवर्तते । तेन 'परिवृतो रथः' इत्यर्थे तृतीयान्तादणादयः स्युरित्यर्थः । ननु छात्रैः परिवृतो रथ इत्यत्रापि स्यादित्यत आह—समन्तादिति । रथस्य समन्तादाच्छादनार्थं यद्वस्त्रादिकं रथावयवभूतं तद्वाचकादेवेत्याशयः, एकान्तग्रहणमिति वार्तिकात् । पाण्डुकम्बलादिनिः । तेनेति, परिवृतो रथ इति चानुवर्तते । इनिप्रत्यये नकारादिकार उच्चारणार्थः । ननु 'अत इनिठनौ' इति मत्वर्थीयेन इनैव सिद्धे किमर्थमिदमित्यत आह—अणो निवृत्त्यर्थमिति । द्वैपवैयाघ्रादञ् । तेनेति परिवृतो रथ इति चानुवर्तते । तृतीयान्ताद्द्वैपशब्दाद्वैयाघ्रशब्दाच्च परिवृतो रथ इत्यर्थे अञ् स्यादित्यर्थः । अणोऽपवादः । स्वरे विशेषः । द्वीपिन इति । द्वीपी—व्याघ्रः, तस्य विकारश्चर्मेत्यर्थे 'प्राणिरजतादिभ्यः' इत्यञि द्वैपशब्द इत्यर्थः । एवं वैयाघ्र इति । व्याघ्रस्य चर्म, वैयाघ्रम् । अञि 'न य्वाभ्या'मित्यैच् । तेन परिवृतो वैयाघ्र इति भावः । कौमारापूर्व । तेनेति परिवृतो रथ इति च निवृत्तम् । अविभक्तिक इति । लुप्तप्रथमाक इति भावः । अपूर्वशब्दो भावप्रधान इत्याह—अपूर्वत्वे निपातनमिदमिति । न पूर्वः पतिर्यस्याः सा अपूर्वपतिः, तां कुमारीमुपयतवान् पतिरित्यर्थे द्वितीयान्तात्कुमारीशब्दादण् स्यादित्येकोऽर्थः । कुमारी अपूर्वपतिमुपपन्नेत्यर्थे प्रथमान्तात्कुमारीशब्दादण् स्यादित्यन्योऽर्थः । आद्ये उदाहरति—अपूर्वपतिमिति । द्वितीये उदाहरति—यद्वेत्यादि । आद्ये उपयन्तरि प्रत्ययः । द्वितीये उपयतायां स्वार्थे प्रत्यय इति विवेकः । तत्रोद्धृतम् । तत्रोद्धृतमित्यर्थे [illegible]-

शे.] इति नानुवर्तते, अस्वरितत्वात् । कलेर्ढगिति [illegible] । परिवृतो [illegible] इत्यपाठः । मनोरमाविरोधात्, 'पुत्रैः परिवृतः' इति [illegible] । [illegible] । 'प्राणिरजतादिभ्योऽञ्' । ततोऽणपवादोऽञ् । स्वरे विशेषः । अपूर्वत्वे इति । [illegible] त्यक्षरार्थं इति भावः । अपूर्वशब्दो भावप्रधानः । [illegible] मान्ताद्वा प्रत्ययः । आद्ये उपयन्तरि द्वितीये [illegible] । द्वितीयं [illegible] अपूर्वपतिमित्यादिर्बहुव्रीहिः । तत्रोद्धृ । 'तत्रे'ति [illegible]

**च्छयितरि व्रते** ।४।२।१५। तत्रेत्येव । समुदायेन चेद्व्रतं गम्यते । स्थण्डिले शेते स्थाण्डिलो भिक्षुः । **संस्कृतं भक्षाः** ।४।२।१६। सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे, यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवाः । अष्टसु कपालेषु संस्कृतोऽष्टाकपालः पुरोडाशः । **शूलोखाद्यत्** ।४।२।१७। अणोऽपवादः । शूले संस्कृतं शूल्यं मांसम् । उखा पात्रविशेषः, तस्यां संस्कृतम्—उख्यम् । **दध्नष्ठक्** ।४।२।१८। दध्नि संस्कृतं दाधिकम् । **उदश्वितोऽन्यतरस्याम्** ।४।२।१९। ठक् स्यात् । पक्षेऽण् । **इसुसुक्तान्तात्कः** ।७।३।५१। इस् उस् उक् त एतदन्तात्परस्य ठस्य कः स्यात् । उदकेन श्वयति वर्धते इत्युदश्वित् । तत्र संस्कृतः औदश्वित्कः । औदश्वितः । इसुसोः प्रतिपदोक्तयोर्ग्रहणान्नेह—आशिषा चरति आशिषिकः । उषा चरति औषिकः । * **दोष उपसङ्ख्यानम्** । दोर्भ्यां चरति दौष्कः । **क्षीराड्ढञ्** ।४।२।२०। अत्र संस्कृतमित्येव संबध्यते न तु भक्षा इति । तेन यवाग्वामपि भवति । क्षैरेयी । **सास्मिन्पौर्णमासीति** ।४।२।२१। इतिशब्दात्संज्ञायामिति लभ्यते ।

---

**त.]** व्रतं=शास्त्रेण विहितो नियमः, तस्मिन्समुदायेन गम्ये सप्तम्यन्ताद्यथाविहितः प्रत्ययो भवति शयितर्यर्थे । **अष्टाकपाल इति** । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् । **शूलोखात्** । 'संस्कृतं भक्षाः' इत्यनुवर्तते । कथम् 'उख्योऽग्निः' इति । न ह्यसौ भक्ष इति चेत् ? । अत्राहुः—दिगादित्वाद्भवार्थे यदिति । **दध्नष्ठक्** । **दध्नीति** । संस्कारस्त्विह लवणादिना, दधि त्वधिकरणमात्रम् । यस्तु 'प्राग्वहते'रित्यत्र 'संस्कृत'मिति ठग्वक्ष्यते स तृतीयान्ताद्बोध्यः । तेन दध्ना संस्कृतमपि दाधिकमेव । **इसुसुक्तान्तात्** । 'ता'दित्युक्तेऽप्यङ्गविशेषणेनैव तान्तादिति लब्धेऽन्तग्रहणं प्रत्ययोपदेशकाले यदन्तास्तस्मात्परस्य ठस्य कादेशो यथा स्यादित्येवमर्थम् । तेन 'माथितिक' इत्यत्र ठस्य इकादेशे 'यस्ये'ति लोपे च कृते तान्तत्वेऽपि इकस्य कादेशो न भवतीति 'ठस्येकः' इति सूत्रे कैयटः । संनिपातपरिभाषयैव इकस्य कादेशो न स्यादित्यन्तग्रहणं त्यक्तुं शक्यमित्यन्ये । **उदश्विदिति** । श्वयतेः क्विपि तुक् । 'उदकस्योदः' इत्युदादेशः । इहैव निपातनात्संप्रसारणाऽभावः । **सास्मिन्** । सेति प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे प्रत्ययः स्यात्ः प्रथमान्तार्थः स चेत्पौर्णमासी भवति । **इतिशब्दादिति** । स हि लौकिकीं विवक्षामनुसारयति । वृत्तिकृता तु

---

**बा.]** प्रत्ययः स्यादित्यर्थः । **अमत्रं**-भाजनं शरावादि । ननु उद्धरणे पृथक्करणे शरावस्याऽपादानत्वात् कथं सप्तमीत्यत आह—**उद्धरतिरिहेति** । 'सास्मिन्पौर्णमासी' त्यतः प्राक्'तत्रे'त्यनुवर्तते । **स्थण्डिलात्** । स्थण्डिलशब्दात्सप्तम्यन्ताद्व्रतनिमित्तकशयनकर्तरि वाच्ये प्रत्ययः स्यादित्यर्थः । **संस्कृतं भक्षाः** । भक्ष्यन्ते इति भक्षाः, कर्मणि घञ् । तत्रेत्यनुवर्तते । तदाह—**सप्तम्यन्तादिति** । एकवचनं बहुवचनं च सामान्याभिप्रायं, 'जात्याख्यायामेकस्मिन्बहुवचन'मित्युक्तेरित्यभिप्रेत्याह—**यत्संस्कृतमिति** । संस्कारो नाम पाकादिना गुणविशेषाधानम् । **अष्टाकपाल इति** । 'तद्धितार्थे' इति समासः । भक्षा इति किम् ? । पुष्पपुटे संस्कृतं वस्त्रम् । **शूलोखाद्यत्** । समाहारद्वन्द्वात्पञ्चमी । तत्रेति, संस्कृतं भक्षा इति चानुवर्तते । सप्तम्यन्ताच्छूलशब्दादुखाशब्दाच्च 'संस्कृतं भक्षाः' इत्यर्थे यत्स्यादित्यर्थः । **उखा पात्रविशेष इति** । 'पिठरं स्थाल्युखा कुण्ड'मित्यमरः । **दध्नष्ठक्** । सप्तम्यन्ताद्दधिशब्दात् संस्कृतं भक्षा इत्यर्थे ठक् स्यादित्यर्थः । अणोऽपवादः । **दाधिकमिति** । ठकि इकादेशे 'यस्येति चे'ति इकारलोपः । इह दध्नि अधिकरणे संस्कारो लवणादिना भवति । प्राग्वहतेरित्यत्र तु 'संस्कृतम्' इति तृतीयान्ताट्ठग्वक्ष्यते । **उदश्वितो** । **ठक्स्यादिति** । शेषपूरणमिदम् । उक्तविषये उदश्विच्छब्दाट्ठग्वा स्यादित्यर्थः । **इसुसुक्तान्तात्कः** । इसुसुक्ता अन्ता यस्येति विग्रहः । तकारादकार उच्चारणार्थः । **ठस्य कः स्यादिति** । ठकि ककार इत् । अकार उच्चारणार्थः, ठकारस्य शिष्टस्य ककार आदेश इति 'ठस्येकः' इत्यत्रोक्तम् । 'श्वयती'त्यस्य विवरणम्—**वर्धते इति** । 'टु ओ श्वि गतिवृद्धयोः' इति धातुरिह वृद्ध्यर्थक इति भावः । **उदश्विदिति** । क्विपि तुक् । 'उदकस्योदः संज्ञाया'मित्युदादेशः । 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः । **प्रतिपदोक्तयोरिति** । इस्प्रत्ययस्य उस्प्रत्ययस्य च उणादौ प्रतिपदोक्तयोरिह ग्रहणमित्यर्थः । यथा सार्पिष्कः, धानुष्क इति । **आशिषिक इति** । 'चरती'ति ठक् । शासुधातोः क्विपि 'आशासः क्वौ' इत्युपधायां इत्वम् । **उषा चरति औषिक इति** । वसधातोः क्विपि सम्प्रसारणे उषेति तृतीयान्तम् । 'शासिवसिघसीनां चे'त्युभयत्र षत्वम् । **दोष इति** । दोष्शब्दाट्ठस्य कः स्यादित्यर्थः । **दौष्क इति** । 'तरती'ति ठक् । **क्षीराड्ढञ्** । **क्षैरेयीति** । क्षीरे संस्कृता यवागूरित्यर्थः । भक्षग्रहणानुवृत्तौ त्विह न स्यात्, यवाग्वाः पेयत्वेन खाद्यत्वाऽभावात् । **सास्मिन्पौर्णमासीति** । तत्र इति, संस्कृतं भक्षा इति च निवृत्तम् । सा पौर्णमासी अस्मिन्नित्यर्थे प्रथमान्तात्प्रत्ययः स्यादित्यर्थः । **इतिशब्दादिति** ।

---

**शे.]** उद्धरणे तु स्थाल्यवधिः । **अष्टाकपाल इति** । 'द्विगोर्लु'गित्यणो लुक् । **संस्कृतमिति** । भोजनादिरूपोपयोगफला क्रिया संस्कारः, न तु गुणाधानमेव । **उषेति** । वसेः क्विपि सम्प्रसारणे तृतीयान्तमेतत् । **दोष इति** । भाष्यकारीयमेतत् । **न त्विति** ।

पौषी पौर्णमासी अस्मिन् पौषो मासः। **आग्रहायण्यश्वत्थाट्ठक्** ।४।२।२२। अग्रे हायनमस्या इत्याग्रहायणी। प्रज्ञादेराकृतिगणत्वादण्। 'पूर्वपदात्संज्ञाया'मिति णत्वम्। आग्रहायणी पौर्णमास्यस्मिन् आग्रहायणिको मासः। अश्वत्थेन युक्ता पौर्णमासी—अश्वत्थः। निपातनात्पौर्णमास्यामपि लुप्। आश्वत्थिकः। **विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः** ।४।२।२३। एभ्यष्ठग्वा। पक्षेऽण्। फाल्गुनिकः। फाल्गुनो [वा] मासः। श्रावणिकः। श्रावणः। कार्तिकिकः। कार्तिकः। चैत्रिकः। चैत्रः। **साऽस्य देवता** ।४।२।२४। इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्। त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च। ऐन्द्रो मन्त्रः। 'आग्नेयो वै ब्राह्मणो देवतये'ति तु शैषिकेऽर्थे 'सर्वत्राग्नी'ति ढक्। **कस्येत्** ।४।२।२५। कशब्दस्य

---

**त.]** सूत्रे एव 'संज्ञाया'मिति प्रक्षिप्तम्। **पौर्णमासीति**। पूर्णो मासोऽस्यां तिथाविति बहुव्रीहौ प्रज्ञादित्वात्स्वार्थिकोऽणिति हरदत्तादयः। 'तदस्मिन्वर्तते' इत्यधिकारे 'पूर्णमासादण् वक्तव्यः' इति वार्तिकं न कर्तव्यमिति तदाशयः।

**सास्य**। 'से'ति प्रकृतं संज्ञासंबद्ध'मिति पुनः साग्रहणं कृतमित्याहुः। इहैव सूत्रे निपातनाद्देवताशब्दात्स्वार्थे तल्। **मन्त्रस्तुत्येति**। मन्त्रेण स्तुत्या। 'एतिस्तुशा'सित्यादिना क्यपि तुक् टाप्। **आग्नेयो वै ब्राह्मण इति**।

---

**बा.]** एतच्च भाष्ये स्थितम्। **पौषीति**। पुष्येण युक्ता पौषी पौर्णमासी, सा यस्मिन्मासे स पौषो मासः। पौषीशब्दादणि 'यस्येति चे'ति ईकारलोपः। एवं मघाभिर्युक्ता पौर्णमासी माघी, सा यस्मिन्स माघो मासः। तथा फाल्गुन इत्यादि। संज्ञायां किम्? पौषी पौर्णमासी अस्मिन्पञ्चदशरात्रे। **आग्रहायण्यश्वत्थाट्ठक्**। पूर्वसूत्रविषये आग्रहायणीशब्दादश्वत्थशब्दाच्च ठक् स्यादित्यर्थः। अणोऽपवादः। **हायनमिति**। संवत्सर इत्यर्थः। 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री'त्यमरः। यस्या ऊर्ध्वं संवत्सरस्यारम्भः सा पौर्णमासी आग्रहायणीत्यर्थः। तर्हि आग्रहायणेति स्यादित्यत आह—**प्रज्ञादेरिति**। 'प्रज्ञादिभ्यश्चे'ति स्वार्थे अणि 'टिड्ढे'ति ङीबित्यर्थः। **अश्वत्थेनेति**। अश्विनीनक्षत्रेणेत्यर्थः। **अश्वत्थ इति**। नक्षत्राऽणो 'लुबविशेषे' इति लुबिति भावः। ननु 'विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः' इति निर्देशेन पौर्णमास्यां 'लुबविशेषे' इत्यस्याऽप्रवृत्तेरुक्तत्वात्कथमिह लुबित्यत आह—**निपातनादिति**। तथाच पौर्णमास्यां लुब्नेति ज्ञापनमेतद्व्यतिरिक्तविषयमिति भावः। **विभाषा फाल्गुनी**। **एभ्यष्ठग्वेति**। 'सास्मिन्' इत्युक्तविषये' इति शेषः। **फाल्गुनिकः—फाल्गुनो वा मास इति**। फाल्गुनी पौर्णमास्यस्मिन्निति विग्रहः। एवं श्रावणिक इत्यादि। इति युक्ताद्यर्थकाः। **साऽस्य देवता**। अस्मिन्नर्थे प्रथमान्तादणादयः स्युरित्यर्थः। **ऐन्द्रं हविरिति**। इन्द्रात्मकदेवतासम्बन्धीत्यर्थः। **पाशुपतमिति**। पशुपतिर्देवता अस्येति विग्रहः। ननु देवताशब्दस्य लोकप्रसिद्धजातिविशेषवाचकत्वे पितरो देवता अस्य पित्र्यमित्याद्यनुपपन्नमित्यत आह—**त्यज्यमानद्रव्ये इति**। 'हविश्शेषमृत्विग्भ्यो ददाति', विप्राय गां ददाती'त्यादौ ऋत्विग्विप्रादेर्देवतात्वव्यावृत्तये विशेषग्रहणम्। त्यज्यमानहविस्साध्योऽसदायप्रत्यक्षः यस्तृप्त्याद्युपकारस्तदाश्रयो देवतेति यावत्। **मन्त्रस्तुत्या चेति**। 'अग्निमीडे पुरोहित'मित्यादिमन्त्रेषु यज्ञपुरोहितत्वादिगुणविशिष्टत्वेन या प्रतिपाद्यते सापि देवतेत्यर्थः। **ऐन्द्रो मन्त्र इति**। इन्द्रस्तुत्यको मन्त्र इत्यर्थः। ननु 'आग्नेयो वै ब्राह्मणो देवतया' इत्यत्र कथं देवतातद्धितः। अत्र अग्नेर्हविरुद्देश्यत्वस्य मन्त्रस्तुत्यत्वस्य चाऽभावादित्यत आह—**आग्नेयो वै इति**। **शैषिकेऽर्थे इति**। 'शेषे' इति सूत्रलब्धे तदभिमानिकत्वे गम्ये इत्यर्थः। अग्निर्नाम यो देवताजातिविशेषो लोकवेदसिद्धस्तदभिमानिको ब्राह्मण इति

---

**शे.]** अत्र वृत्तिः शरणम्। **सञ्ज्ञायामितीति**। तेन सावनातिरिक्तमासार्द्धमासयोरेवाऽनेन प्रत्यय इति बोद्धव्यम्। **प्रज्ञादेरिति**। 'सान्नाय्यानुजावरे'त्यादिपाथमिकवार्तिकं माऽपूर्वमिति भावः। **सास्य दे**। सम्बन्धित्वेन प्रदेयं,मन्त्रश्च प्रत्ययार्थः। प्रकृत्यर्थस्य देवतात्वं वृत्तिस्वभाव[बल]लभ्यम्। तत्र सम्बन्धित्वेन बोधेऽपि विशेषरूपेण बोधाय दध्यादिपदप्रयोगोऽपि। 'ऐन्द्रं दधी'त्यादेरिन्द्रदेवतासम्बन्धीति बोधः। **मन्त्रस्तुत्या चेति**। अत्राऽर्थे देवताशब्दस्य रूढिः। 'दिवेरैश्वर्यकर्मणो देवता'। तेन 'पितरो देवते'ति सिद्धमिति देवात्तल्सूत्रे भाष्यात्। **आग्नेय इति**। अग्न्युद्देशेन ब्राह्मणत्यागाऽभाव इति शङ्का। **ढगिति**। अग्नेरयं भक्त इत्यर्थ इति भावः। 'विश्वेभ्यो देवेभ्यः स्वाहे'ति लिङ्गाद्यस्तस्यैव देवतात्वेऽपि वैश्वदेव्यामिक्षेत्यादौ तद्धितवृत्तिविषये समासो, विश्वदेव इति बहुव्रीहिश्च साधुरिति बोद्धव्यम्। **कशब्दस्येति**। ब्रह्मणि रूढस्यैवात्र ग्रहणम्। एवञ्च 'कायानुब्रूही'त्येव प्रैषः। 'कस्मा अनुब्रूही'ति कल्पसूत्रोक्तमार्षमित्याहुः। परे तु किमोऽप्यत्र तन्त्रेण निर्देशः। शब्दपरत्वेऽपि किमः कादेशः 'कियः' इत्यादावियङ्वत्। किंशब्दोऽपि प्रजापतिवाची। अत एव 'कस्मै देवाय हविषा विधेमे'ति श्रुतौ प्रजापतये इत्यर्थकं कस्मा इति सङ्गच्छते। एवञ्च कस्मा इत्यपि प्रैष उक्तश्रुतिमूलकः शाखाभेदेन व्यवस्थितः। विष्णुसहस्रनामसु च—'एको नैकः सवः कः किं यत्तत्पदमनुत्तम'मित्युक्तम्। न च सञ्ज्ञात्वादस्य सर्वनामत्वाऽभावे कथं स्मायादिः? । सर्वनामसञ्ज्ञाप्रतिषेधे आधुनिकसञ्ज्ञाया एव ग्रहणात्। अत एव 'विश्वेषां देवाना'मिति सिद्धम्। तदुक्तं भाष्ये—'अथ [illegible] हविः कथं तत्रैव कर्तव्यः' इति।

इदादेशः स्यात्प्रत्ययसन्नियोगेन । 'यस्ये'ति लोपात्परत्वादादिवृद्धिः । को ब्रह्मा देवताऽस्य कायं हविः । श्रीर्देवताऽस्य श्रायम् । **शुक्राद्घन्** ।४।२।२६। शुक्रियम् । **अपोनप्त्रपान्नप्तृभ्यां घः** ।४।२।२७। अपोनप्त्रियम् । अपान्नप्त्रियम् । अपोनपात् अपान्नपाच्च देवते । प्रत्ययसंनियोगेन रूपं निपात्यते । अतएवाऽपोनपाते अपान्नपातेऽनुब्रूहीति प्रैषः । **छ च** ।४।२।२८। योगविभागो यथासङ्ख्यनिवृत्त्यर्थः । अपोनप्त्रीयम् । अपान्नप्त्रीयम् । [ * छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम् * । पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम् ] । * **शतरुद्राद्घश्च** । चाच्छः । शतं रुद्रा देवता अस्य शतरुद्रियम् । शतरुद्रीयम् । घच्छयोर्विधानसामर्थ्याद् 'द्विगोर्लुगनपत्ये' इति न लुक् । **महेन्द्राद्घाणौ च** ।४।२।२९। चाच्छः । महेन्द्रियं हविः । माहेन्द्रम् । महेन्द्रीयम् । **सोमाट्ट्यण्** ।४।२।३०। सौम्यम् । टित्वान्ङीप् । सौमी ऋक् । **वाय्वृतुपित्रुषसो**

त.] इहाग्न्युद्देशेन ब्राह्मणो न त्यज्यत इति कथमयं प्रयोग इति न शङ्क्यमिति भावः । परत्वादादिवृद्धिरिति । इदं च समाधानं श्रायमित्यत्रावश्यकमिति तेनैव परिहारसंभवादित्वविधानसामर्थ्यमिह नाश्रितम् । उक्तं रूपमिति । 'नपात्' इत्यस्य 'नप्तृ' इति रूपमित्यर्थः । शतं रुद्रा इति । शतशब्दोऽनन्तवचनः ।

बा.] बोधः । कस्येत् । प्रत्ययसंनियोगेनेति । 'साऽस्य देवते'ति विहिते कशब्दादण्प्रत्यये परे तत्संनियोगेन प्रकृतेरिकारोऽन्तादेश इत्यर्थः । तथाच कशब्दादणि प्रकृतेरिकारे अन्तादेशे वृद्धौ आयादेशे कायमिति सिद्धम् । तत्र कि-अ इति स्थिते 'यस्येति चे'ति इकारलोपमाशङ्क्याह—**यस्येति लोपादिति** । कशब्दस्य विवरणं—**ब्रह्मेति** । यद्यप्यत्र इत्त्वविधिबलादेव लोपो न भवतीति भाष्यम्, तथापि वस्तुस्थितिकथनमिदम् । तस्य प्रयोजनमाह—**श्रायं हविरिति** । अत्रेदमवधेयम् । 'कस्ये'दित्यत्र कशब्दस्य अकारान्तस्य षष्ठ्येकवचनमित्येकः पक्षः । सर्वादिगणपठितस्य किंशब्दस्य षष्ठ्येकवचनमिति पक्षान्तरम् । तत्राद्यपक्षे हविःप्रचारे 'कायानुब्रूही'ति प्रैष इति निर्विवादं, सर्वादिगणबहिर्भूतत्वेन स्मैभावाऽसम्भवात् । द्वितीयपक्षे तु किंशब्दस्य प्रजापतिनामत्वेन असर्वनामत्वाच्च स्मैभावः, अन्वर्थसंज्ञाबलेन एकार्थवृत्तेः संज्ञाशब्दस्य सर्वनामत्वाऽभावात् । तथाच कायानुब्रूहीत्येव प्रैषः । यद्वा प्रजापतेः सर्वात्मकत्वेन तन्नाम्नः किंशब्दस्य सर्वनामत्वात् 'कस्मा अनुब्रूही'त्येव संप्रैष इति भाष्ये प्रपञ्चितम् । एवञ्च विष्णुसहस्रनामसु—'विश्वं विष्णुः' इति, 'एको नैकः सवः कः किं यत्तत्पदमनुत्तम'मिति च पठितम् । विश्वादिशब्देष्वप्ययं न्यायस्तुल्यः । तथाच विश्वस्मै नमः, 'विश्वाय नमः' इत्यादि प्रयोज्यमित्यास्तां प्रासङ्गिकम् । **शुक्राद्घन्** । 'साऽस्य देवता' 'इत्यर्थे' इति शेषः । **शुक्रियमिति** । शुक्रो देवता अस्येति विग्रहः । **अपोनप्त्रपान्नप्तृभ्यां घः** । **प्रत्ययसंनियोगेनेति** । घप्रत्ययसंनियोगेन अपोनपाच्छब्दस्य अपोनप्तृभावः, अपान्नपाच्छब्दस्य अपान्नप्तृभावश्च निपात्यत इत्यर्थः । **अत एवेति** । घप्रत्ययसंनियोगेनैव उक्तादेशविधेरित्यर्थः । अत्र घप्रत्ययाऽभावान्नोक्तादेशाविति भावः । **छ च** । उक्तविषये छोऽपीत्यर्थः । 'ननु अपोनप्त्रपान्नप्तृभ्यां' घच्छौ इत्येवास्तु । तत्राह—**योगविभाग इति** । **पैङ्गाक्षीपुत्रीयमिति** । पैङ्गाक्षीपुत्रो देवता अस्येति विग्रहः । **तार्णबिन्दवीयमिति** । तार्णबिन्दुर्देवता अस्येति विग्रहः । **शतरुद्राद्घश्चेति** । वार्तिकमिदम् । **शतरुद्रियमिति** । घस्य इयादेशः । **शतरुद्रीयमिति** । छस्य ईयादेशः । उभयत्र 'तद्धितार्थ' इति द्विगुसमासः । 'द्विगोर्लुगनपत्ये' इति लुकमाशङ्क्याह—**घच्छयोरिति** । **महेन्द्राद्घाणौ च** । **महेन्द्रियमिति** । महेन्द्रो देवता अस्येति विग्रहः । घस्य इयादेशः । **माहेन्द्रमिति** । अणि रूपम् । **महेन्द्रीयमिति** । छस्य ईयादेशः । **सोमाट्ट्यण्** । **सौम्यमिति** । सोमो देवता अस्येति विग्रहः । टित्त्वस्य प्रयोजनमाह—**टित्वान्ङीबिति** । **सौमीति** । सोमो देवता अस्या

शे.] कल्पसूत्रकारविप्रतिपत्त्या संशय इति कैयटः । श्रुतिविप्रतिपत्त्या संशय इत्यन्ये । 'यदि तावत्सूत्रे किमः कादेशः,कस्मा अनुब्रूहीति भवितव्यम्, अथ न किमः,कायानुब्रूहीति भवितव्य'मिति । अत्र—'अथ न किम' इत्युक्त्या तन्त्रेणोभयनिर्देशे सन्देह एव नेति पूर्वपक्षिणैव सूचितमिति सिद्धान्तिना न किमप्युक्तम् । तदुत्तरम्—'उभयथाऽपि कस्मा' इति । कशब्दस्यापि सर्वात्मकप्रजापतिवाचकत्वेन सर्वनामत्वात् । गणपाठस्तु प्रपञ्चार्थः । सकलकृत्स्नादीनां त्वनभिधानान्न सर्वनामकार्यम् । अपर आह—'किमोऽपि कायेत्येव, सञ्ज्ञात्वेनाऽसर्वनामत्वा'दिति भाष्ये उक्तं, तद्द्वयमप्येकदेश्युक्तिः । सर्वादिप्रकरणस्थभाष्याद्यसंमतत्वात् । अन्त्ये स्मैभावाऽभाववत्कादेशस्यापि कायेत्यादावभावापत्तिरित्याहुः । **परत्वादिति** । उत्कृष्टत्वादित्यर्थः । तत्त्वथेकारविकारविधानसामर्थ्येन बलवत्त्वं । श्रायमित्यत्र तु परत्वाद्बाध इति बोद्धयम् । **केचित्तु** 'णौ चङी'ति सूत्रे नाग्लोपिग्रहणाद्वृद्धेर्लोपो बलीयानित्युक्तं भाष्ये । तच्च सामान्यापेक्षमित्यत्रापि वृद्धेर्लोपो बलीयान् । अत एव 'स्त्रीपुंसाभ्या'मिति सूत्रे 'अन्प्रत्ययो विधेयो, नुगागमश्च कार्यो, नञ्स्नञ्ग्रहणञ्च व्यर्थ'मित्याशङ्क्य 'टिलोपः स्यात् । न च नुग्विधानसामर्थ्यं, स्त्रैणे 'यं विधिं प्रती'ति न्यायेन तद्विधानसामर्थ्यात्तदभावेऽपि पौंस्ने दोष' इत्युक्तम् । स्त्रद्रीत्या स्त्रैणे नुक्यैव टिलोपप्राप्तिः । अन्यथा वृद्ध्या बाधात्तदप्राप्तिरिति भाष्याऽसङ्गतिः

यत् ।४।२।३१। वायव्यम् । ऋतव्यम् । रीङृतः ।७।४।२७। अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः स्यात् । 'यस्येति च' । पित्र्यम् । उषस्यम् । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ।४।२।३२। चाद्यत् । द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनासीरीयम् । शुनासीर्यम् । अग्नेर्ढक् ।४।२।३३। आग्नेयम् । कालेभ्यो भववत् ।४।२।३४। मासिकम् । प्रावृषेण्यम् । महाराज-

---

त.] सौमीति । 'हलस्तद्धितस्ये'ति यलोपः । रीङृतः । अङ्गवृत्तपरिभाषया 'अकृत्सार्वे'ति दीर्घो न प्रवर्तत इति दीर्घग्रहणमित्याहुः । यस्येति चेति । 'पित्रीयती'त्यत्र रीङ्विधिः सावकाश इति भावः । उषस्यमिति उषस्शब्दः स्त्रीलिङ्गो दिवो दुहितरं देवतां ब्रवीति । द्यावापृ । अण्ण्यचोरपवादः । शुनासीरीयमिति । शुनश्च सीरश्चेति द्वन्द्वे 'देवताद्वन्द्वे चे'त्यानङ् । शुनो—वायुः, सीरः–आदित्य इति वृत्तिकृत् । हरदत्तस्तु शुनासीरशब्द इन्द्रस्य गुणवाचीत्यन्ये मन्यन्त इत्याह । तथा च मन्त्रः—'इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे' इति । मरुतोऽस्य सन्तीति मरुत्वानिन्द्रः, मरुत्वतीयं । मरुत्वत्यम् । अग्नीषोमीयम् । अग्नीषोम्यम् । 'ईदग्नेः सोमवरुणयोः' । वास्तुनः पतिः वास्तोष्पतिः । इहैव सूत्रे निपातनात्साधुः । 'वेश्मभूर्वास्तुरस्त्रियाम्' । वास्तोष्पतीय वास्तोष्पत्यम् । गृहमेधीयं । गृहमेध्यम् । गृहमेधशब्दोऽकारान्तः । तथाच आश्वलायनः–'मरुद्भ्यो गृहमेधेभ्यः' इति । कालेभ्यो । कालवाचिभ्यो ये प्रत्यया भवार्थे वक्ष्यन्ते ते 'सास्य देवता' इत्यस्मिन्नर्थेऽनेनातिदिश्यन्ते । वत्करणं सर्वसादृश्यार्थम् । तेन यस्माद्यो विहितस्तस्मात्स एव भवति नाऽन्यः । तथैवोदाहरति—मासिकम् । प्रावृषेण्यमिति । 'काला-

---

बा.] ऋच्च इति विग्रहः । ङीपि 'हलस्तद्धितस्ये'ति यलोपः । वाय्वृतुपित्रुषसो यत् । वायु, ऋतु, पितृ, उषस् एभ्यो यदित्यर्थः । वायव्यमिति । वायुर्देवता अस्येति विग्रहः । यति ओर्गुणः । 'वान्तो यी'त्यवादेशः । ऋतव्यमिति । ऋतुर्देवता अस्येति विग्रहः । रीङृतः । अङ्गस्येत्यधिकृतम् ऋता विशेष्यते । तदन्तविधिः । 'अयङ् यि क्ङिती'त्यतो यीत्यनुवर्तते । 'अकृत्सार्वधातुकयो'रित्यतोऽकृत्सार्वधातुकयोरिति, 'च्वौ चे'ति सूत्रं च, तदाह—अकृदित्यादिना । पित्र्यमिति । पितरो देवता अस्येति विग्रहः । यति पितृशब्दस्य रीङ् । 'ङिच्चे'त्यन्तादेशः । 'यस्येति चे'ति ईकारलोपः । क्यचि पित्रीयतीत्यादौ 'अङ्गकार्ये कृते पुनर्नाङ्गकार्य'मिति वचनात् 'अकृत्सार्वधातुकयो'रिति दीर्घे अप्राप्ते ईकारोच्चारणम् । उषस्यमिति । उषः देवता अस्येति विग्रहः । भत्वेन पदत्वाऽभावात्सकारस्य न रुत्वादि । द्यावापृथिवी । द्यावापृथिवी, शुनासीर, मरुत्वत्, अग्नीषोम, वास्तोष्पति, गृहमेध-एतेभ्यः–छो यच्च स्यादित्यर्थः । अणः, पत्युत्तरपदण्यस्य चापवादः । द्यावापृथिवीयं द्यावापृथिव्यमिति । द्यावापृथिवी देवता अस्येति विग्रहः । छस्य ईयादेशः । उभयत्र 'यस्येति चे'ति लोपः । शुनासीरीयमिति । शुनो वायुः, सीरः-आदित्यः । शुनश्च सीरश्च शुनासीरौ । 'देवताद्वन्द्वे चे'त्यानङ् । शुनासीरावस्य स्त इति शुनासीरः । 'वाय्वादित्यवानिन्द्रो विवक्षितः' इति वेदभाष्ये भट्टभास्करः । शुनासीरो देवता अस्येति विग्रहः । मरुत्वान् देवता अस्य मरुत्वतीयं मरुत्वत्यम् । अग्नीषोमौ देवता अस्य अग्नीषोमीयम् अग्निषोम्यम् । वास्तुनः पतिः वास्तोष्पतिः–रुद्रः । निपातनादलुक् षत्वं च । 'रुद्रः खलु वै वास्तोष्पतिः' इति ब्राह्मणम् । अमरस्तु इन्द्रपर्याये 'वास्तोष्पतिः सुरपति'रित्याह । वास्तोष्पतिर्देवता अस्य वास्तोष्पतीयं, वास्तोष्पत्यम् । गृहमेधो देवता अस्य गृहमेधीयम् । गृहमेध्यम् । अग्नेर्ढक् । आग्नेयमिति । प्राग्दीव्यतीयेष्वर्थेष्वयम्, 'सर्वत्राग्निकलिभ्या'मिति वचनात् । कालेभ्यो भववत् । कालवाचिभ्यो भवेऽर्थे येन विशेषणेन ये प्रत्यया वक्ष्यन्ते, ते 'साऽस्य देवते'त्यर्थे कालवाचिभ्यस्तेनैव विशेषणेन भवन्तीत्यर्थः । मासिकमिति । मासो देवता अस्येति विग्रहः । कालाट्ठञ् । प्रावृषेण्यमिति । प्रावृट् देवता अस्येति

---

शे.] स्पष्टैव । मम तु न सा, वृद्धेर्लोपस्य बलवत्त्वात् । श्रायमिति तु यद्यपि प्रमाणसिद्धं तदा वर्णव्यत्ययेन साध्यम् । लोके त्वसाध्वेव । अत एव 'किमः काय'मिति भाष्योक्तं सङ्गच्छते । अन्यथा तत्पक्षे मस्येत्त्वे परत्वाद्वार्णादाङ्गस्य बलवत्त्वाच्च लोपसवर्णदीर्घौ बाधित्वा त्वद्रीत्या वृद्धौ पूर्वस्य यणादेशे तदसिद्धिः स्पष्टैव । मम तु वृद्धिं बाधित्वा यस्येति लोपे पूर्वैकारस्य वृद्धौ तत्सिद्धिः । कादेशस्त्वत्र दुर्लभः, विभक्तिपरत्वाऽभावात् । एतेन 'द्वारादीनाञ्चे'ति सूत्रे 'परस्य वृद्धिर्नेत्यनुवृत्तौ शौनं मांसमित्यत्र टिलोपे ऐजागमो न प्राप्नोति । आनुपूर्व्यात्सिद्धमेतत् । नात्राऽकृते ऐजागमे टिलोपः प्राप्नोति । प्रकृत्यैकाजिति प्रकृतिभावेन भवितव्य'मिति भाष्यमुपादाय यत्कैयटेनोक्तम्–'इष्टेमेयःसु प्रकृतिभावः । तथा च शौ देवताऽस्य शः स्थालीपाक इत्यत्र न भवति, तस्मात्परिहारदिगेषा-परत्वाट्टिलोपं बाधित्वा वृद्धिः प्राप्ता प्रतिषिध्यते इति भवत्यैजागम इति-अत्र परिहारः' इति, तदपास्तम् । भाष्यकारेण तु दुष्टपरिहारोक्त्याऽनुवृत्तिपक्षो दुष्ट इत्येव बोध्यते । तेन 'स्त्रीपुंसाभ्या'मिति सूत्रस्थं स्नञ्णे दोषाऽभावपरं भाष्यं, 'कस्ये'दिति सूत्रे लोपस्यैकारविधानसामर्थ्येन बाधनपरं भाष्यञ्च चिन्त्यमेवे'ति यत्कैयटेनोक्तं तदेव चिन्त्यमिति दिक् । सखियोगेवेति । 'अपोनप्त्रे स्वाहे'त्यादि तु छान्दसम् । रीङ् । अङ्गवृत्तपरिभाषया 'अकृत्सार्वे'ति 'च्वौ चे'ति च दीर्घाऽप्राप्तेर्दीर्घोच्चा-

प्रोष्ठपदाट्ठञ् ।४।२।३५। माहाराजिकम् । प्रौष्ठपदिकम् । देवताद्वन्द्वे च ।७।३।२१। अत्र पूर्वोत्तरपदयोरादेरचो वृद्धिः स्याञ्ञिति णिति किति च परे । आग्निमारुतम् । नेन्द्रस्य परस्य ।७।३।२२। परस्येन्द्रस्य वृद्धिर्न स्यात् । सौमेन्द्रः । परस्य किम् । ऐन्द्राग्नः । दीर्घाच्च वरुणस्य ।७।३।२३। दीर्घात्परस्य वरुणस्य न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात्किम् ? । 'अग्निवारुणीमनड्वाहीम्' [आलभेत] । ※तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम् । नावयज्ञिकः कालः । पाकयज्ञिकः । ※पूर्णमासादण्वक्तव्यः । पूर्णो मासोऽस्यां वर्तते इति पौर्णमासी तिथिः । पितृव्यमातुलमातामहपितामहाः ।४।२।३६। एते निपात्यन्ते । ※ पितुर्भ्रातरि व्यत् । पितुर्भ्राता पितृव्यः । ※ मातुर्डुलच् । मातुर्भ्राता मातुलः । ※ मातृपितृभ्यां पितरि डामहच् । मातुः पिता मातामहः । पितुः पिता पितामहः । ※ मातरि षिच्च । मातामही । पितामही । ※अवेर्दुग्धे सोढदूसमरीसचो वक्तव्याः । सकारपाठसामर्थ्यान्न षः । अविसोढम् । अविदूसम् । अविमरी-

---

त.] ठञ्' । 'प्रावृष एण्यः । डामहजिति । एतच्च वृत्त्याद्यनुरोधेनोक्तं । भाष्ये तु आनङादेशो महच् प्रत्ययश्च निपा-

---

बा.] विग्रहः । 'प्रावृष एण्यः' । महाराजप्रोष्ठपदाट्ठञ् । माहाराजिकमिति । महाराजो वैश्रवणः, स देवता अस्येति विग्रहः । प्रौष्ठपदिकमिति । प्रोष्ठपदो देवता अस्येति विग्रहः । वृत्तः 'साऽस्य देवता' इत्यधिकारः । अथ प्रासङ्गिकं—देवताद्वन्द्वे च । 'मृजेर्वृद्धि'रित्यतो वृद्धिरित्यनुवर्तते । 'अचो ञ्णिती'त्यतो ञ्णितीति, 'किति चे'ति सूत्रं चानुवर्तते । 'तद्धितेष्वचामादे'रित्यतोऽचामादेरिति, 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य चे'त्यतः पूर्वपदस्येति, 'उत्तरपदस्य चे'ति सूत्रं चानुवर्तते । तदाह—अत्रेत्यादिना । आग्निमारुतमिति । अग्निश्च मरुच्च अग्नामरुतौ । 'देवताद्वन्द्वे चे'त्यानङ् । अग्नामरुतौ देवता अस्य आग्निमारुतम् । अणि अनेन उभयपदादिवृद्धिः । अलौकिके विग्रहवाक्ये एव आनङं बाधित्वा 'इद्वृद्धौ' इति इत्त्वम् । नेन्द्रस्य परस्य । 'देवताद्वन्द्वे चे'त्युक्ता उभयपदवृद्धिरुत्तरपदस्य इन्द्रशब्दस्य नेत्यर्थः । सौमेन्द्र इति । 'चरु'रिति शेषः । तैत्तिरीये 'सौमेन्द्रं श्यामाकं चरु'मिति छान्दसम् । दीर्घाच्च वरुणस्य । ऐन्द्रावरुणमिति । इन्द्रावरुणौ देवता अस्येति विग्रहे द्वन्द्वः । आनङ् । इन्द्रावरुणशब्दादणि दीर्घाकारात्परत्वाद्वरुणस्य नादिवृद्धिः । आग्निवारुणमिति । 'इद्वृद्धौ' इत्यग्नेरानङं बाधित्वा इत्त्वे कृते दीर्घात्परत्वाऽभावान्निषेधाऽभावे सति 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिरिति भावः । इति प्रासङ्गिकम् ।

अथ प्रकृतम् । तदस्मिन्निति । 'महाराजप्रोष्ठपदाट्ठ'ञिति सूत्रे वार्तिकमिदम् । 'तदस्मिन्वर्तते' इत्यर्थे नवयज्ञादिभ्यः प्रथमान्तेभ्यष्ठञ् उपसङ्ख्यानमित्यर्थः । नावयज्ञिकः काल इति । नवयज्ञो नूतनधान्यद्रव्यको यज्ञः—आग्रयणाख्यः, स यस्मिन्काले वर्तते स नावयज्ञिकः । आग्रयणकाल इति यावत् । पाकयज्ञिक इति । पाकयज्ञः—औपासनाग्निसाध्यः—पार्वणस्थालीपाकादिः, स यस्मिन्काले वर्तते स पाकयज्ञिकः । पूर्णमासादिति । 'तदस्मिन्वर्तते' इत्यर्थे पूर्णमासशब्दात्प्रथमान्तादण् वक्तव्य इत्यर्थः । पूर्णो मासोऽस्यामिति । मासः—चन्द्रमाः, पूर्णश्चासौ मासश्च पूर्णमासः=पूर्णचन्द्रः, स यस्यां तिथौ वर्तते सा पौर्णमासी तिथिरित्यर्थः । अणि 'टिड्ढाणञि'ति ङीप् । यद्यपि पूर्णो माः—चन्द्रः—पूर्णमाः । तस्येयमित्यर्थे 'तस्येद'मित्यणि पौर्णमासीति सिद्धम् । तथापि ईदृश एवार्थे अयं साधुरिति भावः । पितृव्यमातुल । कस्मिन्नर्थे किं निपात्यते इत्यत आह—पितुर्भ्रातरि व्यदित्यादिना । मातुल इति । मातृशब्दाड्डुलचि 'टेः' इति टिलोपः । मातामह इति । मातृशब्दाड्डामहचि टिलोपः । एवं पितामहः । मातरि षिच्चेति । मातृपितृभ्यां मातरि डामहच्, स च षिद्वद्भवतीत्यर्थः । षित्त्वफलं ङीषित्याह—मातामही

---

दी.] रणम् । वस्तुतस्तत्परिभाषायाः फलाऽभावात्स्पष्टार्थमेव तत् । इगागमेन यणा सिद्धौ रीविधानं प्रक्रियालाघवार्थम् । अनिर्दिश्यमानसर्वादेशत्वभ्रमवारणाय च ङित्त्वमिति संप्रदायः । द्यावापृ । अण्—पत्युत्तरपदण्ययोरपवादः । महत्वानिन्द्रः । अग्नीषोमे—'ईदग्नेः सोमे' तीत्वम् । वास्तोष्पतौ—वाचस्पतिदिवस्पतिवत् 'तत्पुरुषे कृति' इत्यत्र बहुलग्रहणादलुक् । कस्कादित्वात्षत्वम् । महाराजो—वैश्रवणः । प्रोष्ठपदात्पूर्वेण नक्षत्राऽणि प्राप्ते वचनम् । सौमेन्द्र इति । नन्वन्तरङ्गत्वाद्गुणे उभयत आश्रयणेऽन्तादिवत्त्वाऽभावेन पूर्वपदात्परेन्द्रशब्दाऽभावेन निषेधो व्यर्थः । किं च वृद्धिरप्यत्र न प्राप्नोति, पूर्वान्तत्वेनैकादेशविशिष्टे पूर्वपदत्वेन 'न्द्र'शब्दस्यैकदेशविकृतन्यायेनोत्तरपदत्वेऽपि तस्याऽनच्कत्वात् । एकस्यैकादेशेन, परस्य नित्येन यस्येतिलोपेनापहारात् । न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम् । उत्तरपदाद्यञ्निमित्तकत्वाद्वृद्धेरप्राप्तेस्ताद्रूप्यानतिदेशात् । एतेन सामर्थ्यादन्त्यवृद्धेरेव निषेध इत्यपास्तम् । मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपात इति चेन्न । अनेनैव निषेधेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाऽभावज्ञापनादित्यन्तादिवत्सूत्रे विप्रतिषेधसूत्रे च भाष्ये स्पष्टम् । पूर्णमासादिति । यद्यपि पूर्णो मासः—चन्द्रस्तस्येयमिति पौर्णमासी सिद्धा तथापीदृशे एवार्थे साधुत्वमेवं व्युत्पत्तिज्ञानपूर्वकप्रयोगे एव चाभ्युदय इति भावः । पितृव्ये—नित्प्रत्ययस्तित्वेति बहुश्रुतैर्विचार्यम् । मातुलेति । भ्रातरीति वर्तते । मातरि

सन्न । * तिलान्निष्फलात्पिञ्जपेजौ । तिलपिञ्जः । तिलपेजः । वन्ध्यस्तिल इत्यर्थः । * पिञ्जश्छन्दसि डिच्च । तिलिपिञ्जः । तस्य समूहः ।४।२।३७ काकानां समूहः काकम् । बाकम् । भिक्षादिभ्योऽण् ।४।२।३८। भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह 'भस्याऽढे' इति पुंवद्भावे कृते । इनण्यनपत्ये ।६।४।१६४। अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् । तेन 'नस्तद्धिते' इति टिलोपो न । युवतीनां समूहो यौवनम् । शब्रन्तादनुदात्तादेरञि–यौवतम् । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्

त.] त्वते । तेनावग्रहः सिध्यतीत्युक्तम् । सकारपाठेति । अन्यथा प्रक्रियालाघवाय षकारमेव पठेदिति भावः । एतच्च मनोरमायां स्थितम् । अन्ये तूक्तरीत्या 'अविसोढ मित्यत्र षत्वनिवारणेऽपि 'अविदूस' मित्यादौ स्यादेव षत्वम् । तत्र हि ण्यन्तात्क्विपि 'अविदूः' इत्यादिरूपसिद्धये सकारपाठसामर्थ्यस्योपक्षीणत्वात् । तस्मात् 'अविसोढ' मित्यादि-भाष्यक्कुदाहरणेषु सकारपाठसामर्थ्यादिति व्याख्येयमित्याहुः । तस्य समूहः । इह 'अचित्ताठ्ठक्', 'अनुदात्तादेरञ्', गोत्रान्ताद्वुञ्', 'केदाराद्यञ्च' इत्यादिना प्रतिपदं यञादींश्च वक्ष्यति । तथा च चित्तवदाद्युदात्तमगोत्रान्तं प्रतिपदोक्त-प्रत्ययरहितमिहोदाहरणमित्याशयेनोदाहरति—काकम् । बाकमिति । एवं वार्कम् । काकबकवृकशब्दाः 'प्राणिनां कुपूर्वं' मिति फिट्सूत्रेणाद्युदात्ताः । प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे, तेषामुदात्तः स्यादिति सूत्रार्थः । 'अथादिः प्राक् शकटेः' इत्यधिकारात् । यत्तु वृत्तिन्यासयोः शौकमित्युदाहृतं, तदुपेक्ष्यम् । खण्डिकादिषु शुकशब्दस्य पाठा-त्तत्राऽञा भाव्यमिति हरदत्तादयः । भिक्षादिभ्योऽण् । भैक्षमिति । अचित्तत्वाठ्ठक् प्राप्तः । गार्भिणमिति । अनुदात्तादित्वादञ् प्राप्तः । सति हि तस्मिन्नाद्युदात्तत्टिलोपौ स्याताम् । न च 'भस्याढे' इति पुंवाचकरूपा-तिदेशाच्च टिलोपः स्यादिति वाच्यं, हस्तिनीनां समूहो हास्तिकमित्यत्रापि टिलोपाऽऽपत्तेः । तस्मात्स्त्रीप्रत्यय-निवृत्तिमात्रपरं तत्र तु रूपातिदेशकमिति बोध्यम् । यौवनमिति । युवतिशब्दस्यानुदात्तादित्वादञि प्राप्ते अणर्थ-मिह पाठः । पुंवद्भावात्तिप्रत्ययनिवृत्तिः । 'अन्' इति प्रकृतिभावः । ननु 'भस्याऽढे' इत्यत्र 'अढे तद्धिते विवक्षिते पुंवद्भावः' इत्यभ्युपगमात्तद्धितोत्पत्तेः प्रागेव तिप्रत्ययनिवृत्तौ सत्यां 'कनिन्युवृषी' ति कनिनन्ततया आद्युदात्तत्वादण्

बा.] पितामहीति । अवेरिति । अवेर्दुग्धमित्यर्थे अविशब्दात् सोढः, दूस, मरीसच् एते प्रत्यया वक्तव्या इत्यर्थः । सोढसकारस्य प्रत्ययावयवत्वात्षत्वमाशङ्क्याह—सकारपाठसामर्थ्यान्न ष इति । अन्यथा षोढ इत्येवोपदिशे-दिति भावः । तिलादिति । तिलशब्द ओषधिविशेषे मुख्यः । तत्फले तु गौणः । तत्र यदा तिलशब्दो निष्फले ओषधिविशेषे वर्तते, तदा तस्मात्स्वार्थे पेज, पिञ्ज इति प्रत्ययौ स्त इत्यर्थः । इति देवतार्थकाः ।

तस्य समूहः । इनित्रकव्यचश्चे' ति यावदिदमनुवर्तते । अस्मिन्नर्थे प्रथमोच्चारितात्षष्ठ्यन्तात्प्राग्दीव्यतीया अणादयो यथासम्भवं स्युरित्यर्थः । 'अचित्तहस्तिधेनोष्ठ' गित्याद्यपवादविषयं परिहृत्योदाहरति—काकं बाकमिति । समूहप्रत्य-यान्तानां नपुंसकत्वं लोकात् । भिक्षादिभ्योऽण् । तस्य समूह इत्येव । भैक्षमिति । अत्र 'अचित्तहस्ती' ति वक्ष्यमाणठगपवादोऽण् । गार्भिणमिति । गर्भशब्दान्मत्वर्थीये इन्प्रत्यये कृते प्रत्ययः परश्च आद्युदात्तश्चेति इका-रस्य उदात्तत्वे 'अनुदात्तं पदमेकवर्ज' मिति शिष्टस्यानुदात्तत्वे गर्भिन्शब्दः अनुदात्तादिः । ततो नान्तलक्षणङीपि तस्य 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वे गर्भिणीशब्दोऽप्यनुदात्तादिरेव । ततः समूहेऽर्थे 'अनुदात्तादेर' ञिति वक्ष्यमाणे अञि प्राप्ते भिक्षादित्वादणिति भावः । अणि प्रत्ययस्वरेणान्तोदात्तत्वम्, अञि तु 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्व-मिति स्वरे विशेषः । अणि टिलोपाऽभावोऽपि प्रयोजनमिति दर्शयति—इह भस्येति । गर्भिणीशब्दादणि सति 'भस्याऽढे' इति पुंवत्त्वेन ङीपो निवृत्तौ गर्भिन् अ इति स्थिते 'नस्तद्धिते' इति टिलोपे प्राप्ते सतीत्यर्थः । इनण्यन-पत्ये । इन्–अणीति छेदः । प्रकृत्येति । 'प्रकृत्यैका' जित्यतस्तदनुवृत्तेरिति भावः । टिलोपो नेति । अञि तु प्रकृतिभावाऽप्रवृत्तेष्टिलोपः स्यादिति भावः । यौवनमिति । 'कनिन्युवृषितक्षी' त्यौणादिककनिन्प्रत्ययान्तो नित्स्वरे-णाद्युदात्तः । ततः स्त्रियां 'यूनस्ति' रिति तिप्रत्ययस्य प्रत्ययस्वरेणोदात्तत्वे सतिशिष्टस्वरेण युवतिशब्दस्यानुदात्ता-दित्वादञि प्राप्ते भिक्षादित्वादणि कृते सति 'भस्याऽढे' इति पुंवत्त्वे तिप्रत्ययस्य निवृत्तौ 'अन्' इति प्रकृतिभावाट्टिलोपा-ऽभावे 'यौवन' मिति रूपम् । अञि तु प्रकृतिभावस्याऽप्रवृत्तेष्टिलोपः स्यादिति भावः । वस्तुतस्तु 'भस्याऽढे तद्धिते' इत्यस्य अढे तद्धिते विवक्षिते सति ततः प्रागेव पुंवदित्यर्थः । ततश्च तद्धितोत्पत्तेः प्रागेव युवतिशब्दस्य पुंवत्त्वे तिप्रत्यस्य निवृत्तौ युवन्शब्दस्य कनिन्प्रत्ययान्तस्य नित्स्वरेणाद्युदात्तत्वादनुदात्तादित्वाऽभावादञभावे 'तस्य

शे.] षिद्वेति । गौरादिषु मातामह्यादिशब्दपाठोऽसाम्प्रदायिक इति भावः । सकारपाठेति । 'प्रत्ययेष्वि' ति शेषः । उदाहरणेषु भाष्ये पत्वाऽकरणात्सकारप्रयोजनान्तराऽनभिधानमिति भावः । 'दुग्धे इति सप्तमी स्थानिनोऽधिकरणत्वविवक्षयेति दुग्धस्य स्थाने एते आदेशा' इति तु चिन्त्यम् । 'प्रत्यया भवन्ती' ति भाष्ये वाक्यशेषात् । तिलान्निष्फलादिति । निष्फलोऽकाचिलशब्दादित्यर्थः ।

।४।२।३९। एभ्यः समूहे वुञ् स्यात्। लौकिकमिह गोत्रं, तच्चापत्यमात्रम्। **युवोरनाकौ** ।७।१।१। यु वु एतयोरनुनासिकयोः क्रमादन अक एतावादेशौ स्तः। ग्लुचुकायनीनां समूहो ग्लौचुकायनकम्। औक्षकमित्यादि। 'आपत्यस्य चे'ति यलोपे प्राप्ते।*प्रकृत्याऽके राजन्यमनुष्ययुवानः। राजन्यकम्। मानुष्यकम्।*वृद्धाच्चेति वक्तव्यम्। वार्द्धकम्। **केदाराद्यञ्च** ।४।२।४०। चाद्वुञ्। कैदार्यम्। कैदारकम्।*गणिकाया यञिति वक्तव्यम्। गाणिक्यम्। **ठञ्कवचिनश्च** ।४।२।४१। चात्केदारादपि। कवचिनां समूहः कावचिकम्। कैदारिकम्। **ब्राह्मणमाणववाडवाद्यन्** ।४।२।४२। ब्राह्मण्यम्। माणव्यम्। वाडव्यम्।*पृष्ठादुपसङ्ख्यानम्। पृष्ठ्यम्। [पृष्ठ्यः षडहः]। **ग्रामजनबन्धुभ्यस्तल्** ।४।२।४३। ग्रामता। जनता। बन्धुता।*गजसहायाभ्यां चेति

त.] सिद्धएवेति चेत्। सत्यम्। अतएव भाष्ये भिक्षादिषु युवतिशब्दपाठः प्रत्याख्यातः। 'इह युवतिशब्दपाठसामर्थ्यात्पुंवद्भावो ने'ति वृत्तिकारोक्तिरप्यत एव निरस्ता। नन्वेवं 'गार्भिणं यौवतं गणे' इत्यादिप्रयोगा न सङ्गच्छेरन्नित्याशङ्क्याह—**शन्नन्तादिति**। **युवोः**। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। उकारस्तूच्चारणार्थो नेत्संज्ञकः। तेन नन्दनः, कारकः, नन्दना, कारिकेत्यत्रोगिल्लक्षणौ नुम्ङीपौ न स्तः। अनुनासिकयोरिति किम्?। ऊर्णायुः। **प्रकृत्याऽके इति**। इह राजन्यमनुष्यग्रहणं व्यर्थं, रूढिशब्दत्वेन 'आपत्यस्य चे'ति यलोपस्य प्राप्त्यभावात्। अतएव 'गोत्रोक्षोष्ट्र' इत्यत्र तयोर्ग्रहणं सार्थकम्। अन्यथा गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहणं न कुर्यादित्याहुः। यूनो भावो यौवनिका। मनोज्ञादित्वाद्वुञ्। **वार्धकमिति**। यदि वृद्धत्वेऽपि वार्धकमिति प्रयोगोऽस्ति, तर्हि मनोज्ञादित्वं कल्पनीयमित्याहुः। **ब्राह्मणमाणव**। ननु त्रयोऽप्यमी वृद्धाः। तेभ्यः प्रकृतो यञेवास्तु, वृद्धाच्चेति यञि वा रूपे विशेषाऽभावात्। नापि स्वरे विशेषः, उभयथाप्युदात्तत्वात्। स्त्रियां विशेषस्तु न शङ्क्य एव, नपुंसकत्वात्। 'यञश्चे'त्यत्रापत्यग्रहणाच्च। ठञ् तु नानुवर्तिष्यते, अस्वरितत्वादिति चेत्। सत्यम्। अवृद्धादपि कुतश्चिद्विधानार्थं यन्वचनम्। तत्सिद्धार्थानुवादकं वार्तिकमाह—**पृष्ठादिति**। **पृष्ठं**—स्तोत्रविशेषः। **पृष्ठ्य इति**। पृष्ठानां

बा.] समूहः' इत्यणि प्रकृतिभावाट्टिलोपाऽभावे यौवनमिति सिद्धमेवेति युवतिशब्दो भिक्षादिगणे प्रत्याख्यातो भाष्यकैयटयोरित्यलम्। **शन्नन्तादिति**। प्रत्ययस्वरेण मध्योदात्तत्वादनुदात्तादिरयं युवच्छब्दः। तत उगिल्लक्षणङीपः पुंवत्त्वेन निवृत्तौ युवच्छब्दादनुदात्तादेरञि यौवतमिति रूपमिति भावः। **गोत्रोक्षोष्ट्रो**। **एभ्य इति**। गोत्र, उक्षन्, उष्ट्र, उरभ्र, राजन्, राजन्य, राजपुत्र, वत्स, मनुष्य, अज–एतेभ्य इत्यर्थः। **लौकिकमिह गोत्रमिति**। नतु पारिभाषिकमित्यर्थः। अत्र लौकिकं गोत्रं किमित्यत आह—**तच्चापत्यमात्रमिति**। प्रवराध्याये परिगणितं पुत्रपौत्रादि कृत्स्नापत्यमित्यर्थः। 'अपत्याधिकारादन्यत्र लौकिकमेव गोत्रं गृह्यते, नतु पारिभाषिकं गोत्रमिष्यते' इति 'स्त्रीपुंसाभ्या'मित्यादिसूत्रभाष्ये सिद्धान्तितत्वादिति भावः। **युवोरनाकौ**। युश्च वुश्च युवुः। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। तदाह—**यु वु एतयोरिति**। 'अनुनासिकयोरिष्यते' इति वार्तिकलब्धमेतत्। अनुनासिकयोः किम्?। ऊर्णायुः। **ग्लुचुकायनीनामिति**। 'प्राचामवृद्धा'दिति ग्लुचुकशब्दादपत्ये फिन्, 'इतो मनुष्यजातेः' इति ङीष्, समूहे वुञ्। अकादेशः। आदिवृद्धिः। 'यस्येति चे'तीकारलोपः। **औक्षकमिति**। उक्ष्णां समूह इति विग्रहः। वुञ्। अकादेशः। टिलोपः। आदिवृद्धिः। उष्ट्राणां समूह इति विग्रहः। औष्ट्रकम्। उरभ्राः–मेषाः, तेषां समूहः, औरभ्रकम्। राजकम्–राजन्यकम्। वात्सकम्। मानुष्यकम्। आजकम्। **यलोपे प्राप्ते इति**। राजन्यशब्दाद्वुञि अकादेशे 'आपत्यस्य च' इति यकारस्य लोपे प्राप्ते सतीत्यर्थः। **प्रकृत्याऽके इति**। अके परे राजन्य, मनुष्य, युवन्–एते प्रकृत्या स्युरिति वक्तव्यमित्यर्थः। यूनो भावो यौवनकम्। मनोज्ञादित्वाद्वुञ्। प्रकृतिभावान्न टिलोपः। **वृद्धाच्चेति**। वृद्धशब्दस्वरूपमेव गृह्यते, नतु 'वृद्धिर्यस्याचामादि'रिति वृद्धसंज्ञकम्, भाष्ये वृद्धशब्दस्यैवोदाहरणात्। तदाह—**वार्द्धकमिति**। वृद्धानां समूह इति विग्रहः। **केदाराद्यञ् च**। **कैदार्यम्–कैदारकमिति**। केदाराणां समूह इति विग्रहः। **गणिकाया यञ्**। यञ्ग्रहणाद्वुञो निवृत्तिः। **गाणिक्यमिति**। गणिकानां समूह इति विग्रहः। **ठञ्कवचिनश्च**। **केदारादपीति**। कवचिन्शब्दात्केदारशब्दाच्च समूहे ठञ् स्यादित्यर्थः। **कावचिकमिति**। ठञ्, इकादेशे टिलोपः। **ब्राह्मणमाणव**। **ब्राह्मण्यमित्यादि**। ब्राह्मणानां माणवानां वाडवानां च समूह इति विग्रहः। मनोरपत्यं माणवः। अणि नस्य णत्वम्। 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः' इति 'मनोर्जातावञ्यतौ षुक्च' इति सूत्रे भाष्यम्। **पृष्ठादिति**।

शे.] प्रत्ययस्तु स्वार्थे। **यौवनमिति**। 'अ'न्निति प्रकृतिभावः। **शन्नन्तादिति**। प्रत्ययस्वरेण मध्योदात्तत्वादनुदात्तादिरयम्। 'ऊर्णायु'रित्यादिव्यावृत्तये आह—**अनुनासिकयोरिति**। ल्युप्रभृतिषु सोऽनुनासिको नान्यत्र। **युवोरितीतरेतरयोगद्वन्द्वः**।

वक्तव्यम् । गजता । सहायता । ॐअह्नः खः क्रतौ । अहीनः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । क्रतौ किम् ? । आह्नः । इह खण्डिकादित्वादञ् । 'अह्नष्टखोरेवे'ति नियमाट्टिलोपो न । ॐ पर्श्वा णस् वक्तव्यः । सिति च ।१।४।१६। सिति परे पूर्वं पदसंज्ञं स्यात् । अभत्वादोर्गुणो न । पर्शूनां समूहः पार्श्वम् । अनुदात्तादेरञ् ।४।२।४४। कापोतम् । मायूरम् । खण्डिकादिभ्यश्च ।४।२।४५। अञ् स्यात् । खण्डिकानां समूहः खाण्डिकम् । चरणेभ्यो धर्मवत् ।४।२।४६। काठकम् । छान्दोग्यम् । अचित्तहस्तिधेनोष्ठक् ।४।२।४७। साक्तुकम् । हास्तिकम् । धैनुकम् । केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।४।२।४८। पक्षे ठगणौ । कैश्यम् ।

त.] समूहः । 'पृष्ठ्यः षडह' इति तु मत्वर्थलक्षणया बोध्यम् । ग्रामजन । वृत्तिकृता तु वार्तिकस्थसहायशब्दोऽपि सूत्रे प्रक्षिप्तः । अनुदात्तादेरञ् । आपूपिकं शाष्कुलिकमित्यादौ परत्वात् 'अचित्तहस्तिधेनो'रिति ठगेवेत्याशयेनेह सूत्रे चित्तवन्तमुदाहरति—कापोतमिति । 'लघावन्ते' इति फिट्सूत्रेण कपोतमयूरशब्दौ मध्योदात्तौ । न च 'शकुनीनां च लघु पूर्व'मित्याद्युदात्तविमाविति शङ्क्यम्, 'अन्त्यात्पूर्वं लघूदात्त'मिति तत्र व्याख्यानादित्याहुः । खण्डिका । आद्युदात्तार्थमचित्ताट्ठको बाधनार्थं च वचनम् । चरणेभ्यः । यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते, स तस्याः प्रकृतेः समूहेऽपि स्यादित्यर्थः । वुञादयो हि चरणेभ्यो वक्ष्यन्ते । तत्र 'चरणाद्धर्माम्नाययो'रिति तु वार्तिकम् । तदप्यनेनैवातिदेशसूत्रेण ज्ञाप्यते । काठकमित्यादि । गोत्रचरणाद्वुञ् । छान्दोग्यमिति । 'छन्दोगौक्थिके'ति

बा.] 'यन' इति शेषः । पृष्ठ्यः षडह इति । षण्णामह्नां समाहारः षडहः । समाहारे द्विगुः । 'राजाहःसखिभ्यः' इति टचि टिलोपः । रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानि षट् पृष्ठाख्यस्तोत्राणि । तद्युक्तान्यहानि लक्षणया पृष्ठानि, तेषां समूह इति विग्रहः । ग्रामजन । समूह इत्येव । ग्रामतेत्यादि । ग्रामाणां, जनानां, बन्धूनां च समूह इति विग्रहः । तलन्तानां स्त्रीत्वं लोकात्, 'तलन्तं स्त्रियाम्' इति लिङ्गानुशासनसूत्राच्च । गजसहायाभ्यां चेति । आभ्यामपि समूहे तलिति वक्तव्यमित्यर्थः । अह्नः खः क्रतौ इति । वार्तिकमिदम् । क्रतौ वर्तमानादहन्शब्दात् समूहेऽर्थे खप्रत्ययो वाच्य इत्यर्थः । अहीन इति । अहश्शब्देन सौत्यान्यहानि विवक्षितानि । तेषां समूह इति विग्रहः । अहन्शब्दात् खः, ईनादेशः । 'अह्नष्टखोरेवे'ति टिलोप इति भावः । फलितमाह—अहर्गणेति । आह्न इति । अह्नां समूह इति विग्रहः । इह क्रतुप्रतीतेर्न ख इति भावः । 'अचित्तहस्तिधेनो'रिति ठकमाशङ्कयाह—इहेति । 'खण्डिकादिभ्यश्चे'त्यञित्यर्थः । नन्वेवं सति 'अन्' इति प्रकृतिभावस्याऽणि विहितस्यात्राऽसंभवाट्टिलोपः स्यादित्यत आह—अह्नष्टखोरेवेतीति । टिलोपाऽभावे सति 'अल्लोपोऽनः' इत्यकारलोपे 'आह्न' इति रूपमिति भावः । पर्श्वा णसिति । अणोऽपवादः । पर्शुशब्द उकारान्तस्त्रीलिङ्गः पार्श्वगतास्थिवाची । तस्माण्णसि ओर्गुणे प्राप्ते-सिति च । 'सुप्तिङन्तं पद'मित्यतः पदमित्यनुवर्तते । तदाह—सिति परे पूर्वं पदसंज्ञमिति । सकार इत् यस्य स सित् । 'स्वादिष्वसर्वनामस्थाने' इत्येव सिद्धे भसंज्ञापवादोऽयम् । अभत्वादिति । पदत्वेनानेन भत्वस्य बाधादिति भावः । पार्श्वमिति । पर्शु-अ इति स्थिते 'इकोऽसवर्णे' इति शाकल्यहस्वप्रकृतिभावयोः 'सिति चे'ति तन्त्रस्थवचनान्तरेण तन्निषेधे यणादेशे पार्श्वमिति रूपमिति भावः । अनुदात्तादेरञ् । समूह इत्येव । कापोतं । मायूरमिति । 'लघावन्ते द्वयोश्च बह्वषो गुरु'रिति कपोतमयूरशब्दौ मध्योदात्ताविति भावः । खण्डिकादिभ्यश्च । शेषपूरणेन सूत्रं व्याचष्टे—अञ्स्यादिति । 'समूहे' इति शेषः । आद्युदात्तार्थमिदम् । चरणेभ्यो धर्मवत् । चरणाः=शाखाध्येतारः । धर्मेऽर्थे याभ्यः प्रकृतिभ्यो ये प्रत्यया वक्ष्यन्ते ते ताभ्यः प्रकृतिभ्यः समूहे स्युरित्यर्थः । काठकमिति । कठानां समूह इति विग्रहः । 'गोत्रचरणाद्वुञ्' इति धर्मे वक्ष्यमाणो वुञ् समूहेऽपि भवति । छान्दोग्यमिति । छन्दोगाः-सामशाखिनः, तेषां समूह इति विग्रहः । 'छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः' इति धर्मे वक्ष्यमाणो ञ्यः समूहेऽपि भवति । अचित्तहस्ति । अचित्ताः=अप्राणिनः, तद्वाचिभ्यः, हस्तिशब्दाद्धेनुशब्दाच्च समूहे ठक् स्यादित्यर्थः । साक्तुकमिति । सक्तूनां समूह इति विग्रहः । 'इसुसुक्तान्तात्कः' इत्युकः परत्वाट्ठस्य कः । आदिवृद्धिः । हास्तिकमिति । हस्तिनां समूह इति विग्रहः । ठक् इकः । टिलोपः । आदिवृद्धिः । धैनुकमिति । धेनूनां समूह इति विग्रहः । उकः परत्वाट्ठस्य कः । आदिवृद्धिः । केशाश्वाभ्यां । समूह इत्येव । केशाद्यञ् वा, अश्वाच्छो वेत्यर्थः । पक्षे इति । केशाद्यञभावे 'अचित्ते'ति ठक् । अश्वच्छाऽभावे अणित्यर्थः । कैश्यं कैशिकमिति । केशानां समूह इति विग्रहः । क्रमेण यञ्ठकौ । अश्वीयम् आश्वमिति । क्रमेण छाऽणौ ।

शे.] उत्तरपदे सौत्रत्वाद्वलोपः । ल्युण्वुलादिषु उकारोऽननुनासिक एव, आदेशेनैव तदपहारसिद्धेरिति प्रकृतसूत्रे भाष्ये स्पष्टम् । 'अह्नः खः' इति वार्तिकम् । क्रतौ वर्तमानादहन्शब्दात्समूहे ख इत्यर्थः । एवञ्च सुत्यासमूहे रूढोऽहीनशब्दः । तत्फलितमाह—अहर्गणेत्यादि । यञ्छाविति । यथासङ्ख्यमत्र । ठगणाविति । केशादचित्तत्वेन ठक्, अश्वादणित्यर्थः । वात्येति ।

कैशिकम् । अश्वीयम् । आश्वम् । **पाशादिभ्यो यः** ।४।२।४९। पाश्या । तृण्या । धूम्या । वन्या । वात्या । **खलगोरथात्** ।४।२।५०। खल्या । गव्या । रथ्या । **इनित्रकट्यचश्च** ।४।२।५१। खलादिभ्यः क्रमात्स्युः । खलिनी । गोत्रा । रथकट्या । ॐ **खलादिभ्य इनिर्वक्तव्यः** । डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् । **विषयो देशे** ।४।२।५२। षष्ठ्यन्तादणादयः स्युरत्यन्तपरिशीलितेऽर्थे स चेद्देशः । शिबीनां विषयो देशः शैबः । देशे किम् ? । देवदत्तस्य विषयोऽनुवाकः । **राजन्यादिभ्यो वुञ्** ।४।२।५३। राजन्यकः । **भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ** ।४।२।५४। भौरिकीणां विषयो देशः—भौरिकिविधम् । भौलिकिविधम् । ऐषुकारिभक्तम् । सारसायनभक्तम् । **सोऽस्यादिरिति च्छन्दसः प्रगाथेषु** ।४।२।५५। अण् । पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः । ॐ **स्वार्थे उपसङ्ख्यानम्** । त्रिष्टुबेव त्रैष्टुभम् । **संग्रामे प्रयोजनयोद्धृभ्यः** ।४।२।५६। सोऽस्ये-

---

त.] भ्यः । **यञ्छाविति** । यथासङ्ख्यं स्तः । **ठगणाविति** । केशशब्दादचित्तत्वेन ठक् । **विषयो देशे** । 'तस्ये'-त्यनुवर्तत इत्याह—**षष्ठ्यन्तादिति** । विषयशब्दार्थमाह—**अत्यन्तेति** । **भौरिक्या** । आभ्यां गणाभ्यां यथासङ्ख्य-मेतौ प्रत्ययौ स्तः । **भौरिकिविधमित्यादि** । क्लीबत्वं लोकात् । **सोऽस्यादिरिति** । छन्दो नाम—अक्षरे-यत्तानिबन्धनपङ्क्त्यादिरिह विवक्षितः । तद्वाचकात्प्रथमान्तादस्येत्यादिमति प्रत्ययः स्यात्, य आदिमान्स प्रगाथश्चे-त् । प्रग्रथ्यत इति प्रगाथः । 'ग्रन्थ संदर्भे' इत्यस्मात् 'अकर्तरि च कारके' इति कर्मणि घञ् । पृषोदरादित्वाद्रेफ-नकारयोर्लोपः । अन्ये तु प्रगीयत इति प्रगाथः । 'गै शब्दे' इत्यतः 'उषिकुषिगार्तिभ्यः स्थन्' इत्याहुः । यत्र द्वे ऋचावावृत्त्या तिस्रः क्रियन्ते स प्रगाथः । **त्रैष्टुभमिति** । 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति न्यायेन

---

बा.] **पाशादिभ्यो यः** । समूह इत्येव । **पाश्येत्यादि** । पाशानां, तृणानां, धूमानां, वनानां, वातानां च समूह इति विग्रहः । स्त्रीत्वं लोकात् । **खलगोरथात्** । समूह इत्येव । खल, गो, रथ एभ्यो यः स्यादित्यर्थः । **खल्या गव्या रथ्येति** । खलानां गवां रथानां च समूह इति विग्रहः । यद्यपि पाशादिष्वेव एषां पाठो युक्तस्तथापि उत्तरसूत्रे एषामेवानुवृत्त्यर्थं पृथक् पाठः । **इनित्र** । **स्युरिति** । इनि त्र कट्यच्—एते स्युरित्यर्थः । **खलिनीति** । खलानां समूह इति विग्रहः । इनिप्रत्यये नकारादिकार उच्चारणार्थः । स्त्रीत्वं लोकात् । नान्तत्वान्ङीप् । **गोत्रेति** । गवां समूह इति विग्रहः । गोशब्दात्त्रः । स्त्रीत्वं लोकात् । टाप् । **रथकट्येति** । रथानां समूह इति विग्रहः । कट्यचि ककारस्य नेत्त्वम्, अतद्धित इत्युक्तेः । स्त्रीत्वाट्टाप् । **खलादिभ्य इति** । 'इनित्रकट्यचश्चे'ति सूत्रे इनिग्रहणमकृत्वा 'गोरथात्त्रकट्यचौ' इत्येवं सूत्रं कृत्वा 'खलादिभ्य इनि'रिति पृथक्कर्तव्यमित्यर्थः । **विषयो देशे** । समूह इति निवृत्तं । तस्येत्यनुवर्तते । तस्य विषय इत्यर्थे प्रथमोच्चारितात्षष्ठ्यन्तात्प्रत्ययाः स्युरिति लभ्यते । तदाह—**षष्ठ्यन्तादिति** । 'विषय'शब्दं व्याचष्टे—**अत्यन्तपरिशीलितेऽर्थे इति** । 'देवदत्तविषयोऽनुवाक' इत्यत्र तथा दर्शनादिति भावः । तर्हि तत्रातिव्याप्तिः स्यादित्यत आह—**स चेदिति** । सः=अत्यन्तपरिशीलितोऽर्थो देशश्चेदित्यर्थः । एवंच अत्यन्तपरिशीलिते देशे गम्ये प्रत्ययाः स्युरिति फलितम् । विषयशब्दो ह्ययं क्वचिद्ग्रामसमूहात्मके जनपदे वर्तते । तद्यथा—'सामन्तस्य राज्ञो विषयोऽनेन लब्ध' इति । क्वचिदिन्द्रियग्राह्ये वर्तते । तद्यथा 'चक्षुर्विषयो रूप'मिति । क्वचिदन्यत्राऽवृत्तौ वर्तते । यथा 'मत्स्यानां विषयो जल'मिति । अन्यत्र नास्तीति गम्यते । प्रकृते तु 'देवदत्तविषयोऽनुवाक' इतिवदत्यन्तपरिशीलिते वर्तते । तत्र विषयशब्देनाऽत्यन्तपरिशीलितेऽर्थेऽवगते सति अनुवाकादिव्यावृत्त्यर्थं देशग्रहणम् । **शिबीनां विषयो देश इति** । अत्यन्तपरिचितो देश इत्यर्थः । **देवदत्तस्य विषय इति** । अत्यन्तपरिचितोऽनुवाक इत्यर्थः । अत्र देशस्यानवगमान्न प्रत्यय इति भावः । विषय इति किम् ? । देवदत्तस्य कदाचिद्गन्तव्यो मार्गः । न च 'देवदत्तस्य गृह'मित्यत्र अत्यन्तपरिचितदेशत्वात्प्रत्ययः स्यादिति वाच्यं, जनपदसमूहात्मकात्यन्तपरिशीलितदेशस्यैवात्र विवक्षितत्वात् । **राजन्यादिभ्यो वुञ्** । तस्य विषयो देश इत्यर्थे राजन्यादिभ्यः षष्ठ्यन्तेभ्यो वुञ् स्यादित्यर्थः । अणोऽपवादः । **राजन्यक इति** । अत्र राजन्यानां विशेषो देश इत्यर्थः । **भौरिक्याद्यैषु** । भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च षष्ठ्यन्तेभ्यः यथाक्रमं विधल्, भक्तल्-एतौ प्रत्ययौ स्तो विषयो देश इत्यर्थे । **भौरिकिविधमिति** । भौरिकीणां विषयो देश इत्यर्थः । **भौलिकिविधमिति** । भौलिकीनां विषयो देश इत्यर्थः । **ऐषुकारिभक्तमिति** । ऐषुकारीणां विषयो देश इत्यर्थः । **सारसायनभक्तमिति** । सारसायनानां

---

शे.] दिग्भेदेन बुद्धिकल्पितवातभेदाश्रयः सामूहिकः । **इनित्र** । योगविभागो यथासङ्ख्यार्थः । **विषयो** । देशग्रहणाद्विषयशब्दोऽत्र ग्रामसमुदायवाचीति वृत्तिः । विषयः स्वत्ववान्, निवासस्तु न नियमेन तथेति तयोर्भेदः । देशोऽत्र प्रकृतिप्रत्ययसमुदायशक्यतया प्रत्ययोपाधिः । क्वचिद्देशपदप्रयोगस्तु नानार्थत्वात्सन्देहवारणाय । **देवदत्तस्य विषय इति** । तेनाऽत्यन्तपरिशीलित इत्यर्थः । **भौरिक्याद्यै** । यथासङ्ख्यमत्र । **सङ्ग्रामे प्र** । **सोऽस्येति** । एवञ्च प्रथमैवाऽत्र समर्थविभक्तिः । 'प्रयोजनयोद्धृभ्य' इति

त्यनुवर्तते । सुभद्रा प्रयोजनमस्य सङ्ग्रामस्येति सौभद्रः । भरता योद्धारोऽस्य सङ्ग्रामस्य भारतः ।

**तदस्यां प्रहरणमिति क्रीडायां णः** ।४।२।५७। दण्डः प्रहरणमस्यां क्रीडायां—दाण्डा । मौष्टा । **घञः साऽस्यां क्रियेति ञः** ।४।२।५८। 'घञन्तात्क्रियावाचिनः प्रथमान्तादस्यामिति सप्तम्यर्थे स्त्रीलिङ्गे ञप्रत्ययः स्यात् । 'घञ' इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् । **श्येनतिलस्य पाते ञे** ।६।३।७१। श्येन तिल एतयोर्मुमागमः स्यात्, ञप्रत्यये परे पातशब्दे उत्तरपदे। श्येनपातोऽस्यां वर्तते श्यैनंपाता मृगया । तिलपातोऽस्यां वर्तते तैलंपाता स्वधा । श्येनतिलस्य किम् ?। दण्डपातोऽस्यां तिथौ वर्तते—दाण्डपाता तिथिः । **तदधीते तद्वेद** ।४।२।५९। व्याकरणमधीते वेद वा वैयाकरणः । **क्रतूक्थादिसूत्रान्ताट्ठक्**

त.]क्लीबतेति भावः । **सङ्ग्रामे** । ननु 'प्रथमा'दित्यधिकारात्प्रथमोच्चारितसङ्ग्रामवाचिन एव प्रत्ययः प्राप्नोति, न प्रयोजनयोद्धृभ्य इत्यत आह—**सोऽस्येतीति** । एवं च प्रथमान्तविशेषणद्वारा प्रयोजनयोद्धृणां प्रकृतित्वम् । 'अस्ये'ति प्रत्ययार्थविशेषणद्वारा संग्रामस्य प्रत्ययार्थत्वं वक्तुं शक्यमिति भावः । तथा चायमिह सूत्रार्थः—प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्योऽस्येति षष्ठ्यन्तार्थेऽण् स्यात्, स च षष्ठ्यन्तार्थः संग्रामश्चेदिति । **तदस्यां** । प्रथमान्तात्प्रहरणोपाधिकात्सप्तम्यन्तार्थे णः स्यात्, स चेत्सप्तम्यन्तार्थः क्रीडा भवति । प्रहरणं किम् ?। माला भूषणमस्याम् । क्रीडायां किम् ?। खड्गः प्रहरणमस्यां सेनायाम् । **घञः** । **कृद्ग्रहणादिति** । तेन 'श्यैनंपाते'त्यत्र 'ञ्णिती'त्यङ्गस्य विधीयमाना वृद्धिः सिद्धा । श्येनपातस्यापि घञन्तत्वादिति भावः । घञः किम् ?। श्येनपतनमस्यां वर्तते । क्रिया किम् ?। प्राकारोऽस्यां वर्तते । 'तदस्या'मिति प्रकृते पुनः 'सास्या'मित्युक्तिः 'क्रीडाया'मित्यस्य निवृत्तिर्यथा स्यादिति । अतएवाह—**दण्डपातोऽस्यां तिथाविति** । **तदधीते** । द्वितीयान्तादध्येतरि वेदितरि च

बा.]विषयो देश इत्यर्थः । इह नपुंसकत्वं लोकात् । **सोऽस्यादिः** । ऋग्द्वयमाम्नातं पादावृत्त्या ऋक्त्रयं संपद्यते। स च 'संप्रगाथ' इति छन्दोगसूत्रे बह्वृचसूत्रे च प्रसिद्धम् । षष्ठ्येकवचनस्थाने सप्तमीबहुवचनमार्षम् । सोऽस्य प्रगाथस्य आदिरित्यर्थे प्रथमान्ताच्छन्दोविशेषवाचकादणादिप्रत्ययाः स्युरित्यर्थः । अक्षरेयत्ताविशेषो गायत्र्यादिश्छन्दः । **पङ्क्तिरादिरिति** । पङ्क्तिच्छन्दस्का ऋक् आदिर्यस्य प्रगाथस्य स पाङ्क्तः प्रगाथ इत्युच्यते इत्यर्थः । **स्वार्थे इति** । छन्दोवाचिभ्यः स्वार्थेऽणादिप्रत्ययस्योपसङ्ख्यानमित्यर्थः । **त्रैष्टुभमिति** । क्लीबत्वं लोकात् । **संग्रामे** । **अनुवर्तते इति** । तथाच 'संग्रामे' इति सप्तम्यन्तं षष्ठ्या विपरिणतमस्येत्यनेनान्वेति । तदस्य सङ्ग्रामस्य प्रयोजनं, तेऽस्य सङ्ग्रामस्य योद्धार इत्यर्थे प्रयोजनयोद्धृवाचिभ्यः प्रथमान्तेभ्योऽणादयः स्युरित्यर्थः । **तदस्यां** । 'तत् अस्यां क्रीडायां प्रहरण'मित्यर्थे प्रथमान्तात् प्रहरणवाचकाण्णप्रत्ययः स्यादित्यर्थः । प्रह्रियते अनेनेति **प्रहरणम्**—आयुधम् । **दाण्डेति** । अणि तु ङीप् स्यादिति भावः । **मौष्टेति** । मुष्टिः प्रहरणमस्यां क्रीडायामिति विग्रहः । **घञः सास्याम्** । अस्यामित्यनन्तरं 'मृगयाया'मित्यादि स्त्रीलिङ्गं विशेष्यमध्याहार्यम् । सा क्रिया अस्यां मृगयादिक्रियायामित्यर्थे घञन्तप्रकृतिकप्रथमान्तात्क्रियावाचिनो ञः स्यादित्यर्थः । फलितमाह—**घञन्तादित्यादिना** । **कृद्ग्रहणादिति** । तत्प्रयोजनमनुपदमेव वक्ष्यते । **श्येनतिलस्य** । **मुमागम इति** । 'अरुर्द्विष'दित्यतस्तदनुवृत्तेरिति भावः । **ञप्रत्यये इति** । ञप्रत्यये परे यः पातशब्दस्तस्मिन्नित्यर्थः । **उत्तरपदे इति** । 'अलुगुत्तरपदे' इत्यतस्तदधिकारादिति भावः । **श्येनपात इति** । पतनं पातः । भावे घञ् । **श्यैनंपातेति** । श्येनपातशब्दाद्घञन्ताञ्ञः । यद्यपि पातशब्द एव घञन्तस्तथापि कृद्ग्रहणपरिभाषया श्येनपातशब्दस्यापि ग्रहणं बोध्यम् । श्येनस्य पात इति कृद्योगषष्ठ्या समासः । तथाच श्येनपातशब्दस्यादिवृद्धिः । **तैलंपाता स्वधेति** । स्वधाशब्दः स्त्रीलिङ्गः पित्र्यक्रियायां वर्तते, 'नमः स्वधायै' इत्यादिदर्शनात् । 'स्वधे'त्यनेन क्रीडायामिति नानुवर्तते इति सूचितम् । तदस्यामिति प्रकृते पुनरस्यामिति ग्रहणात् । **तदधीते** । तदधीते इत्यर्थे, तद्वेत्तीत्यर्थे च द्वितीयान्तादणादयः स्युरित्यर्थः । गुरुमुखादक्षरानुपूर्वीग्रहणमध्ययनम् । शब्दार्थज्ञानं वेदनम् । एतेन अध्ययनविधिरर्थज्ञानपर्यन्त इति कतिपयमीमांसकोक्तिः परास्ता, पृथग्ग्रहणवैयर्थ्यात् । यथाचैतत्तथा अध्वरमीमांसाकुतूहलवृत्तौ प्रपञ्चितमस्माभिः । **वैयाकरण इति** । अणि 'न य्वाभ्यामि'त्यैजागमः । **क्रतूक्थादि** । 'तदधीते तद्वेदे'त्यर्थयोः-क्रतु, उक्थादि,

शे.]प्रथमानिर्देशात्तद्वाचकस्यैव प्रकृतित्वं। 'सङ्ग्रामे' इति सप्तमी षष्ठ्यर्थे इति, तदस्येति प्रत्ययार्थविशेषणम्। सङ्ग्रामे इति किम् ?। सन्तोषः प्रयोजनमस्य भोजनस्य । प्रयोजनेत्यादि किम् ?। सुभद्रा प्रेक्षिकाऽस्य सङ्ग्रामस्य । **तदस्याम्** । प्रथमान्तात्प्रहरणोपाधिकात् क्रीडारूपसप्तम्यन्तार्थे ण इत्यर्थः । **घञः सा** । सेति स्त्रीलिङ्गं क्रियापेक्षम् । **गतिकारकेति** । तत्फलं श्यैनंपातादावादिवृद्धिः । **ञप्रत्ययेति** । ञस्य पातशब्देन व्यवधानं तु येननाव्यवधानन्यायेन सह्यते । इतिः सर्वत्र लौकिकार्थविवक्षानुसरणाय । न्नते यथाभिधानमेव साधुत्वम् । **तदधी** । शब्दपाठोऽध्ययनं, तदर्थज्ञानं वेदनम् । द्विरतच्छब्दोपादानं स्पष्टार्थम् । 'कर्तृकर्मणो'-

।४ २।६०। क्रतुविशेषवाचिनामेवेह ग्रहणम् । तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः । वाजपेयिकः । उक्थं सामविशेषस्तल्लक्षणपरो ग्रन्थविशेषो लक्षणया—उक्थम् । तदधीते वेद वा—औक्थिकः । ***मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते** । न्यायं—नैयायिकः । वृत्ति—वार्त्तिकः । लोकायतं—लौकायतिक इत्यादि । ***सूत्रान्तात्त्वकल्पादेरेवेष्यते** । साङ्ग्रहसूत्रिकः । अकल्पादेः किम् ? । काल्पसूत्रः । ***विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्** । वायसविद्यिकः । गौलक्षणिकः । आश्वलक्षणिकः । पाराशरकल्पिकः । ***अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्** । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रिविधा विद्या—त्रिविद्या, तामधीते वेद वा त्रैविद्यः । ***आख्यानाख्यायिकेतिहासपुराणेभ्यश्च** । यवक्रीतमधिकृत्य कृतमाख्यानमुपचाराद्यवक्रीतं, तदधीते वेत्ति वा—यावक्रीतिकः । वासवदत्तामधिकृत्य कृता आख्यायिका—

त.] प्रत्ययः स्यात् । द्विस्तद्ग्रहणमधीयाने विदुषि च प्रत्येकं विधानार्थम् । तेनोत्तरत्र क्रतुवसन्तादयः शब्दास्तत्प्रतिपादकग्रन्थे गौणा अप्यधीयानेऽपि प्रत्ययं प्राप्नुवन्ति । अन्यथा तेषामध्ययनाऽसंभवेन वेदितर्येव प्रत्ययः स्यादिति भावः । **क्रतूक्थादि** । **क्रतुविशेषेति** । स्वरूपस्य तु न ग्रहणं, तथात्वे सत्युक्थादिष्वेव क्रतुशब्दः पठ्येत । नापि क्रतुपर्यायाणाम् , उक्थादिगणे यज्ञशब्दपाठादिति भावः । **अध्येतरीति** । अध्येतर्यपीत्यर्थः । **आग्निष्टोमिक इति** । संस्थाविशेषवाचकस्याप्यग्निष्टोमशब्दस्य तत्संस्थाके क्रतौ निरूढप्रयोगः । **तल्लक्षणेत्यादि** । तत्प्रतिपादकं प्रातिशाख्यमित्यर्थः । **नेष्येते इति** । अनभिधानादिति भावः । **त्रिविधेति** । 'तिस्रो विद्या अधीते' इति विग्रहे तु तद्धितार्थे द्विगौ 'त्रिविद्यः' इत्येव स्यात्, द्विगोर्लुगनपत्ये' इति लुक्प्रवृत्तेरिति भावः । **आख्यायिकेति** ।

बा.]सूत्रान्त-एभ्यः ठक् स्यादित्यर्थः । **क्रतुविशेषवाचिनामेवेति** । न तु क्रतुशब्दस्यैवेत्यर्थः । अन्यथा उक्थादिगण एव क्रतुशब्दमपि पठेदिति भावः । ननु क्रतुविशेषाणां कथमध्ययनम् ,अक्षरग्रहणात्मकत्वाऽभावादित्यत आह-**तेभ्य इति** । अग्निष्टोमादिशब्दाः क्रतुविशेषेषु मुख्याः । तत्प्रतिपादकग्रन्थेषु तु गौणाः । तत्र क्रतुविशेषात्मकमुख्यार्थकेभ्योऽग्निष्टोमादिशब्देभ्यो वेदितरि प्रत्ययाः । अग्निष्टोमादिक्रतुप्रतिपादकग्रन्थेषु लक्षणया विद्यमानेभ्यस्तु तेभ्योऽध्येतरीत्यर्थः । **आग्निष्टोमिक इति** । अग्निष्टोमं क्रतुं वेत्ति, तत्प्रतिपादकग्रन्थमधीते इति वाऽर्थः । उक्थशब्दः सामसु मुख्यः । सामलक्षणग्रन्थे प्रातिशाख्ये तु गौणः । तत्र गौणार्थकादेव उक्थशब्दाट्ठगित्याह—**उक्थं सामविशेष इति** । 'अग्निष्टोमस्तोत्रात्परं यत्साम गीयते' इति वृत्तिकृदुक्तेरिति भावः । भाष्ये तु सामशब्दपर्याय उक्थशब्द इति लक्ष्यते । **मुख्यार्थादिति** । सामवाचिन उक्थशब्दात्तु न ठक् । तस्मिन्निषिद्धे तदधीते इत्यण् च न भवतीत्यर्थः । भाष्ये तु मुख्यार्थकादुक्थशब्दाट्ठक् नेत्येव लक्ष्यते । उक्थादिगणपठितान्न्यायादिशब्दाट्ठकमुदाहरति—**न्यायमिति** । 'अधीते वेत्ति वे'ति शेषः । **नैयायिक इति** । ठकि ऐजागमः । **वृत्तिमिति** । 'अधीते वेद वे'ति शेषः । **वार्त्तिक इति** । ठकि आदिवृद्धौ रपरत्वम् । **साङ्ग्रहसूत्रिक इति** । संग्रहाख्यं सूत्रमधीते वेत्ति वेत्यर्थः । **विद्यालक्षणेति** । विद्या, लक्षण, कल्प—एतदन्तादपि उक्तेऽर्थे ठगित्यर्थः । **अङ्गेति** । अङ्ग, क्षत्र, धर्म, त्रि—एतत्पूर्वकाद्विद्यान्तात्समासाट्ठक् नेत्यर्थः । ततश्च अणेव । **त्रिविद्य इति** । शाकपार्थिवादित्वाद्विधाशब्दस्य लोप इति भावः । तिस्रो विद्यास्त्रिविद्या इति न विग्रहः, 'दिक्सङ्ख्ये संज्ञाया'मिति नियमात् । नापि तिस्रो विद्या अधीते वेद वेति तद्धितार्थे द्विगुः, तथा सति तद्धितस्य द्विगुनिमित्ततया 'द्विगोर्लुगनपत्ये' इति लुगापत्तेः । तिसृणां विद्यानां समाहार इति द्विगुरप्यत्र निर्बाध एव । **आख्यानेति** । आख्यान, आख्यायिका, इतिहास, पुराण—एभ्यश्च उक्तेऽर्थे ठग्वक्तव्य इत्यर्थः । तत्र आख्यानशब्देन आख्यायिकाशब्देन च आख्यानविशेषवाचिन आख्यायिकाविशेषवाचिनश्च ग्रहणम् । इतिहासपुराणशब्दयोस्तु स्वरूपयोरेव ग्रहणम् । **आख्यानं** नाम कथाप्रबन्धः । 'आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षण'मित्यमरः । 'इतिहासः पुरावृत्त'मिति च । 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चेति पुराणं पञ्चलक्षणम् ।' तत्र आख्यानादुदाहरति—**यवक्रीतमिति** । आख्यायिकाया उदाहरति—**वासवदत्तामिति** ।

शे.]रिति सूत्रस्थभाष्यपर्यालोचनया तद्धितार्थस्य क्रियात्वाऽभावेऽप्यलौकिके द्वितीयान्तात्प्रत्ययविधानसामर्थ्यादेव द्वितीया । एवं 'तत्र भवः' इत्यादिविषये सप्तम्याद्यपि । 'अधीते' इत्यादीनां लौकिकप्रयोगे क्रियाप्रधानत्वेऽप्यत्र कारकप्रधानतेत्यन्यत्र प्रपञ्चितम् । **तत्प्रतिपादकेति** । उभयोः सहाधिकारेणोत्तरसूत्राणामर्थद्वयेऽपि प्रवृत्तिरिति भावः । **अध्येतरीति** । तत्रापीत्यर्थः । **ग्रन्थविशेषः**—औक्थिक्याख्यप्रतिशाख्यम् । **लक्षणया**=उक्थत्वारोपेण । औक्थिक्यशब्दात्तु नानयोः प्रत्ययः, अनभिधानात् । **नेष्येत इति** । ठकोऽनभिधानमात्रे भाष्यस्वरसः । **वृत्तिं**=संहिताम् । **इत्यादीति** । अनुसूर्ग्रन्थविशेषः । आनुसुकः । 'इसु'सिति के, 'केऽणः' इति ह्रस्वः । **सूत्रान्तात्त्विति** । एतच्च कैयटे स्पष्टम् । **साङ्ग्रहसूत्रिके**-समाहारद्वन्द्व इति कश्चित् । द्विगौ तु तद्धितलुक् स्यादत आह—**त्रिविधेति** । **पदोत्तरपदादिति** । पदशब्दोत्तरपदकादित्यर्थः । **शतषष्टेरिति** । ताभ्यां परो यः पथिन्शब्दस्तद-

वासवदत्ता । 'अधिकृत्य कृते ग्रन्थे' इत्यर्थे 'वृद्धाच्छः' । तस्य 'लुबाख्यायिकाभ्यो बहुल'मिति लुप् । ततोऽनेन ठक् । वासवदत्तिकः । ऐतिहासिकः । पौराणिकः । ॐ सर्वादेः सादेश्च लुग्वक्तव्यः । सर्ववेदानधीते सर्ववेदः । सर्वतन्त्रः । सवार्तिकः । 'द्विगोर्लु'गिति लुक् । द्वितन्त्रः । ॐ इकन्पदोत्तरपदाच्छतषष्टेः षिकन्पथः । पूर्वपदिकः । उत्तरपदिकः । शतपथिकः । शतपथिकी । षष्टिपथिकः । षष्टिपथिकी । **क्रमादिभ्यो वुन्** ।४।२।६१। क्रमकः । क्रम, पद शिक्षा, मीमांसा । क्रमादिः । **अनुब्राह्मणादिनिः** ।४।२।६२। 'तदधीते तद्वेदे'त्यर्थे । ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं, तदधीते अनुब्राह्मणी । मत्वर्थीयेनिनैव सिद्धे अण्बाधनार्थमिदम् । **वसन्तादिभ्यष्ठक्** ।४।२।६३। वासन्तिकः । अथर्वाणमधीते आथर्वणिकः । 'दाण्डिनायने'ति सूत्रे निपातनाट्टिलोपो न । **प्रोक्ताल्लुक्** ।४।२।६४। प्रोक्तार्थकप्रत्ययात्परस्याध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । पणनं पणः । 'घञर्थे कविधान'मिति कः । सोऽस्यास्तीति पणी । तस्य गोत्रापत्यं पाणिनः । **गाथिविदथिकेशिगणिपणिनश्च** ।६।४।१६५। एतेऽणि प्रकृत्या स्युः । इति टिलोपो न । ततो यूनि इञ् । पाणिनिः । ण्यक्षत्रियार्षञितो

---

त.] गद्यपद्यरूपो ग्रन्थविशेष इत्यर्थः । **सर्वादेरिति** । 'सादे'रित्येव सिद्धे सर्वादिग्रहणमर्थवत्परिभाषाज्ञापनार्थम् । **सवार्तिक इति** । वार्तिकान्तमधीत इत्यर्थः । अन्तवचने अव्ययीभावः । 'अव्ययीभावे चाऽकाले' इति सहस्य सभावः । **इकन्निति** । पदशब्द उत्तरपदं यस्य तस्मादिकन् । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात्तु षिकन् वाच्य इत्यर्थः । **शतपथिक इति** । वृत्तिकृता तु वार्तिके 'बहुल'मिति पूरयित्वा 'शातपथः' इत्यणन्तमप्युदाहृतम् । तत्तु भाष्ये न दृष्टम् । षित्त्वफलं दर्शयति—**शतपथिकीति** । **अण्बाधनार्थमिति** । भाष्ये तु प्रत्याख्यातमेवेदं सूत्रं, तद्रीत्या त्वणिष्यत इति, अनभिधानान्नेति वा बोध्यम् । **वसन्ता** । उक्थादिष्वेव वसन्तादीन् पठित्वा, वसन्तादिषु वा उक्थादीन्पठित्वा, अन्यतरच्छक्यमवक्तुम् । **अथर्वाणमिति** । अथर्वणा प्रोक्त उपचारादथर्वा । यद्वा 'तेन प्रोक्त'मित्यधिकारे—ऋषिभ्यो लुग्वक्तव्यः । वसिष्ठो विश्वामित्रोऽनुवाक इत्युदाहृत्य अथर्वणो वा । 'अथर्वा', 'अथर्वणः' इति भाष्योक्तेः-साधुः । **गाथिविदथि** । 'इनण्यनपत्ये' इति सिद्धे अपत्येऽप्यणि प्रकृतिभावार्थमयमारम्भः । गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः । ण्यक्षत्रियार्ष ।

---

बा.] **लुग्वक्तव्य इति** । 'उक्तप्रत्ययस्ये'ति शेषः । **सर्ववेद इति** । अणो लुकि आदिवृद्ध्यभावः । **सर्वतन्त्र** ति । सर्वतन्त्राण्यधीते वेद वेत्यर्थः । **सवार्तिक इति** । वार्तिकेन सह सवार्तिकम् । 'तेन सहे'ति बहुव्रीहिः । 'वोपसर्जनस्ये'ति सभावः । सवार्तिकं सूत्रमधीते इत्यर्थः । **द्विगोरिति** । द्वे तन्त्रे अधीते वेत्ति वेत्यर्थे तद्धितार्थे द्विगुनिमित्तत्वादणो लुकि आदिवृद्ध्यभावे 'द्वितन्त्र' इति रूपमित्यर्थः । **इकन्पदोत्तरपदादिति** । पदशब्द उत्तरपदं यस्य स पदोत्तरपदः, तस्मादुक्तेऽर्थे इकन्प्रत्ययो वक्तव्यः । **शतषष्टेः षिकन्पथ इति** । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तस्मादुक्तेऽर्थे षिकन्प्रत्ययो वक्तव्य इत्यर्थः । **पूर्वपदिक इति** । पूर्वपदमधीते वेत्ति वेत्यर्थः । एवमुत्तरपदिकः । **शतपथिक इति** । शतपथं नाम वाजसनेयिब्राह्मणं । तदधीते वेत्ति वेत्यर्थः । **शतपथिकीति** । षित्त्वान्ङीषिति भावः । एवं षष्टिपथिकः । षष्टिपथिकीति । **क्रमादिभ्यो वुन्** । 'तदधीते तद्वेद इत्यर्थे' इति शेषः । **क्रमक इति** । क्रममधीते वेत्ति वेत्यर्थः । क्रमादिगणं पठति—**क्रमेत्यादि** । **क्रमादिरिति** । अयं क्रमादिगणं इत्यर्थः । 'पदकः' 'मीमांसकः' इत्युदाहरणानि । **अनुब्राह्मणादिनिः** । शेषपूरणेन सूत्रं व्याचष्टे—**तदधीते तद्वेदेत्यर्थे इति** । इनिप्रत्यये नकारादिकार उच्चारणार्थः । तथा च नकारस्योपदेशेऽन्त्यत्वाऽभावान्नेत्संज्ञा । ननु 'अत इनिठनौ' इति मत्वर्थे इनिनैव सिद्धत्वादिदं व्यर्थमित्यत आह—**अण्बाधनार्थमिति** । भाष्ये तु प्रत्याख्यातमेवेदम् । **वसन्तादिभ्यष्ठक्** । 'तदधीते तद्वेदे'त्येव । **वासन्तिक इति** । वसन्तवर्णनपरो ग्रन्थो वसन्तः । तमधीते वेत्ति वेत्यर्थः । **अथर्वाणमिति** । अथर्वणा प्रोक्तो वेदो लक्षणया अथर्वा, तमित्यर्थः । वस्तुतस्तु प्रोक्तप्रत्ययस्य 'ऋषिभ्यो लुग्वक्तव्यः' इति वचनाल्लुक् । **आथर्वणिक** इत्यत्र 'नस्तद्धिते' इति टिलोपमाशङ्क्याह—**दाण्डिनायनेति** । वान्तसंयोगपूर्वकत्वात्तु नाल्लोपः । अथ पाणिनिशब्दं व्युत्पादयितुमुपक्रमते—**प्रोक्ताल्लुक्** । प्रोक्तशब्देन प्रोक्तार्थप्रत्ययो विवक्षितः । **अध्येतृवेदितृप्रत्ययस्येति** प्रकृतत्वाल्लभ्यते । तदाह—**प्रोक्तार्थकेति** । **पण इति** । स्तुतिरित्यर्थः । ननु 'हलश्चे'ति घञि उपधावृद्धिः स्यादित्यत आह—**घञर्थे इति** । **पणीति** । 'अत इनिठनौ' इति मत्वर्थे इनिः । **तस्येति** । पणिनो गोत्रापत्ये 'तस्यापत्य'मित्यणि 'पाणिन' इति रूपमित्यर्थः । अत्र अणोऽपत्यत्वात्तस्मिन्परे 'इनण्यनपत्ये' इति प्रकृतिभावाऽभावाट्टिलोपे प्राप्ते । **गाथिविदथि** । 'इनण्यनपत्ये' इत्यतो-

---

शे.] न्तादित्यर्थः । **प्रोक्तादिति**—स्वरितत्वबलात्तदधिकारस्थप्रत्ययपरम् । 'प्रोक्ता'दिति वक्तव्येऽयं सौत्रो निर्देश इति भाष्ये स्पष्टम् । 'इनण्यनपत्ये' इत्युक्तेरापत्यार्थं वचनं—'गाथिविदथी'ति । ण्यक्षत्रिय । ण्यादयः सर्वे गोत्रप्रत्यया एव गृह्यन्ते, 'गोत्राद्यूनी'त्युक्तेः ।

**यूनि लुगणिञोः** ।२।४।५८। ण्यप्रत्ययान्तात् क्षत्रियगोत्रप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्ताञ्ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक् स्यात् । कौरव्यः पिता । कौरव्यः पुत्रः । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । वासिष्ठः पिता । वासिष्ठः पुत्रः । तैकायनिः पिता । तैकायनिः पुत्रः । एभ्यः किम् ? । चिवायण् । कौहडः । [पिता] । तत इञ् । कौहडिः पुत्रः । यूनि किम् ? । वामरथ्यस्य छात्राः वामरथाः ॥ [कण्वादिभ्य इत्यण्] । इति अणो लुक् तु न भवति, आर्षग्रहणेन प्रतिपदोक्तस्य ऋष्यण एव ग्रहणात् । पाणिनिना प्रोक्तं

---

त.]**कौरव्य इति** । 'कुर्वादिभ्यो ण्यः' ।तत इञो लुक् । कौरव्यः पुत्रः । ननु तिकादिषु कौरव्यशब्दः पठ्यते,तथा च कौरव्यायणिरिति फिना भाव्यं,न त्विञेति चेत्सत्यम् । 'कुर्वादिभ्यो ण्यः' इति क्षत्रियगोत्रे विहितो यो ण्यस्तदन्तं तत्र पठ्यते । प्रकृते तु ब्राह्मणगोत्रप्रत्ययान्तमित्यवधेयम् । **श्वाफल्क इति** । 'ऋष्यन्धके'त्यण् । तत इञो लुक्; श्वाफल्कः पुत्रः । **वासिष्ठ इति** । ऋष्यण् । तत इञो लुक् । वासिष्ठः पुत्रः । **तैकायनिरिति** । 'तिकादिभ्यः फिञ्' । ततोऽणो लुक् । तैकायनिः पुत्रः । **वामरथा इति** । कुर्वादित्वाण्ण्यः । ततो वृद्धाच्छं बाधित्वा 'कण्वादिभ्यो गोत्रे' इति शैषिकोऽण् । **इतीति** । 'ण्यक्षत्रियार्षे'त्युदाहृतसूत्रेणेत्यर्थः । **ऋष्यण एवेति** । पाणिनशब्दे तु औत्सर्गिक एवाऽणिति भावः । नन्विदं 'वान्यस्मिन् सपिण्डे' इति सूत्रस्थभाष्यकैयटाभ्यां विरुध्यते । अत्रेर्युवापत्यानि पुमांसोऽत्रयः । इनश्चानिञः' इति ढक् । तदन्ताद्यूनि 'अत इञ्' । तस्य 'ण्यक्षत्रिये'ति लुक्, 'अत्रिभृगुकुत्से'ति ढकोऽपि लुक्' इत्युक्तत्वात् । 'ऋष्यन्धके'त्यण एव ग्रहणे तु ढकोऽग्रहणात्ततः परस्येञो लुङ्न

---

बा.]ऽणीत्यनुवर्तते । 'प्रकृत्यैका'जित्यतः प्रकृत्येति च । तदाह–**एतेऽणि प्रकृत्या स्युरिति** । गाथिन्,विदथिन्, केशिन्, गणिन्, पणिन्–एते इत्यर्थः । अपत्येऽप्यणि प्रकृतिभावार्थमिदम् । **ततो यून्यपत्ये इति** । मूलप्रकृतिः पणी । तदपेक्षया चतुर्थेऽपत्ये यूनि विवक्षिते पाणिनशब्दाद्गोत्राऽणन्तादत इञि पाणिनिरिति रूपमित्यर्थः । पाणिनशब्दस्य अनन्तरापत्यप्रत्ययान्तत्वे तु ततोऽनन्तरापत्ये मूलप्रकृतिपण्यपेक्षया तृतीये गोत्रापत्ये इञ्न संभवति, 'एको गोत्रे' इति नियमात् । नापि मूलप्रकृत्यपेक्षया चतुर्थोऽपत्ये यूनि पाणिनशब्दादनन्तरापत्यप्रत्ययान्तादिञ्संभवति, 'गोत्राद्यून्यस्त्रिया'मिति यून्यपत्ये गोत्रप्रत्ययान्तादेवाऽपत्यप्रत्ययनियमात् । अतो गोत्राऽण्प्रत्ययान्तात्पाणिनशब्दाद्यूनि इञ्प्रत्यय इत्युक्तमिति बोध्यम् । अत्र इञो लुकमाशङ्कितुमाह–**ण्यक्षत्रियार्षे** । ण्यादयः सर्वे गोत्रप्रत्यया एव गृह्यन्ते, 'गोत्राद्यूनी'त्युक्तेः । तदाह—**गोत्रप्रत्ययान्तादित्यादि** । ण्यप्रत्ययस्योदाहरति—**कौरव्य इति** । कुरोर्गोत्रापत्यं कौरव्यः । 'कुर्वादिभ्यो ण्यः' । कौरव्यस्यापत्यं युवेत्यर्थेऽत इञ् । तस्यानेन लुक् । क्षत्रियप्रत्ययस्योदाहरति–**श्वाफल्क इति** । श्वफल्कस्य गोत्रापत्यं श्वाफल्कः । 'ऋष्यन्धके'त्यण् । श्वाफल्कस्यापत्यं युवेत्यर्थे 'अत इञ्' । तस्याऽनेन लुक् । आर्षप्रत्ययस्योदाहरति–**वासिष्ठ इति** । वसिष्ठस्य गोत्रापत्यं वासिष्ठः । ऋष्यण् । वासिष्ठस्यापत्यं युवेत्यर्थे इञ् । तस्याऽनेन लुक् । ञित उदाहरति–**तैकायनिरिति** । तिकस्य गोत्रापत्यं तैकायनिः । तिकादिभ्यः फिञ् । तैकायनेरपत्यं युवेत्यर्थे तस्यापत्यमित्यण् । तस्यानेन लुक् । **वामरथ्यस्येति** । वामरथस्य गोत्रापत्यं वामरथ्यः । 'कुर्वादिभ्यो ण्यः' । वामरथ्यस्य छात्रा इत्यर्थे 'कण्वादिभ्यो गोत्रे' इति छापवादोऽण्, तस्यानेन लुङ्न भवति, तस्य युवार्थकत्वाऽभावादिति भावः । **इत्यणो लुक्तु न भवतीति** । 'ण्यक्षत्रिये'ति सूत्रेण पाणिनिरित्यत्र [अणः परस्य] इञो लुङ्न भवतीत्यर्थः । कुत इत्यत आह—**आर्षग्रहणेनेति** । पाणिनिशब्दे पणिन्शब्दादण्प्रत्ययस्य औत्सर्गिकस्य वस्तुगत्या ऋषिवाचित्वेऽपि ऋषौ प्रतिपदोक्तत्वाऽभावान्न ततः परस्य इञो लुगिति भावः । न च पणिन्शब्दाद्गोत्रापत्ये 'ऋष्यन्धके'त्यणेव कुतो न स्यादिति वाच्यं, यत्र औत्सर्गिकस्य अण इञादिना बाधः प्रसक्तः, तत्रैव तद्बाधनार्थमृष्यणः प्रवृत्तेः । वस्तुतस्तु 'वाऽन्यस्मिन्सपिण्डे' इति सूत्रभाष्येऽत्रिशब्दात् 'इतश्चानिञः' इति ढकि आत्रेयशब्दादिञो 'ण्यक्षत्रियार्षे'ति लु'गित्युक्तत्वादिदमुपेक्ष्यम् । 'ण्यक्षत्रिये'त्यत्र तु ऋषिवाचकस्य रूढस्यैव ग्रहणम् । पणिन्शब्दः, तदपत्ये पाणिनशब्दश्च न ऋषिवाचकौ । अत औत्सर्गिकाणन्त एव पाणिनशब्द इति शब्देन्दुशेखरे प्रपञ्चितम् । **पाणिनिनेति** । पाणिनिना प्रोक्तमित्यर्थे 'तेन प्रोक्त'मित्यणं

---

शे.]**क्षत्रियगोत्रेति** । क्षत्रियवाचिनो गोत्रप्रत्ययान्तादित्यर्थः । **आर्षेति** । ऋषिप्रकृतिकप्रत्ययान्तादित्यर्थः । **कौरव्य इति** । ब्राह्मणगोत्रमेतत् । **वामरथ्यस्येति** । वामरथः कुर्वादिस्ततो 'वामरथ्यस्य कण्वादिवत्स्वरवर्ज'मित्युक्तेर्जातस्य 'कण्वादिभ्यो गोत्रे' इत्यणो न लुगिति भावः । **ऋष्यण एवेति** । ऋष्यण्प्रकृतिकाऽणिञोरित्यर्थः । पणिन्शब्दात्तु न ऋष्यण्, किन्त्वौत्सर्गिक एव । यत्र औत्सर्गिकस्येञा बाधः प्राप्तस्तत्रैव तद्बाधनार्थं ऋष्यण्प्रवृत्तेरिति भावः । इदं प्राचामनुरोधेन । परे तु 'वाऽन्यस्मि'न्निति सूत्रेऽत्रिशब्दादितश्चानिञ इति ढकि, तत इञि 'ण्यक्षत्रिये'ति लुको भाष्ये उक्तत्वेनेदं चिन्त्यम् ।

पाणिनीयम् । 'वृद्धाच्छः' । 'इञश्चे'त्यण् तु न, गोत्रे य इञ् तदन्तादिति वक्ष्यमाणत्वात् । ततोऽध्येतृवेदित्रणो लुक् । स्वरे स्त्रियां च विशेषः । पाणिनीयः । पाणिनीया । **सूत्राच्च कोपधात्** ।४।२।६५। सूत्रवाचिनः ककारोपधादध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अप्रोक्तार्थ आरम्भः । अष्टावध्यायाः परिमाणमस्य-अष्टकं पाणिनेः सूत्रम् । तदधीयते विदन्ति वा अष्टकाः । ❀ **सङ्ख्याप्रकृतिकादिति वाच्यम्** । नेह— [ माहावार्त्तिकः । ] कालापकः । **छन्दोब्राह्मणानि च तद्विषयाणि** ।४।२।६६। छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि स्युः । अध्येतृवेदितृप्रत्ययं विना न प्रयोज्यानीत्यर्थः । कठेन प्रोक्तमधीयते

---

**त.]** स्यादित्याहुः । वस्तुतस्तु 'दाक्षीपुत्रस्य पाणिने'रिति भाष्यप्रयोगादस्य साधुत्वमिति ज्ञेयम् । **इञश्चेतीति** । 'यूनि लु'गिति लुक्यपि प्रत्ययलक्षणेन इञन्तमस्तीति भावः । **गोत्रे य इञिति** । 'गोत्रमिह शास्त्रीयं, न तु लौकिक'मिति तत्र वक्ष्यते इति भावः । **स्वरे इति** । लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप्स्यान् । लुकि सति त्वीकार उदात्तः, टाप् च सिध्यतीति भावः । **अष्टकमिति** । 'सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति 'सङ्ख्याया अतिशदन्तायाः कन्' । **सङ्ख्याप्रकृतिकादिति** । सङ्ख्याप्रकृतिकप्रत्ययान्तादित्यर्थः । **कालापक इति** । कलापिन्शब्दात्प्रोक्तार्थेऽण् । 'सब्रह्मचारी'त्युपसङ्ख्यानाट्टिलोपः । ततोऽध्येतर्यण् । तस्य 'प्रोक्ताल्लु'गिति लुक् । कालापानामाम्नाय इत्यर्थे 'गोत्रचरणाद्वुञ्' । ततोऽध्यतृवेदित्रणो न लुक् । स्वरे स्त्रियां च विशेषः । **छन्दोब्राह्मणानि** । इह मण्डूकप्लुत्यानुवृत्तं 'प्रोक्ता'दिति पञ्चम्यन्तं जसन्तत्वेन विपरिणम्यते, 'छन्दोब्राह्मणानी'त्यनेन सामानाधिकरण्यात् । प्रोक्तशब्दश्च प्रोक्तार्थके प्रत्यये लाक्षणिक इत्याशयेनाह—**प्रोक्तप्रत्ययान्तानीति** । **तद्विषयाणीति** । तच्छब्देन

---

**बा.]** बाधित्वा 'वृद्धाच्छः' इति छप्रत्यये ईयादेशे पाणिनीयशब्द इत्यर्थः । ननु पाणिनिशब्दात्तद्धिते विवक्षिते 'यूनि लु'गितीञो लुकि सत्यपि प्रत्ययलक्षणेन इञन्तत्वमाश्रित्य छापवादोऽण्स्यादित्यत आह – **इञश्चेत्यण्तु नेति** । पाणिनिशब्दे इञ् युवापत्यार्थक एव, न तु गोत्रार्थकः, युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः । अद्यपि अपत्याधिकारादन्यत्र न पारिभाषिकं गोत्रमित्युक्तं, तथाप्यत्र पारिभाषिकमेव गोत्रं गृह्यते इत्युपरिष्टात् 'इञश्चे'ति सूत्रे वक्ष्यते । **तत इति** । पाणिनीयशब्दादित्यर्थः । पाणिनीयमधीते वेत्ति वेत्यर्थे पाणिनीयशब्दादणि 'प्रोक्ताल्लु'गिति तस्य लुगिति भावः । ननु असत्यपि अध्येतृवेदितृप्रत्ययस्याऽणो लुकि पाणिनीयशब्दः सिध्यत्येवेत्यत आह—**स्वरे स्त्रियां च विशेष इति** । अध्येतृवेदितृप्रत्ययस्याऽणो लुगभावे प्रत्ययस्वरेणान्तोदात्तत्वं स्त्रियां च ङीप्स्यात् । लुकि तु सति छादेशस्य ईयादेशस्य ईकारः प्रत्ययस्वरेणोदात्तः टाप्च सिध्यति । तदाह—**पाणिनीयः पाणिनीयेति** । **सूत्राच्च को** । ककारोपधादित्यनन्तरं 'परस्ये'ति शेषः । ननु 'प्रोक्ताल्लु'गित्येव सिद्धे किमर्थमिदमित्यत आह—**अप्रोक्तार्थ आरम्भ इति** । अप्रोक्तार्थादपि प्रत्ययात्परस्य लुगर्थमित्यर्थः । **अष्टकमिति** । 'तदस्य परिमाण'मित्यधिकारे 'सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेषु' इति 'सङ्ख्याया अतिशदन्तायाः क'न्निति च सूत्ररूपेऽर्थे कन् । **अष्टका इति** । अष्टकशब्दादध्येतृवेदितृप्रत्ययस्य अनेन लुक्, कोपधात्सूत्रवाचिनः परत्वादिति भावः। **सङ्ख्याप्रकृतिकादिति** । 'सूत्राच्च कोपधा'दिति लुक्सङ्ख्याप्रकृतिकप्रत्ययान्तादेव परस्य भवतीत्यर्थः । **माहावार्तिक इति** । महावार्तिकं नाम सूत्रम् । तदधीते वेत्ति वा माहावार्तिकः । अत्र अणो न लुक् । **छन्दोब्राह्मणानि** । छन्दांसि—मन्त्राः, ब्राह्मणानि—विधिवाक्यानि । तेषां द्वन्द्वः । वेद इति यावत्, 'मन्त्रब्राह्मणयोर्वेदनामधेय'मिति स्मरणात् । 'प्रोक्ताल्लु'गित्यतः प्रोक्तादित्यनुवर्तते । प्रथमाबहुवचनेन विपरिणम्यते । प्रोक्तप्रत्ययान्तानीति लभ्यते । तदाह—**छन्दांसीत्यादिना** । **तद्विषयाणीत्यत्र** तच्छब्देन अध्येतृवेदितृप्रत्यया विवक्षिताः । तैर्विषयः=अविनाभावो येषां तानि—**तद्विषयाणि** । 'षिञ्बन्धने' । विशिष्य सयो-बन्धः-विषयः । अविनाऽभाव इति यावत् । अध्येतृवेदितृप्रत्ययसंयुक्तान्येव स्युरित्यर्थः । फलितमाह—**अध्येतृवेदितृप्रत्ययं विनेति** ।

---

**शे.]** तस्मादत्र प्रतिपदोक्तपरिभाषाऽप्रवृत्तिरेव । 'पणिन्'शब्दो यौगिको न तु रूढः, लुग्विधौतु ऋषिवाचकस्य रूढस्यैव ग्रहणमित्याहुः । **वृद्धाच्छ इति** । तत्र विवक्षिते इञो 'यूनि लु'गिति लुक् । **इञश्चेति** । प्रत्ययलक्षणेनेञन्तत्वादिति भावः । **गोत्रे इति** । यथा तत्र पारिभाषिकगोत्रस्यैव ग्रहणं तथा वक्ष्यते । **स्वरे इति** । असत्यणो लुकि प्रत्ययस्वरेणान्तोदात्तत्वं, स्त्रियां ङीप् च स्यादिति भावः । **छन्दोब्राह्मणानि च** । छन्दःपदेन गायत्र्यादिछन्दोयुतमन्त्राणामेव ग्रहणमिति 'ब्राह्मण'ग्रहणम् । 'जुष्टार्पिते च छन्दसी'त्यत्र छन्दःपदस्य ब्राह्मणे लक्षणा, नित्यं मन्त्रे' इत्युत्तरसूत्रे मन्त्रग्रहणात् । चेन 'पुराणप्रोक्तेषु' इति सूत्रविषयभिन्ने कल्पे सूत्रे च तद्विषयतेष्यते इति भाष्ये स्पष्टम् । अनन्यभावे विषयशब्दः, तेन प्रोक्तप्रत्ययान्तेभ्यः वुत्पत्तेः पूर्वमेवाध्येतृप्रत्ययः । अतः 'काश्यपि... ...' इति वार्तिकारम्भेऽप्यवान्तररूपा पदत्वमाश्रित्य नलोपो न । 'प्रोक्ता'दित्यनुवृत्तं प्रथमाबहुवचनेन विपरिणम्यते । **तद्विषयाणीति** । तच्छब्दोऽध्येतृवेदित्रर्थकप्रत्ययपरामर्शी । अर्थमात्रपरामर्शे कठं

कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः । तस्य 'कठचरका'दिति लुक् । ततोऽण् । तस्य 'प्रोक्ताल्लुक्' ।

**तदस्मिन्नस्तीति देशे तन्नाम्नि** ।४।२।६७। उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरः । **तेन निर्वृत्तम्** ।४।२।६८। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । **तस्य निवासः** ।४।२।६९। शिबीनां निवासो देशः शैबः । **अदूरभवश्च** ।४।२।७०। विदिशाया अदूरभवं नगरं वैदिशम् । चकारेण प्रागुक्तास्त्रयोऽर्थाः संनिधाप्यन्ते । तेन वक्ष्यमाणप्रत्ययानां चातुरर्थिकत्वं सिध्यति । **ओरञ्** ।४।२।७१। अणोऽपवादः । कक्षतु—काक्षतवम् । मर्यां तु परत्वान्मतुप्-इक्षुमती । **मतोश्च बह्वजङ्गात्** ।४।२।७२। बह्वच् अङ्गं यस्य मतुपस्तदन्तादञ्, नाऽण् ।

त.] अध्येतृवेदितृप्रत्ययः परामृश्यते । विषयशब्दस्त्विहानन्यभाववाची न तु देशवाचीत्यभिप्रेत्याह-**प्रत्ययं विना न प्रयोज्यानीत्यर्थ इति** । पाणिनीयं पाणिनीया इतिवदनियमेन प्रयोगे प्राप्ते नियमार्थमेतदिति भावः । छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं चिरन्तनप्रोक्तब्राह्मणानामेव तद्विषयत्वार्थम् । तेनेह न–याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानि । यञन्तात् 'कण्वादिभ्यो गोत्रे' इत्यण् । 'आपत्यस्य चे'ति यलोपः । याज्ञवल्क्यादयो हि पाणिन्यपेक्षया नूतना इति वृत्तिकृतां व्यवहारः । चकारोऽनुक्तसमुच्चयार्थः । तेन काश्यपिनः कौशिकिन इत्यत्र कल्पेऽपि तद्विषयत्वं सिद्धम् । 'काश्यपकौशिकाभ्यामृषिभ्या'मिति प्रोक्ते णिनिः, अध्येत्रणो लुक् । छन्दोब्राह्मणानीति किम् ? । पाणिनीयं व्याकरणम् । इति रक्ताद्यर्थकाः ।

**अथ चातुरर्थिकाः । तदस्मिन्** । अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात्प्रत्ययान्तनामा देशश्चेत् । तत्प्रत्ययान्तं नाम यस्येति बहुव्रीहिः । मतुपोऽयमपवादः । 'इति शब्दस्तु सकललोकप्रसिद्धे देशे यथा स्यात्, न त्वाधुनिकसङ्केतेऽपीत्येतदर्थः । उत्तरसूत्रत्रयेऽपि 'देशे तन्नाम्नी'त्यनुवर्तते । **तेन निर्वृत्तम्** । अन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः । **अदूर** । अदूरमन्तिकम् । तत्र भवतीत्यदूरभवः । निपातनात्सप्तमीसमासः । **चातुरर्थिकत्वमिति** । चतुर्णामर्थानां समाहारश्चतुरर्थी । तत्र भवाश्चातुरर्थिकाः । अध्यात्मादित्वाट्ठञ् । चतुर्ष्वर्थेषु भवा इति तद्धितार्थे द्विगौ तु 'द्विगोर्लुगनपत्ये' इति ठञो लुक् स्यात् । **मतोश्च** । ननु 'मतोर्बह्वचः' इत्येवास्तु, बह्वचो विहितो यो मतुप् तदन्तादिति वैयधिकरण्येन व्याख्यानादिष्टं सिद्ध्यति किमङ्ग-

बा.] पाणिनिना प्रोक्तं पाणिनीयं व्याकरणम् । पाणिनीयास्तदध्येतारो वेदितारो वेति वदध्येतृप्रत्ययं विनापि प्रयोगे प्राप्ते नियमार्थमिदम् । **कठेनेति** । कठेन प्रोक्तमधीयते इत्यर्थे 'कठा' इत्युदाहरणमिति भावः । तदुपपादयति–**वैशम्पायनेति** । कठेन प्रोक्तमित्यर्थे 'तेन प्रोक्त'मित्यणपवादः 'वैशम्पायनान्तेवासिभ्यश्च' इति णिनिरित्यर्थः । **तस्येति** । णिनेः 'कठचरकाल्लु'गित्यनेन लुगित्यर्थः । एवंच कठेन प्रोक्तो वेदभागः कठ इति स्थितम् । **ततोऽणिति** । तस्माल्लुप्तप्रोक्तप्रत्ययकात्कठशब्दात्तदधीते इति अणित्यर्थः । **तस्य प्रोक्ताल्लुगिति** । तस्य=अध्येत्रणः, 'प्रोक्ताल्लुक्' इति लुगित्यर्थः । तथा च कठेन प्रोक्तमधीयते कठा इत्येवं कठशब्दस्य लुप्तप्रोक्तप्रत्ययान्तस्य अध्येत्रणा सहैव प्रयोगार्हता, ननु तेन विना केवलप्रोक्तप्रत्ययान्तस्येति भावः । अथ चातुरर्थिकान्प्रत्ययान्वक्तुमुपक्रमते—**तदस्मिन्नस्तीति** । तदस्मिन्नस्तीत्यर्थे प्रथमोच्चारितात्प्रथमान्तादणादयः स्युः । प्रत्ययान्तेन प्रकृतिनामके देशे गम्ये इत्यर्थः । प्रसिद्धदेशग्रहणार्थ इतिशब्दः । मतुपोऽपवादः । **तेन निर्वृत्तं** । देशे तन्नाम्नीत्यनुवर्तते । तेन निर्वृत्तमित्यर्थे तृतीयान्तादणादयः स्युस्तन्नाम्नि देशे इत्यर्थः । **तस्य निवासः** । 'तन्नाम्नि देशे' इत्येव । तस्य निवास इत्यर्थे षष्ठ्यन्तादणादयः स्युस्तन्नाम्नि देशे इत्यर्थः । स्वत्ववान्विषयः, निवासस्तु वसतिमात्रं,स्वत्वाऽस्वत्वसाधारणमित्याहुः ।

**अदूरभवश्च** । तस्येति तन्नाम्नि देशे इति चानुवर्तते । तस्य अदूरभव इत्यर्थे षष्ठ्यन्तादणादयः स्युस्तन्नाम्नि देशे इत्यर्थः । नन्वत्र चकारः किमर्थ इत्यत आह—**चकारेणेति** । अदूरभव इति विध्यनन्तरं प्रागुक्तास्त्रयोऽर्थाः पुनरुपस्थाप्यन्ते इत्यर्थः । किमर्थमित्यत आह—**तेनेति** । अन्यथा संनिहितत्वाददूरभव इत्येव उत्तरविधिष्वनुवर्तेतेति भावः । **चातुरर्थिकत्वमिति** । चतुरर्थ्यां भव इत्यर्थे द्विगोरध्यात्मादित्वाट्ठञ् । तद्धितार्थद्विगौ तु 'द्विगोर्लुगनपत्ये' इति लुक्स्यात् । केचित्तु चतुर्णां सूत्राणामर्थाश्चतुरर्थाः, तत्र भवाश्चातुरर्थिका इत्याहुः । **ओरञ्** । 'तदस्मिन्नस्ती'त्यादिषु चतुर्ष्वर्थेषु प्रथमोच्चारितात्तत्तद्विभक्त्यन्तादञ्स्यात् । अणोऽपवादः । अञधिकारः 'सुवास्त्वादिभ्योऽण्' इति यावत् । **काक्षतवमिति** । कक्षतुरस्मिन्नस्तीत्यादि विग्रहः । **मतोश्च** । **सैध्रकावतमिति** ।

शे.] महदितिवत्कठमधीते इत्यस्याऽसाधुताऽनापत्तिरिति दिक् । **तदस्मिन्** । मत्वर्थापवादः । **इतिशब्दः**–प्रत्ययान्तं चेत्प्रसिद्धदेशनाम तदैव यथा स्यादित्यर्थम् । 'जनपदे लु'बिति तु न्यायसिद्धानुत्पत्त्यन्वाख्यानमेव । तत्र प्रत्ययान्तस्य देशनामत्वाऽभावेन प्रत्ययानुत्पत्तेः । **तेन निं** । 'इति देशे' इति–एष्वपि सम्बध्यते । 'तेने'ति कर्तरि तृतीया । अदूरं–निकटं, तत्र भवमिति समासः । **चत्वारोऽर्था इति** । व्याख्यानादिति भावः । **चातुरर्थिकत्वमिति** । चतुर्णां सूत्राणामर्थाः–चतुरर्थाः, तत्र भवः–चातुरर्थिकः ।

सैध्रकावतम् । 'बह्वजिति किम् ?। आहिमतम् । अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं माभूत् । बह्वचः कूपेषु ।४।२।७३। अणोऽपवादः । दीर्घवरत्रेण निर्वृत्तो दैर्घवरत्रः कूपः । उदक्च विपाशः ।४।२।७४। विपाशः उत्तरे कूले ये कूपास्तेष्वञ् । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तो दात्तः कूपः । उदक् किम् ?। दक्षिणतः कूपेष्वणेव । सङ्कलादिभ्यश्च ।४।२।७५। कूपेष्विति निवृत्तम् । सङ्कलेन निर्वृत्तं साङ्कलम् । पौष्कलम् । स्त्रीषु सौवीरसाल्वप्राक्षु ।४।२।७६। स्त्रीलिङ्गेषु एषु देशेषु वाच्येष्वञ् । सौवीरे,–दत्तामित्रेण निर्वृत्ता दात्तामित्री नगरी । साल्वे–वैधूमाग्नी । प्राचि,–माकन्दी । सुवास्त्वादिभ्योऽण् ।४।२।७७। अञोऽपवादः । सुवास्तोरदूरभवं सौवास्तवम् । वर्णु,–वार्णवम् । अण्ग्रहणं नद्यां मतुपो बाधनार्थम् । सौवास्तवी । रोणी ।४।२।७८। रोणीशब्दात्तदन्ताच्च अण् । कूपाऽञोऽपवादः । रौणः । आजकरौणः । कोपधाच्च ।४।२।७९। अण् । अञोऽपवादः । कार्णच्छिद्रकः कूपः । कार्कवाकवम् । त्रैशङ्कवम् । वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः ।४।२।८०। एभ्यः सप्तदशभ्यः सप्तदश क्रमात्स्युश्चतुरर्थ्याम् । अरीहणादिभ्यो वुञ् । अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण्

त.] ग्रहणेनेत्याशङ्कां निवारयति—अङ्गग्रहणमिति । मत्वन्तविशेषणमिति । सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादङ्गग्रहणाऽभावे मत्वन्तविशेषणं स्यादेव । ततश्चाहिमतमित्यादावतिप्रसङ्गः स्यादिति भावः । रोणी । रोणीशब्दः प्रत्ययमुत्पादयतीत्यर्थः । तथाच फलितमाह–रोणीशब्दादिति । पञ्चम्यां सौत्रो लुगित्यन्ये । तदन्तादिति । 'येन विधि'रिति सूत्रे भाष्यस्थविशेषवचनात्, विशेषणविशेष्ययोः कामचारमाश्रित्य 'समासप्रत्ययविधौ प्रतिषेधः' इत्यस्य प्रत्याख्यानाद्वा तदन्तविधिरिति भावः । वुञ्छण् । 'ठक्' इत्यन्तमेकं समस्तं पदम् । अरीहणादि त्वपरम् । तत्र प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय, द्वितीयेन काशादिकुमुदान्तद्वन्द्वेन सह पुनर्द्वन्द्वो बोध्यः । तेन कुमुदशब्दस्य द्विःपाठेऽपि नैकशेषः । आदिशब्दः प्रत्येकं संबध्यत इत्याह—अरीहणादिभ्य

बा.] सिध्रकावानस्मिन्नस्तीत्यादयश्चत्वारोऽर्थाः यथायोगं बोध्याः । आहिमतमिति । अहिमानस्मिन्नस्तीत्यादयोऽर्थाः । अहिशब्दस्य द्व्यच्कत्वादञेति भावः । बह्वचः कूपेषु । बह्वचः प्रातिपदिकादञ्चतुरर्थ्येषु । अणोऽपवादः दीर्घवरत्रेण निर्वृतः कूपः—दैर्घवरत्रः । उदक्च विपाशः । उत्तरे कूले इति । विपाशशब्दः शकारान्तो नदीविशेषवाची । सङ्कलादिभ्यश्च । निवृत्तमिति । व्याख्यानादिति भावः । अणोऽपवादः । पौष्कलमिति । पुष्कलेन निर्वृत्तमिति विग्रहः । स्त्रीषु सौवीर । सौवीरे इति । 'उदाहरणं वक्ष्यते' इति शेषः । दात्तामित्री नगरीति । 'टिड्ढे'ति ङीप् । साल्वे इति । 'उदाह्रियते' इति शेषः । वैधूमाग्नीति । विधूमाग्निना निर्वृत्तेत्यर्थः । अणि ङीप् । प्राचीति । प्राचि देशे उदाह्रियत इत्यर्थः । माकन्दीति । माकन्देन निर्वृत्तेत्यर्थः । सुवास्त्वादिभ्योऽण् । अञ इति । 'ओर'ञित्यस्यापवाद इत्यर्थः । सौवास्तवमिति । अणि ओर्गुणः । वार्णवमिति । वर्णोरदूरभवमित्यर्थः । ननु 'ओर'ञित्येव सिद्धे पुनर्विधिसामर्थ्यादेव तदननुवृत्तौ अणि सिद्धे पुनरण्ग्रहणं व्यर्थमित्यत आह—अण्ग्रहणमिति । रोणी । लुप्तपञ्चमीकमिदम् । तदन्तादिति । 'येन विधि'रिति सूत्रस्थभाष्यादिह प्रत्ययविधावपि तदन्तविधिरिति भावः । रौण इति । रोण्या निर्वृत्तः कूप इत्यर्थः । आजकरौण इति । अजकरोण्या निर्वृत्त इत्यर्थः । अणि 'यस्ये'ति ईकारलोपः । कोपधाच्च । कार्णच्छिद्रक इति । कर्णच्छिद्रकेण निर्वृत्तः कूप इत्यर्थः । कार्कवाकवमिति । कृकवाकुना निर्वृत्तः कूप इत्यर्थः । ओर्गुणः । आदिवृद्धौ रपरत्वम् । त्रैशङ्कवमिति । त्रिशङ्कुना निर्वृत्तः कूप इत्यर्थः । वुञ्छण् । वुञ्, छण्, क, ठच्, इल, स, इनि, र, ढञ्, ण्य, य, फक्, फिञ्, इञ्, ञ्य, कक्, ठक् एतेषां सप्तदशानां द्वन्द्वात्प्रथमाबहुवचनम् । अरीहण, कृशाश्व, ऋश्य, कुमुद, काश, तृण, प्रेक्ष, अश्मन्, सखि, सङ्काश, बल, पक्ष, कर्ण, सुतङ्गम, प्रगदिन्, वराह, कुमुद एतेषां सप्तदशानां द्वन्द्वः । एते आदयो येषामिति बहुव्रीहेः पञ्चमीबहुवचनम् । यथासङ्ख्यावगमाय कुमुदशब्दयोरेकशेषो न कृतः । प्रगदिन्शब्दे नलोपाऽभावस्तु इकारान्तत्वभ्रमनिरासाय । द्वन्द्वान्ते श्रूयमाणस्य आदिशब्दस्य अरीहणादिषु प्रत्येकमन्वयः । तथा च अरीहणादिभ्यो वुञ्, कृशाश्वादिभ्यश्छणित्येवं सप्तदश वाक्यानि सम्पन्नानि । तदाह—सप्तदशभ्य इति । अरीहणादिसप्तदशगणेभ्यो वुञादयः प्रत्ययाः क्रमात्स्युरित्यर्थः ।

शे.] ओरञ् । सुवास्त्वादिभ्यः प्रागञधिक्रियते । मत्वन्तेति । सामानाधिकरण्यस्य न्याय्यत्वात् । व्यावर्त्यन्तु स्ववानिति स्यात्, तथा चाऽऽहिमतमित्यादावतिप्रसङ्ग इति भावः । रोणी । लुप्तपञ्चम्यन्तमेतत् । 'येन विधि'रिति सूत्रस्थभाष्यात्प्रत्ययविधावपि तदन्त-

काशीयम् । **ऋश्यादिभ्यः कः** । ऋश्यकम् । **कुमुदादिभ्यष्ठच्** । कुमुदिकम् । **काशादिभ्य इलः** । काशिलः । **तृणादिभ्यः सः** । तृणसम् । **प्रेक्षादिभ्य इनिः** । प्रेक्षी । **अश्मादिभ्यो रः** । अश्मरः । **सख्यादिभ्यो ढञ्** । साखेयम् । **सङ्काशादिभ्यो ण्यः** । साङ्काश्यम् । **बलादिभ्यो यः** । बल्यम् । **पक्षादिभ्यः फक्** । पाक्षायणः । ( ग ) **पथः पन्थ च** । पान्थायनः । **कर्णादिभ्यः फिञ्** । कार्णायनिः । **सुतङ्गमादिभ्य इञ्** । सौतङ्गमिः । **प्रगद्यादिभ्यो ञ्यः** । प्रगदिन्,-प्रागद्यः । **वराहादिभ्यः कक्** । वाराहकः । **कुमुदादिभ्यष्ठक्** । कौमुदिकः । **जनपदे लुप्** ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात् । **लुपि युक्तवद्व्यक्तिवचने** ।१।२।५१। लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः । **तदशिष्यं संज्ञाप्रमाणत्वात्** ।१।२।५३। युक्तवद्वचनं न कर्तव्यं, संज्ञानां प्रमाणत्वात् । **लुब्योगाऽप्रख्यानात्** ।१।२।५४। लुबपि न कर्तव्योऽवयवार्थस्येहाऽप्रतीतेः ।

---

त.] **इति** । पक्षाद्यन्तर्गणसूत्रमाह-**पथ इति** । **जनपदे लुप्** । तन्नाम्नीत्येव । नेह—उदुम्बराः सन्त्यस्मिन्नौदुम्बरो जनपदः । न ह्यत्र लुबन्तं नामधेयम् । जनपदस्यैकत्वादेकवचने प्राप्ते बहुवचनादिफलकमतिदेशमाह—**लुपि युक्तवदिति** । व्यक्तिवचने किम् ? । शिरीषाणामदूरभवो ग्रामः शिरीषाः । 'वरणादिभ्यश्चे'ति लुप् । तस्य वनं शिरीषवनम् । इह वनस्पतित्वमतिदिश्येत । ततश्च 'विभाषौषधिवनस्पतिभ्यः' इति णत्वं स्यात् । नन्वत्र शिरीषाणामिति षष्ठीबहुवचनं कुतो नातिदिश्यत इति चेत् । अत्राहुः—वचनमिह सङ्ख्या, न त्वेकवचनद्विवचनादि । न चैवमपि सङ्ख्याबोधकत्वेन श्रुतैव षष्ठी परिगृह्यतामिति वाच्यं, षष्ठ्यर्थस्य तद्धितवृत्त्यन्तर्गतत्वादुक्तार्थे प्रथमाया एव युक्तत्वादिति । **पञ्चाला इत्यादि** । यद्यप्यत्राभिधेयलिङ्गवत्त्वेऽपीष्टसिद्धिस्तथापि कटुबदर्या अदूरभवो ग्रामः कटुबदरीत्यादिसिद्धये प्रकृतिलिङ्गातिदेश इति भावः । पूर्वाचार्यानुरोधेन कृतं सूत्रं संप्रति प्रत्याचष्टे—**तदशिष्यमिति** । पञ्चालाः, अङ्गाः, वङ्गाः, कलिङ्गाः— इत्यादयो जनपदस्य यथायथं बहुवचनाद्यन्ता एव संज्ञा, न त्वत्र यत्नेन लिङ्गसङ्ख्ये प्रतिपादनीये । 'आपः' 'दारा' इत्यादिषु यथा । न हि तत्र शास्त्रेण लिङ्गसङ्ख्ये प्रतिपाद्येते इति भावः । उपजीवकं प्रत्याख्यायोपजीव्यं प्रत्याचष्टे—**लुब्योगेति** । 'जनपदे लुप्', 'वरणादिभ्यश्चे'ति द्विसूत्री

---

बा.] **चतुरर्थ्यामिति** । 'तदस्मिन्नस्तीति देशे तन्नाम्नि' 'तेन निर्वृत्तं' 'तस्य निवासः' 'अदूरभवश्चे'ति चतुर्ष्वर्थेषु प्रथमोच्चारितात्तत्तद्विभक्त्यन्ताद्यथायोगं प्रत्यया इति फलितम् । एतेषु गणेषु चेतनवाचका अचेतनवाचकाश्च सन्ति । तत्र यथायोगं चतुरर्थ्या अन्वयः । **प्रेक्षीति** । प्रेक्षते इति प्रेक्षः, तेन निर्वृत्तमित्यर्थः । प्रेक्षया निर्वृत्तमिति वा । **पथः पन्थ चेति** । पक्षादिगणसूत्रमिदम् । **पान्थायन इति** । पथोऽदूरभव इत्यर्थः । **जनपदे लुप्** । **चातुरर्थिकस्येति** । प्रकरणलभ्यमिदम् । **लुपि युक्तवत्** । प्रकृतिभूतः शब्दः=युक्तः, व्यक्तिः=लिङ्गं, वचनं=सङ्ख्येति पूर्वाचार्यसङ्केतः । तदाह-**लुपि सति प्रकृतिवल्लिङ्गवचने स्त इति** । 'लु'बिति प्रत्ययाऽदर्शनमुच्यते । लुपः प्रवृत्तेः प्राक्प्रत्ययप्रकृतेर्यल्लिङ्गं वचनं ते एव लुपि सति भवतः, न तु प्रत्ययार्थविशेष्यमनुसृत्येत्यर्थः । **पञ्चालानामिति** । पञ्चालसंज्ञकानां राज्ञामित्यर्थः । **पञ्चाला इति** । 'तस्य निवास' इति विहितस्याऽणः 'जनपदे लु'बिति लुपि प्रकृतिवद्बहुवचनमिति भावः । **कुरव इत्यादि** । कुरूणाम्, अङ्गाना, वङ्गानां, कलिङ्गानां च निवासो जनपद इति विग्रहः । लिङ्गातिदेशे तु 'कटुबदर्या अदूरभवो जनपदः कटुबदरी'त्युदाहार्यम् । तदेतत्पूर्वाचार्यसूत्रं पाणिनिः प्रत्याचष्टे—**तदशिष्यं** । यथा 'दाराः' इत्यादौ शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य भानं, तथा लुपि सति शास्त्रीयप्रकृत्यर्थगतलिङ्गसङ्ख्याविशिष्टस्यैव स्वार्थस्य लोकव्यवहारादेव भानं संभवति, न तु तदंशे शास्त्रव्यापारापेक्षेति भावः । **संज्ञानामिति** । लोकव्यवहाराणामित्यर्थः । एवंच लुबपि न विधेय इत्याह—**लुब्योगाप्रख्यानात्** । 'अशिष्य'मित्यनुवृत्तं पुंलिङ्गेन विपरिणतं 'लु'बित्यनन्तरं संबध्यते । तदाह—**लुबपि न कर्तव्य इति** । योगः=अवयवार्थः, तस्य—**अप्रख्यानात्**=अप्रतीतेरित्यर्थः । तदाह—**अवयवेति** । नहि पञ्चालाङ्गवङ्गादिसंबन्धित्वेन पञ्चाला अङ्गा वङ्गा इत्यादितो बोधः, अतः प्रत्यय एव तत्र नास्तीति भावः । प्रत्यय-

---

शे.] विधिः । वुञ्छण् । यथासङ्ख्यानुरोधात्कुमुदशब्दयोरेकशेषो न कृतः । **पथ इति** । पक्षाद्यन्तर्गणसूत्रम् । विशेष्यानुरोधिलिङ्गवचने प्राप्ते आह—**लुपीति** । प्रत्ययार्थेन नित्यसम्बद्धार्थत्वात्-युक्तः=प्रकृतिः । **लुपि**=लुबन्तार्थे, प्रकृत्यर्थे इव, **व्यक्तिवचने**=लिङ्गसङ्ख्ये-भवत इत्यर्थः । लिङ्गातिदेशफलं-कटुबदर्या अदूरभवो ग्रामः कटुबदरीति । व्यक्तीत्यादि किम् ? । शिरीषाणामदूरभवो ग्रामः=शिरीषाः । 'वरणादिभ्यश्चे'ति लुप् । तस्य वनं शिरीषवनम् । अत्र वनस्पतित्वातिदेशे 'विभाषौषधी'ति णत्वापत्तिः । तदेतत्पाणिनिः प्रत्याचष्टे—**तदशिष्यमिति** । सञ्ज्ञानां=लोकव्यवहाराणामेव, तत्र प्रमाणत्वं न तु तदंशे शास्त्रव्यापार इत्यर्थः । यथा दारादिभिः शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य भानं, तथा लुबन्तैरपि शास्त्रीयप्रकृत्यर्थगतलिङ्गसङ्ख्याविशिष्टस्यैव स्वार्थस्य

**योगप्रमाणे च तदभावेऽदर्शनं स्यात्** ।१।२।५५। यदि हि योगस्यावयवार्थस्येदं बोधकं स्यात्तदा तदभावे न दृश्येत । **प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्** ।१।२।५६। 'प्रत्ययार्थः प्रधान'मित्येवंरूपं वचनमप्यशिष्यम् । कुतः ? । अर्थस्य लोकत एव सिद्धेः । **कालोपसर्जने च तुल्यम्** ।१।२।५७। 'अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः' 'विशेषणमुपसर्जन'मित्यादिपूर्वाचार्यैः परिभाषितं, तत्राप्यशिष्यत्वं समानम् । लोकप्रसिद्धेः । **विशेषणानां चाऽजातेः** ।१।२।५२। लुबर्थस्य विशेषणानामपि, तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा । पञ्चाला रमणीयाः । गोदौ रमणीयौ । अजातेः किम् ? । पञ्चाला जनपदः । गोदौ ग्रामः । ❀ **हरीतक्यादिषु व्यक्तिः** । हरीतक्याः फलानि हरीतक्यः । ❀ खल-

त.] 'लुप्' शब्देन विवक्षिता । 'अशिष्य'मिति सम्बध्यत एव । तदाह—**लुबपीति** । प्रकृतिप्रत्ययार्थयोः सम्बन्धो योग इत्याशयेन फलितमाह—**अवयवार्थस्येति** । अप्रख्यानाद्विति व्याचष्टे—**अप्रतीतेरिति** । पञ्चालादयः शब्दाः क्षत्रियेषु यथा रूढास्तथा जनपदेऽपीति 'तस्य निवासः' 'अदूरभवश्च' इति तद्धितो नैवोत्पद्यते किमनेन लुपो विधानेनेत्यर्थः । **न दृश्येतेति** । विनापि क्षत्रियसम्बन्धं पञ्चालादिशब्दो जनपदेषु प्रयुज्यते इति नार्थः सूत्रेणेत्यर्थः । प्रसङ्गात्पूर्वाचार्यपरिभाषितमन्यदपि प्रत्याचष्टे-**प्रधानेत्यादिना** । **विशेषणानां** । यद्यपि सूत्रपाठे 'लुपि युक्तव'दिति सूत्रादनन्तरमेतत्सूत्रं पठित्वा 'तदशिष्य'मित्यारब्धत्वात्तत्रैवेदं व्याख्यातुमुचितम् , तथापि जातेः प्रतिषेधमात्रपरमिदं, न तु युक्तवद्भावपरमित्याशयेन तत्र नोक्तमित्याहुः । **पञ्चाला रमणीया इति** । कथं तर्हि 'पञ्चाला जनपदः सुभिक्षः सम्पन्नपानीयः' इति प्रयोग इति चेत् , जनपदविशेषणत्वादित्यवेहि । पञ्चालविशेषणत्वाभ्युपगमे तु तद्वल्लिङ्गवचने स्त एव—पञ्चाला जनपदाः सुभिक्षाः सम्पन्नपानीया इति । **हरीतक्य इति** ।

बा.] स्वीकारे बाधकमाह-**योगप्रमाणे च** । पञ्चालाऽङ्गवङ्गादिशब्देषु योगस्य=अवयवार्थस्य प्रमापकत्वे सति तदभावे= पञ्चालाङ्गादिक्षत्रियसम्बन्धाऽभावे संप्रति शूद्रादिराजके जनपदे पञ्चालादिशब्दो न प्रयुज्येत, प्रयुज्यते च यतः, अतः पञ्चालादिशब्दा जनपदविशेषेषु केवलरूढा इति युक्तमित्यर्थः । तदाह-**यदि हि योगस्येति** ।

अथ प्रसङ्गादन्यदपि पूर्वाचार्यपरिभाषितं निराचष्टे-**प्रधानप्रत्ययार्थ** । **प्रत्ययार्थ इति** । 'प्रकृत्यर्थं प्रति प्रत्ययार्थः प्रधानं=विशेष्यम् , प्रकृत्यर्थस्तु तद्विशेषण'मित्येवं यत्पूर्वाचार्यवचनं तदपीत्यर्थः । **कालोपसर्जने च** । कालश्च उपसर्जनं चेति समाहारद्वन्द्वाद्विषयसप्तमी । 'अशिष्य'मित्यनुवृत्तं भावप्रधानमाश्रीयते । कालविषये उपसर्जनविषये च यत्पूर्वाचार्याणां विशेषवचनं, तत्राप्यशिष्यत्वं समानमित्यर्थः । तद्विशेषवचनं विशदयन्व्याचष्टे-**अतीताया** इत्यादिना । **विशेषणानां चाजातेः** । कस्य विशेषणानामित्याकाङ्क्षायां लुबित्यनुवृत्तं षष्ठ्या विपरिणतं संबध्यते । लुप्प्रत्ययार्थस्येति लभ्यते । तदाह—**लुबर्थस्येति** । **तद्वदिति** । प्रकृतिवदित्यर्थः । 'लुपि युक्तवद्व्यक्तिवचने' इत्यस्मादुत्तरं पठितमिदं सूत्रं तत्रैव व्याख्यातुमुचितम् । **पञ्चाला रमणीया इति** । पञ्चालानां निवासो जनपद इत्यर्थः । अत्र प्रत्ययार्थजनपदं प्रति विशेषणस्यापि रमणीयशब्दस्य प्रकृतिवद्बहुवचनम् । **गोदौ रमणीयाविति** । गोदयोर्निवासो जनपद इत्यर्थः । अत्र प्रत्ययार्थजनपदस्य तद्विशेषणस्यापि प्रकृतिवद्द्विवचनम् । **पञ्चाला जनपद इति** । जनपदशब्दस्य जातिवाचित्वान्न प्रकृतिवद्बहुवचनम् । **गोदौ ग्राम इति** । अत्र ग्रामशब्दस्य जातिवाचित्वान्न प्रकृतिवद्द्विवचनम् । **हरीतक्यादिषु व्यक्तिरिति** । वार्तिकमिदम् । 'लुपि लिङ्गं प्रकृतिवद्भवति, न तु वचन'मिति शेषः । **हरीतक्य इति** । 'हरीतक्यादिभ्यश्चे'ति विकारप्रत्ययस्य लुप् । अत्र प्रत्ययार्थेषु फलेषु प्रकृतिवत्स्त्रीलिङ्गमेव भवति, न त्वेकवचनमिति भावः । **खलतिकादिषु** । वार्तिकमिदम् । एषु लुपि प्रकृतिव-

शे.] मानमिति भावः । एवञ्च लुबपि व्यर्थ इत्याह-**लुब्योगेति** । योगः=अवयवार्थस्तस्य, अप्रख्यानात्=अप्रतीतेरित्यर्थः । न ह्यङ्गसम्बन्धिनिवासत्वेन 'अङ्गाः' इत्यादितो बोध इति भावः । प्रत्ययस्वीकारे बाधकमप्याह—**योगप्रमाणे चेति** । पञ्चालादौ योगस्य—अवयवशक्तेः—प्रमाजनकत्वे इत्यर्थः । **तदभावे**=क्षत्रियसम्बन्धाऽभावे, पञ्चालादीनां जनपदे प्रयोगो न स्यादित्यर्थः । प्रसङ्गादन्यदपि पूर्वाचार्यपरिभाषितं प्रत्याचष्टे—**प्रधानेति** । यत्पूर्वाचार्यैः 'प्रधानोपसर्जने प्रत्ययप्रकृत्यर्थौ' इत्येवं वचनं कृतं, तच्च न कार्यमिति सूत्रार्थः । **अतीताया रात्रेरिति** । अतीतरात्रेरन्त्ययामेनागामिरात्रेराद्ययामेन च सहितो दिवसोऽद्यतन इति लुङ्सूत्रे भाष्यकैयटयोः । **विशेषणानाञ्चा** । अत्र 'लुपी'त्यनुवर्तते, तदाह—**लुबर्थस्येति** । लुबन्तार्थस्येत्यर्थः । यद्यपि लुबन्तार्थस्य तत्त्वातिदेशात्तद्विशेषणानामपि सिद्धं, 'बदरी सूक्ष्म' इत्यादाविवाऽत्रापि जातिरूपविशेषणे तदभावः सिद्धस्तथाऽपि जातिभिन्नविशेषणानां युक्तवत्=विशेष्यवल्लिङ्गादीत्यर्थेन 'गुणवचनानामाश्रयतो लिङ्गवचनानी'त्येतत्सिद्धयर्थमिदमिति भाष्यकृतः । **आश्रयतः**=विशेष्यतः । इदमपि वाक्यसंस्कारपक्षे आश्रयविशेषस्य पूर्वं प्रक्रमेण विशेषणानामपि तल्लिङ्गसङ्ख्यत्वं न्याय्यमिति न्यायसिद्धार्थानुवादः । 'आश्रयत' इत्युक्तेर्वाक्यसंस्कारे प्रमाणं प्रभवे । अत एव विभक्त्यर्थसम्बन्धस्य बहुभीरर्थत्वे लिङ्गाद्यनुपपत्ति-

**तिकादिषु वचनम्** । खलतिकस्य पर्वतस्याऽदूरभवानि खलतिकं वनानि । ॐ **मनुष्यलुपि प्रतिषेधः** । मनुष्यलक्षणे लुबर्थे विशेषणानां न, लुबन्तस्य तु भवतीत्यर्थः । चञ्चा अभिरूपः । **वरणादिभ्यश्च** ।४।२।८२। अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं–वरणाः । **शर्कराया वा** ।४।२।८३। अस्माच्चातुरर्थिकस्य वा लुप्स्यात् । **ठक्छौ च** ।४।२।८४। शर्कराया एतौ स्तः । कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्ककौ । वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण् । तस्य लुब्विकल्पः । षड् रूपाणि । शर्करा । शार्करम् । शार्करिकम् । शर्करीयम् । शर्करिकम् । शार्करकम् । **नद्यां मतुप्** ।४।२।८५। चातुरर्थिकः । इक्षुमती । **मध्वादिभ्यश्च** ।४।२।८६। मतुप्स्याच्चातुरर्थिकः । अनद्यर्थ आरम्भः । मधुमान् । **कुमुदनडवेतसेभ्यो ड्मतुप्** ।४।२।८७।

---

**त.]** 'हरीतक्यादिभ्यश्चे'त्यणो लुप् । तत्र हि 'लुप् चे'त्यतो लुबनुवर्तते । **खलतिकमिति** । 'वरणादिभ्यश्चे'ति लुप् । **चञ्चेति** । 'सञ्ज्ञाया'मिति कनो 'लुम्मनुष्ये' इति लुप् । 'चञ्चा तृणमयः पुमान्' । **वरणादि** । चकारोऽनुक्तसमुच्चयार्थः, तेनास्याकृतिगणत्वं सिद्धम् । **वरणा इति** । एवं कटुवदरी, शिरीषाः, गोदौ, खलतिकमित्यादीन्युदाहर्त-

---

**बा.]** द्वचनमेव भवति, नतु लिङ्गमित्यर्थः । **खलतिकं वनानीति** । 'वरणादिभ्यश्चे'ति लुप् । अत्र खलतिकशब्दस्य लुप्तप्रत्ययान्तस्य प्रकृतिवत्पुंलिङ्गत्वं न भवति, किन्तु एकवचनमेवेति भावः । **मनुष्यलुपि प्रतिषेध इति** । वार्तिकमिदम् । **मनुष्यलक्षणे इति** । मनुष्यात्मके लुप्तप्रत्ययार्थे यानि विशेषणानि तेषां प्रकृतिवल्लिङ्गवचनप्रतिषेध इत्यर्थः । **चञ्चा अभिरूप इति** । चञ्चा तृणमयी प्रतिमा, तत्सदृशो मनुष्यश्चञ्चा । 'इवे प्रतिकृतौ' इत्यधिकारे 'संज्ञाया'मिति कनो 'लुम्मनुष्ये' इति लुप् । अत्र लुप्तप्रत्ययान्तस्य चञ्चाशब्दस्य मनुष्ये वाच्ये प्रकृतिलिङ्गत्वं, नतु तद्विशेषणस्याऽभिरूपशब्दस्येति भावः । **इति युक्तवद्भावप्रकरणम्** । अथ प्रकृतमारभते—**वरणादिभ्यश्च** । 'जनपदे लु'बित्युत्तरमिदं सूत्रम् । वरणादिभ्यः परस्य चातुरर्थिकप्रत्ययस्य लुप्स्यादित्यर्थः । पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह—**अजनपदार्थ इति** । **वरणानामिति** । वरणा नाम नदी काश्या उत्तरतः प्रसिद्धा । अवयवाभिप्रायं, पूजार्थं वा बहुवचनम् । वरणानामदूरभवं नगरं—वरणाः । अत्र लुप्तप्रत्ययान्तस्य वरणाशब्दस्य नगरे वाच्ये प्रकृतिवत्स्त्रीलिङ्गं बहुवचनं च । **शर्कराया वा** । 'लु'बित्यनुवर्तते । प्रत्यासत्त्या चातुरर्थिकस्येति लभ्यते । तदाह—**अस्मादिति** । **ठक्छौ च** । 'शर्कराया' इत्यनुवर्तते । तदाह—**शर्कराया एतौ स्त इति** । **ठच्ककाविति** । कुमुदादित्वाट्ठच्, वराहादित्वात्कगिति विवेकः । **वाग्रहणेति** । अन्यथा तत्र पाठसामर्थ्यादेव ठचः ककश्च लोपविकल्पसिद्धेस्तद्वैयर्थ्यादिति भावः । **शर्करेति** । अणो लुपि युक्तवद्भावे रूपम् । **शार्करमिति** । अणि रूपम् । **शार्करिकमिति** । ठकि रूपम् । **शर्करीयमिति** । छे रूपम् । **शर्करिकमिति** । ठचि रूपम् । **शार्करकमिति** । ककि रूपम् । शर्कराः सन्त्यस्मिन्नित्यर्थः, शर्कराभिर्निर्वृत्तमिति वा । **नद्यां मतुप्** । **चातुरर्थिक इति** । शेषपूरणम् । **इक्षुमतीति** । मतुपि उपावितौ । इक्षवः सन्त्यस्मिन् इत्यर्थः । **मध्वादिभ्यश्च** । शेषपूरणेन सूत्रं व्याचष्टे—**मतुप्स्याच्चातुरर्थिक इति** । **मधुमानिति** । मधूनां निवास इत्यर्थः । पूर्वेण सिद्धे किमर्थमिदमित्यत आह—**अनद्यर्थ इति** । **कुमुदनड** । कुमुद नड वेतस–एतेभ्यो ड्मतुप्स्यादित्यर्थः । डकार उपौ च इतः । अयं मत्वर्थ एवेति 'न पदान्ते'ति सूत्रभाष्यकैयटयोः

---

**शे.]** माशङ्क्याऽनेन न्यायेन परिहृतमनेकमन्यपदार्थे इत्यत्र भाष्ये । स्पष्टश्च तत्रैव कैयटे । 'संस्कृतं भक्षाः' इत्यादि तु पदसंस्कारपक्षे एव साधु । तत्पक्षेऽस्य वाचनिकस्याङ्गीकारे तु समासस्याकडारोक्तभाष्यरीत्या तद्वचनत्वाऽभावादेतद्वचनाऽप्रवृत्तौ भाष्याऽसङ्गतिः स्पष्टैव । अत एव भष्ये 'गुणवचनवल्लिङ्गवचनानी'त्युक्तम् । गुणवचनत्वे हि वतिनिर्देशाऽसङ्गतिरिति दिक् । 'लुपी'ति सूत्रस्यविषयविवेकमाह—**हरीतकीति** । व्यक्तिः । सैवेत्यर्थः । 'हरीतक्यादिभ्यश्चे'ति [अणो] लुप् । **वचनमिति** । तदेवेत्यर्थः । खलतिको–वरणादिः । विशेषणानां चेत्यस्य प्रतिषेधमाह—**मनुष्येति** । **चञ्चाऽभिरूप इति** । 'सञ्ज्ञाया'मिति कनो 'लुम्मनुष्ये' इति लुप् । न चैवं विशेष्यगतलिङ्गादिनिषेधे सामान्ये नपुंसकं युक्तमभिरूपपदे इति वाच्यं, लुबन्तार्थेऽतिदिष्टलिङ्गस्य तद्विशेषणे 'विशेषणाना'मिति प्राप्तस्य निषेधेऽपि वस्तुतो विशेष्यस्य पुंस्त्वात्तदक्षतेः । प्रत्याख्याने तु लोकत एवाऽत्र पुंस्त्वं बोध्यम् । **कुमुदादाविति** । ऋश्याद्यनन्तरे इत्यर्थः । **वाग्रहणेति** । अन्यथा तत्र पाठसामर्थ्यादेव ठच्ककोर्विकल्पेन लोपे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । **षडिति** । ऋश्यादावपि पठतां मते सप्तेति बोद्धव्यम् । **नद्यां मतुप्** । सामान्येन मतुपि सिद्धेऽर्थान्तरे विधानार्थम्, नद्या अपि देशत्वेन 'तदस्मि'न्निति प्राप्ताऽणो बाधनार्थं चेदम् । मध्वादिष्विक्षुशब्दपाठस्तु 'ओर'ञिति सूत्रस्थभाष्यविरुद्धः । तत्र हि 'ओरञ्विधेर्नद्यां मतुब्विप्रतिषेधेने'त्यस्येक्षुमतीत्युदाहरणं दत्तम् । **कुमुदन** । अयं मत्वर्थ एवेति नपदान्तसूत्रे भाष्यकैयटयोः । 'वेतस्वा'नित्यादौ रुस्तु न, अल्लोपस्य स्थानिवत्त्वात् । 'न पदान्ते'ति निषेधस्तु न, पदे परतश्चरमावयवे कर्त्तव्ये परपद[illegible] । न च पूर्वत्रासिद्धीये न स्थानिवदिति निषेधः, नपदान्तसूत्रे दत्तोत्तर-

कुमुद्वान् । नड्वान् । वेतस्वान् । आद्ययोः 'झयः' इति अन्त्ये 'मादुपधायाः' इति वक्ष्यमाणेन वः । ॐ महिषाच्चेति वक्तव्यम् । महिष्मान्नाम देशः । नडशादाड्ड्वलच् ।४।२।८८। नड्वलः । 'शादो जम्बाल-घासयोः' इत्यमरः । शाद्वलः । शिखाया वलच् ।४।२।८९। शिखावलम् । उत्करादिभ्यश्छः ।४।२।९०। उत्करीयः । नडादीनां कुक् च ।४।२।९१। नडकीयम् । (ग) कुञ्चा ह्रस्वत्वं च । कुञ्चकीयः ।

त.] व्यानि । वत्त्वस्याऽसिद्धत्वात्तस्मिन्कर्तव्ये टिलोपो न स्थानिवदित्याशयेनाह-झय इति । नड्वानित्यत्रापि परत्वात् 'झयः' इत्यनेनैव वकारो न तु 'मादुपधायाः' इत्यनेनेति भावः । न चाऽसिद्धत्वात् 'मादुपधायाः' इत्येव तत्र न्याय्यमिति वाच्यं, 'प्रकरणे प्रकरणमसिद्धं, न तु योगे योगः' इति 'उपसर्गादसमासेऽपी'त्यत्र भाष्ये निर्णीतत्वात् । ननु वेतस्वानित्यत्र वेतसशब्दस्य सुबन्तत्वेन पदत्वात्ड्मतुपो ङित्वसामर्थ्याट्टिलोपे एकदेशविकृतन्यायेन पदत्वात्सस्य रुत्वं स्यात् । न च स्थानिवत्त्वेन निर्वाहः । पूर्वत्रासिद्धे तन्निषेधादिति चेत्, मैवम् । अन्तरङ्गं रुत्वं प्रति बहिरङ्गस्य टिलोपस्याऽसिद्धत्वात् । न च षाष्ठी बहिरङ्गपरिभाषा त्रैपादिकं न जानातीति वाच्यं, कार्यकालपक्षाभ्युपगमात् । नन्वेवमपि 'स्वादिषु' इति सान्तस्य पदत्वे तदाश्रयरुत्वस्यान्तरङ्गत्वाऽभावाद्बहिरङ्गपरिभाषा न प्रवर्तते इति रुत्वं दुर्वारमेव । न च 'नद्यां मतु'बिति चतुरर्थ्यां मतुपा विधानाच्चातुरर्थिको ड्मतुप् मत्वर्थीय इति 'तसौ मत्वर्थे' इत्यनेन भत्वं शङ्क्यं, टिलोपस्य स्थानिवत्त्वात् । न च पदत्वेऽप्येवम् । तस्य रुत्वविधिना सह कार्यकालतया 'पूर्वत्रासिद्धे ने'ति निषेधादिति चेत्, अत्राहुः-पदसंज्ञायां यथोद्देशपक्षाश्रयणात् 'पूर्वत्रासिद्धे ने'ति निषेधाऽप्रवर्तनात्स्थानिवत्त्वप्रवृत्त्या सान्तस्याऽपदत्वादिति । एतेन घटी आमलकीत्यत्र 'स्वादिषु' इति पदत्वाज्जश्त्वं स्यात्, औत्सीत्यत्र तु संयोगान्तलोपः स्यादिति शङ्कापि परास्तेति दिक् । ननु प्रक्रियालाघवाय ड्वतुबेव विधीयताम्, अथवा 'कुमुदनडवेतसेभ्यो ड्म'दिति प्रकृतस्य मतुपो ङित्त्वमतिदिश्यतां, किमनेन ड्मतुब्विधानेन ? । सत्यम् । अन्यतो विधानार्थं तत् । तत्सिद्धार्थकथनपरं वार्तिकमाह—महिषाच्चेति । शिखायाः । निर्वृत्ताद्यर्थे देशे तन्नाम्न्यणो बाधनार्थं चेदम् । 'दन्तशिखात्संज्ञाया'मिति पञ्चमे वक्ष्यमाणं त्वदेशेऽपि 'शिखाबल' इति रूपसिद्ध्यर्थम् । नडादीनां । नड प्लक्ष बिल्व वेणु वेत्र वेतसादयो नडादयः । नडाद्यन्तर्गणसूत्रमाह—कुञ्चेति ।

बा.] स्थितम् । कुमुद्वानिति । कुमुदाः अस्मिन्सन्तीति विग्रहः । ड्मतुपि ङित्वाट्टिलोपः । नड्वानिति । नडा अस्मिन्सन्तीति विग्रहः । 'कुमुद्वान्कुमुदप्राये' इत्यमरः । वेतस्वानिति । वेतसा अस्मिन्सन्तीति विग्रहः । आद्ययोरिति । कुमुद्वच्छब्दे, नड्वच्छब्दे च 'झयः' इति मतुपो मस्य वकारः, वेतस्वच्छब्दे तु 'मादुपधायाः' इति मस्य वकार इत्यर्थः । वस्तुतस्तु नड्वच्छब्देऽपि 'झयः' इत्यस्याऽसिद्धत्वात् 'मादुपधायाः' इत्येव न्याय्यं, 'प्रकरणे प्रकरणमसिद्धं, नतु एकस्मिन्नेव प्रकरणे पूर्वयोगं प्रति परस्याऽसिद्धत्व'मित्यस्य 'उपसर्गादसमासे' इति सूत्रभाष्ये दूषितत्वात् । 'वेतस्वा'नित्यत्र रुत्वं तु न, अल्लोपस्य स्थानिवत्त्वात् । 'न पदान्ते'ति निषेधस्तु न, पदे अन्त इति विगृह्य पदे चरमावयवे कर्तव्ये परपदस्थाऽजादेशस्यैव तन्निषेधप्रवृत्तेर्भाष्येऽभ्युपगतत्वात् । 'पूर्वत्रासिद्धे न स्थानिव'दिति निषेधोऽपि न, पदे अन्त इति विगृह्य तत्र स्थानिवत्त्वनिषेधव्यावृत्तिसाधनपरभाष्यप्रामाण्येन पदचरमावयवकार्यविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणादिति शब्देन्दुशेखरे विस्तरः । महिषाच्चेत्यनन्तरं तु 'ड्मतु'बिति शेषः । महिष्मानिति । महिषा अस्मिन्सन्तीति विग्रहः । टित्वाट्टिलोपः । अल्लोपस्य स्थानिवत्त्वान्न जश्त्वम् । 'प्रत्यये भाषायां नित्य'मिति तु न, तस्य सवर्णे परतो विधेः । न हि षकारसवर्णोऽनुनासिकोऽस्ति । नडशादाड्ड्वलच् । नड्वल इति । डित्वाट्टिलोपः । शाद्वल इति । शादा अस्मिन्सन्तीति विग्रहः । शादो-दन्त्योपधः । डोपध इत्यन्ये । 'नडप्राये नड्वान्नड्वल इत्यपी'त्यमरः । 'शाद्वलः शादहरिते' इति च ।

शिखाया वलच् । निर्वृत्ताद्यर्थे सूत्रं, देशे तन्नाम्नि अणो बाधनार्थं च । 'दन्तशिखात्संज्ञाया'मिति पञ्चमे वक्ष्यमाणं तु अदेशेऽपि शिखावल इति रूपार्थम् । उत्करादिभ्यश्छः । 'चातुरर्थिक' इति शेषः । उत्करीय इति । देशविशेषोऽयम् । उत्करेण निर्वृत्तमिति वा, तस्य निवासः, तस्य अदूरभव इति वा । नडादीनां कुक्च । नडादिभ्यश्छः स्याच्चातुरर्थिकः, प्रकृतेः कुक्च । कुञ्चा ह्रस्वत्वं चेति । नडादिगणसूत्रम् । कुञ्चा-शब्दाच्छः, प्रकृतेः कुक्, आकारस्य ह्रस्वश्च । कुञ्चकीय इति । कुञ्चा अस्मिन्सन्तीत्यादिविग्रहः । तक्षन्नलोप-

शे.] त्वात् । अन्तरङ्गाऽसिद्धत्वन्तु नात्र, कार्यकालपक्षेऽपि त्रिपाद्यान्तदप्रवृत्तेः । झय इति । नडे प्राप्तियोग्यतामात्रेणैवमुक्तम् । वस्तुतो 'झयः' इत्यस्याऽसिद्धत्वान्नडेऽपि 'मादुपधायाः' इत्येवोचितम् । 'प्रकरणे प्रकरणमसिद्ध'मिति पक्षस्तु भाष्ये एव दूषित इति दिक् । ङित्वन्तु टिलोपार्थं, पित्त्वन्तु तन्निषयत्वेनाद्युदात्तकुमुदशब्दे उदात्तनिवृत्तिस्वराऽप्राप्त्या मतोरनुदात्तत्वार्थम् । महिष्मानिति । अत्र 'प्रत्यये भाषायां' मित्यनुनासिको न, षकारसवर्णानुनासिकाऽभावात् । अनुनासिकविधौ सवर्णग्रहण-

(ग) तक्षन्नलोपश्च । तक्षकीयः । बिल्वकादिभ्यश्छस्य लुक् ।६।४।१५३। नडाद्यन्तर्गता बिल्वकादयस्तेभ्य-श्छस्य लुक्तद्धिते परे । बिल्वा यस्यां सन्ति सा बिल्वकीया । तस्यां भवा बैल्वकाः । वेत्रकीयाः । वैत्रकाः । छस्य किम् ? । छमात्रस्य लुग्यथा स्यात्कुको निवृत्तिर्माभूत् । अन्यथा संनियोगशिष्टानामिति कुगपि निवर्तेत । लुग्ग्रहणं सर्वलोपार्थम् । लोपो हि यमात्रस्य स्यात् । इति चातुरर्थिकाः ।

## अथ शैषिकाः ।

शेषे ।४।२।९२। अपत्यादिचतुर्थ्यन्तादन्योऽर्थः शेषस्तत्राऽणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो यावकः । अश्वैरुह्यत आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । 'शेषे' इति लक्षणं चाधिकारश्च । 'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः । राष्ट्राऽवारपाराद्घखौ ।४।२।९३।

त.] एवं तक्षन्नित्यपि । उभयत्रापि षष्ठ्याः सौत्रो लुक् । 'ढे लोप' इत्यतो लोप इत्यनुवर्तमाने लुग्ग्रहणं व्यर्थमित्या-शङ्क्याह—सर्वलोपार्थमिति । यमात्रस्येति । न च 'आदेः परस्य' इतीकारस्य भाव्यमिति वाच्यं, 'सूर्यतिष्य'-त्यतो यकारसंबद्धस्यैव लोपस्याऽनुवर्तनादिति भावः । इति चातुरर्थिकाः ।

शेषे । लक्षणं चेति । ग्रहणक्षुण्णादिष्वर्थेषूत्तरसूत्राननुपातेषु अणो विधायकमित्यर्थः । ननु लक्षणं तावद्व्यर्थम्, 'तस्येद'मित्यनेन चाक्षुषादीनां, 'संस्कृतं भक्षाः' इत्यनेन दार्षदादीनां सिद्धेः । तथा अधि-कारोऽपि व्यर्थः । तथाहि—अधिकारस्यापत्यादिचतुरर्थीपर्यन्तेष्वर्थेषु घादीनां ट्युट्युलन्तानां निवृत्तिः, जाताद्यर्थसाकल्यं वा प्रयोजनम् । तत्र निवृत्तिस्तावन्न प्रयोजनम् । आर्द्रकशालादीनामुत्करादिपाठेन 'इतः प्राचीनेष्वर्थेषु घादयो न प्रवर्तन्ते' इति ज्ञापनात् । अन्यथा 'वृद्धाच्छः' इत्येव सिद्धे तत्पाठस्य वैयर्थ्यप्रसङ्गात् । नाप्यर्थसाकल्यं प्रयोजनं, जाताधिकारात्प्राक्पाठसामर्थ्यादेव तल्लाभात् । यदि संनिहिते जातार्थ एव घादयः स्युः, तदुत्तरेषु भवाद्यर्थेषु 'प्राग्दीव्यतः' इति विशिष्टावधिवरिच्छन्नेष्वर्थेषु विधीयमाना अणादय एव स्युस्तदा जाताधिकारानन्तरमेव 'प्रावृषष्ठ'बित्यादिभिः सह 'राष्ट्रावारपारा'दित्यादयोऽपि पठयेरन् । तस्माद्व्यर्थमिदं सूत्रमिति चेत् । अत्रोच्यते—'शैषिकात्सरूपः शैषिको ने'ति वक्ष्यमाणार्थस्य विषयलाभाय शेषाधिकार आवश्यकः । शैषिक-प्रयुक्तकार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकार एव 'शैषिकान्मतुबर्थीया'दित्यादिश्लोकं ज्ञापयति । एष च श्लोकः सन्विधौ मतुब्विधौ च भाष्ये पठितः । इह तु सन्नन्ते पठित इति तत्रैव व्याख्यास्यते । अपत्यादिष्वर्थेषु

बा.] श्च । इदमपि गणसूत्रम् । तक्षन्शब्दाच्छः कुक्, नकारस्य लोपश्च । बिल्वकादिभ्यः । षाष्ठमिदं सूत्रम् । बिल्वकादीति–नडाद्यन्तर्गतबिल्वादीनां कृतकुगागमानां निर्देशः । ककारादकार उच्चारणार्थः । तद्धिते इति । 'आपत्यस्य च तद्धिते' इत्यतस्तदनुवृत्तेरिति भावः । बिल्वकीयेति । 'नडादीनां कुक्चे'ति छः । प्रकृतेः कुक्च । बैल्वका इति । बिल्वकीयाशब्दाद्भवार्थे अण् । तस्मिन्परे छस्य लुगिति भावः । वैत्रकीया इति । वेत्राणि अस्यां सन्तीत्यर्थे नडादित्वाच्छः, प्रकृतेः कुक्चेति भावः । वैत्रका इति । वेत्रकीयायां भवा इत्यर्थः । वेत्रकीया-शब्दादणि छस्य लुगिति भावः । छस्य किमिति । एभ्यः परस्य छस्यैव संभव इति प्रश्नः । संनियोगेति । 'संनियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्ति'रिति न्यायेनेत्यर्थः । 'ढे लोपोऽकद्र्वाः' इत्यतो लोप इत्यनुवृत्त्यैव सिद्धे लुग्ग्रहणं किमर्थमित्यत आह–लुग्ग्रहणं सर्वलोपार्थमिति । प्रत्ययाऽदर्शनस्यैव लुक्शब्दार्थत्वात्कृत्स्नस्य ईयस्य लोपो लभ्यते इति भावः । लोपविधौ तु नैवं लभ्यते इत्याह–लोपो हीति । लोपविधौ 'सूर्यतिष्ये'त्यतो 'य उपधायाः' इत्यनुवृत्तौ बिल्वादिभ्यः परस्य छादेशभूतस्य ईयस्य उपधाभूतो यो यकारस्तस्य लोप इत्यर्थलाभा-द्यकारमात्रस्य लोपः स्यात् । 'य उपधायाः' इत्यननुवृत्तौ तु 'आदेः परस्ये'ति ईकारस्यैव लोपः स्यादिति भावः ।

इति बालमनोरमायां चातुरर्थिकाः ।

अथ शैषिकप्रकरणं निरूप्यते । शेषे । अणादय इति । 'प्राग्दीव्यतोऽ'णित्यादिसाधारणाः प्रत्यया

शे.] पक्षेण सवर्णोऽनुनासिक इत्यर्थात् । शादो–दोपधः । नडाद्यन्तरिति । नडाद्यन्तर्गत[ण]बिल्वादयः कृतकुगागमा उच्चारणा-र्थाऽकारसहिताः सूत्रे निर्दिष्टाः, व्याख्यानात्, कान्तगणपाठाऽभावाच्चेति भावः । छस्य किमिति । तेभ्यः छस्यैव सम्भव इति प्रश्नः । संनियोगेति । तेषामन्यतरापाये उभयोरप्यपाय इति न्यायेनेत्यर्थः । अस्य चेदमेव ज्ञापकम् । अत एव पञ्चेन्द्राण्यो देवताऽस्य 'पञ्चेन्द्र' इत्यादौ ङीपो लुक्यानुको निवृत्तिः । लुग्ग्रहणमिति । 'ढेलोप' इत्यतो 'लोप' इत्यनुवर्तमाने इत्यर्थः । लोपग्रहणानुवृत्तावुपधाया इति वर्त्तते, न वा ? । तत्राद्ये आह–यमात्रस्येति । अन्त्ये तु 'आदेः परस्ये'तीकारलोपापत्तिरिति बोद्धव्यम् । इति चातुरर्थिकाः ।

॥ श्रीः ॥ अन्योऽर्थ इति । विशेष्यतया भासमान इत्यर्थः । एवञ्चेदंत्वेन भासमानमपत्याद्यपि न शेषः । ध्वनितं चेदं

आभ्यां क्रमाद्घखौ स्तः शेषे । राष्ट्रियः । अवारपारीणः । ॐ अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् । अवारीणः । पारीणः । पारावारीणः । इह प्रकृतिविशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जाताद्योऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते । **ग्रामाद्यखञौ** ।४।२।९४। ग्राम्यः । ग्रामीणः । **कत्र्यादिभ्यो ढकञ्** ।४।२।९५। कुत्सितास्त्रयः कत्रयः । तत्र जातादिः–कात्त्रेयकः । नागरेयकः । 'ग्रामा'-दित्यनुवृत्तेः–ग्रामेयकः । **कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु** ।४।२।९६। कौलेयकः श्वा । कौलोऽन्यः । कौक्षेयकोऽसिः । कौक्षोऽन्यः । ग्रैवेयकोऽलङ्कारः । ग्रैवोऽन्यः । **नद्यादिभ्यो ढक्** ।४।२।९७। नादेयम् । माहेयम् । वाराणसेयम् । **दक्षिणापश्चात्पुरसस्त्यक्** ।४।२।९८। 'दक्षिणे'त्याजन्तमव्ययम् । दाक्षिणात्यः ।

त.] घादीनां निवृत्त्यर्थमप्यधिकार आवश्यकः । न चोक्तज्ञापकेनैव तत्सिद्धिरिति वाच्यं, ज्ञापकस्य विशेषापेक्षत्वे दोषतादवस्थ्यात् । 'आर्द्रकादिभ्यो यदि छः स्यात्तर्हि चतुरर्थ्यामेवे'ति नियमस्यापि संभवाच्च एवं स्थिते चाक्षुषमित्यादिषु गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमपि तस्य सुवचमिति दिक् । **विग्रहीतादपीत्यादि** । वचनमेवेदं, सूत्रे यथासङ्ख्यप्रवृत्त्यर्थं विशिष्टोच्चारणात् । **कुत्सितास्त्रय इति** । इह बहुव्रीहिरपि सुवचः । इहैव निपातनात्कोः कद्भावः । 'कद्भावे त्रावुपसङ्ख्यान'मिति तु प्रत्याख्येयम् । **'कुल्याया यलोपश्चे'ति** गणसूत्रम् । कुल्यायां जातः–कौलेयकः । कत्रि, उम्भि, कुण्डिन, माहिष्मतीत्यादि । **दक्षिणापश्चात्** । अव्यय-

बा.] इत्यर्थः । **श्वतुर्भिरिति** । अश्वादिभिरिति शेषः । **चतुर्दश्यामिति** । कृष्णचतुर्दश्यां रात्रौ रक्षांसि दृश्यन्ते इत्यागमः । **लक्षणमिति** । प्रदर्शितेषु ग्रहणाद्यर्थेषु उत्तरसूत्रैरनुपात्तेषु अणादिविधायकमित्यर्थः । अधिकारत्वे तु उत्तरसूत्रेष्वेवानुवृत्तिलाभादिदं न सिध्येदिति भावः । **अधिकारश्चेति** । उत्तरसूत्रेष्वनुवृत्त्यर्थः, स्वरितत्वादिति भावः । अधिकारस्योत्तरावधिमाह–**तस्य विकार इत्यतः प्रागिति** । नच उत्तरसूत्रेषु निर्दिष्टानामर्थविशेषाणामपत्यादिचतुरर्थ्यन्तादन्यत्वस्य सिद्धत्वाच्छेषाधिकारो व्यर्थ इति वाच्यं, 'तस्येद'मित्यादावपत्यादिचतुरर्थ्यन्तार्थानां ग्रहणाऽभावाय तदावश्यकत्वात् । न च प्रदर्शितेषु ग्रहणाद्यर्थेषु 'तस्येद'मित्येव अणादिसिद्धेः शेष इत्यस्य विधित्वं नाश्रयणीयमिति वाच्यं, 'शैषिकान्मतुबर्थीया'दित्यादौ प्रदर्शितग्रहणाद्यर्थकानामपि ग्रहणलाभाय तदावश्यकत्वात् । इदंत्वेन भासमानमपत्याद्यपि न शेषः, 'इदंविशेषा ह्येते अपत्यं समूहो विकारो निवासः' इति भाष्यात् । प्रपञ्चितं चैतत् 'तस्यापत्य'मित्यत्र 'तस्येदमित्यपत्येऽपी'त्यादिश्लोकवार्तिकव्याख्यावसरे ।

**राष्ट्रावारपाराद्घखौ** । **आभ्यामिति** । राष्ट्रशब्दादवारपारशब्दाच्चेत्यर्थः । **राष्ट्रिय इति** । राष्ट्रे जातः भव इत्यादिरर्थो यथायथं बोध्यः । घस्य इयः । **अवारपारीण इति** । खस्य ईनादेशः, णत्वम् ।

**अवारपाराद्विगृहीतादपीति** । अवारशब्दात्पारशब्दाच्च पृथग्भूतादपि खो वक्तव्य इत्यर्थः । **विपरीताच्चेति** । पाराऽवारशब्दादपीत्यर्थः । ननु 'राष्ट्रावारपारे'त्यारभ्य 'विभाषा पूर्वाह्णाऽपराह्णाभ्या'मित्यन्तैः सूत्रै राष्ट्रादिशब्देभ्यः प्रकृतिभ्यः शेषेऽर्थे प्रत्यया विहिताः । तस्यापत्यमित्यादिवदर्थविशेषास्तु न निर्दिश्यन्ते, यत्किञ्चिद्विभक्त्यन्तेभ्यो राष्ट्रादिप्रकृतिविशेषेभ्यो घादयः ट्युट्युलन्ताः प्रत्ययाः स्युः, 'समर्थानां प्रथमाद्वे'त्यस्यानुपस्थित्या प्रथमोच्चारितविभक्तिविशेषानुपस्थितेः । किंच 'तत्र जातः' इत्यादिसूत्रेषूत्तरेषु अर्थविशेषा एव निर्दिष्टाः । तत्र प्रथमोच्चारितसप्तम्यन्तादितत्तद्विभक्त्यन्तेभ्यः सर्वेभ्यः साधारणा अणादय एव स्युः । तत्राह–**इह प्रकृतीत्यादिना** । 'राष्ट्रावारे'त्यादिसूत्राणां प्रकृतिविशेषेभ्यः केवलप्रत्ययविधीनामर्थविशेषविभक्तिविशेषाकाङ्क्षायां, 'तत्र जातः' इत्यादिसूत्राणां च केवलमर्थविशेषनिर्देशपराणां 'समर्थाना'मिति सूत्रलब्धतत्तद्विभक्तिकप्रकृतिविशेषाणां विधेयप्रत्ययविशेषाकाङ्क्षायां परस्परमेकवाक्यत्वे सति तत्र जात इत्याद्यर्थेषु प्रथमोच्चारिततत्तद्विभक्त्यन्तेभ्यो राष्ट्रादिशब्देभ्यो घादयः ट्युट्युलन्ताः प्रत्ययाः स्युरिति लभ्यत इति भावः । राष्ट्राद्यन्याभ्यस्तु प्रकृतिभ्यो जाताद्यर्थेषु अणादयः साधारणा भवन्त्येव । **ग्रामाद्यखञौ** । **ग्राम्य इति** । यप्रत्यये 'यस्येति चे'ति लोपः । **ग्रामीण इति** । खञ ईनादेशः, णत्वम् । **कत्र्यादिभ्यो** । **कत्रय इति** । 'कुगतिप्रादयः' इति कुशब्दस्य समासः । 'त्रौ चे'ति कोः कदादेशः । **कात्रेयक इति** । ढकञ्, ढकारस्य एयादेशः । 'लोपो व्यो'रिति यलोपः । **अनुवृत्तेरिति** । स्वरितत्वादिति भावः । तथाच ग्रामशब्दाड्ढकञपि लभ्यते इत्यर्थः । **कुलकुक्षि** । कुलाच्छुनि, कुक्षेः असौ, ग्रीवाया अलंकारे ढकञित्यर्थः । **कौलेयकः श्वेति** । कुले जातादिरिति विग्रहः । **कौक्षेयकोऽसिरिति** । कुक्षौ=कोशे भवः खड्ग

शे.] 'तस्येदमित्यपत्येऽपी'ति वार्त्तिकेन । **लक्षणं चेत्यादि** । 'शैषिकान्मतुबर्थीया'दित्यस्य विषयलाभार्थमावश्यकमिदम् । 'तस्येद'मित्यादावपत्याद्यर्थस्याऽग्रहणायाऽधिकारोऽप्यावश्यकः । **आजन्तमिति** । अव्ययसाहचर्यात्, न तु टाबन्तो दक्षिणाशब्द इति भावः । अत एव 'दाक्षिणात्य' इत्यत्र न पुंवत्त्वम् । [illegible] 'सर्वनाम्न' इतीष्या

पाश्चात्यः । पौरस्त्यः । **कापिश्याः ष्फक्** ।४।२।९९। कापिश्यां जातादि कापिशायनं मधु । कापिशायनी द्राक्षा । **रङ्कोरमनुष्येऽण्च** ।४।२।१००। चात्ष्फक् । राङ्कवो गौः । राङ्कवायणः । अमनुष्य इति किम् ? । राङ्कवको मनुष्यः । **द्युप्रागपागुदक्प्रतीचो यत्** ।४।२।१०१। दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् । **कन्थायाष्ठक्** ।४।२।१०२। कान्थिकः । **वर्णौ वुक्** ।४।२।१०३। वेर्णुर्नदस्तस्य समीपदेशो वर्णुः, तद्विषयार्थवाचिकन्थाशब्दाद्वुक्स्यात् । 'यथा हि जातं हिमवत्सु कान्थकम्' । **अव्ययात्त्यप्** ।४।२।१०४। ॐ **अमेहक्कतसित्रेभ्य एव** । 'अमाऽन्तिकसहार्थयोः' । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः ।

---

त.] **मिति** । साहचर्यादिति भावः । एवं च 'दाक्षिणात्य' इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावशङ्कैव नास्तीति बोध्यम् । **पाश्चात्य इति** । कथं तर्हि 'पश्चात्तनैः कश्चन नुद्यमानः' इति । न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वाच्यम् । 'अग्रादिपश्चा'दिति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात् । सत्यम् । पश्चात्तन्वन्ति पश्चात्तना इति कथंचित्समाधेयम् । **कापिश्याः ष्फक्** । कापिशीशब्दात्ष्फक्स्यात् । षित्त्वान्ङीष् । तदाह—**कापिशायनीति** । **रङ्कोरमनुष्ये** । रङ्कवो जनपदः, ततः 'प्रागदीव्यतोऽ'णि त्यण्प्राप्तः । तद्बाधकत्वेन 'अवृद्धादपी'ति वुञ्प्राप्तः, तमपि बाधित्वा 'ओर्देशे' इति ठञ्प्राप्तः, तस्य तु 'कोपधादण्' बाधकः, ततोऽपि परत्वात्कच्छाद्यणि प्राप्तेऽनेन ष्फगणौ विधीयेते । कोपधत्वादेवाऽणि सिद्धे कच्छादिषु रङ्कुशब्दस्य पाठो 'मनुष्यतत्स्थयोर्वुञ्' विधानार्थं इति कैयटः । अतएवाह—**राङ्कवको मनुष्य इति** । क्वचित्तु 'राङ्कव' इति पठ्यते, स तु लेखकप्रमादः । स्यादेतत्—अमनुष्यग्रहणमिह व्यर्थम् , अपवादेन वुञा तत्र ष्फगणोर्बाधेनाऽमनुष्य एव पर्यवसानात् । अण्ग्रहणमपि व्यर्थमेव, कच्छादित्वादेव तत्सिद्धेः । अत्राह काशिकाकृत्—नायं प्रसज्यप्रतिषेधः किं तु पर्युदासः, तेन मनुष्यभिन्ने प्राणिन्येव ष्फग्विधीयत इति, राङ्कवः कम्बल इत्यत्र न ष्फक् । विशेषविहितेन ष्फका अणो बाधा मा भूदित्यण्ग्रहणं च क्रियत इति । भाष्ये तु अप्राणिन्यपि ष्फकमङ्गीकृत्येदं द्वयमपि प्रत्याख्यातम् । **द्युप्रागपा** । **दिव्यमिति** । सूत्रे 'दिव उ'दित्युत्वेन निर्देश इति भावः । अपाची दक्षिणा दिक् । द्वितीयो वर्णः पकारो, न तु दन्त्योष्ठ्यः, 'यदिन्द्र प्रागपागुद'गित्यादौ तथा दर्शनादिति स्थितं मनोरमायाम् । केचित्तु 'प्राच्यवाचीप्रतीच्यस्ताः' इत्यमरकोशे अवाचीति दन्त्योष्ठ्यपाठं क्वाचित्कं पुरस्कृत्य सूत्रेऽपि 'अवा'गिति पठित्वा 'अवाच्य'मित्युदाहरन्ति । 'प्रागपाक्' इति वेदे तु व्यत्ययेन वकारस्य पकार इति तेषामाशयः । प्रागादयोऽस्तात्यन्ता अव्ययाः, तद्भिन्नास्त्वनव्ययाः, उभयेषामपीह ग्रहणमविशेषात् । कथं तर्हि 'संस्काराः प्राक्तना इव' इति ? । अत्राहुः—कालवाचिनः प्राक्शब्दाद्यतं बाधित्वा परत्वाट्ट्युट्युलौ बोध्याविति । **वर्णौ वुक्** । **वर्णुरिति** । 'अदूरभवश्चे'त्यर्थे सुवास्त्वादित्वादणि 'जनपदे लु'बिति लुप् । **अमात्य इति** । अमाशब्दः समीपवाची. स्वरादिः ।

---

बा.] इत्यर्थः । **ग्रैवेयक इति** । ग्रीवासु भव इति विग्रहः । **नद्यादिभ्यो ढक्** । **माहेयमिति** । मही=भूमिः, तस्यां जातादीत्यर्थः । **वाराणसेयमिति** । वाराणस्यां जातादीत्यर्थः । **दक्षिणापश्चात्** । **आजन्तमव्ययमिति** । अव्ययसाहचर्यादाजन्तं गृह्यत इति भावः । दक्षिणा, पश्चात्, पुरस् , एभ्योऽव्ययेभ्यो जातादयर्थेषु त्यक्प्रत्ययः स्यादित्यर्थः । **कापिश्याष्ष्फक्** । कापिश्याः ष्फक् इति छेदः । कापिशीशब्दात् ष्फक् स्यादित्यर्थः । कापिशी नाम देशविशेषः । **कापिशायनी द्राक्षेति** । षित्त्वान्ङीष् । **रङ्कोरमनुष्येऽण् च** । रङ्कोरण् स्याच्चात्ष्फक् । **राङ्कवो गौरिति** । रङ्कुर्नाम देशविशेषः । तत्र जातादिरित्यर्थः । **राङ्कवको मनुष्य इति** । अत्र मनुष्यत्वान्न ष्फगणौ । किन्तु 'मनुष्यतत्स्थयो'रिति वक्ष्यमाणो वुञ् । अकादेशः । **राङ्कवो मनुष्य** इति त्वपपाठः । **द्युप्रागपाक्** । दिव् , प्राञ्च् , अपाञ्च् , उदञ्च् , प्रत्यञ्च् एभ्यो यत्स्यादित्यर्थः । सूत्रे 'दिव उत्' इत्युत्त्वेन निर्देशः । **दिव्यमिति** । दिवि जातादीत्यर्थः । **प्राच्यमिति** । प्राचि प्रदेशे जातादीत्यर्थः । तद्धितोत्पत्तौ सुब्लुकि प्राञ्च् य इति स्थिते 'अनिदिता'मिति नलोपे 'अचः' इत्यकारलोपे 'चौ' इति दीर्घे प्राच्यमिति रूपम् । **अपाच्यमिति** । इदमपि पूर्ववत । **उदीच्यमिति** । अत्र 'उद ईदि'ति ईत्त्वं विशेषः । **प्रतीच्यमिति** । प्राच्यवद्रूपम् । **कन्थायाष्ठक्** । तिर्यक्स्यूतबहुवस्त्रखण्डसमूहः कन्था । देशविशेष इत्यन्ये । **वर्णौ वुक्** । **वर्णुसमीपेति** । वर्णुर्नाम

---

शे.] तदप्रत्याख्यानेन चेष्टेरनित्यत्वादनव्ययग्रहणेऽपि न दोषः । अत एवाऽनव्ययात्प्रत्ययान्तरेण रूपान्तरं नेत्याहुः ।

**राङ्कवको मनुष्य इति** । 'मनुष्यतत्स्थयोः' इति वुञ् । रङ्कुः—कच्छादिः । 'राङ्कवो मनुष्य' इति क्वाचित्कोऽपपाठः, 'रङ्कोरमनुष्यग्रहणानर्थक्यं, मनुष्यतत्स्थयोर्वुञ्विधानात्परेण च तेन मनुष्ये ष्फगणोर्बाधसिद्धेः । तत्स्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् । अण्ग्रहनर्थक्यञ्च, 'कच्छादिभ्योऽण्विधाना'दिति वार्त्तिकात् । अतस्तत्पाठसमर्थने नाभिनिवेष्टव्यमित्यलम् । **वर्णुरिति** । अदूरभवश्चेत्यर्थे

तत्रत्यः। परिगणनं किम् ?। उपरिष्टाद्भव औपरिष्टः । * अव्ययानां भमात्रे टिलोपः । अनित्योऽयं, बहिषष्टिलोपविधानात्। तेनेह न-आरातीयः। शाश्वतीयः । * त्यब्नेर्ध्रुव इति वक्तव्यम् । नित्यः। * निसो गते। ह्रस्वात्तादौ तद्धिते ।८।३।१०१। ह्रस्वादिणः परस्य सस्य षः स्यात्तादौ तद्धिते। निष्टो वर्णाश्रमेभ्यो निष्टयश्चाण्डालादिः । * अरण्याण्णः । आरण्याः सुमनसः। * दूरादेत्यः। दूरेत्यः। * उत्तरादाहञ् । औत्तराहः । ऐषमोह्यःश्वसोऽन्यतरस्याम् ।४।२।१०५। एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ। ऐषमस्त्यम्। ऐषमस्तनम्। ह्यस्त्यम्। ह्यस्तनम्। श्वस्त्यम्। श्वस्तनम्। पक्षे शौवस्तिकं वक्ष्यते । तीररूप्योत्तरपदादञ्ञौ ।४।२।१०६। यथासङ्ख्येन । काकतीरम्। पाल्वलतीरम्। शैवरूप्यम्। तीररूप्यान्तादिति नोक्तम्। बहुपूर्वान्माभूत्। बाहुरूप्यम् । दिक्पूर्वपदादसंज्ञायां ञः

त.]अमा=समीपे भव इत्यर्थः। ह्रस्वात्तादौ। पदान्तत्वात्षत्वस्याऽप्राप्तावयमारम्भः। आदिग्रहणं तु व्यर्थं, 'यस्मिन्विधि'रित्येव सिद्धेः । ह्रस्वात्किम् ?। गीस्तराम्। धूस्तराम्। तादौ किम् ? । सर्पिःसाद्भवति । तद्धिते किम् ?। सर्पिस्तरति । 'तिङन्तस्य प्रतिषेधो वाच्यः'। भिन्द्युस्तराम्। दूरेत्य इति। दूरादागत इत्यादिरर्थः। औत्तराह इति। इहाद्युदात्तत्वं स्त्रियां टाप्च बोध्यः। यदा तु 'उत्तराच्चे'त्याहिप्रत्यये ततोऽण्क्रियते, 'अमेहे'ति परिगणनेन त्यपोऽभावात्, तदा औत्तराहशब्दोऽन्तोदात्तः, स्त्रियां ङीप्च विशेषः । वक्ष्यमाणाविति। 'सायंचिर'मित्यादिने'ति शेषः। वक्ष्यत इति। 'श्वसस्तुट् चे'त्यत्र। दिक्पूर्व। 'असंज्ञायामि'त्यत्र सौत्रत्वात्पञ्चम्यर्थे

बा.]सिन्धुनदः, तस्याऽदूरभव इत्यर्थे सुवास्त्वादित्वादणो 'जनपदे लुबि'ति लुप्। तथा च वर्णुसमीपदेशो वर्णुः, तस्मिन् या कन्था तद्वाचकाट्ठक्प्रत्यय इति यावत्। अव्ययात्त्यप्। अमेहेति। अमा, इह, क, तसि, त्र एभ्य एव अव्ययेभ्यस्त्यप्प्रत्यय इति परिगणनवार्तिकमिदम्। अमात्य इति। समीपे सह वा जात इत्यर्थः । औपरिष्ट इति। 'उपरिष्टा'दित्यव्ययस्य परिगणितेष्वनन्तर्भावाच्च त्यप्। अणि 'औपरिष्ट' इति रूपमित्यर्थः। कथमिह टिलोप इत्यत आह-अव्ययानामिति। वार्तिकमिदम्। भमात्रे इति। कार्त्स्न्ये मात्रशब्दः। कृत्स्नस्य भस्याव्ययस्य टेर्लोपः। 'नस्तद्धिते' इत्याद्युपाधिनिर्पेक्षित इत्यर्थः। नन्वेवं सति आरादित्यव्ययाच्छस्य ईयादेशे टिलोपे 'आरीय' इति स्यादित्यत आह—अनित्योऽयमिति। त्यब्नेरिति । नि इत्यव्ययात्त्यप् स्याद्ध्रुवे गम्ये इत्यर्थः । 'नियतं भवं नित्य'मिति भाष्यम्। निसो गत इति। निस् इत्यव्ययात्त्यब्वक्तव्यो गते गम्ये इत्यर्थः। निस्-त्य इति स्थिते सकारस्य पदान्तत्वादादेशप्रत्ययावयवत्वाऽभावाच्च षत्वे अप्राप्ते-। ह्रस्वात्तादौ । 'इण्को'रित्यत इण्ग्रहणमनुवर्तते। 'सहेः साडः स' इत्यतः स इति षष्ठ्यन्तमनुवर्तते। 'अपदान्तस्य मूर्धन्यः' इति च। तदाह-ह्रस्वादिण इति। निष्ट्य इति। त्यपि सस्य षत्वे तकारस्य ष्टुत्वेन टः। अरण्याण्ण्य इति। 'वक्तव्य' इति शेषः। आरण्याः सुमनस इति। 'स्त्रियः सुमनसः पुष्प'मित्यमरः। अरण्ये भवा इत्यर्थे णप्रत्यये टापि 'आरण्या' इति रूपम्। अणि तु ङीप् स्यादिति भावः। दूरादेत्य इति। 'वक्तव्य' इति शेषः। दूरेत्य इति । दूरादागतः, दूरे भवं इति वाऽर्थः। दूरादित्यव्ययादेत्यप्रत्ययेऽव्ययानां भमात्रे इति टिलोपः। उत्तरादाहञिति। 'वाच्य' इति शेषः। औत्तराह इति। उत्तरस्मादागतः, उत्तरस्मिन् भव इति वाऽर्थः। औत्तर इति त्वसाधु। ऐषमोह्यः। एभ्य इति। ऐषमस्, ह्यस्, श्वस् एतेभ्य इत्यर्थः। वक्ष्यमाणाविति । 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् चे'त्यनेनेति शेषः। ऐषमस्त्यमिति। ऐषमस् इत्यव्ययं वर्तमाने संवत्सरे वर्तते। तत्र भवमित्यर्थः। 'परुत्परार्यैषमोऽब्दे पूर्वे पूर्वतरे यती'त्यमरः। ऐषमस्तनमिति। ट्युट्युलौ वा । टावितौ, य्वोरनादेशः, तस्य तुट्, ट इत्, उकार उच्चारणार्थः, टित्वादाद्यवयवः। ह्यस्त्यं, ह्यस्तनमिति। ह्यसित्यव्ययं गतेऽह्नि । तत्र भवमित्यर्थः। श्वस्त्यं-श्वस्तनमिति। श्वस् इत्यव्ययमनागतेऽह्नि। तत्र भवमित्यर्थः। 'ह्यो गतेऽनागतेऽह्नि श्वः' इत्यमरः। पक्षे इति। 'श्वसस्तुट् चे'ति ठञि तस्य इकादेशे तुडागमे 'द्वारादीनां चे'त्यैजागमे 'शौवस्तिक'मित्यपि वक्ष्यमाणं रूपमित्यर्थः। तीररूप। तीरोत्तरपदाद्रूपोत्तरपदाच्च क्रमादञ्ञ्यश्चेत्यर्थः। काकतीरमिति । काकतीरे भवमित्यर्थः। पाल्वलतीरमिति। पल्वलतीरे भवमित्यर्थः। शैवरूप्यमिति । शिवरूपे भवमित्यर्थः। 'रूप्योत्तरपदे'ति क्वचित्पाठः। तथा सति ञ्यप्रत्यये 'यस्येति चे'त्यकारलोपे द्वियकारं रूपम्। बाहुरूपमिति । 'विभाषा सुपो बहुच् पुरस्तात्तु' इति बहुपूर्वस्य रूपान्तत्वेऽपि तदुत्तरपदकत्वाऽभावाच्च ञ्य इति भावः। दिक्पूर्वपदात्।

शे.]सुवास्त्वादित्वादणो जनपदे लुप्। वर्णुः=सिन्धुनदः। पदान्तत्वात्षत्वाऽप्राप्तेराह—ह्रस्वात्तादौ। अरण्याण्णः। अणि हि ङीप्स्यादिति भावः। वक्ष्यमाणाविति। 'सायंचिर'मित्यादिना। काकतीरमिति। काकतीरः-प्रकृतिः । 'काकतीर'मिति

।४।२।१०७। अणोऽपवादः । पौर्वशालः । असंज्ञायां किम् ? । संज्ञाभूतायाः प्रकृतेर्माभूत् । पूर्वेषुकामशम्यां भवः—पूर्वैषुकामशमः । 'प्राचां ग्रामनगराणा'मित्युत्तरपदवृद्धिः । **मद्रेभ्योऽञ्** ।४।२।१०८। दिक्पूर्वपदादित्येव । 'दिशोऽमद्राणाम्' इति मद्रपर्युदासादादिवृद्धिः । पौर्वमद्रः । आपरमद्रः । **उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्** ।४।२।१०९। अञ्स्यात् । शैवपुरम् । **प्रस्थोत्तरपदपलद्यादिकोपधादण्** ।४।२।११०। माहिकिप्रस्थः । पालदः । नैलीनकः । **कण्वादिभ्यो गोत्रे** ।४।२।१११। एभ्यो गोत्रप्रत्ययान्तेभ्योऽण्स्यात् । कण्वो गर्गादिः । कण्व्यस्य छात्राः काण्वाः । **इञश्च** ।४।२।११२। गोत्रे य इञ्तदन्तादण्स्यात् । दाक्षाः । गोत्रे किम् ? । सौतङ्गमेरिदं सौतङ्गमीयम् । गोत्रमिह शास्त्रीयं नतु लौकिकम् । तेनेह न—पाणिनीयम् । **न द्व्यचः प्राच्यभरतेषु** ।४।२।११३। 'इञश्चे'त्यणोऽपवादः । प्रौष्ठीयाः । काशीयाः । भरतानां प्राच्यत्वेऽपि

---

त.] सप्तमीत्याशयेनाह—**संज्ञाभूताया इति** । **मद्रेभ्योऽञ्** । बहुवचननिर्देशाज्जनपदवाची गृह्यते, न तु भद्रपर्यायः । **दिशोऽमद्राणमिति** । 'दिग्वाचकादुत्तरपदस्य जनपदवाचिनो मद्रभिन्नस्याऽचामादेर्वृद्धिः स्याञ्णिति णिति किति च तद्धिते' इति सूत्रार्थः । **पौर्वमद्र इति** । मद्रैकदेशे मद्रशब्दस्य वृत्तौ दिक्शब्देन समानाधिकरण्यात् 'तद्धितार्थ' इति समासः । **उदीच्य** । दिग्ग्रहणं निवृत्तम् । उदीच्यग्रामात्किम् ? । माथुरः । बह्वचः किम् ? । ध्वाजः । पिप्पल्यादिङीषन्तो ध्वजीशब्दः । अन्तोदात्तात्किम् ? । शार्कराधानम्, शर्कराधानशब्दे धाशब्दाकार उदात्तः । कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यावस्थानात् । **शैवपुरमिति** । 'प्रस्थपुरवहान्ताच्चे'ति वुञ्न भवति, 'वृद्धा'दिति तत्रानुवृत्तेः । **प्रस्थोत्तर** । उदीच्यग्रामलक्षणस्याऽञोऽपवादः । **पालद इति** । 'पलदी'ति ईकारान्त इत्येके । नान्त इत्यन्ये । नलोपे सति यणादेशात्संहिता तुल्यैव । वाहीकशब्दः कोपधोऽपि पलद्यादिषु पठ्यते परं छं बाधितुम् । अन्यथा अणं बाधित्वा परत्वाच्छ एव स्यात्, कोपधप्रयुक्तोऽण् अवृद्धे सावकाश इति । यकृल्लोमनि भवो याकृल्लोमः । 'अन्' इति प्रकृतिभावस्तु न, गणेऽस्मिन्नलोपनिपातनादिति हरदत्तादयः । **सौतङ्गमेरिति** । सुतङ्गमादिभ्यश्चातुरर्थिक इञ् । **शास्त्रीयमिति** । ननु 'अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते' इति चेत् । अत्राहुः—'पूर्वसूत्रे गोत्रग्रहणेन पौत्रप्रभृति गोत्रं गृह्यते, कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्यः' इति गोत्रप्रत्ययानुवादेन तत्राऽण्विधानात् । कण्वादयश्च गर्गाद्यन्तर्गताः । 'गर्गादिभ्यो य'ञित्यत्र तु 'गोत्रे कुञ्जादिभ्यः' इत्यतो गोत्र इत्यनुवर्तते, न तु शास्त्रीयगोत्रमेव गृह्यते, अपत्याधिकारस्थत्वात्, तदेव हि 'इञश्चे'ति सूत्रेऽनुवर्तते

---

बा°]पञ्चम्यर्थे सप्तमी । असंज्ञाभूताद्दिक्पूर्वपदकाञ्ञः स्यादित्यर्थः । **पौर्वशाल इति** । पूर्वस्यां शालायां भव इत्यर्थे 'तद्धितार्थ' इति समासाञ्ञः । **मद्रेभ्योऽञ्** । **इत्येवेति** । दिक्पूर्वान्मद्रशब्दादञित्यर्थः । **पर्युदासादिति** । उत्तरपदवृद्धेः पर्युदासे सति आदिवृद्धिरित्यर्थः । बहुवचनाज्जनपदवाचिन एव ग्रहणम् । **पौर्वमद्र इति** । पूर्वेषु मद्रेषु भव इत्यर्थः । **उदीच्यग्रामाच्च** । **शैवपुरमिति** । उत्तरदेशे शिवपुरं नाम ग्रामविशेषः । तत्र भवमित्यर्थः । समासस्येत्यन्तोदात्तः शिवपुरशब्दः । बह्वचः किम् । ङीषन्तो ध्वजी नाम उत्तरदेशे ग्रामविशेषः । तत्र भवो ध्वाजः । अन्तोदात्तात्किम् ? । शार्करीधानम् । कृदुत्तरपदप्रकृतिस्वरेण लित्स्वरस्यैवावस्थानान्मध्योदात्तोऽयम् । **प्रस्थोत्तरपद** । प्रस्थोत्तरपदात्पलद्यादिभ्यः कोपधाच्च अणित्यर्थः । पलदिः—आदिर्येषामिति विग्रहः । उदीच्यग्रामलक्षणस्य अञोऽपवादः । **माहिकिप्रस्थ इति** । महिकिप्रस्थनाम्नि ग्रामे भव इत्यर्थः । **पालद इति** । पलदिनाम्नि ग्रामे भव इत्यर्थः । **नैलीनक इति** । निलीनकनाम्नि ग्रामे भव इत्यर्थः । **कण्वादिभ्यो गोत्रे** । **काण्व्यस्येति** । कण्वस्य गोत्रापत्यं काण्व्यः । गर्गादियञ् । काण्व्यस्य छात्रा इत्यर्थे अनेन छापवादोऽण् । 'यस्येति चे'त्यकारलोपः । 'आपत्यस्य चे'ति यकारलोपः । 'काण्वा' इति रूपम् । **इञश्च** । **दाक्षा इति** । दक्षस्य गोत्रापत्यं दाक्षिः । 'अत इञ' । दाक्षेः छात्रा इति विग्रहः । **सौतङ्गमेरिदमिति** । सुतङ्गमस्य निवासः सौतङ्गमिः । 'सुतङ्गमादिभ्य इञ्' । सौतङ्गमेरिदमित्यर्थे वृद्धाच्छः, न त्वण्, इञो गोत्रार्थकत्वाऽभावात् । **गोत्रमिह शास्त्रीयमिति** । अपत्याधिकारादन्यत्र यद्यपि लौकिकमेव गोत्रमिति सिद्धान्तस्तथापि इह सूत्रद्वयेऽपि शास्त्रीयमेव गोत्रं गृह्यते, 'यूनि लु'गिति सूत्रभाष्ये तथोक्तत्वादिति भावः । **पाणिनीयमिति** । पणिनो गोत्रापत्यं पाणिनः । तस्या-

---

शे.]पाठान्तरम् । **सञ्ज्ञाभूताया इति** । सूत्रे पञ्चम्यर्थे सप्तमीति भावः । **उदीच्यग्रा** । उदीच्यग्रामात्किम् ? । माथुरः । मध्यदेशग्रामोऽयम् । बह्वचः किम् ? । ध्वजी ङीषन्तः, तस्य ध्वाजः । अन्तोदात्तात्किम् ? । शार्करीधानम् । अयं कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । प्रत्युदाहरणेष्वण् प्रत्ययः । स्वरे विशेषः । **प्रस्थोत्तरप** । उदीच्यग्रामलक्षणाऽञोऽपवादः । तस्यात्राऽनुवृत्तेः । **शास्त्रीयमिति** । सूत्रद्वयेऽपीत्यर्थः । 'यूनि लु'गिति सूत्रभाष्ये तथोक्तत्वात् । कण्वादीनां गर्गाद्यन्तर्गणत्वेन तत्र शास्त्रीयगोत्रे

पृथगुपादानमन्यत्र प्राच्यग्रहणे भरतानामग्रहणस्य लिङ्गम् । **वृद्धिर्यस्याचामादिस्तद्वृद्धम्** ।१।१।७३। यस्य समुदायस्याऽचां मध्ये आदिर्वृद्धिस्तद्वृद्धसंज्ञं स्यात् । **त्यदादीनि च** ।१।१।७४। वृद्धसंज्ञानि स्युः । **वृद्धाच्छः** ।४।२।११४। शालीयः । मालीयः । तदीयः । **एङ् प्राचां देशे** ।१।१।७५। एङ् यस्याऽचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने । एणीपचनीयः । गोनर्दीयः । भोजकटीयः । पक्षे अणि ऐणीपचनः । गौनर्दः । भौजकटः । एङ् किम् ? । आहिच्छत्रः । कान्यकुब्जः । * **वा नामधेयस्य वृद्धसंज्ञा वक्तव्या** । देवदत्तीयः । दैवदत्तः । **भवतष्ठक्छसौ** ।४।२।११५। वृद्धाद्भवत एतौ स्तः । भावत्कः । जश्त्वं—भवदीयः । वृद्धादित्यनुवृत्तेः शत्रन्तादणेव । भावतः । **काश्यादिभ्यष्ठञ्ञिठौ** ।४।२।११६। इकार उच्चारणार्थः । काशिकी । काशिका । बैदिका । बैदिकी । ( ग ) **आपदादिपूर्वपदात्कालान्तात्** । आपदादिराकृतिगणः । आपत्कालिकी । आपत्कालिका । **वाहीकग्रामेभ्यश्च** ।४।२।११७। वाहीकग्रामवाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ

---

त.] इति । न द्व्यचः । **अपवाद इति** । प्रतिषेध इत्यर्थः । **भरतानामग्रहणस्येति** । तेन 'इञः प्राचा'मिति भरतेभ्यो युवप्रत्ययस्य लुङ् भवति, औद्दालकिः पिता, औद्दालकायनः पुत्र इति 'आर्हादगोपुच्छे'ति सूत्रे कैयटः । **भवतः** । छादिरयं प्रत्ययो न तु शादिः, पदसंज्ञार्थं सित्करणादित्याशयेनाह—**जश्त्वमिति** । **काश्यादिभ्यः** । **इकार उच्चारणार्थ इति** । उभयत्र ञकार एवानुबन्धः, तस्य व्यत्यासपाठस्तु स्त्रीप्रत्यये विशेषार्थ इति भावः ।

---

बा.] पत्यं युवा-पाणिनिः । तस्येदं पाणिनीयम् । वृद्धाच्छः । अण् तु न, पाणिनिशब्दस्य युवप्रत्ययान्तत्वादिति भावः । **न द्व्यचः** । प्राच्येषु [परेषु ?] भरतेषु च गोत्रेषु विद्यमानादिञन्तात् द्व्यचोऽण् न भवतीत्यर्थः । **इञश्चेत्यणोऽपवादः** । प्रतिषेध इत्यर्थः । **प्राक्षीया इति** । प्राक्षस्य गोत्रापत्यं प्राक्षिः, तस्य छात्रा इत्यर्थः । **काशीया इति** । काशस्य गोत्रापत्यं काशिः, तस्य छात्रा इत्यर्थः । अणो निषेधे वृद्धाच्छः । **लिङ्गमिति** । तेन औद्दालकिः पिता, औद्दालकायनः पुत्र इत्यत्र 'इञः प्राचा'मिति भरतेभ्यो लुङ् न भवति । **वृद्धिर्यस्य** । अचामिति बहुत्वमनेकत्वोपलक्षणम् । तेन शालाशब्दस्यापि वृद्धत्वं सिध्यति । व्यपदेशिवत्त्वेन ज्ञाशब्दस्यापि वृद्धत्वम् । **त्यदादीनि च** । शेषपूरणेन सूत्रं व्याचष्टे—**वृद्धसंज्ञानि स्युरिति** । आदेरचो वृद्धिसंज्ञकत्वाऽभावादारम्भः । **वृद्धाच्छः** । वृद्धसंज्ञकाच्छः स्याज्जातादिष्वर्थेषु । अणोऽपवादः । **शालीय इति** । शालायां जात इत्यादिरर्थः । एवं तदीयः । **एङ् प्राचां** । देशविशेषनाम्नश्चेदेङादिरेव वृद्धसंज्ञक इति नियमार्थमिदम् । **वा नामधेयस्येति** । रूढशब्दत्वमिह नामत्वं, न त्वाधुनिकसंकेतितत्वमेव । तेन घटीयमित्यादि सिद्धम् । **भवतष्ठक्छसौ** । **भावत्क इति** । 'इसुसुक्तान्तात्कः' । ननु भवच्छब्दाच्छस्य ईयादेशे सति भत्वेन पदत्वस्य बाधात्कथं जश्त्वमित्यत आह—**जश्त्वमिति** । 'सिति चे'ति पदत्वेन भत्वस्य बाधादिति भावः । ननु 'भावत' इति कथमण्प्रत्ययः, 'त्यदादीनि चे'ति भवच्छब्दस्य वृद्धतया छस्यैव युक्तत्वादित्यत आह—**वृद्धादित्यनुवृत्तेः शत्रन्तादणेवेति** । त्यदादिषु 'भातेर्डवतु'रिति डवत्वन्तस्यैव पाठादिति भावः । **काश्यादिभ्यष्ठञ्ञिठौ** । ठञ्—ञिठ इति प्रत्ययौ स्तः । ञिठप्रत्यये ञि इति समुदायस्य 'आदिर्ञिटुडवः' इति इत्संज्ञायां प्रयोजनाऽभावाञ्ञकार एव इत्, तस्य ञित्स्वरः प्रयोजनम् । ठञ एव विधौ तु ङीप् स्यात्, टाब् न स्यात् । नन्वेवं सति इठप्रत्यये ठस्य इकादेशो न स्यात्, अङ्गात्परत्वाऽभावादित्यत आह—**उच्चारणार्थ इति** । **काशिकीति** । काश्यां जातादिरित्यर्थः । ठञन्तान्ङीप् । **काशिकेति** । ञिठप्रत्यये इकादेशे टाप् । **बैदिकी बैदिकेति** । बेदिर्देशविशेषः । **आपदादिपूर्वपदादिति** । गणसूत्रम् । ठञ्ञिठावित्येव । **आपदादिरिति** । आपत् आदिर्यस्येति विग्रहः । **आपत्कालिकी आपत्कालिकेति** । ठञि ङीप्, ञिठे

---

शे.] एव प्रत्ययसत्त्वात् । अर्थाधिकारादत्रापि तदेवेति भावः । **अपवाद इति** । प्रतिषेध इत्यर्थः । **लिङ्गमिति** । तेनौद्दालकिः पिता, औद्दालकायनः पुत्र इत्यत्र 'इञः प्राचा'मिति भरतेभ्यो लुक् न । **वृद्धिर्यं** । अचामिति जातौ सौत्रं बहुवचनम् । तेन शालीयसिद्धिः । व्यपदेशिवद्भावात् 'ज्ञीय'सिद्धिः । आदिरिति किम् ? । सभासंनयने भवः साभासंनयनः । वृद्धिरिति किम् ? । तदभावे यस्याचामादिर्हलित्यर्थः सामर्थ्यात्स्यात् । एवञ्च रक्षितस्यायं राक्षित इत्यादावेव स्यान्न त्वौपगवीयादौ । 'यस्ये'ति सञ्ज्ञिनो व्यपदेशाय । अचामिति किम् ? । तदभावे यस्याऽऽदिर्वृद्धिरित्यर्थे औपगवीयादावेव स्यान्न गार्गीयादौ । **एङ् प्रा** । प्राचामिति विकल्पार्थम् । व्यवस्थितविभाषा चेयम् । तेन शैषिकेष्वेवेदम् । अप्राग्देशवाचिक्रोडदेवदत्तयोश्च शैषिकेऽपि न । **देवदत्तीय इति** । अत्र देवदत्तो मनुष्यनाम । काश्यादिगणे च प्राग्देशवाचिदेवदत्तस्यैव ग्रहणमिति नाऽतष्ठञ्ञिठौ । अत एवात्र 'देवदत्तीया' इति भाष्ये उदाहृतम् । **वा नामधेयस्य** । अत्र नामशब्देनाधुनिकसङ्केतितमेव । अत एव 'एङ् प्राचां देशे' इति सार्थकम् । 'एङ् प्राचा'मिति तु देशवृत्तेश्चेदेङादेरेवेति नियमार्थं घटीयाद्यनेनैव साध्वित्याहुः । घटीयादि तु गहादित्वात्साध्विति केचित् । अन्ये तु रूढ्या बोधकशब्दत्वमेव नामत्वं, 'पशुनामभ्यः' 'कारनाम्नी'तिवत् । **उच्चारणार्थ इति** । विधेयघटकस्येत्त्वेऽपि तदतिरिक्त-

स्तः । छस्यापवादः । कास्तीरं नाम वाहीकग्रामः । कास्तीरिकी । कास्तीरिका । **विभाषोशीनरेषु** ।४।२।११८। एषु ये ग्रामास्तद्वाचिभ्यो वृद्धेभ्यष्ठञ्ञिठौ वा स्तः । सौदर्शनिकी । सौदर्शनिका । सौदर्शनीया । **ओर्देशे ठञ्** ।४।२।११९। उवर्णान्ताद्देशवाचिनष्ठञ् । निषादकर्षूः [:] । नैषादकर्षुकः । 'केऽणः' इति ह्रस्वः । देशे किम् ? । पटोश्छात्राः पाटवाः । लिङ्गं व्यावर्तयितुं ठञ्ग्रहणम् । वृद्धाच्छं परत्वादयं बाधते । दाक्षिकर्षुकः । **वृद्धात्प्राचाम्** ।४।२।१२०। प्राग्देशवाचिनो वृद्धादेवेति नियमार्थं सूत्रम् । आढकजम्बुकः । शाकजम्बुकः । नेह—मल्लवास्तु—माल्लवास्तवः । **धन्वयोपधाद्वुञ्** ।४।२।१२१। धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात् । ऐरावतं धन्व ऐरावतकः । साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ । साङ्काश्यकः । काम्पिल्यकः । **प्रस्थपुरवहान्ताच्च** ।४।२।१२२। एतदन्ताद्वृद्धाद्देशवाचिनो वुञ् स्यात् । छस्यापवादः । मालाप्रस्थकः । नान्दीपुरकः । पैलुवहकः । पुरान्तग्रहणमप्राग्रथम् । प्राग्देशे तूत्तरेण सिद्धम् । **रोपधेतोः प्राचाम्** ।४।२।१२३। रोपधादीकारान्ताच्च प्राग्देशवाचिनो वृद्धाद्वुञ्स्यात् । पाटलिपुत्रकः । ईतः—काकन्दकः । **जनपदतदवध्योश्च** ।४।२।१२४। जनपदवाचिनस्तदवधिवाचिनश्च वृद्धाद्वुञ्स्यात् । आदर्शकः । त्रैगर्तकः । **अवृद्धादपि बहुवचनविषयात्** ।४।२।१२५। अवृद्धाद्वृद्धाच्च जनपदतदवधिवाचिनो

---

**त.]** **आपदादीति** । गणसूत्रमिदम् । **वृद्धादेवेति** । 'वृद्धाच्चेत्प्राचामेवे'ति विपरीतनियमस्तु न भवति, अप्राग्देशवाचिनो वृद्धस्य उवर्णान्तस्याऽभावात् । **धन्वयोपधा** । धन्वेति न स्वरूपपर्याययोर्ग्रहणं, वृद्धत्वाऽसंभवादित्याशयेनाह—**धन्वविशेषेति** । **ऐरावतं धन्वेति** । यद्यपि 'समानौ मरुधन्वानौ' इत्यमरेण पुंस्त्वमुक्तं, तथापि 'आष्टकं नाम धन्वे'ति भाष्ये ह्रस्वपाठान्नपुंसकोऽपि धन्वशब्दोऽस्त्येवेति बोध्यम् । **उत्तरेणेति** । रोपधत्वादिति भावः । **जनपद** । स चासौ अवधिश्चेति कर्मधारयाज्जनपदरूप एवावधिर्लभ्यते । न च जनपदत्वादेव सिद्धे अवधिग्रहणं व्यर्थं, 'वुञेव यथा स्यान्नान्य'दित्येतदर्थं तस्यावश्यकत्वात् । अत एव जनपदावधिवाचिनस्त्रिगर्तशब्दात् 'गर्तोत्तरपदा'दिति च्छो न भवति, किंतु 'अवृद्धादपि बहुवचनविषया'दित्युत्तरसूत्रेण वुञेव भवतीत्याशयेनोदाहरति—**त्रैगर्तक इति** । 'जनपदतदवध्यो'रिति सूत्रे जनपदावधिवाचिन उदाहरणं तु 'श्यामायनकः' इत्यादि बोध्यम् ।

---

**बा.]** टाप् । **वाहीकग्रामेभ्यश्च** । वाहीकाख्याः केचिद्ग्रामाः, तद्विशेषवाचिभ्य इत्यर्थः । तदाह—**वाहीकग्रामवाचिभ्य इति** । **विभाषोशीनरेषु** । पूर्वसूत्रे समस्तनिर्देशेऽपि ग्रामेभ्य इत्यनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञानात् । तदाह—**एषु ये ग्रामा इति** । उशीनरेषु ये ग्रामास्तद्विशेषवाचिभ्यः इत्यर्थः । सौदर्शनो नाम उशीनरदेशे कश्चिद्ग्रामः । **सौदर्शनीयेति** । ठञ्ञिठयोरभावे वृद्धाच्छः । **ओर्देशे ठञ्** । **निषादकर्षूरिति** । 'कश्चिद्ग्राम' इति शेषः । **नैषादकर्षुक इति** । उगन्तात्परत्वात्कादेशः । **वृद्धात्प्राचाम्** । 'ओर्देशे ठ'ञित्यनुवर्तते । प्राचामिति देशविशेषणं, नतु विकल्पार्थं, व्याख्यानात् । पूर्वेण सिद्धे नियमार्थमिदम् । तदाह—**प्राग्देशेत्यादिना** । **आढकजम्बुक इति** । आढकजम्बूर्नाम कश्चिद्ग्रामः । तत्र भव इत्यर्थः । उगन्तात्परत्वाट्ठस्य कः । 'केऽणः' इति ह्रस्वः । एवं शाकजम्बुकः । **मल्लवास्त्विति** । 'कश्चित् प्राच्यो ग्राम' इति शेषः । **धन्वयोपधाद्वुञ्** । **ऐरावतं धन्वेति** । ऐरावताख्यं धन्वेत्यर्थः । धन्व-मरुप्रदेशः । 'समानौ मरुधन्वानौ' इत्यमरः । 'आष्टकं नाम धन्वे'ति भाष्यान्नपुंसकत्वमपि । **ऐरावतक इति** । ऐरावताख्ये मरुप्रदेशे भव इत्यर्थः । वुञ्, अकादेशः । **साङ्काश्यकः काम्पिल्यक इति** । साङ्काश्ये काम्पिल्ये च भव इत्यर्थः । **प्रस्थपुरवहान्ताच्च** । **एतदन्तादिति** । प्रस्थ, पुर, वह-एतदन्तादित्यर्थः । ननु पुरान्तग्रहणं व्यर्थं, नान्दीपुरक इत्यत्र 'रोपधेतोः प्राचा'मित्युत्तरसूत्रेण सिद्धत्वादित्यत आह—**पुरान्तेति** । **रोपधेतोः प्राचां** । रोपधश्च, ईच्च तयोरिति द्वन्द्वः । षष्ठी पञ्चम्यर्थे । प्राचामिति देशविशेषणं । तदाह—**रोपधादित्यादिना** । **ईत इति** । 'उदाह्रियते' इति शेषः । **काकन्दक इति** । काकन्दी नाम देशः, तत्र भव इत्यर्थः । **जनपदतदवध्योश्च** । **आदर्शक इति** । आदर्शो नाम जनपदः । तत्र भव इत्यर्थः । त्रिगर्तो नाम जनपदविशेषस्यावधिः । जनपदत्वेन सिद्धावपि त्रिगर्तशब्दे परमपि गर्तोत्तरपदच्छं बाधितुमिह तदवधिग्रहणम् । तदाह—**त्रैगर्तक इति** । **अवृद्धादपि बहुवचनविषयात्** । **अवृद्धा-**

---

**शे.]** फलाऽभाव इत्यर्थः । **वृद्धात्प्रा** । अत्रोर्देश इति संबध्यते इत्याह—**वृद्धादेवेति** । विपरीतनियमस्तु न, व्याख्यानात् । **[धन्व]** । धन्व=मरुदेशः । **धन्वविशेषेति** । व्याख्यानात्स्वरूपपर्यायाणामग्रहणम्, अवृद्धत्वाच्चेति भावः । **देशवाचिन इति** । अत एव धनुर्वाचकधन्वशब्दस्य न ग्रहणम् । **उत्तरेणेति** । रोपधत्वादिति भावः । **ईकारेति** । व्याख्यानाद्दीर्घग्रहणमिति भावः । **जनपदत** । 'तदवधि'रिति कर्मधारयः । तेन स जनपद एव । अवधित्वञ्च सन्निधानाज्जनपदम्प्रत्येव । जनपदत्वेन सिद्धावपि उत्तरसूत्रेण त्रिगर्तशब्दे परमपि गर्त्तोत्तरपदच्छं बाधित्वा वुञर्थं [ तदुत्तरार्थम् ] । तदाह—**त्रैगर्तक इति** । दार्वक

बहुवचनविषयात्प्रातिपदिकाद्वुञ्स्यात् । अवृद्धादणो वृद्धाच्छस्यापवादः । अवृद्धाज्जनपदात्—आङ्गकः । अवृद्धाज्जनपदावधेः—आजमीढकः । वृद्धाज्जनपदात्—दार्वकः । वृद्धाज्जनपदावधेः—कालञ्जरकः । विषयग्रहणं किम् ? । एकशेषेण बहुत्वे माभूत् । वर्तनी च वर्तनी च वर्तनी च वर्तन्यः, तासु भवो वार्तनः । **कच्छाग्निवक्त्रवर्तोत्तरपदात्** ।४।२।१२६। देशवाचिनो वृद्धादवृद्धाच्च वुञ्स्यात् । दारुकच्छकः । काण्डाग्नकः । सैन्धुवक्त्रकः । बाहुवर्तकः । **धूमादिभ्यश्च** ।४।२।१२७। देशवाचिभ्यो वुञ् । धौमकः । तैर्थकः । **नगरात्कुत्सनप्रावीण्ययोः** ।४।२।१२८। नगरशब्दाद्वुञ्स्यात्कुत्सने प्रावीण्ये च गम्ये । नागरकश्चौरः शिल्पी वा । कुत्सनेति किम् ? । नागरा ब्राह्मणाः । **अरण्यान्मनुष्ये** ।४।२।१२९। वुञ् । अरण्याण्णय इत्यस्यापवादः । ॐ **पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्** । आरण्यकः पन्था, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा । ॐ **वा गोमयेषु** । आरण्यकाः आरण्या वा गोमयाः । **विभाषा कुरुयुगन्धराभ्याम्** ।४।२।१३०। वुञ् । कौरवकः । कौरवः । यौगन्धरकः । यौगन्धरः । **मद्रवृज्योः कन्** ।४।२।१३१। जनपदवुञोऽपवादः । मद्रेषु जातो मद्रकः । वृजिकः । **कोपधादण्** ।४।२।१३२। माहिषिकः । **कच्छादिभ्यश्च** ।४।२।१३३। देशवाचिभ्योऽण् । वुञादेरपवादः । काच्छः । सैन्धवः । **मनुष्यतत्स्थयोर्वुञ्** ।४।२।१३४। कच्छाद्यणोऽपवादः । कच्छे जातादिः काच्छको मनुष्यः । काच्छकं हसितम् । मनुष्येति किम् ? । काच्छो गौः । **अपदातौ साल्वात्** ।४।२।१३५। साल्वशब्दस्य कच्छादित्वाद्वुञि सिद्धे नियमार्थमिदम् । अपदातावेवेति । साल्वको ब्राह्मणः । अपदातौ किम् ? । साल्वः पदातिर्व्रजति । **गोयवाग्वोश्च** ।४।२।१३६।

---

त.] **नागरा ब्राह्मणा इति** । कव्यादिषु 'माहिष्मती'ति संज्ञाशब्दसाहचर्यात्संज्ञाभूतनगरशब्दस्यैव ढकञा 'नागरेयक' इति भाव्यमिति भावः । **विभाषा कुरु** । कुरुशब्दः कच्छादिषु पठ्यते, तत्सामर्थ्यात्पक्षेऽणिद्ध इति परिशेषाद्विभाषाग्रहणं युगन्धरार्थमेव । 'अवृद्धादपी'ति नित्यप्राप्तो वुञनेन विकल्प्यते । मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ् । कौरवको मनुष्यः । कौरवकमस्य हसितम् । एतदर्थमेवास्य कच्छादौ पाठः । अन्यथा अनयैव विभाषया वुञणोः सिद्धौ किं तेनेति भावः । **सैन्धव इति** । 'ओर्देशे' इति ठञ्प्राप्तः । **वुञि सिद्धे इति** ।

---

बा.] **जनपदादिति** । 'उदाह्रियते' इति शेषः । **आजमीढक इति** । अजमीढेषु भव इत्यर्थः । अजमीढाख्यो जनपदः कस्यचिज्जनपदस्यावधिः । **वृद्धाज्जनपदादिति** । 'उदाह्रियते' इति शेषः । **दार्वक इति** । 'दार्वा' इति बहुवचनान्तो जनपदविशेषे वर्तते । तत्र भव इत्यर्थः । **कालञ्जरक इति** । कलञ्जरेषु भव इत्यर्थः । **कच्छाग्नि** । कच्छ, अग्नि, वक्त्र, वर्त—एतदुत्तरपदादित्यर्थः । शेषपूरणेन सूत्रं व्याचष्टे —**देशवाचिन इति** । छाऽणोरपवादः । **दारुकच्छक इति** । दारुकच्छे भव इत्यर्थः । **काण्डाग्नक इति** । काण्डाग्नौ भव इत्यर्थः । अकादेशे 'यस्येति चे'ति इकारलोपः । **सैन्धुवक्त्रक इति** । सिन्धुवक्त्रे भव इत्यर्थः । **बाहुवर्तक इति** । बहुवर्ते भव इत्यर्थः । **धूमादिभ्यश्च** । 'देशवाचिभ्यो वु'ञिति शेषपूरणम् । **नगरात्कुत्सन** । **नागरा ब्राह्मणा इति** । कव्यादिषु माहिष्मतीसाहचर्येण संज्ञाभूतस्यैव नगरशब्दस्य ग्रहणम् । अतो न ढकञ् । 'प्राचां ग्रामनगराणामि'ति सूत्रभाष्ये 'नागरा' इत्युदाहरणात् । **अरण्यान्मनुष्ये** । **आरण्यक इति** । पन्था अध्यायो न्यायो विहारो मनुष्यो हस्ती वा । **वा गोमयेष्विति** । वार्तिकमिदम् । **विभाषा कुरु** । कुरुयुगन्धरौ जनपदौ । अवृद्धाभ्यामपि ताभ्याम् 'अवृद्धादपी'ति नित्यं प्राप्ते विकल्पः । **मद्रवृज्योः कन्** । मद्रो वृजिश्च जनपदविशेषः । जनपदवुञोऽपवादः । **कोपधादण्** । **माहिषिक इति** । महिषिको नाम जनपदः, तत्र भव इत्यर्थः । 'प्रस्थोत्तरपदे'त्यादिना सिद्धे जनपदवुञ्बाधनार्थमिदम् । **कच्छादिभ्यश्च** । **काच्छ इति** । अत्र वुञोऽपवादोऽण् । **सैन्धव इति** । ओर्देशे ठञोऽपवादः । **मनुष्यतत्स्थयोर्वुञ्** । कच्छादिभ्य इत्यनुवर्तते । तदाह—**कच्छादीति** । **अपदातौ साल्वात्** ।

---

शे.] **इति** । 'दार्वा इति बहुवचनान्तोऽयं जनपदे । **कालञ्जरक इति** । कलञ्जरेषु भव इत्यर्थः । **कच्छाग्नि** । जनपदेत्यादि निवृत्तं, देशइत्येव । केवलस्यापि कच्छस्य देशे वृत्त्या तदर्थमुत्तरपदग्रहणम् । अन्यत्र सामर्थ्यादेव तदन्तविधिः सिद्ध्यति । दारुकच्छकुण्डाग्निसिन्धुवक्त्रबहुवर्ताः प्रकृतयः । 'गर्ते'ति पाठो 'जनपदतदवध्योश्चे'ति सूत्रस्थभाष्यविरुद्धः । **नागरा ब्राह्मणा इति** । कव्यादिषु माहिष्मतीसाहचर्यात्सञ्ज्ञाशब्दस्यैव नगरस्य ग्रहणम्, अतोऽत्र न ढकञ् । 'प्राचां ग्रामनगराणा'मिति सूत्रे 'नागरा' इति भाष्योदाहरणादिति भावः । **विभाषा कुरु** । कुरोः कच्छादिपाठसामर्थ्यात्पक्षेऽणि सिद्धे युगन्धरार्था विभाषा । कुरुयुगन्धरौ जनपदौ, ताभ्याम् 'अवृद्धादपी'ति नित्यं प्राप्ते विकल्पः । **कोपधाद** । 'प्रस्थोत्तरे'त्यनेन सिद्धे जनपदवुञ्बाधनार्थमिदम् । तत्तु उदीच्यग्रामलक्षणाञ्बाधनार्थम् । माहिषिकौ माहिषकौ वा जनपदः । **वुञादेरिति** । सिन्ध्वोर्देशे ठञः । **नियमार्थमिति** ।

साल्वाद्वुञ् । कच्छाद्यणोऽपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत् । **गर्तोत्तरपदाच्छः** ।४।२।१३७। देशे । अणोऽपवादः । वृकगर्तीयम् । उत्तरपदग्रहणं बहुच्पूर्वनिरासार्थम् । **गहादिभ्यश्च** ।४।२।१३८। छः [स्यात्] । गहीयः । (ग) **मुखपार्श्वतसोर्लोपश्च** । मुखतीयम् । पार्श्वतीयम् । अव्ययानां भमात्रे टिलोपस्याऽनित्यतां ज्ञापयितुमिदम् । (ग) **कुग्जनस्य परस्य च** । जनकीयम् । परकीयम् । (ग) **देवस्य च** । देवकीयम् । (ग) **स्वस्य च** । स्वकीयम् । (ग) **वेणुकादिभ्यश्छण्वाच्यः** । वैणुकीयम् । वैत्रकीयम् । औत्तरपदकीयम् । **प्राचां कटादेः** ।४।२।१३९। प्राग्देशवाचिनः कटादेश्छः स्यात् । अणोऽपवादः । कटनगरीयम् । कटघोषीयम् । कटपल्वलीयम् । **राज्ञः क च** ।४।२।१४०। वृद्धात्वाच्छे सिद्धे तत्सन्नियोगेन कादेशमात्रं विधीयते । राजकीयम् । **वृद्धादकेकान्तखोपधात्** ।४।२।१४१। अक इक एतदन्तात्खोपधाच्च वृद्धाद्देशवाचिनश्छः स्यात् । ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनः, तत्र जातो ब्राह्मणकीयः । शाल्मलिकीयः । अयोमुखीयम् । **कन्थापलदनगरग्रामह्रदोत्तरपदात्** ।४।२।१४२। कन्थादिपञ्चकोत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात् । ठञ्ञिठादेरपवादः । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् । **पर्वताच्च** ।४।२।१४३। पर्वतीयः । **विभाषाऽमनुष्ये** ।४।२।१४४। मनुष्यभिन्नेऽर्थे पर्वताच्छो वा स्यात् । पक्षेऽण् । पर्वतीयानि

---

त.] 'मनुष्यतत्स्थयो'रित्यनेन । **गहादिभ्यश्च** । एभ्यो देशवाचिभ्यश्छः स्यात् । पूर्वपक्षादिशब्देभ्यस्तु देशवाचित्वाऽभावेऽपि पाठसामर्थ्याच्छः । **मुखपार्श्वतसोरिति** । गणसूत्रमिदम् । सप्तम्यन्ताभ्यामाभ्यामाद्यादित्वात्तसिः । **मुखतीयमिति** । मुखे जातमित्याद्यर्थे तसन्ताच्छः । 'अलोऽन्त्यस्ये'ति तसः सकारस्य लोपे 'यस्येति चे'त्यकारलोपः । **कुग्जनस्येति** । इदमपि गणसूत्रम् । **स्वकीयमिति** । स्वार्थिककन्नन्तात्स्वशब्दाद्गहादेराकृतिगणत्वाच्छो देशवाचित्वाऽभावेऽपि पूर्वपक्षादिवद्बोध्यः । अत एव 'लुब्योगाप्रख्याना'दिति सूत्रे 'न हि स्वकीयस्यैव प्रत्याख्यान'मिति न्यासकारोक्तिः सङ्गच्छते । केवलात्स्वशब्दादणेव । सौवम् । द्वारादीनां चेत्यैच् । एतच्च 'द्वारादीनां चे'त्यत्र आकरे उदाहृतम् । 'स्वीय'मित्यत्र तु 'प्राक्क्रीताच्छः' । अन्तरशब्दात्तु गहादित्वाच्छे तदन्तेन नञ्शब्दस्य समासे स्वार्थे कनि च 'नान्तरीयक'मिति भवति । अविनाभूतमित्यर्थः । **वृद्धादकेकान्त** । **ब्राह्मणकीय इति** । 'कोपधाद'णित्यण्प्राप्तः । **अयोमुखीयमिति** । वाहीकग्रामलक्षणौ ठञ्ञिठाविह प्राप्तौ । **ठञ्ञिठादेरिति** । आदिशब्देन 'रोपधेतोः' इत्यादिना प्राप्तस्य वुञः । **पर्वतीय इति** । 'तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभू'दित्यत्र तु 'पर्वती-

---

बा.] **नियमार्थमिति** । 'साल्वाद्वेदपदातावेवे'ति नियमार्थमित्यर्थः । **गोयवाग्वोश्च** । जातत्वादिना विवक्षितयोरित्यर्थः । **गर्तोत्तरपदाच्छः** । **देशे इति** । शेषपूरणम् । देशवाचिन इति यावत् । **वृकगर्तीयमिति** । वृकगर्तो नाम देशः । तत्र भव इत्यर्थः । ननु गर्ताच्छ इत्येतावतैव केवलगर्तशब्दस्य देशवाचित्वाऽभावाद्गर्तोत्तरपदादिति सिद्धे उत्तरपदग्रहणं व्यर्थमित्यत आह—**उत्तरपदग्रहणमिति** । **गहादिभ्यश्च** । **गहीय इति** । **गहो** देशविशेषः । **मुखपार्श्वेति** । गहादिगणसूत्रम् । 'मुखपार्श्वे'ति लुप्तषष्ठीकं पदम् । तसन्तयोरेतयोरन्त्यस्य लोपश्च । चाच्छः । असम्भवादत्र जनपदस्येति न सम्बध्यते । **कुग्जनस्येति** । गणसूत्रमिदम् । जनशब्दस्य परशब्दस्य च कुगागमः स्यात् । चाच्छः । अत्रापि देश इति न सम्बध्यते । **देवस्य च** । इदमपि गणसूत्रम् । चात्कुक्छश्च । 'देवाद्यञञौ' इत्यस्यापवादः । 'दैवानुग्रह' इति भाष्यप्रयोगाद्दैवमित्यपि साधु । **स्वकीयमिति** । गहादित्वाच्छः, कुक्च । स्वशब्दोऽपि गहादिः, आगमशास्त्रस्याऽनित्यत्वात्स्वीयम् । **प्राचां कटादेः** । **कटनगरीयमिति** । कटनगरो नाम प्राच्यो देशः । **राज्ञः क च** । राजन्शब्दाच्छः स्यात्, ककारश्चान्तादेशः । **वृद्धादकेकान्तखोपधात्** । **ब्राह्मणकीय इति** । कोपधाऽणोऽपवादश्छः । **शाल्मलिकीय इति** । शाल्मलिको नाम देशः । तत्र भव इत्यर्थः । इकान्तोदाहरणमिदम् । कोपधाऽणपवादः । **अयोमुखीय इति** । 'वाहीकग्रामेभ्यश्चे'ति ठञ्ञिठयोरपवादश्छः । **कन्थापलद** । **ठञ्ञिठादेरपवाद इति** । नगरान्ते 'रोपधेतो'रिति वुञोऽपवादः । इतरत्र 'वाहीकग्रामेभ्यश्चे'ति ठञ्ञिठयोरपवाद इति विवेकः । **पर्वताच्च**—इत्यादि स्पष्टम् । **युष्मदस्मदोः** । युष्मदस्मच्छब्दयोरिह शब्दस्वरूपपरत्वात् 'त्यदादीनि सर्वैर्नित्य'मित्येकशेषो न भवति । पञ्चम्यर्थे षष्ठी । युष्मच्छ-

---

शे.] 'साल्वादेवे'ति विपरीतनियमस्तु न, व्याख्यानात् । **मुखेत्यादि**—चत्वारि गहाद्यन्तर्गणसूत्राणि । **देवकीयमिति** । 'नूनमत्र दैवानुग्रह' इति भाष्यात् देवस्येदमित्यर्थे 'देवाद्यञञौ' इत्यपीति कश्चित् । **स्वकीयमिति** । स्वार्थिककप्रत्ययान्ताच्छ इत्येके । **राज्ञः क च** । देशे इति न सम्बध्यते असम्भवात् । **ब्राह्मणकीय इति** । कोपधाऽण्प्राप्तः । **अयोमुखीयमिति** । 'वाहीकग्रामेभ्यश्चे'ति ठञ्ञिठौ प्राप्तौ । **ठञ्ञिठादेरिति** । नगरान्ते 'रोपधेतो'रिति वुञ्—आदिशब्दार्थः । **विभाषाऽ[मनुष्ये]** ।

पार्वतानि वा फलानि। अमनुष्ये किम्?। पर्वतीयो मनुष्यः। **कृकणपर्णाद्भारद्वाजे** ।४।२।१४५। भारद्वाजदेशवाचिभ्यामाभ्यां छः। कृकणीयम्। पर्णीयम्। भेति किं ?। [भारद्वाजे किम्] ?। काकणम्। पार्णम्।

**युष्मदस्मदोरन्यतरस्यां खञ्च** ।४।३।१। चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वा अयं युष्मदीयः। अस्मदीयः। **तस्मिन्नणि च युष्माकास्माकौ** ।४।३।२। युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः। **तवकममकावेकवचने** ।४।३।३। एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः, खञ्यणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु-**प्रत्ययोत्तरपदयोश्च** ।७।२।९८। मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः, प्रत्यये उत्तरपदे च। त्वदीयः। मदीयः। [उत्तरपदे तु-त्वत्पुत्रः। मत्पुत्रः]। **अर्धाद्यत्** ।४।३।४। अर्ध्यः। **परावराधमोत्तमपूर्वाच्च** ।४।३।५। परार्ध्यम्। अवरार्ध्यम्। अधमा-

---

त.]यस्य राज्ञ इमे' इत्यर्थे छान्तादण्। कृकणं। भारद्वाजशब्दोऽत्र देशवचनः, स च न प्रत्ययार्थः, किं तु प्रकृतिविशेषणमित्याह—**भारद्वाजदेशेत्यादिना**। **युष्मदस्मदोः**। 'त्यदादीनि चे'ति वृद्धत्वान्नित्ये छे प्राप्ते खञणोरपि विधानार्थमिदम्। **पक्षे अणिति**। अन्यतरस्यांग्रहणादिति भावः। तथा चैते त्रयः प्रत्यया इति वैषम्याद्यथासङ्ख्यं न भवतीति केचित्। मनोरमायां तु यथासङ्ख्यनिवारणाय योगविभागः कृतः। तथा हि 'युष्मदस्मदोरन्यतरस्याम्'। आभ्यां छो वा स्यात्। 'त्यदादीनि चे'ति वृद्धत्वान्नित्ये छे प्राप्ते विकल्पोऽयम्। ततः 'खञ्च'। एवमुत्तरसूत्रेऽपि योगविभागो बोध्यः। तेन आदेशयोः खञणोर्भ्यां यथासङ्ख्यं नेत्यादि। **युवयोरित्यादि**। एकवचने तवकममकादेशविधानादेकवचनान्तेन विग्रहोऽत्र न कृतः। **तस्मिन्नणि च**। तस्मिन्निति साक्षाद्विहितः खञ्निर्दिश्यते, नतु चानुकृष्टः। निमित्तयोरादेशौ प्रति यथासङ्ख्यं तु न भवति, 'खञणो'रिति वक्तव्ये पृथग्विभक्तिनिर्देशसामर्थ्यात्। स्थान्यादेशयोस्तु इष्यत एव तत्। **तवक**। इह पूर्ववदेव निमित्तयोः खञणोरादेशौ प्रति यथासङ्ख्यं न भवति, किंतु स्थान्यादेशयोरेवेत्याशयेनोदाहरति—**तावकीनः**। **मामकीन इति**। **परावरा**

---

बा.]व्दादस्मच्छब्दाच्च जाताद्यर्थेषु खञ्स्यादित्यर्थः। चाच्छः। गर्तोत्तरपदादित्यधिकृतः छश्चकारेण समुच्चीयत इत्यर्थः। **पक्षेऽणिति**। अन्यतरस्यांग्रहणादिति भावः। अत्र 'युष्मदस्मदो'रिति योगो विभज्यते। आभ्यां छो भवतीत्यर्थः। 'खञ् च' इति योगान्तरम्। आभ्यां खञ् च भवतीत्यर्थः। 'अन्यतरस्या'मिति योगान्तरम्। आभ्यां छखञौ वा स्तः, पक्षेऽणित्यर्थः। अतो न यथासङ्ख्यमिति भाष्ये स्पष्टम्। **युष्मदीय इति**। द्विवचनान्ताद्बहुवचनान्ताच्च छः। ईयादेशः। सुब्लुकि युवादेशस्य निवृत्तिः, तस्य विभक्तौ परे विधानात्। प्रकृत्यर्थैकत्वे विभक्तेर्लुप्तत्वेऽपि त्वादेशो वक्ष्यते। **अस्मदीय इति**। आवयोरस्माकं वा अयमित्यर्थः। अथ खञि अणि च विशेषमाह—**तस्मिन्नणि च**। पूर्वसूत्रे निर्दिष्टः खञ् तच्छब्देन परामृश्यते। तदाह—**खञि अणि चेति**। अत्र स्थानिनोरादेशयोश्च यथासङ्ख्यं, न तु परनिमित्तयोः, तस्मिन्नणीति व्यस्तनिर्देशात्। **यौष्माकीण इति**। युवयोर्युष्माकं वा अयमिति विग्रहः। खञ्, ईनादेशः, युष्माकादेशः आदिवृद्धिः, णत्वम्। **आस्माकीन इति**। आवयोरस्माकं वा अयमिति विग्रहः। अणि उदाहरति—**यौष्माकः आस्माक इति**। **तवकममकौ**। 'एकवचने' इति युष्मदस्मदोः प्रकृत्योर्विशेषणम्। एकस्य वचनम्=उक्तिः-एकवचनम्। एकस्योक्तौ व्याप्रियमाणयोरिति लभ्यते। तदाह—**एकार्थवाचिनोरिति**। **छे त्विति**। 'एकार्थवृत्तयोर्विशेषो वक्ष्यते' इति शेषः। **प्रत्ययोत्तरपदयोश्च**। साप्तमिकमिदम्। 'त्वमावेकवचने' इत्यनुवर्तते। 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरित्यनुवर्तते। मपर्यन्तस्येत्यधिकृतं। तदाह—**मपर्यन्तयोरित्यादि**। **त्वदीयः मदीय इति**। छे सुब्लुकि तवममयोर्निवृत्तौ मपर्यन्तयोः त्वदिति मदिति च आदेशौ। विभक्तिपरकत्वाऽभावान्न शेषे लोपः। उत्तरपदे तु परे त्वत्पुत्रो मत्पुत्र इत्युदाहरणम्। **अर्धात्**। **अर्ध्य इति**। अर्धे जातादिरित्यर्थः। 'सपूर्वपदाट्ठञ् वाच्यः' इति वार्तिकं भाष्ये स्थितम्। वालेयार्धिकः। **परावर**।

---

शे.]अमनुष्यशब्दोऽत्र यौगिको, व्याख्यानात्। **कृकणपर्णा[द्भारद्वाजे]**। देशवाची भारद्वाजशब्दः प्रकृतिविशेषणं, व्याख्यानात्। **युष्मदस्म**। अत्र सूत्रत्रयेऽपि न यथासङ्ख्यम्, अस्वरितत्वात्। न चैक एव खोऽनेन विधीयते, चेन तस्य ससहायता द्योत्यते। सा च प्रकरणाच्छेनेति यथासङ्ख्याऽप्राप्तिरेवेति वाच्यं, ससहायताद्योतनेऽपि तस्याः सम्बन्ध्यन्तरसाकाङ्क्षतया द्वितीयोपस्थितिं विनाऽर्थापर्यवसानेन तत्प्राप्तेः। न चैवमपि प्रत्ययत्रयविधानान्न तत्प्राप्तिरिति वाच्यम्। विकल्पार्थानां पक्षेऽभावमात्रार्थत्वेऽप्यन्यभावार्थकत्वाऽभावात्। प्रकृते च महाविभाषया वाक्यस्य सिद्धत्वादन्यतरस्याङ्ग्रहणबोधिततदभावेऽणेवेत्यस्य लक्ष्यसंस्कारवेलायां ज्ञानेऽपि विध्य-प्रमितिकाले त्रयाणामनुपस्थित्या तत्प्राप्तेरिति दिक्। **चाच्छ इति**। विधेयसन्निहितछस्य विधेयसमुच्चायकत्वमिति भावः। **तस्मिन्न**। पूर्वसूत्रे साक्षान्निर्दिष्टत्वेन प्राधान्यात् खञ एव तच्छब्देन परामर्श इत्याह—**खञीति**। एकवचने इति यौगिकं, षष्ठ्यर्थे च प्रथमाविभक्तिः। तदाह—**एकार्थवाचिनोरिति**। **प्रत्ययोत्तर**। उत्तरपदे 'त्वत्पुत्र' इत्याद्युदाहरणम्।

ध्यंम् । उत्तमार्ध्यम् । दिक्पूर्वपदाट्ठञ्च ।४।३।६। चाद्यत् । पौर्वार्धिकम् । पूर्वार्ध्यम् । **ग्रामजनपदैकदेशादञ्ठञौ** ।४।३।७। ग्रामैकदेशवाचिनो जनपदैकदेशवाचिनश्च दिक्पूर्वपदादर्धान्तादञ्ठञौ स्तः । इमेऽस्माकं ग्रामस्य जनपदस्य वा पौर्वार्धाः । पौर्वार्धिकाः । ग्रामस्य पूर्वस्मिन्नर्धे भवा इति तद्धितार्थे समासः । ठञ्ग्रहणं स्पष्टार्थम् । अञ्चेत्युक्ते यतोऽप्यनुकर्षः संभाव्येत । **मध्यान्मः** ।४।३।८। मध्यमः । **अ सांप्रतिके** ।४।३।९। मध्यशब्दादकारप्रत्ययः स्यात्सांप्रतिकेऽर्थे । उत्कर्षाऽपकर्षहीनो मध्यो वैयाकरणः । मध्यं दारु । नातिह्रस्वं नातिदीर्घमित्यर्थः । **द्वीपादनुसमुद्रं यञ्** ।४।३।१०। समुद्र[स्य] समीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ् स्यात् । द्वैप्यम् । द्वैप्या । **कालाट्ठञ्** ।४।३।११। कालवाचिभ्यष्ठञ् स्यात् । मासिकम् । सांवत्सरिकम् । सायंप्रातिकः । पौनःपुनिकः । कथं तर्हि–'शार्वरस्य तमसो निषिद्धये'–इति कालिदासः, 'अनुदितौषसरागा'–इति भारविः, समानकालीनं प्राक्कालीनमित्यादि च । अपभ्रंशा एवैत इति प्रामाणिकाः । 'तत्र जातः' इति

---

त.]'परावराधमोत्तमेभ्यः' इत्येव वक्तव्ये पूर्वग्रहणं पूर्वविप्रतिषेधसूचनार्थम् । तेन दिक्शब्दयोः परावरयोरर्धशब्देन समासे उत्तरसूत्रेण प्राप्तावपि ठञ्यतौ बाधित्वा यदेव भवति । दिक् । पूर्वपदग्रहणं स्वरूपविधिनिरासार्थमित्याहुः ।

अ सांप्रतिके । 'संप्रती'त्यव्ययं न्याय्ये वर्तते, 'अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रः स वा एष संप्रति यज्ञो यत्पञ्चरात्रः' इत्यत्र तथा दर्शनात् । न न्यूनो नातिरिक्तः–सम इत्यर्थः । इदानीमित्यर्थे तु प्रसिद्धमेव, 'एतर्हि संप्रतीदानीम्' इत्यमरात् । ततः प्रज्ञादित्वात्स्वार्थेऽण्, विनयादित्वात्स्वार्थे ठगपि । तेन सांप्रतं सांप्रतिकमिति पर्यायौ । **उत्कर्षेत्यादि** । न्याय्ये विद्यमान एव संप्रतिशब्दोऽत्र गृह्यते इति भावः । **द्वीपादनु** । समुद्रं समया अनुसमुद्रम् । 'अनुर्यत्समया' इत्यव्ययीभावः । सप्तम्यन्तं चेदम्, विद्यमानक्रियाद्वारा द्वीपविशेषणमित्याशयेनाह– **समुद्रसमीपे यो द्वीप इति** । कच्छादण्णो मनुष्यवुञश्चापवादोऽयम् । अनुसमुद्रं किं? । द्वैपमन्यत् । कच्छाद्यण् । द्वैपको मनुष्यः । 'मनुष्यतत्स्थयो'रिति वुञ् । **द्वैप्येति** । 'यञश्चे'ति ङीन्न भवति, 'अपत्याधिकारस्थादेव यञो ङी'विति प्रागेवोक्तत्वात् । **कालाट्ठञ्** । स्वरूपस्यैव न ग्रहणं, संधिवेलादिसूत्रेण संधिवेलात्रयोदशीचतुर्दशी-प्रभृतिभ्योऽवृद्धेभ्योऽपि ठञ्बाधनार्थमण्विधानात् । किंतु सर्वेषामपि कालवाचिनां ग्रहणमित्याशयेनाह— **कालवाचिभ्य इति** । यत्तु 'स्वरूपस्य पर्यायाणां च न ग्रहण'मिति पदमञ्जर्यादिषु स्थितम् । तदसत् । 'कालिकः

---

बा.]'अर्धाद्य'दिति शेषः । अवरशब्दो दन्तोष्ठ्यवकारमध्यः । **दिक्पूर्वपदाट्ठञ् च** । अर्धादित्येव । परावरपूर्वार्ध-शब्दात्पूर्वसूत्रेण यदेव, विशिष्य विहितत्वात् । **ग्रामजनपद** । ननु अञ् चेत्येतावतैव चकाराट्ठञोऽनुकर्षसिद्धेः ठञ्ग्रहणं व्यर्थमित्यत आह—**ठञ्ग्रहणमिति** । ननु अञ् चेत्युक्तेऽपि चकाराट्ठञोऽनुकर्षः स्पष्ट एवेत्यत आह— **अञ्चेत्युक्त इत्यादि** । **मध्यान्मः** । स्पष्टम् । **अ सांप्रतिके** । 'अ' इति लुप्तप्रथमाकम् । मध्यादित्यनुवर्तते । तदाह—**मध्यशब्दादित्यादि** । 'संप्रती'त्यव्ययम् उत्कर्षापकर्षहीनत्वात्मकसाम्ये वर्तते, तैत्तिरीये 'अनाप्तश्च-तूरात्रोऽतिरिक्तः षड्रात्रोऽथवा एष सम्प्रतियज्ञो यत्पञ्चरात्रः' इत्यत्र तथा दर्शनात् । पञ्चरात्रो न न्यूनः नाप्यति-रिक्तः, सम इत्यर्थः । सम्प्रतिशब्दात्स्वार्थे विनयादित्वाट्ठकि साम्प्रतिकम् । प्रज्ञादित्वात्स्वार्थे अणि तु साम्प्रतमि-त्यपि भवति । 'एतर्हि सम्प्रती'ति कोशादिदानीमित्यर्थेऽपि । प्रकृते तु साम्यं विवक्षितम् । **द्वीपादनु** । 'अनुसमुद्र'-मिति सामीप्ये अव्ययीभावः । अनुसमुद्रमिति सप्तम्यन्तम्, विद्यमानादित्यध्याहार्यम् । तदाह—**समुद्रस्य समीपे इति** । **द्वैप्येति** । 'यञश्चे'ति ङीप् तु न, 'अनपत्याधिकारस्थान्ने'ति तन्निषेधात् । **कालाट्ठञ्** । 'कालशब्दस्यैव न ग्रहणं, किन्तु कालशब्दस्य, कालविशेषवाचकानां च ग्रहण'मिति 'तदस्य परिमाणं' 'सङ्ख्यायाः' इति सूत्रभाष्ये स्पष्टम् । तदाह—**कालवाचिभ्य इति** । **सायंप्रातिकः पौनःपुनिक इति** । 'अव्ययानां भमात्रे' इति टिलोपः । 'सायञ्चिर'मिति ट्युट्युलौ तु न भवतः, 'नस्तद्धिते' इति सूत्रभाष्ये तथा प्रयोगदर्शनात् । **शार्वरस्येति** । 'शार्वरिकस्ये'ति भाव्यमिति भावः । **अनुदितौषसेति** । औषसिकेति भाव्यमिति भावः । **समानेति** । समानकालिकं प्राक्कालिकमिति भाव्यमित्यर्थः । **प्रामाणिका इति** । केचित्तु अमुकः पुरतः परेद्यु-रित्यादिवदेतेऽपि शब्दा अव्युत्पन्नाः, पृषोदरादयो वा साधव इत्याहुः । **इति यावदिति** । व्याख्यानादिति

---

शे.]**कालाट्ठञ्** । कालग्रहणे यथाकथंचिदपि कालबोधकानां ग्रहणम् । 'तदस्य परिमाणं' 'सङ्ख्यायाः' इति सूत्रे 'यो यः काले वर्तते स स कालशब्दः' इति भाष्योक्तेः । रमणीयादिष्वतिप्रसङ्गस्त्वनभिधानान्नेत्यपि तत्रैवोक्तम् । अत एव 'सायंप्रातिक' इत्यत्र ठञ् सिद्धः । अन्यथा स्वाङ्गसमुदायस्य स्वाङ्गवाचकत्वाऽभाववत्कालसमुदायस्य कालवाचकत्वाऽभावाट्ठञ् न स्यात् । मम तु यथाकथंचि-त्कालबोधकत्वमस्त्येव । 'सायंप्रातिकः' 'पौनःपुनिक' इत्यत्र [illegible] अव्ययत्वेऽप्यनभिधानाट्ट्युट्युलौ न भवतः, 'नस्तद्धित' इति सूत्रे भाष्ये तथा प्रयोगात् । **इति यावदिति** । न च छ–नक्षत्राऽणोः, छ–ट्युट्युलोश्च विप्रतिषेधपरस्य

यावत्कालाधिकारः। **श्राद्धे शरदः** ।४।३।१२। ठञ् स्यात्। ऋत्वणोऽपवादः। शारदिकं श्राद्धम्। **विभाषा रोगातपयोः** ।४।३।१३। शारदिकः शारदो वा रोग आतपो वा। एतयोः किम्?। शारदं दधि। **निशाप्रदोषाभ्यां च** ।४।३।१४। वा ठञ् स्यात्। नैशिकम्। नैशम्। प्रादोषिकम्। प्रादोषम्। **श्वसस्तुट् च** ।४।३।१५। श्वस्शब्दाट्ठञ् वा स्यात्तस्य तुडागमश्च। **द्वारादीनां च** ।७।३।४। द्वार, स्वर, [स्वाध्याय,] व्यल्कश, स्वस्ति, स्वर्, स्फ्यकृत, स्वादु, मृदु, श्वस्, श्वन्, स्व, एषां न वृद्धिरैजागमश्च। शौवस्तिकम्। **सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्** ।४।३।१६। संधिवेलादिभ्य ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात्। सन्धिवेलायां भवं सान्धिवेलम्। ग्रैष्मम्। तैषम्। सन्धिवेला, संध्या, अमावास्या, त्रयोदशी, चतुर्दशी, पौर्णमासी,

त.]संबन्धः', 'कालिकी व्याप्ति'रित्यादिप्रयोगाऽनापत्तेः। न च विशेषणानामेव ग्रहणे सन्धिवेलादिसूत्रेण सन्धिवेलादिभ्योऽण्विधानं ज्ञापकमिति वाच्यं, तस्य स्वरूपमात्रग्रहणनिरासकत्वेनापि साफल्यात्। गौणमुख्यन्यायस्त्विह नाश्रीयते। तेन कदम्बपुष्पसाहचर्यात्कदम्बपुष्पः कालः, व्रीहिपलालसाहचर्याद्व्रीहिपलालः कालः, तत्र भवं कादम्बपुष्पिकं व्रैहिपलालिकमित्याकरः। अत्र हि प्रमाणं सन्धिवेलादिसूत्रे अनेन कालग्रहणेन नक्षत्राणां विशेषणमेवेत्याहुः। न च पुष्यादिशब्दानां कालो मुख्य एवार्थः, 'लुबविशेषे' इति व्युत्पादनात्, तथा च कालविशेषणमुक्तार्थे न प्रमाणमिति वाच्यं, पुष्यादिसमीपस्थचन्द्रमसा युक्ते काले पुष्यादिशब्दानां गौणत्वात्। 'लुबविशेषे' इति शास्त्रमपि गौणवृत्तित्वान्वाख्यायकमेवेति दिक्। एवं स्थिते 'कालवाचिभ्य' इति मूलस्य 'कालप्रतिपादकेभ्यः' इति फलितोऽर्थः। **श्राद्धमिति**। भक्त्या क्रियमाणं पित्र्यं कर्मेत्यर्थः। 'प्रज्ञाश्रद्धार्चाभ्योऽणः' इति मत्वर्थीयेन व्युत्पादितः श्रद्धावान्पुरुषस्तु न गृह्यते, अनभिधानात्। **श्वसस्तुट् च**। विभाषेत्यनुवर्तनादाह—**ठञ्वा स्यादिति**। 'ऐषमोह्यः' इत्यादिना त्यबपि विकल्पेन विहितः। आभ्यां मुक्ते ट्युट्युलावपि स्त एव। **शौवस्तिकमिति**। नन्वन्तरङ्गत्वात्तुटि ठस्य प्रत्ययादित्वाऽभावात्कर्मठ इत्यत्र ठच इवेकादेशो न स्यात्। न च परत्वादिकादेशे तस्य तुडिति वाच्यम्, आदेशात्प्रागेवान्तरङ्गत्वात्तुटः प्रवृत्तेः। इकादेशस्य त्वाङ्गत्वेन बहिरङ्गत्वात्। सूत्रभङ्गेन तुकि हि क्रियमाणे तु 'इसुसुक्तान्ता'दिति कादेशप्रसङ्ग इति चेत्। सत्यम्। वुञ्छणादिषु ठचश्चित्त्वेन 'एकादेशोऽन्तरङ्गेभ्यो बलवा'निति ज्ञापितत्वात्। अन्यथा प्रत्ययाद्युदात्तत्वे कृते एकादेशः स्यादिति किं ठचश्चित्त्वेन?। कृते त्विकादेशे प्रत्ययस्वरबाधनाय चित्त्वं प्रयुज्यत इति मनोरमायां स्थितम्। **सन्धिवेला**। अण्ग्रहणं तु छबाधनार्थम्। अन्यथा 'सन्धिवेलादिभ्यो यथाविहितं प्रत्ययाः स्युः' इत्युक्ते पौर्णमासीशब्दात् 'वृद्धाच्छः' स्यात्। वचनं तु ठञो बाधनाय स्यादिति भावः। **तैषमिति**। तिष्याद्भवादावण्। जातार्थे तु 'श्रविष्ठाफाल्गुनी'ति

बा.]भावः। **श्राद्धे शरदः। ठञ् स्यादिति**। शेषपूरणमिदम्। ननु 'कालाट्ठ'ञित्येव सिद्धे किमर्थमिदमित्यत आह—**ऋत्वण इति**। 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि'ति वक्ष्यमाणस्येत्यर्थः। **शारदिकमिति**। शरदि ऋतौ भवमित्यर्थः। शरच्छब्दस्य संवत्सरवाचित्वे तु पूर्वेणैव सिद्धम्। **विभाषा रोगातपयोः**। 'ठ'ञिति शरद इति चानुवर्तते। **शारदं दधीति**। ऋत्वणिति भावः। **निशाप्रदोषाभ्यां च। वा ठञ् स्यादिति**। शेषपूरणम्। 'कालाट्ठ'ञिति नित्यं प्राप्ते विकल्पोऽयम्। **श्वसस्तुट् च। तस्येति**। प्रत्ययस्येत्यर्थः। तुटि टकार इत्। उकार उच्चारणार्थः। **द्वारादीनां च**। 'न य्वाभ्या'मिति सूत्रं पदान्ताभ्यामितिवर्जमनुवर्तते, 'मृजेर्वृद्धि'रित्यतो वृद्धिरिति च। तदाह—**एषां न वृद्धिरैजागमश्चेति**। द्वारादीनां नादिवृद्धिः, किन्तु यकारवकाराभ्यां पूर्वौ ऐजागमौ स्त इत्यर्थः। अत्र यकारवकारयोरपदान्तत्वात् 'न य्वाभ्या'मित्यप्राप्ते वचनमिदम्। **शौवस्तिकमिति**। श्वस् इत्यव्ययाज्जाताद्यर्थे ठञि इकादेशे तुडागमे वकारात्पूर्वमैजागमेन औकारः। अकारस्य न वृद्धिः। **सन्धिवेला। कालवृत्तिभ्य इति**। 'कालाट्ठ'ञित्यतस्तदनुवृत्तेरिति भावः। ठञोऽपवादः। **तैषमिति**। तिष्ये भवादी-

शे.]त्यस्सूत्रस्थभाष्यस्याऽसङ्गतिः। तावत्पर्यन्तं कालाधिकारे हि परत्वेन छबाधकठञपवादतयोत्कृष्टबलानामणादीनां दुर्बलेन छेन संप्रधारणाऽयोगः। तदधिकाराऽभावे हि तदपवादत्वमेव नेति न दोष इति वाच्यं, तेषां छबाधकठञपवादत्वेऽपि परस्परपरिहारेण चारितार्थ्यपूर्वकं युगपदसम्भवस्यैव सम्प्रधारणाबीजत्वेनाऽदोषात्। **श्राद्धे श**। श्रद्धाशब्दात् 'प्रज्ञाश्रद्धे'ति सप्तम्यर्थे णे पित्र्यकर्मविशेषे रूढोऽयम्। **द्वारादीनाञ्च**। अत्र परस्य वृद्धिरिति नानुवर्त्तते इति कस्येत्सूत्रे निरूपितम्। इह तदादिग्रहणमपि। एवञ्च स्वग्रामस्वाध्याययोः पाठो नियमार्थः—'स्वशब्दादेतयोरेवे'ति। तेन 'स्वार्थिकाः', 'स्वाभाविकं,' 'स्वाराज्य'मिति सिद्धमिति 'द्वारादीनाञ्चे'ति सूत्रे भाष्ये ध्वनितम्। तत्र स्वाध्याये सर्वेभ्यो यण्भ्यः पूर्वं नैच्, 'अचामादे'रित्यनुवर्त्त्य तदनन्तरयोर्य्वोः पूर्वावैचाविति व्याख्यानात्। **सन्धिवेला**। अण्ग्रहणं पौर्णमास्याश्छं बाधितुम्। वचनन्तु यथा[illegible] चरितार्थम्। सन्धिवेलादिग्रहणे शश्वतो वेति पाठाच्छाश्वतिकशाश्वतौ सिद्धाविति

प्रतिपत् । (ग) संवत्सरात्फलपर्वणोः । सांवत्सरं फलं पर्व वा । सांवत्सरिकमन्यत् । **प्रावृष एण्यः** ।४।३।१७। प्रावृषेण्यः । **वर्षाभ्यष्ठक्** ।४।३।१८। वर्षासु साधु वार्षिकं वासः । 'कालात्साधुपुष्प्यत्पच्यमानेषु' इति साध्वर्थे । **सर्वत्राऽण् च तलोपश्च** ।४।३।२२। हेमन्तादण् स्यात्तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हैमनम् । हैमन्तम् । **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** ४।३।२३। सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ स्तस्तयोस्तुट् च । तुटः प्रागनादेशः, 'अनद्यतने' इत्यादिनिर्देशात् ।

---

त.] लुक्स्यात् । 'सूर्यतिष्ये'त्यत्र 'तिष्यपुष्ययोर्नक्षत्राऽणि' इति वचनाद्यलोपः । **प्रावृष एण्यः** । ऋत्वणोऽपवादः । प्रवर्षतीति प्रावृट् 'नहिवृती'ति दीर्घः । तत्र भवः । जाते तु ठपं वक्ष्यति । 'रषाभ्या'मिति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणमित्याहुः । किंच प्रावृषेण्यमाचक्षाणः प्रावृषेण् इत्यत्र णकारश्रवणार्थमपि तत् । ण्यन्तात्क्विपि टिलोप-णिलोपयलोपाः । **सर्वत्राण्च** । **हेमन्तादिति** । एतच्च 'हेमन्ताच्चे'त्यतोऽनुवृत्तमिति भावः । **हैमनमिति** । अकारविशिष्टस्य तशब्दस्य लोपे 'अन्' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न । तकारस्यैव लोप इति पक्षे तु 'यस्येति च' इत्यल्लोपस्याभीयत्वेनाऽसिद्धत्वात्स्थानिवद्भावाद्वा टिलोपो नेति बोध्यम् । **हैमन्तमिति** । ऋत्वणि तकारलोपो न भवति, तस्य 'सर्वत्रा'णिति प्रतिपदोक्तेन अणा सन्नियोगशिष्टत्वात् । एतच्च प्रत्याख्यातं भाष्ये । तथाहि–हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति, 'हेमनागनीगन्ति कर्णौ' इत्यादि प्रयोगात्, ततश्च हेमन्-हेमन्त-शब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयं सिद्धम् । छन्दसि तु 'हेमन्ताच्चे'ति ठञा 'हैमन्तिक'मिति तृतीयमपि रूपं सिध्यति । न च विशेषविहितेन ठञा अणो बाधः शङ्क्यः । छन्दसि सर्वविधीनां वैकल्पिकत्वात् । वृत्तिकृता तु 'हेमन्ताच्चे'ति सूत्रे सर्वत्रग्रहणमपकृष्य लोकेऽपि हैमन्तिकमिति स्वीकृतम् । **सायंचिरं** । नन्वन्तरङ्गत्वात्प्रथमं

---

बा.] त्यर्थः । 'तिष्यपुष्ययोर्नक्षत्राऽणी'ति यलोपः । तिष्ये जात इत्यर्थे 'श्रविष्ठाफल्गुनी'ति लुग्वक्ष्यते । सन्धिवेलादिगणं पठति—**सन्धिवेलेत्यादि** । **संवत्सरात्फलपर्वणोरिति** । गणसूत्रमिदम् । **प्रावृष एण्यः** । ऋत्वणोऽपवादः । **प्रावृषेण्य इति** । प्रावृट्–वर्षर्तुः । तत्र भवादिरित्यर्थः । जाते तु ठञ् वक्ष्यते । प्रक्रियालाघवार्थं णकारोच्चारणम् । **वर्षाभ्यष्ठक्** । तृतीयतौ वर्षाशब्दो नित्यं बहुवचनान्तः, 'अप्सुमनःसमासिकतावर्षाणां बहुत्व'मिति लिङ्गानुशासनसूत्रात् । 'स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः' इत्यमरः । वर्षाशब्दाज्जाताद्यर्थे ठगित्यर्थः । **वर्षासु साध्विति** हितकारीत्यर्थः । ननु 'तत्र साधु'रिति साध्वधिकारस्य शेषाधिकारबहिर्भूतत्वात्कथं साध्वर्थेऽयं प्रत्ययः इत्यत आह—**कालादिति** । **साध्वर्थे इति** । साध्वर्थेऽपि ठगित्यर्थः । अस्य जाताद्यर्थेषु शैषिकेष्वन्तर्भावादिति भावः । **सर्वत्राऽण्च** । छन्दसीत्यनुवृत्तिनिवृत्त्यर्थं सर्वत्रग्रहणम् । लोके वेदे चेत्यर्थः । 'हेमन्ताच्चे'ति पूर्वसूत्राद्धेमन्तादित्यनुवर्तते । तदाह—**हेमन्तादित्यादिना** । ननु 'सर्वत्राऽण् तलोपश्चे'त्येव सिद्धे प्रथमचकारो व्यर्थ इत्यत आह—**चकारादिति** । **हैमनमिति** । 'हेमन्ते'त्यत्र तकारात्प्राग् नकारस्यानुस्वारपरसवर्णौ स्थितौ । तत्र तकाराकारसमुदायस्य लोप इति पक्षे 'अ'निति प्रकृतिभावान्न टिलोपः । तकारस्यैव लोप इति पक्षे तु अकारस्य 'यस्येति चे'ति लोपे तस्य आभीयत्वेनासिद्धत्वात्स्थानिवत्त्वाद्वा न टिलोपः । **हैमन्तमिति** । ऋत्वणि रूपम् । अत्र न तलोपः, तस्य एतत्सूत्रप्रतिपदोक्ताऽणा संनियोगशिष्टत्वादिति भावः । **सायंचिरं** । **चतुर्भ्य इति** । सायं चिरं प्राह्णे प्रगे इत्येभ्य इत्यर्थः । **कालवाचिभ्य इति** । 'कालाट्ठ'ञित्यतस्तदनुवृत्तेरिति भावः । **तयोरिति** । ट्युट्युलोरित्यर्थः । ननु 'सायंतन'मित्यादौ कथं योरनादेशः । 'युवोरनाकौ' इति ह्यङ्गाधिकारस्थम् । अङ्गात्परयोर्यु वु इत्येतयोरनाकौ विधीयेते । प्रकृते च अन्तरङ्गत्वात्तुटि'यु'इत्यस्य अङ्गात्परत्वाऽभावादनादेशो न संभवति । नच 'तदागमास्तद्ग्रहणेन गृह्यन्ते' इति न्यायेन 'तु' इत्यस्यापि युग्रहणेन ग्रहणात्तस्याङ्गात्परत्वं निर्बाधमिति वाच्यं, 'निर्दिश्यमानस्यादेशा भवन्ती'ति परिभाषया योरेवाऽनादेशप्राप्तेः, तस्य च तुटा व्यवहितत्वादङ्गात्परत्वाऽभावादित्यत आह—**तुटः प्रागनादेश इति** । कुत इत्यत आह—**निर्देशादिति** । आदिना 'घकालतनेषु' इत्यत्र तनेति ग्राह्यम् ।

---

शो.] 'नस्तद्धिते' इति सूत्रस्थभाष्यस्वरसः । तत्राद्ये कादेशाऽभावटिलोपाऽभावौ 'येषाञ्च विरोधः शाश्वतिकः' इति निपातनात् । शाश्वते चाऽस्मादेव निपातनादव्ययानां भमात्रे इत्यस्याऽनित्यत्वाट्टिलोपाऽभावः । अत एव 'आरातीयः' सिद्धः । **तैषमिति** । तिष्ययुक्ते काले भवमित्यर्थः । **प्रावृष** । 'नहिवृती'ति प्रशब्दस्य दीर्घः । ऋत्वणोऽपवादः । **सर्वत्राण्च** । 'छन्दसी'त्यस्य निवृत्त्यैव सिद्धे 'सर्वत्र'ग्रहणं स्पष्टार्थम् । **तुटः प्रागिति** । अन्यथाऽन्तरङ्गत्वात्तुटि अङ्गात्परस्येत्यर्थे निर्दिश्यमानयुशब्दस्य ततः परत्वाऽभावात् 'यदागमाः' इति न्यायेन तद्विशिष्टस्य ग्रहणेऽपि तस्याऽनिर्दिश्यमानत्वान्नादेशप्राप्तिरिति भावः । **वस्तुतो**ऽङ्गसञ्ज्ञानिमित्तयोरित्यर्थः । 'यदागमाः' इति न्यायेन तद्विशिष्टस्य ग्रहणेऽपि निर्दिश्यमानपरिभाषया तयोरेवादेश इति न दोषः । अत्रार्थे एव स निर्देशो लिङ्गमिति बोद्धव्यम् । एवं शौवस्तिकेऽप्यङ्गसञ्ज्ञानिमित्तठस्येति व्याख्यानात्पूर्वन्तुट्यपि न

सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् । *चिरपरुत्परारिभ्यस्त्नो वक्तव्यः । चिरत्नम् । परुत्नम् । परारित्नम् । *अग्रादिपश्चाड्डिमच् । अग्रिमम् । आदिमम् । पश्चिमम् । *अन्ताच्च । अन्तिमम् । **विभाषा पूर्वाह्णापराह्णाभ्याम्** ।४।३।२४। आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च । पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । 'घकालतनेषु' इत्यलुक् । पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनम् । अपराह्णतनम् । पौर्वाह्णिकम् । आपराह्णिकम् । **तत्र जातः** ।४।३।२५। सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः

---

**त.]** तुटि 'मृत्यु'रित्यादाविव त्युशब्दस्य प्रत्ययतया अङ्गसंज्ञानिमित्तं यो युस्तस्य विधीयमानोऽनादेशो न स्यात् । न चैवं तुगेव क्रियतामिति वाच्यं, तस्य पूर्वान्तत्वेन विसर्गोऽभावात्प्रातस्तनमित्यत्र सत्त्वाऽभावप्रसङ्गात्, अत आह— **तुटः प्रागिति** । **इत्यादीति** । आदिशब्देन 'घकालतनेषु' इति ग्राह्यम् । **सायंतनमिति** । स्यतेर्घञि सायशब्दोऽकारान्तो दिवसावसाने रूढः, तस्य प्रत्ययसंनियोगेन मान्तत्वं निपात्यत इति वार्तिककृन्मतम् । भाष्यकृता तु 'मान्ताव्यय'मित्याश्रित्य सायंग्रहणं प्रत्याख्यातम् । न चैवं सायशब्दात्कालाट्ठञि अनिष्टरूपप्रसङ्गः । तस्य कालवाचित्वाऽभावादनभिधानाद्वेत्याहुः । **चिरंतनमिति** । चिरशब्दस्यापि प्रत्ययसंनियोगेन मान्तता निपात्यत इति भावः । अत्र वदन्ति—स्वरादौ पाठादव्ययत्वादेव सिद्धे सूत्रे चिरमित्येतद्व्यर्थम् । न चादन्ताच्चिरशब्दाट्ठञ्स्यादिति वाच्यम्, तेन बाधादिति । **एदन्तत्वमिति** । प्राह्णः सोढोऽस्य प्राह्णतनमित्याद्यर्थम् । तत्र हि सप्तमी नास्ति । जातार्थे 'घकालतनेषु' इत्यलुकाऽपि सिद्धेः । **चिरत्नमिति** । सूत्रे चिरशब्दस्योपादानाद्ट्युट्युलावपि स्तः । न चैवं सूत्रे चिरशब्दस्य प्रत्याख्यानं न संभवतीति वाच्यम्, मान्ताव्ययादेव ट्युट्युल्विधौ तत्संभवात् । **परुत्=** पूर्वस्मिन्वत्सरे । **परारि=पूर्वतरे** । **अग्रादि** । डिमचो डित्वं स्पष्टार्थम् । **तत्र जातः** । ननु शेषे इत्यस्य लक्षणत्वोक्तेः 'चाक्षुषं रूपं, श्रावणः शब्दः' इत्यादाविव जातादिष्वर्थेष्वणादयः सिद्धाः, अधिकाराच्च घादयोऽपि । न च 'जातादिष्वेवाऽणादयः' इति नियमार्थं जाताद्यर्थनिर्देश आवश्यकः । अन्यथा 'तत्रास्ते, तत्र शेते' इत्याद्यर्थेऽपि प्रत्ययः स्यादिति वाच्यम्, 'चाक्षुष'मित्यादावसिद्ध्यापत्तेः । स्रुघ्ने आस्ते, स्रुघ्ने शेते' इत्यादौ त्वनभिधानादेव तद्धितो न भविष्यति, अङ्गुल्या खनति, वृक्षमूलादागत इत्यादौ यथा । समर्थविभक्त्यस्त्वाक्षेपादेव लप्स्यन्ते । चाक्षुषमित्यत्र तृतीया यथा, तस्मात् 'तत्र जातः' इत्याद्यर्थनिर्देशो व्यर्थ इति चेत् । मैवम् । 'प्रावृषष्ठ'बित्याद्यपवादार्थं तदावश्यकत्वात् । ये तु निरपवादा अर्थनिर्देशाः 'कृतलब्धक्रीतकुशलाः' इत्यादयः, ते तु व्यर्था एवेति

---

**बा.] सायंतनमिति** । 'षो अन्तकर्मणि' इति धातोर्घञि सायशब्दो दिवसावसाने रूढः । तस्माट्ट्युट्युलौ, तयोरनादेशे तुट्, प्रकृतेर्मान्तत्वं निपात्यते । यत्तु सायमिति स्वरादिपठितमव्ययं, तस्याव्ययत्वादेव ट्युट्युलौ सिद्धौ । **चिरंतनमिति** । अत्रापि प्रकृतेर्मान्तत्वं निपात्यते । अस्मादेव लिङ्गाच्चिरमित्यस्याऽव्ययेषु पाठोऽप्रामाणिक इति गम्यते । **प्राह्णेतनमिति** । प्राह्णः सोढोऽस्येति विग्रहः, 'तदस्य सोढ'मित्यर्थस्य निर्देक्ष्यमाणत्वात् । प्राह्णे जात इत्याद्यर्थे तु 'घकालतनेषु' इत्यलुकैव एदन्तत्वं सिद्धम् । **प्रगेतनमिति** । प्रगच्छतीति प्रगः, तस्मिन् जातादिरित्यर्थः । यत्तु 'प्रगे' इत्यव्ययमेदन्तं प्रातरित्यर्थे, तस्यत्वव्ययत्वादेव सिद्धम् । अव्ययेभ्य उदाहरति **दोषातनमिति** । दोषेत्याकारान्तमव्ययं रात्रौ । **दिवातनमिति** । दिवेत्याकारान्तमव्ययमह्नि । **चिरपरुदिति** । चिर्, परुत्, परारि एभ्यस्त्नप्रत्यय इत्यर्थः । **चिरत्नमिति** । ट्युट्युलोरेव प्राप्तयोर्वचनम् । त्नप्रत्ययपक्षे मान्तत्वं न भवति, ट्युट्युल्भ्यां तस्य संनियोगशिष्टत्वात् । 'परु'दिति 'परारी'ति चाव्ययं पूर्वस्मिन् पूर्वतरे च वत्सरे क्रमाद्वर्तते । **अग्रादीति** । वार्तिकमिदम् । अग्र, आदि, पश्चात् एभ्यो डिमच् स्यादित्यर्थः । **पश्चिममिति** । 'अव्ययानां भमात्रे' इति टिलोपः । **अन्ताच्च** । इदमपि वार्तिकम् । **विभाषा पूर्वाह्ण** । **पक्षे ठञिति** । तथा सति न तुट्, तस्य ट्युट्युल्भ्यां संनियोगशिष्टत्वादिति भावः । तदेवं 'राष्ट्रावारे'त्यारभ्य एतदन्तैः सूत्रैः राष्ट्रादिप्रकृतिविशेषेभ्यो घादयः प्रत्ययविशेषा अनुक्रान्ताः । अथ तेषां प्रत्ययानामर्थविशेषान्, प्रकृतीनां च विभक्तिविशेषान् दर्शयितुमुपक्रमते-**तत्र जातः । सप्तमीसमर्थादिति** । सप्तम्यन्तात्कृतसन्धेरित्यर्थः । तत्रेत्यनेन सप्तम्यन्तस्यैव प्रथमा-

---

**शे.]** दोषः । **सायन्तनमित्यादि** । सायचिरयोर्मान्तत्वं निपातनादिति भाष्ये स्पष्टम् । 'साय'मित्यव्ययेषु पठितादव्ययत्वेनैव प्रत्ययसिद्धौ सायंग्रहणं भाष्ये प्रत्याख्यातं । घञन्तसायशब्दस्तु सायाह्नसायतरशब्दयोः, साये इति सप्तम्यन्ते च कालपरः साधुर्नान्यत्रेत्यनभिधानान्न ततष्ठञिति तद्भावः । 'सायमण्डन'मित्यादि त्वसाध्वेव । अत एव यथान्यासे कालाधिकाराऽबाधः । ननु चिरमित्यस्याप्यव्ययेषु पाठात्तद्ग्रहणमपि व्यर्थं, चिरशब्दाट्ठञस्तु प्रत्ययेनैव बाधसिद्धेः । न याव्ययत्वप्रयुक्तट्युट्युलोरनित्यत्वज्ञापनार्थन्तत्, तेन सायंप्रातिकादिसिद्धिरिति वाच्यम्, सायंग्रहणस्यापि तत्सम्भवादिति चेत्सत्यम् । अव्ययेषु

स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीण इत्यादि । **प्रावृषष्ठप्** ।४।३।२६। एण्यस्यापवादः । प्रावृषि जातः प्रावृषिकः । **सञ्ज्ञायां शरदो वुञ्** ।४।३।२७। ऋत्वणोऽपवादः । शारदका दर्भविशेषा मुद्गविशेषाश्च । **उत्तरपदस्य** ।७।३।१०। अधिकारोऽयं 'हनस्त' इत्यस्मात्प्राक् । **अवयवादृतोः** ।७।३।११। अवयववाचिनः पूर्वपदादृतुवाचिनोऽचामादेरचो वृद्धिः स्याञ्ञिति णिति किति च तद्धिते परे । पूर्ववार्षिकः । अपरहैमनः । अवयवात्किम् ? । पूर्वासु वर्षासु भवः पौर्ववर्षिकः । * 'ऋतोर्वृद्धिमद्विधाववयवाना'मिति तदन्तविधिः पूर्वत्र । इह तु न, अवयवत्वाऽभावात् । **सुसर्वार्धाज्जनपदस्य** ।७।३।१२। उत्तरपदस्य वृद्धिः । सुपाञ्चालकः । सर्वपाञ्चालकः । अर्धपाञ्चालकः । 'जनपदतदवध्यो'रिति वुञ् । * 'सुसर्वार्धदिक्शब्देभ्यो जनपद-

त.]दिक् । **संज्ञायां शरदः** । समुदायेन चेत्संज्ञा गम्यत इत्यर्थः । संज्ञायां किम् ? । शारदं सस्यम् । 'संज्ञाया'मित्येतत् 'कृतलब्धे'त्येतत्पर्यन्तं केचिदनुवर्तयन्तीति वृत्तिकृत् । **अवयवादृतोः** । **पूर्ववार्षिक इत्यादि** । वर्षाणां पूर्वः, हेमन्तस्यापर इति विग्रहे 'पूर्वापराधरोत्तर'मित्येकदेशिसमासः । **पूर्वास्विति** । तद्धितार्थे समासः । **ऋतोर्वृद्धिमद्विधाविति** । ऋतुवाचिनः शब्दाद्वृद्धिनिमित्तकप्रत्ययविधाने तदन्तविधिर्वाच्यः, स चेदृतुवाची शब्दोऽवयवेभ्यः पर इत्यर्थः । **पूर्वत्रेति** । 'पूर्ववार्षिकः' अपरहैमन' इत्यत्र । तथा च 'वर्षाभ्यष्ठक्', 'सर्वत्राण्च तलोपश्चे'त्याभ्यां क्रमेण ठगणौ भवतः । वृद्धिमद्विधौ किं ? । पूर्वप्रावृषम् । 'प्रावृष एण्यः' इत्यत्र तदन्तविध्यभावादिह ऋत्वणेव । **इह त्विति** । 'पौर्ववर्षिक' इत्यत्र । तथा चेह—'कालाट्ठ'ञिति ठञेवेति भावः । **अवयवत्वाभावादिति** । अन्यथा पूर्वासु वर्षास्विति सामानाधिकरण्यं न सङ्गच्छेतेति भावः । **सुसर्वा** । **जनपदतदवध्योरितीति** । तस्मिन्ननुवर्तमाने 'अवृद्धादपि

बा.]निर्दिष्टत्वादिति भावः । **अणादय इति** । अपत्यादिविकारान्तार्थसाधारणा इत्यर्थः । **घादय इति** । 'राष्ट्रावारपारे'त्यादिभिर्विशेषविहिता इत्यर्थः । **प्रावृषष्ठप्** । ठपः पित्त्वम् 'अनुदात्तौ सुप्पितौ' इति स्वरार्थम् । **एण्यस्येति** । 'प्रावृष एण्यः' इति विहितस्येत्यर्थः । एवंच 'प्रावृष एण्यः' इति सूत्रं जातादन्यार्थमिति पर्यवस्यति । **संज्ञायां शरदो वुञ्** । संज्ञायामित्येतत् 'कृतलब्धक्रीते'त्येतत्पर्यन्तमनुवर्तत इति केचिदिति वृत्तिकृतः । **उत्तरपदस्य** । **अधिकारोऽयमिति** । सप्तमे आदिवृद्धिप्रकरणे एतदादिसूत्राणि । **अवयवादृतोः** । **पूर्वपदादिति** । 'परस्ये'ति शेषः । **ऋतुवाचिन इति** । 'उत्तरपदस्ये'ति शेषः । **पूर्ववार्षिक इति** । ऋतुविशेषे वर्षाशब्दो नित्यस्त्रीलिङ्गो बहुवचनान्तः । वर्षाणां पूर्वं-पूर्ववर्षाः, तत्र जात इत्यर्थः । 'पूर्वापराधरोत्तर'मित्येकदेशिसमासः । **अपरहैमन इति** । हेमन्तस्यापरम्—अपरहेमन्तः । तत्र जातादिरित्यर्थः । एकदेशिसमासः । 'सर्वत्राण्च तलोपश्चे'त्यण्, तलोपश्च, उत्तरपदादिवृद्धिः । **पूर्वासु वर्षास्विति** । 'तद्धितार्थ' इति समासः । आदिवृद्धिरेव, न तु उत्तरपदादिवृद्धिः, पूर्वपदस्य अवयववृत्तित्वाऽभावात् । ननु कथमिह 'वर्षाभ्यष्ठ'गिति ठक्, प्रत्ययविधौ तदन्तविधिप्रतिषेधात्, तत्राह—**ऋतोरिति** । अवयववाचकानां शब्दानामुपरि स्थितादृतुवाचकाद्वृद्धिनिमित्तकप्रत्ययविधाने कर्तव्ये तदन्तविधिर्वाच्य इत्यर्थकेन 'येन विधि'रिति सूत्रभाष्यस्थितवचनेन पूर्वत्र=पूर्वमुदाहृते उदाहरणे तदन्तविधिरित्यर्थः । तथाच पूर्ववार्षिक इत्यत्र 'पूर्वहैमन' इत्यत्र चोदाहरणे 'वर्षाभ्यष्ठ'गिति ठक्, 'सर्वत्राण् च तलोपश्चे'त्यण्तलोपौ च सिध्यन्ति । **इह तु नेति** । प्रत्युदाहरणे तु तदन्तविधिर्नास्ति । पूर्वासु वर्षास्विति सामानाधिकरण्येन पूर्वशब्दस्य अवयववृत्तित्वाऽभावादित्यर्थः । ततश्च प्रत्युदाहरणे 'पौर्ववर्षिक' इत्यत्र 'कालाट्ठञि'ति ठञेव, नतु ठक् । स्वरे विशेषः । पौर्वहेमन्तिक इत्यत्रापि ठञेवेति भावः । **सुसर्वार्धाज्जनपदस्य** । सु, सर्व, अर्ध इत्येतत्पूर्वस्य जनपदवाचिन इत्यर्थः । **उत्तरपदस्य वृद्धिरिति** । शेषपूरणम् । **सुपाञ्चालक इति** । सुपञ्चालेषु जात इत्यर्थः । **जनपदेति** । 'जनपदतदवध्यो'रित्यनुवृत्तौ 'अवृद्धादपि बहुवचनविषया'दिति वुञित्यर्थः । ननु 'अवृद्धादपी'ति प्रत्ययविधौ

शे.]तस्याऽप्रामाणिकत्वात् । **परुत्**=पूर्ववत्सरे । **परारि**=पूर्वतरे । **सञ्ज्ञायां श** । प्रकृतिप्रत्ययसमुदायेन चेत्सञ्ज्ञा गम्यत इत्यर्थः । नेह—शारदं सस्यम् । **उत्तरपदस्य** । **अधिकारोऽयमिति** । अत एव 'उत्तरपदवृद्धौ सर्वं चे'तिस्वरविधायके उत्तरपदाधिकारविहितवृद्धिपरिग्रहः सिद्ध्यति । **पूर्ववार्षिके**—वर्षाणां पूर्वं इत्येकदेशिसमासः । आदिवृद्धिस्तु न, उत्तरपदवृद्धेस्तदपवादत्वात् । अत एव 'द्वन्द्वगे'ति सूत्रे 'पूर्वपदस्य चे'ति चरितार्थं, सत्यपि सम्भवे बाधात् । **पूर्वास्विति** । 'तद्धितार्थ' इति समासः ।

**ऋतोरिति** । ऋतुवाचकाद्वृद्धिनिमित्तप्रत्ययविधौ तदन्तविधिर्वक्तव्योऽवयववाचकानां पूर्वपदत्वे इत्यर्थः । **पूर्वत्र**=उदाहरणे । तेन तत्र 'वर्षाभ्यष्ठक्' 'सर्वत्राऽण्चे'ति ठगणौ सिद्धौ । **इह तु** = प्रत्युदाहरणे । तेन तत्र कालाठ्ठञेव । वृद्धिमद्विधौ किम् ? । पौर्वप्रावृषम् । इह एण्यो न । वाचनिक एवायं तदन्तविधिः । **जनपदेति** । तदधिकारे 'अवृद्धादपी'त्यनेनेत्यर्थः । **सुसर्वार्धेति** । जनपदवाचिनः शब्दस्याऽनन्तरे प्रत्यये विधीयमाने तदन्तविधिः, यदि सुप्रभृतिभ्यः परः सम्भवतीत्यर्थः ।

स्ये'ति तदन्तविधिः । दिशोऽमद्राणाम् ।७।३।१३। दिग्वाचकाज्जनपदवाचिनो वृद्धिः । पूर्वपाञ्चालकः । दिशः किम् ? । पूर्वंपञ्चालानामयं पौर्वपञ्चालः । अमद्राणां किम् ? । पौर्वमद्रः । योगविभाग उत्तरार्थः । प्राचां ग्रामनगराणाम् ।७।३।१४। दिशः परेषां ग्रामवाचिनां नगरवाचिनां चाङ्गानामवयवस्य च वृद्धिः । पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः । नगरे-पूर्वपाटलिपुत्रकः । पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ।४।३।२८। पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः । पथः पन्थ च ।४।३।२९। पथि जातः पन्थकः । अमावास्याया वा ।४।३।३०। अमावास्यकः । आमावास्यः । अ च ।४।३।३१। अमावास्यः । सिन्ध्वपकराभ्यां कन् ।४।३।३२। सिन्धुकः । कच्छाद्यणि मनुष्यवुञि च प्राप्ते ।

---

त.] बहुवचनविषया'दित्यनेनेत्यर्थः । दिशो । पौर्वमद्र इति । 'मद्रेभ्योऽ'ञित्यञ् । पूर्वाह्णक इति । 'विभाषा पूर्वाह्णापराह्णाभ्या'मित्यस्यापवादः । आर्द्रकः । मूलक इति । नक्षत्राऽणोऽपवादः । प्रदोषक इति । 'निशाप्रदोषाभ्यां चे'त्यस्यापवादः । अवस्करक इति । औत्सर्गिकस्याऽणोऽपवादः । ये तु 'संज्ञाया'मित्येतत् 'कृतलब्धे'त्येतत्पर्यन्तमनुवर्तयन्ति, तन्मते संज्ञायां यथाययमणादयो घादयश्च बोध्याः । अमावास्याया वा । सन्धिवेलाद्यणोऽपवादः । 'अमावस्यदन्यतरस्या'मिति सूत्रेणाऽमापूर्वाद्वसेर्ण्यति वृद्धौ पक्षे ह्रस्वत्वं निपात्यत इति ह्रस्वमध्यस्याप्यमावस्याशब्दस्येह ग्रहणम्, प्रकृतिग्रहणे विकृतेरपि ग्रहणात् । अमावस्यकः । आमावस्यः । ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधं पठन्ति, तेषां तु दीर्घोपधस्य न स्यात्, विकृतिग्रहणेन प्रकृतेरग्रहणादिति हरदत्तादयः । वस्तुतस्तु वृद्धिप्रकृतिभूतस्यानुकरणमिदमित्याश्रित्य ह्रस्वोपधपाठोऽपि समर्थयितुं शक्यत इत्यन्ये । अ च ।

---

बा.] कथं तदन्तविधिरित्यत आह-सुसर्वेति । सु, सर्व अर्ध, दिक्शब्द-एभ्यः परस्य जनपदवाचिन उपरि प्रत्ययविधौ तदन्तविधिरित्यर्थकेन 'येन विधि'रिति सूत्रभाष्यपठितवचनेन तदन्तविधिरित्यर्थः । दिशोऽमद्राणाम् । 'अमद्राणा'मिति च्छेदः । दिग्वाचकादिति । 'परस्ये'ति शेषः । जनपदवाचिन इति । मद्रवाचिभिन्नस्येत्यपि बोध्यम् । वृद्धिरिति । 'आदे'रिति शेषः । पौर्वपञ्चाल इति । अत्र पूर्वशब्दः कालवाचीति भावः । पौर्वमद्र इति । 'मद्रेभ्योऽञि'त्यञ् । ननु 'सुसर्वार्धदिशो जनपदस्याऽमद्राणा'मित्येकसूत्रमेवास्त्वित्यत आह—योगविभाग उत्तरार्थ इति । 'प्राचां ग्रामनगराणा'मित्युत्तरसूत्रे दिश एव संबन्धो यथा स्यादित्येवमर्थमित्यर्थः । एकसूत्रत्वे तु सुसर्वादिभ्यः परस्यापि मद्रशब्दस्य पर्युदासः प्रसज्येतेति इहार्थोऽपीत्येके । प्राचां ग्रामनगराणां । दिश इति । दिशः परे ये प्राच्यग्रामवाचिनः प्राच्यनगरवाचिनश्च तेषामवयवस्यादेर्वृद्धिः स्यादित्यर्थः । पूर्वेषुकामशम्यामिति । 'दिक्संख्ये संज्ञायाम्' इति समासः । अण् । संज्ञात्वात् 'दिक्पूर्वपदा'दिति ङीप् न । समुदायस्य ग्रामनामत्वेऽपि उत्तरपदस्यापि तन्नामत्वमस्तीति उत्तरपदादिवृद्धिः । नगरे इति । उदाहरणसूचनम् । पूर्वपाटलिपुत्रक इति । 'पूर्वापरप्रथमे'ति समासः । 'अवृद्धादपी'ति वुञ् । यद्यपि पाटलिपुत्रशब्दे उत्तरपदे आदिर्वृद्धिरेव । तथापि पूर्वपदस्य वृद्धिनिवृत्तिः फलम् । पूर्वाह्णापराह्ण । पूर्वाह्णकः अपराह्णक इति । पूर्वाह्णे अपराह्णे च जात इत्यर्थः । 'विभाषा पूर्वाह्णापराह्णाभ्या'मित्यस्यापवादः । ट्युट्युलोष्ठञ्श्च विकल्पस्तु जातादन्यार्थे सावकाश इति भावः । आर्द्रकः मूलक इति । आर्द्रायां मूले च जात इत्यर्थः । ऋत्वणोऽपवादः । प्रदोषक इति । 'निशाप्रदोषाभ्या'मित्यस्यापवादः । अवस्करक इति । औत्सर्गिकस्याऽणोऽपवादः । पथः पन्थ च । पथिन्शब्दाद्वुन् स्यात्, प्रकृतेः पन्थादेशश्च । अमावास्याया वा । 'वु'निति शेषः । पक्षे सन्धिवेलादित्वादण् । एकदेशविकृतन्यायादमावस्याशब्दादप्ययं विधिः । अ च । 'अ' इति लुप्तप्रथमाकम् । अमावास्याशब्दादकारः प्रत्ययोऽपीत्यर्थः ।

---

शे.] अयमपि वाचनिक एव । पौर्वपञ्चाल इति । अत्र पूर्वशब्दो देशवाची । कालवाचीत्यपि कश्चित् । 'दिक्शब्द'पदेन च दिग्वाचक[शब्द]स्यैव ग्रहणम् । अतोऽत्र तदन्तविधिविषयाऽभावान्न वुञ् । शब्दग्रहणन्तु स्पष्टार्थमेव । पौर्वमद्रे—'मद्रेभ्योऽ'ञित्यञ् । वृद्धिविधायके प्रतिपदोक्तत्वाज्जनपदतदवध्योश्चेति प्रत्ययस्यैव ग्रहणेन तत्रैव तज्ज्ञापितोऽयं तदन्तविधिरित्ययुक्तम्, 'अमद्राणा'मित्यस्य वैयर्थ्यापत्तेः । उत्तरार्थं इति । 'प्राचां ग्रामे'त्युत्तरसूत्रे दिश एव सम्बन्धो यथा स्यादित्यर्थमित्यर्थः । सुसर्वार्द्धा । 'दिशो जनपदस्याऽमद्राणा'मित्युक्ते स्वादिभ्यः परस्यापि मद्रस्य पर्युदासः सम्भाव्येतेतीहार्थोऽपि स इत्यन्ये । प्राचां ग्रा । प्राचामिति देशनिर्देशः । यद्यपि नगरस्यापि ग्रामत्वमस्ति तथापि नगराणामित्युत्तरपदविशेषणं, ग्रामाणामित्यङ्गविशेषणमित्यर्थमुभयम् । पूर्वेषुकामशम्यादिः—समुदायो ग्रामनामधेयं । पूर्वपाटलिपुत्रादावुत्तरपदमेव नगरमाहेति वृत्तिः । भाष्ये तु ग्रामत्वादेव सिद्धे नगरग्रहणं प्रत्याख्यातम् । पूर्वेषुकामशम्यादौ पदैकदेशन्यायेनोत्तरपदस्यापि ग्रामनाम[धेय]त्वमस्त्येवेति तदाशयः । तदत्र मूलेऽपि ध्वनितं, तदाह—दिश इत्यादिना । पूर्वेषुकामशमेरण् । प्रकृतेः सञ्ज्ञात्वात् 'दिक्पूर्वपदा'दिति ङी न । पूर्वपाटलीति । पाटलिपुत्रशब्दस्तदवयवे [illegible] इति [illegible] । अमावास्याया वा । पक्षे सन्धिवेलाद्यण् । सूत्रे

अपकरकः । औत्सर्गिकेऽणि प्राप्ते । **अणञौ च** ।४।३।३३। क्रमात् स्तः । सैन्धवः । आपकरः । **श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाऽषाढाबहुलाल्लुक्** ।४।३।३४। एभ्यो नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्ययस्य लुक्स्यात् । **लुक्तद्धितलुकि** ।१।२।४९। तद्धितलुकि सत्युपसर्जनस्त्रीप्रत्ययस्य लुक्स्यात् । श्रविष्ठासु जातः श्रविष्ठः । फल्गुन इत्यादि । ॐ **चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानम्** । चित्रायां जाता चित्रा । रेवती रोहिणी—आभ्यां 'लुक्तद्धितलुकी'ति लुकि कृते पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीष् । ॐ **फल्गुन्यषाढाभ्यां टाऽनौ वक्तव्यौ** । स्त्रियामित्येव । फल्गुनी । अषाढा । ॐ **श्रविष्ठाऽषाढाभ्यां छण्वक्तव्यः** । अस्त्रियामपि । श्राविष्ठीयः । आषाढीयः । **जे प्रोष्ठपदानाम्** ।७।३।१८।

त.] अमावास्याशब्दादकारप्रत्ययः स्यात् । अयमपि पूर्ववदुभाभ्यां बोध्यः । **अमावास्य इति** । ह्रस्वमध्यात्तु अमावस्यः । **अणञौ च** । यथासङ्ख्यार्थो योगविभागः । **श्रविष्ठा** । इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः । माधवस्तु 'दीर्घान्तः' इति 'अत सातत्यगमने' इति धातावाह । एवं चात्र स्वाती तिष्येति ङीषन्तग्रहणादङीषन्तस्य सौवात इति रूपं भवार्थ इव जातार्थेऽपि माधवमते सिध्यत्येव । कैयटादिमते तु जातार्थे न सिध्यति । लुग्विधायकेऽस्मिन्ङीषन्तग्रहणेऽपि लिङ्गविशिष्टपरिभाषया ङीषन्तादपि अणो लुकः प्रवृत्तेः । **लुक्** । **उपसर्जनेति** । अप्रधानमिहोपसर्जनं गृह्यते, न शास्त्रीयम् , असंभवात् । ननु 'गोस्त्रियो'रिति सूत्रेऽप्यप्रधानलक्षणमेवोपसर्जनं गृह्यताम् 'एकविभक्ति चे'ति शास्त्रीयं न गृह्यताम् । मैवम् । हरीतक्याः फलानि हरीतक्य इत्यत्र ह्रस्वप्रसङ्गात् । उपसर्जनस्य किम् ? । अवन्ती, कुन्ती, कुरूः । **श्रविष्ठास्विति** । **श्रविष्ठा**=धनिष्ठाः । **इत्यादीति** । आदिशब्दादनूराधः । स्वातिः । तिष्यः । पुनर्वसुः । हस्तः । विशाखः । अषाढः । बहुलः । कृत्तिकावाची बहुलाशब्दष्टाबन्तः, तस्य समाहारद्वन्द्वेन ह्रस्वनिर्देशः सूत्रे । **उपसङ्ख्यानमिति** । 'लुक्' इति शेषः । **चित्रेति** । 'लुक्तद्धिते'ति

बा.] आदिवृद्ध्यभावः प्रयोजनम् । **सिन्ध्वपकराभ्यां कन्** । **सिन्धुक इति** । सिन्धौ जात इत्यर्थः । **कच्छादीति** । 'कच्छादिभ्यश्चे'त्यणि 'मनुष्यतत्स्थयोर्वुञ्' इति वुञि च प्राप्तेऽयं कन्विधिरित्यर्थः । **अपकरक इति** । अपकरे जात इत्यर्थः । **अणि प्राप्ते इति** । 'कन्विधि'रिति शेषः । **अणञौ च** । **क्रमात्स्त इति** । 'सिन्ध्वपकराभ्या'मिति शेषः । **श्रविष्ठा** । **एभ्य इति** । श्रविष्ठा, फल्गुनी, अनुराधा, स्वाति, तिष्य, पुनर्वसु, हस्त, विशाखा, अषाढा, बहुला—एतेभ्य इत्यर्थः । **जातार्थेति** । प्रकरणलभ्यमिदम् । स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तौ । दीर्घान्त इति 'अत सातत्यगमने' इति धातौ माधवः । कृत्तिकावाचिबहुलाशब्दष्टाबन्तः । समाहारद्वन्द्वे ह्रस्वनिर्देशः । **लुक्तद्धितलुकि** । प्रथमस्य द्वितीये इदं सूत्रम् । **उपसर्जनस्त्रीप्रत्ययस्येति** । 'गोस्त्रियोरुपसर्जनस्ये'त्यतस्तदनुवृत्तेरिति भावः । **श्रविष्ठ इति** । ऋत्वणो लुकि स्त्रीप्रत्ययस्य निवृत्तिः । 'लुक्तद्धितलुकी'त्यत्र अप्रधानमेवोपसर्जनम् , नतु शास्त्रीयम् , असंभवादिति भावः । **फल्गुन इति** । फल्गुन्योर्जात इत्यर्थः । अणो लुकि स्त्रीप्रत्ययनिवृत्तिः । **इत्यादीति** । अनुराधासु जातोऽनुराधः । नक्षत्राऽणो लुकि स्त्रीप्रत्ययनिवृत्तिः । एवमग्रेऽपि । 'अनुराधान् हविषा वर्धयन्तः' इत्यादौ छान्दसं पुंस्त्वम् । स्वात्यां जातः—स्वातिः । तिष्ये जातस्तिष्यः । पुनर्वस्वोर्जातः—पुनर्वसुः । हस्ते जातो—हस्तः । विशाखयोर्जातो—विशाखः । अषाढासु जातोऽषाढः । बहुलासु जातो बहुलः । **चित्रेति** । चित्रादिभ्यः परस्य स्त्रीरूपजातार्थकप्रत्ययस्य लुगित्यर्थः । **रेवती रोहिणीति** । जातायां नक्षत्राऽणो लुकि सति प्रकृतेर्गौरादिस्त्रीप्रत्ययनिवृत्तौ जातार्थगतस्त्रीत्वे पुनर्ङीष् । ननु 'रेवती नक्षत्रे' 'रोहिणी नक्षत्रे' इति गौरादौ पाठादिह जातार्थवृत्तिभ्यां कथं ङीषित्यत आह—**आभ्यामिति** । रेवतीरोहिणीशब्दाभ्यामित्यर्थः । 'परस्य स्त्रीत्वविशिष्टजातार्थप्रत्ययस्ये'ति शेषः । **आकृतिगणत्वादिति** । स्त्रीत्वविशिष्टजातार्थवृत्त्योरनयोः पिप्पल्यादौ निवेशे भाष्योदाहरणमेव प्रमाणम् । **स्त्रियामित्येवेति** । तथा भाष्यादिति भावः । फल्गुनी, अषाढा इत्याभ्यां क्रमाट्टः अन् च स्त्रीत्वविशिष्टजातार्थे वक्तव्यावित्यर्थः । **फल्गुनीति** । फल्गुन्योर्जातेत्यर्थः । नक्षत्राऽणोऽपवादष्टप्रत्ययः । 'यस्येति चे'ति ईकारलोपः । जातार्थस्त्रीत्वे टित्त्वान्ङीप् । **अषाढेति** । अषाढासु जातेत्यर्थः । नक्षत्राऽणोऽपवादोऽन् । 'यस्येति च' इत्याकारलोपः । जातार्थे स्त्रीत्वे टाप् । 'श्रविष्ठाफल्गुनी' त्यादिना टाऽनोर्लुक् तु न, विधानसामर्थ्यात् । **छण्वक्तव्य इति** । नक्षत्राऽणोऽपवादः । विधिसामर्थ्यादस्यापि न लुक् । **अस्त्रियामपीति** । अत्र स्त्रियामिति न संबध्यते, भाष्ये तथोदाहरणादिति भावः । **श्राविष्ठीय इति** । श्रविष्ठासु जात

शे.] दीर्घपाठ इति अत्र सूत्रे, 'अमावस्यदन्यतरस्या'मिति सूत्रे च भाष्ये स्पष्टम् । **नक्षत्रवाचिभ्य इति** । नक्षत्रयुक्तचन्द्रवाचिभ्य इत्यर्थः । **लुक्** । अप्रधानमिहोपसर्जनं, न शास्त्रीयम् , असम्भवात् । **चित्रेति** । 'लुक्तद्धिते'ति लुकि जातार्थगतस्त्रीत्वप्रतिपादनाय पुनष्टाप् । **पिप्पल्यादेरिति** । अन्यथा 'रेवतीरोहिणीनक्षत्रे' इति गौरादिषु पाठान्नक्षत्रवाचित्वाऽभावेन स न स्यादिति भावः ।

प्रोष्ठपदानामुत्तरपदस्याऽचामादेरचो वृद्धिः स्याज्जातार्थे ञिति णिति किति च । प्रोष्ठपदासु जातः प्रोष्ठपादो माणवकः । जे इति किम् ? । प्रोष्ठपदासु भवः प्रौष्ठपदः । बहुवचननिर्देशात्पर्यायोऽपि गृह्यते । भद्रपादः । **स्थानान्तगोशालखरशालाच्च** ।४।३।३५। एभ्यो जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थानः । गोशालः । खरशालः । 'विभाषा सेने'ति नपुंसकत्वे ह्रस्वत्वम् । **वत्सशालाऽभिजिदश्वयुक्छतभिषजो वा** ।४।३।३६। एभ्यो जातार्थस्य लुग्वा स्यात् । वत्सशाले जातो वत्सशालः । वात्सशालः । इत्यादि । *** जातार्थे प्रतिप्रसूतोऽण्वा ङिद्वक्तव्यः** । शातभिषजः । शातभिषः । शतभिषक् । **नक्षत्रेभ्यो बहुलम्** ।४।३।३७। जातार्थप्रत्ययस्य बहुलं लुक्स्यात् । रोहिणः । रौहिणः । **कृतलब्धक्रीतकुशलाः** ।४।३।३८। तत्रेत्येव । स्रुघ्ने कृतो लब्धः क्रीतः कुशलो वा-स्रौघ्नः । **प्रायभवः** ।४।३।३९। तत्रेत्येव । स्रुघ्ने प्रायेण= बाहुल्येन भवति स्रौघ्नः । **उपजानूपकर्णोपनीवेष्ठक्** ।४।३।४०। औपजानुकः । औपकर्णिकः । औपनी-

---

त.] लुकि पुनष्टाप् **टाऽनाविति** । विधानसामर्थ्यादनयोर्न लुक् । **स्थानान्त** । गोशालेत्यत्र 'विभाषा सेने'ति नपुंसकत्वे ह्रस्वत्वं, तत्साहचर्यात्खरशालेऽप्येवमेव । न चैवं स्त्रीत्वपक्षे लुङ् न स्यादिति शङ्क्यं, लिङ्गविशिष्टपरिभाषया तत्रापि लुक्सिद्धेरित्याहुः । यद्यपि टाबन्तयोः पाठेऽप्येकदेशविकृतन्यायेन क्लीबेऽपीष्टं सिध्यति, तथापि लाघवार्थं ह्रस्व-पाठः । **नपुंसकत्वे ह्रस्वत्वमिति** । 'सूत्रे' इति शेषः । **वत्सशालाभि** । **वत्सशाले जात इति** । वत्सशाला-यामित्यपि बोध्यम् । **इत्यादीति** । आदिशब्दादभिजित्–आभिजितः, अश्वयुक्–आश्वयुजः । **प्रतिप्रसूत इति** । कालाट्ठञा निवर्तमानो य औत्सर्गिकोऽण् 'सन्धिवेलादि'सूत्रेण पुनरभ्यनुज्ञात इत्यर्थः । **कृतलब्ध** । ननु कृतक्रीत-त्वे जातलब्धत्वयोर्व्याप्ये इति किमनयोर्ग्रहणेन ? । सत्यम् । कृतत्वक्रीतत्वप्रकारकबोधेऽपि प्रत्ययार्थे तद्ग्रहणम् । अत एव जाते लुग्भाजामपि कृते न लुक् । **प्राय** । कादाचित्कभवनाश्रयः—**प्रायभवः** । तेन 'तत्र भवः' इत्यनेन न गतार्थतेत्याहुः । भाष्ये तु प्रत्याख्यातमेतत्, 'प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वा'दिति । **उपजानू** ।

---

बा.] इत्यर्थः । छण् । ईयः । 'यस्येति चे'त्याकारलोपः । णित्वादादिवृद्धिः । **आषाढीय इति** । अषाढासु जात इत्यर्थः । **जे प्रोष्ठपदानाम्** । आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम् । तदाह—**प्रोष्ठपदानामिति** । जशब्देन जातार्थप्रत्ययो विवक्षितः । तदाह—**जातार्थे इति** । 'प्रोष्ठपदाना'मिति बहुवचनस्य प्रयोजनमाह-**बहुवचनेति** । **भद्रपाद इति** । भद्रपदासु जात इत्यर्थः । **स्थानान्तगोशाल** । **एभ्य इति** । स्थानान्त, गोशाल, खरशाल– एतेभ्य इत्यर्थः । **गोस्थान इति** । गोस्थाने जात इत्यर्थः । **गोशाल इति** । गोशाले जात इत्यर्थः । एवं खर-शालः । सर्वत्र अणो लुकि नादिवृद्धिः । ननु शालाशब्दस्य स्त्रीलिङ्गत्वाद्ध्रस्वनिर्देशोऽनुपपन्न इत्यत आह—**विभाषा सेनेति** । लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि लुक् । **वत्सशालाभिजित्** । **एभ्य इति** । वत्सशाला, अभिजित्, अश्वयुज्, शतभिषज् इत्येभ्य इत्यर्थः । 'परस्ये'ति शेषः । **इत्यादीति** । अभिजिति जात आभिजितः, अभिजित् । अश्वयुजोर्जातः–आश्वयुजः, अश्वयुक् । शतभिषजि जातः–शातभिषजः, शतभिषक् । **जातार्थे इति** । 'कालाट्ठ-ञि'ति ठञा निवर्तित औत्सर्गिकोऽण् सन्धिवेलादिसूत्रेण पुनरुत्थितो ङिद्वा वक्तव्य इत्यर्थः । 'दृष्टं सामे'ति सूत्र-भाष्ये इदं वार्तिकं दृष्टम् । **शातभिष इति** । अणि ङित्त्वपक्षे टिलोपः । **नक्षत्रेभ्यो बहुलं** । **रोहिण इति** । रोहिण्यां जात इत्यर्थः । नक्षत्राऽणो लुकि आदिवृद्धिनिवृत्तौ 'लुक्तद्धितलुकी'ति स्त्रीप्रत्ययनिवृत्तिः । नच तथा सति तकारस्य नकारोऽपि निवर्तेतेति वाच्यं, न हि रोहितशब्दोऽयं वर्णविशेषवाचको येन 'वर्णादनुदात्ता'दिति ङीपो निवृत्तौ तकारोऽपि निवर्तेत । किंतु रोहिणीशब्दोऽयमव्युत्पन्नो नक्षत्रविशेषे रूढः । 'रोहिणी नक्षत्रे' इति गौरादि-पाठान्ङीष् । अत एव 'रोहिणी नक्षत्रं प्रजापतिर्देवते'त्यादौ अन्तोदात्तत्वं श्रूयमाणं न विरुध्यते । अन्यथा 'वर्णानां तणतिनितान्ताना'मित्याद्युदात्तत्वं स्यादित्यलम् । **कृतलब्ध** । **तत्रेत्येवेति** । 'तत्र जातः' इत्यतस्तत्रेत्येवानुवर्तते । 'जात' इति तु निवृत्तमित्यर्थः । तथा च कृतो लब्धः क्रीतः कुशलो वेत्यर्थे सप्तम्यन्तादणादयो घादयश्च यथायथं स्युरित्यर्थः । **स्रौघ्न इति** । औत्सर्गिकोऽण् । राष्ट्रे कृतो राष्ट्रिय इत्याद्यप्युदाहार्यम् । **प्रायभवः** । **तत्रेत्येवेति** । प्रायभव इत्यर्थे सप्तम्यन्तादणादयो घादयश्च यथायथं स्युरित्यर्थः । प्रायशब्दस्य व्याख्यानम्—**बाहुल्येनेति** ।

---

शे.] **टाऽनाविति** । विधानसामर्थ्यान्नाऽनयोर्लुक् । **स्त्रियामित्येवेति** । फल्गुनी अषाढेति भाष्योदाहरणात् । **अस्त्रियामपीति** । 'श्राविष्ठायः' इत्यादिभाष्योदाहरणात् । अत्र 'चित्रारेवती'त्यादि लुग्वचनं भाष्ये 'नक्षत्रेभ्यो बहुल'मित्याश्रित्य प्रत्याख्यातम् । **स्थानान्तगो** । सूत्रे समाहारद्वन्द्वपूर्वपदकसमाहारद्वन्द्वः । तेन स्त्रीलिङ्गयोर्गोशालाखरशालाशब्दयोर्ग्रहणम् । **विभाषेति** । अस्य 'यद्यपी'त्यादिः । 'तथाऽप्येकदेशविकृतन्यायेन तत्रापि लु'गिति शेषः । एतेन 'कृतनपुंसकह्रस्वानामेव द्वन्द्वः, गोशालाखरशालयोस्तु लिङ्गविशिष्टपरिभाषया सिद्ध'मिति [illegible] । कृतह्रस्वस्य लिङ्गप्रत्ययवैशिष्ट्याऽसम्भवात् । **प्रतिप्रसूत इति** । काला-

विकः । **संभूते** ।४।३।४१। स्रुघ्ने संभवति स्रौघ्नः । **कोशाड्ढञ्** ।४।३।४२। कौशेयं वस्त्रम् । **कालात्साधुपुष्प्यत्पच्यमानेषु** ।४।३।४३। हेमन्ते साधुः हैमन्तः प्रावारः । वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। शरदि पच्यन्ते—शारदाः शालयः । **उप्ते च** ।४।३।४४। हेमन्ते उप्यन्ते हैमन्ता यवाः । **आश्वयुज्या वुञ्** ।४।३।४५। ठञोऽपवादः । आश्वयुज्यामुप्ता आश्वयुजका माषाः । **ग्रीष्मवसन्तादन्यतरस्याम्** ।४।३।४६। पक्षे ऋत्वण् । ग्रैष्मकम् । ग्रैष्मम् । वासन्तकम् । वासन्तम् । **देयमृणे** ।४।३।४७। कालादित्येव । मासे देयमृणं मासिकम् । **कलाप्यश्वत्थयवबुसाद्वुन्** ।४।३।४८। यस्मिन् काले मयूराः कलापिनो भवन्ति स उपचारात्कलापी, तत्र देयमृणं कलापकम् । अश्वत्थस्य फलमश्वत्थः । तद्युक्तः कालोऽप्यश्वत्थः । यस्मिन्कालेऽश्वत्थाः फलन्ति तत्र देय[मृण]मश्वत्थकम् । यस्मिन् यवबुसमुत्पद्यते तत्र देयमृणं—यवबुसकम् । **ग्रीष्मावरसमाद्वुञ्** ।४।३।४९। ग्रीष्मे देयमृणं ग्रैष्मकम् । आवरसमकम् । **संवत्सराग्रहायणीभ्यां ठञ्च** ।४।३।५०। चाद्वुञ् । सांवत्सरि-

---

**त.]** त्रयोऽप्यमी सामीप्येऽव्ययीभावाः । तेषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । **संभूते** । इह तत्रादिना संभावना, आधारपरिमाणादाधेयस्यानतिरेकश्चेति द्वयमप्याश्रीयते । **स्रौघ्न इति** । स्रुघ्ने संभाव्यते, तत्परिमाणानतिरिक्तो वा सेनादिरित्यर्थः । **कोशात्** । **कौशेयमिति** । वस्त्रविशेषे योगरूढोऽयम् । कोशे संभवस्तु सत्कार्यवादाभिप्रायेण । मतान्तरे तु विकारप्रकरणे 'एण्या ढ'ञित्यस्यानन्तरं 'कोशाच्चे'ति पठितव्यम् । तथा च वार्तिकं 'विकारे कोशाड्ढञ्', संभूते ह्यर्थानुपपत्ति'रिति । **कालात्** । 'पुष्प्य'दिति दैवादिकः शत्रन्तः । तदाह—**पुष्प्यन्तीति** । **उप्ते च** । 'काला'दित्येव । योगविभाग उत्तरार्थः । **उप्यन्त इति** । सूत्रे भूतकालोऽतन्त्रमिति भावः । **आश्वयुज्या वुञ्** । ञकारः स्वरार्थ, उत्तरत्र पृथगर्थश्च । **आश्वयुज्यामिति** । अश्विनीनक्षत्रपर्यायोऽश्वयुक्, तद्युक्ता पौर्णमासी—आश्वयुजी, तत्रेत्यर्थः । **देयमृणे** । ऋणे किम् ? । मासे देया भिक्षा । **कलाप्य** । **अश्वत्थ इति** ।

---

**बा.]** तत्र भव इत्येव सिद्धत्वात्प्रत्याख्यातमिदं भाष्ये । **उपजानूपकर्ण** । 'प्रायभव' इत्यर्थे उपजानु उपकर्ण उपनीवि इत्येभ्यष्ठगित्यर्थः । उपजान्वादिषु सामीप्येऽव्ययीभावः । **औपजानुक इति** । जानुनः समीपमुपजानु । तत्र प्रायभव इत्यर्थः । उगन्तात्परत्वाट्ठस्य कः । **औपकर्णिक इति** । कर्णस्य समीपमुपकर्ण, तत्र प्रायभव इत्यर्थः । **औपनीविक इति** । नीवेः समीपमुपनीवि, तत्र प्रायभव इत्यर्थः । **संभूते** । तत्रेत्येव । सप्तम्यात्सम्भूतेऽर्थेऽणादयो घादयश्च यथायथं स्युरित्यर्थः । संभवः-संभावना । **कोशाड्ढञ्** । **कौशेयं वस्त्रमिति** । कृमिविशेषकोशस्य विकार इत्यर्थः, 'विकारे कोशाड्ढ'ञिति वार्तिकात् । **कालात्साधुपुष्प्यत्** । तत्रेत्येव । साधुः, पुष्प्यत्, पच्यमानमित्यर्थेषु सप्तम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । 'पुष्प विकसने' इति दैवादिकाल्लटः शतरि 'पुष्प्य'दिति भवति । **हैमनः प्रावार इति** । 'सर्वत्राऽण्च तलोपश्चे'त्यणि तलोपः । **वासन्त्य इति** । 'टिड्ढे'ति ङीप् । 'शारदा' इत्यत्र ऋत्वण् । 'तत्र भवः' इति यावत्कालादित्यनुवर्तते । **उप्ते च** । तत्रेत्येव । कालवाचिनः सप्तम्यन्तादुप्तेऽर्थे यथाविहितं प्रत्ययाः स्युः । **उप्यन्त इति** । 'डु वप् बीजसन्ताने' । भूतकालस्त्वविवक्षित इति भावः । **आश्वयुज्या वुञ्** । तत्रोप्त इत्येव । सप्तम्यन्तादाश्वयुजीशब्दादुप्तेऽर्थे वुञ्स्यादित्यर्थः । **ठञोऽपवाद इति** । 'कालाट्ठ'ञिति विहितस्येत्यर्थः । **आश्वयुजका इति** । अश्वयुग्भ्यां युक्ता पौर्णमासी आश्वयुजी, तत्रोप्ता इत्यर्थः । **ग्रीष्मवसन्तात्** । ग्रीष्माद्वसन्ताच्च सप्तम्यन्तादुप्ते वुञ्वेत्यर्थः । **देयमृणे** । **कालादित्येवेति** । तत्रेत्यप्यनुवर्तते । वुञिति निवृत्तम् । सप्तम्यन्तात्कालवाचिनो देयमित्यर्थे यथाविहितं प्रत्ययाः स्युः । तस्मिन्देयद्रव्ये ऋणे सतीत्यर्थः । **मासिकमिति** । 'कालाट्ठञ्' । **कलाप्यश्वत्थ** । कलापिन्, अश्वत्थ, यवबुस--एभ्यः कालवाचिभ्यः सप्तम्यन्तेभ्यो देयमृणमित्यर्थे वुन्स्यादित्यर्थः । **कलापकमिति** । वुन् । अकादेशः । 'नस्तद्धिते' इति टिलोपः । **अश्वत्थ इति** । विकारप्रत्ययस्य फले लुगिति भावः । अश्वत्थशब्दस्य प्लक्षादित्वे तु ततः 'प्लक्षादिभ्योऽ'णिति फले अणो विधानसामर्थ्याल्लुगभावे अश्वत्थशब्दः फले लाक्षणिक इति भावः । **ग्रीष्मावरसमाद्वुञ्** । समाशब्दो वत्सरे नित्यस्त्रीलिङ्गबहुवचनः । ग्रीष्म अवरसमा अनयोः समाहारद्वन्द्वात्पञ्चमी । तत्र देयमृणमित्यर्थे आभ्यां वुञित्यर्थः । **आवरसमकमिति** । अवरासु समासु देयमृणमित्यर्थः । 'तद्धितार्थे' इति समासः । **संवत्सराग्रहायणीभ्यां ठञ्च** । 'देयमृण'मित्यर्थे

---

**शे.]** ढञा निवर्तित औत्सर्गिकोऽण् पुनः सन्धिवेलादिसूत्रेणाऽभ्यनुज्ञात इत्यर्थः । **कालात्साधुपुष्प्यदिति** । 'पुष्प्य'दिति 'पुष्प विकसने' इति दैवादिकाच्छतरि रूपम् । 'तत्र भवः' इति यावत् कालादिति वर्तते । **उप्यन्त इति** । सूत्रे भूतकालोऽविवक्षित इति भावः । **आश्वयुजी** = अश्विनीयुक्ता पौर्णमासी । **कलाप्य** । तत्रेत्येतत्पूर्वे तद्देयमृणे इत्यर्थान्वयाय, कालादित्यनुवृत्तस्य सम्बन्धाय च । कलाप्यादयः काले लाक्षणिका इत्याह—**यस्मिन्काले इति** । **फलमिति** । अश्वत्थस्य प्लक्षादित्वेन तेन फले विहितस्य

कम् । सांवत्सरकम् । आग्रहायणिकम् । आग्रहायणकम् । **व्याहरति मृगः** ।४।३।५१। कालवाचिनः सप्तम्यन्ताच्छब्दायत इत्यर्थे अणादयः स्युर्यो व्याहरति स मृगश्चेत् । निशायां व्याहरति नैशो मृगः । नैशिकः । **तदस्य सोढम्** ।४।३।५२। कालादित्येव । निशासहचरितमध्ययनं निशा, तत्सोढमस्य नैशिकः । नैशः । **तत्र भवः** ।४।३।५३। स्रुघ्ने भवः स्रौघ्नः । राष्ट्रियः । **दिगादिभ्यो यत्** ।४।३।५४। दिश्यम् । वर्ग्यम् । **शरीरावयवाच्च** ।४।३।५५। दन्त्यम् । कण्ठ्यम् । **प्राचां नगरान्ते** ।७।३।२४। प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्य चाऽचामादेरचो वृद्धिर्ञिति णिति किति च । सुह्मनगरे भवः सौह्मनागरः । पौण्ड्रनागरः । प्राचां किम् ? । म[द्र]नगरमुदक्षु तत्र भवो मा[द्र]नगरः । **जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्** ।७।३।२५। जङ्गलाद्यन्तस्याङ्गस्य पूर्वपदस्याऽचामादेरचो वृद्धिरुत्तरपदस्य वा ञिति णिति किति च । कुरुजङ्गले भवं--कौरुजङ्गलम् । कौरुजाङ्गलम् । वैश्वधेनवम् । वैश्वधैनवम् । सौवर्णवलजम् । सौवर्णवालजम् । **दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्** ।४।३।५६। दार्तेयम् । कौक्षेयम् । कलशिर्घटः, तत्र भवं--कालशेयम् । वास्तेयम् । आस्तेयम् । आहेयम् । **ग्रीवाभ्योऽण् च**

---

त.]'फले लुक्' । इह पुंलिङ्गनिर्देशो यद्यप्ययुक्तस्तथापि फले अश्वत्थशब्द औपचारिक इत्याशयेन पुंलिङ्गप्रयोग इत्याहुः। **संवत्स। ठञ्चेति** । 'संवत्सराग्रहायणीभ्यां वे'त्येव सुवचम्। न च 'वे'ति वक्तव्ये ठञ्ग्रहणं व्यर्थं, सन्धिवेलादिषु 'संवत्सरात्फलपर्वणो'रिति पठ्यते, तत्र फले ऋणत्वेन विवक्षितेऽणं बाधित्वा ठञेव यथा स्यादिति काशिकादावुक्तमिति वाच्यं, तस्मै हितास्तद्धिता इत्यन्वर्थसंज्ञाकरणबलेनाऽत्राण्प्रत्ययो न भवेदिति वक्तुं शक्यत्वादिति नव्याः। **नैशिक इति** । 'निशाप्रदोषाभ्यां चे'ति वा ठञ् । **तत्र भवः** । 'काला'दिति निवृत्तम् । कालसंबद्धस्य 'तत्रे'त्यस्य निवृत्तये पुनस्तत्रग्रहणात् । न च पूर्वसूत्रस्थस्य 'त'दित्यस्य व्यावृत्तये तत्रग्रहणमस्त्विति वाच्यं, 'तदस्य' इति सूत्रस्येत उत्तरत्रापि सुपठत्वात् । यद्यपि भूधातुरुत्पत्तावपि वर्तते, तथापीह सत्तार्थ एव वर्तते, 'तत्र जातः' इति पृथग्ग्रहणादिति बोध्यम् । **दिगादिभ्यो** । 'दिश्, वर्ग, पूग, पक्ष, रहस्, उखा, साक्षिन्, आदि, अन्त, मुख, जघन, मेघ, यूथ, 'उदकात्संज्ञायां' न्याय, वंश, कालेत्यादि **दिगादिः** । मुखजघनयोः पाठोऽत्राऽशरीरावयवार्थः । सेनाया मुखे जघने च भवं—मुख्यम् । जघन्यम् । **प्राचां नगरान्ते** । सप्तमीनिर्देशात् 'अङ्गस्ये'त्यधिकृतमपि सप्तम्यन्तेन विपरिणम्यते । तदाह—**नगरान्तेऽङ्गे इति** । **दृतिकुक्षि** । दृतिश्चर्मविकारः, शरीरावयवविशेषश्च । कुक्षिशब्दो धूमादिस्ततो 'धूमादिभ्यश्चे'ति वुञि प्राप्तेऽनेन ढञ् । कलशिः—मन्थपात्रं । 'कलशिमुदधिगुर्वीं बल्लवा लोडयन्ति' इति माघः । 'वस्तिर्नाभेरधो द्वयोः' इत्यमरः । तत्र भवं वास्तेयम् । 'अस्ती'ति तिङन्तप्रतिरूपको

---

बा.] सप्तम्यन्ता'दिति शेषः । सन्धिवेलादिगणे 'संवत्सरात्फलपर्वणोः' इति पठितम् । तत्र फले देयर्णत्वेन विवक्षिते प्राप्तोऽण् अनेन ठञा बाध्यते । **व्याहरति मृगः** । तत्र कालादित्येव । 'देयमृणे' इति निवृत्तम् । **तदस्य सोढम्** । अस्मिन्नर्थे प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युः । **सोढमित्यस्य** अभ्यस्तमित्यर्थः । **नैशिकः नैश इति** । 'निशाप्रदोषाभ्यां चे'त्यण्ठञौ । **तत्र भवः** । कालादिति निवृत्तम् । अस्मिन्नर्थे सप्तम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । भवनं सत्ता, जननमुत्पत्तिरिति भेदः । **स्रौघ्न इति** । औत्सर्गिकोऽण् । **राष्ट्रिय इति** । 'राष्ट्रावारे'ति घः । **दिगादिभ्यो यत्** । 'भव इत्यर्थे सप्तम्यन्तेभ्य' इति शेषः । **दिश्यमिति** । दिशि भवमित्यर्थः । **शरीरावयवाच्च** । 'भव इत्यर्थे सप्तम्यन्तेभ्य' इति शेषः । **दन्त्यमिति** । दन्ते भवमित्यर्थः । 'यस्येति चे'त्यकारलोपः । एवं कण्ठ्यम् । **प्राचां नगरान्ते** । अङ्गस्येत्यधिकृतं 'नगरान्ते' इति सप्तम्यनुरोधेन सप्तम्या विपरिणम्यते । उत्तरपदस्येत्यधिकृतम् । 'हृद्भगसिन्ध्वन्ते' इति सूत्रात्पूर्वपदस्येत्यनुवर्तते । तदयमर्थः—प्राचां यन्नगरं तदन्ते अङ्गे पूर्वपदस्योत्तरपदस्य च अचामादेरचो वृद्धिः स्यात् ञिति णिति किति च तद्धिते इति । **सुह्मनगरमिति पुण्ड्रनगरमिति** च प्राग्देशस्य पूर्वान्तावधिः । **मद्रनगरमुदक्ष्विति** । उदग्देशे मद्रनगरं नाम किञ्चिन्नगरमस्तीत्यर्थः । **जङ्गलधेनु** । **जङ्गलाद्यन्तस्याङ्गस्येति** । जङ्गल, धेनु, वलज इत्यन्तस्येत्यर्थः । **कुरुजङ्गले इति** । 'भव'मिति शेषः । कुरुजङ्गलादिशब्दा देशविशेषेषु । **दृतिकुक्षि** । भव इत्यर्थे दृति, कुक्षि, कलशि, वस्ति, अस्ति, अहि—इत्येभ्यः । 'सप्तम्यन्तेभ्यः' इति शेषः । **दार्तेयमिति** । दृतौ भवमित्यर्थः । ढञ्,

---

**शे.]** विधानसामर्थ्याल्लुगभावेऽप्युपचारादिति भावः । एतद्वृत्तिविषयश्चायमुपचारः । **ग्रीष्मावरसमादिति**—समाहारद्वन्द्वः । **आवरसमकमिति** । आगामिवर्षाणामाद्ये वर्षे देयमित्यर्थः । अवरशब्दस्याऽदिक्शब्दत्वादसञ्ज्ञायामप्यत्र कर्मधारयः । **तदस्य** । प्रथमान्तात्सोढोपाधिकात्षष्ठ्यर्थेऽणादयः । क्रियाकारकभावमूलकसम्बन्धस्यैव विवक्षणादस्येति षष्ठी । **सोढम्**—अभ्यस्तम् । कालस्य स्वरूपेण सहनाऽयोगात्तत्सहचरितक्रियायां लक्षणेत्याह—**निशासहचरितमिति** । **तत्र भवः** । भवनमत्र—सत्ता । **प्राचां च** ।

।४।३।५७। चाङ्गव् । ग्रैवेयम् । ग्रैवम् । **गम्भीराञ्ञ्यः** ।४।३।५८। गम्भीरे भवं गाम्भीर्यम् । [*पञ्चजनादुपसङ्ख्यानम् । पाञ्चजन्यम् । ] **अव्ययीभावाच्च**।४।३।५९। परिमुखं भवं पारिमुख्यम् । *परिमुखादिभ्य एवेष्यते । नेह—औपकूलः । **अन्तःपूर्वपदाट्ठञ्** ।४।३।६०। अव्ययीभावादित्येव । वेश्मनि— अन्तर्वेश्मम् । तत्र भवम्-आन्तर्वेश्मिकम् । आन्तर्गणिकम् । * अध्यात्मादेष्ठञिष्यते । अध्यात्मं भवमाध्यात्मिकम् । **अनुशतिकादीनां च** ।७।३।२०। एषामुभयपदवृद्धिः स्याञ्ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । अध्यात्मादिराकृतिगणः । **देवकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्** ।७।३।१। एषां पञ्चानां वृद्धिप्राप्तावादेरच आत्स्याञ्ञिति णिति किति च । दाविकम् । देविकाकूले भवा दाविकाकूलाः शालयः । शिंशपाया विकारः शांशपश्चमसः । 'पलाशादिभ्यो

त.] निपातः । स च तिङन्तेन समानार्थो भिन्नार्थश्च । आद्यो यथा—अस्तिक्षीरा गौः । द्वितीयो यथा,- अस्तिमान् । धनवानित्यर्थः । तदिहाऽविशेषादुभयोरपि ग्रहणमास्थेयमिति हरदत्तः । अहौ भवमाहेयम् । 'त्रिष्वाहेयं विषास्थ्यादी'त्यमरः । **ग्रीवाभ्योऽण् च** । 'शरीरावयवाच्चे'ति यतोऽपवादः । ग्रीवाशब्दो धमनीसङ्घाते वर्तते । तत्र उद्भूतावयवसङ्घातविवक्षया सूत्रे बहुवचनम् । तिरोहितावयवसङ्घातविवक्षायां त्वेकवचनान्तादप्यण्ढञौ स्त एव । **ग्रैवेयमित्यादि** । ग्रीवासु भवं, ग्रीवायामिति वा विग्रहः । **गम्भीराञ्ञ्यः । पञ्चजनादुपसङ्ख्यानम्** । पाञ्चजन्यम् । अव्य । **परिमुखमिति** । यदि परिशब्दादिह वर्जनं गम्यते, तदा 'अपपरिबहिरञ्चवः पञ्चम्ये'त्यव्ययीभावः । यदि तु सर्वतोभावः, तदा त्वस्मादेव निपातनादव्ययीभाव इत्याहुः । **परिमुखादिभ्य एवेति** । अयं भावः—दिगादिगणानन्तरं परिमुख, परिहनु, पर्योष्ठ, पर्युलूखलेत्यादि परिमुखादिगणः पठ्यते, तत्साहचर्यादिह सूत्रेऽव्ययीभावशब्देन परिमुखादिरेव गृह्यते । तस्य गणस्य कार्यान्तराऽभावादिति । नन्वेवं 'परिमुखादे'रिति सूत्रं विशिष्यैव क्रियतां, किमनेन प्रयासेन ? । उत्तरत्र 'अव्ययीभावा'दित्यस्यापेक्षायामपि तत्रैव तत्करणौचित्यादिति चेत् । अत्राह हरदत्तः—'परिमुखादेः' इत्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञः स्यात्, अव्ययीभावग्रहणात्तु तेभ्योऽणेव भवतीति । परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः । तथा च 'शाखृ व्याप्तौ' इति धातौ प्रतिशाखं भवं प्रातिशाख्यम् । 'अव्ययीभावाच्चे'ति भवार्थे ञ इति माधवः । **अन्तः पूव । अन्तर्वेश्ममिति** । 'नपुंसकादन्यतरस्या'मिति

बा.] एयः, आदिवृद्धिः, रपरत्वम् । दतिश्चर्ममस्त्रिका । **कौक्षेयमिति** । धूमादित्वाद्वुञि प्राप्ते ठञ् । **कलशिर्घटः** । 'कलशिर्मथनपात्र'मित्यमरव्याख्यातारः । 'बस्तिर्नाभेरधो द्वयो'रित्यमरः । तत्र भवो बास्तेयः । अस्तीति विभक्तिप्रतिरूपककमव्ययम् सत्तायां धने चेति न्यासकारो हरदत्तश्च । तत्र भव आस्तेयः । अहिः- सर्पः, तत्रभवः—आहेयः । **ग्रीवाभ्योऽण् च** । 'शरीरावयवाच्चे'ति यतोऽपवादः । ग्रीवाशब्दोऽयं धमनीसङ्घे वर्तते । तत्र उद्भूतावयवभेदसङ्घविवक्षायां बहुवचनान्तात्प्रत्यय इति सूचयितुं बहुवचनम् । तिरोहितावयवभेदविवक्षायां तु एकवचनान्तादप्यण्ढञौ स्त एव । **गम्भीराञ्ञ्यः । गाम्भीर्यमिति** । यञ्विधौ तु स्त्रियां 'प्राचां ष्फः तद्धितः' इति ष्फः स्यात् । **अव्ययीभावाच्च** । 'ञ्य' इति शेषः । **परिमुखादिभ्य इति** । यद्यपीदं वार्तिकं भाष्ये न दृष्टं, तथापि दिगदिगणपाठानन्तरं परिमुखादिगणपाठसामर्थ्यादिहाव्ययीभावपदं परिमुखादिपरमिति गम्यते । न ह्यष्टाध्याय्यां परिमुखादिगणस्य कार्यान्तरमस्ति । **औपकूल इति** । उपकूलं भव इत्यर्थः । अव्ययीभावत्वेऽपि परिमुखाद्यनन्तर्भावान्न ञ्यः । **अन्तःपूर्वपदाट्ठञ् । अन्तर्वेश्ममिति** । विभक्त्यर्थेऽव्ययीभावः । 'अनश्चे'ति टच् । **आन्तर्वेश्मिकमिति** । ठञ् । इकः । सुब्लुक् । टिलोपः । आदिवृद्धिः । **आन्तर्गणिकमिति** । गणे इत्यन्तर्गणम् । तत्र भवमित्यर्थः । **आध्यात्मिकमिति** । आत्मनीत्यध्यात्मम् । तत्र भवमित्यर्थः । **आध्यात्मिकमिति** । आत्मनीत्यध्यात्मम् । तत्र भवमित्यर्थः । **अनुशतिकादीनां च** । आदिवृद्धिप्रकरणे उत्तरपदस्य, पूर्वपदस्य चेत्यधिकारे इदं सूत्रम् । तदाद—**एषामिति । आधिदैविकमिति** । देवेष्वित्यधिदेवम्, तत्र भवमित्यर्थः । ठञि उभयपदवृद्धिः । **आधिभौतिकमिति** । भूतेष्वधिभूतम् । तत्र भवमित्यर्थः । **ऐहलौकिकमिति** । इह लोके भवमित्यर्थः । **पारलौकिकमिति** । परलोके भवमित्यर्थः । सर्वत्र ठञि उभयपदवृद्धिः । **देविका** । आदिवृद्धिप्रकरणे इदं सूत्रम् । **एषामिति** । देविका, शिंशपा, दित्यवाह्, दीर्घसत्र, श्रेयस् इत्येषामित्यर्थः । **वृद्धिप्राप्ताविति** । आदिवृद्धिप्राप्तौ तदपवादत्वेन आदेरच आकारः स्यादित्यर्थः । **दाविकमिति** । देविका नाम नदी, तस्यां भवमि-

शे.] प्राग्देशीयनगरवाचि यन्नगरान्तमङ्गं तन्नेत्यर्थः । जङ्गलधेनु । **उत्तरम्** = उत्तरपदं, **विभाषितं**=विभाषितवृद्धिकमित्यर्थः । **परिमुखमिति** । वर्जनार्थे 'अपपरी' इति समासः । **एषां पञ्चानामिति** । आदेरचो विशेषणं, तत्फलमाह--**देविकाकूले इति** ।

वे'त्यण्। दित्यौह इदं दात्यौहम्। दीर्घसत्रे भवं दार्घसत्रम् । श्रेयसि भवं श्रायसम् । **ग्रामात्पर्यनुपूर्वात्** ।४।३।६१। ठञ्स्यात् । अव्ययीभावादित्येव । पारिग्रामिकः । आनुग्रामिकः । **जिह्वामूलाङ्गुलेश्छः** ।४।३।६२। जिह्वामूलीयम् । अङ्गुलीयम् । **वर्गान्ताच्च** ।४।३।६३। कवर्गीयम् । **अशब्दे यत्खावन्यतरस्याम्** ।४।३।६४। पक्षे पूर्वेण छः । मद्वर्ग्यः । मद्वर्गीणः । मद्वर्गीयः । अशब्दे किम् ?। कवर्गीयो वर्णः । **कर्णललाटात्कनलङ्कारे** ।४।३।६५। कर्णिका । ललाटिका । **तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः** ।४।३।६६। सुपां व्याख्यानः--सौपो ग्रन्थः । तैङः । कार्तः । सुप्सु भवं सौपम् । **बह्वचोऽन्तोदात्ताट्ठञ्** ।४।३।६७। षत्वणत्वयोर्विधायकं शास्त्रं--षत्वणत्वम् । तस्य व्याख्यानस्तत्र भवो वा षात्वणत्विकः । **क्रतुयज्ञेभ्यश्च** ।४।३।६८। सोमसाध्येषु यागेष्वेतौ प्रसिद्धौ। तत्रान्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते । अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा आग्निष्टोमिकः । वाजपेयिकः ।

---

त.]समासान्तष्टच् । **अध्यात्ममिति** । 'अनश्वे'ति टच् । **कर्णललाटात्** । यतोऽपवादः । अलङ्कारे किम् ?। कर्ण्यम् । ललाट्यम् । **तस्य व्याख्यान इति च**। व्याख्यायते येन स व्याख्यानः। करणे ल्युट् । 'इति'शब्दो वाक्यार्थं परामृशति । तत्समीपे श्रूयमाणश्चकारः 'तत्र भवः' इति वाक्यार्थमाक्षिपति। व्याख्यातव्यस्य=ग्रन्थस्य नाम=प्रतिपादकं,तच्च शक्त्या लक्षणया वेत्य[त्र]नाग्रहः । तथा च 'षष्ठ्यन्ताद्व्याख्यानकरणार्थे, सप्तम्यन्तात्तु भवार्थे, व्याख्यातव्यस्य ग्रन्थस्य प्रतिपादकात्प्रत्ययाः स्यु'रिति सूत्रार्थः । व्याख्यातव्यनाम्नः किम् ? । पाटलिपुत्रस्य व्याख्यानी सुकोसला । पाटलिपुत्रं हि तया व्याख्यायते 'ईदृक्संनिवेशविशिष्ट'मिति । न त्विदं व्याख्यातव्यस्य नाम । ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात् , नामग्रहणं हि प्रसिद्ध्युपसङ्ग्रहार्थमेव सूत्रे कृतम् । **बह्वचो** । अणोऽपवादः । बह्वचः किम् ?। द्व्यचष्ठकं वक्ष्यतीत्येकाच्प्रत्युदाहार्यः । सौपम् । तैङम् । अन्तोदात्तात्किम् ? । संहितायाः सांहितम् । 'गतिरनन्तरः' इत्याद्युदात्तोऽयम् । अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । उदात्तादित्युक्तेऽपि वर्णग्रहणे तदन्तग्रहणात्, 'वर्णादनुदात्ता'दित्यत्र यथा । **क्रतुयज्ञेभ्यश्च** । **अग्निष्टोमस्य व्याख्यान इति** । अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्तमाना अग्निष्टोमादिशब्दा इहोदाहरणं, ग्रन्थानामेव व्याख्येयताया उक्तत्वादित्याहुः । स्तुतिः—**स्तोमः** । अग्नेः स्तोमोऽस्मिन्निति बहुव्रीहिः । 'परादिश्च परान्तश्चे'त्यन्तोदात्तोऽयम् । पीयतेऽस्मिन्निति पेयः । 'कृत्यल्युटो बहुल'मित्यधिकरणे यत् । वाजो नाम यवागूभेदस्तस्य पेयो वाजपेयः । अयं हि कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः । पेयशब्दस्य 'यतो नावः'इत्युदात्तत्वात् । राज्ञा क्षत्रियेण सूयते,राजा सोमः सूयते अत्रेति वा राजसूयः । 'राजसूयसूर्ये'ति क्यप् । तत एव निपातनात्समासः, षष्ठीसमासो वा । अयमप्युत्तरपदप्रकृतिस्वरेण मध्योदात्त एव । धातुस्वरेण

---

बा.]त्यर्थः। **दाविकाकूला इति** । उत्तरपदवृद्धिभ्रमनिरासाय इदमुदाहरणम् ,अस्य सूत्रस्य तदधिकारबहिर्भूतत्वादिति भावः । **शांशप इति**। इकारस्य आकारः, अणिवृद्धिः,शिंशपाशब्दस्य पलाशादौ पाठात् पाक्षिकोऽञ् । तदभावेऽणित्यर्थः । **दात्यौहमिति** । दित्यवाह्शब्दात् 'तस्येद'मित्यणि 'वाह ऊठ्' इति संप्रसारणं, पूर्वरूपम् । 'एत्येधत्यूठ्सु' इति वृद्धिः । इकारस्य आदिवृद्ध्यपवाद आकारः । **दार्घसत्रमिति** । 'तस्येद'मित्यण्, आदेरीकारस्य आकारः । **श्रायसमिति** । तत्र भव इत्यणि एकारस्य आकारः । **ग्रामात्पर्यनुपूर्वात्** । **ठञ् स्यादिति** । 'अन्तःपूर्वपदा'दित्यतस्तदनुवृत्तेरिति भावः । **जिह्वामूलाङ्गुलेश्छः** । 'शरीरावयवाच्चे'ति यतोऽपवादः । **वर्गान्ताच्च** । **कवर्गीयमिति** । कादिवर्गे भवमित्यर्थः । **अशब्दे** । 'वर्गान्ताच्छः' इति शेषः । **मद्वर्ग्यः मद्वर्गीण इति**। मत्पक्षे भव इत्यर्थः । **कर्णललाटात्** । 'शरीरावयवाच्चे'ति यतोऽपवादः । **कर्णिका ललाटिकेति** । कर्णे ललाटे भवोऽलङ्कार इत्यर्थः । स्त्रीत्वं लोकात् । टापि 'प्रत्ययस्था'दितीत्त्वम् । **तस्य व्याख्यान इति च** । व्याख्यायते अनेनेति व्याख्यानो ग्रन्थः, करणे ल्युट् । तस्य व्याख्यान इति विग्रहे व्याख्यातव्यग्रन्थप्रतिपादकात्षष्ठ्यन्तात् , भव इत्यर्थे च सप्तम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । चकारः 'तत्र भवः' इत्यस्य समुच्चयार्थः । **सौप इति** । औत्सर्गिकोऽण् । **तैङ इति** । तिङां व्याख्यानो ग्रन्थ इत्यर्थः । **कार्त इति** । कृतां व्याख्यान इत्यर्थः । अणि आदिवृद्धौ रपरत्वम् । भवार्थे उदाहरति—**सौपमिति** । नच 'तस्येदं' 'तत्र भवः' इत्याभ्यामेव सिद्धत्वादिदं सूत्रं व्यर्थमिति वाच्यम्, अर्थद्वयनिर्देशस्य अपवादभूतवक्ष्यमाणठञादिविधानायावश्यकत्वादिति भाष्ये स्पष्टम् । **बह्वचोऽन्तोदात्ताट्ठञ्** । अन्तोदात्ताद्बह्वच उक्तविषये ठञ्स्यात् । अणोऽपवादः । **क्रतुयज्ञेभ्यश्च** । **सोमेति** । सोमलताद्रव्यकयागेषु क्रतुशब्दो यज्ञशब्दश्च प्रसिद्ध इत्यर्थः । तत्रान्यतरग्रहणं व्यर्थं, बहुवचनेन स्वरूपग्रहणनिवृत्तेरित्यत आह—**तत्रेति** । **गृह्यन्त इति** । ततश्च इह क्रतुशब्देन सोमयागाः,

---

शे.]सौदेविके तु नास्ति, देविकादेर्ग्रहणाभावात् । अत्र वृद्धिपदानुवृत्त्या वृद्धिसञ्ज्ञकाकारविधानाद् दाविकीभार्य इत्यादौ पुंवत्त्वनिषेध-

पाकयज्ञिकः । नावयज्ञिकः । बहुवचनं स्वरूपविधिनिरासार्थम् । अनन्तोदात्तार्थ आरम्भः । **अध्यायेष्ववृषेः** ।४।३।६९। ऋषिशब्देभ्यो–लक्षणया व्याख्येयग्रन्थवृत्तिभ्यो भवे व्याख्याने चाऽध्याये ठञ् स्यात् । वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः । अध्यायेषु किम् ? । वासिष्ठी ऋक् । **पौरोडाशपुरोडाशात्ष्ठन्** ।४।३।७०। पुरोडाशसहचरितो मन्त्रः पुरोडाशः । स एव पौरोडाशः । ततष्ठन् । पौरोडाशिकः । पुरोडाशिकः । **छन्दसो यदणौ** ।४।३।७१। छन्दस्यः । छान्दसः । **द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्** ।४।३।७२। द्व्यचः-ऐष्टिकः । पाशुकः । ऋतः-चातुर्होतृकः । ब्राह्मणिकः । आर्चिकः । इत्यादि । **अणृगयनादिभ्यः** ।४।३।७३। ठञादेरपवादः । आर्गयनः । औपनिषदः । वैयाकरणः । **तत आगतः**

---

**त.]** सूयशब्दस्याद्युदात्तत्वात् । असोमकेभ्य उदाहरति–**पाकेति** । अल्पपर्यायः—पाकशब्दः । पाकश्चासौ यज्ञश्चेति कर्मधारयः । स च समासस्वरेणान्तोदात्तः । नवैर्व्रीहिभिर्यजनं **नवयज्ञः** —आग्रयणम् । 'यजयाचविच्छे'ति नङ् । 'कर्तृकरणे कृते'ति समासः । कृदुत्तरपदप्रकृतिस्वरेणाऽन्तोदात्तः । **अनन्तोदात्तार्थ इति** । वाजपेयराजसूयार्थतया अस्मिन्नारब्धे सत्यन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव भाव्यमित्याग्निष्टोमिक इत्याद्युदाहृतमिति भावः । **अध्यायेष्ववृषेः** । एवकारः स्पष्टप्रतिपत्त्यर्थः । **वासिष्ठीति** । भवार्थेऽण् । **पौरोडाश** । षित्त्वान्ङीष् । पौरोडाशिकी । पुरोडाशिकी । पुरो दाश्यते इति 'पुरोडाशः' । 'दाशृ दाने' कर्मणि घञि इहैव निपातनाद्दस्य डत्वम् ।

**छन्दसो** । छन्दः-शब्दाद्भवव्याख्यानयोरर्थयोर्यदणौ स्तः । द्व्यज्लक्षणस्य ठकोऽपवादः । **छन्दस्य इत्यादि** । इहार्थयोर्यदण्भ्यां यथासङ्ख्यं न भवत्यस्वरितत्वादिति बोध्यम् । **द्व्यजृत्** । अणोऽपवादः । **चातुर्होतृक इति** । 'पृथिवी होता द्यौरध्वर्यु'रित्यादिमन्त्रस्य चतुर्होतेति नामधेयम् । **इत्यादीति** । आदिशब्दात्प्राथमिकः । आध्वरिकः । पौरश्चरणिकः । 'नामाख्यातग्रहणं सङ्घातविगृहीतार्थ'मिति वार्तिकम् । तत्र नामशब्दात् द्व्यच्त्वादेव सिद्धे विगृहीतग्रहणमाख्यातार्थमिति ज्ञेयम् । नामिकः । आख्यातिकः । नामाख्यातिकः । **अणृगय** । ऋगयनादिभ्यो

---

**बा.]** यज्ञशब्देन तदितरयागा विवक्षिता इति भावः । एवंच सोमयागविशेषवाचिभ्यस्तदितरयागविशेषवाचिभ्यश्च उक्तविषये ठञित्यर्थः । **पाकयज्ञिक इति** । औपासनाग्निसाध्याः पार्वणस्थालीपाकादयः—पाकयज्ञाः । तेषां व्याख्यानो ग्रन्थः, तेषु भव इति वार्थः । **नावयज्ञिक इति** । नूतनद्रव्यक आग्रयणाख्यो यज्ञो नवयज्ञः ।

ननु पूर्वसूत्रेण सिद्धे किमर्थमिदमित्यत आह—**अनन्तोदात्तार्थ इति** । वाजपेयशब्दो मध्योदात्तस्तैत्तिरीयादौ प्रसिद्धः । यद्यपि अग्निष्टोमशब्दोऽन्तोदात्त एव तैत्तिरीये दृष्टः । नवयज्ञशब्दोऽपि षष्ठीसमासः समासस्वरेणान्तोदात्त एव, तथापि अन्यार्थमिदमन्तोदात्तेष्वपि परत्वात् प्रवर्तत इति न दोषः । **अध्यायेष्ववृषेः** । **मन्त्रो वसिष्ठइति** । लक्षणयेति भावः । **वासिष्ठिकोऽध्याय इति** । कश्चिद्ग्रन्थविशेषोऽयम् । **वासिष्ठी ऋगिति** । ऋचोऽध्यायसमाख्याऽभावाच्च ठञिति भावः । **पौरोडाश** । 'उक्तविषये' इति शेषः । **पुरोडाशेति** । पुरोडाशशब्दसहितो मन्त्रो लक्षणया पुरोडाश इत्युच्यत इत्यर्थः । **स एव पौरोडाश इति** । प्रज्ञादित्वात्स्वार्थेऽणिति भावः । **पौरोडाशिक इति** । पौरोडाशात्ष्ठनि रूपम् । **पुरोडाशिक इति** । पुरोडाशशब्दात्ष्ठनि रूपम् । षित्त्वान्ङीष् । पौरोडाशिकी—पुरोडाशिकी । **छान्दसो यदणौ** । 'तस्य व्याख्याने, तत्र भवे चे'ति शेषः । **छन्दस्यः छान्दस इति** । छन्दसां व्याख्यानः, तत्र भवो वेत्यर्थः । द्व्यज्लक्षणस्य वक्ष्यमाणस्य ठकोऽपवादः । **द्व्यजृद्ब्राह्मण** । द्व्यच्, ऋत्, ब्राह्मण, ऋक्, प्रथम, अध्वर, पुरश्चरण, नामन्, आख्यात एभ्यष्ठक्स्यात्तस्य व्याख्याने, तत्र भवे च । **शैषिक इति** । शेषस्य व्याख्यानस्तत्र भवो वेत्यर्थः । **पाशुक इति** । पशुयागप्रतिपादकग्रन्थः पशुः, तस्य व्याख्यानस्तत्र भवो वेत्यर्थः । उकः परत्वाट्ठस्य कः । **ऋत इति** । उदाहियत इत्यर्थः । **चातुर्होतृक इति** । 'चित्तिः स्रुक्' इत्यादयो मन्त्राश्चतुर्होतारस्तैत्तिरीये प्रसिद्धाः । तेषां व्याख्यानस्तत्र भवो वेत्यर्थः । **ब्राह्मणिकः, आर्चिक इति** । ब्राह्मणानि मन्त्रव्यतिरिक्तवेदभागाः, तेषामृचां वा व्याख्यानः, तत्र भवो वेत्यर्थः । **इत्यादीति** । प्राथमिकः, आध्वरिकः, पौरश्चरणिकः, नामिकः, आख्यातिकः । **अणृगयनादिभ्यः** । 'तस्य व्याख्याने तत्र भवे चे'ति शेषः । **आर्गयनइति** । ऋगयनम्–ऋक्संहिता, तस्य व्याख्यानस्तत्र भवो वेत्यर्थः । 'बह्वचोऽन्तोदात्ता'दिति ठञि प्राप्ते अण् । **औपनिषद इति** । उपनिषदो व्याख्यानस्तत्र भवो वेत्यर्थः । एवं

---

**शे.]** सिद्धिरित्युक्तम् । ऋतुय । पाकयज्ञः–अल्पयज्ञो, वैश्वदेवहोमो वा । **नवयज्ञः**—आग्रयणम् । **अनन्तोदात्तार्थ इति** । कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तवाजपेयाद्यर्थ इत्यर्थः । तदर्थमावश्यकमिदमन्तोदात्तपाकयज्ञादावपि परत्वात् प्रवर्तते इत्यभिमानः । यज्ञार्थमन्त्रब्राह्मणकल्पेषु लाक्षणिकत्वेन व्याख्यातव्यनामत्वं बोद्धव्यम् । **अध्यायेष्वेवेति** । एवकारः स्पष्टार्थः ।

।४।३।७४। सुघ्नादागतः स्रौघ्नः । ठगायस्थानेभ्यः ।४।३।७५। शुल्कशालाया आगतः शौल्कशालिकः । शुण्डिकादिभ्योऽण् ।४।३।७६। आयस्थानठक्छछादीनां चाऽपवादः । शुण्डिकादागतः शौण्डिकः । कार्कणः । तैर्थः । [औदपानः] । विद्यायोनिसंबन्धेभ्यो वुञ् ।४।३।७७। औपाध्यायकः । पैतामहकः । ऋतष्ठञ् ।४।३।७८। वुञोऽपवादः । हौतृकम् । [मातृकम्] भ्रातृकम् । पितुर्यच्च ।४।३।७९। चाद्ठञ् । 'रीङृतः' । 'यस्ये'ति लोपः । पित्र्यम् । पैतृकम् । गोत्रादङ्कवत् ।४।३।८०। बिदेभ्य आगतं बैदम् । गार्गम् । दाक्षम् । औपगवकम् । नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ।७।३।३०। नञः परेषां शुच्यादिपञ्चानामादेरचो वृद्धिः, पूर्वपदस्य तु वा, ञिदादौ परे । आशौचम् । अशौचम् । आनैश्वर्यम् । अनैश्वर्यम् । आक्षैत्रज्ञम् । अक्षैत्रज्ञम् । आकौशलम् ।

त.] भवव्याख्यानयोरर्थयोरण्स्यात् । ठगादेरिति । आदिशब्दाट्टक्छयोः । आगयन इति । 'अयन'शब्दो भावसाधनः, तेन समासे 'अनो भावकर्मवचनः' इत्यन्तोदात्तः । अभेदोपचाराद्भाववचनोऽपि ग्रन्थे वर्तते । इह 'बह्वचोऽन्तोदात्ता'दिति ठञ्प्राप्तः । औपनिषद इत्यत्राप्येवम् । विद्यान्यायशिक्षाशब्देभ्यो 'द्व्यज्ब्राह्मणे'ति ठक्प्राप्तः । व्याकरणशब्दात्तु—'वृद्धाच्छः' । ठगाय । एत्येनं स्वामी, स्वामिनमयमेतीति वा—आयः=स्वामिग्राह्यो भागः । स यस्मिन्नुत्पद्यते तदायस्थानम् । बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः । वृद्धाच्छं परत्वादयं बाधते । आपणिकः । आकरिकः । छादीनां चेति । कार्कण इत्यत्र 'कृकणपर्णाद्भारद्वाजे' इति छः प्राप्तः । तीर्थशब्दात्तु धूमादित्वाद्वुञ्प्राप्तः । उदपानशब्दस्योत्सादित्वादञ्प्राप्त इत्यर्थः । विद्यायोनि । विद्यायोनिकृतः संबन्धो येषां तेभ्यो वुञ्स्यात् । अणोऽपवादः । छं तु परत्वाद्बाधते । आचार्यकः । मातामहकः । मातुलकः । ऋतष्ठञ् । 'विद्यायोनिसंबन्धेभ्यः' इति वर्तते, तदाह—वुञोऽपवाद इति । 'उष्क'मिति वक्तव्ये तपरकरणं ठञ्ग्रहणं च चिन्त्यप्रयोजनमिति प्राञ्चः । 'पैतृकी विधे'त्यत्र ङीबर्थं ठञ्ग्रहणमिति तु तत्त्वम् । न च 'टिड्ढे'ति सूत्रे कञ्ग्रहणान्ङीप्सिध्यतीति वाच्यं, यादृशी तादृशीत्याद्यसिद्धेः । तदनुबन्धकग्रहणेनाऽतदनुबन्धकस्याऽग्रहणात्, 'त्यदादिषु दृशः' इति कञो ह्यनुबन्धकत्वात् । तपरकरणं विहाय 'उष्ठ'मित्येव सुवचमित्याहुः । गोत्रादङ्कवत् । 'अपत्याधिकारादन्यत्र लौकिकं गोत्र'मित्युक्तम् । अपत्यप्रत्ययान्तात् 'तत आगतः' इत्यस्मिन्नर्थे अङ्कवत्प्रत्ययाः स्युः । अङ्के दृष्टस्य सर्वस्यायमतिदेशो, न तु साक्षाद्विहितस्यैवेत्याग्रहः, तेन 'गोत्रचरणाद्वु'ञिति वुञपि लभ्यते । स हि 'तस्येद'मिति सामान्येन विधीयमानोऽपि अञ्यिञन्तादन्यत्र अङ्केऽपि दृष्टः । बैदमित्यादि । सङ्घाङ्के'त्यादिना अङ्कार्थेऽण्विहित इतीहा-

बा.] वैयाकरणः । 'न य्वाभ्या'मित्यैच् । अण्ग्रहणं तु छबाधनार्थम्, अन्यथा अणा मुक्ते छो दुर्वारः स्यादित्याहुः । तत आगतः । अस्मिन्नर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । स्रौघ्न इति । औत्सर्गिकोऽण् । ठगायस्थानेभ्यः । 'तत आगत इत्यर्थे' इति शेषः । हट्टादिषु स्वामिग्राह्यो भागः—आयः । स यस्मिन्गृह्यते तदायस्थानम्, तद्वाचिभ्य इत्यर्थः । शुण्डिकादिभ्योऽण् । 'तत आगत' इत्येव । शुण्डिकमायस्थानविशेषः । पूर्वसूत्रविहितठगपवादः । कार्कण इति । 'कृकणादागत' इति शेषः । 'कृकणपर्णाद्भारद्वाजे' इति छस्यापवादः । तैर्थ इति । धूमादिवुञोऽपवादः । औदपान इति । अत्र उत्सादित्वादञ्प्राप्तो न भवति, पुनरण्ग्रहणात् । अन्यथा यथाप्राप्तविधाने आयस्थानठकं बाधित्वा अञेव स्यात् । विद्यायोनि । 'तत आगत' इत्येव । औपाध्यायकः, पैतामहक इति । उपाध्यायापितामहाच्च आगत इत्यर्थः । ऋतष्ठञ् । ऋदन्ताद्विद्यायोनिसम्बन्धवाचिन इत्यर्थः । 'तत आगत' इत्येव । हौतृकं भ्रातृकमिति । उकः परत्वाट्ठस्य कः । पितुर्यच्च । यति प्रक्रियां दर्शयति—रीङृत इति । गोत्रादङ्कवत् । अङ्के ये प्रत्ययास्ते तत आगत इत्यर्थेऽपि भवन्तीत्यर्थः । बिदेभ्य आगतमिति । विग्रहप्रदर्शनम् । अत्र 'यञञोश्चे'ति बहुत्वे अञो लुकि 'बिदेभ्य' इति निर्देशः । बैदमिति । 'सङ्घाङ्कलक्षणेष्वञ्यञिञामण्'ित्युक्तेरञन्तादिह्यप्यर्थे अणि विवक्षिते 'गोत्रेऽलुगची'त्यञो लुङ्निवृत्तौ बैदशब्दादण् । 'द्व्यज्ब्राह्मणे'ति द्व्यज्लक्षणस्य ठकोऽपवादः । गार्गमिति । यञन्तादण् । दाक्षमिति । इञन्तादण् । औपगवकमिति । उपगोरपत्यमौपगवः, तस्मादागतमित्यर्थः । 'गोत्रचरणाद्वु'ञिति वुञ् । यद्यपि तस्येदमित्यर्थे अयं वुञ्विहितः, तथाप्यञ्यिञन्तादङ्केऽपि स दृष्ट इति तस्याप्यत्रार्थे अतिदेशो भवति । न हि 'सङ्घाङ्के'ति प्रतिपदोक्तस्याऽण एवात्राऽतिदेशः, किं तु अङ्के दृष्टस्य सर्वस्यापि, व्याख्यानादिति भावः । नञः शुचीश्वर ।

शे.] ततः छ्नेति । 'पौरोडाशिकं काण्ड'मिति तु पुरोडाशमधिकृत्य कृतं पौरोडाशं, तदेव पौरोडाशिकमिति विनयादित्वाट्ठकि साधु । कार्कणे-'कृकणपर्णा'दिति छः प्राप्तः । तैर्थ इति । धूमादित्वाद्वुञ्प्राप्तः । अदेशवाचित्वेत्वायस्थानठक्प्राप्तः । अण्ग्रहणं तूदपानादुत्सादेर्यथाविहिताऽञं बाधित्वाऽणर्थम् । अन्यथाऽऽयस्थानठकं बाधित्वा स एव स्यात् । गोत्रादङ्के । तत आगतः इत्यर्थे आशौचमिति । अशुचेरागतमित्यर्थे इत्यस्मिन्नर्थे । अशुचौ भवमिति वा ।

अकौशलम् । आनैपुणम् । अनैपुणम् । **हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः** ।४।३।८१। समादागतं समरूप्यम्। विषमरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् ।

**मयट् च** ।४।३।८२। सममयम् । विषममयम् । देवदत्तमयम् । **प्रभवति** ।४।३।८३। 'तत' इत्येव । हिमवतः प्रभवति-हैमवती गङ्गा । **विदूराञ्ञ्यः** ।४।३।८४। विदूरात्प्रभवति-वैदूर्यो मणिः । **तद्गच्छति पथिदूतयोः** ।४।३।८५। स्रुघ्नं गच्छति-स्रौघ्नः पन्था दूतो वा । **अभिनिष्क्रामति द्वारम्** ।४।३।८६। तदित्येव । स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् । **अधिकृत्य कृते ग्रन्थे** ।४।३।८७। तदित्येव । शारीरकमधिकृत्य

---

त.]प्यण्यनिगन्तादण् । **औपगवकमिति** । 'गोत्रचरणा'दिति वुञ् अङ्के दृष्ट इतीहाप्यण्णन्ताद्वुञ् । **हेतुमनुष्येभ्यो** । मनुष्यग्रहणमहेत्वर्थं, बहुवचनं तु स्वरूपविधिनिरासार्थम् । **समरूप्यमिति** । 'विभाषा गुणे' इत्यत्र 'विभाषे'ति योगविभागादगुणवचनादपि पञ्चमी । योगविभागे तु 'बाहुलकं प्रकृतेस्तदनुदृष्टे'रिति लिङ्गम् । **मयट् च** । योगविभागो यथासङ्ख्यनिरासार्थः । टो ङीबर्थः । **हैमवतीति** । हिमवतः प्रकाशते । तत्र प्रथमं दृश्यत इत्यर्थः । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते, 'तत्र जातः' इत्यतो भेदेन निर्देशात् । **वैदूर्य इति** । दन्त्यमध्योऽयं शाद्वलवत्, न तु नड्वलवन्मूर्धन्यमध्यः । नन्वत्रार्थोऽसङ्गतिः, बालवायपर्वताद्ध्यसौ प्रभवति, विदूरनगरे तु संस्क्रियते। सत्यम् । अतएव समाहितं भाष्ये—'बालवायो विदूरं च प्रकृत्यन्तरमेव वा । न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत्' इति । अस्यार्थः—बालवायशब्दः प्रत्ययं लभते, विदूरादेशं च, सूत्रे पठितेनादेशेनानुरूपः स्थानी बालवायशब्द आक्षिप्यते, यथा शिवादिषु पठिताभ्यां विश्रवणरवणादेशाभ्यामनुरूपः स्थानी विश्रवस्शब्द आक्षिप्यते, यथा वा 'पद्दन्' इत्यादौ पदाद्यादेशानुरूपः स्थानी पाददन्तादिराक्षिप्यते तद्वत् । **प्रकृत्यन्तरमेवेति** । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकोऽस्तीत्यर्थः । एवं चास्मिन्पक्षे 'बालवायात्प्रभवती'ति विग्रहे विदूरशब्दात्प्रत्यय इति व्याख्यानक्लेशो नेति भावः । **न वै इति** । 'वै'शब्दोऽक्षमां द्योतयति । तत्र पर्वते विदूरशब्दोऽप्रसिद्ध इति चेद्ब्रूयाज्जित्वरीवद्व्यवहरेत् । नियतपुरुषापेक्षो हि व्यवहारो दृश्यते, यथा वणिज एव वाराणसीं जित्वरीति व्यवहरन्ति, एवं वैयाकरणा एवाऽद्रिं विदूर इति । **तद्गच्छति** । द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता पन्था दूतो वेत्यर्थः । तत्र साध्वसिश्छिनत्ति, काष्ठानि पचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षायां पन्थाः कर्ता । **अभिनिष्क्रामति** । द्वितीयान्तात्प्रत्ययः स्याद्यन्निष्क्रामति तच्चेद्द्वारमित्यर्थः । **स्रौघ्नं कन्यकुब्जद्वारमिति** । स्रुघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितोऽर्थः । पूर्ववत्करणस्य कर्तृत्वम् । **तदित्येवेति** । 'अधिकृत्ये'त्येतदपेक्षयाऽत्र [ अपि ] द्वितीया । **शारीरकीय इति** । कुत्सितं शरीरं शरीरकं, तत्सम्बन्धी शरीरको जीवात्मा, तमधिकृत्य=प्रस्तुत्य कृतो ग्रन्थः शारीरकीयः=चतुर्लक्षणीसूत्रसंदर्भः । 'वृद्धाच्छः' । अत्र वार्तिकं—'लुबाख्यायिकाभ्यो बहुल'मिति तादर्थ्ये एषा चतुर्थी । 'आख्यायिका' नाम गद्यरूपो ग्रन्थविशेषः । अतएवाख्यानाऽऽख्यायिकयोस्तत्र तत्र भेदेनोपादानम् । आख्यायिकाभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुगित्यर्थः ।

---

बा.]आदिवृद्धिप्रकरणे उत्तरपदस्य पूर्वस्य तु वेत्यनुवृत्ताविदं सूत्रम् । **आशौचम्-अशौचमिति** । अशुचेरागतमित्यर्थः । 'तत आगत' इत्यणि पूर्वपदस्यादिवृद्धिविकल्पः । उत्तरपदस्य तु नित्या आदिवृद्धिः । एवमग्रेऽपि । अक्षेत्रज्ञात् अकुशलात् अनिपुणाच्च आगतमित्यर्थो बोध्यः । **आनैश्वर्य**मित्यत्र तु ब्राह्मणादित्वाद्भावे ष्यञ् । **हेतुमनुष्येभ्यः** । 'तत आगत' इत्येव । हेतुभ्य उदाहरति—**समादागतमित्यादि** । मनुष्यवाचिन उदाहरति—**देवदत्तरूप्यमिति** । **मयट् च** । 'उक्तविषये' इति शेषः । **प्रभवति** । **तत इत्येवेति** । 'आगत' इति तु निवृत्तम् । प्रभवतीत्यर्थे पञ्चम्यन्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । प्रभवः--प्रथमप्रकाशः । **हिमवतः प्रभवतीति** । हिमवति प्रथमं प्रकाशत इत्यर्थः । 'भुवः प्रभवः' इत्यापादानत्वम् । **विदूराञ्ञ्यः** । ततः प्रभवतीत्येव । विदूरशब्दो दन्त्यमध्यः । वालवायाख्यदेशपर्यायो विदूरशब्द इति भाष्ये स्पष्टम् । **तद्गच्छति पथिदूतयोः** । गच्छतीत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युः, स चेद्गन्ता पन्था दूतो वा इत्यर्थः । **अभिनिष्क्रामति द्वारम्** । **कान्येति** । कान्यकुब्जाख्यजनपदस्य द्वारमित्यर्थः । **अधिकृत्य** । **तदित्येवेति** । 'अधिकृत्य कृतो ग्रन्थः' इत्यर्थे द्वितीयान्तात्प्रत्ययाः स्युरित्यर्थः । **शारीरकमिति** । शरीरस्यायं शारीरः=जीवात्मा, तमित्यर्थः ।

---

शे.]आक्षैत्रज्ञादयोऽप्येवम् । **अनैश्वर्ये**—ब्राह्मणादित्वात्ष्यञ् । एते सर्वे भावार्थकप्रत्ययान्ता एवेति मे तेऽत्रैतत्सूत्रलेखो लेखकप्रमादात् । **प्रभवति** । प्रभवः=प्रथमप्रकाशो, नोत्पत्तिः । जातान्द्भेदेन निर्देशात् । **विदूरा** । बालवायपर्यायो विदूरशब्द एतद्वृत्तिविषयः । **शारीरकमिति** । जीवमित्यर्थः । शरीरशब्दात् 'तस्येदम्' इत्यणि स्वार्थे कः । 'सौभद्रो यायात' इत्यप्यस्यो-

कृतो ग्रन्थः शारीरकीयः । 'शारीरकं भाष्य'मिति त्वभेदोपचारात् । **शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः** ।४।३।८८। शिशूनां क्रन्दनं शिशुक्रन्दः, तमधिकृत्य कृतो ग्रन्थः-शिशुक्रन्दीयः । यमस्य सभा यमसभम् । क्लीबत्वं निपातनात् । यमसभीयः । किरातार्जुनीयम् । इन्द्रजननादिराकृतिगणः । इन्द्रजननीयम् । विरुद्धभोजनीयम् । **सोऽस्य निवासः** ।४।३।८९। स्रुघ्नो निवासोऽस्य स्रौघ्नः । **अभिजनश्च** ।४।३।९०। स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । यत्र स्वयं वसति स निवासः । यत्र पूर्वैरुषितं सोऽभिजन इति विवेकः । **आयुधजीविभ्यश्छः पर्वते** ।४।३।९१। पर्वतवाचिनः प्रथमान्तादभिजनशब्दादस्येत्यर्थे छः स्यात् । हृद्गोलः पर्वतोऽभिजन एषामायुधजीविनां ते हृद्गोलीयाः । आयुधेति किम् ? । ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदा द्विजाः । **शण्डिकादिभ्यो ञ्यः** ।४।३।९२। शण्डिकोऽभिजनोऽस्य शाण्डिक्यः । **सिन्धुतक्षशिलादिभ्योऽणञौ** ।४।३।९३। सिन्ध्वादिभ्योऽण् , तक्षशिलादिभ्योऽञ् स्यादुक्तेऽर्थे । सैन्धवः । तक्षशिला नगरी अभिजनोऽस्य ताक्षशिलः । **तूदीसलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः** ।४।३।९४। तूदी अभिजनोऽस्य तौदेयः । सालातुरीयः । वार्मतेयः । कौचवार्यः । **भक्तिः** ।४।३।९५। सोऽस्येत्यनुवर्तते । भज्यते सेव्यते इति-भक्तिः । स्रुघ्नो भक्तिरस्य स्रौघ्नः । **अचित्तादेशकालाट्ठक्** ।४।३।९६। अपूपा भक्तिरस्य आपूपिकः । पायसिकः । अचित्ता-

त.] वासवदत्तामधिकृत्य कृता आख्यायिका—वासवदत्ता । सुमनोत्तरा । क्वचिन्न-भैमरथी । अभेदोपचारेण गतार्थत्वाच्चेदं वार्तिकमावश्यकमिति मूले नोक्तम् । **शिशुक्रन्द** । अत्र वार्तिकं-'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः' । देवासुरम् । राक्षोसुरम् । **निपातनादिति** । 'सभा राजे'ति सूत्रे 'अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहे'त्युक्तत्वात्तेन सूत्रेण क्लीबत्वं न सिध्यतीति भावः । **सोऽस्य निवासः** । 'स' इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितः प्रत्ययः स्यात् प्रथमान्तार्थः स निवासश्चेत् । **स्रुघ्नो निवास इति** । निवासाधिकरणमित्यर्थः । नन्वस्येति कृद्योगे कर्तरि षष्ठी । तथा च विशेषणविशेष्यभावव्यत्यासात्स्रुघ्नाधिकरणवासकर्तेह वृत्त्यर्थः, तथा च 'तत्र भवः' इत्येव सिद्धं किमनेनेति चेत् ? । अत्राहुः---वासस्य चेतनमात्रकर्तृकतया प्रसिद्धत्वात्प्रकारकृतो भेदोऽस्तीति नास्ति वैयर्थ्यं । 'वसन्ति हि प्रेम्णि गुणा न वस्तुनी'त्यादौ तूपचारो बोध्य इति । **अभिजनश्च** । योगविभाग उत्तरार्थः । 'अभिजनाः पूर्वबान्धवाः' इति वृत्तिः । अभिजायते येभ्य इति व्युत्पत्तेरिति भावः । पूर्वबान्धवाः---पित्रादयः । बन्धुशब्दः प्रज्ञादिः । पूर्वसूत्रादिह 'निवासः' इत्यनुवृत्तम् । तत्सामानाधिकरण्यादभिजनशब्दस्य तत्संबन्धिनि लक्षणा । एवं स्थिते फलितमाह—**यत्र पूर्वैरिति** । **आयुधजीविभ्यः** । तादर्थ्ये एषा चतुर्थी । आयुधजीविभ्यः=आयुधजीव्यर्थम् , आयुधजीविनोऽभिधातुं प्रत्ययः स्यादित्यर्थः । 'सोऽस्याभिजनः' इत्यनुवर्तते । पर्वत इति प्रकृतिविशेषणं, तदाह—**पर्वतवाचिन इत्यादि** । पर्वत इति किम् ? । साङ्काश्यका आयुधजीविनः । 'योपधा'दिति वुञ् । **शण्डिकादिभ्यो ञ्यः** । शण्डिका सर्वसेन शकेत्यादि । **सिन्धुतक्ष** । सिन्धुः वर्णुः गन्धारः

बा.] तस्येदमित्यणन्तात्स्वार्थे कः । **शारीरकीय इति** । वृद्धत्वाच्छः । **शिशुक्रन्द** । शिशुक्रन्द, यमसभ, द्वन्द्व, इन्द्रजननादि एभ्यश्छः स्यादधिकृत्य कृते ग्रन्थे इत्यर्थे । **निपातनादिति** । 'सभा राजे'ति तु नपुंसकत्वं न भवति, तत्र 'अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहे'त्युक्तेरिति भावः । **सोऽस्य निवासः** । अस्मिन्नर्थे प्रथमान्तात्प्रत्ययाः स्युरित्यर्थः । 'यत्र संप्रत्युष्यते स निवास' इति भाष्यम् । **अभिजनश्च** । स इत्यनुवर्तते । पूर्ववद्व्याख्येयम् । 'यत्र पूर्वैरुषितं सोऽभिजन' इति भाष्यम् । **यत्र स्वयमिति** । उदाहृतभाष्यस्यायमर्थ इति भावः । **आयुधजीविभ्यः** । 'पर्वता'दिति पाठान्तरम् । **अभिजनशब्दादिति** । अभिजनदेशवाचिन इत्यर्थः । 'आयुधजीविनोऽभिधातु'मिति शेषः । सूत्रे 'क्रियार्थोपपदस्ये'ति चतुर्थी । **हृद्गोल इति** । पर्वतविशेषोऽयम् । **ऋक्षोद इति** । अयमपि पर्वतविशेषः । **शण्डिकादिभ्यो ञ्यः** । 'सोऽभिजन इत्यर्थे प्रथमान्तेभ्य' इति शेषः । **सिन्धुतक्ष । सैन्धव इति** । सिन्धुर्देशविशेषोऽभिजनोऽस्येति विग्रहः । **तूदीसलातुर** । तूदी, सलातुर, वर्मती, कूचवार-एभ्यः प्रथमान्तेभ्यो ढक्, छण्, ढञ्, यक् एते स्युः अस्याभिजन इत्यर्थे । **भक्तिः** । **अनुवर्तते इति** । सोऽस्य भक्तिरित्यर्थे प्रथमान्तात्प्रत्ययाः स्युरित्यर्थः । **अचित्तादेश** । देशकालव्यतिरिक्ताऽप्राणिवाचिनः ठक्स्यादुक्तविषये । **अपूपाः भक्तिरिति** । सामान्याभिप्रायं भक्तिरित्येकवचनं, 'वेदाः प्रमाण'-

शे.] दाहरणम् । **निपातनादिति** । 'सभाराजे'ति सूत्रेऽमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाहेत्युक्तेरिति भावः । **सोऽस्य नि** । **निवास** इत्यधिकरणे घञ् । अस्येति कर्तुः शेषत्वविवक्षायां षष्ठी । स्रुघ्नाऽभिन्ननिवाससम्बन्धीत्यर्थः । स्रुघ्नाधिकरणकवासकर्त्रेति फलति । **आयुधजी** । 'क्रियार्थोपपदस्ये'ति चतुर्थी । आयुधजीविनोऽभिधातुमित्यर्थः । पर्वते इति प्रकृतेर्विशेषणम् । 'पर्वता'दिति सूत्रे पाठान्तरम् । पर्वते इति किम् ? । साङ्काश्यका आयुधजीविनः । सोऽस्याभिजन... । **तूदीसला** । 'शले'ति तालव्यपाठो दृष्टो । **अचित्ताद** ।

ल्किम् ? । दैवदत्तः । अदेशात्किम् । सौघ्नः । अकालात्किम् ? । ग्रैष्मः । **महाराजाट्ठञ्** ।४।३।९७। माहाराजिकः । **वासुदेवार्जुनाभ्यां वुन्** ।४।३।९८। वासुदेवकः । अर्जुनकः । **गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्** ।४।३।९९। अणोऽपवादः । परत्वाद्वृद्धाच्छं बाधते । ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । नाकुलकः । बहुलग्रहणान्नेह-पाणिनो भक्तिरस्य पाणिनीयः । **जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने** ।४।३।१००। जनपदस्वामिवाचिनां--बहुवचने जनपदवाचिना समानश्रुतीनां--जनपदवत्सर्वं स्यात्प्रत्ययः प्रकृतिश्च । 'जनपदतदवध्योश्चे'ति प्रकरणे ये प्रत्यया उक्तास्तेऽत्रातिदिश्यन्ते । अङ्गा जनपदो

---

**त.]** कम्बोजादयः सिन्ध्वादयः । ते तु प्रायेण कच्छादिष्वपि पठ्यन्ते । तेभ्योऽणि तत एव सिद्धे मनुष्यवुञो बाधनार्थं वचनम् । तक्षशिला वत्सोद्धरणा बर्बरेत्यादयस्तक्षशिलादयः । **वासुदेवार्जुनाभ्यां वुन्** । छाऽणोरपवादः । 'अजाद्यदन्तम्', 'अल्पाच्तर'मिति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तस्याऽकरणं 'सर्वतोऽभ्यर्हितं पूर्वं निपतती'ति ज्ञापनार्थम् । ननु वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धके'त्यणि वासुदेवशब्दो निष्पन्नः । तथा च तत्र 'गोत्रक्षत्रियाख्येभ्यः' इत्युत्तरसूत्रेण वुञेवाऽस्तु, किमनेन वुना । न ह्यत्र वृद्धौ विशेषः, प्रागेव वृद्धत्वात् । न च 'वृद्धिनिमित्तस्ये'ति पुंवद्भावनिषेधो दोषः स्यादिति वाच्यं, वुन्यपि 'न कोपधायाः' इति निषेधस्येष्यमाणत्वात् । न वा स्वरे विशेषः, 'ञ्नित्यादिर्नित्य'मिति तुल्यस्वरत्वात् । नापि 'अभ्यर्हितं पूर्व'मिति ज्ञापनमेव तत्फलमिति वाच्यं, तथात्वे हि पूर्वनिपातप्रकरणे 'अभ्यर्हित'मित्येव लाघवात्कुर्यादिति चेत् । अत्र भाष्यं—'संज्ञैषा भगवतः' इति । अयं भावः—'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते ।' इति स्मृतेः परमात्मा इह वासुदेवः । सर्वत्रासौ वसति, सर्वमत्र वसतीति वा व्युत्पत्त्या वासुः । बाहुलकादुण् । वासुश्चासौ देवश्चेति विग्रहः । तथा च नेयं गोत्राख्या, नापि क्षत्रियाख्येति युक्त एव वुन्विधिः । 'अभ्यर्हितं पूर्व'मिति तु प्रसङ्गाज्ज्ञापितं । तदप्यनित्यं 'श्वयुवमघोना'मित्यादिलिङ्गादित्यवधेयम् । **वृद्धाच्छं बाधत इति** । औपगवो भक्तिरस्य औपगवकः । **जनपदिनां** । स्वस्वामिभावसंबन्धे मत्वर्थीयं दर्शयति—**जनपदस्वामिवाचिनामिति** । **प्रत्ययः प्रकृतिश्चेति** । अनेन सर्वशब्दस्यार्थो दर्शितः । असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यान्न तु प्रकृतेरिति हरदत्तः । अत्र वार्तिककारः सर्वशब्दस्य प्रयोजनमाह—'सर्ववचनं प्रकृतिनिर्ह्रासार्थं, तच्च मद्रवृज्यर्थ'मिति । अयं भावः—वृद्धिनिमित्तेषु वुञादिष्वतिदिष्टेऽपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति विशेषस्य तत्र दुर्लभत्वान्मद्रवृज्योः कनि विशेषो बोध्यः । सोऽप्यबहुत्व एवेति । निर्ह्रासोऽपचयोऽल्पता । तथा हि मद्राणां राजा । 'द्व्यञ्मगधे'त्यण् । माद्रः । वृजिशब्दात् 'वृद्धेत्कोशले'ति ञ्यङ् । वार्ज्यः । स भक्तिरस्येति प्रकृतिनिर्ह्रासे—मद्रकः । वृजिकः । 'मद्रवृज्योः कन्' । अन्यथा माद्रकः वार्ज्यक इति स्यात् । **आङ्गक इति** । 'जनपदतदवध्योश्च' 'अवृद्धादपी'ति वुञ् । अङ्ग-

---

**बा.]** मितिवत् । **पायसिक इति** । पयो भक्तिरस्येति विग्रहः । **महाराजाट्ठञ्** । 'सोऽस्य भक्तिरित्यर्थे' इति शेषः । **माहाराजिक इति** । महाराजो भक्तिरस्येति विग्रहः । **वासुदेव** । 'सोऽस्य भक्ति'रित्येव । **वासुदेवक इति** । वासुदेवो भक्तिरस्येति विग्रहः । एवमर्जुनकः । ननु वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धकवृष्णिकुरुभ्यश्चे'ति वार्ष्णेयत्वादणि वासुदेवशब्दात् 'गोत्रक्षत्रियाख्येभ्यो बहुलं वु'ञिति वुञैव सिद्धत्वाद्वासुदेवग्रहणं व्यर्थमिति चेत्, सत्यम्, अणन्तो वासुदेवशब्दोऽत्र न गृह्यते किंतु यस्मिन्समस्तं वसति, यो वा समस्ते वसति स वासुः स चासौ देवश्चेति व्युत्पत्त्या वासुदेवशब्दोऽयं भगवति योगरूढ एवेति न दोषः । उक्तंच भाष्ये—'नैषा क्षत्रियाख्या, संज्ञैषा तत्रभवतः' इति । **गोत्रक्षत्रिया** । गोत्रप्रत्ययान्तेभ्यः क्षत्रियवाचिभ्यश्चोक्तविषये बहुलं वुञ्स्यादित्यर्थः । इह न पारिभाषिकं गोत्रम् । **छं बाधते इति** । 'औपगवक इत्यादा'विति शेषः । **ग्लुचुकायनिरिति** । 'प्राचामवृद्धा'दिति फिनि ग्लुचुकायनिशब्दः । **नाकुलक इति** । क्षत्रियाख्योदाहरणम् । **जनपदिनां** । बहुवचने परे ये जनपदे समानशब्दाः=जनपदवाचिशब्देन समानः शब्दः=श्रवणं येषां तथाविधाः, तेषां जनपदिनां=जनपदस्वामिवाचिनां **जनपदवत्**=जनपद इव सर्वं स्यादित्यर्थः । 'जनपदतदवध्योश्चे'ति प्रकरणे ये प्रत्यया विहितास्ते भवन्ति, प्रकृतयोऽपि तथैव भवन्तीति तु 'सर्व'शब्दाल्लभ्यते । तदाह—**जनपदस्वामिवाचिनामित्यादिना** । **अङ्गा जनपद इति** । दृष्टान्तार्थमिदम् ।

---

**शे.]** अत्र स्वरूपग्रहणं न, अदेशकालादित्यस्य वैयर्थ्यापत्तेः । **गोत्रेति** । लौकिकमिह गोत्रम् । **वृद्धाच्छमिति** । **औपगवक इत्यादौ** । आख्याग्रहणात्क्षत्रियः शूर इत्यादौ शूरशब्दान्न । **पाणिन इति** । अस्य प्रवराध्यायप्रसिद्धत्वरूपलौकिकगोत्रत्वाऽभावादेव सिद्धेर्बहुलग्रहणस्य प्रयोजनान्तरं मृग्यं । क्षत्रियांऽशे पौरवीय इति वा तत् । **जनपदिनाञ्जनपद** । स्वस्वामिसम्बन्धे मत्वर्थीयं दर्शयति—**स्वामिवाचिनामिति** । सर्वशब्दार्थमाह—**प्रकृतिश्चेति** । तत्फलन्तु मद्राणां राजा—माद्रः । 'द्व्यञ्मगधे'त्यण् । स भक्तिरस्येत्यर्थे मद्रकसिद्धिः । अतिदेशान्मद्रशब्दत्वेन 'मद्रवृज्योः कन्' । **अङ्गा जनपद इति** । दृष्टान्तार्थम् ।

भक्तिरस्य-आङ्गकः। अङ्गाः क्षत्रिया भक्तिरस्य आङ्गकः। जनपदिनां किम्? पञ्चाला ब्राह्मणा भक्तिरस्य पाञ्चालः। जनपदेनेति किम्? । पौरवो राजा भक्तिरस्य पौरवीयः। तेन प्रोक्तम् ।४।३।१०१। पाणिनिना प्रोक्तं पाणिनीयम्। तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।४।३।१०२। 'छन्दोब्राह्मणानी'ति तद्विषयता। तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः। काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।४।३।१०३। काश्यपेन प्रोक्तमधीयते काश्यपिनः। कलापिवैशम्पायनान्तेवासिभ्यश्च ।४।३।१०४। कलाप्यन्तेवासिभ्यः-हरिद्रुणा प्रोक्तमधीयते हारिद्रविणः। वैशम्पायनान्तेवासिभ्यः-आलम्बिनः। पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।४।३।१०५। तृतीयान्ता-

त.] शब्दात्स्वामिवाचिनो बहुवचनान्तादणि प्राप्ते वुञतिदिश्यते। पञ्चाला ब्राह्मणाः इति। अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः। बहुवचनग्रहणं किम्?। एकवचनद्विवचनयोः सत्यपि शब्दभेदे अतिदेशो यथा स्यात्। आङ्गः आङ्गौ वा भक्तिरस्य आङ्गकः। इह वृद्धाच्छे प्राप्ते वुञ्। तेन प्रोक्तम्। प्रकर्षेणोक्तं प्रोक्तमित्युच्यते, न तु कृतं, 'कृते ग्रन्थे' इत्यनेन गतार्थत्वात्। पाणिनिना प्रोक्तमिति। स्वयमन्येन वा कृतं व्याकरणमध्यापनेनार्थ-व्याख्यानेन वा प्रकाशितमित्यर्थः। प्रेति किम्?। देवदत्तेनाध्यापितं। प्रख्यातस्यैव ग्रन्थस्याध्यापनमिति नानेन प्रत्ययः। तित्तिरिवर। अणोऽपवादः। तद्विषयतेति। 'शौनकादिभ्यश्छन्दसी'त्यत्रास्यानुवृत्तेस्तित्तिरिणः प्रोक्तः श्लोक इत्यत्र न भवतीति भावः। तैत्तिरीया इति। 'प्रोक्ताल्लु'गित्यध्येतृप्रत्ययस्य लुक्। एवमग्रेऽपि। काश्यप। छस्यापवादः। णकार उत्तरत्र वृद्ध्यर्थः। ननु 'वृद्धिनिमित्तस्ये'ति पुंवद्भावनिषेधोऽत्र फलमस्तीति चेत्। अत्राहुः—णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रियामप्रवृत्तेः। प्रवृत्तावपि 'जातेश्चे'ति सिद्धत्वात्, चरणत्वेन जातित्वादिति। ऋषिभ्यामिति किम्?। इदानींतमेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम्। कलापिवैशंपायना। अणोऽपवादः।

बा.] अङ्गनाम्नां राज्ञां निवासो जनपदः—अङ्गाः। 'जनपदे लुप्' इति चातुरर्थिकस्य लुप्। स जनपदो भक्तिरस्येत्यर्थे 'जनपदतदवध्योश्चे'ति वुञ्प्रत्यये 'आङ्गकः' इति यथा तथा अङ्गदेशस्वामिनः क्षत्रिया अङ्गा भक्तिरस्येत्यर्थे क्षत्रियवाचकादङ्गशब्दाद्वुञि 'आङ्गकः' इति रूपमित्यर्थः। पञ्चाला ब्राह्मणा इति। अभेदोपचारादिह ब्राह्मणेषु पञ्चालशब्दः। तत्रातिदेशाऽभावादणेव भवति। पौरव इति। पौरवशब्दो न जनपदवृत्तिरिति भावः। बहुवचने किम्?। एकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशो भवति। यथा आङ्गो वा आङ्गौ वा भक्तिरस्य आङ्गक इति। प्रकृतिश्चे-ति किम्?। मद्राणां राजा माद्रः। 'द्व्यञ्मगधे'त्यण्। माद्रो भक्तिरस्येत्यर्थे अतिदेशान्माद्रस्य मद्रत्वे सति 'मद्रवृज्यो'रिति कनि 'माद्रक' इति सिध्यति। तेन प्रोक्तम्। अस्मिन्नर्थे तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। पाणिनीयमिति। 'व्याकरण'मिति शेषः। वृद्धाच्छः। प्रथमं प्रकाशितं—प्रोक्तम्। नेह—'देवदत्तेनाध्यापितम्'। तित्तिरिवरतन्तु। तेन प्रोक्त'मित्येव। तित्तिरि, वरतन्तु, खण्डिक, उख-एभ्य उक्तविषये छण्स्यादित्यर्थः। इत आरभ्य 'तेनैकदि'गितिपर्यन्तं प्रोक्ते वेदे भवन्ति, 'शौनकादिभ्यः छन्दसी'ति छन्दोग्रहणस्य ततः पूर्वं तत उत्तरं चापकर्षानुवृत्त्योरभ्युपगमात्। अत्र छणादिप्रत्ययान्तानामेषां केवलानां न प्रयोगः, किंत्वध्येतृवेदितृप्रत्ययशिरस्काणामेवेत्याह—छन्दोब्राह्मणानीति। तद्विषयतेति। अध्येतृवेदितृप्रत्ययशिरस्कत्वनियम इत्यर्थः। तैत्तिरीया इति। प्रोक्ते वेदे छण्। ईयः। तैत्तिरीयः—शाखाभेदः, तमधीयते विदन्ति वेत्यर्थे अण्। 'प्रोक्ताल्लु'गिति तस्य लुगिति भावः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः। 'तित्तिरिणा प्रोक्तः श्लोक' इत्यत्र तु न, छन्दसीत्यनुवृत्तेः। छन्दःशब्देन च कल्पसूत्राणामपि ग्रहणं, तेषां सर्वशाखागतविधिवाक्यसङ्ग्रहात्मकत्वात्। काश्यप। 'तेन प्रोक्त'मित्येव। छस्यापवादः। काश्यपिन इति। काश्यपशब्दाण्णिनिः। णकार इत्। नकारादिकार उच्चारणार्थः। काश्यपिन्शब्दात् 'प्रोक्ताल्लु'गित्यध्येतृप्रत्ययस्याऽणो लुगिति भावः। एवं कौशिकिनः। ऋषिभ्यां किम्?। इदानींतनेन काश्यपेन प्रोक्तं काश्यपीयम्। कलापि। 'तेन प्रोक्त'मित्येव। कलापिशिष्यवाचिभ्यो, वैशम्पायनशिष्यवाचिभ्यश्च णिनिः स्यादित्यर्थः। कलाप्यन्तेवासिभ्य इति। 'उदाह्रियते' इति शेषः।

शे.] 'अवृद्धादपी'ति वुञ्। पञ्चाला ब्राह्मणा इति। अभेदोपचारोऽत्र बोध्यः। पौरव इति। पुरुः पूर्वो न जनपदः। बहुवचने इति किम्?। एकवचनद्विवचनयोः सत्यपि शब्दभेदेऽतिदेशार्थं तत्करणम्। यो यज्जनपदवाची ततस्तज्जनपदप्रत्ययो यथा स्याज्जनपदान्तरप्रत्ययो माभूदिति हरदत्तः। तित्तिरिव। इत आरभ्य वक्ष्यमाणाः प्रत्ययाः 'तेनैकदि'गित्येतत्पर्यन्तं छन्दसि वाच्ये इष्यन्ते। 'शौनकादिभ्यश्छन्दसी'त्यतश्छन्दोग्रहणस्य पूर्वमपकर्षादुत्तरत्राऽनुवृत्तेश्च। तदाह-छन्दोब्राह्मणेति। तेन 'तित्तिरिप्रोक्तः श्लोक' इत्यत्र न। 'तित्तिर्यादिभ्यश्छणेव' स च छन्दस्येवे'ति नियमद्वयाश्रयणादप्यणत्र न। छन्दःशब्देन कल्पसूत्राण्यपि। तत्र स्वरितत्वप्रतिज्ञयाऽधिकारार्थावगतेः। काश्यपकौ। आभ्यां कल्पेऽपि तद्विषयतेष्यते। कलापिवै। हरिद्रुश्छगली-

त्प्रोक्तार्थे णिनिः स्यात्प्रोक्तं पुराणप्रोक्ताश्चेद्ब्राह्मणकल्पास्ते भवन्ति। पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। भल्लु-भाल्लविनः। शाट्यायन-शाट्यायनिनः। कल्पे,-पिङ्ग-[पिङ्गेन प्रोक्तः] पैङ्गी कल्पः। पुराणेत्यादि किम् ?। याज्ञवल्क्यानि ब्राह्मणानि। आश्मरथः कल्पः। अणि 'आपत्यस्ये'ति यलोपः। **शौनकादिभ्यश्छन्दसि** ।४।३।१०६। छन्दस्यभिधेये एभ्यो णिनिः। शौनकेन प्रोक्तमधीयते शौनकिनः। **कठचरकाल्लुक्** ।४।३।१०७। आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात्। कठेन प्रोक्तमधीयते कठाः। चरकाः। **कलापिनोऽण्** ।४।३।१०८। कलापिना प्रोक्तमधीयते कालापाः। ॐ **नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथुमितैतिलिजाजलि-**

---

त.]छं तु परत्वाद्बाधते। कलाप्यन्तेवासिनश्चत्वारः। हरिद्रुः छगली तुम्बुरुः उलप इति। वैशंपायनान्तेवासिनस्तु नव— आलम्बिः कलिङ्गः कमलः ऋचाभः आरुणिः ताण्ड्यः श्यामायनः कठः कलापी-इति। **हारिद्रविण इति**। एवं तौम्बुरविणः, औलपिनः। छगलिनस्तु ढिनुकं वक्ष्यति। **आलम्बिन इति**। एवं कालिङ्गिनः कामलिनः आर्चाभिनः आरुणिनः ताण्डिनः श्यामायनिनः। कठाल्लुकं वक्ष्यति, कलापिनश्चाणम्। याज्ञवल्क्याश्मरथ्यशब्दौ कण्वादी, तेन ताभ्यां यञन्ताभ्यां वृद्धाच्छो न भवतीत्याशयेनाह **अणि आपत्यस्येतीति**। 'याज्ञवल्क्यादयो ह्यचिरकालाः' इति भारतादिषु व्यवहारः, स एवानुसृतः सूत्रकृता। **कठचरकाल्लुक्**। कठशब्दस्य वैशंपायनान्तेवासित्वाण्णिनिः। चरकादण्। तयोर्लुक्। छन्दसीत्येव। काठाः। चारकाः श्लोकाः। **कलापिनोऽण्**। वैशंपायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः। 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते आह—**नान्तस्य टिलोप इति**। 'कलापिनः' इत्युक्तेऽप्यौत्सर्गिकेऽणि सिद्धे पुनरण्ग्रहणमधिकविधानार्थं सद्बाधकबाधनार्थं भवति। तेन माथुरेण प्रोक्ता

---

बा.] **हारिद्रविण इति**। हरिद्रुर्नाम कलापिनः शिष्यः। ततः प्रोक्ते णिनिः। 'ओर्गुणः'। आदिवृद्धिः। हारिद्रविन्शब्दादध्येत्रणः 'प्रोक्ताल्लु'गिति लुगिति भावः। हरिद्रुः, छगली, तुम्बुरुः, उलप इति चत्वारः कलापिशिष्याः। तुम्बुरुणा प्रोक्तमधीयते तौम्बुरविणः। छगलिनस्तु ढिनुग्वक्ष्यते। औलपिनः। **वैशम्पायनान्तेवासिभ्य इति**। 'उदाह्रियते' इति शेषः। **आलम्बिन इति**। आलम्बिः, कलिङ्गः, कमलः, ऋचाभः, आरुणिः, ताण्ड्यः, श्यामायनः, कठः, कलापी इति नव वैशम्पायनशिष्याः। तत्र आलम्बिशब्दादध्येत्रणः प्रोक्ते णिनिः। आलम्बिन्शब्दादध्येत्रणः 'प्रोक्ताल्लु'गिति लुक्। आलम्बिनः, कालिङ्गिनः, कामलिनः, आर्चाभिनः, आरुणिनः, ताण्डिनः। अत्र 'आपत्यस्ये'ति यलोपः। श्यामायनिनः। कठात्तु लुग्वक्ष्यते। कलापिनस्त्वण्वक्ष्यते। वैशम्पायनशिष्यः कलापी। तथा च कलाप्यन्तेवासिनां वैशम्पायनशिष्यत्वादेव सिद्धे पृथग्ग्रहणात्तच्छिष्यशिष्याणां न ग्रहणमिति भाष्ये स्पष्टम्। **पुराणप्रोक्तेषु**। 'तेन प्रोक्त'मिति, 'णिनि'रिति चानुवर्तते। मन्त्रव्यतिरिक्तवेदभागा ब्राह्मणानि। बोधायनादिकल्पसूत्राणि-कल्पाः। तथाभूतेषु पुरातनमुनिप्रोक्तेषु ग्रन्थेषु वाच्येषु तृतीयान्ताण्णिनिः स्यादित्यर्थः। तदाह- **तृतीयान्तादिति**। **यत्प्रोक्तमिति**। सामान्याभिप्रायमेकवचनम्। प्रत्ययाभिधेयं यत्प्रोक्तं तत्पुरातनमुनिप्रोक्तब्राह्मणकल्पात्मकं चेदिति यावत्। 'पुराणप्रोक्त'मित्येतद्व्याचष्टे--**पुराणेनेति**। ब्राह्मणे उदाहरति--**भल्लु-भाल्लविन इति**। भल्लु इति प्रकृतिनिर्देशः। भल्लुना पुरातनमुनिना प्रोक्तान्ब्राह्मणभागानधीयते इत्यर्थे प्रोक्तार्थणिनिः। भाल्लविन्शब्दादध्येत्रणो लुकि 'भाल्लविन' इति रूपमिति भावः। ब्राह्मणे उदाहरणान्तरमाह--**शाट्यायन शाट्यायनिन इति**। शाट्यायनेति प्रकृतिनिर्देशः। शाट्यायनेन पुरातनमुनिना प्रोक्तान्ब्राह्मणभागानधीयते इत्यर्थे प्रोक्तार्थणिनिप्रत्यये शाट्यायनिन्शब्दादध्येत्रणो लुकि 'शाट्यायनिन' इति रूपमित्यर्थः। **कल्पे इति**। 'उदाह्रियते' इति शेषः। **पिङ्ग—पैङ्गी कल्प इति**। पिङ्गेति प्रकृतिनिर्देशः। पिङ्गेन पुरातनमुनिना प्रोक्त इत्यर्थे णिनौ रूपम्। 'छन्दोब्राह्मणानि च तद्विषयाणी'त्यध्येतृप्रत्ययान्तत्वनियमस्तु कल्पेषु न सर्वत्र प्रवर्तत इति 'छन्दोब्राह्मणानी'ति सूत्रे भाष्ये स्पष्टम्। **याज्ञवल्कानीति**। याज्ञवल्क्येन प्रोक्तानीत्यर्थः। **आश्मरथ इति**। आश्मरथ्येन प्रोक्त इत्यर्थः। **यलोप इति**। यज्ञवल्काश्मरथशब्दौ कण्वादी। ताभ्यां यञन्ताभ्यामणि 'आपत्यस्य चे'ति यलोप इत्यर्थः। याज्ञवल्क्याऽऽश्मरथ्यावाधुनिकावित्यभिमानः। भाष्ये तु शाट्यायनादितुल्यकालत्वाद्याज्ञवल्क्यादिभ्यो णिनिप्रतिषेध इति तद्विषयता च नेति वचनद्वयमारब्धमित्यास्तां तावत्। **कठचरकाल्लुक्**। **प्रोक्तप्रत्ययस्येति**। प्रकरणलभ्यम्। **कठा इति**। वैशम्पायनान्तेवासित्वलक्षणणिनो लुक्। अध्येत्रणस्तु 'प्रोक्ताल्लु'गिति लुक्। **चरका इति**।

---

शे.]तुम्बुरूलपश्चत्वारः कलाप्यन्तेवासिनः। द्वितीया नव आलम्बि-कलिङ्ग-कमल-ऋचाभा-ऽऽरुणि-ताण्ड्य-श्यामायन-कठ-कलापिनः। कलाप्यन्तेवासिनां वैशम्पायनशिष्यत्वादेव सिद्धे तद्ग्रहणाच्छिष्यशिष्याणां न ग्रहणम्। **याज्ञवल्कानीति**। 'कण्वादिभ्यः' इत्यण्। ते हि पाणिन्यपेक्षया आधुनिका इत्यभिमानः। भाष्ये तु शाट्यायनादितुल्यकालत्वाद्याज्ञवल्क्यादिभ्यः प्रतिषेधस्तद्विषयता च नेति वचनमेवारब्धम्। **शौनकादिभ्यश्छन्दसि**। छन्दस्यभिधेये एभ्यो णिनिः। छन्दसि किम् ?।

लाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसङ्ख्यानम्। इत्युपसङ्ख्य नाहिलोपः। छगलिनो ढिनुक् ।४।३।१०९। छगलिना प्रोक्तमधीयते छागलेयिनः। पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।४।३।११०। णिनिः स्यात्। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः। कर्मन्दकृशाश्वादिनिः ।४।३।१११। भिक्षुनटसूत्रयोरित्येव। कर्मन्देन प्रोक्तमधीयते कर्मन्दिनो भिक्षवः कृशाश्विनो नटाः। तेनैकदिक् ।४।३।११२। सुदाम्ना अद्रिणा एकदिक् सौदामनी। तसिश्च ।४।३।११३। स्वरादिपाठादव्ययत्वम्।

त.] माथुरी वृत्तिः, मौदाः पैप्पलादाः शाकला इति सिद्धम्। मुद पिप्पलाद शाकल–एभ्यः 'पुराणप्रोक्तेषु' इति णिनेरपवादोऽण्। छगलिनो ढिनुक्। कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादोऽयम्। पाराशर्य। मण्डूकप्लुत्या णिनिरिह सम्बध्यत इत्याह—णिनिः स्यादिति। तद्विषयताऽत्रेष्यते, तदर्थं छन्दोग्रहणमनुवर्त्यम्। सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम्। भिक्षुसूत्रमिति। चतुर्लक्षणीरूपम्। पाराशरिण इति। पाराशर्यो–व्यासः। अनन्तरापत्येऽपि गोत्रत्वेनोपचारात् 'गर्गादिभ्यः' इति यञ्। 'आपत्यस्य चे'ति यलोपः। अध्येत्रणस्तु 'प्रोक्ता'दिति लुक्। भिक्षुनटसूत्रयोः किम्?। पाराशरम्। शैलालम्। कर्मन्द। इहापि छन्दोनुवृत्त्यादि प्राग्वत्। भिक्षुनटसूत्रयोः किम्?। कार्मन्दम्। कार्शाश्वम्। तेनैकदिक्। तृतीयान्तादेकदिगित्यर्थे अणादयः स्युः। एकदिक्। समाना दिगित्यर्थः। पुनस्तेनेत्युक्तिश्छन्दोऽधिकारनिवृत्त्यर्था। सौदामनीति। 'अन्' इति प्रकृतिभावान्न टिलोपः।

बा.] चरकेण प्रोक्तमधीयते इत्यर्थः। प्रोक्ताणोऽनेन लुकि अध्येत्रणः प्रोक्ताल्लुक्। कलापिनोऽण्। 'तेन प्रोक्त'मित्येव। वैशम्पायनशिष्यत्वात् प्राप्तस्य णिनेरपवादः। कालापा इति। कलापिन्शब्दादणि टिलोपे कालापशब्दादध्येतृप्रत्ययस्य छस्य लुगिति भावः। 'इनण्यनपत्ये' इति प्रकृतिभावमाशङ्क्याह--नान्तस्येति। छगलिनो। छगलिन्शब्दादुक्तविषये ढिनुक्प्रत्ययः स्यादित्यर्थः। कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः। छागलेयिन इति। ककार इत्। उकार उच्चारणार्थः। 'ढिन्' शिष्यते। ढस्य एय्। टिलोपः। ततोऽध्येतृप्रत्ययस्य लुगिति भावः। पाराशर्य। णिनिः स्यादिति। 'उक्तविषये' इति शेषः। मण्डूकप्लुत्या णिनिरेवानुवर्तते इति भावः। पाराशर्येण प्रोक्तं भिक्षुसूत्रमित्यर्थे, शिलालिना प्रोक्तं नटसूत्रमित्यर्थे च तृतीयान्ताण्णिनिः स्यादिति यावत्। भिक्षवः=संन्यासिनः, तदधिकारिकं सूत्रं भिक्षुसूत्रं=व्यासप्रणीतं प्रसिद्धम्। पाराशर्येणेति। पराशरशब्दाद्गर्गादित्वाद्गोत्रे यञि-'पाराशर्यः' व्यासः। इह त्वनन्तरापत्ये गोत्रत्वारोपाद्यञ्। तेन प्रोक्ते भिक्षुसूत्रे णिनिः, ततोऽध्येतृप्रत्ययस्य छस्य लुक्। पाराशरिण इति। जसि रूपम्। शैलालिन इति। शिलालिन्शब्दान्नटसूत्रे प्रोक्ते णिनौ टिलोपे शैलालिन्शब्दादध्येतृप्रत्ययस्याऽणो लुकि 'शैलालिन' इति जसि रूपमिति भावः। कर्मन्द। कर्मन्देन प्रोक्तं भिक्षुसूत्रमित्यर्थे, कृशाश्वेन प्रोक्तं नटसूत्रमित्यर्थे च तृतीयान्तादिनिः स्यादिति यावत्। प्रत्यये अन्त्य इकार उच्चारणार्थः। कर्मन्दशब्दादिनिः। ततोऽध्येत्रणो लुक्। एवं 'कृशाश्विनः'। तेनैकदिक्। सहार्थे तृतीया। एका दिक् अधिकरणात्मिका यस्य तदेकदिक्। तेन सह एकस्यां दिशि विद्यमानमित्यर्थे तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। सौदामनीति। अणि 'अ'निति प्रकृतिभावान्न टिलोपः। तसिश्च। 'तेनैकदिगि'त्यर्थे तृतीयान्तात्तसिश्च स्यादित्यर्थः। इकार उच्चार-

शे.] शौनकीया शिक्षा। अस्य वेदमात्रविषयत्वमित्युक्तिर्भ्रान्त्या, 'कलापी'ति सूत्रस्थभाष्यविरोधात्। कलापिनो वचनसामर्थ्यादण्सिद्धौ पुनरण्ग्रहणमन्यतोऽपि विधानार्थम्। तेन मौधुरेण प्रोक्ता 'मौधुरी वृत्ति'रित्यादौ छादिकं न। भिक्षुसूत्रं=भिक्षुत्वसम्पादकं सूत्रम्। यथा नटसूत्रम्। नटसूत्रज्ञाने हि नटत्वसंपत्तिः, एवं तज्ज्ञाने ब्रह्मरूपत्वेन सर्वज्ञानात्कर्मस्वनादरेण भिक्षुत्वसंपत्तेः। 'वेदान्तान्विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः' इति मनूक्तेः। 'स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु। द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः'। इति याज्ञवल्क्योक्तेश्चेति। विविदिषावाक्येऽपि तपआदीनां करणानां शब्दतो गुणभूतेऽपि अर्थतः प्रधानभूते वेदने एवान्वयः। कारकाणां तण्डुलानां 'काष्ठैः पाचक' इत्यादौ गुणभूतक्रियायामप्यन्वयदर्शनात्। यद्वा 'ग्रामं ग्रामाय वा जिगमिषती'त्यादौ गमेर्ग्रामः कर्म, इषेस्तूभयमिति महाभाष्योक्तरीत्या वेदने इच्छायां चोभयत्रापि करणत्वमिति न तद्विरोधः। वस्तुत इच्छाया वस्तुसौन्दर्यज्ञानेनैव सिद्ध्या तत्र करणापेक्षा नास्त्येव। ऐतरेयब्राह्मणेऽपि–'यस्य गार्हपत्याहवनीयावन्तरेणाऽनो रथो वा श्वा वा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति नैतन्मनसि कुर्यादित्याहुरात्मन्यस्य हिते भवन्तीति। तच्चेन्मनसि कुर्वीत गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन्' इति। 'आत्मन्यस्य हिते' इत्यस्य मय्येव ते कल्पिता इति पश्येदित्यर्थः। 'संन्यस्य श्रवणं कुर्या'दित्यस्य संन्यस्य श्रवणमेव कुर्यादित्यर्थः। एतेन भिक्षुमात्राध्येयत्वाद्भिक्षुसूत्रत्वमस्येत्यपास्तम्। भिक्षव इति। भिक्षुत्वयोग्या इत्यर्थः। णिनिर्मण्डूकप्लुत्याऽनुवर्तते। पाराशर्यो—व्यासः। अनयोरपि तद्विषयतेष्यते। तेनैकदि। 'तेने'ति सहयोगे तृतीया। तेन सहैकदिग्रूपाधिकरणस्थमित्यर्थः। सौदामनीति।

पीलुमूलेन एकदिक् पीलुमूलतः । **उरसो यच्च** ।४।३।११४। चात्तसिः । अणोऽपवादः । उरसा एकदिक् उरस्यः । उरस्तः । **उपज्ञाते** ।४।३।११५। तेनेत्येव । पाणिनिना उपज्ञातं पाणिनीयम् । **कृते ग्रन्थे** ।४।३।११६। वररुचिना कृतो वाररुचो ग्रन्थः । **संज्ञायाम्** ।४।३।११७। तेनेत्येव । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं माक्षिकं मधु । **कुलालादिभ्यो वुञ्** ।४।३।११८। तेन कृते संज्ञायाम् । कुलालेन कृतं कौलालकम् । वारुडकम् । **क्षुद्राभ्रमरवटरपादपादञ्** ।४।३।११९। तेन कृते संज्ञायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् । **तस्येदम्** ।४।३।१२०। उपगोरिदमौपगवम् । * **वहेस्तुरणिट् च** । संवोढुः स्वं-सांवहित्रम् । * **अग्नीधः शरणे रण्भं च** । अग्निमिन्धे अग्नीत् । तस्य स्थानमाग्नीध्रम् । तात्स्थ्यात्सोऽप्याग्नीध्रः ।

---

त.] 'तडित्सौदामिनी विद्युदि'त्यमरः । **तसिश्च** । पूर्वोक्तविषये । **उपज्ञाते** । विनोपदेशं ज्ञातम्—उपज्ञातम् । **कुलालादिभ्यो** । कुलाल वरुड चण्डाल निषाद कुम्भकार श्वपाकादयः कुलालादयः । **क्षुद्राभ्रमर** । पादपशब्दाच्छे प्राप्ते, अन्यभ्योऽपि अणि अञ् विधीयते । **तस्येदम्** । अणादयः पञ्च महोत्सर्गाः, घादयश्च षष्ठ्यन्तात्संबन्धिनि स्युः । अनन्तरादिष्वनभिधानान्न, देवदत्तस्यानन्तरमिति । **वहेस्तु** । इडर्थमिदमुपसङ्ख्यानम्, अण् तु सिद्ध एवानूद्यते । **'तु'रिति** तृन्तृचोः सामान्यग्रहणम् । ढत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट् ततो निमित्ताऽभावान्न ढत्वादीत्याशयेनोदाहरति—**सांवहित्रमिति** । **अग्नीदिति** । क्विप् । ऋत्विग्विशेषोऽयम् । 'त्वमग्निद्दतायते' इत्यत्र तु छान्दसं ह्रस्वत्वम् । **आग्नीध्रमिति** । भत्वविधानाद्धस्य जश्त्वं नेति भावः । **सोऽपीति** । अग्नीदपीत्यर्थः । ननु 'पिबाग्नीध्रात्तवे'त्यादावाद्युदात्तं प्रयुज्यते । वार्तिके 'तुर'णिति पाठादयमन्तोदात्त इति

---

बा.]णार्थः । **स्वरादिपाठादिति** । 'स्वरादिनिपातमव्यय'मिति प्रकरणे 'तद्धितश्चासर्वविभक्ति'रित्यत्र 'तसिलादयः' इतिपरिगणने तसेः पाठादित्यर्थः । **उरसो यच्च** । उरसा एकदिगित्यर्थे तृतीयान्तादित्यर्थः । **उपज्ञाते** । तेनोपज्ञातमित्यर्थे तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । **उपज्ञातं**—प्रथमज्ञातम् । **कृते ग्रन्थे** । 'तेन कृतो ग्रन्थ' इत्यर्थे तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । **संज्ञायां । तेनेत्येवेति** । तेन कृतमित्यर्थे संज्ञायां तृतीयान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः । 'ग्रन्थे' इति नानुवर्तते । तदाह—**अग्रन्थार्थमिति** । **कुलालादिभ्यो वुञ्** । 'तेन कृते संज्ञाया'मिति शेषपूरणम् । **वारुडकमिति** । वरुडो जातिविशेषः । **क्षुद्राभ्रमर** । **'तेन कृते संज्ञाया'मिति**-शेषपूरणम् । **क्षुद्राः**=मधुमक्षिकाः । **तस्येदम्** । इदमित्यर्थे षष्ठ्यन्तादणादयः साधारणप्रत्यया, राष्ट्रावारेत्यादिभिर्विशिष्य विहिता घादयश्च प्रत्यया यथाविहितं स्युरित्यर्थः । अत्र शेषे इत्यनुवृत्तम् । ततश्च अपत्यादिचतुरर्थ्यन्तार्थेभ्योऽन्येषां शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं लभ्यते । अपत्यादीनां तु न केनापि रूपेण इदंशब्दार्थत्वमिति 'तस्यापत्य'मित्यत्रोक्तम् । **वहेस्तुरणिट् चेति** । वार्तिकमिदम् । 'तु'रिति तृन्तृचोः सामान्येन ग्रहणम् । वहधातोर्विहितो यस्तृप्रत्ययस्तस्मादण् स्यात्तृप्रत्ययस्य इडागमश्च । तत्र अण् पूर्वेण सिद्ध इड्विध्यर्थमनूद्यते । **संवोढुः स्वमिति** । विग्रहदर्शनम् । वहेस्तृच्, तृन् वा । वहेरनुदात्तत्वात् 'एकाच उपदेशे' इति नेट् । ढत्वधत्वष्टुत्वढलोपाः । 'सहिवहोरोदवर्णस्ये'त्योत्त्वम् । **सांवहित्रमिति** । ढत्वादीनामसिद्धत्वादलौकिक एव विग्रहवाक्ये पूर्वमिट् । ततो निमित्ताऽभावान्न ढत्वादि । **अग्नीधः शरणे इति** । वार्तिकमिदम् । 'शरण'मित्यर्थे अग्नीच्छब्दात्षष्ठ्यन्ताद्रण्, तस्मिन्परे भत्वं च वक्तव्यमित्यर्थः । **शरणं**—गृहम् । **अग्नीदिति** । ऋत्विग्विशेषोऽयम् । इन्धेः क्विप् । 'अनिदिता'मिति नलोपः । **आग्नीध्रमिति** । सोमे महावेदेरुत्तरार्धे पञ्चारत्निचतुरश्रस्थानविशेषसंज्ञेयम् । भत्वान्न जश्त्वम् । प्रत्ययस्वरेणान्तोदात्तोऽयं शब्दः । तैत्तिरीये 'एतद्वै यज्ञस्यापराजितं यदाग्नीध्र'दित्यादावाद्युदात्तत्वं तु 'आग्नीध्रसाधारणादञ् वक्तव्यः' इति स्वार्थिके अञि बोध्यम् । नन्वेवम् 'आग्नीध्रः प्रत्याश्रावये'दित्यादौ कथमृत्विग्विशेषे आग्नीध्रशब्दः । तत्राह—**तात्स्थ्यादिति** । आग्नीध्राख्यदेशस्थत्वात् ऋत्विग्विशेषे आग्नीध्रशब्दो गौण इति भावः । **समिधामिति** । आधीयते अनेनेत्याधानो मन्त्रः । आधानो मन्त्र इत्यर्थे

---

शे.] 'भ'श्चेति प्रकृतिभावः । तसन्तं तु स्वभावादधिकरणशक्तिप्रधानं । तृतीयार्थप्रधानमिति कृन्मेजन्तसूत्रे कैयटः । **स्वरादीति** । तत्प्रकरणपठिततद्धितपरिगणने पाठादित्यर्थः । **कुलालादिभ्यो** । इदमग्रन्थेऽपि । **क्षुद्राभ्र [म]** । पादपाच्छापवादः । केचित्तु 'पदपे'त्यवृद्धं पठन्ति । **तस्येदम्** । अत्रेदमित्यनेन शेषभूतसर्वविशेषाणां सामान्यविशेषरूपेण प्रत्ययार्थत्वं बोधयति । अत्र परोक्षत्वप्रत्यक्षत्वे न विवक्षिते । तेन प्रकृत्यर्थसम्बन्धिमात्ररूपेऽर्थेऽनेन प्रत्ययविधानम् । अपत्यादीनान्तु न केनापि रूपेणेदमर्थता, शेषत्वाऽभावात् । **भश्चेति** । 'यचि भ'मिति सूत्रान्तरं 'रणी'ति वक्तव्यमित्यर्थः । तेनाकुडारस्थत्वात्पदत्वबाधसिद्धिः । **अग्निमिन्धे इति** । अन्तर्भावितण्यर्थोऽत्रेन्धिः । **सोऽप्याग्नीध्र इति** । अस्माच्छरणेऽर्थे च्छ एव । एतेनोत्तरेणाग्नीध्रीयं धिष्ण्यमिति

* समिधामाधाने षेण्यण् । सामिधेन्यो मन्त्रः । सामिधेनी ऋक् । रथाद्यत् ।४।३।१२१। रथ्यं चक्रम् । पत्त्रपूर्वादञ् ।४।३।१२२। पत्त्रं वाहनम् । अश्वरथस्येदमाश्वरथम् । पत्त्राध्वर्युपरिषदश्च ।४।३।१२३। अम् । * पत्त्राद्वाह्ये । अश्वस्येदं वहनीयमाश्वम् । आध्वर्यवम् । पारिषदम् । हलसीराट्ठक् ।४।३।१२४। हालिकम् । सैरिकम् । द्वन्द्वाद्वुन्वैरमैथुनिकयोः ।४।३।१२५। काकोलूकिका । कुत्सकुशिकिका । * वैरे देवासुरादिभ्यः प्रतिषेधः । दैवासुरम् । गोत्रचरणाद्वुञ्

त.] चेत् । अत्राहुः–'आग्नीध्रसाधारणादञि'ति वार्तिकेन विहितो यः स्वार्थेऽञ् तत्पक्षे तत्राद्युदात्तत्वं बोध्यमिति । समिधामिति । कर्मणि षष्ठीयम् । आधानमिति करणे ल्युट् । कर्मणि षष्ठ्यन्तादाधानकरणे षेण्यण् स्यात् । सामिधेन्य इति । यया अग्निः समिध्यते सा–समित् । संपदादित्वात्करणे क्विप् । तस्या आधान इति विग्रहः । सामिधेनीति । षित्त्वान्ङीष् । हलस्तद्धितस्ये'ति यलोपः । यया ऋचा समिदाधीयते सा सामिधेनीत्यर्थः । 'प्रवो वाजा अभिद्यवः' इत्याद्याः 'आजुहोता दुवस्यत' इत्यन्ताः 'सामिधेन्य' इति व्यवह्रियन्ते । रथाद्यत् । अणोऽपवादः । 'रथाद्रथाङ्गे' इति वार्तिकमभिप्रेत्याह— रथ्यं चक्रमिति । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिरुपसङ्ख्यायते । परमरथ्यम् । उत्तमरथ्यम् । द्वयो रथयोरङ्गं द्विरथम् । इह 'द्विगोर्लुगनपत्ये' इति यतो लुक् । ननु यत्प्रत्ययोऽत्र रथाङ्ग एव यदीष्यते कथं तर्हि 'रथस्य वोढा रथ्यः' इति ? । 'तद्वहती'त्यनेनेति चेत् । एवं तर्हि अयमेव यद्रथाङ्ग इव वोढर्यपीष्यतां, 'तद्वहति रथयुगप्रासङ्ग'मित्यत्र रथग्रहणं त्यज्यतामिति चेत् । मैवम् । द्वौ रथौ वहति द्विरथ्य इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयस्य लुक्प्रसङ्गात् । 'तद्वहती'ति यत्प्रत्ययस्य तु प्राग्दीव्यतीयत्वाऽभावान्न लुगिति 'द्विरथ्य' इति सिध्यतीति । ननु 'द्विगोर्लुगनपत्ये' इत्यत्राऽचीत्य[स्या]पकर्षणात्कथमत्र यतो लुक्प्रसक्तिरिति चेत् । अत्राहु—'तद्वहती'त्यत्र रथग्रहणमेव ज्ञापकम्–'एतस्य यतो हलादेरपि लुग् भवती'ति । अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यात् । तथा च द्वयो रथयोरङ्गमिति विग्रहे द्विरथमिति प्रयोगः सुस्थ इति । पत्त्रपूर्वादञ् । पूर्वस्य यतोऽपवादः । पत्त्रमिति । पतन्त्यनेनेति विग्रहे 'दाम्नी'त्यादिना ष्ट्रन् । अश्वरथस्येदमिति । अश्वयुक्तो रथोऽश्वरथस्तस्याङ्गमित्यर्थः । पत्त्राध्वर्यु । अणोऽपवादः । वार्तिकमाह–पत्त्राद्वाह्य इति । इह पत्त्रेत्यर्थग्रहणे, इतरयोस्तु स्वरूपग्रहणे व्याख्यानमेव शरणम् । द्वन्द्वाद्वुन् । अणोऽपवादः । छं तु परत्वाद्बाधते । काकोलूकिकेति । काकोलूकस्य वैरमित्यर्थः । 'वुन्नन्तं स्त्रियाम्' । 'वैरमैथुनिकादिवु'निति स्त्र्यधिकारे अमरः । कुत्सकुशिकिकेति । कुत्सकुशिकयोर्मैथुनिका । विवाहरूपः संबन्ध इत्यर्थः । मिथुनं हि दम्पती, तस्य कर्म=क्रियानिष्पादनं । मनोज्ञादित्वाद्वुञ् । वुञन्तं चेदं, स्त्रियां स्वभावात् । अत्र वदन्ति–कुत्साश्च कुशिकाश्च कुत्सकुशिकास्तेषां मैथुनिकेत्यपि विग्रहः । इह कुत्सश्च कुशिका चेति द्वयोरेव मैथुनिकायां वुनिति नाग्रहः कार्यः । 'यूनि लुगि'ति सूत्रे

बा.] षष्ठ्यन्तात्समिच्छब्दात् षेन्यण्प्रत्ययो वाच्य इत्यर्थः । षत्वं ङीषर्थमित्याह–सामिधेनीति । सामिधेन्यशब्दात् ङीष् । 'हलस्तद्धितस्ये'ति यलोपः । रथाद्यत् । 'तस्येद'मित्येव । रथ्यं चक्रमिति । 'रथाद्रथाङ्गे' इति वचनाच्चक्रमिति विशेष्यम् । पत्त्रपूर्वादञ् । रथादित्येव । पत्त्रं वाहनमिति । 'पत्त्रं वाहनपक्षयो'रिति कोशः । पत्त्राध्वर्यु । अञिति । शेषपूरणम् । पत्त्रादिति । 'पत्त्राद्वाह्य एवे'ति वक्तव्यमित्यर्थः । आश्वमिति । पत्त्रेत्यर्थग्रहणमिति भावः । आध्वर्यवं, पारिषदमिति । अध्वर्योरिदं, परिषद इदमिति विग्रहः । हलसीराट्ठक् । तस्येदमित्येव । हालिकं सैरिकमिति । हलस्येदं, सीरस्येदमिति विग्रहः । द्वन्द्वाद्वुन् । वैरे मैथुनिकायां च इदन्त्वेन विवक्षिते द्वन्द्वात्षष्ठ्यन्ताद्वुन्स्यादित्यर्थः । काकोलूकिकेति । काकोलूकस्य वैरमित्यर्थः । वुनि स्त्रीत्वं लोकात् । कुत्सकुशिकिकेति । कुत्सकुशिकयोर्विवाह इत्यर्थः । वुनि स्त्रीत्वं लोकात् । मिथुनं--दम्पती । तस्य कर्म मैथुनिका । मनोज्ञादित्वाद्वुञ् । स्त्रीत्वं लोकात् । वैरे देवासुरेति । वार्तिकमिदम् । दैवासुरमिति । देवासुरयोर्वैरमित्यर्थः । वुनभावेऽण् । मैथुनिकायां तु देवासुरिकेत्येव । 'द्वन्द्वे देवासुरे'ति त्वपपाठः, अत्र भाष्ये वैर इत्येव वार्तिकपाठात् । 'शिशुक्रन्दे'ति सूत्रभाष्ये तु 'द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः' इति पठितम्, दैवासुरम् राक्षोऽसुरमित्युदाहृतं च । देवासुराद्यधिकृत्य कृतमाख्यानमित्यर्थः । गोत्रचरणाद्वुञ् । गोत्रप्रत्ययान्ताच्छाखाध्येतृवाचिनश्च षष्ठ्यन्तादिदमित्यर्थे

शे.] व्याख्यातम् । पत्त्रपूर्वा । 'पत्त्रे'त्यर्थग्रहणम् । पत्त्रमुत्तरत्रापि । तदाह—अश्वरथस्येति । इदमपि रथाङ्ग एव । वाह्य इति । अर्थनिर्देशोऽयमत्रैव । द्वन्द्वाद्वु । 'वैरे देवासुरे'ति वार्त्तिकपाठः । 'द्वन्द्वे' इति तु लेखकप्रमादः । तथा पाठे मैथुनिकायामतिव्याप्तिः । भाष्येऽत्र सूत्रे वैर इत्येव पाठाच्च । 'द्वन्द्वे' इत्येतद्विशिष्टन्तु 'शिशुक्रन्दे'ति सूत्रे भाष्ये पठ्यते । 'दैवासुरं' 'राक्षोसुर'मित्युदाह्रियते च । देवासुराद्यधिकृत्य कृतमाख्यानमित्यर्थः । गोत्रच । गोत्रमिह लौकिकम् । 'क्षौद्रकमाल-

।४।३।१२६। औपगवकम् । * चरणाद्धर्माम्नाययोरिति वक्तव्यम् । काठकम् । सङ्घाङ्कलक्षणेष्व-ञ्यजिञामण् ।४।३।१२७। ** घोषग्रहणमपि कर्तव्यम् । अञ्,-बैदः सङ्घोऽङ्को घोषो वा । बैदं लक्ष-णम् । यञ्-गार्गः । गार्गम् । इञ्-दाक्षः । दाक्षम् । परम्परासंबन्धोऽङ्कः । साक्षात्तु लक्षणम् । शाकलाद्वा ।४।३।१२८। अण् वोक्तेऽर्थे । पक्षे चरणत्वाद्वुञ् । शाकलेन प्रोक्तमधीयते शाकलाः । तेषां सङ्घोऽङ्को घोषो वा शाकलः । शाकलकः । लक्षणे क्लीबता । छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।४।३।१२९। छन्दोगानां धर्मं आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । 'चरणाद्धर्माम्नाययो'रित्युक्तं तत्साहचर्यान्नटशब्दादपि तयोरेव । न दण्डमाणवान्तेवासिषु ।४।३।१३०। दण्डप्रधाना माणवा दण्डमाणवाः । तेषु शिष्येषु च वुञ् न स्यात् । दाक्षा दण्डमाणवाः शिष्या वा । रैवतिकादिभ्यश्छः

---

त.] कैयटेन अत्रिभरद्वाजिकेत्यादिकं प्रसङ्गादुदाहृत्य बहुवचनान्तद्वन्द्वाद्वुनो व्याख्यातत्वादिति । सङ्घाङ्क । पूर्वस्य वुञोऽपवादः । घोषग्रहणमिति । एवं च प्रकृतयस्त्रिसः, प्रत्ययार्थविशेषणानि चत्वारीति वैषम्याद्यथासङ्ख्यमपि न प्रवर्तते । गार्ग इति । 'आपत्यस्ये'ति यलोपः । यद्यप्यङ्कलक्षणयोः पर्यायत्वं प्रसिद्धं 'कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षण'मित्यमरः, तथापि पृथग्ग्रहणसामर्थ्यादिह विशेषपरतेत्याह-परम्परासंबन्ध इति । यथा गवादिनिष्ठः स्वामिना गोद्वारा संबन्धः । साक्षादिति । यथा विदानां विद्या । घोष आभीरस्थानम् । णित्वं ङीबर्थं, पुंवद्भावनिषेधार्थं च । बैदी विद्या यस्य बैदीविद्यः । विदानामसाधारणी या विद्या तद्वानित्यर्थः । छन्दोगौ-क्थिक । सङ्घादयो निवृत्ताः । एभ्यो ञ्यः स्यात्तस्येदमित्यर्थे । चरणशब्देभ्यो वुञोऽपवादः, नटात्त्वौत्सर्गिकस्याऽणः । 'धर्माम्नाययो'रित्युक्तेर्नेह-छान्दोगं कुलमित्यादि । न दण्ड । 'तस्येदमि'त्यनुवर्तते । तेषु शिष्येषु चेति । 'प्रत्य-यार्थविशेषणेष्वि'ति शेषः । दाक्षा इति । 'इञश्चे'त्यण् । रैवतिकादिभ्यश्छः । रैवतिकशब्दो रेवत्यादिभ्यष्ठगिति-ठगन्तः । रैवतिक औदमेधि ( घि ), बैजवापीत्यादि रैवतिकादयोऽमी गोत्रप्रत्ययान्तास्ततः पूर्वेण वुञि प्राप्ते

---

बा.] वुञित्यर्थः । 'प्रवराध्यायप्रसिद्धमिह गोत्र'मित्यभिप्रेत्योदाहरति -औपगवकमिति । औपगवस्येदमित्यर्थः । वस्तुतस्तु औपगवः प्रवरसूत्रेषु न दृष्टः । ग्लौचुकायनकमिति वृत्त्यादौ उदाहृतम् । चरणादिति । चरणाद्यो वुञ्विहितः स धर्मे आम्नाये च वाच्ये भवति, नान्यत्रेत्यर्थः । काठकमिति । कठेन प्रोक्तमधीयते कठाः, तेषां धर्म आम्नायो वेत्यर्थः । आम्नायो-वेदाभ्यासः । सङ्घाङ्क । यञन्तात्, अञन्तात्, इञन्ताच्च सङ्घे अङ्के लक्षणे च इदन्त्वेन विवक्षितेऽणित्यर्थः । छस्यापवादः । घोषेति । 'सङ्घाङ्कलक्षणघोषेषु' इति सूत्रं कर्तव्यमित्यर्थः । तथाच तिस्रः प्रकृतयः, प्रत्ययार्थाश्चत्वार इति न यथासङ्ख्यम् । गार्ग इति । 'सङ्घोऽङ्को घोषो वे'ति शेषः । गार्गमिति । 'लक्षण'मिति शेषः । एवं दाक्षः दाक्षमित्यत्रापि । नन्वङ्कलक्षणशब्दयोः पर्यायत्वात् पृथग्ग्रहणं व्यर्थ-मित्यत आह--परम्परेति । यथा गवादिनिष्ठस्तप्तमुद्राविशेषोऽङ्कः । तस्य हि गोद्वारा स्वामिसम्बन्धः । साक्षा-दिति । विद्याविशेषस्तु देवदत्ते साक्षाद्विद्यमानत्वात्तस्य लक्षणमित्यर्थः । बैदी विद्या । 'घोष आभीरपल्ली स्या'दित्य-मरः । शाकलाद्वा । शाकलेनेति । शकलशब्दात्प्रोक्ताणन्तादध्येतृप्रत्ययस्य लुकि शाकलशब्दात् 'गोत्रचरणा'-दिति धर्माम्नाययोर्वुञोऽपवादोऽण् । तदभावे वुञ् । छन्दोगौक्थिक । सङ्घादयो निवृत्ताः । छन्दोगादीनां चरण-त्वात् धर्माम्नाययोरिति संबध्यते । छन्दोग, औक्थिक, याज्ञिक, बह्वृच, नट-एभ्यो धर्मे आम्नाये च इदंत्वेन विवक्षिते ञ्यः स्यादित्यर्थः । ननु नटस्य अचरणत्वात्तत्र धर्माम्नाययोः कथमन्वय इत्याशङ्क्ते-चरणाद्धर्माम्ना-ययोरित्युक्तमिति । 'यद्यपी'ति शेषः । परिहरति -तत्साहचर्यादिति । तथापि छन्दोगादिसाहचर्यान्नटशब्दा-दपि धर्माम्नाययोरेव प्रत्यय इत्यर्थः । न दण्ड । दण्डमाणवाश्च अन्तेवासिनश्च तेष्विति द्वन्द्वः । दाक्षा इति । दक्षस्यापत्यं दाक्षिः, तस्येमे दण्डमाणवाः, शिष्या वेत्यर्थे गोत्रत्वलक्षणो वुञ् न भवति, किंत्वौत्सर्गिकोऽणेव । रैव-तिकादिभ्यश्छः । तस्येदमित्यर्थे इति । शेषपूरणम् । वुञ इति । गोत्रत्वलक्षणवुञोऽपवाद इत्यर्थः ।

---

शे.] वक'मिति गोत्रत्वारोपात्साधु । इदं खण्डिकादिसूत्रे भाष्ये स्पष्टम् । धर्माम्नायेति । आम्नायः=संप्रदायः, शास्त्रमित्यन्ये । सङ्घाङ्क । सङ्घादय इदमर्थविशेषणानि । गोत्रग्रहणानुवृत्तेरञादीनामत्र गोत्रप्रत्ययानां ग्रहणम् । अञंशे च लौकिकमेव गोत्रमृष्यपत्यरूपम् । वुञोऽपवादोऽयम् । परम्परेति । यथा गवादिनिष्ठं चिह्नं गोद्वारा स्वामिना सम्बद्धम् । साक्षादिति । यथा विदानां स्थूणा । अण्वोक्ते इति । अण्संबद्धसङ्घादीनामनुवृत्तेरिति भावः । पक्षे इति । 'गोत्रचरणाद्'त्यस्योत्तरत्रानु-वृत्त्या वाक्यभेदेन व्याख्यानसामर्थ्यात् 'चरणाद्धर्माम्नाययो'रित्युक्तावपि सङ्घादिषु तत्प्राप्तिरिति भावः । अन्ये तु पक्षे छमि-च्छन्ति । लक्षणे क्लीबतेति । उत्सर्गोऽयं, लक्षणे 'बैदी स्थूणे'ति भाष्यप्रयोगात् । न दण्डमा । 'दण्डमाणवे'त्यादि प्रत्ययार्थ-विशेषणम् । दाक्षा इति । दाक्षीणामिमे इत्यर्थः । गोत्रेति वुञो निषेधः । रैवतिकादयः सर्वे गोत्रप्रत्ययान्ता इत्याशयेनाह—

।४।३।१३१। तस्येदमित्यर्थे । वुञोऽपवादः । रैवतिकीयः । बैजवापीयः । कौपिञ्जलहास्तिपदादण् [वाच्यः] ।४।३।१३२। कुपिञ्जलस्यापत्यम् । इहैव निपातनादण् । तदन्तात्पुनरण् । कौपिञ्जलः । गोत्रवुञो-पवादः । हस्तिपादस्यापत्यं हास्तिपदः । तस्यायं हास्तिपदः । चरणवुञोऽपवादः । आथर्वणिकस्येक-लोपश्च ।४।३।१३३। अण् स्यात् । आथर्वणिकस्यायमाथर्वणो धर्म आम्नायो वा । चरणवुञोऽपवादः ।

समाप्ताः शैषिकाः ।

अथ प्राग्दीव्यतीयाः ।

तस्य विकारः ।४।३।१३४। ॥ अश्मनो विकारे टिलोपो वक्तव्यः । अश्मनो विकार आश्मः । आश्मनः । मार्तिकः । अवयवे च प्राण्योषधिवृक्षेभ्यः ।४।३।१३५। चाद्विकारे । मयूरस्यावयवो विकारो वा

---

त.] छविधानार्थमिदमित्याह-वुञोऽपवाद इति । अत इनमाशङ्क्याह-इहैव निपातनादिति । हस्तिनः पाद इव पादो यस्य हस्तिपादः । पादस्य लोपो न भवति, 'अहस्त्यादिभ्य' इति वचनात् । तदाह-हस्तिपादस्येति । हास्तिपद इति । अस्मादेव निपातनादण् पद्भावश्चेति भावः । आथर्वणिकस्य । अथर्वणा प्रोक्तो वेदोऽथर्वा, अभेदोपचारात् । तमधीते । वसन्तादित्वाट्ठक् । दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाऽभावः । अन्ये त्वाहुः--अथर्वणा प्रोक्तमधीते आथर्वणिकः । इह प्रोक्तेऽण् । ततः 'छन्दोब्राह्मणानी'ति तद्विषयतायामाथर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्यात्प्रोक्ताल्लुङ् नेति ॥ समाप्ताः शैषिकाः ।

तस्य विकारः । षष्ठ्यन्ताद्विकारे अणादयः स्युः । घादिसंबद्धस्य 'तस्य'[इति]ग्रहणस्य निवृत्तये पुनस्तस्ये-त्युक्तम् । अणादयस्तु न निवर्तन्ते, 'प्राग्दीव्यतः' 'प्राग्भवना'दिति विशिष्टावधिपरिच्छेदेनाधिकृतत्वात् । इह 'प्राणि-रजतादिभ्योऽञ्', 'ओरञ्', 'अनुदात्तादेश्च' 'मयड्वैतयोः', 'नित्यं वृद्धशरादिभ्यः', 'पिष्टाच्चे'त्यादिभिरपवादानां वक्ष्यमाणत्वादप्राणि, आद्युदात्तम्, अवृद्धं, प्रतिपदमवक्ष्यमाणप्रत्ययं चोदाहरणमिति पर्यालोच्य तथैवोदाहरति-आश्म इत्यादि । अश्मन्भस्मन्शब्दौ मनिन्प्रत्ययान्तौ । 'मृदस्तिकन्' । नित्स्वरेण त्रयोऽप्याद्युदात्ताः । प्राचीनस्य तस्ये-त्यस्य निवृत्तत्वादधिकारोक्तप्रत्यया न प्रवर्तन्त इति नेह ठक् । हालः, सैरः । चाद्विकार इति । तेन वक्ष्यमाणप्रत्ययाः

---

बा.] रैवतिकीयमिति । रेवत्या अपत्यं रैवतिकः । 'रेवत्यादिभ्यष्ठक्' । रैवतिकस्येदमिति विग्रहः । बैजवापीय-मिति । बीजवापस्यापत्यं बैजवापिः, तस्येदमिति विग्रहः । कौपिञ्जलहास्ति । 'कुपिञ्जलस्यापत्य'मित्यनन्तरम् 'इत्यर्थे' इति शेषः । इहेति । अस्मिन् वार्तिके कौपिञ्जलेति निर्देशादत इञं बाधित्वा अणित्यर्थः । तदन्तादिति । अणन्तात् 'तस्येद'मित्यर्थे अनेन [सूत्रेण] पुनरणित्यर्थः । हस्तिपादस्येति । हस्तिन इव पादौ अस्येति विग्रहः । 'पादस्य लोप' इति न भवति, 'अहस्त्यादिभ्य' इति प्रतिषेधात् । हस्तिपादस्यापत्यं हास्तिपदः । अत इञं बाधित्वा अत एव निपातनादण्, पद्भावश्च । हास्तिपदस्यायमित्यर्थे अनेन अणिति भावः । गोत्रवुञोऽपवादः । आथर्वणि-कस्येकलोपश्च । इदं सूत्रमिति कैयटः । 'वार्तिक'मित्यन्ये । अण् स्यादिति । आथर्वणिकशब्दात्तस्येदमित्यर्थे अण् स्यात् । प्रकृतेरिकस्य लोपश्चेत्यर्थः । आथर्वणिकस्येति । अथर्वणा प्रोक्तो वेदोऽथर्वेत्युपचर्यते, तमधीते आथर्वणिकः । वसन्तादित्वाट्ठक् । आथर्वणिकस्यायमित्यर्थे अनेन अणि, इको लोपे 'दाण्डिनायने'ति टिलोपाऽभावे 'आथर्वण' इति रूपमित्यर्थः । धर्म आम्नायो वेति । 'चरणाद्धर्माम्नाययो'रित्युक्तेरिति भावः । ननु तस्येद-मित्येव सिद्धेऽण्विधिर्व्यर्थ इत्यत आह-चरणाद्वुञोऽपवाद इति । आथर्वणिकशब्दस्य अथर्वणवेदाध्येतृवाचि-त्वादिति भावः । इति शैषिकाः ।

अथ विकारार्थप्रत्यया निरूप्यते । तस्य विकारः । विक्रियते इति विकारः । कर्मणि घञ् । प्रकृतेरवस्था-न्तरात्मिकां विक्रियां प्राप्त इत्यर्थः । विकार इत्यर्थे षष्ठ्यन्तादणादयः साधारणा, वक्ष्यमाणाश्च वैशेषिका यथाविहितं स्युरित्यर्थः । अश्मनो विकार इति । विकारार्थकप्रत्यये परे अश्मन्शब्दस्य टिलोपो वक्तव्य इत्यर्थः । 'अ'न्निति प्रकृतिभावापवादः । आश्म इति । अणि टिलोपे रूपम् । एवं चर्मणो विकारः चार्मः कोशः । 'चर्मणः कोशे' इत्यु-

---

शे.] वुञोऽपवाद इति । निपातनादिति । अन्यथेञ् स्यात । हास्तिपदे—हस्तिन इव पादौ यस्येत्यर्थकहस्तिपादशब्दा-दपत्येऽण् । पद्भावो निपातनात्, यस्येति लोपस्याऽसिद्धत्वेन 'पादः प'दित्यस्याऽप्राप्तेः । अथर्वणा प्रोक्तमधीयान आथर्वणिकः । ततोऽणि इकस्य लोपे 'अन्' इति प्रकृतिभावे—आथर्वणः सिद्धः । तदाह—चरणवुञ इति । समाप्ताः शैषिकाः ।

आश्म इति । एवं चर्मणो विकारः कोशश्चार्मः । 'चर्मणः कोशे' इत्युपसङ्ख्यानाट्टिलोपः । अवयवे च । प्राण्यादिषु स्वरूपविशेषपर्यायाणां ग्रहणं, व्याख्यानात् । अयमधिकारः । चाद्विकारे इति । तेन वक्ष्यमाणाः प्रत्ययाः प्राण्यादि-

मायूरः । मौर्वं काण्डं भस्म वा । पैप्पलम् । **बिल्वादिभ्योऽण्** ।४।३।१३६। बैल्वम् । **कोपधाच्च** ।४।३।१३७। अण् । अञोऽपवादः । तर्कु-तार्कवम् । तैत्तिडीकम् । **त्रपुजतुनोः षुक्** ।४।३।१३८। आभ्यामण् स्याद्विकारे, एतयोः षुगागमश्च । त्रापुषम् । जातुषम् । **ओरञ्** ।४।३।१३९। दैवदारवम् । भाद्रदारवम् । **अनुदात्तादेश्च** ।४।३।१४०। दाधित्थम् । कापित्थम् । **पलाशादिभ्यो वा** ।४।३।१४१। पालाशम् । खादिरम् । कारीरम् ।

---

त.] प्राण्यादिभ्यस्त्रिभ्योऽर्थद्वये भवन्त्यन्येभ्यस्तु विकार एवेति फलितम् । **मायूर इति** । 'प्राणिरजतादिभ्यः' इत्यञ् । अनुदात्तादेरञः सिद्धत्वादुदात्ताद्यर्थं, वृद्धेषु मयड्बाधनार्थं चावश्यकमिदं परत्वादनुदात्तादिष्वपि प्रवर्तते । ओषधिभ्य उदाहरति--**मौर्वमिति** । मूर्वाशब्दः 'तृणधान्यानां च द्व्यषा'मित्याद्युदात्तः । पिप्पलशब्दस्तु 'लघावन्ते' इत्यनेनाद्युदात्तः ।
**बिल्वादिभ्योऽण्** । अञ्मयटोरपवादः । बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु कर्पासी वेण्वादयो-बिल्वादयः । **त्रपुजतुनोः** । 'बिल्वादिभ्योऽणि'त्यतोऽनुवर्तनादाह-**अण्स्यादिति** । 'ओरञि'त्यस्यायमपवादः । अप्राण्यादित्वादवयवे न भवतीत्याशयेनाह—**विकारे इति** । **त्रापुषमिति** । त्रपुणो विकारः । एवं जतुनो विकारो जातुषम् । **ओरञ्** । अनुदात्तादेरन्यदिहोदाहरणम् । **दैवदारवमिति** । देवदारु-भद्रदारुशब्दौ 'पीतद्र्वर्थाना'मित्याद्युदात्तौ । **दाधित्थमिति** । दधनि तिष्ठतीति 'सुपि स्थः' इति कः । उपपदसमासः । पृषोदरादित्वात्सकारस्य तकारः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । एवं कपित्थेऽपि बोध्यम् । **पलाशादिभ्यो वा** । उभयत्रविभाषेयम् । पलाशखदिरशिंशपास्यन्दनानामनुदात्तादित्वान्नित्यं प्राप्ते, करीरशिरीषविकङ्कतपूलासयवासशब्दानामप्राप्ते विधानात् । **पालाशमिति** । पलाशशब्दो घृतादित्वादन्तोदात्तः । खदिरशब्दः 'अजिरशिशिरे'त्यादौ किरच्प्रत्ययान्तो निपातितः । शिंशपाशब्दः 'अथ द्वितीयं प्रागीषा'दिति वर्तमाने 'पान्तानां गुर्वादीना'मिति मध्योदात्तः ।

---

बा.] पसङ्ख्यानाट्टिलोपः । **भास्मन इति** । भस्मनो विकार इत्यर्थः । अणि 'अ'निति प्रकृतिभावान्न टिलोपः । **मार्त्तिक इति** । मृत्तिकाया विकार इत्यर्थः । अत्र 'प्राणिरजतादिभ्योऽञ्' 'ओरञ्' 'अनुदात्तादेश्चे'त्यादिवक्ष्यमाणापवादविषयभिन्नमुदाहरणम् । तत्र अश्मन्, भस्मन्, चर्मन् इतित्रयं मनिन्प्रत्ययान्तं नित्स्वरेणाद्युदात्तम् । मृत्तिकाशब्दोऽपि 'मृदस्तिक'न्निति तिकन्नन्तो नित्स्वरेणाद्युदात्तः । **अवयवे च प्रा** । प्राणिवाचिन ओषधिवाचिनो वृक्षवाचिनश्च षष्ठ्यन्तेभ्योऽवयवे विकारे च अणादयः उक्ता वक्ष्यमाणाश्च प्रत्यया यथाविहितं स्युः, अन्येभ्यस्तु विकारमात्र इत्यर्थः । प्राणिन उदाहरति—**मायूर इति** । 'लघावन्ते' इति मयूरशब्दो मध्योदात्तः । ततः 'प्राणिरजतादिभ्यः' इत्यञ् । ओषधेरुदाहरति—**मौर्वमिति** । मूर्वा ओषधिविशेषः । तस्या अवयवो विकारो वेत्यर्थः । औत्सर्गिकोऽण् । 'अनुदात्तादेश्चे'त्यञ् तु वक्ष्यमाणो न भवति, 'तृणधान्यानां च द्व्यषा'मित्याद्युदात्तत्वात् । वृक्षस्योदाहरति—**पैप्पलमिति** । पिप्पलः—अश्वत्थः, तस्यावयवो विकारो वेत्यर्थः । 'लघावन्ते' इति मध्योदात्तः पिप्पलशब्दः । 'अनुदात्तादेश्चे'ति वक्ष्यमा'णाऽञोऽभावे औत्सर्गिकोऽण् । **बिल्वादिभ्योऽण्** । एषु प्राण्योषधिवृक्षेभ्यः अवयवे विकारे च, इतरेभ्यस्तु विकारे अण् स्यादित्यर्थः । **बैल्वमिति** । बिल्वस्यावयवो विकारो वेत्यर्थः । बिल्व, व्रीहि, काण्ड, मुद्ग, मसूर, गोधूम, इक्षु, वेणु, गवेधुक, कार्पासी, पाटली, कर्कन्धू, कुटी'ति बिल्वादयः । तत्र गवेधुकस्य 'कोपधाच्चे'त्यणि सिद्धे मयड्बाधनार्थमिह पाठः । इतरेषां तु 'अनुदात्तादेश्चे'त्यञो बाधनार्थमिति कौस्तुभे विस्तरः । **कोपधाच्च** । 'अ'णिति शेषः । तत्र प्राण्योषधिवृक्षेभ्योऽवयवे विकारे च, इतरेभ्यस्तु विकारे एव । **तर्कु—तार्कवमिति** । तर्कु इति प्रकृतिनिर्देशः । तर्कुर्नाम--वृक्षविशेषः, तस्यावयवो विकारो वेत्यर्थः । 'ओर'ञित्यस्यापवादोऽण् । **तित्तिडीकशब्दो** 'लघावन्ते' इति मध्योदात्तः । 'अनुदात्तादेश्चे'त्यञोऽपवादोऽण् । **त्रपुजतुनोः षुक्** । **त्रापुषं जातुषमिति** । त्रपुणो जतुनश्च विकार इत्यर्थः । **ओरञ्** । उवर्णादञ् स्यादित्यर्थः । प्राण्योषधिवृक्षेभ्योऽवयवे विकारे च, इतरेभ्यस्तु विकारे । **दैवदारवं भाद्रदारवमिति** । देवदारोर्भद्रदारोश्चावयवो विकारो वेत्यर्थः । 'पीतद्र्वर्थाना'मित्याद्युदात्तावेतौ । ततश्च 'अनुदात्तादेश्चे'त्यनेन गतार्थता न । **अनुदात्तादेश्च** । 'विकारे अ'ञिति शेषः । 'अवयवे चे'ति सूत्रमप्यत्र सम्बध्यते । **दाधित्थमिति** । दधित्थस्यावयवो विकारो वेत्यर्थः । एवं कापित्थम् । 'कपित्थे तु दधित्थग्राहिमन्मथाः' इत्यमरः । अव्युत्पन्नप्रातिपदिकत्वात्--फिट्स्वरेणान्तोदात्तावेतौ । **पलाशादिभ्यो वा** । 'अ'ञिति शेषः । अवयवे चेत्येव । पलाशखदिरशिंशपास्यन्दना-

---

शे.] भ्यस्त्रिभ्योऽर्थद्वयेऽन्येभ्यस्तु विकार एवेति बोद्धव्यम् । **मयूरो**-लघावन्त इति मध्योदात्तः । **बिल्वादिभ्यो** । अत्र गणे कोपधपाठो मयड्बाधनार्थः । अण्ग्रहणं तु ङीषन्तपाटलीशब्दादनुदात्तादिलक्षणाऽञोबाधकमयड्बाधेनाऽणर्थम् । एभ्यो यथाविहितमित्युच्यमानेऽञेव स्यात् । **अञोऽपवाद इति** । उवर्णान्तत्वादिप्रयुक्तस्येत्यर्थः । **दैवदारवमिति** । देवदारुः पीतद्र्वर्थत्वादाद्युदात्तः । **दाधित्थमिति** । दधनि तिष्ठतीति सुपिस्थः इति के उपपदसमासे पृषोदरादित्वात्सस्य तः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तोऽय-

**शम्याः ष्लञ्** ।४।३।१४२। शामीलं भस्म । षित्वान्ङीष्—शामीली स्रुक् । **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः** ।४।३।१४३। प्रकृतिमात्रान्मयड् वा स्याद्विकारावयवयोः । अश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम् ? । मौद्गः सूपः । कार्पासमाच्छादनम् । **नित्यं वृद्धशरादिभ्यः** ।४।३।१४४। आम्रमयम् । शरमयम् । ॐ **एकाचो नित्यम्** । त्वङ्मयम् । वाङ्मयम् । कथं तर्हि आप्यमम्मयमिति ? । 'तस्येद'मित्य-

त.] 'स्वदि किंचिच्चलने' 'अनुदात्तेतश्च हलादे'रिति युच् । **कारीरमिति** । 'किरतेरीरन्' । नित्स्वरेण करीरशब्दोऽयमाद्युदात्तः । 'कॄतॄभ्यामीषन्' 'शॄपॄभ्यां किच्च' । पूर्ववच्छिरीषशब्दोऽप्याद्युदात्तः । विकङ्कतपूलासयवासशब्दाः 'प्रासादीनां चे'त्याद्युदात्ताः । **षित्त्वान्ङीषिति** । टित्वान्ङीबिति तु माधवः । **मयड्वैतयोः** । भाषायां किम् ? । खादिरो यूप इति वृत्तिकारः । ननु मयटो वैकल्पिकत्वात्सिद्ध मिदमिति चेत् । अत्राहुः-वेदे बह्वृचः परस्य मयटोऽर्थान्तरपरत्वमेवेति तात्पर्यग्रहार्थमेवेदम् । 'द्व्यचश्छन्दसी'ति सूत्रस्य 'द्व्यच एवे'ति नियमार्थत्वे यद्यपीदं गतार्थं तथापि 'द्व्यचश्छन्दस्येवे'ति विपरीतनियमशङ्कानिवृत्त्यर्थं भाषाग्रहणं कृतमिति । अधिकारादेव विकारावयवयोर्लाभे एतयोरिति वचनं ये विशेषप्रत्ययाः 'प्राणिरजतादिभ्योऽञि'त्येवमादयस्तद्विषयेऽपि यथा स्यादित्येवमर्थम् । कपोतमयं । लोहमयम् । इह । विकारावयवाभ्यां सह प्रत्येकम् 'अभक्ष्याच्छादनयो'रिति सम्बध्यते समासनिर्देशादतो यथासङ्ख्यं न । **आश्मनमिति** । 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः' इति वचनादश्मभेदशब्दे भेदशब्दस्य लोपे अश्मन्निति नान्तमवशिष्यते । तथा कल्माषाङ्घ्रे राज्ञो भार्यायां मदयन्त्यां वसिष्ठेनोत्पादितः सुतोऽश्मको नाम, तत्र संज्ञात्वद्योतकस्य कप्रत्ययस्याऽभावे अश्मन्निति नाम भवति, तस्यावयवे आश्मनं, विकारेऽप्याश्मनमित्येव भवति । न च 'अश्मनो विकारे' इति टिलोपः स्यादिति वाच्यं, प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वात् । वस्तुतस्तु 'तस्येद'मिति सामान्यविवक्षायां पाषाणवाचकस्याप्यश्मन्शब्दस्याऽऽश्मनमिति भविष्यति, पैष्टी सुरेतिवत् । **मौद्गः सूपः । कार्पासमिति** । मुद्गशब्दो घृतादित्वादन्तोदात्तः । 'कृनः पासः' इति पासप्रत्यये गुणे रपरे च कर्पासीशब्दो जातिलक्षणङीषन्तः । ताभ्यां 'अनुदात्तादेश्च' इत्यनं बाधित्वा बिल्वादित्वादण् । **नित्यं वृद्ध** । इह 'भाषायामभक्ष्याच्छादनयो'रित्यनुवर्तत इति वृत्तिः । नन्वेवमानन्दमयाधिकरणे शङ्कराचार्यैः 'अन्योन्तर आत्मानन्दमयः' इति श्रुतौ 'आनन्दमय इति विकारे मय'डित्युक्तं तत्कथं सङ्गच्छताम् ? । 'प्राचुर्ये मय'डिति तु वक्तुमुचितमिति चेत् । अत्राहुः-प्राचुर्ये मयट्यपि प्रकृत्यर्थविरोधिनो दुःखस्य लेशतोऽनुवृत्तिलाभात्प्रकृते विकारार्थः पर्यवस्यतीति तेषामाशयः । यद्वा 'नित्यं वृद्धे'त्यत्र भाषाग्रहणं नानुवर्तते । अनुवृत्तावपि 'भाषायां नित्यम्, अन्यत्र क्वाचित्कः' इत्याश्रित्य मयट् सुसाधः । अथ वा 'हेतुमनुष्येभ्य' इत्यनुवर्तमाने 'मयट् चे'ति सूत्रेण आगतार्थे मयट् । विकार इति त्वार्थिकार्थकथनमेव । अतः शङ्करभगवत्पादोक्तिरनवद्येति । **शरमयमिति** । शर दर्भ मृत् कटी तृण सोम बल्वज इति शरादिः । **एकाचो नित्यमिति** । आरम्भसामर्थ्यादेव सिद्धे

बा.] नामनुदात्तादित्वान्नित्यं प्राप्ते, इतरेषामप्राप्ते विकल्पोऽयम् । **शम्याः ष्लञ्** । शमीशब्दो गौरादिङीषन्तः, तस्मात्षष्ठ्यन्तादवयवे विकारे च ष्लञ् स्यादित्यर्थः । षकारलकारावितौ । 'अनुदात्तादेश्चे'त्यणोऽपवादः । **शामीलं भस्मेति** । शम्या विकार इत्यर्थः । **शामीली स्रुगिति** । शम्या विकार इत्यर्थः । वरुणप्रघासेषु शमीमय्यः स्रुचः प्रसिद्धाः । अवयवे तु शामीली शाखा । **मयड्वैतयोः** । अधिकारादेव 'विकारावयवयो'रिति सिद्धेरेतयोरिति वचनमुक्तवक्ष्यमाणापवादविषयेष्वपि पक्षे मयडर्थमिति भाष्ये स्पष्टम् । तेन बिल्वमयं बैल्वमित्यादि सिध्यतीत्यभिप्रेत्य आह—**प्रकृतिमात्रादिति** । सर्वस्याः प्रकृतेरित्यर्थः । **अश्ममयमिति** । मयटि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वम् । नलोपः । **आश्मनमिति** । कल्माषाङ्घ्रिर्नाम कश्चिद्राजा तत्पत्न्यां वसिष्ठेनोत्पादितोऽश्मक इति । अश्मन्शब्दात्स्वार्थे कप्रत्ययः, तदभावे अश्मेत्यपि नाम, तस्य विकारो अवयवो वेत्यर्थः । 'अ'न्निति प्रकृतिभावान्न टिलोपः । नच विकारार्थकत्वे 'अश्मनो विकारे' इति टिलोपः शङ्क्यः, तत्र पाषाणवाचकत्वेन प्रसिद्धस्याऽश्मन्शब्दस्यैव ग्रहणादिति भावः । **नित्यं वृद्ध** । 'मय'डिति शेषः । उक्तविकल्पस्यापवादः । **एकाचो नित्यमिति** । 'नित्य'मिति योगविभागलब्धमिदम् । **अणणन्तादिति** । अपामिदमापम् ।

शे.] **पलाशादि** । खदिरशब्दोऽत्र पठ्यते । **शम्याः** । ट्लञत्र टित्प्रत्ययः,'ञितश्च तत्प्रत्यया'दिति सूत्रभाष्ये विकारविकारेऽपि तद्विकारत्वमारोप्य तत्सूत्रं प्रत्याख्यातम् । अस्य षित्त्वे हि तत्प्रत्याख्याने षित्त्वान्ङीष्, आरम्भे त्वञन्तत्वान्ङीबिति फलभेदः स्यात् । उष्ट्रस्यावयव औष्ट्रकं चर्म । उष्ट्राद्वुञ् । कंसीयस्य विकारः—कांस्यम् । 'कंसीयपरशव्ययो'रिति वुञ्, तयोर्विकारे औष्ट्रिका—उपानत्, 'कांस्या स्थाली'त्यादौ सूत्रारम्भेऽप्यजादिपाठाट्टाबेवेति न फलभेदः । **आश्मनमिति** । अश्मनोऽवयवरूपमित्यर्थः । विकारे तु टिलोपः स्यात् । अधिकारादेवाऽर्थलाभे सिद्धे 'एतयो'रिति वचनं पुनर्विधानार्थमनुदात्त 'प्राणी'त्यपवाद-

ण्यन्तात्स्वार्थे ष्यञ्। **गोश्च पुरीषे** ।४।३।१४५। गोः पुरीषं गोमयम्। **पिष्टाच्च** ।४।३।१४६। मयट् स्याद्विकारे। पिष्टमयं भस्म। कथं पैष्टी सुरेति ?। सामान्यविवक्षायां 'तस्येद'मित्यण्। **संज्ञायां कन्** ।४।३।१४७। पिष्टादित्येव। पिष्टस्य विकारविशेषः पिष्टकः। 'पूपोऽपूपः पिष्टकः स्यात्'। **व्रीहेः पुरोडाशे** ।४।३।१४८। मयट् स्यात्। बिल्वाद्यणोऽपवादः। व्रीहिमयः पुरोडाशः। व्रैहमन्यत्। **असंज्ञायां तिलयवाभ्याम्** ।४।३।१४९। तिलमयम्। यवमयम्। संज्ञायां तु-तैलम्। यावकः। **तालादिभ्योऽण्** ।४।३।१५२। अण्मयटोरपवादः। (ग) **तालाद्धनुषि**। तालं धनुः। अन्यत्तालमयम्। ऐन्द्रायुधम्। **जातरूपेभ्यः परिमाणे** ।४।३।१५३। अण्। बहुवचनात्पर्यायग्रहणम्। हाटकः तापनीयः सौवर्णो वा निष्कः। परिमाणे किम् ?। हाटकमयी यष्टिः। **प्राणिरजतादिभ्योऽञ्** ।४।३।१५४। शौकम्। बाकम्। राजतम्।

---

त.] 'नित्यं वृद्धे'ति नित्यग्रहणं योगविभागेनान्यत्रापि क्वचिद्विधानार्थं, तेनैतल्लभ्यत इति भावः। एकाच्त्वादेव सिद्धे शरादिषु मृच्छब्दपठनं विस्पष्टार्थमित्याहुः। **गोश्च पुरीषे**। पुरीषं न विकारो, नाप्यवयवः, तथापि 'तस्येद'-मित्यर्थेऽयं प्रत्ययः। विकारावयवयोस्तु गोपयसोर्यत् वक्ष्यति। पुरीषे किम् ?। गव्यं पयः। **यावक इति**। यवशब्दाद्विकारेऽण्, तदन्तात् 'यावादिभ्यः' इति स्वार्थे कन्। **तालादिभ्योऽण्**। **अण्मयटोरिति**। तालश्यामाकशब्दाभ्यां वृद्धत्वान्मयट् प्राप्तः। बर्हिणां विकारो बार्हिणम्। 'प्राणिरजतादिभ्योऽञ्'। ततो 'ञितश्च तत्प्रत्यया'दित्यञ्प्राप्तः, शेषेभ्यस्त्वनुदात्तादित्वादञ्प्राप्तः। तथाहि विशिदशिभ्यामिन्द्रशब्द उपपदे मूलविभुजादित्वात्कः। 'अन्येषामपी'ति दीर्घः। इन्द्राविशः। इन्द्रादृशः। 'चप सान्त्वने' पचाद्यच्। 'चापपीयूक्षा'शब्दो 'लघावन्ते' इति मध्योदात्तः 'फिषः' इत्यधिकाराद्वापः प्रागेव स्वरप्रवृत्तेः। इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः। अण्ग्रहणं बाधकबाधनार्थम्। यथाविहितप्रत्ययविधौ बार्हिणशब्दाद्वृद्धलक्षणो मयट् स्यात्, 'ञितश्च तत्प्रत्यया'दित्यञो बाधनेन वचनस्य चरितार्थत्वादित्याहुः। **तालाद्धनुषीति**। गणसूत्रमिदम्। **हाटक इति**। इह वृद्धलक्षणो मयट् प्राप्तः। **तपनीयादेः**-'अनुदात्तादेश्चे'त्यञ्प्राप्तः। **प्राणि**। अनुदात्तादेरञः सिद्धत्वात्परिशिष्टमिहोदाहरणं। तदाह-**शौकं बाकमिति**। शुकबकशब्दौ 'प्राणिनां कुपूर्वाणा'मित्याद्युदात्तौ। **राजतमिति**। रजत सीस लोह उदुम्बर कण्ट-

---

बा.] 'तस्येद'मित्यण्। ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञि आप्यमिति रूपमित्यर्थः। **गोश्च पुरीषे**। 'नित्यं मय'-डित्यनुवर्तते। **गोमयमिति**। यद्यपि पुरीषं न गोर्विकारो नाप्यवयवस्तथापि तस्येदमित्यर्थेऽयं प्रत्ययः। **पिष्टाच्च**। शेषपूरणेन सूत्रं व्याचष्टे-**मयट् स्याद्विकारे इति**। **संज्ञायां कन्**। **विकारविशेष इति**। अपूप इत्यर्थः। तदाह-**पूपोऽपूपः पिष्टकः स्यादिति**। अमरकोशोऽयम्। पुरोडाशस्तु न पिष्टकः, तस्यानपूपत्वात्। 'अतुन्नमनपूपाकृतिमश्वशफमात्रं पुरोडाशं करोती'ति श्रुतेः। **व्रीहेः पुरोडाशे**। पुरोडाशात्मके विकारे नित्यं मयट् स्यादित्यर्थः। तर्हि बिल्वादिगणे पाठः किमर्थमित्यत आह-**व्रैहमन्यदिति**। **असंज्ञायां तिलयवाभ्याम्**। 'नित्यं मय'डिति शेषः। **यावक इति**। यवशब्दाद्विकारे अण्। ततः 'यावादिभ्य' इति स्वार्थे कन्। **तालादिभ्योऽण्**। **तालाद्धनुषीति**। गणसूत्रमिदम्। **तालं धनुरिति**। 'नित्यं वृद्धे'ति मयटोऽपवादः। **ऐन्द्रायुधमिति**। 'अनुदात्तादेश्चे'त्यञोऽपवादः, समासस्वरेणान्तोदात्तत्वात्। **जातरूपेभ्यः**। **अणिति**। शेषपूरणम्। जातरूपं-सुवर्णं, तद्वाचिभ्योऽण् स्यात्परिमाणे विकारे गम्ये इत्यर्थः। ननु जातरूपशब्दस्यैव कुतो न ग्रहणमित्यत आह-**बहुवचनादिति**। **हाटक इत्यादि**। हाटकस्य तपनीयस्य सुवर्णस्य वा निष्कपरिमाणको विकार इत्यर्थः। **तापनीय इति**। 'नित्यं वृद्धशरादिभ्यः' इति मयटोऽपवादः। इतरत्र तु 'अनुदात्तादेश्चे'त्यञोऽपवादः। 'गुञ्जाः पञ्चाद्यमाषकः। ते षोडशाऽक्षः' इत्यमरः। 'सुवर्णबिस्तौ हेम्नोऽक्षे' इति च। **प्राणिरजतादिभ्योऽञ्**। **शौकं बाकमिति**। शुकस्य बकस्य वा अवयवो विकारो वेत्यर्थः। 'प्राणिनां कुपूर्व'मित्याद्युदात्तत्वात् 'अनुदात्तादेश्चे'त्यञो न प्राप्तिः। **राजतमिति**। अनुदात्तादित्वादञि सिद्धे मयड्बाधनार्थमञ्विधिः। **ञितश्च तत्प्रत्ययात्**। तयोः=

---

शे.] विषयेऽपि पक्षे मयडर्थम्। तेन बैल्वं बैल्वमयमिति सिद्धम्। **मुद्गो**-घृतादित्वादन्तोदात्तः, **कर्पासी**-ङीषन्तत्वात्। **नित्यं वृद्ध**। इह 'मय'डिति, भाषायामित्यादि चानुवर्तते। आरम्भसामर्थ्यादेवाऽस्य नित्यत्वे सिद्धे नित्यग्रहणं क्वचिदन्यत्रापि नित्यमयड्विधानार्थमित्याशयेनाह-**एकाच इति**। शरादिषु मृच्छब्दपाठस्त्वस्याऽनित्यत्वबोधनार्थः। वेदे 'मौञ्जवरुणमृन्मयं गृह'मित्यादिषु प्राचुर्ये एव मयट्। **गोश्च**। गोभुक्ताहारविकारे गोविकारत्वमारोप्य प्रकरणाऽबाधीत्रेऽति बोद्धव्यम्। **व्रीहेः पुरोडाशे**। पुरोडाशरूपे विकारे इत्यर्थः। **यावके**-विकाराऽणन्तात् 'यावादिभ्यः' इति स्वार्थे कन्। **तालादिभ्यो**। अण्ग्रहणं बाधकबाधनार्थः। तेन विकारार्थाञन्ते तालादिगणपठिते बार्हिणशब्दे 'नित्यं वृद्ध' इति मयण्न। तत्पाठस्तु 'ञितश्च तत्प्रत्यया' दि

**ञितश्च तत्प्रत्ययात्** ।४।३।१५५। ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्यात्तयोरेवाऽर्थयोः । मयटोऽपवादः । शामीलस्य—शामीलम् । दाधित्थस्य—दाधित्थम् । [ कापित्थम् ] । ञितः किम् ? । बैल्वमयम् । **क्रीतवत्परिमाणात्** ।४।३।१५६। 'प्राग्वतेष्ठ'ञित्यारभ्य क्रीतार्थे ये प्रत्यया येनोपाधिना परिमाणाद्विहितास्ते तथैव विकारेऽतिदिश्यन्ते । अणादीनामपवादः । निष्केण क्रीतं नैष्किकम् । एवं निष्कस्य विकारोऽपि-नैष्किकः । शतस्य विकारः—शत्यः । शतिकः । **उष्ट्राद्वुञ्** ।४।३।१५७। प्राण्यञोऽपवादः । औष्ट्रकः । **उमोर्णयोर्वा** ।४।३।१५८। औमम् औमकम् । और्णम् । और्णकम् । वुञभावे यथाक्रममणञौ । **एण्या ढञ्** ।४।३।१५९। ऐणेयम् । एणस्य तु-ऐणम् । **गोपयसोर्यत्** ।४।३।१६०। गव्यम् । पयस्यम् । **द्रोश्च** ।४।३।१६१। द्रुर्वृक्षः, तस्य विकारोऽवयवो वा द्रव्यम् । **माने वयः** ।४।३।१६२। द्रोरित्येव । द्रुवयम् । 'यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्' । **फले लुक्** ।४।३।१६३। विकारावयवप्रत्ययस्य लुक् स्यात् फले । आमलक्याः फलम्—आमलकम् । **प्लक्षादिभ्योऽण्** ।४।३।१६४। विधानसामर्थ्यान्न लुक् । प्लाक्षम् । न्यग्रोधस्य च केवलस्य ।

---

**त.]** कारेत्यादयो रजतादयः । तेषु अनुदात्तादीनां पुनः पाठो मयड्बाधनार्थः । अन्यथा हि परत्वान्मयट् स्यादेव । **शामीलमिमि** । शामीलशब्दः 'शम्याः ष्लञ्'ञिति ष्लञन्तः । दधित्थात् 'अनुदात्तादेश्चे'त्यञ् । दाधित्थस्य दाधित्थम् । **बैल्वमयमिति** । बिल्वशब्दोऽणन्तः । **नैष्किकमिति** । 'तेन क्रीत'मिति ठक् । **शत्यः** । **शातिक इति** । 'शताच्च ठन्यतौ' । **अणञाविति** । उमाशब्दः 'तृणधान्यानां च' इत्याद्युदात्तः । ऊर्णाशब्दस्तु प्रातिपदिकस्वरेणान्तोदात्त इति भावः । **एण्या ढञ्** । प्राण्यञोऽपवादः । स्त्रीलिङ्गनिर्देशादाह-**एणस्य त्विति** । **गोपयसोः** । यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदुक्तस्तथापि 'मयड्वैतयो'रिति पक्षे प्राप्तं मयटं बाधितुं पुनरयं यद्विधिः । **द्रोश्च** । 'ओरञ्', 'एकाचो नित्य' मिति मयटश्चापवादोऽयम् । **द्रव्यमिति** । 'ओर्गुणः', 'वान्तो यि प्रत्यये' । 'द्रव्यगुणकर्मे'त्यादिषु प्रयुज्यमानद्रव्यशब्दस्तु गुणैर्द्रूयते आश्रीयते इति द्रुधातोः 'अचो य'दिति यत्प्रत्ययान्तः । **माने वयः** । यतोऽपवादः । **द्रुवयमिति** । द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः । **फले लुक्** । **विकारावयवेति** ।

---

**बा.]** विकारावयवयोः प्रत्ययः-तत्प्रत्ययः । तदाह-**ञिद इति** । **तयोरेवेति** । विकारावयवयोरेवेत्यर्थः । **शामीलस्येति** । शम्या विकारोऽवयवो वा शामीलम् । 'शम्याः ष्लञ्' । शामीलस्य विकारोऽवयवो वेत्यर्थे अञि शामीलमिति भवतीत्यर्थः । 'नित्यं वृद्धे'ति मयटोऽपवादः । **दाधित्थमिति** । दधित्थस्य विकारोऽवयवो वा दाधित्थम् । अनुदात्तादित्वादञ् । दाधित्थस्य विकारो दाधित्थम् । मयडपवादोऽञ् । **बैल्वमयमिति** । 'बिल्वादिभ्यो'णिति बिल्वशब्दादणि बैल्वः । तस्य विकार इत्यर्थे मयडेव, न त्वञ् । अणो ञित्त्वाऽभावादिति भावः । भाष्ये तु 'विकारावयवप्रत्ययान्तात्पुनस्तत्प्रत्यया अनभिधाना'न्ने'त्याश्रित्य सूत्रमिदं प्रत्याख्यातम् । **क्रीतवत्परि** । **उपाधिनेति** । प्रकृत्यादिविशेषणेनेत्यर्थः । **नैष्किक इति** । 'असमासे निष्कादिभ्यः' इति क्रीते ठक् । **शत्यः** **शतिक इति** । 'शताच्च ठन्यतौ' इति क्रीते ठन्यतौ । **उष्ट्राद्वुञ्** । **प्राण्यञ इति** । 'प्राणिरजतादिभ्योऽञि'त्यस्यापवाद इत्यर्थः । **उमोर्णयोर्वा** । 'वु'ञिति शेषः । **औमकमिति** । उमा-सस्यविशेषः । 'उमा स्यादतसी क्षुमा' इत्यमरः । उमाया विकारोऽवयवो वेत्यर्थः । **औममिति** । 'तृणधान्यानां चे'त्युमाशब्द आद्युदात्तः । ततो वुञभावे 'अनुदात्तादेश्चे'त्यञभावादौत्सर्गिकोऽण् । ऊर्णाशब्दस्तु फिट्स्वरेणान्तोदात्तः । ततो वुञभावे अनुदात्तादित्वादञित्यर्थः । 'ऊर्णा मेषादिलोम्नि स्यादि'त्यमरः । 'स्थूणोर्णे नपुंसके चे'ति लिङ्गानुशासनसूत्रम् । **एण्या ढञ्** । एण्या अवयवो विकारो वा ऐणेयम् । ढस्य एयादेशः । 'यस्येति चे'ति ईकारलोपः । स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह—**एणस्य त्विति** । **गोपयसोर्यत्** । **गव्यमिति** । गोर्विकारोऽवयवो वेत्यर्थः । 'वान्तो यि'त्यवादेशः । **पयस्यमिति** । पयसो विकार इत्यर्थः । 'सर्वत्र गोरजादिप्रसङ्गे य'दित्येव सिद्धे यद्विधानं 'मयड्वैतयो'रिति पाक्षिकमयटो बाधनार्थम् । **द्रोश्च** । 'य'दिति शेषः । 'एकाचो नित्य'मिति मयटः, 'ओरञि'त्यस्य चापवादः । **माने वयः** । **द्रोरित्येवेति** । माने विकारे गम्ये द्रुशब्दाद्वयप्रत्ययः स्यादित्यर्थः । **फले लुक्** । **आमलकमिति** । फलितस्य वृक्षस्य फलमव-

---

**शे.]** त्यञो बाधेन चरितार्थम् । तपनीयशब्दोऽनुदात्तादिः । शुकबकौ 'प्राणिनाङ्कुपूर्वाणा'मित्याद्युदात्तौ । **बैल्वमयमिति** । तस्यावयव इत्यर्थः । विकारे त्वस्मादनभिधानान्मयण्नेति भाष्यम् । **क्रीतवत्प** । अत्र परिमाणशब्देन परिच्छेदकमात्रं, व्याख्यानात् । तेन सङ्ख्याया अपि ग्रहणम् । अत एव 'आर्हा'दिति सूत्रे 'अत्र सूत्रे सङ्ख्याया इति वक्तव्य'मित्युक्तम् । **नैष्किके**—'असमासे निष्कादिभ्यः' इति ठक् । **शतिके**—'शताच्च ठन्यतौ' । **अणञाविति** । **उमेति**—तृणधान्यानाञ्च द्व्यषामित्याद्युदात्तम्, ऊर्णे त्वन्तोदात्तमिति भावः । **ऐणे**-प्राण्यञ् । **गोपय** । गोग्रहणमेकाचो' नित्यमिति मयड्बाधनार्थम् । द्रव्यशब्दो गुणैर्द्रूयते इत्यर्थे 'अचो य'दिति यत्प्रत्ययान्तो गुणाश्रये भव्ये वस्तुनि च । **माने व** । **माने**—प्रस्थादि । **आमलकमिति** । मयटो लुकि 'लुक्तद्धिते'ति

।७।३।५। अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । **जम्ब्वा वा** ।४।३।१६५। जम्बूशब्दात्फलेऽण् वा स्यात् । जाम्बवम् । पक्षे ओरञ् । तस्य लुक् । जम्बु । **लुप् च** ।४।३।१६६। जम्ब्वाः फलप्रत्ययस्य लुब् वा स्यात् । 'लुपि युक्तवत्' । जम्ब्वाः फलं जम्बूः । ॐ **फलपाकशुषामुपसङ्ख्यानम्** । व्रीहयः । मुद्गाः । ॐ **पुष्पमूलेषु बहुलम्** । मल्लिकायाः पुष्पं मल्लिका । जात्याः पुष्पं—जाती । विदार्या मूलं—विदारी । बहुलग्रहणान्नेह—पाटलानि पुष्पाणि । साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक्—अशोकम् । करवीरम् । **हरितक्यादिभ्यश्च** ।४।३।१६७। एभ्यः फलप्रत्ययस्य लुप्स्यात् । हरीतक्यादीनां लिङ्गमेव प्रकृतिवत् । हरीतक्याः फलानि हरीतक्यः । **कंसीयपरशव्ययोर्यञञौ लुक् च** ।४।३।१६८। कंसीयपरशव्यशब्दाभ्यां यञञौ स्तश्छयतोश्च

**त.]** फलितस्य वृक्षस्य फलमवयवो,विकारश्च। तेनान्यतरस्मिन्प्रत्ययः। **आमलकमिति**। मयटो लुक्। 'लुक्तद्धितलुकी'ति ङीषो लुक्। न चात्र स्थानिवद्भावेन 'यस्येति च' इति लोपः शङ्क्यः, 'लुका लुप्ते न स्थानिव'दित्यभ्युपगमात्। अत एव पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुरित्यत्र 'अध्यर्धपूर्वे'ति ठञो लुकि कृते 'लुक्तद्धिते'ति ङीषो लुका लुप्तत्वेन स्थानिवत्त्वाऽभावादुकारस्य यणादेशो न भवति । **प्लक्षादिभ्योऽण्** । अणोऽपवादः । शिग्रुकर्कन्धूशब्दाभ्याम् 'ओर'ञिति, अन्येभ्यस्त्वनुदात्तादित्वादञः प्राप्तिः। प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु कर्कन्धू बृहती । तत्र प्लक्षशब्दः 'फिषः' इत्यन्तोदात्तः। न्यग्रोधशब्दो 'लघावन्ते' इति मध्योदात्तः। अश्वत्थशब्दस्तु घृतादित्वादन्तोदात्तः। इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ । 'आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले' इत्यमरः । **न्यग्रोधस्य च** । केवलस्येति किम् ?। न्यग्रोधमूले भवा न्याग्रोधमूलाः—शालयः । न्यक्-रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे तु विध्यर्थम् । **जम्ब्विति** । नपुंसकह्रस्वः। 'फले जम्बा जम्बूः स्त्री जम्बु जाम्बवम्' । **फलपाकेति** । फलपाकेन शुष्यन्तीति फलपाकशुषः। **व्रीहयः। मुद्गा इति** । बिल्वाद्यणो लुक् । **मल्लिकेति**। अनुदात्तलक्षणस्याऽञो लुप्। 'मादीनां चे'ति फिट्सूत्रान्मल्लिकाशब्दे द्वितीयमुदात्तम्। जातीविदारीशब्दौ गौरादिङीषन्तौ। **पाटलानीति** । बिल्वादित्वादण्। साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। **हरीतक्यादिभ्यश्च** । इह द्राक्षाप्रभृतिभ्यो 'नित्यं वृद्धे'ति प्राप्तस्य मयटो लुप्, अनुदात्तादिभ्योऽञः, इतरेभ्य-

**बा.]** यवो विकारश्च। तस्मिन्मयटो लुकि 'लुक्तद्धितलुकी'ति ङीषो लुक्। **प्लक्षादिभ्योऽण्**। 'विकारे अवयवे चे'ति शेषः। तत्र शिग्रुकर्कन्धूशब्दयोरुवर्णान्तत्वादञि प्राप्ते, प्लक्षन्यग्रोधादीनामनुदात्तादित्वादञि प्राप्तेऽण्विधिः । नन्वस्य फले अणो लुक्कुतो नेत्यत आह—**विधानेति । न्यग्रोधस्य च** । 'न य्वाभ्या'मित्युत्तरसूत्रमिदम् । **अस्येति**। केवलस्य न्यग्रोधस्येत्यर्थः। केवलत्वं पदान्तरविहीनत्वम्। न्यक् रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे यद्यपि 'न य्वाभ्या'मित्येव सिद्धं, यकारस्य पदान्तत्वात्। तथापि केवलस्यैव इति नियमार्थं सूत्रम् । अव्युत्पत्तिपक्षे तु यकारस्य अपदान्तत्वाद्विध्यर्थमेव। केवलस्य किम् ?। न्याग्रोधमूलाः शालयः। **जम्ब्वा वा। जाम्बवेति**। जम्ब्वाः फलमित्यर्थः। अणो लुकि विशेष्यानुसारेण नपुंसकत्वाद्ध्रस्व इति भावः । **लुप् च** । लुकैव सिद्धे लुब्विधेः फलमाह—**लुपि युक्तवदिति । जम्बूरिति** । जम्ब्वाः फलमित्यर्थः। फलप्रत्ययस्य लुपि युक्तवत्त्वेन विशेष्यलिङ्गवचने बाधित्वा स्त्रीत्वमेकवचनं चेत्यर्थः। तथाच जम्ब्वाः फलान्यपि जम्बूरेव। **फलपाकेति** । फलपाकेन शुष्यन्तीति फलपाकशुषः—ओषधयः, तद्वाचिभ्यः परस्य फलप्रत्ययस्य लुप उपसङ्ख्यानमित्यर्थः । 'फले लुगि'त्यस्यापवादः। **व्रीहय इति**। व्रीह्याख्यानामोषधीनां फलानीत्यर्थः। एवं मुद्गाः। बिल्वाद्यणो लुप् । युक्तवद्भावात्पुंस्त्वं, नतु विशेष्यनिघ्नत्वम्। **पुष्पमूलेष्विति** । वार्तिकमिदम् । 'विकारावयवप्रत्ययस्य लुप् स्या'दिति शेषः । **पुष्पं मल्लिकेति**। 'अथ द्वितीयं प्रागीषा'दित्यनुवृत्तौ 'मादीनां चे'ति फिट्सूत्रेण मध्योदात्तो मल्लिकाशब्दः। ततः 'अनुदात्तादेश्चे'त्यञो लुप्। युक्तवत्त्वात्स्त्रीत्वम्। **जातीति**। 'लघावन्ते' इत्यन्तोदात्तो जातिशब्दः । ततः 'अनुदात्तादेश्चे'त्यञोऽनेन लुप्। युक्तवत्त्वात्स्त्रीत्वम्। **विदारीति** । जातिङीषन्तमिदं प्रत्ययस्वरेणान्तोदात्तम् । अनुदात्तादित्वादञि तस्य लुप्, युक्तवत्त्वात्स्त्रीत्वम्। **पाटलानीति**। बिल्वादित्वादण् । एवं साल्वानि । नन्वशोकस्य पुष्पम् अशोकं, करवीरस्य पुष्पं—करवीरमित्यत्रापि 'पुष्पमूलेषु बहुल'मिति लुपि युक्तवत्त्वात्पुंस्त्वे अशोकः पुष्पं, करवीरः पुष्पमिति स्यादित्यत आह—**बहुलग्रहणादिति**। तथाच युक्तवत्त्वस्याऽप्रवृत्तेः विशेष्यनिघ्नत्वमेवेति भावः। **हरीतक्यादिभ्यश्च । हरीतक्यादीनामिति** । वार्तिकमिदम् । एषां प्रकृतिलिङ्गमेव लुप्तप्रत्ययार्थे

**शे.]** ङीषो लुक्। लुका लुप्तत्वात्स्थानिवत्त्वाऽभावेन न 'यस्ये'ति लोपः। **न्यग्रोधस्य च** । केवलस्येति किम् ?। न्याग्रोधमूलाः शालयः। **फलपाकेति** । फलपाकेन ये शुष्यन्ति व्रीह्यादयस्तद्वाचिनामित्यर्थः। 'लुप' इति शेषः। **व्रीहिमुद्गौ**—बिल्वादी । पाटलिशब्दश्च तत्र । **पुष्पाणीति** । भाष्ये 'मूलानी'ति पाठः। साल्वस्य वृद्धत्वेऽपि वृत्तिप्रामाण्यात्प्लक्षादित्वं बिल्वादित्वं

लुक्। कंसाय हितं कंसीयम्। तस्य विकारः-कांस्यम्। परशवे हितं परशव्यम्। तस्य विकारः-पारशवः।

प्राग्दीव्यतीयाः समाप्ताः॥

अथ ठगधिकारः।

**प्राग्वहतेष्ठक्** ।४।४।१। 'तद्वहती'त्यतः प्राक् ठगधिक्रियते। * तदाहेति माशब्दादिभ्य उपसंख्यानम्। 'माशब्दः कारी'ति य आह स—माशब्दिकः। **स्वागतादीनां च** ।७।३।७। ऐज् न स्यात्।

त.]स्त्वणः। **लिङ्गमेवेति**। वचनं तु विशेष्यवदेव, 'हरीतक्यादिषु व्यक्ति'रित्युक्तत्वादिति भावः। **कंसीयमिति**। 'प्राक्क्रीताच्छः' इत्यधिकारे 'तस्मै हित'मिति छः। तस्यैव छस्यापवादतया 'उगवादिभ्यो यत्'—परशव्यं दारु। परशव्यशब्दस्याऽनुदात्तादित्वादञि [:] सिद्धे तत्संनियोगेन यतो लुगर्थं वचनम्। नच 'यस्येति'यलोपे कृते 'हलस्तद्धितस्ये'ति यलोपेन सिद्धमिष्टमिति भ्रमितव्यम्, ईतीत्यनुवृत्तेः। **इति प्राग्दीव्यतीयाः**।

**तदाहेतीति**। वाक्यादयं प्रत्ययविधिः, शब्दो माकारीति यो निषेधति स 'माशब्दिक' इत्युच्यते। तथा नित्यः शब्द इति य आह स 'नैत्यशब्दिकः'। 'कार्यशब्दिकः'। इह वाक्याद्वितीया न सम्भवति, अप्रातिपदिकत्वात्। तेन तच्छब्देन कर्ममात्रं निर्दिश्यते। तच्च वाक्यार्थरूपमित्याहुः। **ऐज्न स्यादिति**। 'न य्वाभ्या'मिति प्राप्त ऐजागमोऽनेन निषिध्यते, 'न कर्मे'त्यतो नञनुवर्तनादिति भावः। **स्वापतेयमिति**। 'पथ्यतिथि-

बा.]अतिदिश्यते, नतु प्रकृतिवचनमपीत्यर्थः। **हरीतक्य इति**। जातिङीषन्तः प्रत्ययस्वरेणान्तोदात्तो हरीतकीशब्दः। ततोऽनुदात्तादित्वादञि तस्य 'फले लु'गिति लुकि प्राप्ते लुपि युक्तवत्त्वात्स्त्रीत्वे विशेष्यानुरोधाद्बहुवचनम्। **कंसीयपरशव्य**। अत्र यञञोर्न लुक्, विधिवैयर्थ्यात्। नापि प्रकृत्योः, प्रत्ययाऽदर्शनस्यैव लुक्त्वात्। अतः परिशेषात्प्रकृत्येकदेशयोश्छयतोरिति लभ्यते। तदाह—**छयतोरिति**। **कंसीयमिति**। कंसो नाम धातुर्लोहविशेषः। 'तस्मै हित'मिति छः। **कांस्यमिति**। कंसीयशब्दादञि छस्य लुकि आदिवृद्धौ 'यस्येति चे'त्यकारलोपः। **परशव्यमिति**। 'तस्मै हित'मित्यधिकारे 'उगवादिभ्यो य'दिति यति ओर्गुणे 'वान्तो यी'त्यवादेशः। **पारशव इति**। परशव्यशब्दादञि यतो लुकि ओर्गुणे पारशवः। 'हलस्तद्धितस्ये'ति तु न, ईतीत्यनुवृत्तेः। अनापत्यत्वात् 'आपत्यस्य चे'त्यपि लोपो न प्रसज्यत इति भावः। **इति प्राग्दीव्यतीयाः**।

**प्राग्वहतेष्ठक्**। वहतीत्येकदेशेन 'तद्वहति रथयुगप्रासङ्ग'मिति सूत्रं परामृश्यते इत्यभिप्रेत्याह—**तद्वहतीत्यत इति**। **तदाहेति**। इतिशब्दो व्युत्क्रमेण तच्छब्दानन्तरं द्रष्टव्यः। तदित्याहेत्यर्थे माशब्द-स्वागतइत्यादिशब्देभ्यष्ठक उपसङ्ख्यानमित्यन्वयः। 'त'दित्यनेन वाक्यार्थो विवक्षितः। इतिशब्दस्तस्य वाक्यार्थस्य कर्मत्वं गमयति। 'मा शब्दं कार्षी'रित्याहेत्यार्थे तद्वाक्यावयवात् 'माशब्द' इत्यादिशब्दाट्ठगिति यावत्। **माशब्दिक इति**। शब्दं मा कार्षीरित्यन्वयः। 'माङि लुङि'ति लोडर्थे लुङ्। 'न माङ्योगे' इत्यडागमनिषेधः। शब्दं न कुरु इत्यर्थः। अत्र आहेति ब्रूञ्धात्वर्थव्यक्तवचनक्रियां प्रति 'मा शब्दं कार्षी'रिति वाक्यार्थः कर्म। तद्वाक्यैकदेशो माशब्देति समुदायः। तस्मान्निर्विभक्तिकादयं प्रत्ययः। न हि माशब्देति समुदायाद्विभक्तिरस्ति। एवंच माशब्देति समुदायाट्ठकि 'माशब्दिक' इति रूपम्। '**मा शब्दः कारी**'ति पाठे तु कारीति कर्मणि लुङ्। शब्दो न कार्य इत्यर्थः। नच तदाहेत्यर्थे माशब्दादिभ्यष्ठगिति यथाश्रुतमभ्युपगम्य माशब्दमाहेत्यार्थे माशब्देत्यादिशब्देभ्यो द्वितीयान्तेभ्यष्ठगित्येव कुतो न व्याख्यायत इति वाच्यम्, एवं सति 'आहौ प्रभूतादिभ्यः' इत्युत्तरवार्तिकारम्भवैयर्थ्यापत्तेरिति भावः। स्वागतादिगणे-स्वागत, स्वध्वर इति पठितं, तत्र विशेषमाह—**स्वागतादीनां च**। 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति प्रकरणे 'न कर्मव्यतिहारे' इत्यस्मादुत्तरं सूत्रमिदम्। **ऐज्न स्या-**

शे.]वा बोद्धव्यम्। **कंसीयप**। अत्र यथासङ्ख्यम्। लुक्शब्देन विधानाच्च प्रकृतेर्लोपः। 'प्रातिपदिका'दित्यधिकाराच्च ञौणादिकयोः, प्रातिपदिकात्परयोर्लुगित्यर्थात्। तेषामव्युत्पन्नत्वाच्च। यञञोस्तु न लुक्, विधानसामर्थ्यात्। एककालप्रतीतानामुद्देश्यविधेयभावाऽसम्भवाच्च। वाक्यभेदे मानाऽभावात् च। 'कंसीयपरशव्ययो'रिति षष्ठीनिर्देशस्य वैयर्थ्यापत्तेश्च। तदाह—**छयतोरिति**।

**इति प्राग्दीव्यतीयाः**।

**तदाहेतीति**। 'आहौ प्रभूतादिभ्यः' इति वार्तिकारम्भसामर्थ्यान्माशब्देति समुदायादयं प्रत्ययः। तस्य च द्वितीयान्तत्वाऽसम्भवात्कर्ममात्रं परामृश्यते। तत्र हि पदसमुदायार्थ इतिना परामृश्यमानः स्फुटतया वचनक्रियायां कर्म भवतीत्याशयेनाह—**माशब्दं कार्षीरिति य आहेति**। वृत्तौ धात्वर्थोऽन्तर्भूत इति बोद्धव्यम्। 'माशब्दे'ति निर्विभक्तिकादयं प्रत्ययः। 'माशब्दः कारी'ति पाठे—न क्रियतामित्यर्थः। **स्वागता**। 'न कर्मे'त्यतो नञनुवृत्तेः। **स्वपताविति**। स्वशब्दस्य द्वारादि-

स्वागतमित्याह स्वागतिकः । स्वाध्वरिकः । स्वाङ्गस्यापत्यं स्वाङ्गिः । व्यङ्गस्य[अपत्यं] व्याङ्गिः । व्यड-स्यापत्यं व्याडिः । व्यवहारेण चरति व्यावहारिकः । स्वपतौ साधु स्वापतेयम् । ❀आहौ प्रभूतादिभ्यः । प्रभूतमाह प्राभूतिकः । पार्यासिकः । ❀पृच्छतौ सुस्नातादिभ्यः । सुस्नातं पृच्छति सौस्नातिकः । सौख-शायनिकः । अनुकशतिकादिः । ❀गच्छतौ परदारादिभ्यः । पारदारिकः । गौरुतल्पिकः । **तेन दीव्यति खनति जयति जितम्** ।४।४।२। अक्षैर्दीव्यति आक्षिकः । अभ्र्या खनति आभ्रिकः । अक्षैर्जयति आक्षिकः । अक्षैर्जितमाक्षिकम् । **संस्कृतम्** ।४।४।३। दध्ना संस्कृतं दाधिकम् । मारीचिकम् । **कुलत्थकोपधादण्** ।४।४।४। ठकोऽपवादः । कुलत्थैः संस्कृतं कौलत्थम् । तैत्तिडीकम् । **तरति** ।४।४।५। उडुपेन तरति औडुपिकः । **गोपुच्छाट्ठञ्** ।४।४।६। गौपुच्छिकः । **नौद्व्यचष्ठन्** ।४।४।७। नाविकः । घटिकः । बाहुभ्यां तरति बाहुका स्त्री । **चरति** ।४।४।८। तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । शाकटिकः । दध्ना भक्षयति दाधिकः । **आकर्षात् ष्ठल्** ।४।४।९। आकर्षो निकषोपलः । आकषादिति पाठान्तरम् । तेन चरति आकर्षिकः । षित्त्वान्ङीष् । आकर्षिकी । **पर्पादिभ्यः ष्ठन्** ।४।४।१०। पर्पेण चरति-पर्पिकः । पर्पिकी । येन पीठेन पङ्गवश्चरन्ति स

---

त.]वसतिस्वपतेर्ढञ्' । स्वशब्दस्य द्वारादित्वादैजागमस्य प्राप्तिः । द्वारादित्वफलं तु स्वस्येदं 'सौव'मिति ज्ञेयम् । **आहा-विति** । 'उपसङ्ख्यान'मित्यनुषज्यते । आहेतिपदे एकदेशस्य प्रकृतिभागस्यागन्तुकेनेकारेण 'आहा'वित्यनुकरणम् । **प्राभूतिक इति** । क्रियाविशेषणाद्द्वक्तरि प्रत्ययः । **तेन दीव्यति** । इह कालपुरुषसङ्ख्या न विवक्षिताः, तेना-क्षैरदेवीत् देविष्यति वा आक्षिक इति भवति । एवमक्षैर्देविष्यसि देविष्यामि वा आक्षिकः, दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः । कारकं तु विवक्षितमेव, 'जयति, जित'मिति कर्तृकर्मणोः पृथगुपादानात् । तेनाक्षैर्द्यूतः, अक्षैः खात इति कर्माद्यर्थे आक्षिक इति न भवति । **अभ्र्येति** । 'अभ्रिः स्त्री काष्ठकुद्दालः' इत्यमरः । **संस्कृतम्** । योग-विभाग उत्तरार्थः । **बाहुकेति** । सूत्रे षकारः सांहितिको, न त्वनुबन्ध इति न ङीष् । तथा च 'आकर्षात्पर्पादेः' इत्यादि श्लोकवार्तिकं षित्त्वविवेचनाय प्रकरणान्ते पठिष्यति । **निकषोपल इति** । सुवर्णपरीक्षार्थः । **पाठान्तर-मिति** । एतच्च भ्वादौ 'कषखषे'त्यादिदण्डके 'आकषात्ष्ठ'लिति माधवेनोपन्यस्तम् । किन्तु 'आकर्षात्पर्पादे'रिति

---

बा.]दिति । शेषपूरणमिदम् । 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति प्राप्त ऐज्न स्यादित्यर्थः । **स्वाध्वरिक इति** । स्वध्वर इत्याहेत्यर्थः । अथ स्वागतादिगणशेषमुदाहरति—**स्वङ्गस्येति** । **व्याङ्गिरिति** । व्यङ्गस्यापत्य-मिति विग्रहः । **व्यडस्येति** । न विद्यते डो यस्य स अडः, विगतोऽडो व्यडः । **स्वापतेयमिति** । 'पथ्यतिथि-वसतिस्वपतेर्ढञ्' । द्वारादित्वादैच् प्राप्तो निषिध्यते । **आहाविति** । आहेति पदैकदेशादिकारस्य उच्चारणार्थो निर्देशः । तदिति पूर्ववार्तिकादनुवर्तते । आहेत्यर्थे द्वितीयान्तेभ्यः प्रभूतादिभ्यष्ठग्वाच्य इत्यर्थः । **पार्यासिक इति** । पर्याप्त-माहेत्यर्थः । **पृच्छताविति** । 'त'दित्यनुवर्तते । पृच्छतीत्यर्थे द्वितीयान्तेभ्यः सुस्नातादिभ्यष्ठग्वाच्य इत्यर्थः । **सौखशायनिक इति** । सुखशयनं पृच्छतीत्यर्थः । **अनुशतिकादिरिति** । 'सुखशयनशब्द' इति शेषः । ततश्च 'अनुशतिकादीनां चे'ति पूर्वोत्तरपदयोरादिवृद्धिरिति भावः । **गच्छताविति** । तदित्यनुवर्तते । गच्छतीत्यर्थे परदारादिभ्यो द्वितीयान्तेभ्यष्ठगित्यर्थः । **पारदारिक इति** । परदारान्गच्छतीत्यर्थः । **गौरुतल्पिक इति** । गुरु-तल्पं गच्छतीत्यर्थः । **गुरुतल्पो=गुरुस्त्री** । **तेन दीव्यति** । तेन दीव्यति, तेन खनति, तेन जयति, तेन जित-मिति विग्रहेषु तृतीयान्ताट्ठगित्यर्थः । **अभ्रिः=कुद्दालः** । 'देवदत्तेन जित'मित्यत्र तु न ठक्, करणतृतीयान्तादेव तद्विधेः । **संस्कृतम्** । तेनेत्येव । संस्कृतमित्यर्थे तृतीयान्ताट्ठगित्यर्थः । 'संस्कृतं भक्षाः' इत्यत्र तु सप्तम्यन्तादणादि-विधिः । **मारीचिकमिति** । मरीचिभिः संस्कृतमित्यर्थः । **कुलत्थकोपधादण्** । 'संस्कृतमित्यर्थे तृतीयान्ता'-दिति शेषः । **तैन्तिणीकमिति** । तिन्तिणीकेन संस्कृतमित्यर्थः । **तरति** । तरतीत्यर्थे तृतीयान्ताट्ठगित्यर्थः । **गोपुच्छाट्ठञ्** । 'तरतीत्यर्थे तृतीयान्ता'दिति शेषः । **नौद्व्यचष्ठन्** । 'ठ'निति च्छेदः । ष्टुत्वकृतः सस्य षकारः । तरतीत्यर्थे नौशब्दात् द्व्यचश्च तृतीयान्ताट्ठनित्यर्थः । **नाविक इति** । नावा तरतीत्यर्थः । **घटिक इति** । घटेन तरतीत्यर्थः । **बाहुका स्त्रीति** । उकः परत्वाट्ठस्य कः । अदन्तत्वाट्टाप् । **चरति** । **गच्छति भक्षयतीति** । 'चर गतिभक्षणयो'रिति चरधातोरर्थद्वये वृत्तेरिति भावः । **हास्तिक इति** । ठनि इके 'नस्तद्धिते' इति टिलोपः ।

---

**शे.]**त्वादैचः प्राप्तिः । वस्तुतोऽत्राऽस्य पाठो व्यर्थः, 'स्वशब्दादेश्चेत्स्वग्रामस्वाध्याययोरेवे'ति नियमेन स्वाराज्यादाविवात्राप्यैचोऽप्राप्तेः । **'आहौ' 'पृच्छता'**वित्यादौ धात्वर्थनिर्देशे इक्श्तिपौ । **तेन दीव्यति** । 'तेने'ति करणे तृतीया, दीव्यत्यादौ कर्तुरुक्तेः तत्साहचर्याज्जितयोगेऽपि सैव । अत्र तिङन्ते लौकिकप्रयोगे क्रियायाः प्राधान्येऽपि वृत्तौ तद्विग्रहे सूत्रे च कर्तृप्राधान्यमित्युक्तम् ।

पर्पः । अश्विकः । रथिकः । **श्वगणाट्ठञ्च** ।४।४।११। चात् छन् । **श्वादेरिञि** ।७।३।८। ऐज् न । श्वभस्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । तदादिविधौ चेदमेव ज्ञापकम् । *** इकारादाविति वाच्यम्** । श्वगणेन चरति श्वागणिकः । श्वागणिकी । श्वगणिकः । श्वगणिकी । **पदान्तस्यान्यतरस्याम्** ।७।३।९। श्वादेरङ्गस्य पदशब्दान्तस्यैज्वा । श्वापदस्येदं श्वापदम् । शौवापदम् । **वेतनादिभ्यो जीवति** ।४।४।१२। वेतनेन जीवति वैतनिकः । धानुष्कः । **वस्नक्रयविक्रयाट्ठन्** ।४।४।१३। वस्नेन मूल्येन जीवति वस्निकः । क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थम् । क्रयविक्रयिकः । क्रयिकः । विक्रयिकः । **आयुधाच्छ च** ।४।४।१४। चाट्ठन् । आयुधेन जीवति आयुधीयः । आयुधिकः । **हरत्युत्सङ्गादिभ्यः** ।४।४।१५। उत्सङ्गेन हरत्यौत्सङ्गिकः । **भस्त्रादिभ्यः ष्ठन्**

---

त.] वार्तिकस्याननुगुणम् । तत्र हि नीरेफपाठे वृत्ताऽसङ्गतिप्रसङ्गात् । **पर्प इति** । 'पर्प गतौ' । 'हलश्चे'ति करणे घञ् । इहान्तर्गणसूत्रं **'पादः पच्चे'ति** । पादाभ्यां चरति पदिकः । यत्तु वार्तिकं 'पद्भाव इके चरतावुपसङ्ख्यान'मिति सोऽस्यैव प्रपञ्चः । पर्प, अश्व, अश्वत्थ, रथ, जाल, (जल?) न्याय, व्याल, पादः पत् । **श्वगणाट्ठञ्च** । ठकोऽपादः । **इदमेव ज्ञापकमिति** । द्वारादिगणे श्वन्शब्दः पठ्यते, न तु श्वभस्त्र श्वदंष्ट्रेत्यादिस्तथा च 'श्वादेरिञी'ति निषेधसूत्रमेव व्यर्थं सद्द्वारादिषु तदादिविधिं ज्ञापयतीत्यर्थः । फलं तु द्वारपालस्यायं 'दौवारपाल' इत्यादावैजागमस्य प्रवृत्तिः । **इकारादाविति** । सूत्रे इञीत्यपनीय इकारादाविति पठनीयमित्यर्थः । अन्ये तु इञीति स्थाने इतीति पठनीयम् । तथा चाऽङ्गाक्षिप्तप्रत्ययस्य विशेष्यत्वात् 'यस्मिन्विधिस्तदादौ' इत्यनेन इकारादिर्लभ्यत इत्याहुः । **श्वागणिकीति** । छनः षित्त्वान्ङीष् । **श्वापदस्येति** । 'अन्येषामपि दृश्यते' इति दीर्घः । **धानुष्क इति** । वेतनादिगणे धनुर्दण्डेति पठ्यते, तच्च सङ्घातविगृहीतार्थम् । तथा च 'धानुर्दण्डिकः', 'दाण्डिक' इत्यप्युदाहार्यम् । **आयुधाच्छ छ** । आयुध्यन्ते अनेनेति आयुधं । 'घमर्थे कविधान'मिति कः । **हरत्युत्सङ्गादिभ्यः** । एभ्यस्तृतीयान्तेभ्यष्ठक् स्यादुपादत्ते नयति वेत्यर्थे । उत्सङ्ग, उडुप, उत्थित, पिटक, पिटाक । **भस्त्रादिभ्यः ष्ठन्** । भस्त्रा-चर्मविकारः ।

---

बा.] **आकर्षात्ष्ठल्** । तेन चरतीत्यर्थे तृतीयान्तादाकर्षशब्दात्ष्ठलित्यर्थः । **पर्पादिभ्यः ष्ठन्** । ष्ठन् इति च्छेदः । 'चरतीत्यर्थे तृतीयान्तेभ्य' इति शेषः । षित्त्वं ङीषर्थमित्याह-**पर्पिकीति** । **अश्विक इति** । अश्वेन चरतीत्यर्थः । **श्वगणाट्ठञ् च** । 'उक्तविषये' इति शेषः । श्वगणशब्दात्तृतीयान्ताच्चरतीत्यर्थे ठञ् ष्ठन् च स्यादित्यर्थः । श्वागणिक इत्युदाहरणं वक्ष्यति । तत्र श्वन्शब्दस्य द्वारादित्वादैजागमे प्राप्ते । **श्वादेरिञि** । 'न कर्मव्यतिहारे' इत्यतो नेत्यनुवर्तते । अङ्गस्येत्यधिकृतम् । श्वन्शब्द आदिर्यस्येति विग्रहः । श्वन्शब्दपूर्वपदस्याङ्गस्य इञि परे नैजागम इत्यर्थः । **श्वाभस्त्रिरिति** । 'अत इञ्' । **श्वादंष्ट्रिरिति** । श्वदंष्ट्रस्याऽपत्यमित्यर्थः । ननु श्वन्शब्द एव द्वारादौ पठ्यते नतु श्वभस्त्रशब्दः । ततश्च तस्य द्वारादित्वाऽभावादैजागमप्रसक्तिरेव नेत्यत आह-**तदादिविधाविति** । द्वारादिगणे श्वन्शब्दस्य पाठेऽपि अस्मादेव प्रतिषेधात् श्वन्शब्दपूर्वकस्याङ्गस्य द्वारादिगणे ग्रहणं विज्ञायत इत्यर्थः । तत्फलं तु श्ववहनस्येदं शौववहनं नाम नगरम् । ननु प्रकृते श्वागणिके इञभावात्कथमयं निषेध इत्यत आह-**इकारादाविति वाच्यमिति** । इञीति परित्यज्य इकारादाविति वाच्यमित्यर्थः । इञि तु व्यपदेशिवत्त्वेन इकारादित्वम् । **श्वागणिक इति** । ठञि आदिवृद्धिः । **श्वगणिक इति** । ष्ठनि रूपम् । **श्वागणिकीति** । ठञन्तात् 'टिड्ढाण'ञिति ङीप् । **श्वगणिकीति** । षित्त्वान्ङीष् । प्रसङ्गादाह—**पदान्तस्यान्यतरस्याम्** । 'श्वादेरिञी'त्यस्मादुत्तरं सूत्रमिदम् । पदं-पदशब्दो-ऽन्तो यस्येति विग्रहः । तदाह-**पदशब्दान्तस्येति** । **ऐज्वेति** । निषेधविकल्पे सति विधिविकल्पः फलित इति भावः । **श्वापदस्येति** । शुनः पदमिव पदं यस्येति विग्रहः । 'शुनो दन्तदंष्ट्रे'त्यादिना दीर्घः । **शौवापदमिति** । 'तस्येद'मित्यण् । 'वृद्धाच्छः' इति तु न, अनभिधानादित्याहुः । अन्ये तु श्वपुच्छवदीर्घाऽभावे अणमाहुः । **वेतनादिभ्यो जीवति** । 'जीवतीत्यर्थे तृतीयान्तेभ्यष्ठ'गिति शेषः । **वैतनिक इति** । वेतनेन जीवतीत्यर्थः । **धानुष्क इति** । धनुषा जीवतीत्यर्थः । उसन्तात्परत्वाट्ठस्य कः । 'इणः षः' इति षत्वम् । **वस्नक्रयविक्रयाट्ठन्** । जीवतीत्यर्थे तृतीयान्तेभ्यो वस्नादिभ्यष्ठन् स्यादित्यर्थः । **सङ्घातविगृहीतार्थमिति** । व्याख्यानादिति भावः । **आयुधाच्छ च** । जीवतीत्यर्थे तृतीयान्तादायुधशब्दाच्छः स्याट्ठन् चेत्यर्थः । **हरत्यु-**

---

शे.] **संस्कृतम्** । सत उत्कर्षाधानं संस्कारः । **पर्पिकीति** । षित्त्वान्ङीष् । इह 'पादः पच्चे'ति गणसूत्रमनार्षम्, इके चरतौ पद्भावोपसङ्ख्यानात् । **श्वादेरिति** । इञि परतो यत्किंचिन्निमित्तक ऐज्न । तेन श्वाभस्त्रेरिदं श्वाभस्त्रमित्येव । ननु द्वारादौ श्वन्शब्दपाठेऽपि तदादौ कथं प्राप्तिरत आह—**तदादीति** । तत्फलं 'शौवहानं नगर'मिति । निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह—**ऐज्वेति** । **श्वापदस्येति** । 'अभिधानलक्षणाः कृत्तद्धितसमासाः' इत्युक्तेरनभिधानाच्छाऽभावेऽण् । एवं **शौवादंष्ट्रे**ऽपीत्येके । अन्ये तु श्वपुच्छवदीर्घाऽभावेऽणमाहुः । **श्वापदिके**—पूर्वविप्रतिषेधेन नित्य एव निषेधः ।

।४।४।१६। भस्त्रया हरति भस्त्रिकः। षित्त्वान्ङीष्। भस्त्रिकी। **विभाषा विवधात्** ।४।४।१७। विवधेन हरति विवधिकः। पक्षे ठक्। वैवधिकः। एकदेशविकृतस्यानन्यत्वाद्वीवधादपि छन्। वीवधिकः। वीवधिकी। विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते। **अण् कुटिलिकायाः** ।४।४।१८। कुटिलिका व्याधानां गतिविशेषः, कर्मारोपकरणभूतं लोहं च। कुटिलिकया हरति मृगानङ्गारान्वा—कौटिलिको व्याधः, कर्मारश्च। **निर्वृत्तेऽक्षद्यूतादिभ्यः** ।४।४।१९। अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं वैरम्। **क्त्रेर्मम्नित्यम्** ।४।४।२०। त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मप्स्यान्नित्यम्। कृत्या निर्वृत्तं कृत्रिमम्। पक्त्रिमम्। ॐ **भावप्रत्ययान्तादिमब्वक्तव्यः**। पाकेन निर्वृत्तं पाकिमम्। त्यागिमम्। **अपमित्ययाचिताभ्यां कक्कनौ** ।४।४।२१। 'अपमित्ये'ति ल्यबन्तम्। अपमित्य निर्वृत्तम्—आपमित्यकम्। याचितेन निर्वृत्तं याचितकम्। **संसृष्टे** ।४।४।२२। **चूर्णादिनिः** ।४।४।२३। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः। **लवणाल्लुक्** ।४।४।२४। लवणेन दध्ना संसृष्टं दाधिकम्।

त.] 'शीर्षंभार'शब्दोऽत्र पठ्यते। निपातनाच्छीर्षभावः सप्तमीसमासश्च, तत्पुरुषे कृती'ति वा अलुक्। पक्षे 'शीर्षभारः'।

**एकदेशविकृतस्येति**। 'वीवधाच्चेति वक्तव्य'मिति वार्तिकं न्यायसिद्धार्थकथनपरमिति भावः। वृत्तिकृत्तु सूत्रे वीवधशब्दं प्रक्षिप्य 'विभाषा विवधवीवधा'दिति पपाठ। **क्त्रेर्मम्नित्यम्**। नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम्। अतएव लौकिके विग्रहवाक्ये क्तिन्नादीनां प्रयोगो, न तु क्त्रेः, तदाह—**कृत्या निर्वृत्तमिति**। एवमग्रेऽपि पाकेन निर्वृत्तमिति विग्रहो बोध्यः। सङ्ख्यावाची त्रिशब्दो नेह गृह्यते, प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहणात्, 'णिजां त्रयाणा'मिति लिङ्गाच्च। ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां मपं विना त्रिप्रत्ययान्तस्य प्रयोगनिवारणेऽपि तदविवक्षायां तस्य स्वातन्त्र्येण प्रयोगो दुर्वार इति चेत्। न। 'नित्य'मिति योगं विभज्य तत्सामर्थ्यादर्थविशेषानादरेणैव स्वातन्त्र्यवारणात्। **इमबिति**। एवं च मप् कर्तव्यः। तथा हि—**'भावप्रत्ययान्तादिमप्'**। ततः **'क्त्रेः'**। पूर्वेण सिद्धे नियमार्थमिदं,—त्रिप्रत्ययान्त इमब्विषय एवेति। तेन त्रिपत्ययान्तस्य प्रयोगो निवर्तते। ततो **'नित्यम्'**। अनेन निर्वृत्तार्थाऽविवक्षायामपि त्र्यन्तस्य स्वातन्त्र्यं वार्यते। एवं च सङ्ख्यावाचित्रिशब्दस्य ग्रहणशङ्कैव नास्ति, 'भावप्रत्ययान्ता'दित्यनुवृत्तेः। स्वरेऽपि विशेषो नास्ति, उदात्तनिवृत्तिस्वरेण इमप इकारस्योदात्तत्वात्।

**अपमित्येति**। 'उदीचां माङः' इति क्त्वाप्रत्ययेन सह गतिसमासः। क्त्वो ल्यप्। 'मयतेरिदन्यतरस्या'मिति इत्त्वम्। 'ह्रस्वस्ये'ति तुक्। ल्यबन्तादस्मात्तृतीयान्तात्प्रत्ययो न भवति, किन्तु वचनात्प्रथमान्तादेव।

बा.] **त्सङ्गादिभ्यः**। हरतीत्यर्थे तृतीयान्तेभ्य उत्सङ्गादिभ्यष्ठक् स्यादित्यर्थः। **भस्त्रादिभ्यः ष्ठन्**। 'ष्ठ'निति छेदः। हरतीत्यर्थे तृतीयान्तेभ्यो भस्त्रादिभ्यः ष्ठन् स्यादित्यर्थः। **षित्त्वादिति**। 'ङी'षिति शेषः। **विभाषा विवधात्**। 'हरतीत्यर्थे तृतीयान्तात् ष्ठ'निति शेषः। **अण् कुटिलिकायाः**। हरतीत्यर्थे तृतीयान्तात्कुटिलिकाशब्दादण् स्यादित्यर्थः। कर्मारो लोहकारः, तस्य यत् अङ्गारतप्तलोहादिग्रहणसाधनं लोहविकारभूतं सन्दंशापरनामधेयं, तदपि कुटिलिकेत्यर्थः। **निर्वृत्तेऽक्षद्यूतादिभ्यः**। निर्वृत्तमित्यर्थे तृतीयान्तेभ्योऽक्षद्यूतादिभ्यष्ठगित्यर्थः। **क्त्रेर्मम्नित्यम्**। तेन निर्वृत्तमित्यर्थे 'ड्वितः क्त्रि'रिति क्त्रिप्रत्ययान्तान्नित्यं मप्प्रत्ययः स्यादित्यर्थः। 'समर्थानां प्रथमाद्वे'ति महाविकल्पनिवृत्त्यर्थं नित्यग्रहणात्। ततश्च अस्मिन्नर्थे मप्प्रत्ययं विना क्त्रिप्रत्ययान्तस्य प्रयोगो नेति भाष्ये स्पष्टम्। एवं चात्र अस्वपदविग्रहं दर्शयति—**कृत्या निर्वृत्तमिति**। अत्र विग्रहवाक्ये 'स्त्रियां क्तिन्नि'ति क्तिन्नन्तोऽयं कृतिशब्दः। **कृत्रिममिति**। 'डुकृञ् करणे' इति धातोः 'ड्वितः क्त्रि'रिति क्त्रिप्रत्ययान्तान्मप्। **पक्त्रिममिति**। पक्त्या निर्वृत्तमित्यस्वपदविग्रहः। 'डुपचष् पाके' इत्यस्मात्क्त्रिप्रत्ययान्तान्मप्। **इमब्वक्तव्य' इति**। 'निर्वृत्तमित्यर्थे तृतीयान्ता'दिति शेषः। अत्र नित्यमिति न संबध्यते इत्यभिप्रेत्य लौकिकस्वपदविग्रहं दर्शयति—**पाकेन निर्वृत्तमिति**। **अपमित्ययाचिताभ्याम्**। **ल्यबन्तमिति**। 'मेङ् प्रणिदाने' इत्यस्माद्विनिमयार्थकात् 'उदीचां माङो व्यतिहारे' इति क्त्वाप्रत्यये गतिसमासे ल्यपि 'मयतेरिदन्यतरस्या'मिति इत्त्वे 'ह्रस्वस्य पिती'ति तुगागमे अपमित्येत्यव्ययम्, 'क्त्वातोसुन्कसुनः' इत्युक्तेरित्यर्थः। निर्वृत्तमित्यर्थे अपमित्येत्यव्ययात्प्रथमान्ताद्याचितशब्दाच्च तृतीयान्तात्कक् कन् च यथासङ्ख्यं स्यातामित्यर्थः। अपमित्येत्यंशे तृतीयान्तत्वाऽसंभवात्प्रथमान्तादिति लभ्यते। **संसृष्टे**। संसृष्टमित्यर्थे तृतीयान्ताट्ठगित्यर्थः। **चूर्णादिनिः**। 'संसृष्टमित्यर्थे तृतीयान्ता'दिति शेषः। **लवणा-**

शे.] **क्त्रेर्मप्**। ड्वितः क्त्रिरेव गृह्यते, न तु सङ्ख्यावाची त्रिशब्दो, व्याख्यानात्। अत्र 'क्त्रे'रिति भिन्नं वाक्यं, त्रिप्रत्ययान्तान्नित्यं निर्वृत्ते मबित्यर्थः। ततो—'नित्यं'। योऽयं निर्वृत्ते मप्स त्र्यन्ताद्भवत्येवेत्यर्थः। तेन निर्वृत्ते वाक्यं न, अन्यत्र च त्र्यन्तस्य प्रयोगो न। तदुक्तं भाष्ये—'त्र्यन्तं मब्विषयमेव यथा स्यात् केवलस्य प्रयोगो माभू'दिति। एवञ्चवाक्येऽपि 'वे'त्यस्याऽसम्बन्ध एव। **तृतीयान्तादिति**। वृत्तिस्त्वलौकिकाऽभिप्राया, तदर्थकादित्यर्थका वेति दिक्। **पाकिममिति**। कुट्टिमादयोऽप्येवम्।

संसृष्टो लवणः सूपः । लवणं शाकम् । **मुद्गादण्** ।४।४।२५। मौद्ग ओदनः । **व्यञ्जनैरुपसिक्ते** ।४।४।२६। [ठक्] । दध्ना उपसिक्तं दाधिकम् । **ओजःसहोऽम्भसा वर्तते** ।४।४।२७। [ओजसा वर्तते] औजसिकः शूरः । साहसिकश्चौरः । आम्भसिको मत्स्यः । **तत्प्रत्यनुपूर्वमीपलोमकूलम्** ।४।४।२८। द्वितीयान्तादस्माद्वर्तत इत्यस्मिन्नर्थे ठक् स्यात् । क्रियाविशेषणत्वाद्द्वितीया । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः । **परिमुखं च** ।४।४।२९। परिमुखं वर्तते पारिमुखिकः । चात्पारिपार्श्विकः । **प्रयच्छति गर्ह्यम्** ।४।४।३०। द्विगुणार्थं द्विगुणं, तत्प्रयच्छति द्वैगुणिकः । त्रैगुणिकः । ॐ **वृद्धेर्वृधुषिभावो वक्तव्यः** । वार्धुषिकः । **कुसीददशैकादशात् ष्ठन्ष्ठचौ** ।४।४।३१। गर्ह्यार्थाभ्यामाभ्यामेतौ स्तः प्रयच्छ[ती]त्यर्थे । कुसीदं वृद्धिस्तदर्थं द्रव्यं कुसीदं, तत्प्रयच्छति कुसीदिकः । कुसीदिकी । एकादशार्थं-

---

त.] **व्यञ्जनैरुप** । व्यज्यते अनेन ओदनादिरस इति व्यञ्जनं, तद्वाचिभ्य उपसिक्त इत्यर्थे ठक्स्यात् । **तत्प्रत्यनु** । वृतेरकर्मकत्वात्कथं तस्य द्वितीयान्तेन प्रतीपमित्यादिना सम्बन्ध इत्याशङ्कायामाह—**क्रियाविशेषणत्वादिति** । **प्रतीपमिति** । प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः । 'ऋक्पूः' इत्यकारः समासान्तः । 'द्व्यन्तरुपसर्गेभ्यः' इति ईत्वम् । व्युत्पत्तिमात्रमिदम् । प्रतिकूलाऽनुकूलपर्याया हीमे रूढिशब्दाः । **आन्वीपिक इति** । 'अन्वीप'मित्यत्र 'ऊदनोर्देशे' इत्युत्वं तु न भवति, अदेशत्वात् । **परिमुखमिति** । 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयसंज्ञायां 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । ततष्ठक् । स्वामिनो मुखं वर्जयित्वा यः सेवको वर्तते स—'पारिमुखिकः' । यदा तु सर्वतोभावे परिशब्दः, प्रादिसमासश्च,'तदा यतो यतः स्वामिनो मुखं ततस्ततो यो वर्तते स एवमुच्यते । एवं पारिपार्श्विकोऽप्यर्थद्वये बोध्यः । **प्रयच्छति** । द्वितीयान्तात्प्रयच्छतीत्यर्थे ठक्स्याद्यत्प्रयच्छति गर्ह्यं चेत्तत् । **द्विगुणार्थं द्विगुणमिति** । तादर्थ्यात्ताच्छब्द्यमिति भावः । बहुवृद्ध्युद्देश्यकदानकर्मतयाऽस्य द्रव्यस्य गर्ह्यत्वम् । **वार्द्धुषिक इति** । वृध्यर्थं वृद्धिः । तां प्रयच्छतीति विग्रहः । अथ कथं 'वृध्याजीवश्च वार्धुषि'रित्यमरः, ठक्सन्नियोगेनैव वृधुषिभावस्वीकारात् । अत्राहुः—निरङ्कुशाः कवय इति ।

---

बा.] लुक् । 'पूर्वसूत्रविहितस्ये'ति शेषः । **मुद्गादण्** । 'तेन संसृष्टमित्यर्थे तृतीयान्ता'दिति शेषः । **मौद्ग ओदन इति** । मुद्गैः संसृष्ट इत्यर्थः । **व्यञ्जनैरुपसिक्ते** । उपसिक्तमित्यर्थे तृतीयान्तेभ्यो व्यञ्जनवाचिभ्यष्ठगित्यर्थः । सेचनेन मृदूकरणमुपसेकः । संसृष्ट इत्येव सिद्धे नियमार्थं सूत्रम्—'व्यञ्जनवाचिभ्य उपसिक्त एवे'ति । तेनेह न, सूपेन संसृष्टा स्थाली । **ओजःसहो** । वर्तते व्याप्रियते इत्यर्थे ओजस्, सहस्, अम्भस्-एभ्यः तृतीयान्तेभ्यष्ठक् स्यादित्यर्थः । **औजसिक इति** । ओजसा बलेन वर्तते, युद्धे व्याप्रियत इत्यर्थः । **साहसिक इति** । **सहसा**= प्राणवियोगाभ्युपगमेन स्तेये व्याप्रियत इत्यर्थः । **आम्भसिक इति** । अम्भसा हेतुना संचारे व्याप्रियत इत्यर्थः । **तत्प्रत्यनुपूर्व** । 'त'दिति द्वितीयान्तानुकरणम् । प्रत्यनुपूर्वेभ्यो द्वितीयान्तेभ्य ईपलोमकूलशब्देभ्यो वर्तते इत्यर्थे ठक् स्यादित्यर्थः । ननु प्रतीपं वर्तते इत्यादिवक्ष्यमाणविग्रहेषु वर्ततेरकर्मकत्वात्कथं द्वितीयेत्यत आह—**क्रियाविशेषणत्वादिति** । इदंच कारकनिरूपणे निरूपितम् । 'क्रियाविशेषणानां प्रथमान्तत्वमेवे'ति तु शब्देन्दुशेखरे । **प्रतीपमिति** । प्रतिगता आपो यस्मिन्निति बहुव्रीहिः । 'ऋक्पूः' इत्यकारः समासान्तः । 'द्व्यन्तरुपसर्गेभ्योऽप ई'दिति ईत्त्वम् । अनुगता आपो यस्मिन् तदन्वीपम् । 'ऊदनोर्देशे' इत्यूत्त्वं तु न, अदेशत्वात् । प्रतीपान्वीपशब्दौ हि प्रतिकूलानुकूलशब्दपर्यायौ रूढौ । अवयवार्थेषु तु नाभिनिवेष्टव्यम् । **परिमुखं च** । अस्माद्द्वितीयान्ताद्वर्तते इत्यर्थे ठगित्यर्थः । **चादिति** । चकारादनुक्तसमुच्चयार्थात् परिपार्श्वमित्यस्मादपि ठकि **पारिपार्श्विक** इति भवतीत्यर्थः । **पारिमुखिक** इत्यस्य यतो यतः स्वामिनो मुखं तत्र वर्तत इत्यर्थः । एवं पारिपार्श्विकः । **प्रयच्छति गर्ह्यम्** । तदिति द्वितीयान्तमनुवर्तते । गर्ह्यं प्रयच्छतीत्यर्थे द्वितीयान्ताट्ठगित्यर्थः । **द्विगुणार्थं द्रव्यं द्विगुणमिति** । द्वैगुणिक इति वक्ष्यमाणोदाहरणे द्विगुणशब्देन द्विगुणार्थं द्रव्यं विवक्षितमित्यर्थः । **तत्प्रयच्छति द्वैगुणिक इति** । द्विगुणीभवितुं स्वद्रव्यमृणं प्रयच्छतीत्यर्थः । 'अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धकः' इत्यादिधर्मशास्त्रविरुद्धत्वादिह गर्ह्यमिति भावः । **वृद्धेरिति** । वृद्धिशब्दादुक्तार्थे ठकि प्रकृतेर्वृधुषि इत्यादेशो वाच्य इत्यर्थः । इकारान्त आदेशः । **वार्धुषिक इति** । वृद्ध्यर्थं द्रव्यं-वृद्धिः, तत्प्रयच्छतीत्यर्थे वृद्धिशब्दाट्ठक इकादेशे प्रकृतेर्वृधुष्यादेश इति भावः । 'वृद्ध्याजीवस्तु वार्धुषि'रिति तु प्रमाद एव । **कुसीद** । **गर्ह्यार्थाभ्यामिति** ।

---

शे.] **व्यञ्जनैरु** । सेचनेन मृदूकरणमुपसेकः । अन्नादिरसव्यञ्जकवाचकात्तृतीयान्तादुपसिक्तेऽर्थे प्रत्ययः । **क्रियाविशेषणत्वादिति** । अकर्मकधातुस्थलेऽपि फलव्यापारयोर्धात्वर्थत्वेन फलसामानाधिकरण्याद्द्वितीयेति भावः । क्रियाविशेषणत्वान्नपुंसकत्वं, प्रथमान्तत्वञ्च युक्तम् । **द्विगुणार्थमिति** । औपचारिकादेवाऽयं प्रत्ययोऽभिधानस्वाभाव्यात् । **वृद्धेरिति** । वृद्ध्यर्थे द्रव्ये वृद्धिशब्द औपचा-

त्वादेकादश, ते च ते वस्तुतो दश चेति विग्रहेऽकारः समासान्तः इहैव सूत्रे निपात्यते । दशैकादशिकः । दशैकादशिकी । दशैकादशान्प्रयच्छतीत्युत्तमर्ण एवेहापि तद्धितार्थः । **उञ्छति** ।४।४।३२। बदराण्युञ्छति बादरिकः । **रक्षति** ।४।४।३३। समाजं रक्षति सामाजिकः । **शब्ददर्दुरं करोति** ।४।४।३४। शब्दं करोति शाब्दिकः । दार्दुरिकः । **पक्षिमत्स्यमृगान्हन्ति** ।४।४।३५। **ॐ स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम्** । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुलिकः । मार्गिकः । हारिणिकः । सारङ्गिकः । **परिपन्थं च तिष्ठति** ।४।४।३६। अस्माद्द्वितीयान्ता-त्तिष्ठति हन्ति चेत्यर्थे ठक् स्यात् । पन्थानं वर्जयित्वा व्याप्य वा तिष्ठति पारिपन्थिकश्चौरः । परिपन्थं हन्ति

---

त.] गर्ह्यमिति किम् ? । द्विगुणं त्रिगुणं वा वृद्धिं प्रत्यच्छत्यधमर्ण इत्यर्थे 'द्वैगुणिक' इत्यादि माभूत् । निपात्यते इति । अतएव व्याख्यातृप्रयोगोऽप्युपपद्यत इत्याशयेनोदाहरति—**दशैकादशानिति** । 'सङ्ख्याया अल्पीयस्याः' इति पूर्वनिपातः । **उत्तमर्ण एवेति** । दश दत्वा एकादश गृह्णातीति तस्यैव गर्ह्यत्वादिति भावः । **उञ्छति** । भूमौ पतितस्यैकैकस्योपादानमुञ्छः । **सामाजिक इति** । समजन्ति अस्मिन्निति समाजः—समूहः । **शब्दं करोतीति** । प्रकृतिप्रत्ययविभागेन व्युत्पादयतीत्यर्थः । अभिधानस्वाभाव्याद्व्युत्पादन एवायं प्रत्ययः । नेह—शब्दं करोति बर्बरः खरो वा । **दार्दुरिक इति** । कुलाल इत्यर्थः । वाद्यभाण्डवाचीह दर्दुरशब्दः । **मात्स्यिक इति** । 'मत्स्यस्य ङ्या'मिति परिगणनात् 'सूर्यतिष्ये'ति यलोपाऽभावः । **हारिणिक इति** । नन्विदं पर्यायस्योदाहरणं न भवति, हरिणस्य मृगविशेषत्वात्तथा चात्र पर्यायस्योदाहरणं किमिति न प्रदर्शितमिति चेत् । अत्राहुः—आरण्यकचतुष्पात्सु हरिणे च मृगशब्दो वर्तते । यदा हरिणवाची मृगशब्दः, तदा मृगपर्यायस्योदाहरणं भवत्ये-वेति । **परिपन्थं च** । परिमुखवदयमव्ययीभावस्तत्पुरुषो वा । क्रियाविषयत्वात्तिष्ठतेरकर्मकत्वेऽपि परिपन्थस्य कर्मत्वमस्त्येवेत्याह—**द्वितीयान्तादिति** । चकारो भिन्नक्रमः प्रत्ययार्थं समुच्चिनोतीत्याह—**तिष्ठति हन्ति**

---

बा.] कुसीद, दशैकादश—आभ्यां द्वितीयान्ताभ्यां गर्ह्यार्थकाभ्यां प्रयच्छतीत्यर्थे क्रमात्ष्ठन्ष्ठचौ स्त इत्यर्थः । चित्त्वं ङीपर्थ-मित्याह—**कुसीदिकीति** । नित्त्वचित्त्वयोस्तु स्वरे विशेषः । अथ ष्ठच्प्रकृतिं दशैकादशशब्दं व्युत्पादयति—**एकादशार्थत्वादित्यादिना** । यत्र एकादश निष्कान् अधिकान् प्रत्यर्पयेति समयं कृत्वा दश निष्का ऋणत्वेन दीयन्ते, तत्र ऋणत्वेन गृहीता दश निष्का एकादशार्थत्वादेकादशशब्देन उपचर्यन्ते । ततश्च एकादश च ते दश चेति कर्मधारये 'सङ्ख्याया अल्पीयस्या' इति दशन्शब्दस्य पूर्वनिपातः । इहैव निपातनादकारः समासान्तः, टिलोपः, दशैकादशा इति रूपमित्यर्थः । **दशैकादशिक इति** । एकादश निष्कानधिकान् ग्रहीतुं दश निष्कान् अधमर्णाय प्रयच्छतीति यावत् । अथ लौकिकविग्रहवाक्यं दर्शयति—**दशैकादशान् प्रयच्छतीति** । **इहापीति** । विग्रहवाक्ये यथा उत्तमर्णः प्रधानत्वेन निर्दिश्यते, तथा समासेऽपि उत्तमर्ण एव ऋणदातैव तद्धितार्थः प्रधानभूत इत्यर्थः । **उञ्छति** । तदिति द्वितीयान्तमनुवर्तते । उञ्छतीत्यर्थे द्वितीयान्ताट्ठगित्यर्थः । भूम्यां निपतितस्य व्रीह्यादेः कणश आदानमुञ्छः । **रक्षति** । अस्मिन्नर्थे द्वितीयान्ताट्ठगित्यर्थः । **शब्ददर्दुरं करोति** । शब्दं करोति, दर्दुरं करोतीति विग्रहे द्वितीयान्ताट्ठगित्यर्थः । इह शब्दविषये प्रकृतिप्रत्ययविभागपूर्वकज्ञाने करोतिर्वर्तते, व्याख्यानात् । तेनेह न—शब्दं करोति खरः । **दार्दुरिक इति** । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाऽद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद्ग्रामजाले तु दर्दुर'मिति विश्वः । इह यथायोग्यमन्वयः । **पाक्षिमत्स्यमृगान्हन्ति** । अस्मिन्नर्थे पक्ष्यादि-शब्देभ्यो द्वितीयान्तेभ्यष्ठगित्यर्थः । **स्वरूपस्येति** । पक्षिमत्स्यमृगशब्दैस्तत्तत्स्वरूपाणां, तत्तत्पर्यायाणां, तद्विशेष-वाचिनां च ग्रहणमित्यर्थः, 'स्वं रूप'मिति सूत्रभाष्ये तथोक्तेरिति भावः । **मीनस्यैवेति** । मत्स्यपर्यायेषु मीनस्यैव ग्रहणं, न त्वनिमिषादिशब्दानामित्यर्थः । इदमपि 'स्वं रूप'मित्यत्र भाष्ये स्थितम् । **पाक्षिक इति**—स्वरूपस्यो-दाहरणम् । **शाकुनिक इति**—पक्षिपर्यायस्य । **मायूरिक इति**—पक्षिविशेषस्य । तथा **मात्स्यिकः, मैनिकः, शाकलिक** इति क्रमेण स्वरूपपर्यायविशेषाणामुदाहरणम् । तथा **मार्गिकः, हारिणिकः, सारङ्गिक** इति क्रमेण स्वरूपपर्यायविशेषाणामुदाहरणम् । **परिपन्थं च तिष्ठति** । **अस्मादिति** । परिपन्थशब्दादित्यर्थः । चकाराद्धन्ती-त्यनुकृष्यते । तदाह—**तिष्ठति हन्ति चेति** । **पन्थानं वर्जयित्वेति** । एतेन 'अपपरी वर्जने' इति परेः कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभि'रिति पञ्चम्याम् 'अपपरिबहिरञ्चवः पञ्चम्ये'ति अव्ययीभावसमासः सूचितः ।

---

शे.] ङ्किः । निपात्यत इति । 'सङ्ख्यायास्तत्पुरुषस्य' इति वार्तिकं त्वव्ययादावेवेति भावः । दर्दुरो-वाद्यभाण्डविशेषः । परिपन्थश्च । अव्ययीभावो, मयूरव्यंसकादित्वात्तत्पुरुषो वा । अत एव निपातनात्पन्थादेशः । तिष्ठतिक्रियाविशेषणत्वाद्द्वितीया । चो भिन्नक्रम-स्तदाह—हन्ति चेत्यर्थं इति । मायः-पन्थाः । आक्रन्दिकः-आर्त्तत्राता । प्रतिकण्ठमिति । अव्ययीभावादेवेष्यते । अधर्मो—

पारिपन्थिकः। **माथोत्तरपदपदव्यनुपदं धावति** ।४।४।३७। दण्डाकारो माथः पन्थाः दण्डमाथः। दण्डमाथं धावति दाण्डमाथिकः। पादविकः । आनुपदिकः । **आक्रन्दाट्ठञ्च** ।४।४।३८। अस्माट्ठञ् स्याट्ठक् धावतीत्यर्थे । आक्रन्दं दुःखिनां रोदनस्थानं धावति आक्रन्दिकः । **पदोत्तरपदं गृह्णाति** ।४।४।३९। पूर्वपदं गृह्णाति पौर्वपदिकः। औत्तरपदिकः। **प्रतिकण्ठार्थललामं च** ।४।४।४०। एभ्यो गृह्णात्यर्थे ठक् स्यात् । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः। आर्थिकः। लालामिकः। **धर्मं चरति** ।४।४।४१। धार्मिकः। *अधर्माच्चेति वक्तव्यम्। आधर्मिकः । **प्रतिपथमेति ठंश्च** ।४।४।४२। [चाट्ठक्]। प्रतिपथमेति प्रातिपथिकः। **समवायान्समवैति** ।४।४।४३। सामवायिकः । सामूहिकः। **परिषदो ण्यः** ।४।४।४४। परिषदं समवैति पारिषद्यः। **सेनाया वा** ।४।४।४५। ण्यः स्यात् । पक्षे ठक् । सैन्याः । सैनिकाः । **संज्ञायां ललाटकुक्कुट्यौ पश्यति** ।४।४।४६। ललाटं पश्यति लालाटिकः सेवकः । कुक्कुटीशब्देन तत्पाताहः

---

**त.] चेति । माथ इति ।** मथ्यते गन्तृभिरिति माथः। 'मथे विलोडने'। कर्मणि घञ्। **पदोत्तरपदं ।** पदशब्द उत्तरपदं यस्य तत्पदोत्तरपदम्। 'पदान्त'मिति तु नोक्तम्, बहुच्पूर्वान्मा भूदिति। **प्रतिकण्ठमिति।** कण्ठं कण्ठं प्रतीति यथार्थेऽव्ययीभावः, 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यनेन वा। यत्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासः, तस्येह न ग्रहणं, व्याख्यानादित्याहुः। **धर्मं चरति।** चरतिरिहाऽऽसेवायां, न त्वनुष्ठानमात्रे। तेन दैववशाद्धर्मे प्रवृत्तो दुर्वृत्तो धार्मिक इति नोच्यते। आसेवा हि स्वारसिकी प्रवृत्तिः । एवं दैववशादधर्मे प्रवृत्तो यः सद्वृत्तः स आधर्मिक इति नोच्यते। **प्रतिपथमिति।** वीप्सायामाभिमुख्ये वाऽव्ययीभावः। 'ऋक्पू'रिति समासान्तः। **समवायान्** । समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक्स्यात्समवैतीत्यर्थे। इह समवपूर्वस्येणोऽर्थः प्रविश्यैकदेशीभवनम्। तत्र गुणभूतप्रवेशाऽपेक्षया समवायानिति द्वितीयानिर्देशः । विशेष्यापेक्षया तु लोके सप्तमी प्रायेण प्रयुज्यते—'कुरुक्षेत्रे समवेताः' इति यथा। 'एत्येधत्यू'ति वृद्धिरिह न भवति, एजादित्वाऽभावात्। **सैन्याः सैनिका इति ।** द्वितीयान्ताण्ण्यठकौ। यत्तु 'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते' इति निघण्टुषूक्तं तत्फलितार्थकथनपरं बोध्यम् । **संज्ञायाम्।** ललाटकुक्कुटीशब्दाभ्यां द्वितीया । ताभ्यां पश्यतीत्यर्थे ठक्स्यात्। सम्यग्ज्ञानं संज्ञा=प्रसिद्धिः, तस्याम्। प्रसिद्धिविषयभूतेऽर्थे इत्यर्थः। **लालाटिक इति ।** दूरे स्थित्वा प्रभोर्ललाटं

---

**बा.] व्याप्य चेति।** एतेन सर्वतःशब्दपर्यायस्य परेः परिगतः पन्था इति प्रादिसमासे परिपन्थशब्द इति सूचितम्। अव्ययीभावः, प्रादिसमासो वेत्यपि बोध्यम्। उभयथाऽपि क्रियाविशेषणत्वाद्द्वितीयान्तत्वम् । **निपातनात्पन्था-देश इति।** नेदं प्रत्ययसंनियोगेन निपातनं, किंतु ततोऽन्यत्रापि परिपन्थशब्दोऽस्ति। इदमेव सूचयितुं प्रकृतेरपि द्वितीयोच्चारणमिति वृत्तिकृतः। इदमेवाभिप्रेत्य विग्रहं दर्शयति—**परिपन्थं तिष्ठतीति। माथोत्तर**। माथोत्तरपद, पदवी, अनुपद—एभ्यो द्वितीयान्तेभ्यो धावतीत्यर्थे ठगित्यर्थः । माथपदं व्याचष्टे—**माथः पन्था इति।** मथ्यते गन्तृभिराहन्यते इति व्युत्पत्तेरिति भावः । **दण्डमाथ इति।** शाकपार्थिवादिः । पन्थानं धावतीति धावतेर्गत्यर्थत्वात् सकर्मकत्वम्। **पादविक इति।** पदवीं धावतीति विग्रहः। **आनुपदिक इति** । अनुपदं धावतीति विग्रहः। **आक्रन्दाट्ठञ्च । अस्मादिति।** आक्रन्दशब्दाद्द्वितीयान्तादित्यर्थः। आक्रन्दन्ति अस्मिन्निति आक्रन्दः। तदाह—**रोदनस्थानमिति। पदोत्तरपदम्।** पदशब्द उत्तरपदं यस्य तस्माद्द्वितीयान्ताद्गृह्णातीत्यर्थे ठक्स्यादित्यर्थः। **प्रतिकण्ठार्थ । एभ्य इति ।** प्रतिकण्ठ, अर्थ, ललाम—इत्येभ्य इत्यर्थः । **आर्थिक इति।** अर्थं गृह्णातीत्यर्थः। **लालामिक इति।** ललामं=चिह्नं, तद्गृह्णातीत्यर्थः। 'लिङ्गं ललामं च ललाम चे'त्यमरः। **धर्मं चरति।** चरतीत्यर्थे द्वितीयान्ताद्धर्मशब्दाट्ठगित्यर्थः। **अधर्माच्चेतीति।** 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'ति तदन्ताऽग्रहणादप्राप्ते आरम्भः। **प्रतिपथमेति ठंश्च।** प्रतिपथमित्यव्ययीभावादेतीत्यर्थे ठन्ठक्च स्यादित्यर्थः। **प्रतिपथमिति।** 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। 'ऋक्पूः' इति समासान्तः। **समवायान्समवैति।** द्वितीयान्तेभ्यः समवायवाचिशब्देभ्यः समवैतीत्यर्थे ठगित्यर्थः। बहुवचनात्तदर्थवाचिशब्दग्रहणम् । समवैति=मेलयतीत्यर्थः। **परिषदो ण्यः।** द्वितीयान्तात्परिषच्छब्दात्समवैतीत्यर्थे ठगपवादो ण्य इत्यर्थः। **सेनाया वा । ण्यः स्यादिति** । शेषपूरणमिदम् । द्वितीयान्तात्सेनाशब्दात्समवैतीत्यर्थे ण्यो वा स्यादित्यर्थः। **सैन्याः सैनिका इति।** सेनां मेलयन्तीत्यर्थः। **संज्ञायाम्** । ललालकुक्कुटीशब्दाभ्यां

---

**शे.]** धर्मविरोधिगुणविशेषजनकं कर्म। प्रतिपथमित्यव्ययीभावः। 'ऋक्प'रिति समासान्तः। वृत्तौ त्वेतद्विहितप्रत्ययो निरुक्तः।

स्वल्पदेशो लक्ष्यते । कौकुटिको भिक्षुः । तस्य धर्म्यम् ।४।४।४७। आपणस्य धर्म्यमापणिकम् । अण्महिष्यादिभ्यः ।४।४।४८। महिष्या धर्म्यं माहिषम् । याजमानम् । ऋतोऽञ् ।४।४।४९। यातुर्धर्म्यं यात्रम् । *नराच्चेति वक्तव्यम् । नरस्य धर्म्या नारी । *विशसितुरिड्लोपश्चाऽञ्च वक्तव्यः । विशसितुर्धर्म्यं वैशस्रम् । *विभाजयितुर्णिलोपश्चाऽञ्च वाच्यः । विभाजयितुर्धर्म्यं वैभाजित्रम् । अवक्रयः ।४।४।५०। षष्ठयन्ताट्ठक् स्यादवक्रयेऽर्थे । आपणस्यावक्रय आपणिकः । राजग्राह्यं द्रव्यमवक्रयः । तदस्य पण्यम् ।४।४।५१। अपूपाः पण्यमस्य आपूपिकः । लवणाट्ठञ् ।४।४।५२। लावणिकः । किसरादिभ्यः ष्ठन् ।४।४।५३। किसरं पण्यमस्य किसरिकः । षित्त्वान्ङीष् । किसरिकी । किसर, उशीर, नलद, इत्यादि किसरादयः सर्वे सुगन्धिद्रव्यविशेषवाचिनः । शलालुनोऽन्यतरस्याम् ।४।४।५४। ष्ठन्स्यात् । पक्षे ठक् । शलालुकः । शलालुकी । शालालुकः । शालालुकी । शलालुः—सुगन्धिद्रव्यविशेषः । शिल्पम् ।४।४।५५। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । मड्डुकझर्झरादणन्यतरस्याम् ।४।४।५६। मड्डुकवादनं शिल्पमस्य माड्डुकः । माड्डुकिकः । झार्झरः । झार्झरिकः । प्रहरणम् ।४।४।५७। तदस्येत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः । परश्वधाट्ठञ् च ।४।४।५८। पारश्वधिकः । शक्तियष्ट्योरीकक् ।४।४।५९। शाक्तीकः । याष्टीकः । अस्ति-

---

त.] पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः । 'लालाटिकः प्रभोर्भालदर्शी कार्याऽक्षमश्च यः' । कौकुटिको भिक्षुरिति । संन्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमेव चक्षुः संयम्य गच्छतीति भावः । धर्म्यमिति । धर्मादनपेतं धर्म्यम् । 'धर्मपथ्यर्थन्यायादनपेते' इति यत् । अवक्रयः । अवक्रीयते अनेनेति करणे 'एरच्' । पण्यमिति । पणितव्येऽर्थे 'अवद्यपण्ये'ति यदन्तो निपातितः । शलालुक इति । 'इसुसुक्तान्तात्कः' । ठक्पक्षे त्वादिवृद्धिः । शालालुकः । मार्दङ्गिक इति । मृदङ्गशब्देन मृदङ्गवादनं लक्ष्यते । मुख्यार्थे तु प्रयोगो न भवति, अनभिधानादिति भावः । शिल्पं—क्रियाकौशलम् । तच्च मृदङ्गवादनविषयकम् । तेन मृदङ्गवादनविषयके मृदङ्गशब्दस्य लक्षणेति निष्कर्षः । प्रहरणम् । प्रह्रियते अनेनेति प्रहरणमायुधम् । धानुष्क इति । 'इसुसुक्तान्तात्कः' । 'इणः षः' इति विसर्गस्य षः । परश्वधाट्ठञ् । चाट्ठक् । 'द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' । परलोक इति ।

---

बा.] पश्यतीत्यर्थे ठक् स्यात्संज्ञायामित्यर्थः । संज्ञा=रूढिः, न त्वाधुनिकः सङ्केतः । लालाटिकः सेवक इति । दूरे स्थित्वा प्रभोर्ललाटं पश्यति, नतु कार्ये प्रवर्तत इत्यर्थः । 'लालाटिकः प्रभोर्भालदर्शी कार्याऽक्षमश्च यः' इत्यमरः । कौकुटिक इति । कुक्कुटीपतनार्हदेशं पश्यतीत्यर्थः । तस्य धर्म्यम् । धर्मादनपेतं धर्म्यम्, आचरितुं योग्यमित्यर्थः । धर्म्यमित्यर्थे षष्ठ्यन्ताट्ठगित्यर्थः । अण् महिष्यादिभ्यः । 'षष्ठ्यन्तेभ्यो धर्म्यमित्यर्थे' इति शेषः । ऋतोऽञ् । ऋदन्तात्षष्ठ्यन्ताद्धर्म्यमित्यर्थे अञित्यर्थः । नारीति । अजन्तत्वान्ङीबिति भावः । इड्लोप इति । इटो लोप इत्यर्थः । वैशस्रमिति । विशसितृशब्दादञि इटो लोपे ऋकारस्य यणि आदिवृद्धिः । वैभाजित्रमिति । विभाजयितृशब्दादञि णिलोपः । अवक्रयः । तस्येत्यनुवर्तते । तदाह—षष्ठ्यन्तादिति । तदस्य पण्यम् । अस्मिन्नर्थे प्रथमान्ताट्ठगित्यर्थः । विक्रेतव्यं द्रव्यं—पण्यम् । लवणाट्ठञ् । 'तदस्य पण्य'मित्येव । लावणिक इति । लवणमस्य पण्यमित्यर्थः । किसरादिभ्यः ष्ठन् । तदस्य पण्यमित्येव । 'ष्ठ'न्निति च्छेदः । तदाह—षित्त्वान्ङीषिति । शलालुनोऽन्यतरस्याम् । 'ष्ठ'न्निति शेषः । 'तदस्य पण्य'मित्येव । शलालुक इति । शलालु पण्यमस्येति विग्रहः । उकः परत्वाट्ठस्य कः । षित्त्वस्य फलमाह-शलालुकीति । शिल्पम् । तदस्य शिल्पमित्यर्थे प्रथमान्ताट्ठगित्यर्थः । क्रियासु कौशलं शिल्पम् । ननु 'मार्दङ्गिक' इत्युदाहरणं वक्ष्यति, तत्र मृदङ्गं शिल्पमिति कथं विग्रहः, मृदङ्गस्य शिल्पत्वाऽसंभवात् । तत्राह—मृदङ्गवादनमिति । मृदङ्गवादनविषयकमित्यर्थः । मृदङ्गशब्दो लक्षणया मृदङ्गवादनविषयक इति भावः । मड्डुकझर्झरात् । 'तदस्य शिल्प'मित्येव । पक्षे ठक् । मड्डुकझर्झरौ—वाद्यविशेषौ । प्रहरणम् । 'तदस्ये'त्येव । प्रहरणवाचिनः प्रथमान्तात्तदस्येत्यर्थे ठगित्यर्थः । प्रह्रियतेऽनेनेति प्रहरणम्=आयुधम् । धानुष्क इति । धनुः प्रहरणमस्येति विग्रहः । उसन्तात्परत्वाट्ठस्य कः । 'इणः षः' इति षः । परश्वधाट्ठञ् च । 'तदस्य प्रहरण'मित्येव । चाट्ठक् । 'परशुश्च परश्वधः' इत्यमरः । शक्ति-

---

शे.] समवायान्स । बहुवचनादर्थनिर्देशोऽयं, तदाह—सामूहिक इति । तस्य धर्म्यम् । धर्मः—अनुवृत्त आचारः, ततोऽनपेतमित्यर्थः । पण्यम् । हट्टे विक्रयाय प्रसारितम् । किसरादि । तालव्यमध्यपाठो वृत्तौ । शलालुके—'इसुसुक्तान्तात्कः' । शिल्पम् । अभ्यासपूर्वं क्रियासु कौशलं—शिल्पम् । प्रहरणम्—आयुधम् । धानुष्के-'इसु'सिति कादेशः । 'इणः षः' इति षः । शक्तिय । ईककि दीर्घोच्चारणं स्पष्टार्थम् । अस्तिनास्ति । वृत्तिविषये स्वविषयमतिलाक्षणिकेभ्योऽस्त्यादिभ्यः प्रथमासमर्थेभ्यः प्रत्यय इत्यर्थः । परलोक इत्यभिधानस्वभावलभ्यम् । 'दिष्ट' शब्दोऽत्र दैवपर्यायो, व्याख्यानात्,

नास्ति-दिष्टं मतिः ।४।४।६०। तदस्येत्येव । 'अस्ति परलोक' इत्येवं मतिर्यस्य स आस्तिकः । 'नास्ती'ति मतिर्यस्य स नास्तिकः । 'दिष्ट'मिति मतिर्यस्य स दैष्टिकः । शीलम् ।४।४।६१। अपूपभक्षणं शीलमस्य आपूपिकः । छत्रादिभ्यो णः ।४।४।६२। गुरोर्दोषाणामावरणं छत्रं, तच्छीलमस्य छात्रः । कार्मस्ताच्छील्ये ।६।४।१७२। 'कार्मं' इति ताच्छील्ये णे टिलोपो निपात्यते । कर्मशीलः कार्मः । 'नस्तद्धिते' इत्येव सिद्धे 'अण्कार्यं ताच्छीलिके णेऽपि'। तेन चौरी तापसीत्यादि सिद्धम् । ताच्छील्ये किम् ? । कार्मणः । कर्माध्ययने वृत्तम् ।४।४।६३। प्रथमान्तात्षष्ठ्यर्थे ठक्स्यादध्ययने वृत्ता या क्रिया सा चेत्प्रथमान्तस्यार्थः । एकमन्यद्वृत्तमस्य ऐकान्यिकः । यस्याध्ययने प्रवृत्तस्य परीक्षाकाले विपरीतोच्चारणरूपं स्खलितमेकं जातं सः । बह्वच्पूर्वपदाट्ठच् ।४।४।६४। प्राग्विषये । द्वादशान्यानि कर्माण्यध्ययने वृत्तान्यस्य द्वादशान्यिकः । द्वादशाऽपपाठा अस्य जाता इत्यर्थः । हितं भक्षाः ।४।४।६५। अपूपभक्षणं हितमस्मै आपूपिकः । तदस्मै दीयते नियुक्तम्

त.] एतच्चाभिधानशक्तिस्वाभाव्याल्लभ्यते । आस्तिक इति । अस्तिनास्तिशब्दौ निपातौ । यद्वा वचनसामर्थ्यादस्तीत्याख्यातात्, नास्तीति निपाताख्यातसमुदायाच्च प्रत्ययः । दिष्टमिति । 'दैवं दिष्टं भागधेय'मित्यमरः । 'नालम्बते दैष्टिकता'मिति माघः । 'प्रमाणानुगा मतिर्दिष्टा'-इति प्राचोक्तिस्तूपेक्ष्या । दिष्टशब्दस्य क्लीवत्वे, प्रमाणानुगमतिवाचकत्वे चोक्तकोशविरोधादिति दिक् । छत्रादिभ्यो णः । 'छत्रादिभ्योऽ'णित्येव सुवचमिति 'कार्मस्ताच्छील्ये' इति सूत्रे कैयटः । ताच्छील्ये णे इति । कर्मन्शब्दस्य छत्रादित्वादिति भावः । चौरीत्यादि । चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे णप्रत्यये सति तदन्तान्ङीप् सिद्ध्यतीत्यर्थः । कर्माध्ययने । 'तदस्ये'-त्यनुवर्तते, ठगिह्याधिक्रियते । एव तदाह—प्रथमान्तादित्यादि । ऐकान्यिक इति । एकमन्यदिति विग्रह

बा.] षष्ठ्योरीकक् । शक्तियष्टिशब्दाभ्यां प्रथमान्ताभ्यां प्रहरणवाचिभ्यामस्येत्यर्थे ईकक् स्यादित्यर्थः । अस्ति नास्ति । तदस्येत्येवेति । अस्तीति मतिरस्यास्ति, नास्तीति मतिरस्यास्ति, दिष्टमिति मतिरस्यास्तीत्यर्थेषु क्रमेण अस्तीत्यस्मान्नास्तीत्यस्माद्दिष्टमित्यस्माच्च प्रथमान्ताट्ठगित्यर्थः । अस्तिनास्तिशब्दौ निपातौ । यद्वा वचनादेव आख्यातात्प्रत्ययः । 'दैवं दिष्ट'मित्यमरः । शीलम् । अस्येत्यर्थे शीलवाचिनः प्रथमान्ताट्ठगित्यर्थः । शीलं=स्वभावः । अपूपभक्षणमिति । अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः । छत्रादिभ्यो णः । एभ्यः प्रथमान्तेभ्योऽस्य शीलमित्यर्थे णप्रत्ययः स्यादित्यर्थः । छत्रं शीलमस्य छात्र इत्युदाहरणं वक्ष्यति, तत्र छत्रस्य शीलत्वानुपपत्तेः छत्रपदं गुरुदोषावरणे गौणमित्याह—गुरोरिति । शीलमित्यर्थे छत्रादित्वाण्णप्रत्यये कृते- । कार्मस्ताच्छील्ये । तच्छीलं यस्य स तच्छीलः, तस्य भावस्ताच्छील्यम् । तस्मिन्वाच्ये 'कार्मं' इति भवतीत्यर्थः । णप्रत्यये परे टिलोपः स्यादिति यावत् । तदाह—टिलोपो निपात्यत इति । 'णेऽपी'त्यनन्तरम् 'इति ज्ञापनार्थमिद'मिति शेषः । अत्र टिलोपविधिर्हि 'अन्' इति प्रकृतिभावनिवृत्त्यर्थः । ततश्च अणि विहितस्य प्रकृतिभावस्य णप्रत्यये परतः प्रतिषेधादण्कार्यकारित्वं णप्रत्ययस्य ज्ञाप्यत इति भावः । तेनेति । चुरा शीलमस्याः, तपः शीलमस्या इति विग्रहे चुरातपःशब्दाभ्यां छत्रादित्वाण्णप्रत्यये सति तदन्ताभ्यामणन्तकार्ये ङीपि चौरी तापसीति सिद्धमित्यर्थः । कार्मण इति । 'तस्येद'मित्यणि 'कार्मस्ताच्छील्ये' इत्यस्याऽप्रवृत्त्या 'अन्' इति प्रकृतिभावान्न टिलोप इति भावः । कर्माध्ययने वृत्तम् । 'तदस्य पण्य'मित्यतस्तदस्येत्यनुवर्तते । 'तदस्य कर्माध्ययने वृत्त'मित्यर्थनिर्देशः । तत्र 'त'दित्यनेन विशेष्येण कर्म वृत्तमित्यन्वेति । कर्मशब्दः क्रियापरः । वृत्तमित्यस्य जातमित्यर्थः । वृत्तं कर्म प्रति विशेष्यसमर्पकं तदिति प्रथमोच्चारितम् । ततश्च अस्य अध्ययनविषये 'तत्कर्म वृत्त'मित्यर्थे तच्छब्दगम्यविशेष्यवाचकात्प्रथमान्ताट्ठक् स्यादित्यर्थः । तदाह-प्रथमान्तादिति । 'वृत्तं कर्म प्रति विशेष्यसमर्पका'दिति शेषः । अध्ययने वृत्तेति । विषयसप्तम्येषा । या क्रियेति । अनेन कर्मशब्दः क्रियापर इति सूचितम् । प्रथमान्तस्यार्थ इति । 'अनेन कर्म वृत्त'मित्येतत्तदित्यस्य प्रथमान्तस्य विशेषणमिति सूचितम् । तदित्यननुवृत्तौ कर्मशब्दस्यैव सूत्रे प्रथमानिर्दिष्टत्वात्तत एव प्रत्ययः स्यात्, नतु तद्विशेष्यवाचकात्, तस्य प्रथमानिर्दिष्टत्वाऽभावादित्यभिप्रेत्योदाहरति-एकमन्यद्वृत्तमस्य ऐकान्यिक इति । 'तद्धितार्थ' इति समासे एकान्यशब्दाट्ठगिति भावः । द्वैयन्यिकः, त्रैयन्यिकः । ऐजागमो विशेषः । बह्वच्पूर्वपदाट्ठच् । 'तदस्य कर्माध्ययने वृत्त'मित्यनुवर्तते । तदाह-प्राग्विषये इति । द्वादशान्यिक इति । 'तद्धितार्थ' इति समासः । एवं त्रयोदशान्यिकः । चिरबोधादिवृद्धिः । हितं

शे.] न तु कालवाची पुंल्लिङ्गः । शीलं-स्वभावः । तदस्येत्येव । अपूपादिशब्दाः स्वभक्षणे लाक्षणिकाः । क्रियानन्तर्भावे तु न वृत्तिः, अनभिधानात् । ऐकान्यिक इति । एकमन्यदिति विग्रहे 'तद्धितार्थ' इति समासः । नियुक्तम् = नियतम् ।

।४।४।६६। अग्रभोजनं नियतं दीयते अस्मै आग्रभोजनिकः। **श्राणामांसौदनाट्टिठन्** ।४।४।६७। श्राणा नियुक्तं दीयतेऽस्मै श्राणिकः । श्राणिकी । मांसौदनग्रहणं सङ्घातविगृहीतार्थम् । मांसौदनिकः । मांसिकः । ओदनिकः । **भक्तादणन्यतरस्याम्** ।४।४।६८। पक्षे ठक् । भक्तमस्मै नियुक्तं दीयते भाक्तः । भाक्तिकः । **तत्र नियुक्तः** ।४।४।६९। आकरे नियुक्त आकरिकः । **अगारान्ताट्ठन्** ।४।४।७०। देवागारे नियुक्तो देवागारिकः । **अध्यायिन्यदेशकालात्** ।४।४।७१। निषिद्धदेशकालवाचकाट्ठक्स्यादध्येतरि । श्मशानेऽधीते श्माशानिकः । चतुर्दश्यामधीते चातुर्दशिकः । **कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति** ।४।४।७२। तत्रेत्येव । वंशकठिने व्यवहरति वांशकठिनिकः । वंशा वेणवः कठिना यस्मिन्देशे स वंशकठिनस्तस्मिन्देशे या क्रिया यथानुष्ठेया तां तथैवानुतिष्ठतीत्यर्थः । प्रास्तारिकः । सांस्थानिकः । **निकटे वसति** ।४।४।७३। नैकटिको भिक्षुः । **आवसथात्ष्ठल्** ।४।४।७४। आवसथे वसति आवसथिकः । षित्त्वान्ङीप् । आवसथिकी । ※ आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च । आवसथात्किसरादेः षितः षडेते ठगधिकारे ।

त.]'तद्धितार्थ' इति समासः, ततष्ठक् । एवं द्वैयन्यिकः त्रैयन्यिक इत्युदाहार्यम् । इह तु वृद्धिं बाधित्वा 'न य्वाभ्या'-मित्यैच् । **हितं भक्षाः** । 'अस्ये'ति प्रकृतमपीह हितयोगाच्चतुर्थ्या विपरिणम्यते, 'तदस्मै' इत्यस्यापकर्षो वेत्याश-येनाह—**अपूपभक्षणं हितमस्मा इति** । अपूपशब्दस्तद्भक्षणे लाक्षणिक इति भावः । **श्राणा** । 'यवागूरु-ष्णिका श्राणा विलेपी तरला च से'त्यमरः । **टिठनिति** । इकार उच्चारणार्थः । टो ङीबर्थः । **सङ्घातविगृही-तार्थमिति** । 'ओदनिक' इत्यत्र हि वृद्धिनिवारणाऽयं टिठन्नारम्भः । अन्यथा लाघवाट्ठनमेव ब्रूयादिति भावः । **आकरिक इति** । 'खनिः स्त्रियामाकरः स्या'दित्यमरः । **अध्यायिन्य** । अदेशकालात् किम् ? । काश्यामधीते । पूर्वाह्णे अधीते । **कठिनान्त** । प्रस्तारसंस्थानशब्दौ सन्निवेशपर्यायाविति बहवः । प्रस्तारो यज्ञः । 'प्रे स्त्रोऽयज्ञे' इति घञ् । संस्थानं संनिवेश इत्येके । **नैकटिको भिक्षुरिति** । सन्यासी हि ग्रामस्य निकटे वसन्भिक्षार्थमेव ग्रामे प्रविशति, न तु तत्र वसतीति भावः । **आवसथात्** । लकारः स्वरार्थः । आवसन्त्यस्मिन्नित्यावसथः । 'उपसर्गे वसेः' इत्यथप्रत्ययः । **कुसीदसूत्रादिति** । 'कुसीददशैकादशा'दिति सूत्रोपात्ताभ्यां प्रकृतिभ्यामित्यर्थः ।

बा.] **भक्षाः** । तदस्येत्यनुवृत्तम् । तत्र षष्ठी चतुर्थ्या विपरिणम्यते, हितयोगात् । तत् अस्मै हितमित्यर्थे प्रथमान्ताट्ठक् स्यात्, यद्धितं भक्षाश्चेत्ते स्युरित्यर्थः । संस्कृतं भक्षा इति वद्व्याख्येयम् । **अपूपभक्षणमिति** । अनेन अपूपशब्दो-ऽपूपभक्षणे लाक्षणिक इति सूचितम् । अपूपो हितमित्यर्थे तु न ठक्, अभिधानस्वाभाव्यादिति भावः । **तदस्मै दीयते नियतम्** । अस्मिन्नर्थे प्रथमान्ताट्ठगित्यर्थः । **श्राणामांस** । 'तदस्मै दीयते नियत'मित्येव । **श्राणा**= यवागूः । 'यवागूरुष्णिका श्राणा विलेपी तरला च से'त्यमरः । टित्त्वं ङीबर्थम् । तदाह-**श्राणिकीति** । **सङ्घात-विगृहीतार्थमिति** । ठकैव सिद्धे 'ओदनिक' इत्यत्र आदिवृद्ध्यभावार्थं प्रत्ययान्तरविधानमिति भावः । **भक्तादण्-न्यतरस्याम्** । 'तदस्मै दीयते नियत'मित्येव । **तत्र नियुक्तः** । अस्मिन्नर्थे सप्तम्यन्ताट्ठक् स्यादित्यर्थः । **नियुक्तः**=अधिकृतः । संरक्षणादौ प्रेरित इति यावत् । **आकरिक इति** । **आकरो** रत्नाद्युद्भवस्थानम् । **अगारा-न्ताट्ठन्** । तत्र नियुक्त इत्येव । नित्त्वान्नादिवृद्धिः । तदाह-**देवागारिक इति** । **अध्यायिन्यदेशकालात्** । **निषिद्धेति** । 'अदेशकाले'त्यत्र नञ् निषिद्धे वर्तत इति भावः । **श्माशानिकः चातुर्दशिक इति** । देशकाल-भिन्नादिति व्याख्याने तु इह न स्यादिति भावः । **कठिनान्तप्रस्तार** । अस्मिन्नर्थे कठिनान्त, प्रस्तार, संस्थान एभ्यः सप्तम्यन्तेभ्यष्ठगित्यर्थः । वंशकठिनशब्दं विवृणोति-**वंशा इति** । **व्यवहरणम्**-उचितक्रिया । तदाह—**यस्मिन्देशे इति** । प्रस्तारसंस्थानशब्दौ अवयवसंनिवेशपर्यायौ । **निकटे वसति** । अस्मिन्नर्थे सप्तम्यन्तान्निकटशब्दाट्ठगित्यर्थः । **नैकटिको भिक्षुरिति** । ग्रामात्क्रोशे भिक्षुणा वस्तव्यमिति शास्त्रमुल्लङ्घ्य निकटे यो भिक्षुर्वसति तत्रैवायं ठगिति भावः । अत्र व्याख्यानमेव शरणम् । **आवसथाष्ठल्** । तत्र वसतीत्यर्थे आवसथात्सप्तम्यन्तात्ष्ठलित्यर्थः । **आवसथं**-गृहम् । षित्त्वं ङीषर्थम् । तदाह— **आवसथिकीति** । **आकर्षादित्यादि** । श्लोकवार्तिकमिदम्—'प्राग्वहतेष्ठक्' इत्यादौ ठगिति वा छगिति छेद इति संशयनिवृत्त्यर्थम् 'आकर्षात्ष्ठ' लिति सूत्रभाष्ये पठितम् । तत्र आकर्षादित्यनेन 'आकर्षात्ष्ठ' लिति सूत्रं विवक्षितम् । '**पर्पादिभ्यः**' इत्यनेन 'पर्पादिभ्यः ष्ठ न्निति सूत्रं विवक्षितम् । '**भस्त्रादिभ्यः**'इत्यनेन 'भस्त्रादिभ्यः

शे.] **सङ्घातेति** । अत एव टिठन्करणं चरितार्थम् । अन्यथा ठनमेव विदध्यात् । तद्धि ओदने वृद्धिवारणाय । सङ्घातग्रहणे तु व्याख्यानमेव शरणम् । **नियुक्तः**=अधिकृतः । **आकरः**=खनिः । **अगारान्ताट्ठन्** । वृत्तौ नित्पठ्यते । **अध्यायिन्य** । अदेशेत्यादि किम् ? । काश्यामधीते । पूर्वाह्णेऽधीते । **प्रस्तारसंस्थानौ संनिवेशपर्यायौ** । **नैकटिक इति** । 'भिक्षुणा ग्रामात्क्रोशे वस्तव्य'मिति

षडिति। सूत्रषट्केन विहिता इत्यर्थः। प्रत्ययास्तु सप्त। ठकोऽवधिः समाप्तः।

अथ प्राग्घितीयाः।

**प्राग्घिताद्यत्** ।४।४।७५। 'तस्मै हित'मित्यतः प्राग्यदधिक्रियते। **तद्वहति रथयुगप्रासङ्गम्** ।४।४।७६। रथं वहति-रथ्यः। युग्यः। वत्सानां दमनकाले स्कन्धे [यत्,] काष्ठमासज्यते स-प्रासङ्गः। तं वहति प्रासङ्ग्यः। **धुरो यड्ढकौ** ।४।४।७७। 'हलि चे'ति दीर्घे प्राप्ते। **न भकुर्छुराम्** ।८।२।७९। भस्य कुर्छुरो-श्चोपधाया दीर्घो न स्यात्। धुर्यः। धौरेयः। **खः सर्वधुरात्** ।४।४।७८। सर्वधुरां वहति—सर्वधुरीणः। **एकधुराल्लुक्च** ।४।४।७९। एकधुरां वहति—एकधुरीणः। एकधुरः। **शकटादण्** ।४।४।८०। शकटं वहति शाकटो गौः। **हलसीराट्ठक्** ।४।४।८१। हलं वहति हालिकः। सैरिकः। **संज्ञायां जन्याः** ।४।४।८२। जनी

त.] इह 'नौद्व्यचष्ठ'नित्यत्रैव येषां षकारः सांहितिक इति सम्भाव्यते तेषामेव गणने छलादेः षित्त्वमनार्षमिति भ्रमः स्यादतः श्लोकवार्तिककारः षित्प्रत्ययान्सर्वानपि पर्यजीगणत्। ठकोऽवधिः समाप्तः।

**युग्य इति**। युगं रथाङ्गं वहतीत्यर्थः। **प्रासङ्ग इति**। प्रासज्यते असाविति कर्मणि घञ्। **धुरो**। 'धुरो ढक् चे'त्येव सुवचम्। **न भ**। **उपधाया इति**। 'उपधायां चे'ति पूर्वसूत्रादेतल्लभ्यत इति भावः। उपधायाः किम्?। प्रतिदीन्नः। इह नान्तस्य भत्वेऽपीकारस्याऽनुपधात्वान्निषेधो न प्रवर्तते। **खः सर्वधुरात्**। 'सर्वधुराया' इति वक्तव्ये नपुंसकनिर्देशः शब्दस्वरूपापेक्षया 'वन्धुनि बहुव्रीहौ' इतिवत्। **सर्वधुरामिति**। 'पूर्वकालैके'ति समासः। 'ऋक्पूरब्धूः—' इति समासान्ते अप्रत्यये टाप्। **एकधुराल्लुक् च**। चात्खः। एवं च प्राकरणिकस्य यतो लुक्, खस्य तु विधानसामर्थ्याच्छ्रवणमिति फलितं, तदाह—**एकधुरीण इत्यादि**। **शाकटो गौरिति**।

बा.] छ'न्निति सूत्रं विवक्षितम्। **कुसीदसूत्रादित्यनेन** 'कुसीददशैकादशात् ष्ठन्ष्ठचौ' इति सूत्रं विवक्षितम्। **आवसथादित्यनेन** 'आवसथात्ष्ठ'लिति सूत्रं विवक्षितम्। **किसरादेरित्यनेन** 'किसरादिभ्यः ष्ठ'न्निति सूत्रं विवक्षितम्। 'प्राग्वहतेष्ठक्' इत्यधिकारे एतैः सूत्रैर्विहिताः षट् प्रत्ययाः षित इत्यर्थः। ननु 'कुसीदे'ति सूत्रे प्रत्ययद्वयविधानादेतत्सूत्रषट्कविहिता सप्त प्रत्यया लभ्यन्त इति षट् षित इति कथमित्यत आह-**षडितीति**। 'ष'डित्यनेन सूत्राभिप्रायं षट्त्वं विवक्षितमिति भावः। **इति प्राग्वहतीयाः**।

अथ प्राग्घितीयप्रकरणं निरूप्यते-**प्राग्घिताद्यत्**। हितशब्दस्तद्घटितसूत्रपरः। तदाह-**तस्मै हितमिति**। **तद्वहति रथ**। रथादि वहतीत्यर्थे द्वितीयान्ताद्रथ युग प्रासङ्ग इति त्रयाद्यत्स्यादित्यर्थः। **युग्य इति**। रथादिवहनकाले अश्वादिस्कन्धेषु तिर्यग्यत् काष्ठमीषाप्रोतमासज्यते तद्युगम्। तद्वहतीत्यर्थः। **दमनकाले इति**। रथादिवहने सुशिक्षितावश्वौ नियुज्य तत्स्कन्धवाह्ययुगे यद्युगान्तरमासज्य तस्मिन्नशिक्षिता अश्वादयो वहनशिक्षार्थं नियुज्यन्ते स प्रासङ्ग इत्यर्थः। 'प्रासङ्गो ना युगाद्युगे' इत्यमरः। **धुरो यड्ढकौ**। धुरशब्दाद्द्विती-यान्ताद्वहतीत्यर्थे यत्, ढक्च स्यादित्यर्थः। 'यड्ढकन्ना'विति पाठान्तरम्। **हलि चेतीति**। 'धुर्वी हिंसायां' 'भ्राजभासे'ति क्विप्। 'राल्लोपः' इति लोपः। अश्वादिस्कन्धवाह्यप्रदेशो युगावयवो धूः। धुर्शब्दाद्यति 'हलि चे'ति दीर्घे प्राप्ते सतीत्यर्थः। **न भकुर्छुराम्**। 'र्वोरुपधायाः' इत्यत 'उपधाया' इति दीर्घ इति चानुवर्तते। तदाह-**भस्येत्यादिना**। 'धूर्वहे धुर्यधौरेयधुरीणाः' इत्यमरः। **खः सर्वधुरात्**। सर्वा धूः सर्वधुरा। 'पूर्वकाल' इति तत्पुरुषः। 'ऋक्पू'रिति समासान्तः। 'परवल्लिङ्ग'मिति स्त्रीत्वाट्टाप्। इह तु शब्दस्वरूपापेक्षया नपुंसकनिर्देशः। द्वितीयान्तात्सर्वधुराशब्दाद्वहतीत्यर्थे खः स्यादित्यर्थः। **सर्वधुरीण इति**। सर्वधुरां वहतीत्यर्थः। 'स तु सर्वधुरीणो यो भवेत्सर्वधुरावहः' इत्यमरः। **एकधुराल्लुक् च**। एकधुराशब्दाद्द्वितीयान्ताद्वहतीत्यर्थे खः स्यात्। तस्य पक्षे लुगित्यर्थः। **एकधुरीणः**। **एकधुर इति**। एकधुरां वहतीत्यर्थः। **शकटादण्**। द्वितीयान्ताच्छकटशब्दाद्वहतीत्यर्थे अण् स्यादित्यर्थः। यतोऽपवादः। **हलसीराट्ठक्**। आभ्यां द्वितीयान्ताभ्यां वहतीत्यर्थे ठगित्यर्थः।

शे.] शात्रं, तदनादृत्य निकटे वसति। अत्रैवायं साधुः। इति ठकोऽवधिः।

**तद्वहति**। रथशब्दसाहचर्याद्युगशब्दो रथाङ्गवाच्येव। **प्रासङ्गे**-प्राङ्गावुपसर्गौ। 'प्रासङ्गो ना युगाद्युगे' इत्यमरस्याय-मर्थः—युगाद्रथाङ्गादन्यस्मिन्युगे स्कन्धवाह्ये काष्ठे इति। रूढत्वादस्यैवात्र ग्रहणमिति भावः। **भस्येति**। 'र्वोरुपधाया' इत्यत उपधाया इति वर्तते। धुर्वीधातोः 'भ्राजभासे'ति क्विपि राल्लोपे धूः सिद्धः। **धौरेय इति**। ढक्प्रत्यय इत्यन्ये। मूलपाठे तु 'धौरेयक' इति स्वार्थकन्नन्तम्। **सर्वधुरैकधुरौ**—नपुंसकौ, सूत्रनिर्देशाल्लोकाच्चेत्याहुः। **एकधुर इति**। 'अन्तरङ्गा-नपी'ति न्यायेन सवर्णदीर्घात्प्रागेव टापो लुक्। **सञ्ज्ञायां जन्याः**। जनीशब्दादित्यर्थः। **जन्या** मातुर्वयस्या, नववधूयान-

वधूः, तां वहंति=प्रापयति—जन्या। **विध्यत्यधनुषा** ।४।४।८३। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्यान्न चेत्तत्र धनुः करणम्। पादौ विध्यन्ति पद्याः शर्कराः। **धनगणं लब्धा** ।४।४।८४। तृन्नन्तमेतत्। धनं लब्धा—धन्यः। गणं लब्धा—गण्यः। **अन्नाण्णः** ।४।४।८५। अन्नं लब्धा—आन्नः। **वशं गतः** ।४।४।८६। वश्यः परेच्छानुचारी। **पदमस्मिन्दृश्यम्** ।४।४।८७। पद्यः कर्दमः। नातिशुष्क इत्यर्थः। **मूलमस्याऽऽबर्हि**

---

**त.]** ननु 'तस्येद'मित्यणा सिद्धम्। यौ हि शकटं वहति शकटस्यासौ भवति। अत्राहुः—आरम्भसामर्थ्यादत्र तदन्तविधिः। तेन द्वे शकटे वहति द्वैशकट इत्यत्र 'द्विगोर्लुगनपत्ये' इति प्राग्दीव्यतीयो लुङ् न भवति, 'तस्येद'मित्यणि तु स्यादेव लुगिति। **हलसीरात्**। ननु 'तस्येद'मित्युपक्रमे 'हलसीराट्ठ'गिति पठितम्। तथा च तेनैव शैषिकेण हालिकः सैरिक इति सिद्धौ किमनेनेति चेत्। सत्यम्। आरम्भसामर्थ्यादत्रापि तदन्तविधिः। तेन द्वैहलिको द्वैसीरिक इति भवति, शैषिके ठकि तु प्राग्दीव्यतीयो लुक् स्यात्। जायते अस्यां गर्भ इति व्युत्पत्तिमाश्रित्य आह—**जनी वधूरिति**। 'जनिघसिभ्यामिण्'। 'जनिवध्योश्चे'ति न वृद्धिः। 'कृदिकारा'दिति ङीष्। ततोऽनेन सूत्रेण यति **जन्या**=जामातुर्वयस्या। सा हि विवाहादिषु वधूं जामातृसमीपं प्रापयति। कालिदासस्तु वध्वा यानवाहेष्वपि प्रायुङ्क्त—'यातेति जन्यानवदत्कुमारी'ति। जनीं वहन्तीति जन्यास्तानित्यर्थः। **पद्या इति**। 'पद्यत्यतदर्थे' इति पद्भावः। अधनुषा किम्?। चोरं विध्यति। सम्भाव्यते हि चोरव्यधने धनुषः करणता। यदा तु धनुषेति प्रयुज्यते तदा सापेक्षत्वादेव न भवति। एवं च 'न चेत्तत्र धनुः करण'मित्यत्र 'सम्भाव्यते' इति शेषो बोध्यः। **तृन्नन्तमिति**। एवं च 'न लोके'त्यादिना कृद्योगषष्ठ्या निषेधात् 'धनगण'मिति प्रयोगो निर्बाध इति भावः। **वशं गतः**। वशनं वशः—इच्छा। 'वशिरण्योरुपसङ्ख्यान'मित्यप्। **मूलमस्याबर्हि**। प्रथमान्तादाबर्हि इत्युपाधिका-

---

**बा.]** **संज्ञायां जन्याः**। जनीशब्दाद्द्वितीयान्ताद्वहतीत्यर्थे यत्स्यात्संज्ञायामित्यर्थः। **जनी वधूरिति**। जायतेऽस्यां गर्भ इत्यर्थे 'जनिघसिभ्या'मिति जनधातोरिणि 'जनिवध्योश्चे'ति वृद्धिप्रतिषेधे 'कृदिकारा'दिति ङीषि जनीशब्दस्य निष्पत्तेरिति भावः। 'समाः स्नुषाजनीवध्वः' इत्यमरः। **वहन्तीत्यस्य** विवरणं—'**प्रापयन्ती**'ति। 'वरगृह'मिति शेषः। **जन्या इति**। 'जामातुर्वयस्या' इति शेषः। 'जन्याः स्निग्धा वरस्य ये' इत्यमरः। **विध्यत्यधनुषा**। तदिति द्वितीयान्तमनुवर्तते। अधनुषेति सप्तम्यर्थे तृतीया। धनुषोऽभावः—अधनु, तस्मिन्सतीत्यर्थः। अर्थाऽभावे नञ्तत्पुरुषः, 'अर्थाभावे अव्ययीभावे अयं विकल्प्यते' इत्युक्तत्वात्। द्वितीयान्ताद्विध्यतीत्यर्थे यत्स्याद्धनुषः करणस्याऽभावे सतीत्यर्थः। **न चेत्तत्रेति**। तत्र=वेधने धनुः करणं न चेदित्यर्थः। **पद्या इति**। पादशब्दाद्यति 'पद्यत्यतदर्थे' इति पद्भावः। अधनुषेति किम्?। धनुषा चोरं विध्यति देवदत्तः। अत्र चोराद्यन्न भवति। न चाऽसामर्थ्यादेवात्र यन्नेति वाच्यं, विध्यतीत्यस्य प्रत्ययार्थत्वेन प्रधानतया तस्य सापेक्षत्वेऽपि सामर्थ्याऽविघातात्। अन्यथा 'औपगवो देवदत्त उपगुनप्तृत्वा'दित्यादौ अणादिकं न स्यात्, प्रत्ययार्थैकदेशस्य व्यधनस्य करणविशेषनित्यसापेक्षत्वाच्चेति शब्देन्दुशेखरे विस्तरः। **धनगणं लब्धा**। धनशब्दाद्गणशब्दाच्च द्वितीयान्ताल्लब्धेरर्थे यत्स्यादित्यर्थः। ननु लब्धृशब्दस्य तृजन्तस्य कृदन्तत्वात्तद्योगे कर्मणि षष्ठी स्यादित्यत आह—**तृन्नन्तमेतदिति**। तथाच 'न लोके'ति निषेधान्न षष्ठीति भावः। **अन्नाण्णः**। 'लब्धेत्यर्थे द्वितीयान्ता'दिति शेषः। **वशंगतः**। वशशब्दाद्द्वितीयान्ताद्गत इत्यर्थे यदित्यर्थः। **वश्य इति**। वशं गत इति विग्रहः। 'वश कान्तौ'। कान्तिरिच्छा। वशनं वशः। 'वशिरण्योरुपसङ्ख्यान'मित्यप्। वशम्=इच्छां, गतः=प्राप्तः। इच्छाधीन इत्यर्थः। वशधातुश्छान्दस इति लुग्विकरणे वक्ष्यते, तत्प्रायिकमिति भावः। सर्वस्यापि स्वेच्छानुसारित्वादाह—**परेच्छानुसारीति**। **पदमस्मिन्दृश्यं**। प्रथमान्तात्पदशब्दाद्दृश्यत इत्यर्थे यदित्यर्थः। अत्र तदिति द्वितीयान्तमनुवृत्तं प्रथमया विपरिणम्यते। **मूलमस्या-**

---

**शे.]** वाहाश्च जन्याः। 'जन्यो वरवधूज्ञातिप्रियभृत्यहितेषु च' इति [त्रि] विश्वः। 'जन्याः स्निग्धा वरस्य ये' इति त्वमरः। 'जन्या मातृवयस्या स्याज्जन्या जनीवरप्रिया। जननीजनयित्रोश्च, जन्यं निर्वादयुद्धयोः। इति [त्रि] धरणिः। भाष्ये तु 'जन्या इति किं निपात्यते?, जनन्या जनीभावो यच्च। जन्या इति पञ्चमीनिर्देशान्निपातनानर्थक्य'मिति, 'तद्वहती'त्यनेनैव जनीशब्दात्प्रत्ययसिद्धेः। रूढिरपि पङ्कजमित्यादिवत्सिद्धेति तदाशयः। ततः—'इदन्तर्हि प्रयोजनं सर्वकालप्रत्ययविद्ध्यर्थं कर्त्तव्यं सूत्र'मित्युक्तम्। एवं चैतद्योगार्थाऽनालिङ्गितेऽर्थेऽस्य साधुत्वञ्चिन्त्यमिति भाति। जनवादे तु 'जन्य'शब्दो 'मतजनहलात्' इत्यनेन साधुः। युद्धे कृदन्तः। **न चेत्तत्र धनुरिति**। करणमात्रोपलक्षणं—धनुरिति। तेन 'चोरं विद्ध्यति खड्गेने'त्यादावपि न। न च तत्राऽसामर्थ्यं, प्रधानस्य सापेक्षत्वेनाऽदोषात्, प्रत्ययार्थैकदेशव्यधनस्य तदंशे नित्यसापेक्षत्वाच्च। 'चोरं विध्यती'त्यादौ त्वनभिधानाद्वारणीयः सत्यनिष्टत्वे। तदित्यनुवर्तमानद्वितीयान्ताऽबाधायाह—**तृन्नन्तमिति**। तद्योगे हि 'न

।४।४।८८। आवर्हणमावर्हः—उत्पाटनं, तदस्यास्तीत्यावर्हि। मूलमावर्हि येषां ते मूल्या मुद्गाः। **संज्ञायां धेनुष्या** ।४।४।८९। धेनुशब्दस्य षुगागमो यप्रत्ययश्च स्वार्थे निपात्यते संज्ञायाम्। 'धेनुष्या बन्धके स्थिता'। **गृहपतिना संयुक्ते ञ्यः** ।४।४।९०। गृहपतिर्यजमानः, तेन संयुक्तो गार्हपत्योऽग्निः। **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्याऽऽनाम्यसमसमितसंमितेषु** ।४।४।९१। नावा तार्यं नाव्यम्। वयसा तुल्यो वयस्यः। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो—विष्यः। मूलेन आनाम्यं—मूल्यम्। मूलेन समो—मूल्यः। सीतया समितं—सीत्यं क्षेत्रम्। तुलया संमितं—तुल्यम्। **धर्मपथ्यर्थन्यायादन-**

त.] न्मूलशब्दादस्येति षष्ठ्यर्थे यत्स्यात्। **आवर्ह इति**। 'वृहू उद्यमने' दन्त्योष्ठ्यादिरयम्, न तु पवर्गादिः, 'उद्वृह रक्षः सहमूलमिन्द्रे'त्यादिप्रयोगदर्शनात्। **मूल्या मुद्गा इति**। मूलोत्पाटनं विना सङ्ग्रहीतुमशक्याः, मध्यतो लूयमानेषु कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ताः। मुद्ग शुष्का इति यावत्। **यप्रत्यय इति**। तेन धेनुष्याशब्दोऽन्त उदात्तः। यति तु तित्स्वरः स्यादिति भावः। **संज्ञायामिति**। ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम्। **गार्हपत्य इति**। 'गृहपतिने'ति निर्देशादेव तृतीयान्तात्प्रत्ययः। 'संज्ञाया'मित्यनुवृत्तेराहवनीयादौ नातिप्रसङ्गः। **नौवयोधर्म**। नावादिभ्यो यथासङ्ख्यं तार्यादिष्वष्टस्वर्थेषु यत्स्यात्। इह तार्यादियोगे यथासम्भवं करणे कर्तरि हेतौ तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिर्लभ्यते। अत्र प्रथमं मूलान्तानां पञ्चानां द्वन्द्वं कृत्वा द्वितीयमूलादिद्वन्द्वेन सह समाहारद्वन्द्वः। मूलान्तानां द्वित्राणां वा मूलादीनामेव वा द्वन्द्वं कृत्वा नावादिषु द्वन्द्वः। तेन सारूप्याऽभावादेकशेषो न भवति। **नावा तार्यमिति**। शक्यार्थे 'ऋहलोर्ण्यत्'। करणे तृतीया। **वयस्य इति**। 'स्निग्धो वयस्यः सवयाः' इत्यमरः। 'वयसा तुल्यः शत्रु'रित्यत्र तु न भवति। संज्ञाधिकारात्। **विषेण वध्य इति**। विषेण वधमर्हतीत्यर्थः। 'दण्डादिभ्यः' इति सूत्रेण वधशब्दादर्हार्थे यद्विधानात्। **मूलेनानाम्यमिति**। मूलं नाम पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यम्। तेन स्वस्मादतिरिक्तं लाभाख्यं यद्द्रव्यमात्मानं प्रति शेषीक्रियते=आत्मन उपकारकं क्रियते, तत्—आनाम्यम्। आङ्पूर्वको नमिरभिभवे वर्तते, तस्मात् 'पोरदुपधा'दिति यति प्राप्ते अतएव निपातनाण्ण्यत्। तथा चानाम्यमभिभवनीयम्=आत्मानं प्रति शेषीकर्तव्यम्। स च लाभाख्यो भाग एव। लोके तु यावता द्रव्येण पटादिकं विक्रीयते तत्रैव समुदाये मूल्यशब्दः प्रसिद्धो, न तु मूलातिरिक्तभागमात्रे। एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्य तद्घटिते सङ्घाते निरूढलक्षणा बोध्या। **सीतेति**। सीता=हलाग्रं। सम्पूर्वादिणः क्तः। समितं=धङ्गतं, निम्नोन्नता-

बा.] **वर्हि**। **आवर्हणमिति**। उत्पाटनमित्यर्थः। उपसर्गवशात् 'वृहू उद्यमने' इति धातोरुत्पाटने वृत्तिः। **मूल्या मुद्गा इति**। मूलत उत्पाटनीया इत्यर्थः। **संज्ञायां धेनुष्या**। **यप्रत्ययश्चेति**। यति तु तित्स्वरः स्यादिति भावः। **धेनुष्येति**। या धेनुर्दोहनार्थमुत्तमर्णाय अधमर्णेन दीयते तस्या इयं संज्ञा। तदाह—**बन्धके स्थितेति**। अमरवाक्यमिदम्। संज्ञायामित्या पादपरिसमाप्तेरधिकारः। संज्ञा हि रूढिर्विवक्षिता। **गृहपतिना**। अस्मिन्नर्थे गृहपतिशब्दात्तृतीयान्ताञ्ञ्यः स्यादित्यर्थः। **गार्हपत्योऽग्निरिति**। अग्निविशेष इत्यर्थः। तत्र पत्नीसंयाजेषु अग्निहोत्रे च गृहपतिदेवताकहोमस्य क्रियमाणत्वाद्गृहपतियोगः। यद्यपि 'देवसूहविःषु अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति' इति हविर्होम आहवनीये क्रियते, तथापि संज्ञाधिकारादाहवनीये नास्य प्रयोगः। **नौवयोधर्म**। 'नौ, वयस्, धर्म, विष, मूल, मूल, सीता, तुला एभ्योऽष्टभ्यः क्रमात्तार्ये, तुल्ये, प्राप्ये, वध्ये, आनाम्ये, समे, समिते, संमिते चार्थे यत्स्यादित्यर्थः। 'तृतीयान्तेभ्य' इत्यर्थाद्गम्यते। तार्यादियोगे करणे कर्तरि हेतौ तुल्यादियोगे च तस्या एव संभवात्। अत्र मूलशब्दयोर्यथासङ्ख्यप्रवृत्तये नैकशेषः। अन्यथा सप्तानां प्रकृतीनाम् एकैकस्या अष्टस्वप्यर्थेषु प्रत्यय इति भ्रमः स्यात्। **तार्यमिति**। तरीतुं शक्यमित्यर्थः। 'ऋहलोर्ण्यत्'। **वयसा तुल्य इति**। मित्रे एवायं प्रत्ययो, नतु शत्रौ, संज्ञाधिकारात्। **मूलेनानाम्यमिति**। पटादेरुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यं मूलम्। तेन सह यदधिकं द्रव्यम् आनम्यते=विक्रेतुः संमतीकरणेन लभ्यते तन्मूल्यमित्यर्थः। लोकास्तु विक्रेतुर्लब्धं सर्वं द्रव्यं मूल्यमिति व्यवहरन्ति। तत्र लक्षणा बोध्या। सा च सांप्रतिकी, निरूढा वा। **सीतयेति**।

शे.] लोके'ति षष्ठीनिषेधाद्द्वितीया। तृजन्तत्वे हि षष्ठी स्यादिति भावः। सर्वस्यापि स्वेच्छानुसारित्वेन सामर्थ्यलभ्यमर्थमाह—**परेच्छानुसारीति**। **पदमस्मिन्**। निर्देशादेवाऽत्र प्रथमा समर्थविभक्तिः। **आवर्हि**—उत्पाटनयोग्यम्। **गृहपतिना सं**। निर्देशादेव तृतीया समर्थविभक्तिः। सञ्ज्ञायामित्यनुवृत्तेर्दक्षिणाग्न्यादौ न। **नौवयो**। मूलशब्दयोर्नैकशेषो, 'यत्तदेतेभ्यः' इतिवत्। मूलान्तमूलादिद्वन्द्वयोः पुनर्द्वन्द्व इष्यते। **नावा तार्यमिति**। शक्यार्थे 'ऋहलोर्ण्यत्'। करणे तृतीया, तस्य स्वातन्त्र्यविवक्षायां कर्तरि वा। वयसा तुल्ये मित्रे एव वयस्यः। **धर्म्यम्**—धर्मफलम्। **वध्यो**—वधार्हः। 'दण्डादिभ्यः'

पेते ।४।४।९२। धर्मादनपेतं धर्म्यम् । पथ्यम् । अर्थ्यम् । न्याय्यम् । **छन्दसो निर्मिते** ।४।४।९३। छन्दसा निर्मितं छन्दस्यम् । इच्छया कृतमित्यर्थः । **उरसोऽण् च** ।४।४।९४। चाद्यत् । उरसा निर्मितः पुत्र औरसः । उरस्यः । **हृदयस्य प्रियः** ।४।४।९५। हृद्यो देशः । 'हृदयस्य हृल्लेखे'ति हृदादेशः । **बन्धने चर्षौ** ।४।४।९६। हृदयशब्दात् षष्ठ्यन्ताद्बन्धने यत्स्यादृषेदेऽभिधेये । हृदयस्य बन्धनो हृद्यो वशीकरणमन्त्रः । **मतजनहलात्करणजल्पकर्षेषु** ।४।४।९७। मतं=ज्ञानं, तस्य करणं=भावः साधनं वा मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः । **तत्र साधुः** ।४।४।९८। अग्रे साधुः अग्र्यः । सामसु साधुः सामन्यः । 'ये चाऽभावकर्मणो'रिति प्रकृतिभावः । कर्मण्यः । शरण्यः । **प्रतिजनादिभ्यः खञ्** ।४।४।९९। प्रतिजनं साधुः प्रातिजनीनः । सांयुगीनः । सार्वजनीनः । वैश्वजनीनः । **भक्ताण्णः** ।४।४।१००। भक्ते साधवो

**त.]** दिरहितं कृतमित्यर्थः ।समीकृतमिति यावत् । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः। परमसीत्यम् । द्वाभ्यां सीताभ्यां समितमिति तद्धितार्थे समासस्ततो यत् । द्विसीत्यम् । **तुलया संमितमिति** । संमितं=परिच्छिन्नम् । रूढिशब्दोऽयं 'संज्ञाया'मित्यधिकारात् । अतएव 'तुल्य'मिति सदृशमात्रे प्रयुज्यते, न तु तुलायामाग्रहः क्रियते । **पथ्यमिति** ।संज्ञाधिकारादभिधेयनियमः, तेन शास्त्रीयात्पथोऽनपेतमेव पथ्यम् । न तु मार्गादनपेतश्चोरोऽपि । **छन्दसो** । 'छदि संवरणे' इति चुरादिरिच्छायामपि वर्तते, धातूनामनेकार्थत्वात् । ततो घञि इच्छापर्यायश्छन्दः-शब्दः प्रसिद्ध एव 'स्वच्छन्दोच्छलदच्छकच्छे'त्यादौ । असुनि तु यः सान्तः सोऽत्र प्रकृतिः । तत्र निर्माणे इच्छायाः करणत्वात्सामर्थ्यात्तृतीयान्तात्प्रत्ययः । **इच्छया कृतमिति** । यद्यपि वेदे त्रिष्टुबादिषु च सान्तश्छन्दःशब्दोऽस्ति, तथापीह न गृह्यते, संज्ञाधिकारात् , किं त्विच्छापर्याय एव स गृह्यत इति भावः । **पुत्र इति** । संज्ञाधिकारान्नेह-- उरसा निर्मितं सुखम् । **हृदयस्य** । प्रीणातीति प्रियः । 'इगुपधे'ति कः । कृद्योगात्कर्मणि षष्ठी, अलौकिके तद्धित-प्रकृतिभागे तु वचनसामर्थ्यादेव । एवमन्यत्रापि बोध्यम् । **बन्धने** । वध्यतेऽनेनेति बन्धनः । करणे ल्युट् । **वशीकरणमन्त्र इति** । तेन हि परहृदयं वशीक्रियते । संज्ञाधिकाराद्द सिष्ठादावृषौ नायं यत् । **मत । तस्य करणमिति** । कर्मणि षष्ठी । कृतिः—करणं, क्रियतेऽनेनेति वा करणमित्याशयेनाह—**भावः साधनं वेति** । जल्पशब्दो भावसाधनः । कर्तरि षष्ठी । **हलस्येति** । कर्षणं-कर्षः । तद्योगात्कर्मणि षष्ठी । करणस्य कर्तृत्वविवक्षायां कर्तरि षष्ठी वा । 'रथसीते'ति तदन्तविधिः । द्विहल्यः । त्रिहल्यः । **तत्र साधुः** ; साधुरिह प्रवीणो योग्यो वा गृह्यते, नोपकर्ता । तत्र हि परत्वात् 'तस्मै हित'मित्येन भाव्यम् । संज्ञाधिकाराद्उपकर्ता न गृह्यत इत्यन्ये । **प्रति-**

**बा.]** सीता लाङ्गलपद्धतिः । तया समितं=सङ्गतमित्यर्थः । कृष्टमिति यावत् । **तुलयेति** । तुला=घटा, तया उन्मितमि-त्यर्थः । **धर्मपथ्यर्थ** । धर्म, पथिन् , अर्थ, न्याय एभ्योऽनपेतमित्यर्थे यदित्यर्थः । औचित्यात्पञ्चम्यन्तेभ्य इति लभ्यते । **धर्मादनपेतमिति** । अप्रच्युतमित्यर्थः । **पथ्यमिति** । पथोऽनपेतमित्यर्थः । **न्याय्यमिति** । न्याया-दनपेतमित्यर्थः । **छन्दसो निर्मिते** । छन्दश्शब्दात्तृतीयान्तान्निर्मितेऽर्थे यदित्यर्थः । **इच्छयेति** । छन्दःशब्द इच्छावाचीति भावः । 'छन्दः पद्येऽभिलाषे चे'त्यमरः । **उरसोऽण्च** । 'तृतीयान्तान्निर्मिते इत्यर्थे' इति शेषः । **उरस्य इति** । 'अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे' इति श्रुतेरिति भावः । 'पुत्र' इति संज्ञाधिकाराल्लब्धम् । **हृदयस्य प्रियः** । षष्ठ्यन्ताद्धृदयशब्दात्प्रिय इत्यर्थे यत्स्यादित्यर्थः । **बन्धने चर्षौ** । **मतजनहलात्** । 'यथासङ्ख्यमेभ्यः एष्वर्थेषु य'दिति शेषः । **मतं ज्ञानमिति** । मनधातोर्भावे क्त इति भावः । **करणं भावः साधनं वेति** । कृञ्धातोर्भावे करणे वा ल्युटि करणशब्दः । तेन जननक्रिया वा जननसाधनं वा विवक्षितमित्यर्थः । **मत्यमिति** । ज्ञानस्य जननक्रिया जननसाधनं वेत्यर्थः। **तत्र साधुः** । सप्तम्यन्तात्साधुरित्यर्थे यत्स्यादित्यर्थः । **अग्र्य इति** । अग्रे साधुरित्यर्थः । साधुरत्र प्रवीणो गृह्यते, नतु हितः, तत्र 'तस्मै हित'मिति वक्ष्यमाणत्वात् । **प्रतिजनादिभ्यः खञ्** । तत्र साधुरित्येव । सप्तम्यन्तेभ्य एभ्यः साधुरित्यर्थे खञ् स्यादित्यर्थः । **प्रातिजनीन इति** । 'प्रतिजन'मिति वीप्सायामव्ययीभावः । तत्र साधु-

**शे.]** इत्यर्हार्थे यत् । **मूलेनेति** । कर्तरि तृतीया । **सीता**- कृष्टक्षेत्रसमीकरणार्थः काष्ठविशेषो 'मई' इति मध्यदेशप्रसिद्धः । **समितमिति** । सम्पूर्वादिणः क्तः । **धर्मादनपेतम्** । यदनुष्ठानं धर्ममनुवर्त्तते एव तदित्यर्थः । ['पथ्य'मित्यत्र] निर्देशादेव पञ्चमी समर्थविभक्तिः । **छन्दसो** । निर्माणे इच्छायाः करणत्वेन तृतीयान्तात्प्रत्ययः । **पुत्र इति** । सञ्ज्ञाधिकारबललब्धम् । प्रीणातीति प्रियः । **भावः साधनं वेति** । ल्युट उभयोर्विधानादिति भावः । **प्रतिजनमिति** । जनं जनं प्रतीति विग्रहः । **भाक्ता इति** । भक्तोऽन्नं तत्र साधवः-त्रिष्फलीकृता इत्यर्थः । **योगविभागादिति** । 'सर्ववेदपारिषदं हीदं शास्त्र'मिति भाष्य-

भाव्यः शाल्वयः । परिषदो ण्यः ।४।४।१०१। पारिषद्यः । 'परिषद' इति योगविभागाण्णोऽपि । पारिषदः । [पर्षद इति पाठान्तरम् । पार्षदः] । कथादिभ्यष्ठक् ।४।४।१०२। कथायां साधुः काथिकः । गुडादिभ्यष्ठञ् ।४।४।१०३। गुडे साधुर्गौडिकः इक्षुः । साक्तुको यवः । पथ्यतिथिवसतिस्वपतेर्ढञ् ।४।४।१०४। पथि साधुः पाथेयम् । आतिथेयम् । वसनं वसतिः, तत्र साधुर्वासतेयी रात्रिः । स्वापतेयं धनम् । सभाया यः ।४।४।१०५। सभ्यः । समानतीर्थे वासी ।४।४।१०७। साधुरिति निवृत्तम् । वसतीति वासी । समाने तीर्थे=गुरौ वसतीति सतीर्थ्यः । समानोदरे शयित ओ चोदात्तः ।४।४।१०८। समाने उदरे शयितः=स्थितः समानोदर्यो भ्राता । सोदराद्यः ।४।४।१०९। सोदर्यः । अर्थः प्राग्वत् । इति प्राग्घितीयाः ।

अथ पाञ्चमिकास्तत्र छयद्विधिः ।

प्राक् क्रीताच्छः ।५।१।१। 'तेन क्रीत मित्यतः प्राक् छोऽधिक्रियते । उगवादिभ्यो यत् ।५।१।२।

त.] जनमिति । जनं जनं प्रति [जनो जन इति] प्रतिजनम् । वीप्सायामव्ययीभावः । प्रतिजन, इदंयुग, संयुग, पापकुल, परस्यकुल, अमुष्यकुल, सर्वजन, विश्वजन, पञ्चजन । 'परस्य' 'अमुष्य' इति षष्ठ्येषा निपातनादलुक् । भक्त इति । 'भिस्सा स्त्री भक्तमन्धोऽन्न'मित्यमरः । गुडादिभ्यष्ठञ् । गुड, कुल्माष, सक्तु, अपूप, माष, [मांस], ओदन, इक्षु, वेणु, सङ्ग्राम, सङ्घात, प्रवास, निवास, वृत । वसतिरिति । 'वसेश्चे'त्यतिप्रत्ययः । स्वस्य पतिः स्वपतिः=आढ्यः, तस्मिन्साधु स्वापतेयम् । सभाया यः । यति तु तित्स्वरः स्यात्, 'कर्तुर्मवत्युक्थ्यः' इति वत् । न च 'यतोऽनावः' इत्याद्युदात्तता शङ्क्या । 'यदुत्पत्तिवेलायां द्व्यच्कस्य यदन्तस्यादिरुदात्तः' इति वेदभाष्ये स्थापितत्वात् । पक्षान्तरे तु 'नमः शष्प्याय च फेन्याय च' इत्यादिवदाद्युदात्तः स्यात् । एवं च व्याख्यानद्वयस्याप्यावश्यकत्वे लक्ष्यानुरोधेन क्वचित्किंचिद्व्याख्येयमिति तत्त्वम् । समानतीर्थे वासी । निपातनाण्णिनिः, ग्रहादेराकृतिगणत्वान्नन्दिग्रहीत्यनेन वा । सतीर्थ्य इति । 'तीर्थे ये' इति सभावः । तरन्त्यनेनेति तीर्थम् । 'तरतेस्थक्' । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारे चे'ति विश्वः । इह तूपाध्यायवाचिन एव ग्रहणं, नाऽन्यस्य, संज्ञाधिकारात् । शयितः स्थित इति । शीधातुः स्थित्यर्थे वर्तते । 'जलाशयः' 'कुशेशय'मिति प्रयोगादिति भावः । समानमुदरमिति 'पूर्वापरप्रथमे'त्यादिना तत्पुरुषः, ततो यत्, तित्स्वरापवाद ओकारस्योदात्तः । सोदराद्यः । 'ओ चोदात्तः' इति नानुवर्तते । 'विभाषोदरे' इति समानस्य सभावः । तत्र 'तीर्थे ये' इत्यतोऽनुवृत्तं 'ये' इत्येतद्विषयसप्तमी । तेन सोदर इत्यस्माद्यः । प्रत्ययस्वरः । प्राग्वदिति । समानोदरे शयित इत्येवार्थ इत्यर्थः । कथं तर्हि 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चती'ति मुरारिरिति चेत् । अत्राहुः—सह=समानमुदरं यस्य सोदरः । 'वोपसर्जनस्ये'ति सहस्य सभावः । तस्य च वैकल्पिकत्वात् 'यत्र भ्राता सहोदरः' इत्याद्यपि सिद्धमिति । इति प्राग्घितीयाः ।

अथ पाञ्चमिकाः । प्राक् क्रीताच्छः । इत्यतः प्रागिति । इहार्थोऽवधित्वेन गृह्यते, न तु प्रत्ययः, प्रकृतिर्वा ।

बा.] रित्यर्थः । एवं वैश्वजनीनः । भक्ताण्णः । सप्तम्यन्तादस्मात्साधुरित्यर्थे इति शेषः । परिषदो ण्यः । 'सप्तम्यन्तात्साधुरित्यर्थे' इति शेषः । योगेति । परिषद् इति प्रथमो योगः । परिषदो णः स्यादित्यर्थः । ततो 'ण्यः' इति द्वितीयो योगः । परिषदो ण्यः स्यादित्यर्थः । कथादिभ्यष्ठगित्यादि स्पष्टम् । गुडादिभ्यष्ठञ् । साक्तुको यव इति । सक्तुषु साधुरित्यर्थः । गुडादित्वाट्ठञ् । उगन्तत्वाट्ठस्य कः । पथ्यतिथीत्यादि स्पष्टम् । समानतीर्थे वासी । समानतीर्थशब्दात्सप्तम्यन्ताद्वसतीत्यर्थे यत्स्यादित्यर्थः । वसतीति वासीति । ग्रहादेराकृतिगणत्वाण्णिनिः । तीर्थशब्दस्य विवरणं—गुराविति । सतीर्थ्य इति । समानतीर्थशब्दाद्यति 'तीर्थे ये' इति समानस्य सभावः ।

समानोदरे । समानोदरशब्दात्सप्तम्यन्ताच्छयित इत्यर्थे यत्स्यादोकारश्च उदात्त इत्यर्थः । शयित इत्यस्य विवरणं स्थित इति । कुशेशयं जलेशयमित्यादौ तथा दर्शनादिति भावः । समानोदर्य इति । समानमुदरमिति विग्रहे 'पूर्वापरप्रथमे'त्यादिना समासाद्यति कृते तित्स्वरापवाद ओकारस्योदात्तः । 'विभाषोदरे' इति सभावेऽसति रूपम् । सोदराद्यः । 'सप्तम्यन्ताच्छयित इत्यर्थे' इति शेषः । तित्त्वाऽभावात्प्रत्ययस्वरेणाऽन्तोदात्तोऽयम् । 'विभाषोदरे' इति सभावः । 'अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चती'त्यत्र तु समानपर्यायसहशब्दस्य बहुव्रीहौ 'वोपसर्जनस्ये'ति सभावो बोध्यः । एवं 'यत्र भ्राता सहोदरः' इत्याद्यपि सिद्धम् । इति प्राग्घितीयाः ।

अथ पञ्चमाध्यायः । प्राक्क्रीताच्छः । क्रीतशब्दस्तद्घटितसूत्रपरः । तदाह—तेन क्रीतमिति ।

शे.] प्रयोगादिति भावः । णस्यानुवृत्तेरुभयोर्विधानमित्यन्ये । समानतीर्थाधिकरणकवासकर्तेत्यर्थे प्रत्यय इत्यर्थे प्रथमोच्चारितसमानतीर्थशब्दस्य प्रकृतित्वं, वासीत्यस्य प्रत्ययार्थत्वम् । यादिप्रत्ययविवक्षायां पूर्वमेव 'तीर्थे ये' इति सादेशेऽपि एकदेशविकृतन्यायेन समानतीर्थशब्दत्वात्प्रत्ययः । 'पूर्वापरप्रथमे'ति तत्पुरुषः । समानोदरे इत्येव । [समासाः प्राग्घितीयाः] । समासाश्चातुर्थिकाः ।

'प्राक् क्रीता' दित्येव । उवर्णान्ताद्गवादिभ्यश्च यत्स्यात् । छस्यापवादः । (ग) **नाभि नभं च** । नभ्योऽक्षः । नभ्यमञ्जनम् । रथनाभावेवेदम् । (ग) **शुनः संप्रसारणं, वा च दीर्घत्वम्** । शून्यम् । शुन्यम् । (ग) **ऊधसो नङ् च** । ऊधन्यः । **कम्बलाच्च संज्ञायाम्** ।५।१।३। यत्स्यात् । कम्बल्यमूर्णापलशतम् । संज्ञायां किम् ? । कम्बलीया ऊर्णा । **विभाषा हविरपूपादिभ्यः** ।५।१।४। आमिक्ष्यं दधि । आमिक्षीयम् । पुरो-

त.] तेनाऽर्था एवावधिमन्त इति प्राक्क्रीताद्येऽर्था हितादयस्तेष्वस्योपस्थानम् । अवधिसजातीयो ह्यवधिमान् भवति । यथा 'मासात्परः' इति कालः प्रतीयते,'ग्रामात्पूर्वः' इति देशः,'अलोऽन्त्यात्पूर्व' इत्यलेव । एवं च समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं तक्रकौण्डिन्यन्यायेन बाधते । अन्यथा छस्य यदादेश्च संनिधानाऽविशेषात्तव्यत्तव्यानीयरामिव पर्यायः स्यात् । अतोऽत्रार्थोऽवधित्वेन गृह्यते । ननु यदादिविषये छो न भविष्यति 'विभाषा हविरपूपादिभ्यः' इति विभाषाग्रहणाल्लिङ्गात् । तथा च प्रत्ययस्य प्रकृतेर्वा अवधित्वस्वीकारेऽपि न क्षतिः । उक्तज्ञापकेनोगवादिप्रभृतिभ्यश्छस्यातिप्रसङ्गनिरासादिति चेत् । अत्राहुः-एवं सति 'छः' इत्येवाधिकारोऽस्तु,नार्थोऽवधिनिर्देशेन । 'प्राग्वतेष्ठ'ञित्यादिके तु प्रकरणे नास्याधिकारः,अधिकारान्तरेणोपष्टब्धत्वात् । स्पष्टप्रतिपत्त्यर्थमवधिनिर्देशः, अन्यथा प्रतिपत्तिगौरवं स्यादिति चेत् । तर्हि 'विभाषा हवि'रित्यादिज्ञापकाश्रयणे प्रतिपत्तिगौरवादर्थ एवावधित्वेन निर्देष्टुमुचित इति । **उगवादिभ्यो** । उवर्णादेर्गशब्दादेर्वशब्दादेश्च यत्स्यादित्यर्थो न भवति, गवादिगणपाठात् । गवाद्यन्तर्गणसूत्राण्याह—**नाभि नभं चेति** । नाभिशब्दो यतं लभते, नभादेशं चेत्यर्थः । **नभ्योऽक्ष इति** । रथाङ्गं सच्छिद्रं—**नाभिः** । तदनुप्रविष्टः काष्ठविशेषोऽक्षः । स च तदनुगुणत्वात्तस्मै हितः । **अञ्जनं**=तैलाभ्यङ्गः, तदपि स्नेहनत्वान्नाभये हितम् । **रथनाभावेवेति** । शरीरावयवे तु नाभ्यमित्येव, परेण 'शरीरावयवाच्च'दित्यनेनाऽस्य बाधादिति भावः । **शुनःसं** । **शून्यमिति** । चकारस्यानुक्तसमुच्चयार्थत्वात् 'नस्तद्धिते'इति टिलोपो न भवति । 'ये चाभावकर्मणोः' इति प्रकृतिभावस्तु दुर्लभः, संप्रसारणे पररूपे च कृते अन्रूपाऽभावात् । दीर्घपक्षे तु तद्विधानसामर्थ्यादपि टिलोपाऽभावः सुपरिहरः । **नङ् चेति** । चाद्यत् । 'नश्चे'ति सुवचमिति मनोरमा । अन्ये त्वाहुः—ऊधन्यशब्दात् 'तत्करोति तदाचष्टे' इति णिचि 'णाविष्ठव'दिति टिलोपे णिजन्तात्कर्तरि क्विपि णिलोपयलोपयोः कृतयोः 'अनुनासिकस्य क्वी'ति दीर्घे ततः क्विबन्तादाचारक्विपि 'ऊधानते' इत्यादावात्मनेपदार्थं नञो ङित्करणमावश्यकमिति । **ऊधन्य इति** । 'ये चे'ति प्रकृतिभावः । **कम्बलाच्च संज्ञायाम्** । प्राक्क्रीतीयेष्वर्थेषु यत्स्यात् । छस्यापवादः । **विभाषा हविरपूपादिभ्यः** । गवादिषु हविःशब्दस्य पाठादिह हविर्विशेषाणां ग्रहणम् । नच

बा.] 'तेन क्रीत'मित्यतः प्राग्येषु सूत्रेषु अर्था एव निर्देक्ष्यन्ते नतु प्रत्ययाः, तेषु 'छ' इत्युपस्थितं भवतीति यावत् । **उगवादिभ्यो यत्** । उश्च गवादयश्च इति द्वन्द्वात्पञ्चमी । **उवर्णान्तादिति** । प्रातिपदिकविशेषणत्वात्तदन्तविधिः । 'उगिद्वर्णग्रहणवर्ज'मित्युक्तेः प्रत्ययविधावपि तदन्तविधिरिति भावः । इदमपि सूत्रं प्राक्क्रीताद्वक्ष्यमाणसूत्रेषु प्रत्ययविशेषाऽनुपादाने उपतिष्ठते । **नाभि नभं चेति** । गवादिगणसूत्रम् । नाभिशब्दो नभादेशं यत्प्रत्ययं च प्राप्नोतीत्यर्थः । **नभ्योऽक्ष इति** । यत्र अक्षदण्डः प्रवेश्यते तच्चक्रमध्यगतच्छिद्रं नाभिरित्युच्यते । तस्मै हितोऽक्षदण्डः । स हि अनुगुणत्वान्नाभये हितः । **नभ्यमञ्जनमिति** । **अञ्जनं**-तैलसेकः । नाभेरञ्जने कृते तत्र प्रोतं चक्रं सुपरिवर्तनं भवतीति नाभेः परिवर्तनात्मककार्यक्षमताधायकत्वादञ्जनं नाभये हितम् । अत्र शरीरावयवविशेषवाचिनाभिशब्दो न गृह्यते । भाष्ये रथनाभेरेव ग्रहणादित्यभिप्रेत्य आह—**रथनाभावेवेदमिति** । शरीरावयवविशेषवाचिनाभिशब्दात्तु 'शरीरावयवाच्च'दिति वक्ष्यमाणः केवलो यत्, नतु नभादेश इति भावः । **शुनः संप्रसारणमिति** । गवादिगणसूत्रम् । श्वन्शब्दाद्यत्स्यात्प्रकृतेः संप्रसारणं, तस्य संप्रसारणस्य पाक्षिकं दीर्घत्वमित्यर्थः । **शून्यं—शुन्यमिति** । शुने हितमित्यर्थः । **ऊधसोऽनङ् चेति** । इदमपि गणसूत्रम् । ऊधश्शब्दाद्यत्स्यात्प्रकृतेरनङादेशश्चेत्यर्थः । आदेशे ङकार इत्, नकारादकार उच्चारणार्थः, ङित्त्वादन्तादेशः । **कम्बलाच्च** । कम्बलशब्दाद्यत्स्यात्प्राक्क्रीतीयेष्वर्थेषु संज्ञायामित्यर्थः । **कम्बल्यमूर्णापलशमिति** । कम्बलाय हितमित्यर्थः । **विभाषा हविः** । हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च प्राक्क्रीतीयेष्वर्थेषु यद्वा स्यादित्यर्थः । पक्षे छः । **आमिक्ष्यं**

शे.] प्राक्क्रीता । अर्थस्यैव व्याख्यानतोऽवधित्वमिति अर्थबोधकेष्वेवास्योपस्थितिः । एतेन 'प्राग्वतेष्ठ'ञित्यतः प्राक्छयतोः पूर्णोऽवधिरित्ययुक्तमित्यपास्तम् । तदग्रिमाणां शास्त्राणामर्थबोधकत्वाऽभावेन तेष्वनुपस्थितेः । **नभ्योऽक्ष इत्यादि** । अत्र हितार्थे यत् । 'नभ्यं चक्र'मिति तु नाभिरिवेत्यर्थे शाखादित्वाद्ये साधु । सच्छिद्रश्चक्रावयवो **नाभिः** । स यथाऽक्षाख्यं काष्ठविशेषं धारयति, परिवर्तते चाञ्जनापेक्षते च, तथा चक्रमपीति सादृश्यम् । एवं नभ्यार्थो वृक्षोऽपि नभ्य एव । तादर्थ्याच्छब्दन्यायेनेति स्पष्टं भाष्ये । **वा च दीर्घत्वमिति** । चेन प्रकृतिभावः समुच्चीयते । तेन दीर्घतदभावयोष्टिलोपो न । **हविष्य-**

डाश्यास्तण्डुलाः । पुरोडाशीयाः । अपूप्यम् । अपूपीयम् । तस्मै हितम् ।५।१।५। वत्सेभ्यो हितो वत्सीयो गोधुक् । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । हविष्यम् । शरीरावयवाद्यत् ।५।१।६। दन्त्यम् । कण्ठ्यम् । ॐ नस् नासिकायाः [यत्तस्क्षुद्रेषु] । नस्यम् । नाभ्यम् । ये च तद्धिते ।६।१।६१। यादौ तद्धिते परे शिरश्शब्दस्य शीर्षन्नादेशः स्यात् । शीर्षण्यः । तद्धिते किम् ? । शिर इच्छति शिरस्यति । ॐ वा केशेषु । शीर्षण्याः शिरस्या वा केशाः । ॐ अचि शीर्ष इति वाच्यम् । अजादौ तद्धिते शिरसः शीर्षादेशः । स्थूलशिरस इदं स्थौलशीर्षम् । खलयवमाषतिलवृषब्रह्मणश्च ।५।१।७। खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृष्यम् । ब्रह्मण्यम् । चाद्रथ्या । अजाविभ्यां थ्यन् ।५।१।८। अजथ्या यूथिः । अविथ्या ।

त.] गवादिष्वेव हविर्विशेषाणां ग्रहणं किं न स्यादिति वाच्यम्, असंजातविरोधित्वेन तत्र स्वरूपग्रहणस्य न्याय्यत्वात् । अपूप्यमिति । अपूपेभ्यो हितं चूर्णमित्यर्थः । अपूप, तण्डुल, पृथुक, मुसल, कर्णवेष्टकेत्याद्यपूपादिगणे अन्नविकारेभ्यश्चेति पठ्यते । अन्नविकाराः=अन्नप्रकारा अदनीयविशेषणस्तेभ्यो यद्वा स्यादिति तदर्थः । ओदन्या ओदनीयास्तण्डुलाः । एवं चानेनैव गणसूत्रेण सिद्धे अपूपादीनां केषांचिद्गणे पाठः प्रपञ्चार्थः । 'हविरपूपादिभ्यो विभाषाया उगवादिभ्यो यत्पूर्वविप्रतिषेधेन' । सक्तव्या धानाः । चरव्यास्तण्डुलाः । चरुर्नाम हविरिति काशिका । स्थालीवचनस्य चरुशब्दस्य तत्रत्ये हविषि उपचाराद्वृत्तिरिति कैयटादयः । नस्यमिति । नासिकायै हितम् । 'नासिकायां भव'मिति विग्रहे तु 'शरीरावयवाच्चे'ति यत् । नस्यम् । तस्युदाहरणं—नस्तः । 'अपादाने चाहीयरुहो'रिति तसिः । क्षुद्रे तु-नासिकायाः क्षुद्रो नःक्षुद्रः । 'सुप्सुपे'ति समासः । नाभ्यमिति । 'नाभि नभं चे'ति नभादेशो रथनाभावेव प्रवर्तते, तस्य गवादियता संनियोगशिष्टत्वादिति भावः । ये च त । 'शीर्षंछन्दसी'त्यतोऽनुवर्तनादाह—शीर्षन्नादेश इति । शीर्षण्य इति । 'ये चाऽभावे'ति प्रकृतिभावः । शिरस्यतीति । 'नः क्ये' इति नियमेन पदत्वाऽभावाद्रुत्वाऽभावः । खलयव । अत्र वृषशब्दोऽकारान्तो गृह्यते न तु नकारान्तः । अन्यथा ह्यसंदेहार्थं नलोपमकृत्वैव निर्दिशेत्, 'आत्मन्विश्वजने'ति वत । वृषाय हितं वृष्यम् । नान्ताद्यति तु—वृषण्यमिति स्यात् । ब्रह्मण्यमिति । ब्रह्मन्शब्दो ब्राह्मणपर्यायः । प्रकृतिभावस्तु 'ये चे'त्यनेन पूर्ववत् । इह वृषन्शब्दाद्ब्राह्मणशब्दाच्च यतः प्राप्तिरेव नास्ति । छोऽप्यनभिधानान्नेत्याकरः । तेन—वृष्णे हितं, ब्राह्मणेभ्यो हितमिति वाक्यमेव । चाद्रथ्येति । गवादिषु रथशब्दो न पठितः । हितार्थ एव रथ्येति यथा स्यात्, अर्थान्तरे मा भूदिति ।

बा.] दधीति । आमिक्षायै हितमित्यर्थः । तप्ते पयसि दध्नि निक्षिप्ते सति यद्घनीभूतं निष्पद्यते सा आमिक्षेत्युच्यते । तस्मै हितम् । अस्मिन्नर्थे चतुर्थ्यन्ताद्यथाविहितं प्रत्ययाः स्युः । वत्सीय इति । छे रूपम् । यो गोधुग्वत्सेभ्यः पयः शिष्ट्वा दोग्धि स एवमुच्यते । शङ्कव्यमिति । शङ्कवे हितमित्यर्थः । उवर्णान्तत्वाद्यत् । गव्यमिमि । गोभ्यो हितं तृणादिकमित्यर्थः । गवादिलक्षणो यत् । हविष्यमिति । हविषे हितमित्यर्थः । हविःशब्दो गवादिः । 'विभाषा हवि'रित्यत्र तु हविर्विशेषवाचिनामेव ग्रहणं, व्याख्यानात् । शरीरावयवाद्यत् । शरीरावयवविशेषवाचकाच्चतुर्थ्यन्ताद्धितमित्यर्थे यत्स्यादित्यर्थः । छस्यापवादः । नस्यमिति । नासिकायै हितमित्यर्थः । 'पद्दन्' इति नस्, प्रभृतिग्रहणस्य प्रकारार्थत्वात् । भाष्ये तु 'नासिकाया यत्-तस्-क्षुद्रेषु नस्' इति पठितम् । नाभ्यमिति । नाभये हितमित्यर्थः । नाभिरत्र शरीरावयवः । रथावयवत्वे तु नभादेश उक्तः । ये च तद्धिते । शीर्षन्नादेश इति । शीर्षंछन्दसीत्यतस्तदनुवृत्तेरिति भावः । शीर्षण्य इति । शिरसे हित इत्यर्थः । शरीरावयवत्वाद्यति शीर्षन्नादेशे 'ये चाऽभावकर्मणो'रिति प्रकृतिभावान्न टिलोपः । शिरस्यतीति । शिर आत्मन इच्छतीत्यर्थे 'सुप आत्मनः' इति क्यचि, 'नः क्ये' इति नियमात्पदत्वाऽभावान्न रुत्वम् । वा केशेषु । केशेषु वाच्येषु यो यकारादिस्तद्धितस्तस्मिन्परे शिरसः शीर्षन्नादेशो वा स्यादित्यर्थः । प्रसङ्गादाह—अचीति । खलयव । खलादिभ्यश्चतुर्थ्यन्तेभ्यो हितमित्यर्थे यत्स्यादित्यर्थः । वृषशब्दोऽत्र अकारान्त एव गृह्यते, नतु नकारान्तः । तेन 'वृष्णे हित'मिति वाक्यमेव । ब्रह्मन्शब्दो ब्राह्मणवाच्येव गृह्यते, नतु वेदादिवाची । तेन 'ब्रह्मणे वेदाय हित'मिति वाक्यमेवेति भाष्ये स्पष्टम् । ब्रह्मण्यमित्यत्र 'ये चाभावकर्मणो'रिति प्रकृतिभावान्न टिलोपः । चाद्रथ्येति । चकारस्यानुक्तसमुच्चयार्थत्वादिति भावः । अजाविभ्यां थ्यन् । अजश्च अविश्चेति द्वन्द्वः । अविशब्दस्य घित्वेऽपि 'अजाद्यदन्त'मित्यजशब्दस्य पूर्वनिपातः । अजथ्या यूथिरिति । अजेभ्योऽजाभ्यो वा हितेत्यर्थः । लिङ्गविशिष्टपरिभाषया

शे.] मिति हविःशब्दो गवादिः । 'विभाषा हवि'रित्यत्र तु हविर्विशेषवाचकानामेव ग्रहणम् । नस्ये—'पद्द'न्निति नस् । प्रभृतिग्रहणस्य प्रकारार्थत्वात् । भाष्ये तु 'नासिकाया यत्तस्क्षुद्रेषु न'सिति पठितम् । ये च त । 'शीर्षंछन्दसी'त्यतः शीर्षन्निति वर्तते । शीर्षण्ये—'ये चे'ति प्रकृतिभावः । खलयव । वृषशब्दोऽत्राऽकारान्तो व्याख्यानान्न तु नान्तः । वृषन्शब्देन वृष्णे

आत्मन्विश्वजनभोगोत्तरपदात्खः ।५।१।९। आत्माऽध्वानौ खे ।६।४।१६९। एतौ खे प्रकृत्या स्तः ।
आत्मने हितमात्मनीनम् । विश्वजनीनम् । कर्मधारयादेवेष्यते । षष्ठीतत्पुरुषाद्बहुव्रीहेश्च छ एव । विश्व-
जनीयम् । ॐ पञ्चजनादुपसङ्ख्यानम् । पञ्चजनीनम् । ॐ सर्वजनाट्ठञ् खश्च । सार्वजनिकः । सर्व-
जनीनः । ॐ महाजनाट्ठञ् । माहाजनिकः । मातृभोगीणः । पितृभोगीणः । राजभोगीनः । (ग) आचार्या-
दणत्वं च । आचार्यभोगीनः । सर्वपुरुषाभ्यां णढञौ ।५।१।१०। ॐ सर्वाण्णो वेति वक्तव्यम् ।
सर्वस्मै हितं सार्वम् । सर्वीयम् । ॐ पुरुषाद्वधविकारसमूहतेनकृतेषु । भाष्यकारप्रयोगात्तेनेत्यस्य
द्वन्द्वमध्ये निवेशः । पुरुषस्य वधः पौरुषेयः । 'तस्येद'मित्यणि प्राप्ते । पुरुषस्य विकारः पौरुषेयः । 'प्राणिरजता-
दिभ्यो'ऽञित्यञि प्राप्ते । समूहेऽप्यणि प्राप्ते । 'एकाकिनोऽपि परितः पौरुषेयवृता इवे'ति माघः । तेन कृते

---

त.]अजाविभ्याम् । अजशब्द इह पुंलिङ्ग उपात्तः । अतएव 'द्वन्द्वे घी'त्यविशब्दस्य पूर्वनिपातं बाधित्वा 'अजाद्य-
दन्त'मिति अजशब्दस्य पूर्वनिपातः कृतः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापी'ति स्त्रीलिङ्गादपि थ्यन् । तसिलादिषु
थ्यनः परिगणनात्पुंवद्भावे रूपं तुल्यम् । अजथ्येति । अजेभ्यो अजाभ्यो वा हितेति विग्रहः । कर्मधारया-
देवेति । व्याख्यानादिति भावः । विश्वजनीयमिति । विश्वस्य जनः=सर्वसाधारणो वेश्यादिः । विश्वो जनोऽ-
स्येति बहुव्रीहावपि स एवान्यपदार्थः । तस्मै हितमिति विग्रहः । पञ्चजनीनमिति । रथकारपञ्चमाश्चत्वारो वर्णाः
पञ्चजनास्तेभ्यो हितम् । 'दिक्सङ्ख्ये संज्ञाया'मिति समासः । 'पञ्चजना'दित्येतत्प्रभृति वार्तिकत्रयमपि कर्मधारय-
विषयमेव । तेन षष्ठीसमासाद्बहुव्रीहेश्छ एव । पञ्चजनीयः । सर्वजनीन इति । सर्वो जनः सर्वजनः । 'पूर्वका-
लैके'ति तत्पुरुषः । तस्मै हितमिति विग्रहः । साध्वर्थे तु 'प्रतिजनादिभ्यः ख'ञिति खञि सार्वजनीनवैश्वजनीनशब्दौ
व्युत्पादितौ । मातृभोगीण इति । इहाऽखण्डपदत्वाऽभावेऽपि 'अट्कुप्वा'ङित्यनेन यथा णत्वं भवति तथा प्रागेवोप-
पादितम् । मातुर्भोगः=शरीरं, तस्मै हित इति विग्रहः । यद्यपि 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययो'रित्य-
मरेण अहेरित्युक्तं, तथापि प्रयोगबाहुल्याभिप्रायं तत् । शक्तिस्तु शरीरमात्रे इत्याकरः । मातृपितृशब्दाभ्यामौत्सर्गिक-
श्छ एव । मात्रीयः । पित्रीयः । राजाचार्यादिभ्यां त्वौत्सर्गिकश्छोऽपि न भवति, अनभिधानात् । किं तु राज्ञे हित-
माचार्याय हितमिति वाक्यमेवेत्याकरः । सर्वपुरुषाभ्याम् । आभ्यां शब्दाभ्यां यथासङ्ख्यं णढञौ स्तस्तस्मै हितमित्यर्थे,
'प्राक्क्रीता'दिति छस्यापवाद इति सूत्रार्थः । सर्वादिति । अनुकरणत्वात्सर्वनामकार्याऽभावः । पुरुषाद्वध-
विकारेति । योग्यताबलादिह षष्ठी समर्थविभक्तिर्लभ्यते, 'तेन कृते'त्यत्र तु उपात्तैव तृतीया । तदाह—पुरुषस्य

---

बा.]अजाशब्दादपि थ्यन् । 'तसिलादिष्वि'ति पुंवत्त्वम् । अविथ्येति । अविभ्यो हितेत्यर्थः । स्त्रीत्वं लोकात् ।
आत्मन्विश्वजन । आत्मन्, विश्वजन, भोगोत्तरपद-एभ्यो हितमित्यर्थे खः स्यादित्यर्थः । 'आत्मनीन'मित्युदा-
हरणं वक्ष्यति । तत्र टिलोपे प्राप्ते—आत्माध्वानौ खे । प्रकृत्या स्त इति । 'प्रकृत्यैका'जित्यस्तदनुवृत्तेरिति
भावः । कर्मधारयादेवेति । 'विश्वजनशब्दा'दिति शेषः । अत्र व्याख्यानमेव शरणम् । विश्वजनीयमिति ।
विश्वस्य जनो विश्वजनः=साधारणो वैद्यादिः । विश्वो जनो यस्येति बहुव्रीहिर्वा । तस्मै हितमिति विग्रहः ।
पञ्चजनीनमिति । ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा रथकारजातिश्चेत्येते पञ्चजनाः । तेभ्यो हितमिति विग्रहः ।
सर्वजनाट्ठञ्खश्चेति । 'वक्तव्य' इति शेषः । 'समानाधिकरणादिति वक्तव्य'मिति वार्तिकं भाष्ये स्थितम् ।
महाजनाट्ठञिति । 'वक्तव्य' इति शेषः । विश्वजनप्रसङ्गादिदं वार्तिकद्वयमुपन्यस्तम् । अथ भोगोत्तरपदस्योदा-
हरति—मातृभोगीण इति । मातृभोगाय हित इत्यर्थः । आचार्यादिति । आचार्यशब्दात्परस्य भोगीन-
शब्दस्य नस्य णत्वाऽभावो वाच्य इत्यर्थः । नच असमानपदस्थत्वादेवात्र णत्वस्याऽप्रसक्तेस्तन्निषेधो व्यर्थ इति वाच्यं,
मातृभोगीणादौ णत्वज्ञापनार्थत्वात् । सर्वपुरुषाभ्याम् । सर्व, पुरुष आभ्यां चतुर्थ्यन्ताभ्यां क्रमाण्णढञौ स्तो
हितमित्यर्थे इत्यर्थः । सर्वाण्ण इति । अत्र सर्वशब्दस्य स्वरूपपरत्वान्न सर्वनामकार्यम् । पुरुषाद्वधेति ।
वार्तिकमिदम् । पुरुषशब्दाद्वधादिष्वेवार्थेषु ढञ्स्यात्, न हितार्थे इत्यर्थः । ननु 'तेन कृत'मिति समुदायस्य
असुबन्तत्वात्कथं समासे निवेश इत्यत आह-भाष्येति । अणि प्राप्ते इति । 'अनेन ढ'ञिति शेषः ।

---

शे.] हितमिति वाक्यमेव । एवं ब्रह्मन्पर्यायब्राह्मणशब्देन ब्राह्मणेभ्यो हितमिति वाक्यमेव, न तु प्रत्यय इति स्पष्टं भाष्ये ।
आत्मन्विश्व । उत्तरपदग्रहणं भोगेनैव सम्बद्धं, नान्येन, व्याख्यानात् । भोगशब्दः शरीरवाच्यत्र, 'अहिरिव भोगैः पर्येती'ति
दर्शनादिति स्पष्टं भाष्ये । कर्मधारयादेवेति । पञ्चजनसर्वजनेष्वप्येवमेव । रथकारपञ्चमेषु चतुर्षु वर्णेषु प्रत्येकं पञ्चजनशब्दस्य
रूढिः । मातृभोगीणे—यथा णत्वं तथा 'रषाभ्या'मित्यत्र निरूपितम् । सर्वपु । यथासङ्ख्यमत्र । पुरुषाद्वधेति । वधादिषु त्रिषु
सामर्थ्यात्षष्ठी समर्थविभक्तिः । कृते तु तेनेति निर्दिष्टैव । अञि प्राप्ते इति । पाक्षिकमयटोऽप्युपलक्षणं । हिते तु पुरुषाच्छ

ग्रन्थेऽणि प्राप्ते, अग्रन्थे तु प्रासादादावप्राप्त एवेति विवेकः। **माणवचरकाभ्यां खञ्** ।५।१।११। माणवाय हितं माणवीनम् । चारकीणम् । **तदर्थं विकृतेः प्रकृतौ** ।५।१।१२। विकृतिवाचकाच्चतुर्थ्यन्तात्तदर्थायां प्रकृतौ वाच्यायां छप्रत्ययः स्यात् । अङ्गारेभ्य एतानि अङ्गारीयाणि काष्ठानि । प्राकारीया इष्टकाः । शङ्कव्यं दारु । **छदिरुपधिबलेर्ढञ्** ।५।१।१३। छादिषेयाणि तृणानि । बालेयास्तण्डुलाः ॥ ❀ **उपधिशब्दात्स्वार्थे इष्यते** । उपधीयत इत्युपधिः-रथाङ्गं, तदेव औपधेयम् । **ऋषभोपानहोर्ञ्यः** ।५।१।१४। छस्यापवादः।

---

त.] वध इति । **समूहेऽप्यणीति** । 'तस्य समूहः' इत्यनेन । **ग्रन्थेऽणीति** । 'कृते ग्रन्थे' इत्यनेन । **अप्राप्ते इति** । 'पौरुषेयः प्रासाद' इत्यादौ न कस्याप्यपवादोऽयं ढञिति भावः । **माणव** । खञो ञित्करणं वृद्ध्यर्थं स्वरार्थं च । यद्यपि माणवे वृद्धिः स्वतः सिद्धैव, तथापि 'माणविनाभार्य' इत्यत्र 'वृद्धिनिमित्तस्य चे'ति पुंवद्भावप्रतिषेधार्थमिति ज्ञेयम् । **माणवायेति** । मनोः कुत्सितमपत्यं माणवः । 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः' इत्यपत्याधिकारस्थवार्तिकाण्णत्वम्, तच्च वार्तिकमेतत्सूत्रस्थनिर्देशसिद्धार्थकथनपरमित्याहुः । **चारकीणमिति** । चरतीति चरः । पचाद्यच् । 'चरिचलिपतिवदीना'मिति द्विर्वचनं विकल्पितत्वादिह न भवति । ततः संज्ञायां कनि—चरकः । **तदर्थं विकृतेः** । 'तस्मै हित'मित्यतस्तस्मा इत्यनुवर्तते । तदाह—**चतुर्थ्यन्तादिति** । 'तदर्थ'मिति 'सामान्ये नपुंसकं' । व्यत्ययेन सप्तमीस्थाने प्रथमेत्याशयेनाह-**तदर्थायामिति** । विकृत्यर्थायामित्यर्थः । 'त'दिति सर्वनाम्ना हि विकृतिः परामृश्यते । एवं च विकृतिरेव प्रथमानिर्दिष्टेति 'समर्थानां प्रथमा'दित्यधिकारोऽप्यत्र निर्बाध एव । **शङ्कव्यमिति** । 'उगवादिभ्यः' इति यत् ।

**छदिरुपधि** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । छस्यापवादोऽयम् । **छादिषेयाणीति** । छाद्यतेऽनेनेति छदिः । 'अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः' । 'इस्मन्त्रन्क्विषु च' इति ह्रस्वत्वम् । यदा तु चर्मविकारश्छदिस्तदा परत्वात् 'चर्मणोऽ'मित्यञ् प्राप्नोति । पूर्वविप्रतिषेधेन तु ढञेवेष्यते । छादिषेयं चर्म । आह च 'यञ्ञ्यावनः पूर्वविप्रतिषिद्धम्' 'ढञ् चे'ति । यत उदाहरणं त्व[स]नङ्गव्यं । त्व[स]नङ्गुश्चर्मविकारस्तदर्थं चर्म । 'उगवादिभ्यः' इति यत् । ञ्यस्योदाहरणमौपानह्यमिति अनुपदं वक्ष्यति । **बालेया इति** । 'करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रिया'मित्यमरः । **उपधिरिति** ।'उपसर्गे घोः कि'रिति धाञः किः । 'आतो लोप इति चे'त्यालोपः ।

---

बा.] **प्राप्तेति** । रजतादित्वादञि प्राप्ते अनेन ढञित्यर्थः । **समूहेऽप्यणि प्राप्ते इति** । पुरुषाणां समूह इत्यर्थे 'तस्य समूहः' इत्यणि प्राप्ते अनेन ढञित्यर्थः । **पौरुषेयवृता इवेति** । पुरुषसमूहवृता इवेत्यर्थः । परित आदर्शप्रतिफलनादिति भावः । **तेन कृते इति** । पुरुषेण कृतो ग्रन्थ इत्यर्थे 'कृते ग्रन्थे' इत्यणि प्राप्ते, 'पुरुषेण कृतः प्रासाद' इत्यर्थे तु कस्मिन्नपि प्रत्यये अप्राप्ते अनेन ढञित्यर्थः । **माणव** । आभ्यां चतुर्थ्यन्ताभ्यां हितमित्यर्थे खञ्स्यादित्यर्थः । **माणवीनमिति** । मनोः कुत्सितमपत्यं माणवः । 'अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकोऽण्स्मृतः । नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः' इत्यपत्याधिकारवार्तिकात् । माणवाय हितमिति विग्रहः । **चारकीणमिति** । चरतीति चरः । पचाद्यच् । ततः स्वार्थिकः कः । [ चरकः ] । चरकाय हितमिति विग्रहः । **तदर्थं विकृतेः प्रकृतौ** । तदर्थमिति 'सामान्ये नपुंसकम्' । तस्मै इदं तदर्थम् । तच्छब्देन विकृतिः परामृश्यते । सप्तम्यर्थे प्रथमा । विकृत्यर्थायां प्रकृताविति लभ्यते । एवं च तच्छब्देन चतुर्थ्यन्तेन विकृतिरेव प्रथमं निर्दिश्यते । तथा च चतुर्थ्यन्ताद्विकृतिवाचकादिति लभ्यते । तदाह—**विकृतिवाचकादित्यादिना** । **प्रत्ययः स्यादिति** । 'यथाविहित'मिति शेषः । **अङ्गारेभ्य एतानीति** । अङ्गारार्थानीत्यर्थः । अर्थेन नित्यसमासविधानादस्वपदविग्रहः । अत्र काष्ठानि प्रकृतिद्रव्याणि । अङ्गारा विकृतयः । तद्वाचकादङ्गारशब्दाच्छप्रत्यये 'अङ्गारीयाणी'ति रूपम् । **प्राकारीया इष्टका इति** । प्राकारेभ्य इमा इति विग्रहः । प्राकारार्था इत्यर्थः । **शङ्कव्यमिति** । शङ्कवे इदमिति विग्रहः । शङ्क्वर्थमित्यर्थः । 'उगवादिभ्यः' इति यत् । **छदिरुपधिबलेर्ढञ्** । छदिष्, उपधि, बलि-एषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । एभ्यस्तादर्थ्यचतुर्थ्यन्तेभ्यः प्रकृतौ वाच्यायां ढञित्यर्थः । **छादिषेयाणीति** । छदिस्तृणपटलः । तस्मै इमानीति विग्रहः । छदिरर्थानीत्यर्थः । ढञि एयादेशे षात्परत्वाण्णत्वम् । **बालेयास्तण्डुला इति** । बलये इमे इति विग्रहः । बल्यर्था इत्यर्थः । 'करोपहारयोः पुंसि बलि'रित्यमरः । 'भागधेयः करो

---

शे.] एवेति बोद्धव्यम् । तदर्थं वि । **विकृतिवाचकादिति** । न चास्य न प्रथमत्वं, प्रकृतावित्यर्थसमर्पकापेक्षया तस्यसत्त्वात् । तस्मा—इत्यनुवृत्तेराह—चतुर्थ्यन्तादिति । तदर्थमिति सप्तम्याः स्थाने प्रथमा, सामान्ये नपुंसकं, तदाह—तदर्थायामिति । प्रकृतिविकृतिशब्दावुपादानकारण-तत्कार्यपरौ, परस्परसमभिव्याहारात् । तदर्थग्रहणं स्पष्टार्थम् । शङ्कव्ये-'उगवादी'ति यत् । बालेया इति । बल्यवस्थायां यो लौहित्यादिगुणस्तद्रहिता 'बालेया' इत्युच्यन्ते । प्रकृतिविकृतिभावोऽत्र यथाकथंचित् ।

आर्षभ्यो वत्सः । औपानह्यो मुञ्जः । चर्मण्यप्ययमेव पूर्वविप्रतिषेधेन । औपानह्यं चर्म । **चर्मणोऽञ्** ।५।१।१५। चर्मणो या विकृतिस्तद्वाचकादञ् स्यात् । वाध्र्यै हितं वार्ध्रं चर्म । वारत्रं चर्म । **तदस्य तदस्मिन् स्यादिति** ।५।१।१६। प्राकार आसामिष्टकानां स्यात्प्राकारीया इष्टकाः । प्रासादीयं दारु । प्राकारोऽस्मिन् स्यात् प्राकारीयो देशः । इतिशब्दो लौकिकीं विवक्षामनुसारयति । तेनेह न—प्रासादो देवदत्तस्य स्यादिति ।

---

त.] **विप्रतिषेधेनेति** । 'यञ्ञ्यावञ'इत्यादिवार्तिकेनेत्यर्थः। ननु ढञ्विधौ छदिरित्यस्य,ञ्यविधौ उपानहश्च विशिष्य ग्रहणेन 'प्रतिपदोक्तं बलीयः' इति सिद्धे किमनेन पूर्वविप्रतिषेधेन ? । अत्राहुः—'निरवकाशत्वे सत्येव प्रतिपदविधित्वं बलीयस्त्वे प्रयोजकं, न तु सावकाशत्वे' इत्यनेन मुनिवचनेनाऽनुमीयते । तेन 'स्वम्पि तडाकानि' इत्येव युक्तं, परत्वान्नुम्प्रवृत्तेः । प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य 'स्वाम्पि तडाकानी'ति मतं दुर्बलम् । 'अतृन्' इति दीर्घस्य 'आपस्तिष्ठन्ती'त्युदाहरणे सावकाशतया प्रतिपदोक्तत्वस्याऽनलीयस्त्वादिति । **चर्मणोऽञ्** । 'तदर्थ'मित्यादिपूर्वोक्ते अञ्स्यात् । छस्यापवादः । 'चर्मणः' इति षष्ठी न तु पञ्चमी । पञ्चम्यां तु चर्मशब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्यात् 'चर्मणे द्वीपी'त्यादौ । न चेष्यते 'चार्मणो द्वीपी'ति । तदाह— **चर्मणो या विकृतिरिति** । **वाध्र्यै इति** । 'वृधिवपिभ्या'मिति रन्प्रत्यये वध्रशब्द आद्युदात्तश्चर्मवाची, 'तस्य विकारः' इत्यण् । 'टिड्ढे'ति ङीप् । वाध्रीं रज्जुः, तस्यै । वधेरौणादिके ष्ट्रनि तु वध्रीति भवति । ततोऽञि तु वाध्रम् । 'नध्री वध्री वरत्रा स्या'दित्यमरः । 'वध्राः पश्य, वध्रिकाः पश्य' इति भाष्यम् । **तदस्य** । प्रथमा-समर्थात्प्रातिपदिकात्षष्ठ्यर्थे सप्तम्यर्थे च यथाविहितं प्रत्ययो भवति । **स्यादिति** 'संभावनेऽलमिति चे'दित्यादिना संभावने-लिङ् । इष्टकानां बहुत्वेन प्राकार आसां स्यादित्येतत्सम्भाव्यते । देशस्य हि गुणेन प्राकारोऽस्मिन्स्यादिति सम्भा-

---

बा.] बलि'रिति च । **उपधिशब्दादिति** । वार्तिकमिदम् । **उपधीयते इति** । अक्षदण्डाग्रे उपधीयते=प्रोतं क्रियते इत्युपधिः । 'उपसर्गे घोः किः' इति धाञः किप्रत्ययः । 'आतो लोप इटि चे'त्याल्लोपः । **उपधी रथाङ्गमिति** । तथा भाष्यादिति भावः । **ऋषभोपानहो** । ऋषभ उपानह् अनयोः समाहारद्वन्द्वात्पञ्चमी । ऋषभशब्दादुपानह्-शब्दाच्च तादर्थ्यचतुर्थ्यन्तात्प्रकृतौ वाच्यायां ञ्यप्रत्ययः स्यादित्यर्थः । **आर्षभ्य इति** । ऋषभाय अयमिति विग्रहः । ऋषभार्थ इत्यर्थः । यो वत्स ऋषभावस्थाप्राप्त्यर्थं पोष्यते स एवमुच्यते । **औपानह्यो मुञ्ज इति** । उपानहे अयमिति विग्रहः । उपानदर्थो मुञ्ज इत्यर्थः । क्वचिद्देशे मुञ्जतृणैरुपानत् क्रियते । **चर्मण्यपीति** । चर्मणि प्रकृतित्वेन वाच्येऽपि अयं ञ्य एव 'चर्मणोऽ'ञित्यञं परमपि पूर्वविप्रतिषेधेन बाधित्वा भवतीत्यर्थः । एतच्च 'उगवादिभ्यः' इति सूत्रभाष्ये स्थितम् । **औपानह्यमिति** । उपानदर्थं चर्मेत्यर्थः । **चर्मणोऽञ्** । 'चर्मण' इति षष्ठ्यन्तं विकृतावन्वेति । तदाह—**चर्मणो या विकृतिस्तद्वाचकादिति** । 'तादर्थ्यचतुर्थ्यन्ता'दिति शेषः । **अञ्स्यादिति** । 'प्रकृतौ वाच्याया'मिति शेषः । **वध्र्यै इदमिति** । वृधेरौणादिके ष्ट्रनि वध्रशब्दः । टित्त्वा-न्ङीप्, वध्री-चर्मरज्जुः । 'नध्री वध्री वरत्रा स्यात्' इत्यमरः । 'वाध्र्यै इद'मिति पाठान्तरम् । 'वृधिवपिभ्यां रन्' इति वृधेः रनि लघूपधगुणे रपरत्वे वर्ध्रशब्दश्चर्मवाचकः, तस्माद्विकारे अणि वार्ध्री रज्जुः । **तदस्य तदस्मिन् स्यादिति** । 'तदर्थं विकृतेः प्रकृतौ' इति निवृत्तमिति कैयटः । 'तदस्य स्या'दिति, 'तदस्मिन्स्या'दिति चार्थे प्रथमान्ताद्यथाविहितं प्रत्ययः स्यादित्यर्थः । 'स्या'दित्यत्र 'सम्भावनेऽलमिती'ति सम्भावने लिङ् । **प्राकार आसामिति** । करणत्वस्य सम्बन्धसामान्यविवक्षायां षष्ठी । आभिरिष्टकाभिः प्राकारः कर्तुं शक्यत इति विग्रह-वाक्यस्य फलितोऽर्थः । **प्राकारीया इति** । प्राकारशब्दात्प्रथमान्ताच्छः । इष्टकाः प्रत्ययार्थः । प्राकारपर्याप्ता इष्टका इति यावत् । **प्रासादीयं दार्विति** । प्रासादोऽस्य स्यादिति विग्रहः । प्रासादपर्याप्तमिति यावत् । **प्राकारीयो देश इति** । प्रायेण प्राकारोऽस्मिन्देशे सम्भाव्यत इत्यर्थः । देशस्य तद्योग्यपाषाणेष्टकादिबहुलत्वादिति भावः । अनेन 'तदर्थं विकृते'रित्यनुवृत्ताविह न स्यादिति सूचितम् । ननु 'प्रासादो देवदत्तस्य स्या'दित्यत्रातिप्रसङ्गः स्यादित्यत आह-**इतिशब्दो लौकिकीं विवक्षामिति** । शिष्टव्यवहारमित्यर्थः । **परिखाया ढञ्** । 'पूर्वसूत्रविषये'

---

शे.] **आर्षभ्य** इत्यत्राप्येवम् । यो वत्स ऋषभावस्थाप्राप्त्यर्थं पोष्यते स एवमुच्यते । **पूर्वविप्रतिषेधेनेति** । 'अञपेक्षये'ति शेषः । **तदस्य तदस्मिन् स्यादिति** । तदर्थं विकृतेरित्यादि निवृत्तमिति कैयटः । **लौकिकीमिति** । लोकोऽत्र न प्रयोक्ताऽस्मदा-दिः,तेन मृदुश्लक्ष्णरूपाऽपभ्रंशप्रयोगस्यैव करणात् । तस्माच्छिष्टो लोकोऽत्र लोकशब्देन ।'लौकिकी विवक्षा यत्र प्रायस्य संप्रत्ययः । प्राय इति लोको व्यपदिश्यते' इति भाष्यात् । लोकः=शिष्टो लोक इति तदर्थः । 'प्रायस्य=समग्रकल्पस्ये'ति कैयटस्यापि समग्रशब्दार्थविषये समर्थस्येत्यर्थः । तादृशश्च शिष्टलोक एवेति बोद्धव्यम् । **प्रासादो देवदत्तस्येति** । ईदृशेऽर्थे 'प्रासादीयो

परिखाया ढञ् ।५।१।१७। पारिखेयी भूमिः । छयतोः पूर्णोऽवधिः ।

यथाऽऽर्हीयाः ।

प्राग्वतष्ठञ् ।५।१।१८। 'तेन तुल्य'मिति वतिं वक्ष्यति ततः प्राक् ठञधिक्रियते । आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक् ।५।१।१९। 'तदर्हती'त्येतदभिव्याप्य ठञधिकारमध्ये ठकोऽपवादष्ठगधिक्रियते, गोपुच्छादीन्वर्जयित्वा । असमासे निष्कादिभ्यः ।५।१।२०। 'आर्हा'दित्येतत् 'तेन क्रीत'मिति यावत्सप्तदश-

त.]भ्यते । इह प्रकृतिविकारभावस्तादर्थ्यं च न विवक्षितं, किं तु योग्यतामात्रम् । तेन पूर्वस्याऽयमविषयः । द्विस्तच्छब्दस्य ग्रहणं स्पष्टप्रतिपत्त्यर्थम्, 'तदस्यास्त्यस्मि'न्निति वत्सक्तत्तच्छब्दग्रहणेनैवेष्टसिद्धेः । छयतोः पूर्णोऽवधिः ।

प्राग्वतेष्ठञ् । 'ठ'मित्येव वक्तव्ये 'प्राग्वते'रिति वचनं मध्ये योऽधिकारवानपवादः, 'सर्वभूमिपृथिवीभ्यामणञौ' 'शीर्षच्छेदाद्यच्चे'त्येवमादिः, तेन विच्छेदेऽपि 'पारायणतुरायणे'त्यादौ ठञेव यथा स्यादित्येवमर्थम् । न चैवं पारायणादिसूत्र एव ठञ्निर्दिश्यतामिति वाच्यम्, उत्तरसूत्रे येषां पर्युदासः क्रियते गोपुच्छादीनां तेभ्यष्ठञः प्रकृतसूत्रं विनाऽलाभात् । तथा च गौपुच्छिकः साप्ततिक इत्यादौ ठञर्थमिदं सूत्रमत्र प्रदेशे आरब्धमिति बोध्यम् । आर्हादगोपुच्छ । तदर्हतीति । इह 'तदर्ह'मिति सूत्रान्तर्गतमच्प्रत्ययान्तं नाऽनुक्रियते किं तु तिङन्तस्यैकदेशः शवन्त एव, व्याख्यानादिति भावः । अभिव्याप्येति । तेन 'श्वेतच्छत्रिक' इत्यत्रार्हत्यर्थे ठगेव भवतीति भावः । ननु परिमाणात्पृथक्सङ्ख्याग्रहणं व्यर्थं, परिमीयते परिच्छिद्यते येन तत्परिमाणं, सङ्ख्यापि च परिच्छिद्यत इति सापि परिमाणमेवेति चेत् । अत्र श्लोकवार्तिकम्—'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्सङ्ख्या बाह्या तु सर्वतः' । अस्यार्थः—तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादिगुरुत्वमुन्मीयते तदुन्मानम् । आरोहः=उच्छ्रायः । परिणाहो=विस्तारः । ताभ्यामारोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादिः परिमीयते तत्परिमाणं=प्रस्थादि, । परिः सर्वतोभावे । आयामो=दैर्घ्यं, स येन मीयते तत्प्रमाणम् । तच्च क्वचित्तिर्यगवस्थितस्य वस्तुनो भवति—यथा वस्त्रादेर्हस्तादिः । क्वचिदूर्ध्वाधोभागावस्थितस्य भवति—यथा हास्तिनमुदकम् । ऊरुद्वयसमुदकमिति । सङ्ख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिप्रस्थादिहस्तादिभ्यस्त्रिभ्यो बहिर्भूता एकत्वद्वित्वादिरिति । इह सङ्ख्यापरिमाणयोरेव प्रकृतत्वेऽप्युन्मानप्रमाणयोर्विवेचनं प्रसङ्गात्कृतमिति बोध्यम् । असमासे निष्कादिभ्यः । निष्क, पण, पाद,

श.]इति शेषः । [पा]रिखेयी भूमिरिति । परिखा अस्या अस्ति, अस्यामस्तीति वा विग्रहः । परिखायोग्येत्यर्थः । छयतो पूर्णोऽवधिरिति । 'प्राग्वतेष्ठ'ञित्यारभ्य 'द्वित्रिपूर्वादण्चे'त्यन्तैः सूत्रैः प्रत्ययविशेषेष्वनुक्रान्तेषु 'तेन क्रीत'मित्य[त्र] [छयतोर्व्याख्या]नम् । न चैवं प्राक्क्रीतादित्युक्तेस्तेष्वपि सूत्रेषु छयतोरनुवृत्तिः कुतो नेति न शङ्क्यं, प्रत्ययविशेषाणां श्रवणे तयोरनुवृत्त्यसम्भवादिति भावः । इति छयतोरवधिः ।

अथ आर्हीयाः । प्राग्वतेः । वतिशब्दस्तद्धटितसूत्रपरः । तदाह—तेन तुल्यमिति । 'तेन तुल्य'मित्यतः प्राग्येषु सूत्रेषु अर्था एव निर्दिश्यन्ते नतु प्रत्ययाः, तत्र ठञित्युपतिष्ठत इति यावत् । आर्हादगो । तदर्हतीति सूत्रगते अर्हतिशब्दे एकदेशानुकरणमर्हेति, तच्च तद्धटितसूत्रपरम्, आङभिव्याप्तौ, व्याख्यानात् । तदाह—तदर्हतीति । इत्येतदभिव्याप्येति । इदमपि सूत्रं प्रत्ययविशेषाऽश्रवणे उपतिष्ठते । अत्र सङ्ख्यापरिमाणयोः पृथग्ग्रहणात्सङ्ख्या न परिमाणम् । तथा च वार्तिकम्—'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्सङ्ख्या बाह्या तु सर्वतः ।' इति । तुलायामारोप्य द्रव्यगुरुत्वं येन परिच्छिद्यते तदुन्मानं=गुञ्जामाषनिष्कसुवर्णपलादि । येन काष्ठादिनिर्मितेन आयतविस्तृतोच्छ्रितेन पात्रविशेषेण पात्रगतायामविस्तारोच्छ्रायैः व्रीह्यादि परिच्छिद्यते तत्परिमाणं=प्रस्थादि । आयामो दैर्घ्यं येन परिच्छिद्यते तत्प्रमाणम्=अरत्निप्रादेशादि । सङ्ख्या तु उक्तत्रितयापेक्षया बाह्या=भिन्ना एकत्वद्वित्वादीत्यर्थः । असमासे । इति यावदिति । 'तेन

शे.] देवदत्त' इति प्रयोगो लोके न दृश्यते इति भावः । [ इति ] छयतोः पूर्णोऽवधिः ।

प्राग्वतेः । अत्र वतिशब्देन तदर्थो लक्ष्यते, तेनार्थबोधकेष्वेवास्योपस्थानं, तेनापवादविषये न । आर्हाद । अत्रार्हतीति तिङन्तैकदेशशबन्तानुकरणं, व्याख्यानात् । आङभिव्याप्तौ, तदाह—तदर्हतीत्येतदभिव्याप्येति । यद्यपि—ऊर्ध्वमानं किलोन्मानं परिमाणन्तु सर्वतः । आयामस्तु प्रमाणं स्यात् सङ्ख्या बाह्या तु सर्वतः । ऊर्ध्वं यन्मीयते तदुन्मानं । सर्वतो मानमिति च्चातः परिमाणम् । आयामविवक्षायां प्रमाणमित्येतद्भवति । सङ्ख्या सर्वतो बाह्या । भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्च नेति । भेदोऽत्र वैलक्षण्यमिति कैयटः, तथाप्यत्र परिमाणशब्देनोन्मानमपीति 'असमासे' इति सूत्रस्थभाष्यस्वरसः । प्रमाणन्तु न गृह्यते, मानाऽभावात् । सप्तदशसूत्र्या-

सूत्र्यामनुवर्तते । निष्कादिभ्योऽसमासे ठक् स्यादार्हीयेष्वर्थेषु । नैष्किकम् । समासे तु ठञ् । परिमाणान्तस्याऽसंज्ञाशाणयोः ।७।३।१७। उत्तरपदवृद्धिः स्याञ्ञिदादौ । परमनैष्किकः । [ असंज्ञेति किम् ? । पञ्चकलायाः परिमाणमस्य पाञ्चकलायिकम् । 'तदस्य परिमाण'मिति ठञ् ] । असमासग्रहणं ज्ञापकं भवति—'इतः प्राक्तदन्तविधि'रिति । तेन—सुगव्यम् यवापूप्यमित्यादि । इत ऊर्ध्वं तु—* सङ्ख्यापूर्वपदानां तदन्तग्रहणं प्राग्वतेरिष्यते तच्चाऽलुकि । पारायणिकः । द्वैपारायणिकः । अलुकीति किम् ? । द्वाभ्यां

त.] माष, वाह, द्रोण, षष्टि--इति सप्त निष्कादयः । तत्र द्रोणशब्दः परिमाणवाची, षष्टिशब्दः सङ्ख्यावाची, ताभ्यां ठञि प्राप्ते वचनम् । इतरेषां तु पञ्चानामुन्मानवाचित्वेन पूर्वसूत्रेणैव ठकि सिद्धे समासप्रतिषेधार्थं वचनमित्येके । अन्ये त्वाहुः—पूर्वसूत्रे परिच्छेदकमात्रं सङ्ख्याभिन्नं परिमाणशब्देन गृह्यते । तेन सर्वेभ्यष्ठञि प्राप्ते ठग्विधानार्थं वचनम् । न चैवं 'परिमाणं तु सर्वतः' इति भेदेन व्युत्पादनं व्यर्थमिति वाच्यं, 'प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशये' इत्यादावस्योपयोगादिति पक्षद्वयमप्येतत्पदमञ्जर्यां स्पष्टम् । परिमा। अथ किमर्थम् 'असमासे' इत्युच्यते, प्रातिपदिकग्रहणे तदन्तग्रहणाऽभावादेवेष्टसिद्धेरत आह-असमासग्रहणमिति । सुगव्यमिति । 'उगवादिभ्यो यत्'। यवापूप्यमिति । विभाषा हविरपूपादिभ्यः' इति यत् । अन्नविकारत्वादेव सिद्धे 'अपूपादीनां प्रतिपदपाठसामर्थ्यात्तदन्तविधिर्नेति न्यासग्रन्थस्तूपेक्ष्यः, वृत्त्यादिग्रन्थविरोधादिति भावः । अतएव तत्सूत्रे 'अपूपादीनां केषांचित्पाठः प्रपञ्चार्थः' इत्यवोचाम । इत ऊर्ध्वमिति । ज्ञापकेन तदन्तविधौ लब्धेऽपि विशेषव्यवस्थार्थमिदम् । सङ्ख्यापूर्वपदानामिति किम् ?।

बा.] क्रीत'मित्येतत्पर्यन्तमित्यर्थः । ठगिति । पूर्वसूत्रात्तदनुवृत्तेरिति भावः । आर्हीयेष्विति । 'तदर्हती'त्येतत्पर्यन्तमनुक्रान्तेषु 'तेन क्रीत'मित्याद्यर्थेष्वित्यर्थः । नैष्किकमिति । निष्केण क्रीतमित्यर्थः । यथायोगं क्रीताद्यर्थान्वयः । समासे तु ठञ् [एव] इति । परमनिष्कादिशब्दादित्यर्थः । परिमाणान्तस्य । आदिवृद्धिप्रकरणे उत्तरपदस्येत्यधिकारे इदं सूत्रम् । शेषपूर्णेन तद्व्याचष्टे—उत्तरपदवृद्धिः स्यादिति । उत्तरपदस्य आदेरचो वृद्धिः स्यादित्यर्थः । ञिदादाविति । ञिति णिति किति चेत्यर्थः । परमनैष्किक इति । परमनिष्केण क्रीत इत्यर्थः । समासत्वाट्ठगभावे औत्सर्गिकष्ठञ् । स्वरे विशेषः । ननु निष्कादिभ्य एव ठको विधानात्तदन्तात् समासाट्ठकोऽप्रसक्तेरसमासग्रहणं व्यर्थम् । न च प्रातिपदिकग्रहणस्यापञ्चमाध्यायसमाप्तेरधिकृतत्वात्प्रातिपदिकविशेषणतया तदन्तविधौ समासादपि ठकः प्रसक्तिरस्तीति वाच्यम्, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'ति निषेधात् । निष्कादीनां च विशिष्य गृहीतत्वेन ग्रहणवत्त्वादित्यत आह—असमासग्रहणमिति । सुगव्यमिति । सु=शोभना गौः—सुगौः, 'न पूजना'दिति निषेधात् 'गोरतद्धितलुकी'ति न टच् । 'उगवादिभ्यः' इति गोशब्दान्ताद्यत् । यवापूप्यमिति । 'विभाषहविरपूपादिभ्यः' इत्यपूपान्तत्वाद्यत् । नन्व समासग्रहणाज्ज्ञापकादित ऊर्ध्वमपि तदन्तविधिः किं न स्यात् । ततश्च 'परमपारायणं वर्तयती'त्यत्रापि 'पारायणतुरायणचान्द्रायणं वर्तयती'ति ठञ् स्यादित्यत आह—इत ऊर्ध्वं त्विति । वार्तिकमिदम् । नन्वेवमपि द्विशूर्पशब्दान्तादपि 'शूर्पादञन्यतरस्या'मित्यञ् स्यादित्यत आह—तच्चाऽलुकीति । इत ऊर्ध्वं संख्यापूर्वपदानां तदन्तग्रहण-

शे.] मनुवर्तत इति । सम्बध्यत इत्यर्थः । एतेन षोडशसूत्राणामेवानुवृत्तिविषयत्वमित्यपास्तम् । परिमाणान्त । इह परिमाणशब्देन परिच्छेदकमात्रं, शाणपर्युदासात् । यद्यप्युत्तरपदस्येति सूत्रभाष्ये तदधिकारस्यात्र सूत्रे प्रयोजनाऽभावप्रतिपादनाय-'परिमाणान्तस्ये'त्यत्र सङ्ख्याया इत्यनुवृत्तिरुक्ता तथापि तदनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन परिमाणान्तस्येत्यस्याऽसङ्ख्यपूर्वपदे चारितार्थ्यम् । अत एवात्र परमनैष्किकमिति भाष्योदाहृतं सङ्गच्छते । 'सङ्ख्यायाः' इत्येतद्घटितवाक्यसाहचर्यात्परिमाणान्तस्येत्यस्याप्युत्तरपदे एव प्रवृत्तिरिति न तत्र तदधिकारप्रयोजनमिति तदाशयः । यद्यपि कालोऽपि परिच्छेदकस्तथापि तस्य नेह ग्रहणम् । 'परिमाणान्ते'त्येव सिद्धे 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे'ति संवत्सरग्रहणेन परिमाणग्रहणे कालाऽग्रहणज्ञापनात् । न च संज्ञायां वृद्ध्यर्थं संवत्सरग्रहणम् । ज्ञापकपरभाष्यप्रामाण्येन तादृशसञ्ज्ञाया अभावकल्पनात् । एतेन 'संवत्सरस्य चेत्सङ्ख्याया एवे'ति नियमार्थं तदित्यपास्तम् । भाष्यप्रामाण्येन नियमव्यावर्त्यप्रयोगाऽनभिधानेन ज्ञापकत्वस्यैवाङ्गीकारादिति दिक् । ज्ञापकमिति । न च 'परमनैष्किक'मित्यत्राऽपरिमाणत्वात्पूर्वसूत्रप्राप्तठको निषेधार्थं तदिति वाच्यम्, एतद्भाष्यप्रामाण्येन तत्र परिमाणशब्देनोन्मानस्यापि ग्रहणात् । ध्वनितश्चेदं निष्कस्य परिमाणवाचित्वात्पूर्वेणाऽप्राप्तोऽनेन ठक् विधीयत इति वदता कैयटेन । पणपादाद्यप्युन्मानरूपमेवात्र गृह्यते, ज्ञापिते तु तत्संभावनामात्रेण तच्चारितार्थ्यम् । तत्फलितमाह—इत्यतः प्रागिति । प्रत्यासत्त्या प्राग्भिकेष्वेवेदन्तदाह- सुगव्यमित्यादि । अन्यथा प्रत्ययविधित्वात्तन्निषेधः स्यात् । इदमुपलक्षणं व्यपदेशिवदित्यस्यापि, तेन गव्यसिद्धिः । व्यपदेशिवद्भावनिषेधस्य सूत्रगृहीताऽन्ताऽऽदिशब्दविषयकत्वाच्च । प्रतिपेद्धयसमर्पक-

शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीते 'शूर्पादञ्' माभूत् । किंतु ठञ् । द्विशौर्पिकम् । **अर्धात्परिमाणस्य पूर्वस्य तु वा** ।७।३।२६। अर्धात्परिमाणवाचकस्योत्तरपदस्याऽऽदेरचो वृद्धिः, पूर्वपदस्य तु वा, ञिति णिति किति च । अर्धद्रोणेन क्रीतम् आर्धद्रौणिकम् । अर्धद्रौणिकम् । **नाऽतः परस्य** ।७।३।२७। अर्धात्परस्य परिमाणाऽकारस्य वृद्धिर्न, पूर्वपदस्य तु वा, ञिदादौ । अर्धप्रस्थिकम् । आर्धप्रस्थिकम् । अतः किम् ? । आर्धकौडविकम् । तपरः किम् ? । अर्धखार्यां भवा अर्धखारी । अर्धखारीभार्य इत्यत्र 'वृद्धिनिमित्तस्ये'ति पुंवद्भावनिषेधो न स्यात् । **शताच्च ठन्यतावशते** ।५।१।२१। शतेन क्रीतं शतिकम् । शत्यम् । अशते किम् ? । शतं परिमाणमस्य शतकः सङ्घः । इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थाच्च भिद्यते । तेन ठन्यतौ न, किन्तु कनेव । असमासे

त.] इह मा भूत् । परमपारायणं वर्तयति । **द्विशूर्पमिति** । तद्धितार्थे द्विगुरम् । एषा हि प्रकृतिर्लुगन्ता न भवतीति सङ्ख्यापूर्वपदादप्यस्मात् 'शूर्पादञन्यतरस्या'मिति प्राप्तस्याऽञष्ठञो वा 'अध्यर्धपूर्वे'ति लुक् । **द्विशौर्पिकमिति** । 'परिमाणान्तस्ये' त्युत्तरपदवृद्धिः । ठञो द्विगुं प्रति निमित्तत्वाऽभावाल्लुगभावः । यद्यपि 'अध्यर्धे'ति सूत्रे द्विगोः परस्यार्हीयस्य लुगित्येव मूले व्याख्यास्यते तथापि द्विगोर्निमित्तस्येति व्याख्येयमेव । अन्यथा अत्रैव ठञो लुक्स्यात् । एतच्च 'अध्यर्धे'ति सूत्रे स्फुटीकरिष्यते । **तपरः किमिति** । दीर्घाकारस्य वृद्धौ कृतायामपि रूपे विशेषो नास्तीति प्रश्नः । **निषेधो न स्यादिति** । तथा च वृद्धिनिषेधाऽभावाय तपरकरणमावश्यकमिति भावः । इदं च पुंवद्भावनिषेधाऽभावापादनं पूर्वपदस्य वृद्ध्यभावपक्षे क्रियते । यदा तु पूर्वपदस्य पाक्षिकी वृद्धिः क्रियते, तदा फलोपधायवृद्धिनिमित्तं तद्धित इत्युत्तरपदाऽकारस्य वृद्धिनिषेधेऽपि स्यादेव पुंवद्भावनिषेध इति बोध्यम् ।

**शताच्च** । अशतेऽभिधेये आर्हीयेष्वर्थेषु ठन्यतौ स्तः । उत्तरसूत्रेण प्राप्तस्य कनोऽपवादः । चकारः 'असमासे'

बा.] मिति अनुक्तं तत्तद्धितलुकि सति न भवतीत्यर्थः । इदमपि वार्तिकमेव । **द्विशूर्पमिति** । 'तद्धितार्थ' इति द्विगुरयम् । तद्धितप्रकृतिभूतः शब्दो न लुगन्तः । अतः सङ्ख्यापूर्वपदाच्छूर्पान्तादस्मात् 'शूर्पादञन्यतरस्या'मिति प्राप्तस्य अञष्ठञो वा 'अध्यर्धे'ति लुक् । द्विशूर्पशब्दो लुगन्तः । ततश्च तस्मात् क्रीतेऽर्थे 'शूर्पादञि'ति न भवति, लुकि सति तदन्तग्रहणाऽभावादित्यर्थः । **द्विशौर्पिकमिति** । 'तेन क्रीत'मिति ठञि 'परिमाणान्तस्याऽसंज्ञाशाणयो'-रित्युत्तरपदवृद्धिः । अस्य ठञो लुक् न भवति, तस्य द्विगुनिमित्तत्वाऽभावात् । **अर्धात्परिमाणस्य** । 'परिमाणान्तस्ये' त्यस्मादुत्तरमिदं सूत्रम् । **अर्धद्रौणिकम्-आर्धद्रौणिकमिति** । द्रोणशब्दस्य निष्कादित्वेऽपि असमासग्रहणाच्च ठक् । किंतु ठञेव । **नातः परस्य** । **परिमाणाऽकारस्येति** । परिमाणवाचकावयवस्य अकारस्येत्यर्थः । **पूर्वपदस्य तु वेति** । पूर्वपदस्यादेरचस्तु वृद्धिर्वेत्यर्थः । **आर्धकौडविकमिति** । अर्धकुडवेन क्रीतमित्यर्थः । 'तेन क्रीत'मिति ठञ् । अत्र कुडवशब्दस्य परिमाणविशेषवाचिन आदेरचोरकारत्वाऽभावान्न वृद्धिनिषेधः । किन्तु 'अर्धात्परिमाणस्ये'त्युत्तरपदवृद्धिरिति भावः । **तपरः किमिति** । दीर्घस्याकारस्य वृद्धिनिषेधे फलाऽभावाद्ध्रस्वस्येति सिद्धमिति प्रश्नः । **अर्धखारीति** । **निषेधो न स्यादिति** । पूर्वपदस्य वृद्ध्यभावपक्षे वृद्धिं प्रति फलोपहितनिमित्तत्वाऽभावादिति भावः । पूर्वपदस्य वृद्धिपक्षे तु वृद्धिं प्रति फलोपहितनिमित्तत्वसत्त्वात् स्यादेव उत्तरपदाकारस्य वृद्धिनिषेधेऽपि पुंवत्त्वनिषेधः । **परिमाणान्तस्ये**त्यारभ्य एतदन्तं साम्प्रतिकम् । अथ प्रकृतं प्राग्भिकम् । **शताच्च** । आर्हीयेष्वर्थेषु शताट्ठन्यतौ स्तो नतु शतेऽर्थे इत्यर्थः । उत्तरसूत्रप्राप्तकनोऽपवादः । **शतक इति** । उत्तरसूत्रेण कन्निति भावः । नन्विह सङ्घस्यैव प्रत्ययार्थत्वात् कथम् 'अशते' इति निषेध इत्यत आह- **इहेति** । प्रत्ययार्थः सङ्घः प्रकृत्यर्थाच्छतात्परिमाणाच्च भिद्यते । गुणगुणिनोरभेद एव हि पारमार्थिकः । भेदस्तु काल्पनिक एवेति भावः । यत्र तु शतं प्रत्ययार्थः प्रकृत्यर्थाद्भिद्यते तत्र नायं निषेधः । शतेन क्रीतं शत्यं शाटक-

शे.] गोपुच्छादिषु तदन्तविधिव्यपदेशिवद्भावौ स्त एव, तन्निषेधस्य प्रत्ययविधिविषयत्वात् । अन्त्यनिषेधस्योक्तयुक्त्याऽप्यप्रवृत्तिर्बोद्धव्या । **इत ऊर्ध्वन्त्विति** । वाचनिकमेवेदम् । 'असमासे' इति सूत्रादूर्ध्वमार्हीयेऽनार्हीये चेत्यर्थः, तदाह-प्राग्वतेरिति । **तच्चालुकीति** । लुगन्तायाः प्रकृतेर्नेत्यर्थः । **क्रीतन्द्विशूर्पमिति** । न तावदेषा लुगन्ता प्रकृतिरिति सङ्ख्यापूर्वपदाच्छूर्पादञन्यतरस्यामित्यञष्ठञो वा 'अध्यर्धे'ति लुक् । **अर्धात्प** । 'जङ्गलधेनु'ति सूत्रे 'विभाषित'ग्रहस्योत्तरपदसम्बद्धत्वात्पुनर्वाग्रहणम् । **तपरः किमिति** । दीर्घस्य वृद्धिनिषेधे फलाऽभावात्प्रश्नः । **निषेधो न स्यादिति** । पूर्वपदस्य वृद्ध्यभावपक्षे वृद्धिं प्रति फलोपहितनिमित्तत्वाऽभावादिति भावः । तस्य वृद्धिपक्षे तु तामादायैव निषेधः सिद्ध्यतीति बोद्ध्यम् । **शताच्च** । उत्तरसूत्रप्राप्तकनोऽपवादोऽयम् । 'अशते' इति न प्रकृतेर्विशेषणम्, असम्भवात्, किंतु प्रत्ययार्थस्य । तत्रापि यत्र प्रकृत्यर्थशतस्यैव प्रत्ययार्थत्वं तत्रैव निषेध इष्यते । तदाह- **इहेति** । तेन शतेन क्रीतं शत्यं शाटकशतमित्यादौ न निषेधः । **वस्तुत इति** । अभेद

इत्येव । द्विशतेन क्रीतं द्विशतकम् । **सङ्ख्याया अतिशदन्तायाः कन्** ।५।१।२२। सङ्ख्यायाः कन् स्यादार्हीयेऽर्थे नतु त्यन्तशदन्तायाः । पञ्चभिः क्रीतः पञ्चकः । बहुकः । त्यन्तायास्तु—साप्ततिकः । शदन्तायाः—चात्वारिंशत्कः । **वतोरिड्वा** ।५।१।२३। वत्वन्तात्कन इड्वा स्यात् । तावतिकः । तावत्कः । **विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम्** ।५।१।२४। योगविभागः कर्तव्यः । आभ्यां कन् स्यात् । असंज्ञायां [तु] ड्वुन् स्यात् । कनोऽपवादः । विंशकः । त्रिंशकः । संज्ञायां तु—विंशतिकः । त्रिंशत्कः । **कंसाट्टिठन्** ।५।१।२५। टो ङीबर्थः । इकार उच्चारणार्थः । कंसिकः । कंसिकी । ❀ **अर्धाच्चेति वक्तव्यम्** । अर्धिकः । अर्धिकी । ❀ **कार्षापणाट्टिठन्वक्तव्यः, प्रतिरादेशश्च वा** । कार्षापणिकः । कार्षापणिकी । प्रतिकः । प्रतिकी । **शूर्पादञन्यतरस्याम्** ।५।१।२६। शौर्पम् । शौर्पिकम् । **शतमानविंशतिकसहस्रवसनादण्** ।५।१।२७। एभ्योऽण् स्यात् । ठञ्ठकनामपवादः । शतमानेन क्रीतं शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् । अध्यर्ध-

---

त.] इत्यस्यानुकर्षणार्थः । **द्विशतकमिति** । द्वौ च शतं च तेषां समाहारो द्विशतम् । ततः कन् 'प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकी'त्यनया इष्टया समासादपि प्राप्नोतीति 'असमासे' इत्येतस्यानयनमुन्वितमिति भावः । **त्यन्तशदन्ताया इति** । त्यन्तसहिता शदन्तेत्युत्तरपदलोपी समासः । **पञ्चक इति** । लौकिक्याः सङ्ख्याया उदाहरणम् । **बहुक इति** । पारिभाषिक्याः । **साप्ततिक इति** । ठञो ञित्त्वादादिवृद्धिः । ठस्येकादेशे 'यस्येति चे'तीकारलोपः । अर्थवतस्तिशब्दस्य ग्रहणाद्गत्यवयवस्य तिशब्दस्य पर्युदासो न भवति । कतिकः । **चात्वारिंशत्क इति** । 'इसुसुक्तान्तात्कः' । **वतोरिड्वा** । 'वतोः' इति पञ्चमी, सा च 'क'न्निति प्रथमायाः षष्ठीं कल्पयतीत्याह— **वत्वन्तात्कन इति** । **तावतिक इति** । 'यत्तदेतेभ्यः' इति वतुप् । 'आ सर्वनाम्नः' इत्यात्वम् । **कर्तव्य इति** । अन्यथा त्यन्तशदन्तयोः पर्युदासाद्विंशतित्रिंशद्भ्यां कन् दुर्लभ इति भावः । **विंशक इति** । 'ति विंशतेर्डिती'ति तिशब्दस्य लोपः । **अर्धिक इति** । अर्धशब्दस्य कार्षापणार्द्धे रूढत्वाद्भागवदपेक्षयाऽत्राऽसामर्थ्यं नाशङ्क्यम् । प्रकरणादिवशेन भागविशेषे विज्ञाते सति नास्त्य[स्याऽ]सामर्थ्यमिति बोध्यम् । एतेनाऽर्धशब्दस्य सापेक्षत्वात्तदन्तादेव टिठन्, द्रौणार्धिकः प्रस्थार्धिक इति केषांचिदुक्तिः परास्ता । **शूर्पादञ्** । शूर्पशब्दस्य परिमाणवाचित्वाट्ठञि प्राप्ते तदपवादत्वेनाऽञ् पक्षे विधीयते । **ठञ्ठकनामिति** । शतमानं परिमाणं, ततष्ठञ् प्राप्तः । विंशत्या क्रीतं विंशतिकम् ।

---

बा.] शतम् । अत्र हि निष्कशतं प्रकृत्यर्थः । शाटकशतं तु प्रत्ययार्थः । एतत्सर्वं भाष्ये स्पष्टम् । **असमास इत्येवेति** । चकारस्य तदनुकर्षणार्थत्वादिति भावः । **द्विशतेनेति** । द्विगुणशतेनेत्यर्थः । द्विगुसमासे तु द्विशतशब्दस्य लुगन्ततया लुकि तदन्तविधिनिषेधात् प्राप्तिरेव नेति बोध्यम् । **सङ्ख्यायाः** । तिश्च शश्च तिशतौ, तौ अन्ते यस्याः सा तिशदन्ता, न तिशदन्ता अतिशदन्ता । द्वन्द्वगर्भबहुव्रीहिगर्भो नञ्तत्पुरुषः । **साप्ततिक इति** । सप्तत्या क्रीत इत्यर्थः । 'तेन क्रीत'मिति ठञ् । **चात्वारिंशत्क इति** । चत्वारिंशता क्रीत इत्यर्थः । 'तेन क्रीत'मिति ठञष्ठस्य तकारात्परत्वात्कः । **वतोरिड्वा** । 'वतो'रित्यनेन प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते । 'क'न्निति प्रथमान्तमनुवृत्तम्, 'वतो'रिति पञ्चमी 'तस्मादित्युत्तरस्ये'ति परिभाषया षष्ठ्यन्तं प्रकल्पयति । तदाह—**वत्वन्तादिति** । **तावतिक इति** । तावता क्रीत इत्यर्थः । 'यत्तदेतेभ्यः' इति वतुप् । 'बहुगणवतु' इति सङ्ख्यासंज्ञायां 'सङ्ख्याया अतिशदन्तायाः' इति कन्, तस्य इट्, टित्त्वादाद्यवयवः । **विंशतित्रिंशद्भ्यां** । नन्वेकसूत्रत्वे विंशतित्रिंशद्भ्यां ड्वुनेव स्यात्, कन् तु न स्यात्, 'अतिशदन्ताया' इति निषेधादित्यत आह—**योगेति** । 'विंशतित्रिंशद्भ्या'मित्येकं सूत्रम् । 'ड्वुन्नसंज्ञाया'मित्यपरमित्यर्थः । आद्यं व्याचष्टे—**आभ्यां कन्स्यादिति** । 'सङ्ख्याया अतिशदन्तायाः' इत्यतः कनित्यनुवर्तत इति भावः । द्वितीयसूत्रे 'विंशतित्रिंशद्भ्या'मित्यनुवृत्तिमभिप्रेत्याह—**असंज्ञायामिति** । 'आभ्या'मिति शेषः । **विंशक इति** । विंशत्या क्रीत इत्यर्थः । ड्वुन् । अकादेशः । 'ति विंशतेर्डिती'ति तिशब्दस्य लोपः । **त्रिंशक इति** । ड्वुन् । अकादेशः । 'टे'रिति टिलोपः । आद्यसूत्रं परिशेषात्संज्ञायामित्यभिप्रेत्याह—**संज्ञायां त्विति** । **कंसात्** । इत्यादि स्पष्टम् । **शूर्पादञ्** । 'आर्हीयेष्वर्थेष्वि'ति शेषः । शूर्पशब्दस्य

---

शे.] एव पारमार्थिको, भेदस्तु काल्पनिक एवेति भावः । **द्विशतेनेति** । द्विगुणशतेनेत्यर्थः । तेन द्विगुत्वाऽभावात्कनो न लुक् । द्वाभ्यां शताभ्यां क्रीतमित्यर्थकलुगन्तद्विशतशब्दात्त्वलुकीति तदन्तविधिनिषेधात्प्राप्तिरेव नेति बोद्धव्यम् । **सङ्ख्याया अति** । सूत्रे द्वन्द्वगर्भबहुव्रीहिगर्भो नञ्तत्पुरुषः । अन्तग्रहणमेकसप्तत्या क्रीतमित्यत्र निषेधार्थम्, अन्यथा प्रत्ययग्रहणपरिभाषया न स्यादिति हरदत्तः । **वतोरि** । अत्रेट् न प्रत्ययो, व्याख्यानात् । **योगविभाग इति** । अन्यथा त्रिंशतः शदन्तात्वाद्विंदशशब्दस्य विंशादेशस्तिप्रत्यय इति पक्षे विंशतेस्त्यन्तत्वान्न स्यादिति भावः । **विंशके**—'तिर्विंशतेर्डिती'ति लोपे पररूपम् । **त्रिंशके**—'टेः' इति टिलोपः । **अर्धिक इति** । अस्य भागवदपेक्षत्वेऽपि नित्यसापेक्षत्वान्नाऽसामर्थ्यम् । **अध्यर्धम्** । द्विगुसाहचर्याद्ध्यर्ध-

**पूर्वद्विगोर्लुगसंज्ञायाम्** ।५।१।२८। अध्यर्धपूर्वाद्द्विगोश्च परस्यार्हीयस्य लुक् स्यात् । अध्यर्धकंसम् । द्विकंसम् । संज्ञायां तु-पाञ्चकलापिकम् । **विभाषा कार्षापणसहस्राभ्याम्** ।५।१।२९। लुग्वा स्यात् । अध्यर्द्ध-

---

त.] संज्ञाशब्दोऽयम् । असंज्ञायां हि 'विंशतित्रिंशद्भ्या'मिति ड्वुन् स्यात् । संज्ञा च यदि परिमाणस्य, तदा ठञ् प्राप्तः । अर्थान्तरस्य चेत्तर्हि ठक् प्राप्तः । वसनशब्दात्तु ठगेव । सहस्रशब्दस्य सङ्ख्यावाचित्वात्ततः 'सङ्ख्याया अतिशदन्तायाः' इति कन्प्राप्त इति विवेकः । **अध्यर्धपूर्व** । अध्यारूढमर्धं यस्मिन् तदध्यर्धम् । 'प्रादिभ्यो धातुजस्ये'त्युत्तरपदलोपः । अध्यर्धशब्दः पूर्वो यस्मिन्निति बहुव्रीहिगर्भे बहुव्रीहौ कृते अध्यर्धपूर्वं च द्विगुश्चेति द्वन्द्वः । सौत्रं पुंस्त्वम् । द्विगोरिति पञ्चमी न तु षष्ठीत्याशयेन व्याचष्टे—**अध्यर्धपूर्वादित्यादि** । एतच्च वृत्तिकाररीत्या व्याख्यातम् । अत्र वार्तिकं 'द्विगोर्लुकि तन्निमित्तग्रहणम्' । द्विगोर्निमित्तं यस्तद्धितस्तस्य लुगिति वक्तव्यम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीतं द्विशौर्पिकमिति । पूर्वोक्तोदाहरणे तु ठञो लुङ् माभूदिति । ननु द्वयोः शूर्पयोः समाहारो द्विशूर्पी, तया क्रीतमिति विग्रहे द्विशूर्पमिति रूपं न स्यात् । तद्धितस्यात्र द्विगोरनिमित्ततया 'अध्यर्धे'ति लुकोऽप्रवृत्तेः । 'द्विगोः परस्ये'ति व्याख्यायां तु नः सिद्धमिष्टमिति चेन्मैवम् । 'अर्थविशेषाऽसंप्रत्यये अतन्निमित्तादपी'ति वचनान्तरस्य वार्तिककृतैवोक्तत्वात् । यत्र तद्धितार्थद्विगुना सहार्थो न भिद्यते तत्र स तद्धितो यस्य निमित्तं न भवति तस्मादपि द्विगोः परस्य लुगिति वक्तव्यमिति तस्यार्थः । एवं च द्विशूर्पमिति तद्धितार्थद्विगुना सह द्विशूर्प्या क्रीतमित्यस्यार्थो न भिद्यते इति समाहाराद्द्विगोः परस्य तद्धितस्य लुग् भवत्येवेति न काप्यनुपपत्तिः । वस्तुतस्तु सूत्रे 'द्विगो'रिति षष्ठीमाश्रित्य 'द्विगोर्निमित्तं यस्तद्धितः' इति व्याख्याय प्रथमं वार्तिकं प्रत्याख्यातुं शक्यम् । 'द्विशूर्प्या क्रीत'मिति विग्रहे तु द्विशूर्पादेव प्रत्ययो भवति, अव्यभिचारिन्यायात्, न तु द्विशूर्पीशब्दादित्याश्रित्य द्वितीयमपि प्रत्याख्यातुं शक्यम् । नन्वध्यर्द्धशब्दः संख्यावाच्येव, तथा च लोके गण्यते 'एकोऽध्यर्धो द्वौ' इति । अतएव अध्यर्धकमिति कन्, अध्यर्धकंसमिति तद्धितार्थे द्विगुः, अध्यर्द्धसांवत्सरिकमित्यादौ 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' त्युत्तरपदवृद्धिश्च भवति, तत्किमध्यर्धपूर्वग्रहणेनेति चेत् । अत्राहुः—'सङ्ख्याकार्यमेतस्य किंचिन्ने'ति ज्ञापनार्थमिदम् । तेन कन्द्विगुसमासोत्तरपदवृद्धिभ्योऽन्यत्र भवति । तद्यथा—अध्यर्धं करोति । नेह कृत्वसुच् । यः सकृत्फलान्तां क्रियामभिनिर्वर्त्य पुनस्तामेव कुर्वन्मध्ये निवर्तते स एवमुच्यते इति । **पाञ्चकलायिकमिति** । पञ्च कलायाः परिमाणमस्येति विग्रहे 'तद्धितार्थे' इति समासः । 'तदस्य परिमाण'मिति ठञ् । एवं पाञ्चलोहितिकमपि बोध्यम् । पञ्च लोहिन्यो गुञ्जाः परिमाणमस्येति विग्रहे पूर्ववत्समासतद्धितौ । 'भस्याऽढे तद्धिते' इति पुंवद्भावाल्लोहिनीशब्दस्येकारनकारयोरभावः । परिमाणविशेषस्य नामधेये एते । असंज्ञाग्रहणं प्रत्ययान्तस्य विशेषणं, न तु द्विगोः । एतच्च वृत्तिकृता सूत्राशयमनुरुध्य वर्णितमिति इहापि तथैवोक्तम् । भाष्यवार्तिकयोस्त्वसंज्ञाग्रहणं प्रत्याख्यातम् । तथा हि-

---

बा.] परिमाणवाचित्वाट्ठञि प्राप्ते तदपवादोऽञ् पक्षे विधीयते । पक्षे ठञ् । **शतमान** । **शातमानमिति** । अत्र ठञ् प्राप्तः । **वैंशतिकमिति** । विंशत्या क्रीतं विंशतिकम् । संज्ञाशब्दोऽयम् । 'विंशतित्रिंशद्भ्या'मिति योगविभागात्कन् । विंशतिकेन क्रीतमिति विग्रहः । तत्र परिमाणविशेषस्य संज्ञा चेट्ठञ् प्राप्तः, अन्यस्य संज्ञा चेट्ठक् प्राप्तः । **साहस्रमिति** । सहस्रेण क्रीतमिति विग्रहः । 'सङ्ख्याया अतिशदन्तायाः' इति कन् प्राप्तः । **वासनमिति** । वसनेन क्रीतमिति विग्रहः । अत्र ठक् प्राप्तः । **अध्यर्धपूर्व** । अध्यर्धशब्दः पूर्वो यस्य स अध्यर्धपूर्वः, सच द्विगुश्चेति समाहारद्वन्द्वात्पञ्चमी । सौत्रं पुंस्त्वम् । तदाह—**अध्यर्धपूर्वाद्द्विगोश्चेति** । **आर्हीयस्येति** । प्रत्यासत्तिलभ्यम् । **अध्यर्धकंसमिति** । अध्यारूढमर्द्धं यस्मिन् तत् अध्यर्धम् । 'प्रादिभ्यो धातुजस्ये'ति बहुव्रीहौ पूर्वखण्डे उत्तरपदलोपः । सार्धमित्यर्थः । अध्यर्धेन कंसेन क्रीतमिति विग्रहः । तद्धितार्थे द्विगुः । 'संख्याया अतिशदन्तायाः' इति कन् । तस्यानेन लुगिति भावः । **द्विकंसमिति** । द्वाभ्यां कंसाभ्यां क्रीतमिति विग्रहः । ठको लुक् । नच अध्यर्धकंसमित्यत्रापि द्विगुत्वादेवं सिद्धमिति वाच्यं, किंचित्संख्याकार्यं कृत्वसुजादिकमध्यर्धशब्दस्य नेति ज्ञापनार्थत्वात् । **पाञ्चकलायिकमिति** । पञ्च कलायाः परिमाणमस्येति विग्रहे 'तद्धितार्थ' इति द्विगुः । 'तदस्ये'तिठञ् । सङ्ख्यासंज्ञासूत्रभाष्ये तु 'अध्यर्धपूर्वा'दिति पाठो दृश्यते । नच द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं, तेन क्रीतं द्विशौर्पिकमिति पूर्वोक्तो-

---

शे.] पूर्वोऽप्यत्र समानाधिकरणसमास एव गृह्यते । संख्यासञ्ज्ञासूत्रे भाष्येऽध्यर्द्धपूर्वाद्द्विगो'रिति पाठो दृश्यते । द्विगोश्च परस्येति । 'तन्निमित्तस्ये'ति शेषः । समाहारद्विगोर्द्विशूर्प्या क्रीतमित्यर्थे त्वनभिधानात्प्रत्यय एव नेति बोद्धव्यम् । असञ्ज्ञायामिति । द्विगुविशेषणं । पञ्चकलायाः परिमाणमस्य पञ्चकलायं । कृतवद्धितलुगियं कस्य चित्सञ्ज्ञा, तत उत्पन्नस्य न लुक् । तस्य द्विगुनिमित्तत्वाऽभावाल्लुकोऽप्राप्तथा भाष्ये प्रत्याख्यातमिदम् । **विभाषा का।** कार्षापणसहस्रान्ताद्द्विगोरध्यर्द्धपूर्वाच्चेत्यर्थः ।

कार्षापणम् । अद्ध्यर्धकार्षापणिकम् । द्विकार्षापणम् । द्विकार्षापणिकम् । औपसंख्यानिकस्य टिठनो लुक् । पक्षे अध्यर्धप्रतिकम् । द्विप्रतिकम् । अध्यर्धसहस्रम् । अध्यर्धसाहस्रम् । द्विसहस्रम् । द्विसाहस्रम् । **द्वित्रिपूर्वान्निष्कात्** ।५।१।३०। लुग्वा स्यात् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् । *** बहुपूर्वाच्चेति वक्तव्यम्** । बहुनिष्कम् । बहुनैष्किकम् । **बिस्ताच्च** ।५।१।३१। द्वित्रिबहुपूर्वाद्बिस्तादार्हीयस्य लुग्वा स्यात् । द्विबिस्तम् । द्विबैस्तिकमित्यादि । **विंशतिकात्खः** ।५।१।३२। अध्यर्धपूर्वाद्द्विगोरित्येव । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् । **खार्या ईकन्** ।५।१।३३। अध्यर्धखारीकम् । द्विखारीकम् । *** केवलायाश्चेति वक्तव्यम्** । खारीकम् । [ ***काकिण्याश्चोपसङ्ख्यानम्** । अध्यर्द्धकाकिणीकम् । द्विकाकिणीकम् । ] **पणपादमाषशताद्यत्** ।५।१।३४। अध्यर्धपण्यम् । द्विपण्यम् । अध्यर्धपाद्यम् । द्विपाद्यम् । इह 'पादः प'दिति न, 'यस्ये'ति लोपस्य स्थानिवद्भावात् । 'पद्यत्यतदर्थे' इत्यपि न, प्राण्यङ्गार्थस्यैव तत्र ग्रहणात् ।

त.]द्विगुविशेषणमसंज्ञाग्रहणम् । पञ्चकलायपञ्चलोहितशब्दौ च द्विगू कृततद्धितलुकावेव संज्ञे । यस्तु ताभ्यामुत्पद्यते ठन् स श्रूयते एव, द्विगोरनिमित्तत्वेन तस्य लुगभावादिति । **विभाषा । टिठनो लुगिति** । प्रत्यादेशपक्षे तु लुङ् न भवति, प्रत्यादेशस्य प्रत्ययसंनियोगशिष्टत्वादिति बोध्यम् । **अध्यर्धसहस्रमिति** । 'शतमानविंशतिके'ति विहितस्याऽणो लुक् । तदभावपक्षे तु 'सङ्ख्यायाः संवत्सरसंख्यस्य चे'त्युत्तरपदवृद्धिः । अध्यर्धशब्दः सङ्ख्यावाचीत्यधुनैवोक्तत्वात् । **द्वित्रिपूर्वात्** । अध्यर्धग्रहणमुत्तरार्थमनुवृत्तमपीह न संबध्यते । 'द्विगो'रिति तु संबध्यत एव षष्ठीसमासं व्यावर्तयितुम् । अत्र च व्याख्यानमेव शरणम् । 'द्वित्रिभ्यां निष्का'दित्येव सिद्धे पूर्वग्रहणं चिन्त्यप्रयोजनमिति हरदत्तः । **द्विनैष्किकमिति** । 'प्राग्वतेष्ठञ्' । मतान्तरे तु ठगिति मनोरमायाम् । "-निष्कादिभ्यः समासे ठगभावात्, 'परिच्छेदकमात्रं गृह्यते' इति मतान्तरेऽपि ठञेव भवति, तन्मते उन्मानस्यापि परिमाणत्वात् 'असोपुच्छे'-त्यादिना पर्युदस्तत्वाट्ठगभावे निष्कादिभ्यष्ठञि प्राप्ते । असमासे ठग्विधानेऽपि समासे ठञ एव प्राप्तत्वात्–" इत्यन्ये । 'परिमाणान्तस्ये'त्युत्तरपदवृद्धिः । 'द्विगो'रिति संबन्धान्नेह लुक् । द्वयोर्निष्को द्विनिष्कस्तेन क्रीतं द्विनैष्किकम् । 'अध्यर्धपूर्वे'त्यसंबन्धादध्यर्धनैष्किकमित्यत्राप्यनेन लुङ् न भवति । **बिस्ताच्च** । चकारेण 'द्वित्रिपूर्वा'दित्यत्र पूर्वादित्यनुकृष्यते । तत्फलं तु 'चानुकृष्टं नोत्तरत्रे'त्युत्तरत्रानुवृत्त्यभावः । **विंशतिकात्खः** । 'शतमानविंशतिके'त्यणि प्राप्ते, तस्य च लुकि प्राप्ते खोऽत्र विधीयते । **खार्याः** । 'तदस्य परिमाण'मिति ठञि प्राप्ते तस्य च लुकि प्राप्ते ईकन्विधीयते । कन्विधौ 'केऽणः' इति ह्रस्वः स्यात् । इकन्विधावपि 'यस्येति चे'ति लोपादिष्टं न सिध्यतीति भावः । **प्राण्यङ्गार्थस्यैवेति** । अयं भावः—'पादस्य पदाज्यातिगोपहतेषु' इत्यत्र प्राण्यङ्गस्यैव हि पादस्य ग्रहणं, तस्यै-

बा.]दाहरणे ठञो लुक् स्यादिति वाच्यं, द्विगुनिमित्तस्यार्हीयस्य लुगिति व्याख्यानादित्यलम् । **विभाषा । लुग्वेति** । 'आर्हीयस्ये'ति शेषः । **औपसंख्यानिकस्येति** । 'कार्षापणाट्टिठन् वक्तव्यः' इत्युक्तस्येत्यर्थः । **अध्यर्धप्रतिकमिति** । प्रत्यादेशस्य टिठन्संनियोगशिष्टत्वात्प्रत्यादेशपक्षे टिठनो न लुगिति भावः । **अध्यर्धसहस्रमिति** । 'शतमाने'ति विहितस्याऽणो लुक् । लुगभावे तु 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य चे'त्युत्तरपदवृद्धिः । **द्वित्रिपूर्वान्निष्कात् । लुग्वा स्यादिति** । 'आर्हीयस्ये'ति शेषः । **द्विनिष्कमिति** । ठञो लुक्, समासाट्ठकोऽसंभवात् । **बिस्ताच्च** । 'आर्हीयस्य लुग्वे'ति शेषः । **द्विबिस्तं द्विबैस्तिकमिति** । द्वाभ्यां बिस्ताभ्यां क्रीतमिति विग्रहः । ठञः पाक्षिको लुक् । **इत्यादीति** । बहुबिस्तं बहुबैस्तिकमित्युदाहार्यम् । 'बहुपूर्वाच्चे'ति वार्तिकस्य अत्राप्यनुवृत्तेर्भाष्ये उक्तत्वात् । **विंशतिकात्खः । अध्यर्धपूर्वाद्द्विगोरित्येवेति** । पूर्वसूत्रयोरध्यर्धपूर्वादित्यस्याऽसंभवाद्द्विगोरित्यस्य प्रयोजनाऽभावादननुवृत्तावपि इह तदनुवर्तत इति भावः । **अध्यर्धविंशतिकीनमिति** । अध्यर्धविंशत्या क्रीतमध्यर्धविंशतिकम् । 'विंशतित्रिंशद्भ्यां'मिति योगविभागात्कन् । अध्यर्धविंशतिकेन क्रीतमिति विग्रहः । **द्विविंशतिकीनमिति** । द्वाभ्यां विंशतिकाभ्यां क्रीतमिति विग्रहः । **खार्या ईकन्** । 'अध्यर्द्धपूर्वा'दिति, द्विगोरिति चानुवर्तत इत्यभिप्रेत्योदाहरति—**अध्यर्धखारीकं, द्विखारीकमिति** । 'तदस्य परिमाण'मिति ठञि तस्य च लुकि प्राप्ते ईकन् । **केवलायाश्चेति** । 'खार्या' इति शेषः । **पणपाद** । 'अध्यर्धपूर्वा'दिति, द्विगोरिति चानुवर्तत इत्यभिप्रेत्योदाहरति–**अध्यर्धपण्यम् । द्विपण्यमिति** । अध्यर्धपणेन क्रीतमित्यर्थः । **द्विपाद्यमिति** । द्वाभ्यां पादाभ्यां चतुर्थांशाभ्यां क्रीतमिति विग्रहः । यति 'यस्येति चे'त्यकारलोपः । **स्थानिवद्भावादिति** । 'अचः

शे.] **अध्यर्द्धप्रतिकमिति** । आदेशस्य प्रत्ययसन्नियोगशिष्टत्वान्न तत्पक्षे प्रत्ययलुगिति भावः । **द्वित्रिपू** । पूर्वग्रहणं स्पष्टार्थम् । अत एव द्वित्रिभ्यामिति यदुच्यते तद् द्वैयोग्यमिति भाष्ये उक्तम् । **द्विनिष्कमिति** । ठञो लुक् । **बहुपूर्वादिति** । इदं 'बिस्ताच्चे'ति सूत्रेऽपि बोद्धव्यमिति भाष्ये स्पष्टम् । **विंशतिकात्खः** । अत्र 'द्वित्र्यादिपूर्वा'दिति न सम्बध्यते । **खार्या ई**।

**शाणाद्वा ।५।१।३५।** यत्स्यात् । पक्षे ठञ् । तस्य लुक् । अध्यर्धशाण्यम् । अध्यर्धशाणम् । **द्वित्रिपूर्वादण् च [५।१।३६।]** शाणादित्येव । चाद्यत् । तेन त्रैरूप्यम् । 'परिमाणान्तस्याऽसंज्ञाशाणयो'रिति पर्युदासाद्वाद्विवृद्धिरेव । द्वैशाणम् । द्विशाण्यम् । द्विशाणम् । इह ठञादयस्त्रयोदश प्रत्ययाः प्रकृतास्तेषां समर्थविभक्त्योऽर्थाश्चाकाङ्क्षितास्त इदानीमुच्यन्ते । **तेन क्रीतम् ।५।१।३७।** ठञ्-गोपुच्छेन क्रीतं गौपुच्छिकम् । साप्तति-

त.]वाज्यातिभिर्गतिवचनैः संबन्धसंभवात् । तथा च 'पद्यती'त्यादावपि तस्यैवानुवृत्तिः । इह तु पणमाषाभ्यां साहचर्यात्परिमाणवाचिनो ग्रहणमिति । **पक्षे ठञिति ।** यद्यपि शाण उन्मानम्, तथापि 'आर्हा'दिति सूत्रे परिमाणग्रहणेन परिमीयते परिच्छिद्यतेऽनेनेति योगवृत्त्या परिच्छेदकमात्रं गृह्यते' इति वादिनां मते अस्यापि पर्युदासाट्ठगभावे ठञिति भावः । मुख्यमते तु ठगेव बोध्यः । **शाणाद्वेति सूत्रे 'शताच्चेति वक्तव्यं'** । पूर्वेण नित्यं प्राप्ते विकल्पार्थम् । एवं च पूर्वसूत्रे शतग्रहणमकृत्वा शतशाणाभ्यां वेत्येव वक्तुं युक्तमित्याहुः । अध्यर्धशत्यम् । अध्यर्धशतम् । पञ्चशत्यम् । पञ्चशतम् । यदभावे सङ्ख्यालक्षणस्य कनो लुक् । 'शताच्च ठन्यतौ' इति तु न प्रवर्तते, तत्राऽसमासग्रहणस्यानुवर्तनात् । **द्वित्रिपूर्वादण्च** । वार्तिकमिदं वृत्तिकृता सूत्रेषु प्रक्षिप्तम् । भाष्यादिप्रामाण्याच्छतग्रहणमिह न संबध्यत इत्याशयेनाह—**शाणादित्येवेति ।** न्यासकृता त्वण्विधायके वार्तिके सूत्रत्वभ्रमेण व्याख्यातम्—'शतशाणाभ्यां वे'ति सूत्रयितव्ये 'पणपादे'ति पूर्वसूत्रे शतग्रहणं क्रियते तस्येदं फलं,-शतशब्दः स्वरितत्वेनानुवर्तमानोऽपि 'शाणाद्वा' इत्यत्रैव संबध्यते, तदुत्तरसूत्रे 'द्वित्रिपूर्वादण् चे'त्यत्र तु न संबध्यते, तेन शतशब्दादण् नेति । तदिदं सामर्थ्यवर्णनमण्विधायकं यदि सूत्रं स्यात्तदा सङ्गच्छते नान्यथेत्यास्तां तावत् । **त्रैरूप्यमिति** । तदेतद्दर्शयति—**द्वैशाणमित्यादिना ।** अण्येकं, ठञो लुकि द्वितीयं, यति तृतीयम् । **ठञादयस्त्रयोदशेति** । ननु एकादशैव प्रत्ययाः प्रकृताः, सूत्रभेदेन विहितत्वाद्यत्प्रत्ययस्य द्विर्गणने तु द्वादशेति त्रयोदशेत्येतदुरुपपादमेव । न च 'शूर्पादञन्यतरस्या'मित्यन्यतरस्याङ्ग्रहणलभ्यठञमादाय त्रयोदशत्वं सूपपादमिति वाच्यं, तुल्यन्यायेन 'शाणाद्वे'ति सूत्रलभ्ययट्ठञोर्ग्रहणेन पञ्चदशत्वप्रसङ्गात् । नापि सूत्रोपात्तैर्द्वादशभिः सह 'द्वित्रिपूर्वादण् चे'ति वार्तिकोपात्ताऽण्प्रत्ययस्य गणनेन निर्वाहः । उक्तरीत्या 'कंसाट्टिठ'न्निति सूत्रे 'अर्धाच्चेति वक्तव्यं', 'कार्षापणाट्टिठन् वक्तव्यः' इत्यादिवार्तिकोक्तटिठन्प्रत्ययस्यापि ग्रहणप्रसङ्गादिति चेत् । अत्राहुः—'कंसाट्टिठन्' इति सूत्रस्थ एव टिठन् अध्यर्धकार्षापणशब्दाभ्यां परामृष्ट इति स न भिद्यते । 'द्वित्रिपूर्वादण् चे'ति स वार्तिकस्योऽण् तु भिद्यते, 'शतमानविंशतिके'त्यणो दूरस्थत्वेन परामर्ष्टुमशक्यत्वादिति । **तेन क्रीतम्** । तेनेति तृतीयान्तात्क्रीतार्थे यथाविहितं प्रत्ययाः स्युः । **ठञिति** । 'आर्हा'दिति सूत्रे 'अगोपुच्छे'त्यादिपर्युदासाट्ठगभावे गोपुच्छसप्ततिप्रस्थेभ्यष्ठञ् भवतीत्यर्थः । ननु देव-

बा.]परस्मि'न्नित्यनेनेति भावः । **प्राण्यङ्गार्थस्येति** । व्याख्यानादिति भावः । इह सूत्रे पणमाषसाहचर्यात्पादशब्दोऽपि परिमाणविशेषवाची गृह्यते । **शाणाद्वा । पक्षे ठञिति** । आर्हादिति ठग्विधौ परिमाणपर्युदासाट्ठञिति भावः । **तस्य लुगिति** । ठञ इति भावः । अत्र अध्यर्धपूर्वादिति द्विगोरिति चानुवर्तत इत्यभिप्रेत्य अध्यर्धपूर्वादुदाहरति—**अध्यर्धशाण्यम् अध्यर्धशाणमिति** । यति ठञो लुकि च रूपम् । अथ शाणान्तद्विगोरुदाहरणं वक्ष्यन्विशेषमाह—**द्वित्रिपूर्वादण् च** । वार्तिकमिदम् । **चाद्यदिति** । पाक्षिको यत् चकारेण समुच्चीयत इत्यर्थः । ततश्च यतोऽभावे ठञपि लभ्यते । तदाह—**तेन त्रैरूप्यमिति** । अणा, यता, ठञा चेत्यर्थः । अणि परिमाणान्तस्येत्युत्तरपदवृद्धिमाशङ्क्याह—**परिमाणान्तस्येति** । **ठञादयस्त्रयोदशेति** । 'प्राग्वते'रिति **ठञ्**, 'आर्हा'दिति **ठक्**, 'शताच्चे'ति **ठन्यतौ**, 'संज्ञायाः' इति **कन्**, 'विंशतित्रिंशद्भ्या'मिति **ड्वुन्**, 'कंसा'दिति **टिठन्**, 'शूर्पा'दित्यञ्, 'शतमाने'त्यण्, 'विंशतिकात्खः' इति **खः**, खार्याः' इति **ईकन्**, 'पणपादे'ति **यत्**, 'द्वित्री'ति वार्तिकोक्ताऽण् । इत्येवं त्रयोदशेत्यर्थः । **प्रकृता इति** । प्रक्रान्ता इत्यर्थः । **समर्थविभक्तय इति** । 'समर्थानां प्रथमाद्वे'ति सूत्रलभ्यसमर्थविशेषणीभूतप्रथमोच्चारिततत्तद्विभक्तय इत्यर्थः । **तेन क्रीतम्** । अस्मिन्नर्थे तृतीयान्ताद्यथाविहितं ठञादयः स्युरित्यर्थः । **ठञिति** । 'उदाह्रियते' इति शेषः । **गौपुच्छिकमिति** । 'अगोपुच्छे'ति पर्युदासाट्ठगभावे औत्सर्गिकष्ठञिति भावः । **साप्ततिकमिति** । सप्तत्या क्रीतमित्यर्थः । 'अगोपुच्छसङ्ख्ये'ति पर्यु-

शे.]दीर्घोच्चारणं स्पष्टार्थम् । कन्प्रत्यये 'केऽणः' इति ह्रस्वेन चासिद्धे इकारोच्चारणसामर्थ्येन लोपबाधपूर्वकं सवर्णदीर्घकल्पने गौरवात् । खारीशब्दस्य स्वपर्यायपुंलिङ्गखारशब्दप्रकृतिकत्वे पुंवत्त्वेनेष्टाऽसिद्धेश्च । **पणपादमा** । पणादिसाहचर्यात्पादशब्दः परिमाणवाच्यत्र । **त्रयोदशेति** । ठञ्ठकौ । ठन्यतौ । कन्ड्वुन्टिठनः । अञ् । शतमानादण् । खं ईकन् पणादियत् । द्वित्रीतिवार्तिकोक्तं ण्चेत्येवन्त्रयोदशेत्यर्थः । अनुवर्तनेन तु नान्यत्वमितिभावः । **तेन क्रीतम्** । क्रयो नाम द्रव्यदानपूर्वकं वस्त्वन्तरग्रहणम् । तेनेत्यनेन च प्रत्यासत्त्या क्रयघटकं द्रव्यमेव गृह्यते । सोऽयमर्थस्त्वनेन तु सिद्धिः, यस्य मूल्यं न भवति, अथ च

कम् । प्रास्थिकम् । ठक्–नैष्किकम् । **इद्गोण्याः** ।१।२।५०। गोण्या इत्स्यात्तद्धितलुकि । लुकोऽपवादः । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः । **तस्य निमित्तं संयोगोत्पातौ** ।५।१।३८। संयोगः संबन्धः । उत्पातः=शुभाशुभसूचकः । शतिकः शत्यो वा धनपतिसंयोगः । शतिकं शत्यं वा दक्षिणाक्षिस्पन्दनम् । शतस्य निमित्तमित्यर्थः । ॐ **वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसङ्ख्यानम्** । वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । ॐ **संनिपाताच्चेति वक्तव्यम्** । सान्निपातिकम् । **गोद्व्यचोऽसङ्ख्यापरिमाणाश्वादेर्यत्** ।५।१।३९। गोर्निमित्तं संयोग उत्पातो वा गव्यः । द्व्यचः–धन्यः । यशस्यः । स्वर्ग्यः । गोद्व्यचः किम् ? । विजयस्य वैजयिकः । असंख्येत्यादि किम् ? । पञ्चानां-पञ्चकम् । सप्तकम् । प्रास्थिकम् । खारीकम् । अश्वादि–आश्विकम् । आश्मिकम् । ॐ **ब्रह्मवर्चसादुपसङ्ख्यानम्** । ब्रह्मवर्चस्यम् । **पुत्राच्छ च** ।५।१।४०। चाद्यत् । पुत्रीयः । पुत्र्यः । **सर्वभूमिपृथिवीभ्यामणञौ** ।५।१।४१। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः । पार्थिवः । सर्वभूमिशब्दोऽनुशतिकादिषु पठ्यते । **तस्येश्वरः** ।५।१।४२। तत्र

---

त.] दत्तेन क्रीतं,[पाणिना क्रीतं,]संतोषेण क्रीतमित्यादावतिप्रसङ्ग इति चेत् । अत्राहुः—करणे तृतीयैवेह समर्थविभक्तिः, सापि मूल्यद्रव्यसमर्पकाच्छब्दादुत्पन्ना, न त्वन्याऽपि, अन्यत्र त्वनभिधानान्न प्रत्ययः । एतच्च 'तद्धिताः' इति महासंज्ञाकरणाल्लभ्यते, तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इति व्याख्यानादिति । **लुकोऽपवाद इति** । 'लुक्तद्धितलुकी'ति प्राप्तस्य ङीप्रत्ययस्य लुकोऽपवाद इत्यर्थः । **पञ्चकमिति** । सङ्ख्यालक्षणः कन् । **आश्मिकमिति** । अश्मनो निमित्तमित्यर्थे ठक् । 'नस्तद्धिते' इति टिलोपः । **पुत्राच्छ च** । 'गोद्व्यचः' इति नित्यं यति प्राप्ते वचनम् । कथं पुत्रीयः क्रतुरिति । नहि क्रतुः संयोगो, नाप्युत्पात इति चेत् । अत्राह हरदत्तः—संयुज्यतेऽनेनेति व्युत्पत्त्या क्रतुरपि संयोग एव, यागकरणेन हि पुरुषः फलेन संयुज्यते अतो यागादिरपि संयोगो, न केवलं संबन्ध एवेत्याग्रह इति । **सर्वभूमि** । आभ्यां यथासङ्ख्यमणञौ स्तः । **तस्येश्वरः** । 'तस्य निमित्त'मित्यतोऽनुवृत्त्यैव

---

बा.] दासाट्ठगभावे ठञिति भावः । **प्रास्थिकमिति** । प्रस्थेन क्रीतमित्यर्थः । 'अगोपुच्छसङ्ख्यापरिमाणा'दिति पर्युदासाट्ठगभावे ठञिति भावः । **ठगिति** । 'उदाह्रियते' इति शेषः । **नैष्किकमिति** । निष्केण क्रीतमित्यर्थः । 'असमासे निष्कादिभ्यः' इति ठगिति भावः । **इद्गोण्याः** । **लुकोऽपवाद इति** । 'लुक्तद्धितलुकी'ति प्राप्तस्येत्यर्थः । **पञ्चगोणिरिति** । आर्हीयस्य ठको लुकि ङीप्रत्ययस्य इकारः । नच उपसर्जनह्रस्वत्वेनैव इदं सिद्धमिति वाच्यम्, इत्त्वविध्यभावे 'लुक्तद्धितलुकी'ति ङीषो निवृत्तावदन्तत्वाट्टापि पञ्चगोणेत्यापत्तेः । मूलद्रव्यवाचिन एव तृतीयान्तात्क्रीतार्थे प्रत्यया भवन्ति, नतु 'देवदत्तेन क्रीत'मित्यर्थे, अनभिधानादिति भाष्ये स्पष्टम् । **तस्य निमित्तम्** । तस्य निमित्तं संयोग उत्पातो वेत्यर्थे यथाविहितं षष्ठ्यन्ताट्ठञादयः स्युरित्यर्थः । **शत्यः शतिको वेति** । शतस्य निमित्तमित्यर्थः । 'शताच्चे'ति यट्ठनौ । **धनपतिसंयोग इति** । याजनशुश्रूषादिसम्पर्क इत्यर्थः । उत्पाते उदाहरति–**शत्यं शतिकं वा दक्षिणाक्षिस्पन्दनमिति** । शतस्य निमित्तमित्यर्थः । सूचकत्वमेवात्र निमित्तत्वमिति भावः । **उपसङ्ख्यानमिति** । 'आर्हीयस्य ठक' इति शेषः । **कोपनं**–वृद्धिः । **सन्निपाताच्चेति** । 'तस्य निमित्तं संयोगोत्पातौ' इत्यर्थे ठ'गिति शेषः । **सान्निपातिकमिति** । **सन्निपातो**–वातपित्तश्लेष्मणां दोषाणां सङ्कर इति वैद्यके प्रसिद्धः । तस्य निमित्तं–सान्निपातिकम्; ज्वरप्रकोपादौ अपथ्यभक्षणादिसंयोगः, संनिपातसूचकं जिह्वाकार्ष्ण्यादि च । **गोद्व्यचः** । तस्य निमित्तं संयोग उत्पातो वेत्यर्थे गोशब्दात्,द्व्यचश्च षष्ठ्यन्ताद्यत्प्रत्ययः स्यात्, नतु सङ्ख्यायाः परिमाणादश्वादेश्चेत्यर्थः । ठकोऽपवादः । **द्व्यच इति** । 'उदाह्रियते' इति शेषः । **धन्य इत्यादि** । धनस्य यशसः स्वर्गस्य च निमित्तमित्यर्थः । **विजयस्येति** । 'निमित्त'मिति शेषः । **वैजयिक इति** । आर्हीयष्ठक् । **पञ्चानामिति** । 'निमित्त'मिति शेषः । **पञ्चकमिति** । 'सङ्ख्यायाः' इति कन् । **सप्तकमिति** । सप्तानां निमित्तमित्यर्थः । **प्रास्थिकमिति** । प्रस्थस्य निमित्तमित्यर्थः । 'आर्हा'दिति ठञ्विधौ परिमाणपर्युदासात् प्राग्वतीयष्ठञ् । **खारीकमिति** । खार्या निमित्तमित्यर्थः । 'खार्या ईकन्' । **अश्वादीति** । प्रत्युदाहरणसूचनमिदम् । **आश्वकमिति** । अश्वस्य निमित्तमित्यर्थः । आर्हीयष्ठक् । **आश्मकमिति** । अश्मनो निमित्तमित्यर्थः । आर्हीयष्ठक् । 'नस्तद्धिते' इति टिलोपः । **ब्रह्मवर्चसादिति** । 'गोद्व्यचः' इति सूत्रे 'ब्रह्मवर्चसाच्चे'ति वक्तव्यमित्यर्थः । **ब्रह्मवर्चस्यमिति** । ब्रह्मवर्चसस्य निमित्तमित्यर्थः । **पुत्राच्छ च** । तस्य निमित्तमित्येव । कथं तर्हि 'आरेभिरे यतात्मानः पुत्रीयामिष्टिमृत्विजः' इति ? । नहीष्टिः संयोग उत्पातो वा । उच्यते–संयुज्यतेऽनेनेति संयोगः । इष्ट्या हि पुत्रेण

---

शे.] कार्यवशात्तेन क्रीतं यत्र तस्याऽप्राप्तेः । **धनपतिसंयोग इति** । संयुज्यन्ते येन पुरुषाः फलेन स संयोग इति भावः । अत एव 'संयोगो नामेदंकृत्वेदमवाप्यते' इति भाष्यं 'करणव्युत्पत्त्या यागादिरेव संयोग' इति कैयटश्च सङ्गच्छते । **गोद्व्यचो** ।

**विदित इति च** ।५।१।४३। सर्वभूमेरीश्वरः सर्वभूमौ विदितो वा सार्वभौमः । पार्थिवः । **लोकसर्वलोकाट्ठञ्** ।५।१।४४। तत्र विदित इत्यर्थे । लौकिकः । अनुशतिकादित्वादुभयपदवृद्धिः । सार्वलौकिकः । **तस्य वापः** ।५।१।४५। उप्यते अस्मिन्निति वापः=क्षेत्रम् । प्रस्थस्य वापः-प्रास्थिकम् । द्रौणिकम् । खारीकम् । **पात्रात्ष्ठन्** ।५।१।४६। पात्रस्य वापः क्षेत्रं पात्रिकम् । पात्रिकी क्षेत्रभक्तिः । **तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते** ।५।१।४७। वृद्धिर्दीयत इत्यादि क्रमेण प्रत्येकं संबन्धादेकवचनम् । पञ्चाऽस्मिन् वृद्धिः आयः लाभः शुल्कम् उपदा वा दीयते पञ्चकः । शतिकः । शत्यः । साहस्रः । उत्तमर्णेन मूलातिरिक्तं ग्राह्यं-वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भाग आयः । विक्रेत्रा मूल्यादधिकं ग्राह्यं लाभः । रक्षानिर्वेशो राजभागः शुल्कम् । उत्कोच उपदा । ॐ **चतुर्थ्यर्थ उपसङ्ख्यानम्** । पञ्चास्मै वृद्ध्यादिर्दीयते पञ्चको देवदत्तः । 'समम-ब्राह्मणे दान'मितिवदधिकरणत्वविवक्षा वा । **पूरणार्धाट्ठन्** ।५।१।४८। यथाक्रमं ठक्टिठनोरपवादः । द्वितीयो वृद्ध्यादिरस्मिन् दीयते—द्वितीयिकः । तृतीयिकः । अर्धिकः । अर्धशब्दो रूपकस्यार्धे रूढः । भागाद्यच्च

त.] सिद्धे पुनः 'तस्ये'ति निर्देशो निमित्तरूपप्रत्ययार्थस्य निवृत्तये । अन्यथा हि संयोगोत्पाताविवेश्वरोऽपि प्रत्ययार्थस्य विशेषणं संभाव्येत । **तत्र विदित इति च** । योगविभाग उत्तरार्थो, यथासङ्ख्यनिवृत्त्यर्थश्च । **तस्य वापः** । 'तस्ये'ति वापापेक्षया कर्मणि षष्ठीत्याह—**प्रस्थस्येति** । कर्तरि षष्ठ्यां तु 'देवदत्तस्य वापः क्षेत्र'मित्यादौ स्यादिति भावः । **खारीकमिति** । 'खार्या ईकन्' । **तदस्मिन्** । प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययो भवति । शुल्कग्रहणं प्रपञ्चार्थं, तस्याप्यायविशेषत्वात् । तथा च 'ठगायस्थानेभ्यः' इति ठग्भवति, शौल्कशालिक इति हरदत्तः । **उपदा दीयत इति** । जसः सस्य रुत्वे यत्वे च यलोपः । **साहस्र इति** । 'शतमाने'त्यादिनाऽण् । **रक्षानिर्वेश इति** । **निर्वेशो**-भृतिः । रक्षानिमित्तको निर्वेशो रक्षानिर्वेशः । संबन्धषष्ठ्या समासः । **सममित्यादि** । एवं च सम्प्रदानस्यैवाऽधिकरणत्वविवक्षयेष्टसिद्धौ उपसङ्ख्यानं नादर्तव्यमिति भावः । **पूरणार्धाट्ठन्** । पूर्यतेऽनेनेति पूरणोऽर्थस्तद्वाचिनोऽर्धशब्दाच्च ठन्स्यात् । **अर्धिक इति** । 'अर्धाच्चेति वक्तव्य-

बा.] फलेन युज्यते यष्टा । **सर्वभूमि** । तस्य निमित्तमित्येव । सर्वभूमि, पृथिवी-आभ्यां यथासङ्ख्यमणञौ स्तः । **सार्वभौम इति** । ठञोऽपवादोऽण् । **पार्थिव इति** । पृथिव्या निमित्तं संयोग उत्पातो वेत्यर्थः । स्त्रियां पार्थिवी । सार्वभौमशब्दे कथमुभयपदवृद्धिरित्यत आह—**अनुशतिकादिषु पठ्यत इति** । तथाच 'अनुशति-कादीनां चे'त्युभयपदवृद्धिरिति भावः । **तस्येश्वरः** । **तत्र विदित इति च** । सूत्रद्वयमिदम् । सर्वभूमिपृथिवी-भ्यामित्यनुवर्तते । 'तस्य निमित्तं संयोगोत्पाता'विति तु निवृत्तम् , पुनस्तस्येत्युक्तेः । तस्येश्वर इत्यर्थे षष्ठ्यन्तात्, तत्र विदित इत्यर्थे तु सप्तम्यन्तादणञौ स्त इत्यर्थः । योगविभागो यथासङ्ख्यनिवृत्त्यर्थः, उत्तरसूत्रे 'तत्र विदित' इत्यस्यैवानुवृत्त्यर्थश्च । **लोकसर्व** । **तत्र विदित इत्यर्थ इति** । योगविभागसामर्थ्यात्तस्येश्वर इति नानुवर्तत इति भावः । **लौकिक इति** । लोकेषु विदित इत्यर्थः । सर्वलोकशब्दे विशेषमाह—**अनुशतिकादित्वादिति** । **तस्य वापः** । अस्मिन्नर्थे षष्ठ्यन्ताद्यथाविहितं ठञादयः स्युरित्यर्थः । **प्रास्थिकमिति** । प्रस्थपरिमितबीजवाप-योग्यं क्षेत्रमित्यर्थः । 'आर्हा'दिति ठग्विधौ परिमाणपर्युदासात् प्राग्वतीयष्ठञ् । **द्रौणिकमिति** । निष्कादित्वाट्ठक् । **खारीकमिति** । खार्या ईकन् । द्रोणस्य खार्याश्च वाप इत्यर्थः । **पात्रात् ष्ठन्** । तस्य वाप इत्येव । **पात्रिक-मिति** । पात्रस्य वाप इत्यर्थः । षित्त्वं ङीषर्थमित्याह—**पात्रिकीति** । **तदस्मिन्** । वृद्धि, आय, लाभ, शुल्क, उपदा एषां द्वन्द्वात्प्रथमाबहुवचनम् । ननु तर्हि दीयत इति कथमेकवचनमित्यत आह—**वृद्धिर्दीयत इत्यादि क्रमेणेति** । एवंच तदस्मिन्वृद्धिर्दीयते, तदस्मिन् आयो दीयते, तदस्मिन् लाभो दीयते, तदस्मिन् शुल्को दीयते, इत्यर्थेषु प्रथमान्ताद्यथाविहितं ठञादयः स्युरित्यर्थः । **पञ्चक इति** । 'सङ्ख्यायाः' इति कन् । **शतिकः** । **शत्य इति** । शतमस्मिन्वृद्धिः, आयः, लाभः, शुल्कः, उपदा वा दीयते इति विग्रहः । 'शताच्च ठन्यतौ' । **साहस्र इति** । सहस्रमस्मिन्दीयते इत्यादि विग्रहः । 'शतमानसहस्रे'त्यण् । **रक्षानिर्वेश इति** । रक्षा=प्रजापरिपालनम्, तदर्थो निर्वेशः=भृतिः रक्षानिर्वेशः । **उत्कोच इति** । 'मह्यं किञ्चिद्दत्तं चेत्तव राजद्वारेऽनुकूलो भवामी'त्यादि समयं कृत्वा यद्गृह्यते तदुत्कोच इत्युच्यत इत्यर्थः । **चतुर्थ्यर्थ इति** । तदस्मै वृद्ध्यादि दीयते इत्युपसंख्यातव्यमित्यर्थः । **सममब्राह्मणे इति** । एवंच सम्प्रदानस्यैवाधिकरणत्वविवक्षया इष्टसिद्धेरुपसङ्ख्यानमिदं नादर्तव्यमिति भावः ।

शे.] ठकोऽपवादः । **तस्येश्वरः** । 'तस्ये'त्यनुवर्त्तमाने 'तस्य'ग्रहणं 'निमित्त'मित्यस्य निवृत्त्यर्थम् । **पात्रिकीति** । षित्वान्ङीष् । **तदस्मिन्वृ** । **प्रत्येकमिति** । एकैककर्मकदानाधिकरणेऽपि प्रयोगस्येष्टत्वात् । वृद्ध्यादिषु सौत्रत्वात्साधुरिति भावः । आयादि-साहचर्यात्सञ्ज्ञावृद्धेरग्रहणम् । **उपदेति** । टाबन्तम् । **रक्षानिर्वेश इति** । रक्षानिमित्तभृतिरूप इत्यर्थः । **उत्कोच इति** ।

।५।१।४९। चाट्ठन्। भागशब्दोऽपि रूपकस्यार्धे । भागो वृद्ध्यादिरस्मिन् दीयते भाग्यं भागिकं शतम्।
भाग्या भागिका विंशतिः। **तद्धरति वहत्यावहति भाराद्वंशादिभ्यः** ।५।१।५०। वंशादिभ्यः परो यो
भारशब्दस्तदन्तं यत्प्रातिपदिकं, तत्प्रकृतिकाद्द्वितीयान्तादित्यर्थः। वंशभारं हरति वहत्यावहति वा वांश-
भारिकः। ऐक्षुभारिकः। 'भाराद्वंशादिभ्यः' इत्यस्य व्याख्यान्तरं-भारभूतेभ्यो वंशादिभ्य इति। भारभूता-
न्वंशान् हरति वांशिकः। ऐक्षुकः। **वस्नद्रव्याभ्यां ठन्कनौ** ।५।१।५१। यथासंख्यं स्तः। वस्नं हरति वह-
त्यावहति वा वस्निकः। द्रव्यकः। **संभवत्यवहरति पचति** ।५।१।५२। प्रस्थं संभवति प्रास्थिकः कटाहः।
प्रस्थं स्वस्मिन्समावेशयतीत्यर्थः। प्रास्थिकी ब्राह्मणी। प्रस्थमुपसंहरति पचति-चेत्यर्थः। *तत्पचती-
ति द्रोणादण् च। चाट्ठञ्। द्रोणं पचतीति द्रौणी। द्रौणिकी। **आढकाचितपात्रात्खोऽन्यतरस्याम्**
।५।१।५३। पक्षे ठञ्। आढकं संभवति अवहरति पचति वा-आढकीना। आढकिकी। आचितीना। आचितिकी।

---

त.]मिति टिठन्प्राप्तः, सति च तस्मिन्स्त्रियां ङीप्स्यात्। इष्यते तु टाप्। **रूपकस्येति**। रूपकं-कार्षापणम्। **रूढ इति**। तथा च भागवद्द्रव्यसापेक्षत्वेनाऽसामर्थ्यमिह नोद्भावनीयमिति भावः। **भारभूतेभ्यो वंशादिभ्य इति**। ननु वंशादयः शब्दास्ते कथं भारभूता इत्यत आह—**भारभूतानिति**। भारशब्दोऽर्थद्वारा वंशादीनां विशेषणमिति भावः। 'भारेभ्यः' इति वक्तव्ये प्रत्येकं संबन्धविवक्षया सूत्रे 'भारात्' इति निर्देशः। **वस्निक इति**। **वस्नं**-मूल्यम्। **संभवत्यवहरति**। आधारप्रमाणादाधेयप्रमाणस्य यदनाधिक्यं तदुपसर्जनं धारणं संभवतेरर्थः। तेन सकर्मकत्वात्तदिति द्वितीयान्तानुवृत्तिर्न विरुध्यते। तदाह—**प्रस्थं स्वस्मिन्निति**। **प्रास्थिकीति**। ठञन्तत्वान्ङीप्। अवहरतीत्येतद्व्याचष्टे—**उपसंहरतीति**। **तत्पचतीति**। वार्तिकेऽस्मिन्पचतिग्रहणं संभवत्यवहरतीतिनिवृत्त्यर्थम्। द्रोणपरिमिते व्रीह्यादौ द्रोणशब्दो लाक्षणिकः। **पक्षे ठञिति**। आढकादीनां परिमाणत्वाट्ठक् नेति भावः।

---

बा.] **पूरणार्धाट्ठन्**। तदस्मिन् वृद्ध्यादि दीयत इत्यर्थे पूरणप्रत्ययान्तादर्धशब्दाच्च प्रथमान्ताट्ठन् स्यादित्यर्थः। **द्वितीयिक तृतीयिकः इति**। 'आर्हा'दिति ठकोऽपवादष्ठन्। **अर्धिक इति**। अर्धमस्मिन् वृद्ध्यादि दीयते इत्यर्थः। 'अर्धाच्चेति वक्तव्य'मिति टिठनोऽपवादष्ठन्। टिठनि सति तु स्त्रियां ङीप् स्यात्। अर्धिकेति तु टाबेवेष्यते। **रूपकस्येति**। रूप्यस्य कार्षापणस्येत्यर्थः। **रूढ इति**। अन्यथा अर्धशब्दस्य रूप्यकसापेक्षत्वादसामर्थ्यं स्यादिति भावः। रूप्यकस्यार्धे रूढ इत्यत्र प्रमाणं मृग्यम्। असामर्थ्यं तु नित्यसापेक्षत्वाद्वारयितुं शक्यमित्याहुः। **भागाद्यच्च**। तदस्मिन् वृद्ध्यादि दीयत इत्यर्थे भागशब्दात्प्रथमान्ताद्यत्प्रत्ययश्च स्यादित्यर्थः। **चाट्ठनिति**। 'पूर्वसूत्रादनुकृष्यते' इति शेषः। **भागशब्दोऽपि रूपकस्यार्ध इति**। 'वर्तते' इति शेषः। **तद्धरति वहति**। वंशाद्भारादिभ्य इत्येकवचनबहुवचनान्तयोः सामानाधिकरण्याऽसम्भवाद्वैयधिकरण्येनान्वयः। स च व्युत्क्रमः, व्याख्यानात्। तदाह—**वंशादिभ्यः पर इति**। 'द्वितीयान्ता'दित्यनन्तरं हरति वहति आवहतीत्यर्थे यथाविहितं प्रत्ययः स्या'दिति शेषः। **हरणं** कथञ्चिद्देशान्तरप्रापणं, चौर्यं वा। शकटादिना प्रापणं **वहनम्**। स्वसमीपं प्रापण**मावहनम्**, उत्पादनं वा। **वांशभारिक इति**। 'आर्हा'दिति ठक्। अत्र पञ्चम्यन्तयोर्व्युत्क्रमेण वैयधिकरण्येन चान्वये प्रमाणाऽभावादाह—**भाराद्वंशादिभ्य इत्यस्य व्याख्यान्तरमिति**। 'भारात्परेभ्यो वंशादिभ्य'इत्यर्थभ्रमव्यावृत्तये व्याख्यान्तरं विशदयति—**भारभूतेभ्यो वंशादिभ्य इतीति**। वंशादिशब्दानां भारभूतत्वं तु भारभूतवंशादिवृत्तेर्बोध्यम्। अस्मिन्व्याख्याने भारादित्येकवचनमार्षम्। यद्वा प्रत्येकान्वयाभिप्रायम्। वस्तुतो भारभूता ये वंशादयस्तद्वाचिभ्य इति यावत्। **वस्नद्रव्याभ्याम्**। तद्धरतिवहत्यावहतीत्यनुवर्तते इत्यभिप्रेत्याह—**वस्नं हरतीत्यादि**। **संभवत्यवहरति**। 'त'दिति द्वितीयान्तमनुवर्तते। द्वितीयान्तात्संभवतीत्याद्यर्थेषु यथाविहितं प्रत्ययः स्यादित्यर्थः। **प्रास्थिक इति**। 'आर्हा'दित्यत्र परिमाणपर्युदासाट्ठगभावे प्राग्वतीयष्ठञ्। ननु 'संभवती'त्यस्य उपपद्यत इत्यर्थकत्वादकर्मकत्वात्प्रस्थं संभवतीति कथं द्वितीयेत्यत आह—**समावेशयतीत्यर्थ इति**। उपसर्गवशादिति भावः। **प्रास्थिकी ब्राह्मणीति**। ठञन्तत्वान्ङीबिति भावः। अवहरतीत्येव्याचष्टे—**उपसंहरतीति**। किंचिदूनमपि यया प्रस्थपरिमितं भवति तथा मिमीत इत्यर्थः। **तत्पचतीति द्रोणादण् चेति**। वार्तिकमिदम्। द्वितीयान्ताद्द्रोणशब्दात्पचतीत्यर्थेऽञ्च स्यादित्यर्थः। पचतिग्रहणं सम्भवत्यवहरतिनिवृत्त्यर्थम्। **चाट्ठञिति**। 'आर्हा'दिति ठग्विधौ परिमाणपर्युदासाट्ठगभावे प्राग्वतेष्ठञेव चकारादनुकृष्यत

---

शे.] उपहार इत्यन्ये। **रूपकस्येति**। रूप्यकार्षापणस्येत्यर्थः। अत्र मानं चिन्त्यम्। असामर्थ्यंन्तु नित्यसापेक्षत्वात्, गमकत्वाद्वा वारयितुं शक्यम्, 'अर्द्धमित्युक्ते कस्येति जिज्ञासायां रूपकस्येत्युच्चरमत एव सम्बध्यते। **भारभूतेभ्य इति**। वंशादिशब्दानां

पात्रीणा। पात्रिकी । **द्विगोः ष्ठंश्च** ।५।१।५४। आढकाचितपात्रादित्येव । आढकाद्यन्ताद्विगोः संभवत्यादिष्वर्थेषु ष्ठन्खौ वा स्तः। पक्षे ठञ्। तस्य 'अध्यर्द्धे'ति लुक्। षित्वान्ङीप्। द्व्याढकिकी। द्व्याढकीना। 'द्विगो'रिति ङीप्,—द्व्याढकी। द्व्याचितिकी। द्व्याचितीना। 'अपरिमाणे'ति ङीनिषेधात्—द्व्याचिता। द्विपात्रिकी। द्विपात्रीणा। द्विपात्री। **कुलिजाल्लुक्खौ च** ।५।१।५५। कुलिजान्ताद्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ वा स्तः। चात् ष्ठंश्च। लुगभावे ठञः श्रवणम्। द्विकुलिजी। द्विकुलिजीना। द्विकुलिजिकी। द्वैकुलिजिकी। **सोऽस्यांशवस्नभृतयः** ।५।१।५६। अंशो भागः। वस्नं मूल्यम्। भृतिर्वेतनम्। पञ्च अंशो वस्नं भृतिर्वाऽस्य पञ्चकः। **तदस्य परिमाणम्** ।५।१।५७। प्रस्थं परिमाणमस्य प्रास्थिको राशिः। **सङ्ख्यायाः**

**त.]** **द्विगोः ष्ठंश्च** । ष्ठनिति छेदः, तदाह–षित्त्वादिति। **द्व्याढकिकीति**। 'न य्वाभ्या'मित्यैजागमो न शङ्क्यः, वृद्धिनिषेधसंनियोगेन तद्विधानाद्वृद्धेश्च प्राप्त्यभावात्। **अपरिमाणेति**। आचितस्य परिमाणत्वेऽपि तस्मिन् सूत्रे विशिष्यग्रहणादिति भावः। **द्वैकुलिजिकीति**। 'असंज्ञाशाणयो'रित्यत्र कुलिजशब्दोऽपि इष्यते, तेनोत्तरपदवृद्धिर्नेत्याहुः। **तदस्य परिमाणम्** । इह परिमाणशब्देन परिच्छेदकमात्रं गृह्यते, न तु सर्वतोमानमेव, उत्तरसूत्रे सङ्ख्यायाः परिमाणेन विशेषणात्। षष्टिर्जीवितं परिमाणमस्य षाष्टिकः। 'सोऽस्ये'ति वर्तमाने पुनः 'तदस्ये'ति ग्रहणात् 'द्वे षष्टी जीवितं परिमाणमस्य द्विषाष्टिकस्त्रिषाष्टिकः' इत्यादौ 'अध्यर्धे'ति लुङ् न भवति। स्पष्टं चेदं काशिकादौ। **पूर्वसूत्रमिति**। तेन पञ्च गावः परिमाणमस्य पञ्चको गोसङ्घ इत्यादि सिध्यति। यदा तु प्रकृत्यर्थस्यैव परिच्छेदिका संख्या–पञ्च गावोऽस्य सङ्घस्येति, तदा तु प्रत्ययो न भवति, परिमाणस्य प्रत्ययार्थत्वाऽभावात्। एतच्च

**बा.]** इति भावः। **द्रौणीति**। अणन्तत्वान्ङीप्। **द्रौणिकीति**। ठञन्तत्वान्ङीप्। **आढकाचित**। आढक, आचित, पात्र—एभ्यो द्वितीयान्तेभ्यः सम्भवत्यवहरतिपचतीत्यर्थेषु खो वा स्यादित्यर्थः। **पक्षे ठञिति**। 'आर्हात्' इत्यत्रः परिमाणपर्युदासाच्च ठगिति भावः। **द्विगोः ष्ठंश्च**। **ष्ठन्खाविति**। चकारेण खस्यानुकर्षादिति भावः। **वा स्त इति** । अन्यतरस्यामित्यनुवृत्तेरिति भावः। **पक्षे ठञिति**। 'आर्हात्' इत्यत्र परिमाणपर्युदासान्न ठगिति भावः। षित्वान्ङीष्। **द्व्याढकिकीति** । द्वे आढके सम्भवत्यवहरति पचति वेत्यर्थे 'तद्धितार्थ' इति द्विगुः, ष्ठन्, षित्त्वान्ङीषित्यर्थः। अत्र 'न य्वाभ्याम्' इत्यैज्न, वृद्धिनिषेधसन्नियोगशिष्टत्वात्, ञ्णित्किदभावेन वृद्धेरप्रसक्तेः। **द्व्याढकीनेति**। खे रूपम्। **द्विगोरिति ङीप्**। **द्व्याढकीति**। ठञि 'अध्यर्धे'ति तस्य लुक्। 'द्विगोः' इति ङीबित्यर्थः। प्रत्ययलक्षणमाश्रित्य ठञन्तलक्षणङीप्तु नेति 'अपरिमाणबिस्ते'त्यत्रोक्तम्। 'अध्यर्धे'ति लुक्ठञ एव, नतु ष्ठन्खयोरपि, विधिसामर्थ्यात्। **द्व्याचितिकी द्व्याचितीनेति**। ष्ठनि खे च रूपम्। अथ द्व्याचितशब्दाट्ठञो लुकि 'द्विगोः' इति ङीपमाशङ्क्याह–**अपरिमाणेति ङीन्निषेधादिति**। [एवं ष्ठन्-ख-ठञ्लुग्भिः] **द्विपात्रिकीत्यादि**। **कुलिजाल्लुक्खौ च**। अन्यतरस्यामित्यनुवृत्तिमभिप्रेत्याह—**लुक्खौ वा स्त इति**। 'आर्हात्' इत्यत्र परिमाणपर्युदासाट्ठगभावे प्राग्वहतीयस्य ठञः 'अध्यर्धे'ति नित्यं लुकि प्राप्ते लुको विकल्पविधिः। **चात्ष्ठंश्चेति**। तथाच ठञो लुक्खश्च ष्ठंश्चेति त्रितयं विकल्प्यते। तत्र ष्ठनः खस्य ठञो लुकश्चाऽभावे ठञः श्रवणं पर्यवस्यति। तदाह—**लुगभावे ठञः श्रवणमिति** । **द्विकुलिजीति**। ठञो लुकि रूपम्। 'द्विगोः' इति ङीप्। **द्विकुलिजीनेति**। खे रूपम्। **द्विकुलिजिकीति**। ष्ठनि रूपम्। **द्वैकुलिजिकीति**। ठञो लुगभावे रूपम्। 'परिमाणान्तस्ये'त्यत्र 'असंज्ञाशाणकुलिजाना'मित्युक्तेर्नोत्तरपदवृद्धिः। **सोऽस्यांश**। स इति प्रत्येकमंशादिष्वन्वेति। सोऽस्यांशः, तदस्य वस्नम्, सास्य भृतिरित्यर्थेषु प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। **पञ्चक इति**। 'संख्यायाः' इति कन्। **तदस्य परिमाणम्**। अस्मिन्नर्थे प्रथमान्ताद्यथाविहितं प्रत्ययाः स्युरित्यर्थः। **प्रास्थिक इति**। 'आर्हात्' इत्यत्र परिमाणपर्युदासात् प्राग्वतीयष्ठञ्। अत्र संख्याऽपि परिमाणम्। यद्यपि 'अगोपुच्छसंख्यापरिमाणा'दिति पृथग्ग्रहणात् संख्या न परिमाणम्, तथाप्यत्र परिच्छेदकत्वात् संख्यापि परिमाणम्, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणाल्लिङ्गात्। तेन षष्टिः परिमाणमस्य षाष्टिकमिति सिद्धम्।

**शे.]** भारभूतत्वं तथाभूतार्थाऽभिधायित्वाद्बोध्यम्। सौत्रमेकवचनम्। अत्राद्यं व्याख्यानमेव युक्तम्। **द्व्याढकिकीति**। 'न य्वाभ्या'मित्यस्य 'अनन्तरस्ये'ति न्यायेन 'परिमाणान्तस्ये'ति वृद्धिनिषेधकत्वाऽभावादैज्न। **लुगभावे इति**। 'अन्यतरस्याङ्ग्रहणमनुवर्त्तते' इति वृत्त्यनुसारेणेदम्। वस्तुतस्तदत्र नाऽनुवर्त्तते, पुनः खग्रहणात्। लुक् ठञ एव। खष्ठनोस्तु न लुक्, द्वन्द्वेन च सहविधानस्य स्फुटत्वात्। अत एव भाष्ये ष्ठनश्चेनाऽप्यनुकृष्टस्य खोऽन्यतरसहविधाने उद्देश्यविधेयभावाऽसम्भवात्। स्यामित्यस्य चानुवृत्तिं स्वीकृत्य 'लुक्खौ चे'ति प्रत्याख्यातम्। तेन द्वैकुलिजिकीति चिन्त्यमेव। **तदस्य परिमाणम्**। उत्तरेण

संज्ञासङ्घसूत्राध्ययनेषु ।५।१।५८। पूर्वसूत्रमनुवर्तते । तत्र— । * संज्ञायां स्वार्थे प्रत्ययो वाच्यः । यद्वा द्व्येकयोरितिवत्संख्यामात्रवृत्तेः परिमाणिनि प्रत्ययः । पञ्चैव पञ्चकाः शकुनयः । पञ्च परिमाणमेषामिति वा । सङ्घे—पञ्चकः । सूत्रे—अष्टकं पाणिनीयम् । सङ्घशब्दस्य प्राणिसमूहे रूढत्वात्सूत्रं पृथगुपात्तम् । पञ्चकमध्ययनम् । *स्तोमे डविधिः । पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः [स्तोमः] । सप्तदशः । एकविंशः । [डप्रत्यये तिलोपः] सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः । पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टि-

---

त.] 'आर्हादगोपुच्छे'ति सूत्रे कैयटे स्पष्टम् । स्वार्थे उदाहरति—पञ्चैवेति । स्तोमे डविधिरिति । डित्करणमेकविंश इत्यत्र तिलोपार्थम् । त्रयस्त्रिंशादौ टिलोपार्थं च । पञ्चदश मन्त्रा इति । 'साम्ना स्तुवीत', 'एकं साम त्र्यृचे क्रियते' इति हि श्रुतिः । तत्र त्र्यृचस्य पञ्चकृत्व आवृत्त्या पञ्चदशमन्त्राः । सप्तदशे स्तोमे अन्त्याया ऋचः सप्तकृत्व आवृत्तिः । प्रथममध्यमयोस्तु पञ्चकृत्व एव, एकविंशे स्तोमे तु त्र्यृचस्य सप्तकृत्व आवृत्तिरिति ज्ञेयम् ।

---

बा.] द्विषष्ट्यादिभ्यस्त्वनभिधानान्नेति भाष्ये स्पष्टम् । सङ्ख्यायाः अनुवर्तत इति । तथाच 'तदस्य परिमाण'मित्यर्थे प्रथमान्तात्संख्यात्मकपरिमाणवाचिनो यथाविहितं प्रत्ययाः स्युरित्यर्थः । संज्ञायां स्वार्थे प्रत्ययो वाच्य इति । 'पञ्चकाः शकुनय' इत्यत्र पञ्च परिमाणमेषामित्यर्थो न संभवति, आ दशतः संख्याः संख्येये इति पञ्चन्शब्दस्य संख्येयवृत्तित्वेन पञ्च परिमाणमिति सामानाधिकरण्यानुपपत्तेः । अतः संज्ञायां स्वार्थ एव संख्यायाः प्रत्यय इति पर्यवस्यतीति भावः । यद्वेति । द्विशब्दस्य एकशब्दस्य च संख्येयवृत्तित्वेऽपि 'द्व्येकयोः' इति समासवृत्तावेकत्व-द्वित्वपरत्वमभ्युपगम्यते । अन्यथा 'द्व्येकयोः' इति द्विवचनानुपपत्तेः । तद्वत्पञ्चकाः शकुनय इति तद्धितवृत्तावपि पञ्चन्शब्दस्य पञ्चत्वसंख्यापरतया पञ्चत्वं परिमाणमस्येति सामानाधिकरण्यं स्वीकृत्य पञ्चत्ववाचिनः पञ्चन्शब्दात् पञ्चत्वरूपपरिमाणवति प्रत्यय उपपद्यत इत्यर्थः । तत्र संज्ञायां स्वार्थे उदाहरति—पञ्चैवेति । परिमाणिनि प्रत्ययमुदाहरति—पञ्च परिमाणमिति । पञ्चत्वमित्यर्थः । सङ्घे इति । उदाहरणं वक्ष्यत इत्यर्थः । पञ्चक इति । पञ्चत्वमस्य सङ्घस्य परिमाणमित्यर्थः । सङ्घस्य पञ्चत्वं तु अवयवद्वारा बोध्यम् । सूत्र इति । उदाह्रियत इति शेषः । अष्टकं पाणिनीयमिति । 'सूत्र'मिति शेषः । अष्टावध्यायाः परिमाणमस्येति विग्रहः । अत्राष्टत्वमध्यायद्वारा सूत्रेऽन्वेति । सूत्रशब्दश्च सूत्रसंघपरः, एकस्मिन्सूत्रे अष्टकत्वस्याऽसंभवात् । नन्वेवं सति सङ्घग्रहणेनैव सिद्धे सूत्रग्रहणं व्यर्थमित्यत आह—सङ्घशब्दस्येति । पञ्चकमध्ययनमिति । पञ्चावृत्तयः परिमाणमस्येति विग्रहः । स्तोमे डविधिरिति । 'तदस्य परिमाण'मित्यर्थे सङ्ख्यावाचिन उपसंख्यातव्य' इति शेषः । सामाधारमन्त्रसमूहे स्तोमशब्दः शक्त इति कैयटः । मनुष्यादिसमूहे तु स्तोमशब्दो लाक्षणिक इति तदाशयः । तदाह—पञ्चदश मन्त्रा इति । पञ्चदशः स्तोम इति । पञ्चदशन्शब्दाड्डप्रत्यये 'टे'रिति टिलोपः । सामाधारभूतपञ्चदशमन्त्रसमूह इत्यर्थः । ननु डित्त्वाऽभावेऽपि 'नस्तद्धिते' इत्येव टिलोपसिद्धेर्डित्त्वं व्यर्थमित्यत आह—एकविंश इति । एकविंशतिर्मन्त्राः परिमाणमस्य समूहस्येति विग्रहः । डप्रत्यये इति । 'ति विंशतेर्डिती'ति टिलोपः । मीमांसकास्तु पृष्ठरथन्तरादिशब्दवाच्या प्रगीतमन्त्रसाध्या गुणवत्त्वेन वर्णनात्मिका स्तुतिरेव स्तोमः, स

---

शे.] योगविभागोऽत्र भाष्ये ध्वनितः । अत्र परिमाणशब्देन परिच्छेदकमात्रं गृह्यते, तेनोत्तरत्र सङ्ख्याया अनेन विशेषणं सङ्गच्छते । तेन षष्टिर्जीवितपरिमाणमस्य 'षाष्टिक' इति सिद्धम् । द्विषष्ट्यादिभ्यस्त्वनेनाऽनभिधानान्न प्रत्ययः । किन्तु द्वे षष्टी भृत इत्यर्थे 'तमधीष्टो भृत' इत्यनेन । तस्य च न लुक्, अनार्हीयत्वात् । कालादित्यधिकारेऽपि यथाकथञ्चित्कालवाचकानामपि तत्र ग्रहणान्न दोषः । रमणीयादिभ्योऽनभिधानान्न प्रत्ययः । स्पष्टं चेदं सर्वमत्र भाष्ये । 'सोऽस्ये'ति वर्त्तमाने पुनस्तदस्येति तु स्पष्टार्थम् । तत्सामार्थ्यादार्हीयत्वनिवृत्त्या द्विषाष्टिक इत्यादौ लुङ्नेति तूक्तभाष्यविरोधादनादेयम् । काकवाशितेनेव तदस्येत्यनेनार्हीयत्वनिवृत्तेरशक्यत्वाच्चेति दिक् । सङ्ख्यायाः सञ्ज्ञा । अत्र तदन्तविधिः । 'ठञ्विधौ सङ्ख्यायाः प्रयोजन'मिति 'येन विधि'रिति सूत्रे वार्तिकात् । ठञ्विधायके 'सङ्ख्याया' इति पदघटिते सूत्रे तदन्तविधिरिति तदर्थः । तेन द्वे षष्टी परिमाणमस्य सूत्रस्य सङ्घस्य वा द्विषष्टि । तत्परिमाणमस्याध्ययनस्य तद्द्विषाष्टिकमिति सिद्धम् । अत्र द्वितीयस्य न लुक्, द्विगुनिमित्तत्वाऽभावात् । पूर्वसूत्रमिति । तेन पञ्च गावोऽस्य सङ्घस्य धनमित्यादौ न । ननु पञ्चादीनां सङ्ख्येयवृत्तित्वात्परिच्छेदकत्वाऽभावः । पञ्चसङ्ख्याकप्रस्थादिपरिमाणके तु नेष्यत इत्यत आह—तत्र सञ्ज्ञायामिति । यद्वेति । वृत्तिविषये तन्मात्रवृत्तित्वमिति भावः । सङ्घे पञ्चक इति । पञ्चपरिमाणमस्य सङ्घस्येत्यर्थः । प्राणिसमूह इति । परेतु सङ्घः समूहः समुदाय इत्यनर्थान्तरमिति पङ्क्त्यादिसूत्रभाष्यात्समूहमात्रं सङ्घः । परन्तु तस्य बहुसमुदाये शक्तेः पदद्वयात्मके 'केऽण'इत्यादौ द्विकं सूत्रमित्यस्य सिद्धये तदित्याहुः । पञ्चकमध्ययनमिति । पञ्चावृत्तयः परिमाणमस्येत्यर्थः । स्तोमे ड । मन्त्रसमूहे स्तोम-

**सप्तत्यशीतिनवतिशतम्** ।५।१।५९। एते रूढिशब्दा निपात्यन्ते । **पञ्चद्दशतौ वर्गे वा** ।५।१।६०। पञ्च परिमाणमस्य पञ्चद्वर्गः । दशत् । पक्षे—पञ्चकः । दशकः । **त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण्** ।५।१।६२। त्रिंशदध्यायाः परिमाणमेषां ब्राह्मणानां त्रैंशानि । चात्वारिंशानि [ब्राह्मणानि] । **तदर्हति** ।५।१।६३।

---

त.] **छन्दोगैरिति** । सामगैरित्यर्थः । **पङ्क्तिविंशति** । 'तदस्य परिमाण'मिति वर्तते । पञ्चन्शब्दस्य टिलोपः, तिप्रत्ययः, 'चोः कु'रिति कुत्वम् । पञ्च पदानि परिमाणमस्य पङ्क्तिश्छन्द इति काशिका । पदशब्दोऽत्र पादपर्याय इति हरदत्तः । **रूढिशब्दा इति** । तथा चात्र नाऽवयवार्थेऽभिनिवेष्टव्यम् । पङ्क्तिशब्दो हि नानार्थः । अस्ति क्रम-संनिवेशे—ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिरिति । अस्ति च दशसंख्यायां–, पङ्क्तिरथ इति । दशरथ इत्यर्थः । अस्ति हि छन्दोविशेषे—'यस्य पञ्चाक्षराः पञ्च पादाः' । तथा च छन्दोविशेषे एवावयवार्थो नान्यत्रेति बोध्यम् । द्वयोर्दशतो-र्विन्भावः, शतिश्च प्रत्ययः, अपदत्वं च । द्वौ दशतौ परिमाणमस्य विंशतिः । अपदत्वनिपातनाद्मकारस्यानुस्वारः । केचित्तु विंभावमुक्त्वा अपदत्वं चेति न पठन्ति । त्रयाणां दशतां त्रिन्भावः । शच्च प्रत्ययः । मतान्तरे तु त्रिंभावः । त्रयो दशतः परिमाणमस्य त्रिंशत् । एवं चतुर्णां चत्वारिन् । पञ्चानां पञ्चा । आभ्यामपि शत्प्रत्ययः । षण्णां दशतां षष्, तिश्च प्रत्ययः, अपदत्वं च । षट् दशतः परिमाणमस्य षष्टिः । ततस्त्रिभ्योऽपि तिप्रत्यय एव । सप्तानां दशतां सप्त, अष्टानां दशतामशी, नवानां दशतां नव, दशानां दशतां शभावः, तश्च प्रत्ययः । दश दशतः परिमा-णमस्य शतम् । **पञ्चद्दशतौ** । इमौ डत्यन्तावेव निपात्येते वर्गेऽभिधेये । 'तदस्य परिमाण'मित्यनुवर्तत एव । **दशदिति** । दश परिमाणमस्य । **पक्षे इति** । वाग्रहणात् 'संख्यायाः' इति कन्नपि भवतीति भावः । **त्रिंशच्च-त्वारिंशतोः** । व्यत्ययेन पञ्चम्यर्थे षष्ठीद्विवचनम् । **'चत्वारिंशतो ब्राह्मणे'** इति पाठे तु समाहारद्वन्द्वात्पञ्च-म्येकवचनम् । इह 'ब्राह्मणसंज्ञाया'मिति षष्ठीसमासेन निर्देष्टुमुचितम् । तथा हि सति 'ब्राह्मणस्य चेत्संज्ञा' इति

---

बा.] एव डप्रत्ययार्थः । प्रगीतपञ्चदशमन्त्रपरिमाणकः स्तोम इत्यर्थः । पञ्चदशत्वसंख्यात्मकपरिमाणं स्तुतौ मन्त्रद्वारा बोध्यम् । एवंच 'पञ्चदशेन स्तुवते' इत्यादौ धात्वर्थभूतस्तुतिसामानाधिकरण्यं पञ्चदशादिशब्दानामुपपद्यत इत्याहुः । तन्मतमवलम्ब्याह—**सोमयागेष्वित्यादि** । **पङ्क्तिविंशति** । **रूढिशब्दा निपात्यन्त इति** । 'तदस्य परिमाणमित्यर्थे' इति शेषः । पञ्च पादाः परिमाणमस्येत्यर्थे पञ्चन्शब्दात्तिप्रत्ययः, प्रकृतेष्टिलोपः, चकारस्य कुत्वम्, अनुस्वारपरसवर्णौ । पङ्क्तिरिति रूपम् । 'पञ्चाक्षरा पञ्चपदा पङ्क्ति'रिति छन्दःशास्त्रे । दशानां वर्गः दशत् । 'पञ्चद्दशतौ वर्गे वा' इति वक्ष्यते । द्वौ दशतौ परिमाणमस्य सङ्घस्येति विंशतिः । शतिच्प्रत्ययः, प्रकृतेर्विन्भावः, अनुस्वारश्च । अत्र सङ्घग्रहणमनुवर्तते । तथा च गवां विंशतिरिति भवति । सङ्घसङ्घिनोस्तादात्म्यविवक्षायां तु विंशतिर्गाव इति भवति । स्वभावादेकवचनं स्त्रीत्वं च । एवं त्रिंशदादावपि । 'विंशत्याद्याः सदैकत्वे संख्याः संख्येय-सङ्ख्ययो'रिति, 'तासु चानवतेः स्त्रियः' इति चाऽमरः । त्रयो दशतः परिमाणमस्य सङ्घस्य त्रिंशत्, शत्प्रत्ययः, प्रकृतेः त्रिन्भावश्च । चत्वारो दशतः परिमाणमस्य सङ्घस्य चत्वारिंशत् । शत्प्रत्ययः, प्रकृतेः चत्वारिन्भावश्च । पञ्च दशतः परिमाणमस्य सङ्घस्य पञ्चाशत् । शत्प्रत्ययः, प्रकृतेः पञ्चादेशः । षड् दशतः परिमाणमस्य सङ्घस्य षष्टिः । तिप्रत्ययः, प्रकृतेः षष्, जश्त्वाऽभावश्च । सप्त दशतः परिमाणमस्य सङ्घस्य सप्ततिः । तिप्रत्ययः, प्रकृतेः सप्तादेशः । अष्टौ दशतः परिमाणमस्य सङ्घस्य अशीतिः । तिप्रत्ययः, प्रकृतेरशीत्यादेशः । नव दशतः परिमाण-मस्य सङ्घस्य नवतिः । तिप्रत्ययः, प्रकृतेर्नवादेशः । दश दशतः परिमाणमस्य सङ्घस्य शतम् । तप्रत्ययः, प्रकृतेः शादेशश्च । एतत्सर्वं भाष्ये स्पष्टम् । 'एतान्यव्युत्पन्नप्रातिपदिकानी'ति तु भाष्यनिष्कर्षः । **पञ्चद्दशतौ** । पञ्च दश वा परिमाणमस्य वर्गस्येत्यर्थे एतौ निपात्येते इत्यर्थः । **पञ्चद्वर्ग इति** । पञ्च परिमाणमस्येत्यर्थे पञ्चन्शब्दा-डतिप्रत्ययः । तत्र इकार उच्चारणार्थः । 'टे'रिति टिलोपः । **दशदिति** । दश परिमाणमस्य वर्गस्येति विग्रहः । डतिः । डित्त्वाट्टिलोपः । एतदर्थमेव डित्त्वम् । **पक्षे इति** । डत्यभावपक्षे 'संख्यायाः' इति कन्नित्यर्थः । **त्रिंशच्चत्वा-रिंशतोः** । तदस्य परिमाणमित्यर्थे परिमाणिनि ब्राह्मणे वाच्ये त्रिंशच्चत्वारिंशद्भ्यां डण्स्यादित्यर्थः । ब्राह्मणं=वेदेषु मन्त्रव्यतिरिक्तो भागः । **त्रैंशानीति** । डित्त्वात् 'टेः' इति टिलोपः । **तदर्हति** । अर्हतीत्यस्य योग्यो भवती-

---

शे.] शब्दः शक्त इति कैयटः । समूहमात्रे प्रयोगस्तु लक्षणयेति तदाशयः । मन्त्रसमूहः प्रत्ययार्थः । स्तुतिः स्तोम इत्यत्र स्तुतिपदं स्तुतिकरणमन्त्रसमूहपरम् । **पङ्क्तिविंशति** । अत्र विंशत्याद्याः सङ्ख्यायां सङ्ख्येये च । उभयत्राप्येकवचनान्ताः । तेन विंशतिर्गावो विंशतिर्गवामित्यादि सिद्धम् । तत्र नवत्यन्ताः स्त्रियां । सहस्रादिवदेकद्व्यादिवच्चेमान्यप्यव्युत्पन्नानीति वार्तिककृतः । एषां प्रदर्शनं तूदाहरणमात्रम् । [सहस्रादयोऽप्येवं व्युत्पाद्या इत्यन्ये] । **पञ्चद्दशतौ** । डत्यन्तौ निपात्येते तदस्य परिमाणमित्यर्थे । [पञ्चानां सङ्घ एव पञ्चत्वे सङ्ख्येतीतस्तद्विशेष्यकबोध एवेति परे] । **त्रिंशच्च** । आभ्यान्तदस्य परिमाणमित्यर्थे डण्प्रत्ययो भवति

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । **छेदादिभ्यो नित्यम्** ।५।१।६४। नित्यमाभीक्ष्ण्यम् । छेदं नित्यमर्हति छैदिको वेतसः, छिन्नप्ररूढत्वात् । (ग) विराग विरङ्गं च । विरागं नित्यमर्हति वैरङ्गिकः । **शीर्षच्छेदाद्यच्च** ।५।१।६५। शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः । शैर्षच्छेदिकः । यट्ठकोः संनियोगेन शिरसः शीर्षभावो निपात्यते । **दण्डादिभ्यो यत्** ।५।१।६६। एभ्यो यत् स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः । **पात्राद्घंश्च** ।५।१।६८। चाद्यत्, तदर्हतीत्यर्थे । पात्रियः । पात्र्यः । **कडङ्करदक्षिणाच्छ च** ।५।१।६९। चाद्यत् । कडं करोतीति विग्रहे अतएव निपातनात् खच् । कडङ्करं=माषमुद्गादिकाष्ठमर्हतीति कडङ्करीयो गौः । कडङ्कर्यः । दक्षिणामर्हति दक्षिणीयः । दक्षिण्यः । **स्थालीबिलात्**

---

**त.]** स्फुटीभवति । अन्यथा तु यस्य कस्यचित्संज्ञायां ब्राह्मणस्थे च प्रयोगे इत्यनिष्टोऽर्थः सम्भाव्येत । ततश्च मन्त्रे भाषायां च डण्न सिध्येत् । इष्यते च सः । तस्मादिष्टानुरोधेन षष्ठ्यर्थे सप्तमीति व्याख्येयम् । 'ब्राह्मणेऽभिधेये' इति तु काशिकायां व्याख्यातम् । **ठञादय इति** । ठञ उदाहरणं तु-प्रस्थमर्हति प्रास्थिकः, द्रौणिकः इत्याद्यूह्यम् । आदिशब्दग्राह्यस्य ठक उदाहरणमाह—**श्वैतच्छत्रिक इति** । एवं खारीकः । शत्यः । शतिकः । साहस्रः । इत्यादीन्युदाहर्तव्यानि । **छेदादिभ्यो** । नित्यग्रहणमिह 'नित्यं क्रीडाजीविकयो'रित्यत्रेव महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं न भवति, आरम्भसामर्थ्यादेव तन्निवृत्तिसिद्धेः, किं तु प्रत्ययार्थविशेषणमिति ध्वनयति—**छेदं नित्यमर्हतीति** । भाष्ये तु नित्यग्रहणं प्रत्याख्यातं । सूत्रमेव मास्त्विति तदाशय इति मनोरमा । अयं भावः—नित्यग्रहणमिह प्रत्ययार्थविशेषणं न भवति, नित्यं छेदमर्हतीत्यस्याऽसम्भवात् । न हि कश्चित्पदार्थो नित्यं छेदमर्हति । योऽपि वेतसादिरर्धच्छिन्नः प्ररोहति, सोऽपि नित्यं छेदमर्हतीत्यस्यार्थस्याऽसम्भवात् । कालान्तर एव तस्य छेदप्रवर्तनात् । न चात्र नित्यग्रहणत्यागेऽपि छेदमर्हतीत्यादिविग्रहवाक्यनिवृत्तये सूत्रस्यावश्यकत्वात्तत्प्रत्याख्यानं न युज्यत इति शङ्क्यम् । विग्रहवाक्यस्य भाष्यादिसंमतत्वादिति दिक् । छेद भेद द्रोह दोषेत्यादयश्**छेदादयः** । गणसूत्रमाह—**विरागेति** । **दण्डादिभ्यः** । पूर्वसूत्राद्यदनुवर्तत इत्याह—**यत्स्यादिति** । केचित्तु 'दण्डादिभ्यो यः' इति पठन्ति, स चाऽपपाठ एव, भाष्यादिविरोधादित्याहुः । तथा हि - 'अचो य'दिति सूत्रे भाष्ये उक्तं-'हनो वा यद्वधादेशश्च' । वध्यः घात्यः । 'तद्धितो वा' । वधमर्हति वध्य इति । यदि चेह यद्विधीयते तदैवैतदुपपद्यते, पक्षद्वयेऽपि 'यतोऽनावः' इत्याद्युदात्तत्वात् । यदि त्वत्र यो विधीयेत तदा स्वरो भिद्येत । मनोरमायां तु 'क्यब्विधौ हनो वा वधस्तद्धितो वा' इति भाष्यम् । यदि चेह यद्विधीयते, तदैवैतदुपपद्यते । क्यप्याद्युदात्तत्वं, यत्यपि तद्धिते 'यतोऽनावः' इत्याद्युदात्तत्वमित्यादि स्थितम् । **कडङ्करदक्षिणाच्छ च** । 'कडङ्करे'ति पाठस्तुपेक्ष्य इति ध्वनयति—**कडं करोतीति** । 'कड मदे' । कडतीति कडः । **माषमुद्गादिकाष्ठमिति** । अमरश्चाह 'कडङ्करो बुसं क्लीब'मिति । **गौरिति** । 'नीवारपाकादिकडङ्करीयैः' इति रघुः । **स्थालीबिलात्** । छयतावनुवर्तेते । अस्माच्छयतौ स्तः । ठको-

---

**बा.]**त्यर्थे अकर्मकत्वात्तदिति द्वितीया न स्यात् । इष्यते तु द्वितीयान्तादेव प्रत्ययः । तत्राह—**लब्धुमिति** । **श्वैतच्छत्रिक इति** । आर्हीयष्ठक् । **छेदादिभ्यो** । **आभीक्ष्ण्यमिति** । पौनःपुन्यमित्यर्थः । तन्नित्यमर्हतीत्यर्थे द्वितीयान्तेभ्यश्छेदादिभ्यो यथाविहितं प्रत्ययः स्यादित्यर्थः । **छैदिको वेतस इति** । 'आर्हा'दिति ठक् । 'तदर्हति' इत्येव सिद्धे आभीक्ष्ण एवेति नियमार्थमिदं सूत्रम् । वस्तुतस्तु नित्यमिति नाभीक्ष्ण्यार्थकं प्रत्ययार्थकोटिप्रविष्टं, किंतु अपाक्षिकार्थकम् 'समर्थानां प्रथमाद्वा' इति वाग्रहणानुवृत्तिनिवृत्त्यर्थमित्यभिप्रेत्य विग्रहवाक्यस्यापि लोके दर्शनान्नित्यग्रहणं न कर्तव्यमित्युक्तं भाष्ये । एवंच छेदादिभ्यः पाक्षिकप्रत्ययस्य 'तदर्हती'त्येव सिद्धत्वात्सूत्रमेवेदं नारब्धव्यमिति फलति । **विराग विरङ्गं चेति** । गणसूत्रमिदम् । उक्तेऽर्थे विरागशब्दो विरङ्गादेशं लभत इत्यर्थः । चादार्हीयष्ठक् । **शीर्षच्छेदाद्यच्च** । चादार्हीयष्ठक् । ननु 'शीर्षश्छन्दसी'ति छन्दस्येव शिरसः शीर्षादेव विधानात्कथमिह शीर्षादेश इत्यत आह—**यट्ठकोरिति** ।

**दण्डादिभ्यः** । यदित्यनुवर्तते । तदाह—**यत्स्यादिति** । 'दण्डादिभ्यो यः' इति त्वपपाठः, 'अचो य'दिति सूत्रभाष्ये तथैव दर्शनात् । **अर्घ्य इति** । मूल्यं, पूजाविधिं वार्हतीत्यर्थः । 'मूल्ये पूजाविधावर्घः' इत्यमरः । **वध्य इति** । वधमर्हतीत्यर्थः । **पात्राद्घंश्च** । **पात्रियः पात्र्य इति** । पात्रमर्हतीत्यर्थः । **कडङ्करदक्षिणाच्छ च** । 'कड

---

**शे.]** ब्राह्मणेऽभिधेये, समुदायेन चेत्प्रत्यासत्त्या ब्राह्मणस्य सञ्ज्ञा गम्यत इत्यर्थः । **लब्धुमिति** । उपलक्षणमिदं क्रियामात्रस्य । तेनोपवासं कर्तुं योग्यो भवतीत्याद्यर्थे औपवासिकादि सिद्ध्यति । **नित्यमाभीक्ष्ण्यमिति** । एतद्भाष्यनुरोधेन । 'वाक्यस्य दर्शनान्नित्यग्रहणमनर्थक'मिति भाष्योक्तेस्तदर्थत्वाऽनौचित्यम् । **दण्डादि** । **यदिति** । 'दण्डादिभ्यो यः' इति त्वपपाठः । **पात्राद** । अत्र नित्य-

।५।१।७०। स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः । पाकयोग्या इत्यर्थः । यज्ञर्त्विग्भ्यां घखञौ ।५।१।७१। यथासंख्यं स्तः । यज्ञमृत्विजं चार्हति यज्ञियः । आर्त्विजीनो यजमानः । ॐयज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम् । यज्ञियो देशः । आर्त्विजीन ऋत्विक् । आर्हीयाणां ठगादीनां द्वादशानां पूर्णोऽवधिः । अतः परं ठञेव ।

अथ ठञधिकारः ।

पारायणतुरायणचान्द्रायणं वर्तयति ।५।१।७२। पारायणं वर्तयति पारायणिकश्छात्रः । तुरायणं यज्ञविशेषः, तं वर्तयति तौरायणिको यजमानः । चान्द्रायणिकः । संशयमापन्नः ।५।१।७३। संशयविषयीभूतोऽर्थः सांशयिकः । योजनं गच्छति ।५।१।७४। यौजनिकः । ॐक्रोशशतयोजनशतयोरुपसङ्ख्यानम् । क्रोशशतं गच्छति क्रौशशतिकः । यौजनशतिकः । ॐ ततोऽभिगमनमर्हतीति च वक्तव्यम् । क्रोशशता-

त.]ऽपवादः । पाकयोग्या इति । त्रिष्फलीकृता इति यावत् । यज्ञमृत्विजं चार्हतीति । अमर्थो सर्यो विद्वान् । शास्त्रेणाऽपर्युदस्त इत्यर्थः । देशस्यानेवंविधत्वादुपसंख्यातम्—यज्ञियो देश इति । यज्ञानुष्ठाने योग्य इत्यर्थः । ऋत्विगिति । स तु ऋत्विक्कर्मार्हति, न तु ऋत्विजमिति सूत्रेण खञोऽप्राप्तावुपसंख्यानम् ।

आर्हीयाणां ठगादीनां द्वादशानां गतोऽवधिः ।

पारायण । आदित आरभ्य आन्तादविच्छेदेन वेदस्याध्ययनं पारायणम् । तच्च गुरुणा शिष्येण च निर्वर्त्यते, अन्यतराऽसंनिधौ अध्ययनक्रियाया अनिष्पादनात्, तथापि शिष्ये एव प्रत्यय इष्यते न तु गुराविखा-करे स्थितम् । तदाह—छात्र इति । यजमान इति । यद्यपि पुरोडाशादिनिर्वर्तनेन ऋत्विगपि यज्ञं वर्तयति, तथापि तत्र 'तौरायणिक' इति न प्रयुज्यते, अनभिधानादिति भावः । चान्द्रायणं—व्रतविशेषः । विषयीभूतोऽर्थ इति । 'स्थाणुर्वा पुरुषो वे'ति संशयविषयीभूते स्थाण्वादावेव प्रत्यय इष्यते, न तु संदेग्धरीति भावः । कथं तर्हि 'सांशयिकः संशयापन्नमानसः' इत्यमर इति चेत् । अत्राहुः—संशयापन्नं मानसं यस्मिन्विषये स विषयः

बा.]मदे' कडनं कडः=मदः । 'घनर्थे कविधान'मिति कः । खजिति । तथा च 'खित्यनव्ययस्ये'ति मुमिति भावः । कडङ्करं च दक्षिणा चेति समाहारद्वन्द्वात्पञ्चमी । स्थालीबिलात् । छयतावनुवर्तेते, तदर्हतीति च ।

यज्ञर्त्विग्भ्यां घखञौ । तदर्हतीत्येव । यज्ञमृत्विजं वेति । यज्ञमर्हतीति यज्ञियः । ऋत्विजमर्हतीत्यार्त्विजीन इत्यन्वयः । तत्कर्मेति । यज्ञकर्मार्हतीत्यर्थे यज्ञशब्दादृत्विक्कर्मार्हतीत्यर्थे ऋत्विक्छब्दाच्च यथासङ्ख्यं घखञोरुप-सङ्ख्यानमित्यर्थः । यज्ञियो देश इति । यज्ञानुष्ठानमर्हतीत्यर्थः । आर्त्विजीन ऋत्विगिति । ऋत्विक्कर्तव्यं कर्मार्हतीत्यर्थः । यद्यपि यज्ञर्त्विक्छब्दयोस्तत्कर्मणि लक्षणया सिध्यति तथाप्यत्र प्रकरणे मुख्यार्थेभ्य एव प्रत्यय इति ज्ञापनार्थमिदम् । ठगादीनां द्वादशानामिति । 'प्राग्वते'रित्यारभ्य 'तेन क्रीत'मित्यतः प्राक् त्रयोदश प्रत्यया अनुक्रान्ताः । तत्र 'प्राग्वते'रिति ठञं विना 'आर्हा'दित्यादिविहितानां ठगादीनां द्वादशानां विधिः पूर्ण इत्यर्थः । इत्यार्हीयाणां द्वादशानां पूर्णोऽवधिः ।

अथ तद्धिते प्राग्वतीये ठञधिकारे कालाधिकारो निरूप्यते—अतः परं ठञेवेति । आर्हीयेष्वर्थेषु प्राग्वतीयठञपवादा आर्हीयाश्छगादयः । आर्हीयार्थेषु निरूपितेषु तत ऊर्ध्वं ठगादिप्रत्ययानामनुवृत्तेरसम्भवात्प्राग्वतीयठञेवानुवर्तत इत्यर्थः । पारायण । 'द्वितीयान्तेभ्यः पारायणादिशब्देभ्यो वर्तयतीत्यर्थे ठञ्स्यादित्यर्थः । पारायणं वर्तयतीति । पारायणं—वेदाध्ययनम् । तद्वर्तयति=आवर्तयतीत्यर्थः । पारायणिकः छात्र इति । गुरौ त्वध्येतरि नायं प्रत्ययः, अनभिधानादिति भावः । तौरायणिको यजमान इति । ऋत्विजि नायं प्रत्ययः, अनभिधानादिति भावः । चान्द्रायणिक इति । चान्द्रायणं वर्तयतीत्यर्थः । चान्द्रायणं कृच्छ्र-विशेषः । संशयमापन्नः । अस्मिन्नर्थे संशयशब्दाद्द्वितीयान्ताठ्ठञ्स्यादित्यर्थः । अत्र 'आपन्न' इति कर्तरि क्तः । संशयविषयीभूतोऽर्थ इति । तेन समवायेन संशयाधारे संदेग्धरि विषयतया प्राप्त इत्यर्थः, उपसर्गवशात् । अमरस्तु 'सांशयिकः संशयापन्नमानसः' इत्याह । योजनं गच्छति । द्वितीयान्ता-नायं प्रत्यय इति भावः । योजनशब्दाद्गच्छतीत्यर्थे ठञ्स्यादित्यर्थः । क्रोशशतेति । आभ्यामपि द्वितीयान्ताभ्यां गच्छतीत्यर्थे ठञ उपस-

शे.]त्ययः । कडङ्कर । 'कड'मिति मदमित्यर्थकम् । कडङ्करं=तुसम् । तत्कर्मार्हतीति । यद्यपि यज्ञर्त्विक्छब्दयोस्त[दर्थव्यापारेत]त्कर्मवति लक्षणयाऽपि सिद्धयति तथाप्यत्र प्रकरणे मुख्यार्थेभ्य एव प्रत्यय इति ज्ञापनार्थमिदम् । पारायणमिति । यद्यपि तद्गुरुशिष्याभ्यां निर्वर्त्यते तथापि शिष्य एवेष्यते, अभिधानस्वभावात्, तदाह छात्र इति । एवं तौरायणिकोऽपि यजमाने, न तु ऋत्विजीति बोद्धव्यम् । चान्द्रायणं=तपोविशेषः । संशयमा । संशयशब्दस्तद्विषये लाक्षणिकः । 'आपन्न' इति कर्तरि क्तः ।

दभिगमनमर्हति क्रौशशतिको भिक्षुः । यौजनशतिक आचार्यः । पथः ष्कन् ।५।१।७५। पो ङीषर्थः । पन्थानं गच्छति पथिकः । पथिकी । पन्थो ण नित्यम् ।५।१।७६। पन्थानं नित्यं गच्छति पान्थः । पान्था । उत्तरपथेनाहृतं च ।५।१।७७। उत्तरपथेनाहृतम्—औत्तरपथिकम् । उत्तरपथेन गच्छति औत्तरपथिकः ।

ॐआहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसङ्ख्यानम् । वारिपथिकम् ।

कालात् ।५।१।७८। 'व्युष्टादिभ्यो'ऽणित्यतः प्रागधिकारोऽयम् । तेन निर्वृत्तम् ।५।१।७९। अह्ना निर्वृत्तमाह्निकम् । तमधीष्टो भृतो भूतो भावी ।५।१।८० अधीष्टः-सत्कृत्य व्यापारितः । भृतो-वेतनेन क्रीतः । भूतः-स्वसत्तया व्याप्तकालः । भावी-तादृश एवानागतः । मासमधीष्टो मासिकोऽध्यापकः । मासं भृतो मासिकः कर्मकरः । मासं भूतो मासिको व्याधिः । मासं भावी मासिक उत्सवः । मासाद्वयसि यत्खञौ ।५।१।८१। मासं भूतो मास्यः । मासीनः । द्विगोर्यप् ।५।१।८२। मासाद्वयसीत्यनुवर्तते । द्वौ मासौ भूतो द्विमास्यः ।

---

त.]संशयापन्नमानस इति । ततोऽभिगमनमिति । अत्र पञ्चम्यन्तात्प्रत्ययः । पन्थो ण । पथः 'पन्थ' इत्ययमादेशः स्याण्णश्च प्रत्ययः । नित्यग्रहणमिह प्रत्ययार्थविशेषणं,न तु वाक्यनिवृत्त्यर्थमित्याशयेनाह—नित्यं गच्छतीति । नित्यमिति किम् ? । पथिकः । भाष्ये तु नित्यग्रहणं प्रत्याख्यातम् । अयं हि भाष्याशयः-नित्यं पन्थानं गच्छतीत्यर्थोऽत्र यद्यपि संभवति, तथापि नात्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते, कदाचिद्गच्छत्यपि तत्प्रयोगात् । न चैवमपि विग्रहवाक्यनिवृत्त्यर्थं नित्यग्रहणमस्त्विति' शङ्क्यम् । शिष्टप्रयोगे विग्रहवाक्यस्य दर्शनादिति । उत्तरपथेन । चकारेण गच्छतीति प्रत्ययार्थः समुच्चीयते । तदाह—उत्तरपथेन गच्छतीति । वारिपथिकमिति । वारिपथेन गच्छ[ती]ति, वारिपथेनाहृतमिति वा विग्रहः । कालात् । स्वरूपग्रहणमिह न भवति, 'तमधीष्टो भृतो भूतो भावी'त्यत्यन्तसंयोगे द्वितीयानिर्देशात् । 'मासाद्वयसी'त्यादौ मासादीनां कालेन विशेषणाच्च । तेन निर्वृत्तम् । तृतीयान्तात्कालवाचिनष्ठञ्स्यात् । तेनेति करणे तृतीया । चतुरर्थ्यन्तर्गते 'तेन निर्वृत्त'मित्यत्र तु कर्तरि तृतीयेति विशेषः । उभयत्राप्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः । आह्निकमिति । 'अह्नष्टखोरेवे'ति नियमात् 'नस्तद्धिते' इति टिलोपो न । मासाद्वयसि । खञो ञित्करणं स्वरार्थं, पुंवद्भावप्रतिषेधार्थं च । मासीनाभार्यः । अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद्भूत इत्येतदत्र संवध्यते । न हि मासमधीष्टो भृतो वेत्याद्युक्तौ काचित्कालकृता शरीरावस्था गम्यत इत्याशयेनाह—मासं भूत इति । एतच्च वृत्तिपदमञ्जर्योः स्पष्टम् । मासीन इति ।

---

बा.]ङ्गयानमित्यर्थः । क्रोशशतादिति । ल्यब्लोपे पञ्चमी । क्रोशशतमतीत्येत्यर्थः । पथः ष्कन् । पथः ष्कन्निति च्छेदः । द्वितीयान्तात्पथिन्शब्दाद्गच्छतीत्यर्थे ष्कन् स्यादित्यर्थः । पन्थो ण नित्यम् । पथ इत्यनुवर्तते, गच्छतीति च । नित्यमिति गच्छतीत्यत्रान्वितं प्रत्ययार्थप्रविष्टमेव, नतु विधानान्वितं सत् महाविभाषानिवृत्त्यर्थम् । द्वितीयान्तात्पथिन्शब्दान्नित्यं गच्छतीत्यर्थे णप्रत्ययः स्यात्, प्रकृतेः पन्थादेशश्चेत्यर्थः । भाष्ये तु नित्यग्रहणं प्रत्याख्यातम् । उत्तरपथेनाहृतं च । उत्तरपथशब्दात्तृतीयान्तादाहृतमित्यर्थे, गच्छतीत्यर्थे च ठञ्स्यादित्यर्थः । वारिजङ्गलेति । वारि, जङ्गल, स्थल, कान्तार—एतत्पूर्वात्पथिन्शब्दात्तृतीयान्तादाहृतमिति, गच्छतीति चार्थे ठञित्यर्थः । वारिपथेन गच्छति, आहृतं वेत्यर्थः । जाङ्गलपाथिकः, स्थालपथिकः, कान्तारपथिकः । कालात् । इत्यतः प्रागिति । व्याख्यानादिति भावः । तेन निर्वृत्तम् । तृतीयान्तान्निर्वृत्तमित्यर्थे ठञ्स्यादित्यर्थः । आह्निकमिति । 'अह्नष्टखोरेवे'ति नियमान्न टिलोपः । तमधीष्टो । द्वितीयान्तादधीष्टादिष्वर्थेषु ठञ्स्यादित्यर्थः । व्यापारित इति । प्रेरित इत्यर्थः । तादृश एवेति । स्वसत्तया व्याप्यमानकाल इत्यर्थः । मासमधीष्ट इत्यादौ 'कालाध्वनो'रिति द्वितीया । मासाद्वयसि । अत्र भूत इत्येवानुवर्तते, व्याख्यानात् । मासशब्दाद्द्वितीयान्ताद्भूत इत्यर्थे यत्खञौ स्तो वयसि गम्ये इत्यर्थः । द्विगोर्यप् । अनुवर्तत इति । मासान्ताद्द्विगोर्भूत

---

शे.] ततोऽभिगमनमिति । पञ्चम्यन्तात्तसिल् । पन्थो ण । पथः पन्थादेशो णश्च प्रत्यय इत्यर्थः । 'अ'णिति पाठस्तु 'छेदादिभ्यः' इति सूत्रस्थभाष्याऽसम्मतः । नित्यं गच्छतीति । वृत्त्यनुसारेण । भाष्ये नित्यग्रहणप्रत्याख्यानात् । कालात् । कालग्रहणे यथाकथञ्चिदपि कालबोधकस्य ग्रहणमिति 'तदस्य परिमाण'मिति सूत्रे भाष्ये स्पष्टम् । अतिप्रसङ्गस्त्वनभिधानान्न । आह्निकमिति । 'अह्नष्टखोरेवे'ति नियमान्न टिलोपः । तादृश एवेति । स्वसत्तया व्याप्स्यमानकाल इत्यर्थः । तमधीष्ट इति । अत्यन्तसंयोगे द्वितीया । मुहूर्तमध्येषणेऽपि तत्फलीभूताऽध्ययनक्रियाव्याप्ते तद्व्याप्तत्वोपचारात् । यावत्कालमध्येषणभरणे क्रियेते तावतः प्रत्ययो नेष्यते । भूतभाविनोरुभयोरुपादानसामर्थ्यात्कालान्तर्भावो बोद्धव्यः । मासाद्व । निर्वृत्तादीनां पञ्चानामधिकारेऽपि भूत इत्येव सम्बद्ध्यते, न ह्यर्थान्तरे प्रत्यये तदन्तेन वयो गम्यते तदाह—मासं भूत इति । यवपीति । 'अवयसी'ति

**षण्मासाण्ण्यच्च** ।५।१।८३। वयसीत्येव । यबप्यनुवर्तते । चाट्ठञ् । षाण्मास्यः । षण्मास्यः । षाण्मासिकः । **अवयसि ठंश्च** ।५।१।८४। चाण्ण्यत् । षण्मासिकोऽव्याधिः । षाण्मास्यः । **समायाः खः** ५।१।८५। समामधीष्टो भृतो भूतो भावी वा समीनः । **द्विगोर्वा** ।५।१।८६। समायाः ख इत्येव । 'तेन परिजय्ये'त्यतः प्राङ्निर्वृत्तादिषु पञ्चस्वर्थेषु प्रत्ययाः । द्विसमीनः । द्वैसमिकः । **रात्र्यहःसंवत्सराच्च** ।५।१।८७। द्विगोरित्येव । द्विरात्रीणः । द्वैरात्रिकः । द्व्यहीनः । द्वैयह्निकः । समासान्तविधेरनित्यत्वान्न टच् । द्विसंवत्सरीणः । सङ्ख्यायाः संवत्सर-

त.] बालकः । **द्विगोर्यप्** । प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यब्विधीयते । पित्त्वा-दनुदात्तः । तेन 'द्विमास्यः' इत्यादौ 'इगन्तकाले'त्यादिना पूर्वपदप्रकृतिस्वरोऽवतिष्ठते । 'यः' इत्युक्ते तु प्रत्ययस्यो-दात्तत्वादन्तोदात्तो द्विमास्यः स्यात्, सति शिष्टस्वरबलीयस्त्वादिति भावः । **यबप्यनुवर्तत इति** । व्याख्यान-मेवात्र शरणम् । **समायाः खः** । 'हायनोऽस्त्री शरत्समाः' इत्यमरः । **समामधीष्ट इत्यादि** । अधीष्टादय-श्चत्वारोऽर्था अत्राप्यनुवर्तन्त इति भावः । **द्विगोर्वा** । 'संख्यापूर्वपदानां तदन्तग्रहणमलुकी'त्यभ्युपगमात्पूर्वेण नित्ये प्राप्ते विकल्पः । **द्वैसमिक इति** । खेन मुक्ते पक्षे ठञिति भावः । **द्वैयह्निक इति** । 'टखोरेवे'ति नियमा-दिह टिलोपो न । 'अल्लोपोऽनः' । 'न य्वाभ्या'मित्यैच् । ननु 'तद्धितार्थे' इति द्विगुसमासानन्तरं 'रात्र्यहःसंवत्सराच्चे'-त्येवं बाधित्वा परत्वाट्टचा भाव्यम् । न च महाविभाषया टचो विकल्प इति वाच्यम् । 'वृहतीजात्यन्ताः समासा-न्तार्थे'ति नित्येषु परिगणनादत आह—**समासान्तविधेरिति** । यद्यपि टचि कृतेऽप्यह्नादेशेन 'द्वैयह्निकः' इति रूपं सिध्यति, तथापि 'द्व्यहीनः' इति हि रूपं न सिध्यति, टचि सति अह्नादेशे तस्य स्थानिवत्त्वात्, 'राजाहः' इति समासान्तस्याऽहःशब्दान्तसमासग्रहणेनैव ग्रहणाच्च 'रात्र्यहःसंवत्सराच्च' इति खप्रत्यये कृतेऽपि 'द्व्यहीन' इति

बा.] इत्यर्थे यप्स्याद्वयसि गम्ये इत्यर्थः । **षण्मासाण्ण्यच्च** । **वयसीत्येवेति** । षण्मासशब्दाद्भूत इत्यर्थे ण्यच स्याद्वयसि गम्ये इत्यर्थः । अत्र चकारात्सन्निहितस्य यपोऽनुकर्षणे ण्यययावेव स्यातां, नतु ठञपि । इष्यते तु ठञपि । तत्राह—**यबप्यनुवर्तत इति** । स्वरितत्वादिति भावः । तर्हि चकारः किमर्थ इत्यत आह—**चाट्ठञिति** । तथा च ण्यत् यप्-ठञिति त्रयः प्रत्ययाः फलिताः । **अवयसि ठंश्च** । षण्मासशब्दाद्द्वितीयान्ताद्भूते अवयसि ठन् च स्यादित्यर्थः । **समायाः खः** । मण्डूकप्लुत्या 'तमधीष्टो भृतो भूतो भावी'ति कृत्स्नमेव सूत्रमनुवर्तते । समाशब्दाद्द्विती-यान्तादधीष्टादिष्वर्थेषु खः स्यादित्यर्थः । **द्विगोर्वा** । **समायाः ख इत्येवेति** । तथाच समान्ताद्द्विगोर्द्वितीया-न्तात्खो वा स्यात्, पक्षे ठञिति फलितम् । 'अप्सुमनःसमासिकतावर्षाणां बहुत्वं चे'ति लिङ्गानुशासनसूत्रम् । 'हायनोऽस्त्री शरत्समाः' इत्यमरः । 'समां समां विजायते' इति सूत्रादेकवचनमप्यस्ति । **पञ्चस्विति** । 'तेन निर्वृत्तं' 'तमधीष्टो भृतो भूतो भावी'ति पञ्चस्वित्यर्थः । एषां यथायोगमन्वयः । **द्वैसमिक इति** । खाऽभावे प्राग्व-तीयष्ठञ् । **रात्र्यहः** । **द्विगोरित्येवेति** । रात्रि, अहन्, संवत्सर—एतदन्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु खो वा स्यादि-त्यर्थः । पक्षे ठञ् । **द्विरात्रीण इति** । द्वाभ्यां रात्रिभ्यां निर्वृत्तः, द्वे रात्री अधीष्टो भृतो भूतो भावी वेत्यर्थः । एवमग्रेऽपि यथायोगं ज्ञेयम् । **द्व्यहीन इति** । द्वाभ्यामहोभ्यां निर्वृत्तः, द्वे अहनी अधीष्ट इत्यादिष्वर्थेषु 'तद्धि-तार्थ' इति द्विगोः खः, 'अह्नष्टखो'रिति टिलोपः । समाहारद्विगोस्तु न खः, टचि कृते अहन्शब्दाऽभावात् । **द्वैयह्निक इति** । 'अह्नष्टखोरेवे'ति नियमान्न टिलोपः, किन्त्वल्लोपः, अह्नादेशो वा । 'न य्वाभ्या'मित्यैच् । ननु 'द्व्यहीन' इत्यत्र 'तद्धितार्थ' इति द्विगुसमासे कृते 'रात्र्यहःसंवत्सराच्चे'ति खं बाधित्वा परत्वात् 'राजाहःसखिभ्यः' इति टचि 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशे तस्य स्थानिवत्त्वेनाऽहन्शब्दत्वेऽपि टजन्तस्य तदभावात् 'रात्र्यहःसंवत्स-राच्चे'ति खप्रत्ययो न स्यात् । कृतेऽपि खप्रत्यये 'द्व्यहीन' इतिस्यादित्यत आह—**समासान्तविधेरनित्यत्वान्न टजिति** । एवं च टजभावे सति नाह्नादेशः, समासान्ते पर एव तद्विधानादिति भावः । 'समासान्तविधिरनित्यः' इति षष्ठाध्यायस्य द्वितीये पादे 'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' इति सूत्रभाष्ये स्पष्टम् । अथ संवत्सरान्तस्य खे उदाहरति—**द्विसंवत्सरीण इति** । ठञि त्वादिवृद्धौ प्राप्तायां—**संख्यायाः संवत्सर** । आदिवृद्धिप्रकरणे

शे.] सूत्रभाष्यात्तु अत्रापि यपोऽनुवृत्तिरेव लभ्यते । एवं हि तत्र भाष्यम्—'अवयसि ठंश्चेत्यनन्तरस्य ण्यतोऽनुकर्षः, द्वेष्यं विजानीयात् यबप्यनुवर्त्तते इति' । 'यबप्यनुवर्त्तते' इत्यस्य 'पूर्वसूत्रे' इति शेषः । अनन्तरस्येत्युक्त्या तस्याऽनन्तरत्वं सूचितं, तच्च पूर्व-सूत्रेऽननुवृत्तावेव भवतीति बोद्धव्यम् । 'व्यवहितस्यापि क्वचिदनुवृत्तिर्दृष्टा यथा 'द्वितीयाटौस्स्वेनः' इत्यत्रैतद इदमः, एवमिहापि कश्चिद्भ्रम्येदित्यर्थः' इति वदता कैयटेन दृष्टान्तेन, व्यवहितस्यापीत्युक्त्या च पूर्वसूत्रे तदसम्बन्ध एवोक्तः, मूलन्तु वृत्त्यनुसारीति दिक् । **चाण्ण्यदिति** । 'अवयसि', 'ठं'निति सूत्रद्वयन्तु न कृतं, शब्दगौरवादपि योगविभागस्य गरीयस्त्वात् । **पञ्चस्वर्थेष्विति** । 'यथायोग'मिति शेषः । **द्व्यहीन इति**—तद्धितार्थद्विगौ खम् । समाहारद्विगौ तु न खः, समासान्ते कृतेऽहन्शब्दान्त-

**सङ्ख्यायस्य च** ।७।३।१५। सङ्ख्याया उत्तरपदस्य वृद्धिः स्याञ्णिदादौ । द्विसांवत्सरिकः । द्वे षष्टी भृतो द्विषाष्टिकः । ['सङ्ख्यायाः'] परिमाणान्तस्ये'त्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणे कालपरिमाणस्याऽग्रहणार्थम् । तेन द्वैसमिक इत्युत्तरपदवृद्धिर्न । **वर्षाल्लुक् च** ।५।१।८८। वर्षशब्दान्ताद्द्विगोर्वा खः । पक्षे ठञ् । वा च लुक् । त्रीणि रूपाणि । द्विवर्षीणो व्याधिः । द्विवर्षः । **वर्षस्याऽभविष्यति** ।७।३।१६। उत्तरपदस्य वृद्धिः स्यात् । द्विवार्षिकः । भविष्यतीति तु—द्वैवर्षिकः । अधीष्टभृतयोरभविष्यतीति प्रतिषेधो न । गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः । द्वे वर्षे अधीष्टो भृतो [भूतो] वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः । 'परिमाणान्तस्याऽसंज्ञाशाणयोः' । द्वौ कुडवौ परिमाणमस्य द्विकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । द्विनैष्किकम् । असंज्ञेति किम् ? । पञ्च कलापाः परिमाणमस्य पाञ्चकलापिकम् । तद्धितान्तः संज्ञा । द्वैशाणम् । कुलिजशब्दमपि केचित्पठन्ति । द्वैकुलिजिकः । **चित्तवति नित्यम्** ।५।१।८९। वर्षशब्दान्ताद्द्विगोः प्रत्ययस्य नित्यं लुक् स्याच्चेतने प्रत्ययार्थे । द्विवर्षो दारकः । **षष्टिकाः षष्टिरात्रेण पच्यन्ते** ।५।१।९०।

त.] रूपप्रसङ्गादित्याहुः । **उत्तरपदवृद्धिर्नेति** । एतच्चोपलक्षणम् । 'द्विवर्षा' इत्यत्र 'द्विगो'रिति ङीन्न भवति । परिमाणपर्युदासेन पर्युदासाऽभावात् 'अपरिमाणबिस्ताचिते'तीह निषेधप्रवृत्तेः । द्विवर्षे भृते 'तमधीष्ट' इति ठञ् । 'वर्षाल्लुक्च' इति लुक् । 'चित्तवति नित्य'मिति नित्यलुको वक्ष्यमाणत्वादचित्तवानिह प्रत्ययार्थ इति प्रत्युदाहरति—**द्विवर्षीणो व्याधिरिति** । **द्विवार्षिको मनुष्य इति** । अत्र वदन्ति—मनुष्ये 'चित्तवती'ति नित्यलुक्प्रसङ्गात् 'मनुष्यो मनुष्यसदृशः प्रतिमादिः' इति व्याख्याय स्थितस्य गतिः समर्थनीयेति । **दारक इति** ।

बा.] 'उत्तरपदस्ये'त्यधिकारे इदं सूत्रम् । संवत्सरश्च सङ्ख्या चेति समाहारद्वन्द्वात् षष्ठी । **संख्याया उत्तरपदस्येति** । संख्यायाः परस्य संवत्सरसंख्ययोत्तरपदस्येत्यर्थः । नन्वत्र संवत्सरग्रहणं व्यर्थं, संवत्सरस्य द्वादशमासपरिमाणतया 'परिमाणान्तस्याऽसंज्ञाशाणयो'रित्येव सिद्धेरित्यत आह—**परिमाणान्तस्येत्येवेति** । **वर्षाल्लुक् च** । **वा च लुगिति** । 'खठञो'रिति शेषः । **द्विवर्षीण इति** । खे रूपम् । **द्विवर्ष इति** । खठञोर्लुकि रूपम् ।

ठञि आदिवृद्धौ प्राप्तायां—**वर्षस्याभविष्यति** । आदिवृद्धिप्रकणे उत्तरपदस्येत्यधिकारे इदं सूत्रम् । शेषपूरणेन तद्व्याचष्टे—**उत्तरपदस्य वृद्धिः स्यादिति** । अभविष्यति यो ञिदादिः, तस्मिन्परे इत्यर्थः । निर्वृत्तादिषु पञ्चस्वर्थेषु भविष्यदर्थं वर्जयित्वा तदितरेषु चतुर्ष्वर्थेषु यस्तद्धितस्तस्मिन्परे इति यावत् । **द्विवार्षिक इति** । द्वाभ्यां वर्षाभ्यां निर्वृत्तः, द्वे वर्षे अधीष्टो भृतो भूतो वेत्यर्थः । अत्यन्तसंयोगे द्वितीया । **द्वैवर्षिक इति** । 'व्याधि'रिति शेषः । चित्तवति नित्यलुको वक्ष्यमाणत्वात् । नन्वेवं सति द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति द्विवार्षिक इत्यत्र कथमुत्तरपदवृद्धिः, भविष्यत्त्वस्य प्रतीतेरित्याशङ्क्याह—**अधीष्टभृतयोरभविष्यतीति प्रतिषेधो नेति** । कुत इत्यत आह—**गम्यते हि तत्र भविष्यत्तेति** । अध्येषणभरणयोः क्तप्रत्ययेन भूतत्वमेव शब्दशक्त्या गम्यते । तद्धितप्रत्ययेन च तथाविधाऽध्येषणभरणकर्मीभूतौ प्रतीयेते । एवंविधाऽध्येषणभरणविशिष्टयोस्तु भविष्यता कर्माचरणेन सम्बन्धः कर्म करिष्यतीत्यनेनावगत इति न स तद्धितार्थः । एवंच तत्रापि भविष्यदर्थकतद्धितपरकत्वाऽभावात्स्यादेवोत्तरपदवृद्धिरित्यर्थः । **द्विवार्षिको मनुष्य इति** । 'चित्तवति नित्य'मिति वक्ष्यमाणस्तु नित्यलुङ्न भवति, चित्तवतीत्येवारम्भसामर्थ्याच्चित्यत्वे सिद्धे पुनर्नित्यग्रहणेन भूत एवार्थे नित्यं लुगित्यभ्युपगमादिति हरदत्तः । केचित्तु 'द्विवार्षिकः—अमनुष्य' इति छिन्दन्ति । **चित्तवति नित्यं** । **प्रत्ययस्येति** । खस्य ठञश्चेत्यर्थः । **दारकः** । बालकः । **षष्टिकाः** । **तृतीयान्तादिति** । 'षष्टिरात्रशब्दा'दिति शेषः ।

शे.] द्विगोरभावात् । **संख्यायाः** । सङ्ख्यायाः परस्य संवत्सरसङ्ख्याशब्दस्येत्यर्थः । **द्वे षष्टीति** । षष्टिशब्दोऽत्र तत्संख्याकेऽहरादिरूपे काले वर्तते । अतः कालादित्यधिकारस्थभृतार्थप्रत्ययः । **संवत्सरग्रहणमिति** । सङ्ख्यायास्तु न परिमाणग्रहणेन असति गमके ग्रहणं, 'संख्या बाह्या तु सर्वतः' इत्युक्तेरिति भावः । **वा च लुगिति** । वाक्यभेदेन तयोरेवेत्यर्थः । **द्वैवर्षिक इति** । अस्य 'व्याधि'रिति विशेष्यम् । तेन न नित्यो लुक् । **प्रतिषेधो नेति** । भवितिष्यदर्थकप्रत्ययभिन्ने ञिदादावित्यर्थः । तदाह—**गम्यते हीति** । 'कर्म करिष्यती'त्यादिपदान्तरसमभिव्याहारेणेत्यर्थः । तदाह—**अधीष्टो भृतो वेति** । **भूतो वे**'त्यपपाठः, तत्र भविष्यत्त्वस्य कथमप्यनवगतेः । **द्विवार्षिको मनुष्य इति** । **'चित्तवती'**त्यस्यारम्भसामर्थ्यादेव नित्यत्वे सिद्धे पुनर्नित्यग्रहणाद्भूतरूपेऽर्थे एवं नित्यं लुक्, तत्रैवाभिधानाच्चेति नाऽत्र लुगिति हरदत्तः । **परे तु** नित्यग्रहणेन वाच्यवृत्त्योक्तार्थाऽलाभः, तस्मात् अध्येषणभरणयोश्चेतनविषयकत्वेन तत्र लुको नित्यतया ञिदादिप्रत्ययपरत्वाऽभावेन तत्र वृद्धिप्राप्तिरेव न । नित्यग्रहणं तु 'वे'त्यस्य निवृत्तये स्पष्टार्थमेव, मूलन्तु वृत्त्यनुरोधेनेत्याहुः । **परिमाणान्तस्या** । व्याख्यातमिदम् । अत्रापि वृत्त्यादिलेखनं तु प्रमादात् । **केचित्पठन्तीति** । अत्राऽरुचिबीजं 'कुलिजाल्लुक्खौ चे'त्यत्र दर्शितम् । **षष्टिकाः** । शालिविशेष एवायं-

बहुवचनमतन्त्रम् । षष्टिको धान्यविशेषः । तृतीयान्तात्कन् रात्रशब्दलोपश्च निपात्यते । **तेन परिजय्यलभ्यकार्यसुकरम्** ।५।१।९३। मासेन परिजय्यो=जेतुं शक्यो—मासिको व्याधिः । मासेन लभ्यं कार्यं सुकरं वा-मासिकम् । **तदस्य ब्रह्मचर्यम्** ।५।१।९४। द्वितीयान्तात्कालवाचिनोऽस्येत्यर्थे प्रत्ययः स्यात् । अत्यन्तसंयोगे द्वितीया । मासं ब्रह्मचर्यमस्य स मासिको ब्रह्मचारी । आर्द्धमासिकः । यद्वा प्रथमान्तादस्येत्यर्थे प्रत्ययः । मासोऽस्येति मासिकं ब्रह्मचर्यम् । ॐ **महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसङ्ख्यानम्** । महानाम्न्यो नाम 'विदामघव'न्नित्याद्या ऋचः । तासां ब्रह्मचर्यमस्य माहानाम्निकः । हरदत्तस्तु भस्याऽढ इति पुंवद्भावान्माहानामिक इत्याह । ॐ **चतुर्मासाण्ण्यो यज्ञे तत्र भव इत्यर्थे** । चतुर्षु मासेषु भवन्ति चातुर्मास्यानि यज्ञकर्माणि । ॐ **अण्संज्ञायाम्** । चतुर्षु मासेषु भवति चातुर्मासी आषाढी पौर्णमासी । अणन्तत्वान्ङीप् । **तस्य च दक्षिणा यज्ञाख्येभ्यः** ।५।१।९५। द्वादशाहस्य दक्षिणा द्वादशाहिकी । आख्याग्रहणादकाला-

त.] बालकः । 'परिजय्ये'त्यस्य विवरणं 'जेतुं शक्यः' इति । 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः । **महानाम्न्यो नामेति** । तथा चाऽभाषितपुंस्कत्वात्पुंवद्भावो नेति भावः । **हरदत्तस्त्विति** । यौगिकोऽयं, न तु रूढ इति मन्यते । **माहानामिक इति** । पुंवद्भावे कृते 'नस्तद्धिते इति टिलोपः । **चतुर्मासादिति** । मासशब्दस्य कालवाचित्वात्कालाधिकारे वार्तिकारम्भः । न च विशिष्टस्य कालवाचित्वाऽभावादिह सङ्गतिर्दुर्निरूपेति शङ्क्यं, 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहण'मित्यभ्युपगमादस्त्येव सङ्गतिरिति । **अण्संज्ञायामिति** । 'तत्र भवः' इत्यनेनैव सिद्धे पुनरण्विधिः 'द्विगोर्लुगनपत्ये' इति लुङ्मा भूदित्येतदर्थमिदमत्रारब्धम् । एवं चास्मिन् वार्तिके 'चतुर्मासा'दित्यस्यानुवृत्तये पूर्ववार्तिकमत्रैवारब्धमित्यपि ज्ञेयम् । **चातुर्मासीति** । कस्य संज्ञेत्याकाङ्क्षायामाह—**आषाढीति** । आषाढानक्षत्रयुक्ता पौर्णमासीत्यर्थः । **तस्य च दक्षिणा** । षष्ठ्यन्तेभ्यो यज्ञाख्येभ्यो दक्षिणेत्यस्मिन्नर्थे

बा.] **तेन परिजय्य** । निर्वृत्तादयः पञ्चार्था निवृत्ताः । तेन परिजय्यं, तेन लभ्यं, तेन कार्यं, तेन सुकरमित्यर्थेषु तृतीयान्ताट्ठञित्यर्थः । परिजय्य इत्यस्य विवरणं—**जेतुं शक्य इति** । **तदस्य ब्रह्मचर्यं** । ननु द्वितीयान्तादिति कथं, सूत्रे ब्रह्मचर्यविशेषणस्य तच्छब्दस्य प्रथमान्तत्वादित्यत आह—**अत्यन्तेति** । तथा च कालविशेषाभिव्याप्तं ब्रह्मचर्यमस्येत्यर्थे कालात्प्रत्ययः । इदमर्थं प्रति ब्रह्मचर्यं विशेषणम् । **मासिको ब्रह्मचारीति** । मासाभिव्याप्तब्रह्मचर्यवानित्यर्थः । **आर्धमासिक इति** । 'अर्धात्परिमाणस्ये'त्युभयपदवृद्धिः । अत्र इदंशब्दार्थस्य ब्रह्मचारिणः प्राधान्यम् । मासाभिव्याप्तं ब्रह्मचर्यं तु तद्विशेषणमिति स्थितिः । **यद्वेति** । सूत्रे तदिति प्रथमान्तम् । ब्रह्मचर्यमिति षष्ठ्यर्थे प्रथमा । तथाच प्रथमान्तात्कालवाचिनोऽस्य ब्रह्मचर्यस्येत्यर्थे ठञित्यर्थः फलति । तदाह—**प्रथमान्तादिति** । 'कालवाचिन' इति शेषः । **अस्येत्यर्थ इति** । अस्य ब्रह्मचर्यस्येत्यर्थे इत्यर्थः । **मासोऽस्येत्य**नन्तरं 'ब्रह्मचर्यस्ये'ति शेषः । अस्मिन्पक्षे ब्रह्मचर्यमेव प्रत्ययार्थत्वात्प्रधानम् । इदमर्थस्तु तद्विशेषणमिति बोध्यम् । **उपसंख्यानमिति** । 'अस्य ब्रह्मचर्यमित्यर्थे ठञ' इति शेषः । **माहानाम्निक इति** । महानाम्नीशब्दस्य ऋग्विशेषेषु रूढस्य नित्यस्त्रीलिङ्गत्वात् भाषितपुंस्कत्वाऽभावात् 'भस्याऽढे' इति पुंवत्त्वं नेति भावः । **हरदत्तस्त्विति** । 'माहानाम्निक'मित्येव भाष्ये उदाहृतत्वादिदमुपेक्ष्यमिति भावः । **चतुर्मासाण्ण्यो यज्ञे तत्रेति** । वार्तिकमिदम् । तत्र भवो यज्ञ इत्यर्थे चतुर्मासशब्दात्सप्तम्यन्ताण्ण्यो वाच्य इत्यर्थः । **चतुर्ष्विति** । चतुर्षु मासेषु अतीतेष्वित्यर्थः । **अण् संज्ञायामिति** । वार्तिकमिदम् । चतुर्मासब्दाद्भवार्थे अण् वाच्यः संज्ञायामित्यर्थः । **चतुर्ष्विति** । फाल्गुनीं पौर्णमासीमारभ्य चतुर्षु मासेष्वतीतेष्वित्यर्थः । **आषाढीति** । आषाढ्याः पौर्णमास्याश्चातुर्मासीति संज्ञेति भावः । नच 'तत्र भवः' इत्यणैव सिद्धमिति वाच्यं, 'द्विगोर्लुगनपत्ये' इति लुङ्निवृत्त्यर्थत्वात् । **तस्य च दक्षिणा** । तस्य दक्षिणेत्यर्थे यज्ञकालवृत्तिभ्यष्ठञ्स्यादित्यर्थः । **द्वादशाहस्येति** । द्वादशदिनसाध्यसुत्याकः क्रतुर्द्वादशाहः । तस्ये-

शे.] नं मुद्रेषु । एकवचनान्तप्रयोगदर्शनादाह-**बहुवचनमिति** । 'परिजय्य' इत्यस्य विवरणं-**जेतुं-शक्य इति** । **अस्येत्यर्थे इति** । ब्रह्मचर्यश्चेत्तत्कालपरिच्छेद्यमित्यपि बोद्धव्यम् । **यद्वेति** । अत्र पक्षे ब्रह्मचर्यश्चेद्विशेष्यमित्यर्थः । **मासोऽस्येति** । अत्र मासस्य प्राधान्यात्प्रथमा । अत्यन्तसंयोगे द्वितीया तु विशेषणादेवेति भावः । भाष्यन्तु 'यद्वे'ति पक्षपात्येव । 'मासिको ब्रह्मचारी'ति त्वर्शआद्यजन्तं बोद्धव्यम् । **महानाम्न्यो नामेति** । अनेन रूढतया भाषितपुंस्कत्वाऽभावात्पुंवत्त्वं नेति सूचयति । अत एव भाष्ये 'माहानाम्निक'मित्युदाहृतम् । भाष्ये तु 'तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम् । महानाम्नीनां ब्रह्मचर्यं माहानाम्निक'मित्युक्तम् । 'माहानाम्निक' इति तु महानाम्नीसहचरितव्रतपरान्महानाम्नीशब्दात्तच्चरतीत्युपसङ्ख्यानमिति वचनेन साधितम् । **तस्य च दक्षिणा** । यज्ञवाचकेभ्यः षष्ठ्यन्तेभ्यो दक्षिणेत्यर्थे ठञित्यर्थः । **अकालादपीति** । परे तु यज्ञग्रहणादेवात्र

दपि। आग्निष्टोमिकी। वाजपेयिकी। **तत्र च दीयते कार्यं भववत्** ।५।१।९६। प्रावृषि दीयते कार्यं वा प्रावृषेण्यम्। शारदम्। ॐ **कालाधिकारस्य पूर्णोऽवधिः।** ॐ

**व्युष्टादिभ्योऽण्** ।५।१।९७। व्युष्टे दीयते कार्यं वा वैयुष्टम्। व्युष्ट, तीर्थ, सङ्ग्राम, प्रवास इत्यादि। [ॐ **अग्निपदादिभ्य उपसङ्ख्यानम्**। अग्निपदे दीयते कार्यं वा-आग्निपदम्। पैलुमूलम्।] **तेन यथाकथाच-हस्ताभ्यां णयतौ** ।५।१।९८। यथाकथाचेत्यव्ययसंघातात्तृतीयान्ताद्धस्तशब्दाच्च यथासङ्ख्यं णयतौ स्तः। ॐ **अर्थाभ्यां तु यथासङ्ख्यं नेष्यते**। यथाकथाच दीयते कार्यं वा याथाकथाचम्। अनादरेण देयं कार्यं वेत्यर्थः। हस्तेन दीयते कार्यं वा हस्त्यम्। **सम्पादिनि** ।५।१।९९। ठञ्। तेनेत्येव। कर्णवेष्टकाभ्यां संपादि कार्णवेष्टकिकं मुखम्। कर्णालङ्काराभ्यामवश्यं शोभत इत्यर्थः। **कर्मवेषाद्यत्** ।५।१।१००। कर्मणा संपादि कर्मण्यं शौर्यम्। वेषेण संपादि वेष्यो नटः। वेषः-कृत्रिम आकारः। **तस्मै प्रभवति सन्तापादिभ्यः** ।५।१।१०१। सन्तापाय प्रभवति सान्तापिकः। साङ्ग्रामिकः। **योगाद्यच्च** ।५।१।१०२। चाट्ठञ्। योगाय प्रभवति योग्यः। यौगिकः। **कर्मण उकञ्** ।५।१।१०३। कर्मणे प्रभवति कार्मुकम्। **समयस्तदस्य प्राप्तम्** ।५।१।१०४। समयः प्राप्तोऽस्य सामयिकम्। **ऋतोरण्** ।५।१।१०५। ऋतुः प्राप्तोऽस्य आर्तवम्। [ॐउपवस्त्रा-

---

द.]ठञ् स्यात्। कालाधिकारादेवेह द्वादशाहादिभ्यः सिद्धे आख्याग्रहणं व्यर्थमित्याशङ्क्य परिहरति—**आख्याग्रहणा-दिति। तत्र च।** कालवाचिनः सप्तम्यन्ताद्दीयते कार्यमित्येतयोरर्थयोर्भववत्प्रत्ययः स्यात्। **प्रावृषेण्यमिति।** 'प्रावृष एण्य' इति भवार्थे विहितः, स इहाप्यतिदिश्यत इति भावः। **शारदमिति।** 'सन्धिवेलावृतुनक्षत्रेभ्योऽण्'। **कालाधिकारस्य पूर्णोऽवधिः।**

**व्युष्टादिभ्योऽण्।** व्युष्टशब्दः कालवाची दिवसमुखे वर्तते। **संपादिनि।** गुणोत्कर्षः—संपत्तिः। 'आव-श्यके णिनि'रिति वृत्तिकृत्। एवं वस्त्रयुगेन संपादि वास्त्रयुगिकं शरीरमित्यप्युदाहार्यम्। वस्त्रयुगेन अवश्यं शोभत इत्यर्थः। **तस्मै प्रभवति।** समर्थः शक्तः प्रभवतीत्युच्यते। **आर्तवमिति।** 'पुष्प'मित्यादि विशेष्यं बोध्यम्।

---

बा.]त्यर्थः। कालोपसर्जनक्रतुवाचित्वादयमपि कालवृत्तिरिति भावः। 'काला'दित्यधिकारसूत्रे हि यथाकथञ्चित्कालबोध-कस्य ग्रहणमिति 'तदस्य परिमाण'मिति सूत्रे भाष्ये स्पष्टम्। नन्वेवं सति अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकीत्यत्र ठञ्न स्यात्। अग्निष्टोमशब्दस्य कथञ्चिदपि कालवाचित्वाऽभावादित्यत आह—**आख्याग्रहणादकालादपीति।** अन्यथा 'यज्ञेभ्य' इत्येव सिद्धे आख्याग्रहणवैयर्थ्यादिति भावः। वस्तुतस्तु 'यज्ञेभ्य' इत्येवोक्तौ कालादित्यधिकारा-द्वादशाहादिशब्देभ्य एव स्यान्नतु अग्निष्टोमादिशब्देभ्यः। आख्याग्रहणे तु अग्निष्टोमादिभ्यो द्वादशाहादिशब्देभ्यश्च सर्वेभ्यो यज्ञवाचिभ्य इति भाष्ये स्पष्टम्। **तत्र च दीयते।** 'तत्र दीयते' 'तत्र कार्य'मित्यर्थयोः सप्तम्यन्तात्कालवाचिनो भववत्प्रत्ययाः स्युरित्यर्थः। **प्रावृषेण्यमिति।** 'प्रावृष एण्यः' इति भवार्थे विहित इहापि भवति। **शारदमिति।** शरदि दीयते कार्यं वेत्यर्थः। सन्धिवेलाद्यण्भवे विहित इहापि भवति। वस्तुतस्तु तत्र कार्यं दीयते इत्यर्थे यज्ञाख्ये-भ्यो भववत्प्रत्ययाः स्युरित्यर्थः। अग्निष्टोमे दीयते भक्तम् आग्निष्टोमिकम्। कार्यग्रहणादग्निष्टोमे दीयते हिरण्यमित्यत्र न भवति। न ह्यग्निष्टोमे हिरण्यं क्रियत इति भाष्ये स्पष्टम्। **इति प्राग्वतीये ठञधिकारे कालाधिकारः।**

अथ ठञ्विधिर्निरूप्यते—**व्युष्टादिभ्योऽण्।** 'तत्र च दीयते कार्य'मित्यनुवर्तते। दीयते कार्यं वेत्यर्थे सप्तम्यन्तेभ्यो व्युष्टादिभ्योऽण्स्याट्ठञोऽपवादः। व्युष्टं-प्रभातम्। **वैयुष्टमिति।** अणि 'न य्वाभ्या'मित्यैच्। **तेन यथा। अर्थाभ्यामिति।** प्रकृत्योः प्रत्यययोश्च यथासङ्ख्यम्, नतु दीयते कार्यमित्यनयोरित्यर्थः, व्याख्या-नादिति भावः। **संपादिनि। तेनेत्येवेति।** संपाद=संपत्तिः, शोभा, अस्यास्तीति—संपादी। तस्मिन्नर्थे तृतीयान्ताट्ठगित्यर्थः। **कर्मवेषाद्यत्।** तृतीयान्तात्कर्मन्शब्दात्, वेषशब्दाच्च संपादिन्यर्थे यत्स्यादित्यर्थः। **तस्मै प्रभवति।** चतुर्थ्यन्तेभ्यः संतापादिभ्यः प्रभवतीत्यर्थे ठञ् स्यादित्यर्थः। **संतापाय प्रभवतीति।**

---

शे.] कालादित्यस्याऽसम्बन्धः, न हि द्वादशाहसाध्ययज्ञवाची कालशब्दः। अत एव भाष्ये आख्याग्रहणात्प्रसिद्धमग्निष्टोमादि, अप्रसिद्धं पञ्चौदनादिकं पाकयज्ञादि च ये आचक्षते तेभ्यः सर्वेभ्यः प्रत्यय इत्यर्थकमुक्तम्। **तत्र च दी।** कालवाचिभ्यो दीयते कार्यमित्ये-तयोरर्थयोर्भववत्प्रत्यया इत्यर्थः। प्रावृष एण्यः। **शारदे** 'सन्धिवेलाद्यृतु' इत्यण्। इदं वृत्त्यनुरोधेन। भाष्ये तु चो भिन्नक्रमः दीयते इत्यनन्तरं बोद्ध्यः। चकारेण च यज्ञाख्येभ्य इत्याकृष्यते। तत्र दीयते इत्यर्थे यज्ञाख्येभ्यष्ठञ्भवतीत्यर्थः। अग्निष्टोमे दीयते भक्तमाग्निष्टोमिकम्। कार्यरूपार्थे एव भववदतिदेश इत्युक्तम्। **कालाधिकारस्य पूर्णोऽवधिः।**

**व्युष्टम्=अहर्मुखम्।** व्युष्टे दीयते इत्यादिभाष्यरीत्याप्युत्तरत्रोभयोरधिकारः। **संपादिनि।** गुणोत्कर्षः सम्पादः=संप-

दिभ्य उपसङ्ख्यानम् । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् ।] **कालाद्यत्** ।५।१।१०७। कालः प्राप्तोऽस्य काल्यं शीतम् । **प्रकृष्टे ठञ्** ।५।१।१०८। कालादित्येव । तदस्येति च । प्रकृष्टो दीर्घः कालोऽस्येति कालिकं वैरम् । **प्रयोजनम्** ।५।१।१०९। तदस्येत्येव । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । प्रयोजनं-फलं, कारणं च । **विशाखाषाढादण्मन्थदण्डयोः** ।५।१।११०। आभ्यामण्स्यात्प्रयोजनमित्यर्थे क्रमान्मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः । ***चूडादिभ्य उपसङ्ख्यानम्** । चूडा-चौडम् । श्रद्धा-श्राद्धम् । **अनुप्रवचनादिभ्यश्छः** ।५।१।१११। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयम् । **समापनात्सपूर्वपदात्** ।५।१।११२। व्याकरणसमापनं प्रयोजनमस्य व्याकरणसमापनीयम् । **ऐकागारिकट् चौरे** ।५।१।११३। एकमसहायमगारं प्रयोजनमस्य मुमुषिषोः स ऐकागा-

---

त.] **काल्यं शीतमिति** । 'प्रत्यूषोऽहर्मुखं कल्य'मित्यमरः । तत्र प्रातःकाले काल्यशब्दस्य व्युत्पत्त्यन्तरं मृग्यम् । **प्रकृष्टे ठञ्** । प्रकृष्यते अयमिति प्रकृष्टः । कर्मणि क्तः । तेन च प्रकर्षेण कालो विशेष्यते इत्याह—**दीर्घः काल इति** । ठञ्ग्रहणं विस्पष्टार्थम्, अन्यथा अनन्तरस्य यतोऽनुवृत्तिराशङ्क्येत । **इन्द्रमह इति** । महः—उत्सवः । **वैशाखो मन्थः । आषाढो दण्ड इति** । वैशाखाऽऽषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्तेते । तयोस्तु यथाकथंचिद्व्युत्पत्तिः क्रियत इति हरदत्तः । विलोडनदण्डस्यैवाधारभूतः काष्ठविशेषो 'मन्थ' इत्युच्यते । **अनुप्रवचना**। अनुप्रवचनं नाम ब्रह्मौदनमुच्यते । **सपूर्वपदादिति** । विद्यमानपूर्वपदादित्यर्थः । **ऐकागारिकट्** । टो ङीबर्थः ।

---

बा.] शत्रूणां पीडायै शक्नोतीत्यर्थः । **योगाच्च** । 'चतुर्थ्यन्तात्प्रभवतीत्यर्थे' इति शेषः । **कर्मण उकञ्** । 'चतुर्थ्यन्तात्प्रभवतीत्यर्थे' इति शेषः । **कार्मुकमिति** । उकञि टिलोपः । **समयस्तदस्य** । तदिति, प्राप्तमिति च सामान्ये नपुंसकम् । समयः प्राप्तोऽस्येत्यर्थे प्रथमान्तात्समयशब्दाट्ठञित्यर्थः । 'त'दित्युत्तरार्थम् । **ऋतोरण्** । प्राप्तमित्येव । प्राप्तोऽस्येत्यर्थे प्रथमान्तादृतोरणित्यर्थः । **आर्तवमिति** । अणि ओर्गुणः, आदिवृद्धिः । रपरत्वम् । **कालाद्यत्** । तदस्य प्राप्तमित्येव । प्रथमान्तात्कालशब्दादस्य प्राप्त इत्यर्थे यदित्यर्थः । प्रातःकाले काल्यशब्दस्तु कल्यवदव्युत्पन्नं प्रातिपदिकम् । कल्यमेव काल्यं वा । **प्रकृष्टे ठञ्** । अस्य प्राप्त इत्यर्थे प्रकृष्टवृत्तेः कालशब्दाट्ठञित्यर्थः । यतोऽपवादः । प्रकृष्टशब्दस्य विवरणं—दीर्घ इति । **प्रयोजनम्** । **तदस्येत्येवेति** । अस्य प्रयोजनमित्यर्थे प्रथमान्ताट्ठञित्यर्थः । **इन्द्रमह इति** । इन्द्रोत्सव इत्यर्थः । 'मह उद्धव उत्सवः' इत्यमरः । **प्रयोजनं फलं कारणं चेति** । प्रयुज्यते प्रवृत्त्या निष्पाद्यते इति कर्मणि ल्युटि प्रयोजनशब्दः फलवाची । प्रयुज्यते प्रवर्तते पुरुषोऽनेनेति करणे ल्युटि प्रयोजनशब्दः प्रवर्तकवाचीत्यर्थः । **विशाखाषाढात्** । विशाखाशब्दादाषाढशब्दाच्च प्रथमान्तादस्य प्रयोजनमित्यर्थे अण् स्यात्, समुदायेन मन्थे दण्डे च क्रमाद्गम्ये सतीत्यर्थः । तदाह—**आभ्यामिति** । स्थूणामेकां निखाय तस्यां रज्जुद्वयमधरोत्तरमासज्य तयो रज्ज्वोर्मन्थनदण्ड ऊर्ध्वमासज्यते । येन रज्ज्वा भ्रामितेन दधि विलोड्यते इति स्थितिः । तत्र स्थूणा मन्थ इत्युच्यते । मन्थानाख्यदण्डो दण्ड उच्यते । अनयोर्वैशाखशब्द आषाढशब्दश्च रूढौ । तत्रावयवार्थाभिनिवेशो न कर्तव्यः । **चूडादिभ्य इति** । चूडादिभ्यः प्रथमान्तेभ्योऽस्य प्रयोजनमित्यर्थे अणित्यर्थः । **चौडमिति** । चूडा प्रयोजनमस्येति विग्रहः । डलयोरभेदाच्चौलमित्यपि । **श्राद्धमिति** । श्रद्धा प्रयोजनमस्येति विग्रहः । श्रद्धाशब्दादणि श्राद्धमित्यर्थः । अत्र प्रयोजनशब्दः कारणवाची । श्रद्धाहेतुकमिति यावत् । **अनुप्रवचनादिभ्यश्छः** । प्रथमान्तादनुप्रवचनादिशब्दादस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः । अनुप्रवचनं नाम उपनयनाङ्गं किंचित्कर्म आश्वलायनसूत्रे प्रसिद्धम् । **समापनात्सपूर्वपदात्** । सपूर्वपदात्समापनशब्दादस्य प्रयोजनमित्यर्थे छः स्यादित्यर्थः । **व्याकरणसमापनीय इति** । 'मङ्गलाचार' इति शेषः । **ऐकागारिकट् चौरे** । एकमगारं प्रयोजनं=प्रयोजकमस्य चोरस्येति विग्रहे एकागारशब्दादिकट्प्रत्यये ऐकागारिकडिति निपात्यते । टित्वं ङीबर्थम् । प्रयोजनमित्येव सिद्धे चोर एवेति नियमार्थं सूत्रम् । एकमित्यस्य विवरणम्—**असहायमिति** । 'एके मुख्यान्यकेवलाः' इत्यमरः । **मुमुषिषोरिति** । चौर्यं कर्तुमिच्छोरित्यर्थः । चोरस्य हि असहायमगारमिष्टं, गेहान्तरस्थे चौर्य-

---

शे.] चित्स्तद्वदित्यर्थः । **प्रभवतीति** । समर्थ इत्यर्थः । **काल्यमिति** । प्रातःकालवाची काल्यशब्दस्तद्वाचिकल्यशब्दवदव्युत्पन्नं प्रातिपदिकं बोध्यम् । ततः स्वार्थिकाऽणन्तं वा । **इन्द्र महः**—इन्द्रोत्सवः । **मन्थो**—विलोडनदण्डाधारः काष्ठविशेषः । मन्थदण्डयो रूढावेतौ । **चूडादिभ्य इति** । इदं 'व्युष्टादिभ्योऽण्' 'ऋतोरण्' इत्यनयोरपि बोध्यम् । तेन यथादर्शनं व्यवस्था । अग्निपदे दीयते कार्यं वा आग्निपदं । पैलुमूलम् । उपवस्ता प्राप्तोऽस्य औपवस्त्रं । प्राशित्रम् । भाष्ये 'ऽग्निपदादिभ्य' इति पाठः । **ऐकागारिकट् । चौर इति** । तेन भिक्षौ न । टित्वं ङीबर्थम् । आद्युदात्तत्वमप्यत्र निपात्यते । अत एव ठञा सिद्धे निपातनमर्थव्यमिति भाष्ये उक्तम् ।

रिकश्चौरः । आकालिकडाद्यन्तवचने ।५।१।११४। समानकालावाद्यन्तौ यस्येत्याकालिकः । समानकालस्याऽऽकाल आदेशः । आशुविनाशीत्यर्थः । पूर्वदिने मध्याह्नादावुत्पद्य दिनान्तरे तत्रैव नश्वर इति वा ।
* आकालाट्ठंश्च । आकालिका विद्युत् । ठञः पूर्णोऽवधिः ।

अथ भावकर्मार्थाः ।

**तेन तुल्यं क्रिया चेद्वतिः** ।५।१।११५। ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । क्रिया चेदिति किम् ? । गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः । **तत्र तस्येव** ।५।१।११६। मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः ।

---

त.] ऐकागारिकी । किमर्थमिदमुच्यते यावता 'प्रयोजन'मित्येव ठञि सिद्धम् ? । सत्यम् । चौरे नियमार्थमावश्यकमिदं सूत्रम् । अन्यथा एकागारं प्रयोजनं यस्य भिक्षोरित्यत्रापि स्यात् । नन्वेवमपि 'ऐकागाराच्चौरे' इति ठञेव नियम्यतां किमैकागारिक इति निपातनेन, टित्करणेन च प्रयोजनमिति चेत् । अत्राहुः–टकारः कार्यावधारणार्थः–ङीबेव भवति न ञित्स्वर इति । वृद्धिस्तु निपातनाद्भवत्येवेति । **आकाल आदेश इति** । 'निपात्यते' इति शेषः । **आद्यन्तौ यस्येत्यादि** । अस्येत्यधिकारात्षष्ठ्यर्थे इकट् प्रत्ययो निपात्यत इति भावः । **आकालाट्ठंश्चेति** । वार्तिकमिदम् । ठञः पूर्णोऽवधिः ।

**तेन तुल्यं क्रिया चेद्वतिः** । 'तुल्य'मिति सामान्ये नपुंसकम् । तृतीयान्तात्तुल्यमित्यर्थे वतिः स्याद्यत्तुल्यं क्रिया चेत्सा । **ब्राह्मणेन तुल्यमिति** । नन्वत्र 'ब्राह्मणो यथा वर्तते तथा क्षत्रियादिकर्तृकाध्ययनं वर्तते' इति वाक्यार्थोऽसङ्गत इति चेत् । अत्राहुः–ब्राह्मणशब्दस्तत्कर्तृकाध्ययने लक्षणया वर्तते । 'ब्राह्मणकर्तृकाध्ययनतुल्याध्ययनं वाक्यार्थः' इति न कोऽपि दोषः । **गुणतुल्ये इति** । उपलक्षणमिदम् । अक्रियातुल्य इत्यर्थः । एवं च 'ब्राह्मणेन सदृशः क्षत्रियः' इत्यर्थे 'ब्राह्मणवत् क्षत्रियः' इति प्रयोगोऽसाधुरेव [इति] । अतएव 'पर्वतो वह्निमान्महा-

---

बा.] प्रकटत्वप्रसङ्गादिति भावः । चौरे किम् ? । एकागारं प्रयोजनमस्य भिक्षोरिति वाक्यमेव । भाष्ये तु 'एकागाराच्चोरे' इत्येव सुवचं, प्रकृतत्वाट्ठञ् सिद्ध इत्युक्तम् । **आकालिकट्** । समानकालाविति बहुव्रीहिः । **आद्यन्ताविति** । उत्पत्तिविनाशावित्यर्थः । **समानकालस्येति** । समानकालशब्दस्य इकप्रत्यये परे आकालादेशो निपात्यत इत्यर्थः । ननूत्पत्तिविनाशयोरेककालिकत्वमसंभवपराहतमित्यत आह—**आशु विनाशीति** । लक्षणां विनैवाह—**पूर्वदिने इति** । **आकालाट्ठंश्चेति** । आकालशब्दादाद्यन्तवचनाट्ठन्प्रत्ययश्च वक्तव्य इत्यर्थः । चाट्ठञ् । **आकालिका विद्युदिति** । ठनि टाप् । ठञि तु ङीप् । आकालिकी । अर्थः प्राग्वत् ।

इति प्राग्वतीयस्य ठञः पूर्णोऽवधिः ।

अथ भावकर्मार्था निरूप्यन्ते । **तेन तुल्यं** । तुल्यमिति क्रियेत्यस्य विशेषणम् । सामान्याभिप्रायं नपुंसकम् । तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययः स्यात् । यत्तुल्यं सा चेत् क्रियेत्यर्थः । तुल्या क्रियेत्यर्थे वतिः स्यादिति यावत् । **ब्राह्मणवदधीते इति** । अत्र 'ब्राह्मणव'दित्युदाहरणम् । 'ब्राह्मणेन तुल्यमधीते' इति विग्रहवाक्यम् । अत्र ब्राह्मणशब्देन ब्राह्मणकर्तृकाध्ययनं लक्ष्यते । ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकाध्ययनमिति बोधः । **गुणतुल्ये**

---

शे.] **समानकालस्येति** । एतदर्थमेव निपातनम् । अयमप्याद्युदात्तः । **आद्यन्तौ**=उत्पत्तिनाशौ । **आकालाट्ठंश्चेति** । वार्त्तिकमिदम् । नित्यम् । **आकालिका**=समानकालिकाऽऽद्यन्ता । चपलेति यावत् । चादाकालिकी । ठञः पूर्णोऽवधिः ।

**तेन तु** । सूत्रे तुल्यमिति सामान्ये नपुंसकं, प्रथमान्तञ्च । उदाहरणेऽप्येवम् । व्यापारविशेषणत्वात् । क्रियेति च संनिहितत्वात्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थविशेषणम् । यत्तुल्यं सा चेत्क्रियेत्यर्थः । प्रकृत्यर्थविशेषणन्तु न, ब्राह्मणादिशब्दानां लक्षणयाऽध्ययनपरत्वेन क्रियोपमानत्वयोग्यार्थकत्वेऽपि तत्र तृतीयार्थान्वयेन सत्त्वरूपतया क्रियात्वाऽसम्भवात् । 'स्थातव्येन तुल्यं गच्छती'त्यादिप्रयोगसत्त्वे तत्रापि तृतीयार्थान्वयेन सत्त्वरूपत्वमेव । पाकादीनान्तु सत्त्वरूपता स्पष्टैव । असत्त्वभूतार्थकतिङन्तार्थानामुपमानत्वमेव न, 'न वै तिङन्तेनोपमानमस्ती'ति सन्सूत्रस्थभाष्यात् । उपमेयत्वन्त्वस्त्येव । क्त्वाद्यन्तानां क्रियान्वयनियमेन तुल्यशब्दार्थेऽनन्वय एव । अत एव 'प्रकृत्यर्थविशेषणत्वे कथं तृतीयासमर्थं नाम क्रिया स्या'दित्युक्तं भाष्ये । यस्यार्थस्य तिङन्तादिवाच्यत्वे क्रियारूपताऽभूत् स सम्प्रति सत्त्वभूतोऽपि क्रियेत्याश्रयिष्यते इति कल्पने गौरवम् । 'नृत्यवद्गमन'मित्यादावस्तीत्यध्याहृत्य सत्तयोरेवोपमानोपमेयभावेनाऽदोष इत्यन्यत्र विस्तरः । **तत्र तस्येव** । यद्यपि 'मथुरायामिव पाटलिपुत्रेऽधीते' इत्यर्थेऽपि पूर्वेणैव सिद्धं, तस्य, 'मथुरया तुल्यमधीते पाटलिपुत्रे' इत्यस्य च तुल्यत्वात्, तथाऽपि द्रव्यगुणादितुल्यार्थ आरम्भः । 'क्रिया चे'दिति तु नानुवर्तते । किं चेवार्थस्योपमानविशेषणतया तुल्यपदार्थस्य विशेष्यतया ततो बोधे भेदः । एवञ्च उपमानमथुराऽभिन्ने पाटलिपुत्रे मे गृहमित्यर्थे 'मथुरावत्पाटलिपुत्रे मे गृह'मिति साध्वेव । उपमेयेनाऽभेदान्वयात्तत्समाने षष्ठीसप्तम्यावुपमानाद्बोध्ये । तदाह—**मथुरायामिवेति** । अत्र वाक्ये प्राकारादिपदाध्याहारेणैव बोधः । प्राकारयोरेव चोपमानो-

चैत्रस्येव चैत्रवन्मैत्रस्य गावः । तदर्हम् ।५।१।११७। विधिमर्हति विधिवत्पूज्यते । क्रियाग्रहणं मण्डूकप्लुत्यानुवर्तते । तेनेह न—राजानमर्हति छत्रम् । तस्य भावस्त्वतलौ ।५।१।११९। प्रकृतिजन्यबोधे प्रकारो भावः।

त.]नसवदि'ति वाक्ये 'महानससदृशः पर्वतः' इत्यर्थे वतेरसाधुत्वं मत्वा तस्य वतेः साधुत्वरक्षणार्थं 'पर्वतो वह्निमान्भवितुमर्हती'त्यादि क्रियापदं प्रयुञ्जते वृद्धाः । तत्र तस्येव । सप्तम्यन्तात् षष्ठ्यन्ताच्च इवार्थे प्रत्ययः । 'क्रिया चेत्' इति नानुवर्तते इति द्रव्यादितुल्येऽत्र वत्प्रत्ययो भवति । मथुरावत्स्रुघ्ने इति । मथुरायां यादृशः प्राकारस्तेन तुल्यः प्राकारः स्रुघ्ने इत्यर्थः । तदर्हम् । अर्हतीत्यर्हम् । पचाद्यच् । यद्यपि कृद्योगे कर्मणि षष्ठ्या भवितव्यम्, तथापि अत्र सौत्रो विभक्तिव्यत्यय इत्येके । 'कर्तृकर्मणो'रिति षष्ठ्या अनित्यत्वे ज्ञापकमिदम् । तेन च 'धायैरामोदमुत्तम'-मिति भट्टिप्रयोगः सङ्गच्छत इति तु कारकेष्ववोचाम । द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तुं तिङन्तेन विग्रहाति—विधिमर्हतीति । कथं तर्हि 'ततो यथावद्विहिताध्वराये'ति, असत्त्वार्थकस्य कर्मत्वाऽसंभवेन द्वितीयान्तत्वाऽभावादिति चेत् । अत्राहुः—यथाशब्दो वृत्तिविषये सत्त्वार्थकः, 'तथात्वं' 'यथात्व'मित्यादिषु त्वतलादिदर्शनात् । अन्यथा षष्ठ्यपि नास्तीति त्वतलौ न स्याताम् । तथा च द्वितीयान्तयथाशब्दादर्हार्थे वतिः । योग्यतामर्हतीति विधानमित्यर्थो-क्रियायोगोऽपि सुलभ इति । तस्य भावस्त्वतलौ । प्रकृतीति । न तु यः कश्चिद्धर्मः, घटत्वमित्यत्र द्रव्यत्व-

बा.]इति । द्रव्यतुल्येऽपीति बोध्यम् । तेन'चैत्रेण तुल्यो धनी देवदत्तः'इत्यादौ न भवति । 'अयमेवं न तद्व'दित्यादौ वतेः साधुत्वार्थम् आहेति क्रियापदं प्रयुञ्जते वृद्धाः । तत्र तस्येव । तत्रेवेति तस्येवेति चार्थे सप्तम्यन्तात्षष्ठ्यन्ताच्च वतिः स्यादित्यर्थः । अतृतीयान्तार्थं आरम्भः । अस्मादेव निर्देशादिवशब्दयोगे षष्ठ्यर्थे सप्तम्यपीति भाष्यम् । अत्र 'क्रिया चे'दिति नानुवर्तते इत्यभिप्रेत्योदाहरति—मथुरायामिव मथुरावत्स्रुघ्ने प्राकार इति । अत्र मथुरायामिवेति नाधिकरणसप्तमी, तथा सति विद्यमानेति क्रियापदसापेक्षतया असामर्थ्यात् । अत एव अस्मादेव सूत्रनिर्देशादिवशब्दयोगे षष्ठ्यर्थे सप्तमीति भाष्यं सङ्गच्छते । मथुरासम्बन्धिप्राकारसदृशः स्रुघ्नस्य प्राकार इति बोधः । मैत्रस्य भाव इति । वृत्तमित्यर्थः । तदर्हम् । अर्हतीत्यर्हम् । पचाद्यच् । तदिति कर्मणि द्वितीयान्तम्, लब्धुं योग्यं भवतीत्यर्थात् । कृद्योगलक्षणषष्ठ्यभावस्तु आर्षः । वतिरित्यनुवर्तते । द्वितीयान्तादर्हतीत्यर्थे वतिः स्यादित्यर्थः । विधिमर्हतीति । विधिं लब्धुं योग्यं भवतीत्यर्थः । विधिवत्पूज्यत इति । 'हरि'रिति शेषः । विधिं लब्धुं योग्यं हरिपूजनमित्यर्थः । विहितं प्रकारमनतिक्रान्तमिति यावत् । मण्डूकप्लुत्येति । पूर्वसूत्रे अननुवृत्तेरिति भावः । तस्य भावः । षष्ठ्यन्ताद्भाव इत्यर्थे त्वतलौ स्त इत्यर्थः । भावशब्दस्य अभिप्रायादावपि वृत्तेराह—प्रकारो भाव इति । त्वतलप्रत्ययौ यत उत्पत्स्येते तस्मात्प्रकृतिभूतशब्दाद्व्यक्तिबोधे जायमाने यज्जात्यादिकं विशेषणतया भासते तद्व्यक्तिविशेषणं भावशब्देन विवक्षितमित्यर्थः । यथा—गोशब्दाद्धि व्यक्तिबोधे जायमाने गोत्वं विशेषणत्वेन भासते, गोशब्दस्य गोत्ववतीषु व्यक्तिषु, गोत्वे च शक्तिग्रहणात् । न हि गोत्वं विहाय गोव्यक्ति-

शे.]पमेयभावः । वृत्तौ तु मथुरादिपदानान्तत्सम्बन्धिप्राकारे वृत्तिरिति केचित् । परे तु षष्ठ्यर्थसप्तम्यन्तात्षष्ठ्यन्ताऽच्चायं साधुः । अधिकरणसप्तम्यन्तात्तु नायम्, असामर्थ्यात् । अत एवैतत्सूत्रे तत्रग्रहणस्येवशब्दयोगे षष्ठ्यर्थे सप्तमीज्ञापकतोक्ता भाष्ये । 'देवेष्विव मनुष्येषु नामे'त्युदाहृतम् । तत्रैव 'देववन्मनुष्येषु नामे'ति साधुः । उपमानदेवसम्बन्धिनामाऽभिन्नं मनुष्यसम्बन्धि नामेति बोधः । 'मथुरावत्पाटलिपुत्रे प्राकार' इत्यस्य उपमानमथुरासम्बन्धिप्राकाराऽभिन्नः पाटलिपुत्रसम्बन्धी प्राकार इत्येवं बोध एव साधुत्वम् । अस्मादेव ज्ञापकादिवयोगे उपमानविशेषणादुपमेयविशेषणाच्च षष्ठ्यर्थे सप्तमीत्याहुः । तदर्हम् । तदिति द्वितीयान्तादर्हमित्यर्थे वतिरित्यर्थः । सूत्रे सौत्रत्वाद्द्वितीया । विधिवदिति । विधिविषययोग्यताकर्तृहरिकर्मकं देवदत्तकर्तृकं पूजनमिति बोधः । विधिशब्देन तदुक्तः प्रकारः । मादृश्याऽप्रतीतेः पूर्वेणाऽसिद्धौ वचनम् । 'विनीतवदागमनं' 'विच्छेदः कृतहस्तव'दित्यादौ विनीतानामिदं योग्यमागमनं, कृतहस्तानामिदं योग्यं छेदनमिति प्रतीतेरिति दिक् । तस्य भावः । 'भावे चाऽकर्मकेभ्य' इत्यादौ भावपदार्थस्याऽन्यादृशस्य प्रसिद्धेराह—प्रकृतीति । भवन्ति=अर्थबोधाय प्रवर्तन्ते अनेनेति भाव इति करणे घञिति भावः । प्रकार इति । मुख्यविशेष्यतानिरूपितविषयताश्रय इत्यर्थः । तेन राजपुरुषादौ राजादेः प्रकारत्वेऽपि न क्षतिः । स च तच्छब्दप्रवृत्तिनिमित्तरूप एव । प्रवृत्तिनिमित्तत्वञ्च यत्र बुद्धिस्थे सति विशेष्यभूतार्थबोधनार्थं शब्दस्य प्रवृत्तिः=प्रयोगस्तत्त्वम् । क्वचित्प्रकारस्य तत्त्वं, यथा—घटादिपदे । क्वचित्संसर्गस्य, यथौपगवराजपुरुषपाचकादौ । प्रकार इति च मूले उपलक्षणम् । यद्वा सम्बन्धस्यापि सम्बन्धतया प्रकारतया चेति द्वेधा भानम् । सञ्ज्ञाशब्दे च प्रायः शब्द एव प्रवृत्तिनिमित्तमिति केचित् । परे तु सञ्ज्ञाशब्दे प्रवृत्तिनिमित्तं नास्त्येव । डित्थत्वमित्यादौ विशेष्यभूतोऽर्थ एव त्वार्थः । प्रकृतिश्लेषु शब्दपरा । डित्थशब्दवानर्थ इत्यादि क्रमेणैव बोधः । 'डित्थ' इत्यादितः सङ्ख्यादिप्रकारकबोधाच्च निर्विकल्पकम् । 'कुत्व'मित्यादेः कुशब्दार्थः कवर्ग इत्यादिरीत्या बोधः ।

गोर्भावो गोत्वम् । गोता । 'त्वान्तं क्लीबं' 'तलन्तं स्त्रियाम्' । **आ च त्वात्** ।५।१।१२०। 'ब्रह्मणस्त्व' इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थं, गुणवचनादिभ्यः कर्मणि विधानार्थं चेदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता ।
**न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः** ।५।१।१२१। इतः परं ये भावप्रत्ययास्ते नञ्तत्पुरुषान्न स्युश्चतुरादीन्वर्जयित्वा । अपतित्वम् । अपटुत्वम् । नञ्पूर्वात्किम् ? । बार्हस्पत्यम् । तत्पुरुषात्किम् । नास्य पटवः सन्तीत्यपटुस्तस्य भाव आपटवम् । अचतुरेति किम् ? । आचतुर्यम् । आसङ्गत्यम् ।

---

त.] पृथिवीत्वादेरभानात् । **गोर्भाव इति** । इह गोशब्दोऽर्थपरः,शब्दस्वरूपपरो वेति पक्षद्वयम् । यदाऽर्थपरस्तदा धर्मविशेषः प्रत्ययार्थः, स च धर्मत्वेनैव भासते । 'प्रकृतिजन्ये'त्यादिस्तु प्रयोगोपाधिः । यदा तु शब्दपरस्तदा तज्जन्यबोधप्रकारः प्रत्ययार्थः । स च धर्मविशेष एव । 'पाचकत्व'मित्यत्र तु कर्तृत्वरूपसंबन्धः प्रकारः । 'पच्यमानत्व'मित्यत्र तु कर्मत्वरूपसंबन्धः । तथा 'औपगवत्व'मित्यत्र जन्यत्वरूपसंबन्धः प्रकारः । 'राजपुरुषत्व'मित्यत्र तु स्वरूपसंबन्ध इत्याद्यूह्यम् । एवं स्थिते हरिटीकायां यदुक्तं 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेने'ति, तत्र नाऽपूर्वं शक्त्यन्तरं कल्प्यम् । उक्तरीत्यैव तत्राप्युपपत्तेरिति संक्षेपः । **अपवादैः सहेति** । 'पृथ्वादिभ्य इमनिज्वे'त्यादिभिः । **चकार इति** । अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भावः । **पौंस्नं पुंस्त्वमिति** । संयोगान्तलोपे 'पुमः खयी'ति रुत्वम् । पाक्षिकावनुनासिकानुस्वारौ । विसर्गे कृते सत्वम् । **अपतित्वमिति** । इह 'पत्यन्ते'ति यग् न भवति । **अपटुत्वमिति** । इह तु 'इगन्ताच्च लघुपूर्वा'-

---

बा.] षु गोशब्दस्य शक्तिग्रहः सम्भवति,अतीतानागतानां वर्तमानानां चाऽनन्तत्वेन युगपदुपस्थित्यसम्भवाद्गोशब्दात् प्राणित्वपशुत्वादिरूपेणाऽपि गोव्यक्तिप्रतीत्यापत्तेश्च । ततश्च सर्वासु गोव्यक्तिष्वनुगतं तदितरव्यक्तिभ्यो व्यावृत्तं कश्चिद्धर्मविशेषं शक्यतावच्छेदकं पुरस्कृत्य गोशब्दः प्रवर्तत इति सिद्धान्तः । एवं घटादिशब्दा अपि घटत्वादितत्तद्धर्मं पुरस्कृत्य प्रवर्तन्ते । तदिदं शब्दप्रवृत्तिनिमित्तं भावशब्देन विवक्षितमिति भाष्यकैयटयोः स्थितम् । **गोर्भाव इति** । गोशब्दस्य प्रवृत्तिनिमित्तमिति बोधः । **त्वान्तं क्लीबं तलन्तं स्त्रियामिति** । लिङ्गानुशासनसूत्रसिद्धमिदम् । **आ च त्वात्** । त्वतलावित्यनुवर्तते । आङ्मर्यादायाम् । तदाह-**ब्रह्मणस्त्व इत्यतः प्रागिति** । ननु 'तस्य भावस्त्वतलौ' इत्यतस्त्वतलोरुत्तरसूत्रेष्वनुवृत्त्यैव सिद्धेरधिकारोऽयं व्यर्थ इत्यत आह-**अपवादैरिति** । 'पृथ्वादिभ्य इमनिज्वा' इत्यादिविहितैरिमनिजादिभिरपवादैः समुच्चायार्थमित्यर्थः । असति त्वेतस्मिन्नधिकारसूत्रे उत्तरत्र इमनिजादिविधिषु त्वतलोरनुपस्थितिः स्यात् । प्रत्यक्षनिर्दिष्टैरिमनिजादिविशेषैः शान्ताकाङ्क्षत्वात् । अन्यथा 'प्राग्दीव्यतोऽ'णित्यधिकृतस्य अणः 'अत इ'ञित्यादावपि प्रवृत्तिः स्यादिति भावः । प्रयोजनान्तरमाह-**गुणवचनादिभ्य इति** । अन्यथा भावेऽर्थे सावकाशयोस्त्वतलोः कर्मण्यर्थे गुणवचनादिभ्यो विशेषविहितेन ष्यञा बाधप्रसङ्ग इति भावः । नन्वेवमपि 'आ त्वा'दित्येवास्तु, स्वरितत्वादेव पूर्वसूत्रादिह त्वतलोरनुवृत्तिसिद्धेस्तदनुकर्षार्थश्चकारो व्यर्थ इत्यत आह-**चकार इति** । अन्यथा त्वतलौ स्त्रीपुंसाभ्यां न स्याताम्, अन्यत्र तयोः सावकाशत्वादिति भावः । **पौंस्नमिति** । संयोगान्तलोपे 'पुमः खय्यम्परे' इति रुत्वम् । पाक्षिकावनुनासिकानुस्वारौ । विसर्गे कृते सत्वम् । एवं **पुंस्त्वम्** । तत्र 'ह्रस्वात्तादौ' इति षत्वं न भवति, सवनादिषु पाठात् ।

**न नञ्पूर्वात्** । **इतः परमिति** । त्वतल्विधेरूर्ध्वमित्यर्थः, नञ्पूर्वादित्युत्तरस्य प्रतिषेध इति भाष्यादिति भावः । **चतुरादीनिति** । चतुर, सङ्गत, लवण, वट, युध, कत, रस, लस—एतान्वर्जयित्वेत्यर्थः । **अपतित्वमिति** । इह 'पत्यन्तपुरोहितादिभ्यः' इति यक्न भवति । **अपटुत्वमिति** । इह 'इगन्ताच्च लघुपूर्वा'दित्यण्न भवति । **बार्हस्पत्यमिति** । 'पत्यन्तपुरोहितादिभ्यः' इति यक् । **आपटवमिति** । 'इगन्ताच्च लघुपूर्वा'दित्यण् । अपटुशब्दस्य बहुव्रीहित्वात्तत्पुरुषत्वाऽभावान्नास्याऽणो निषेध इति भावः । **आचतुर्यमिति** । अचतुरस्य भावः ।

---

शे.] अन्यथा 'कुत्वं कस्मान्न भवती'त्यादौ कुत्वशब्दार्थकुशब्दस्य प्राप्त्यभावात्तस्य स्वार्थाश्रये लक्षणाऽऽश्रयणीया स्यादित्यादिभाष्यप्रदीपोद्द्योतादौ विस्तर इत्याहुः । भावत्वेन च प्रवृत्तिनिमित्तं शक्यम् । प्रकृतिजन्येत्यादि तदुपलक्षकम् । घटत्वमित्यादेर्घटसम्बन्धी भाव इत्यादिक्रमेण बोधः । भावप्रधाननिर्देशस्थले च तादात्म्येन व्यक्तिप्रकारकः स्वरूपेण जातिविशेष्यको बोध इति न तत्राऽसाधुत्वम् । अत एव 'जात्याख्यायामेकस्मि'न्निति चरितार्थम् । **अपवादैरिति** । अन्यथाऽपवादविषयेऽस्यानुपस्थितिः स्यात्, निराकाङ्क्षत्वादिति भावः । **चकार इति** । अन्यथाऽपत्याद्यर्थप्रत्ययानामिवैतयोरपि तौ बाधकौ स्यातामिति भावः । **पुंस्त्वमिति** । 'ह्रस्वात्तादौ' इति षत्वन्तु न, सवनादिषु पाठात् । **न नञ्पूर्वात्** । अधिकारसूत्रमेतत् । तत्र गृह्यमाणप्रातिपदिकाद्विधीयमानानान्तदन्ते प्राप्त्यभावादाह—**अपतित्वमिति** । 'पत्यन्ते'ति 'इगन्ताच्चे'ति च क्रमेण यगणौ प्राप्तौ । **आपटव**

आलवण्यम् । आवट्यम् । आयुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् । **पृथ्वादिभ्य इमनिज्वा** ।५।१।१२२। वावचनमणादिसमावेशार्थम् । **र ऋतो हलादेर्लघोः** ।६।४।१६१। हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु । **टेः** ।६।४।१५५। भस्य टेर्लोपः स्यादिष्ठेमेयस्सु । पृथोर्भावः प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् । **वर्णदृढादिभ्यः ष्यञ्च** ।५।१।१२३। चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । * **पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्** । द्रढिमा । षो ङीषर्थः । औचिती । याथाकामी । **गुणवचनब्राह्मणा-**

त.]दिष्यण् न भवति । **आचतुर्यमित्यादि** । ब्राह्मणादित्वात् ष्यञ् । **पृथ्वादिभ्यः** । **अणादीति** । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिष्वणः समावेशः । चण्डखण्डादिषु गुणवचनेषु ष्यञः । बालवत्सादिषु वयोवचनलक्षणस्याऽञ इति बोध्यम् । त्वतलौ तु पूर्वसूत्रेणैव लब्धौ । **र ऋतो** । हलादेः किम् ? । ऋजिष्ठः । ऋजीयान् । लघोः किम् ? । कृष्णिमा । 'पृथुमृदुभृशे'ति परिगणने तु 'हलादेर्लघो'रिति त्यक्तुं शक्यम् । **वर्णदृढादिभ्यः** । गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम् । 'पृथुमृदुभृशे'ति परिगणनादिह रभावो न भवति—कृतमाचष्टे कृतयति । णाविष्ठवद्भावः । **औचितीति** । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । 'हलस्तद्धितस्ये'ति यलोपः । एवं याथाकामी । दृढ, वृढ, परिवृढ, भृश, कृश, इत्यादि । अत्र द्वे गणसूत्रे-**'वेयातलाभमतिमनःशारदानाम्'** । विशब्दादुत्तरे ये यातादयः पञ्च तदन्तानां समासानामनन्तरः ष्यञ् भवतीत्यर्थः । वियातत्वं । वियातता । वियातिमा । वैयात्यम् । विलाभिमा । वैलाभ्यम् । विमतिमा । वैमत्यम् । इगन्तत्वादणपि—वैमतम् । विमनिमा । वैमनस्यम् । विशारदिमा । वैशारद्यम् । त्वतलोः समावेशेन-विलाभत्वम् । विलाभतेत्यादीन्यप्यूह्यानि । **'समो मतिमनसोः'** । समः परे ये मतिमनसी तदन्तयोः समासयोरनन्तरः ष्यञ् भवतीत्यर्थः । संमतित्वम् । संमतिता । संमतिमा । सांमत्यम् । इगन्तत्वादणि-सांमतम् । संमनस्त्वम् । संमनस्ता । संमनिमा । सांमनस्यम् । **गुणवचन** । ष्यञनुवर्तते, कर्म क्रिया

बा.] ब्राह्मणादित्वात्ष्यञ् । **आसंगत्यमिति** । असङ्गतशब्दात्ष्यञ् । **आलवण्यमिति** । अलवणशब्दात्ष्यञ् । **आवट्यमिति** । न वटः अवटः, तस्मात्ष्यञ् । **आयुध्यमिति** । आयुधशब्दात्ष्यञ् । **आकत्यमिति** । अकतशब्दात्ष्यञ् । **आरस्यमिति** । अरसशब्दात्ष्यञ् । **आलस्यमिति** । लसतीति लसः । न लसः अलसः । तस्मात्ष्यञ् । **पृथ्वादिभ्यः** । तस्य भाव इत्यनुवर्तते । पृथ्वादिभ्यः षष्ठ्यन्तेभ्यो भावे इमनिज्वा स्यादित्यर्थः । ननु वाग्रहणं व्यर्थं, 'समर्थानां प्रथमाद्वे'ति महाविभाषयैव वाक्यस्य सिद्धत्वात् । नच इमनिजभावे त्वतल्प्रत्ययार्थं वाग्रहणमिति वाच्यम्, 'आ च त्वा'दित्येव तत्समावेशसिद्धेरित्यत आह-**वावचनमणादिसमावेशार्थमिति** । पृथुमृदुप्रभृतिषु 'इगन्ताच्च लघुपूर्वा'दित्यणः, चण्डखण्डादिषु गुणवचनलक्षणष्यञः, बालवत्सादिषु वयोवचनलक्षणस्य अञश्च औत्सर्गिकस्य समावेशार्थमित्यर्थः । अन्यथा महाविभाषावशादपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते इति 'पारे मध्ये षष्ठ्या वे'ति सूत्रभाष्ये सिद्धान्तितत्वादिमनिच्त्वतलामभावे तेषां प्रवृत्तिर्न स्यादिति भावः । **र ऋतो** । र इति प्रथमान्तम् । **इष्ठेमेयस्स्विति** । शेषपूरणम् । 'तुरिष्ठेमेयस्सु' इत्यस्मादनुवृत्तेरिति भावः । अङ्गस्येत्यधिकृतं । हलादेरङ्गस्य लघोर्ऋकारस्य र इति रेफाकारसङ्घात आदेशः स्यादिष्ठनि इमनिचि ईयसि च परे इत्यर्थः । **टेः** । 'इष्ठेमेयस्सु' इत्यनुवर्तते । 'अल्लोपोऽनः' इत्यतो लोप इति च । तदाह-**टेर्लोपः स्यादिष्ठेमेयस्स्विति** । **प्रथिमेति** । पृथुशब्दादिमनिच् । चकार इत् । नकारादकार उच्चारणार्थः । ऋकारस्य रः, उकारस्य गुणं बाधित्वा टेर्लोपः । **पार्थवमिति** । इमनिजभावे 'इगन्ताच्च लघुपूर्वा'दित्यण् । **म्रदिमेति** । मृदुशब्दादिमनिचि ऋकारस्य रः । 'टेः' इति टिलोपश्च । **मार्दवमिति** । 'इगन्ताच्चे'त्यण् । **वर्णदृढादिभ्यः** । षष्ठ्यन्तेभ्यो वर्णवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ्च स्यादित्यर्थः । गुणवचनत्वादेव ष्यञि सिद्धे इमनिच्समुच्चयार्थं वचनम् । 'पृथुं मृदुं भृशं चैव कृशं च दृढमेव च । परिपूर्वं वृढं चैव षडेतान्रविधौ स्मरेत्' इति वार्तिकमर्थतः सङ्गृह्णाति—**पृथुमृदुभृशेत्यादि** । तेन कृतयतीत्यादाविष्ठवत्त्वेऽपि रभावो न । **द्रढिमेति** । दृढशब्दादिमनिचि ऋकारस्य रः । भ्रशिमा क्रशिमा द्रढिमा परिव्रढिमा । ननु वर्णदृढादीनां ष्यञन्तानां लोकतो नपुंसकत्वात्ष्यञः षित्त्वस्य किं प्रयोजनमित्यत आह—**षो ङीषर्थ इति** । **औचितीति** । उचितशब्दाद्ब्राह्मणादित्वात्ष्यञि लोकात्स्त्रीत्वम् । षित्त्वान्ङीषि 'हलस्तद्धितस्ये'ति यलोपः । उचितस्तु न दृढादिः, तद्गणे अदर्शनात्, इमनिच्प्रसङ्गाच्च । अस्यैव ष्यञ उत्तरसूत्रे अनुवृत्तेरिहैव तस्य षित्त्वप्रयोजनकथनमिति बोध्यम् । **याथाकामीति** । काममनतिक्रम्य यथाकामम् । ततः स्वार्थे चतुर्वर्णादित्वात्ष्यञि लोकात्स्त्रीत्वे षित्त्वान्ङीष् । **गुणवचन** । गुणोपसर्जनद्रव्यवाचिभ्यो, ब्राह्मणादि-

शे.]मिति । 'उत्तरो भावप्रत्ययो नञ्पूर्वाद्गुणहेतैः [illegible] इत्यादि भाष्यं 'पत्यन्तै'रित्यत्र तत्पृथ्वादिभ्य इत्यादिविषयमेवेति भाष्यप्रदीपोद्योते निरूपितम् । **आचतुर्यमिति** । नञ्पूर्वाणामेषामत एव पर्युदासाद्गणे पाठानुमानेन ष्यञ्बोद्ध्यः । **र ऋतो** । हलादेः

दिभ्यः कर्मणि च ।५।१।१२४। चाद्भावे । जडस्य कर्म भावो वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । ॐ अर्हतो नुम् च । अर्हतो भावः कर्म वा आर्हन्त्यम् । आर्हन्ती । ब्राह्मणादिराकृतिगणः । **यथातथायथापुरयोः पर्यायेण** ।७।३।३१। नञः परयोरेतयोः पूर्वोत्तरपदयोः पर्यायेणाऽऽदेरचो वृद्धिर्ञिदादौ । अयथातथाभाव आयथातथ्यम् । अयाथातथ्यम् । आयथापूर्यम् । अयाथापूर्यम् । आ पादसमाप्तेर्भावकर्माधिकारः । ॐ **चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्** । चत्वारो वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैस्वर्यम् । षाड्गुण्यम् । सैन्यम् । सान्निध्यम् । सामीप्यम् । औपम्यम् । त्रैलोक्यमित्यादि । सर्वे वेदाः सर्ववेदाः, तानधीते सर्ववेदः । 'सर्वादे'रिति लुक् । स एव सार्ववैद्यः । (ग) **चतुर्वेदस्योभयपदवृद्धिश्च** । चतुरो वेदानधीते चतुर्वेदः । स एव चातुर्वैद्यः । 'चतुर्विद्यस्ये'ति पाठान्तरम् । चतुर्विद्य एव चातुर्वैद्यः । **स्तेनाद्यन्नलोपश्च** ।५।१।१२५। 'ने'ति सङ्घातग्रहणम् । 'स्तेन चौर्ये' । पचाद्यच् । स्तेनस्य भावः कर्म वा

---

त.]कार्यं च । 'शरीरायासमात्रसाध्यं शौचादि क्रिया । शास्त्रेण विहितो यागादिः कार्य'मिति तयोर्भेदमाहुः । **अर्हत इति** । 'अर्हः प्रशंसाया'मिति शत्रन्तोऽर्हच्छब्दः पूजार्थमिधायीति कैयटः । **आकृतिगण इति** । केषांचित्पाठस्तु कार्यान्तराय । तथा हि 'अर्हतो नुम् चे'ति नुमर्थः पाठः । एकभावः, त्रिभावः, अन्यभावः,-एषां पाठः स्वार्थे विधानार्थः । तथा च प्रत्याहाराह्निके वार्तिकप्रयोगः—'आन्यभाव्यं तु कालशब्दव्यवाया'दिति । अन्यभाव एव आन्यभाव्यम् । अन्यत्वमित्यर्थः । यत्तु व्याकरणाधिकरणे भट्टपादैरुक्तम् 'आन्यभाव्यमपप्रयोगः' इति, तत्त्ववैयाकरणमीमांसकसंतोषार्थमित्यवधेयम् । **सर्ववेद इति** । 'पूर्वकालैके'ति समासः । **चतुर्वेद इति** । तद्धितार्थे द्विगुः । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् । **चतुर्विद्य इति** । 'विद्यालक्षणसूत्रान्ता'दिति ठक् । तस्य लुक् । **सङ्घातग्रहणमिति** । वर्णग्रहणे तु 'यस्येति चे'त्यकारलोपे सतीष्टं न सिध्यति, 'अचः परस्मि'न्नित्यल्लोपस्य स्थानिवद्भावादयादेशप्रसङ्गा-

---

बा.]भ्यश्च षष्ठ्यन्तेभ्यो भावे कर्मणि च अर्थे ष्यञित्यर्थः । **अर्हतो नुम्चेति** । वार्तिकमिदम् । 'अर्हः प्रशंसाया'मिति सूत्रेण शतरि अर्हच्छब्दः पूज्यवाचीति कैयटः । अर्हच्छब्दात्ष्यञ्स्यात्प्रकृतेर्नुम्चेत्यर्थः । मित्त्वादन्त्यादचः परः । अनुस्वारपरसवर्णौ । लोकान्नपुंसकत्वं स्त्रीत्वं च । तदाह—**आर्हन्त्यम्, आर्हन्तीति** । आर्हन्त्यशब्दान्ङीषि 'हलस्तद्धितस्ये'ति यलोपः । यथातथेति निपातसमुदायः । यथापुरमिति पुराशब्देन पदार्थानतिवृत्तावव्ययीभावः । इमौ शब्दौ नञ्पूर्वपदौ ब्राह्मणादी । तयोः ष्यञि आदिवृद्धौ विशेषमाह—**यथातथायथापुरयोः** । आदिवृद्धिप्रकरणे उत्तरपदस्य पूर्वस्य चेत्यधिकारे इदं सूत्रम् । 'नञः शुची'त्यतो नञ इत्यनुवर्तते । तदाह–**नञः परयोरेतयोरिति** । यथातथा यथापुर इत्यनयोरित्यर्थः । **पर्यायेणेति** । कदाचित्पूर्वपदस्य, कदाचिदुत्तरपदस्येत्यर्थः । **आयथातथ्यमिति** । यथातथेति निपातनात्ष्यञि पूर्वपदस्यादिवृद्धिः । **अयाथातथ्यमिति** । उत्तरपदस्यादिवृद्धिः । **आयथापुर्यमिति** । यथापुरशब्दात्ष्यञि पूर्वपदस्यादिवृद्धिः । **अयाथापुर्यमिति** । उत्तरपदस्यादिवृद्धिः । **आ पादसमाप्तेरिति** । अत्र व्याख्यानमेव शरणम् । **चतुर्वर्णादीनामिति** । चतुर्वर्णादिभ्यः स्वार्थे ष्यञ उपसङ्ख्यानमित्यर्थः । **सर्ववेदा इति** । 'पूर्वकाल' इति समासः । **लुगिति** । 'अध्येतृप्रत्ययस्ये'ति शेषः । **स एव सार्ववैद्य इति** । सर्ववेदशब्दात्स्वार्थे ष्यञिति भावः । **चतुर्वेदस्येति** । वार्तिकमिदम् । 'ष्य'ञिति शेषः । **चतुर्वेद इति** । 'तद्धितार्थ' इति द्विगुः । ततोऽध्येतृप्रत्ययस्याऽणो 'द्विगोर्लुगनपत्ये' इति लुक् । **चतुर्विद्यस्येतीति** । 'चतुर्वेदस्योभयपदवृद्धिश्चे'ति वार्तिके चतुर्वेदस्येत्यस्य स्थाने चतुर्विद्यस्येति केचित्पठन्तीत्यर्थः । चतस्रो विद्या अधीते इत्यर्थे 'तद्धितार्थ' इति द्विगौ 'विद्यालक्षणकल्पान्ताच्चे'ति ठकि 'द्विगोर्लुगनपत्ये' इति तस्य लुकि चतुर्विद्यशब्दात्स्वार्थे ष्यञि उभयपदवृद्धौ 'चातुर्वैद्य' इति रूपमिति भावः । **स्तेनाद्यन्नलोपश्च** । 'य'दिति च्छेदः । स्तेनशब्दात्षष्ठ्यन्ताद्भावे कर्मणि चार्थे यत्स्यादित्यर्थः । **नेति सङ्घातग्रहणमिति** । 'नलोपश्चे'त्यत्र नेत्यकार उच्चारणार्थो न भवति, किंतु नकाराऽकारसङ्घातग्रहणमित्यर्थः । **स्तेयमिति** । स्तेनशब्दाद्यत्प्रत्यये सति नेति सङ्घातस्य लोप इति भावः । नच नकारमात्रलोपेऽपि 'यस्येति चे'त्यकारलोपात्स्तेयमिति सिध्यतीति वाच्यम्, 'अचः परस्मि'न्नित्यकारलोपस्य स्थानिवत्त्वेन तमाश्रित्य एकारस्य अयादेशप्रसङ्गात् । नच सङ्घातग्रहणेऽपि 'अलोऽन्त्यस्ये'त्यकारस्यैव लोपः स्यादिति शङ्क्यं, 'यस्येति चे'त्येव अकारस्य लोपसिद्धाविह नलोपविधिवैयर्थ्यात्, 'नानर्थकेऽलोऽन्त्यविधि'रिति निषेधाच्च । **योगं विभज्येति** । स्तेनादिति पृथक्सूत्रम् । ष्यञित्यनुवर्तते । स्तेनशब्दाद्भावे कर्मणि च ष्यञित्यर्थः । समासकृदन्ततद्धितान्ताऽव्ययसर्वनामजातिसङ्ख्यासंज्ञाशब्दभिन्नमर्थवच्छब्दरूपं

---

शे.]किम् ? । ऋजिष्ठः । लघोः किम् ? । कृष्णिष्ठः । **मेव रत्वमिति** । तेन कृतयतीत्यादाविष्ठवद्भावाद्भावो न । **यथातथाय** । 'नञः शुची'त्यतो नञ इति वर्तते । **यथातथाशब्दो** निपातसमुदायः । **यथापुरमिति** । पुराशब्देन पदार्थानतिवृत्तावव्ययी-

स्तेयम् । 'स्तेना'दिति योगं विभज्य स्तैन्यमिति ष्यञन्तमपि केचिदिच्छन्ति । सख्युर्यः ।५।१।१२६। सख्युर्भावः कर्म वा सख्यम् । * दूतवणिग्भ्यां च । दूतस्य भावः कर्म वा दूत्यम् । 'वणिज्य'मिति काशिका । माधवस्तु वणिज्याशब्दः स्वभावात्स्त्रीलिङ्गः । भाव एव चात्र प्रत्ययो न तु कर्मणीत्याह । भाष्ये तु 'दूतवणिग्भ्यां चे'ति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि । कपिज्ञात्योर्ढक् ।५।१।१२७। कापेयम् । ज्ञातेयम् । पत्यन्तपुरोहितादिभ्यो यक् ।५।१।१२८। सैनापत्यम् । पौरोहित्यम् । (ग) राजाऽसे । राजशब्दोऽसमासे यकं लभत इत्यर्थः । राज्ञो भावः कर्म वा राज्यम् । समासे तु ब्राह्मणादित्वात्ष्यञ् । आधिराज्यम् । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।५।१।१२९। प्राणभृज्जाति[:,]—आश्वम् । औष्ट्रम् । वयोवचन[म्]—कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् । दौष्ठवम् । हायनान्तयुवादिभ्योऽण् ।५।१।१३०। द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् । * श्रोत्रियस्य यलोपश्च । श्रौत्रम् । कुशलचपलनिपुण-

त.] दिति भावः । ननु सङ्घातग्रहणेऽपि 'अलोऽन्त्यस्ये'त्यकारस्यैव लोपः स्यान्न तु सङ्घातस्येति चेत् । मैवम् । आरम्भसामर्थ्यात् , 'नानर्थकेऽलोन्त्यविधि'रिति निषेधाद्वा तत्सिद्धेः । कपिज्ञात्योः । इह कपिज्ञाती द्वौ, भावकर्मणी अर्थावपि द्वौ, तयोर्यथासङ्ख्यं न भवति,अस्वरितत्वप्रतिज्ञानात् । एवं 'पत्यन्तपुरोहितादिभ्यः', 'द्वन्द्वमनोज्ञादिभ्यः' इत्यत्रापि बोध्यम् । ब्राह्मणादित्वादिति । यद्यपि ब्राह्मणादिषु राजन्शब्दः केवलः पठितस्तथाप्ययमेव 'असे' इति प्रतिषेधो ज्ञापयति 'अस्त्यत्र प्रकरणे राजन्शब्देन तदन्तविधि'रिति । एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति । अन्ये तु ब्राह्मणादेराकृतिगणत्वादेव तदन्तात्कथंचित्ष्यञि सिद्धे राजन्शब्दस्य तत्रपाठो यका सह समावेशार्थ इति । तथा चावेष्ट्यधिकरणे शावरभाष्ये उक्तं-'राज्ञः कर्म राज्यं, ब्राह्मणादित्वात् ष्यञि'ति । पुरोहित, सङ्ग्रामिक,पथिक,सारथिकेत्यादयः पुरोहितादयः । प्राणभृज्जाति । मुखनासासंचारी वायुः प्राणः । 'प्राणिजाती'त्येव सुवचम् । प्राणभृदिति किम् ? । तृणत्वम् । तृणता । जातीति किम् ? । देवदत्तत्वम् । औद्गात्रमिति । उद्गात्रादिषु ये ऋत्विग्वचनास्तेभ्यो 'होत्राभ्यश्छः' इति छे प्राप्ते अञ् विधीयते । सुष्ठु दुष्ठु—द्वाभ्यां गुणलक्षणे ष्यञि प्राप्ते,वधूशब्दादिगन्तलक्षणेऽणि, शेषेभ्यस्त्वतलोः प्राप्तयोः । इह तु 'सुभगं मन्त्रे' इतिपठ्यते । सुभगमित्येतच्छब्दरूपं मन्त्रविषये प्रयोगे अञमुत्पादयतीत्यर्थः । 'महते सौभगाय' । सर्वविधीनां छन्दसि वैकल्पिकत्वादिह 'हृद्भगसिन्ध्वन्ते' इत्युत्तरपदवृद्धिर्न भवति । अतएव मन्त्रेऽपि क्वचिदञ् न भवति । 'सौभाग्यमस्यै दत्त्वाय' । इह ष्यञ् । हायनान्त । अस्मात्त्वतलोः प्राप्तयोरण्विधानम् । युवस्थविरशब्दाभ्यां वयोवचनलक्षणे अञि प्राप्ते ।

बा.]गुणवचनसंज्ञकं भवतीति आकडारसूत्रभाष्यरीत्या स्तेनशब्दस्य पचाद्यजन्तस्य कृदन्तस्य गुणवचनत्वाऽभावादप्राप्तविदं वचनम् । अव्युत्पन्नप्रातिपदिकतया गुणवचनत्वेऽपि यत्प्रत्ययेनापवादेन पक्षे समावेशार्थं वचनम् । ततो 'यन्नलोपश्चे'ति योगान्तरम् । स्तेनादित्यनुवृत्तावुक्तोऽर्थः । केचिदिति । भाष्याऽदृष्टत्वाद्योगविभागोऽयमप्रामाणिक इति भावः । सख्युर्यः । सखिशब्दात्षष्ठ्यन्ताद्भावकर्मणोर्यः स्यादिति वक्तव्यमित्यर्थः । नास्त्येवेति । वार्तिकत्वे तस्य भाष्ये पाठावश्यकत्वात्, पाठस्य चाऽभावादप्रामाणिकमेवेदं वृत्तिपठितं वार्तिकमिति भावः । तर्हि दूतवणिग्भ्यां भावकर्मणोः कथं यप्रत्यय इत्याशङ्क्य नास्त्येव यप्रत्ययः, किंतु ष्यञेवेत्याह—ब्राह्मणादित्वाद्वाणिज्यमपीति । अपिना दौत्यसङ्ग्रहः । कपिज्ञात्योर्ढक् । पञ्चम्यर्थे षष्ठी । आभ्यामपि षष्ठ्यन्ताभ्यां भावकर्मणोर्ढगित्यर्थः । अत्र कपिज्ञात्योर्भावकर्मणोश्च न यथासङ्ख्यं,व्याख्यानात् । पत्यन्त । पत्यन्तेभ्यः पुरोहितादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोर्यक्स्यादित्यर्थः । राजासे इति । पुरोहितादिगणसूत्रमिदम् । राजा-असे इति च्छेदः । 'स' इति समासस्य प्राचां संज्ञा । तदाह—राजन्शब्द इति । राज्यमिति । यकि टिलोपः । 'ये चाऽभावकर्मणो'रिति प्रकृतिभावस्तु न, 'अभावकर्मणो'रिति पर्युदासात् । समाऽसे त्विति । अधिको राजा अधिराजः । प्रादिसमासः । 'असे'इति पर्युदासाद्यगभावे ब्राह्मणादित्वात्ष्यञि आधिराज्यमिति रूपमित्यर्थः । यक्ष्यञोः स्वरे विशेषः । प्राणभृज्जाति । प्राणभृतः—प्राणिनः, तज्जातिवाचिभ्यो, वयोविशेषवाचिभ्य, उद्गात्रादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोरञित्यर्थः । प्राणभृज्जातीति । उदाहरणसूचनम् । एवं वयोवचनेति । हायनान्त । हायनान्तेभ्यो युवादिभ्यश्च षष्ठ्यन्तेभ्यो भावकर्मणोरण्स्यादित्यर्थः । द्वैहायनमिति । द्विहायनस्य भावः कर्म वेति विग्रहः । वयोवचनलक्षणस्याञोऽपवादः । एवं-त्रैहायनमपि । यौवनमिति । 'अ'निति प्रकृतिभावान्न टिलोपः । श्रोत्रियस्येति ।

शे.]भावः । केचिदिति । भाष्यानुक्तत्वमत्राऽरुचिः । वाणिज्यमपीति । अपिना दौत्यम् । यौवनमिति । मनोज्ञादित्वाद्यौवनकमपि । 'प्रकृत्याऽके राजन्ये'त्यादिना प्रकृतिभावः । सहायाद्वेति । पक्षे ब्राह्मणादित्वात्ष्यञ् । इदं भाष्ये क्वचिन्मृग्यम् ।

पिशुनकुतूहलक्षेत्रज्ञा युवादिषु ब्राह्मणादिषु च पठ्यन्ते। कौशल्यम्। कौशलमित्यादि। **इगन्ताच्च लघुपूर्वात्** ।५।१।१३१। शुचेर्भावः कर्म वा शौचम्। मौनम्। कथं काव्यम्?। कविशब्दस्य ब्राह्मणादित्वात्। **योपधाद्गुरूपोत्तमाद्वुञ्** ।५।१।१३२। रामणीयकम्। आभिधानीयकम्। * **सहायाद्वा**। साहाय्यम्। साहायकम्। **द्वन्द्वमनोज्ञादिभ्यश्च**।५।१।१३३। शैष्योपाध्यायिका। मानोज्ञकम्। **गोत्रचरणाच्छ्लाघाऽत्याकारतदवेतेषु** ।५।१।१३४। अत्याकारोऽधिक्षेपः। तदवेतः—ते गोत्रचरणयोर्भाव कर्मणी प्राप्तः अवगतवान्वा। गार्गिकया श्लाघते। [काठिकयाश्लाघते।] गार्ग्यत्वेन विकत्थत इत्यर्थः। गार्गिकयाऽत्याकुरुते। [गार्ग्यत्वेन परानधिक्षिपतीत्यर्थः]। गार्गि-

त.] **यौवनमिति**। अणि परतः 'अन्' इति प्रकृतिभावः। मनोज्ञादिपाठाद्वुञपि। यौवनकम्। 'प्रकृत्याऽके राजन्यमनुष्ययुवानः' इति प्रकृतिभावः। **श्रोत्रियस्येति**। 'श्रोत्रियंश्छन्दोऽधीते' इत्यत्र छान्दसः श्रोत्रभावः, घंश्च प्रत्यय इति यदा व्याख्यानं तदेह 'घलोपः' इति यथाश्रुतम्। यदा तु 'वाक्यार्थे पदवचन'मिति पक्षस्तदा घशब्देन इय इति रूपं लक्ष्यते। क्वचित्तु 'यलोपश्चे'ति पाठः, तत्र येति संघातग्रहणं व्याख्येयम्। वर्णग्रहणे त्विकारस्य यणादेशः स्यान्न तु 'यस्येति चे'ति लोपः, अकारलोपस्य स्थानिवत्त्वेन इकारान्तस्य भत्वाऽभावात्। एतच्च हरदत्तग्रन्थे स्पष्टम्। मूलपुस्तकेषु 'यलोपः' इति मुख्यपाठ एव प्रायेण दृश्यते, न तु 'घलोप' इति पाठः। **इगन्ताच्च**। लघुः पूर्वोऽवयवो यस्येति प्रातिपदिकविशेषणम्। पूर्वत्वं च संनिधानदिगवधिकमेव। तेनाऽतिपाण्डुशब्दान्न भवति। 'लघुपूर्वेकः' इत्येव सुवचम्। लघुपूर्वश्चासौ इक् च लघुपूर्वेक्। तस्य प्रातिपदिकविशेषणात्तदन्तलाभ इति नव्याः। इगन्तात्किम्?। घटत्वम्। लघुपूर्वात्किम्?। पाण्डुत्वम्। **कथं काव्यमिति**। कुधातोः 'ओरावश्यके' इति रूपसिद्धावपि कवेः कर्मेत्यर्थे काव्यमिति स्यादिति प्रश्नः। **योपधात्**। गुरु उपोत्तमं यस्य प्रातिपदिकस्य तस्मादित्यर्थः। योपधात्किम्?। विमानत्वम्। गुरूपोत्तमादिति किम्?। क्षत्रियत्वम्। **आभिधानीयकमिति**। अत्र प्रकृतिरभेः परोऽनीयर्प्रत्ययान्तो दधातिः। अभिधेयस्य भावः कर्म वेत्यर्थः। **सहायाद्वेति**। सूत्रेण नित्ये प्राप्ते विकल्पार्थं वचनम्। **द्वन्द्वमनोज्ञादिभ्यश्च**। मनोज्ञ, प्रियरूप, बहुल, अवश्य, इत्यादिर्मनोज्ञादिः। **गोत्रचरणात्**। गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्वुञ् स्याद्भावकर्मणोः। अपत्याधिकारादन्यत्र लौकिकं गोत्रम्। तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः। प्रवराध्याये ये पठितास्तेभ्य इत्यपरे। 'गोत्रं च चरणैः सहे'ति जातित्वात् 'प्राणभृज्जाती'त्यादिना अञि प्राप्ते वचनम्। **श्लाघेत्यादि**। श्लाघादिषु विषयभूतेष्वित्यर्थः। **प्राप्त इति**। इणः प्राप्त्यर्थत्वात्। अवपूर्वस्येणो ज्ञाने प्रसिद्धत्वादाह— **अवगतवान्वेति**। **गार्गिकयेति**। 'आपत्यस्ये'ति यलोपः। चरणा-

बा.] वार्तिकमिदम्। श्रोत्रियशब्दात्षष्ठ्यन्ताद्भावकर्मणोरण्, प्रकृतेर्यलोपश्चेत्यर्थः। येति सङ्घातग्रहणम्। **श्रौत्रमिति**। छन्दोऽधीते इत्यर्थे छन्दश्शब्दाद्घप्रत्यये तस्य इयादेशे प्रकृतेः श्रोत्र इत्यादेशे 'यस्येति चे'त्यल्लोपे श्रोत्रियशब्दः। श्रोत्रियस्य भावः कर्म वेत्यर्थे श्रोत्रियशब्दादणि यकाराऽकारसङ्घातस्य लोपे रेफादिकारस्य 'यस्येति चे'ति लोपे श्रौत्रमिति रूपम्। यकारादकारस्य 'यस्येति चे'ति लोपे सति यकारमात्रस्थानेन लोपे तु रेफादिकारस्य यण्स्यात्। नच तस्य 'यस्येति चे'ति लोपः शङ्क्यः, 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्ति'रिति न्यायात्। अकारलोपस्य स्थानिस्त्वेन इकारान्तस्य भत्वाऽभावाच्च। 'श्रोत्रियस्य घलोपश्चे'त्येके पठन्ति। **इगन्ताच्च**। लघुः पूर्वोऽवयवो यस्येति विग्रहः। पूर्वत्वं च इगवधिकमेव गृह्यते, व्याख्यानात्। तथा च लघुपूर्वो य इक्तदन्तात्प्रातिपदिकात्षष्ठ्यन्ताद्भावकर्मणोरण्स्यादित्यर्थः। 'गुणवचने'त्यादेरपवादः। **कथं काव्यमिति**। कविशब्दस्य लघुपूर्वेगन्तत्वात् 'गुणवचने'ति ष्यञं बाधित्वा अण्प्रसङ्गात्काव्यमिति कथमित्याक्षेपः। समाधत्ते—**कविशब्दस्येति**। **ब्राह्मणादित्वा**दित्यनन्तरं 'ष्यञि उपपाद्य'मिति शेषः। **योपधात्**। योपधाद्गुरूपोत्तमात्प्रातिपदिकात्षष्ठ्यन्ताद्भावकर्मणोर्वुञि त्यर्थः। **रामणीयकमिति**। रमणीयशब्दाद्वुञ्। **आभिधानीयकमिति**। अभिधानीयशब्दाद्वुञ्। **सहायाद्वेति**। 'वु'ञिति शेषः। पक्षे ब्राह्मणादित्वात्ष्यञ्। इदंतु वार्तिकं भाष्ये क्वचिन्मृग्यम्। **द्वन्द्वमनोज्ञादिभ्यश्च**। द्वन्द्वान्मनोज्ञादिभ्यश्च षष्ठ्यन्तेभ्यो वुञित्यर्थः। **शैष्योपाध्यायिकेति**। शिष्यश्च उपाध्यायश्चेति द्वन्द्वाद्वुञ्। स्त्रीत्वं लोकात्। यद्यपि 'योपधा'दित्येव सिध्यति तथापि गौपालपशुपालिकेत्युदाहरणं बोध्यम्। **गोत्रचरणात्**। गोत्रप्रत्ययान्ताच्छाखाध्येतृवाचिनश्च षष्ठ्यन्ताद्भावकर्मणोर्वुञ्स्यात्श्लाघादिषु विषयेष्वित्यर्थः। 'अपत्याधिकारादन्यत्र प्रवराध्यायप्रसिद्धं गोत्र'मित्युक्तम्। 'अत्याकार' इत्यस्य विवरणम्—**अधिक्षेप इति**। **तदवेत** इत्येतद्विवृणोति—**ते गोत्रेति**। तच्छब्देन गोत्रचरणयोर्भावकर्मणी विवक्षिते। अवपूर्वादिणः प्राप्त्यर्थाज्ज्ञानार्थाद्वा कर्तरि क्तः। ते

शे.] **शैष्योपाध्यायिकेति**। अस्यापि प्राप्तिरस्तीति भावः। 'गौपालपशुपालिके'त्यादि त्वस्योदाहरणं मुख्यम्। **गोत्रचर**। श्लाघादयश्च पदान्तरोपात्ता एव ऽत्ययार्थान्वयिनो न प्रत्ययवाच्या इति बोध्यम्। **गार्गिकयेति**। स्वभावात्स्त्रीत्वम्। तलो

कामन्वयेतः । [ गार्ग्यत्वं प्राप्तः, अवगतवान्वेत्यर्थः ] । होत्राभ्यश्छः ।५।१।१३५। होत्राशब्द ऋत्विग्वाची स्त्रीलिङ्गः । बहुवचनाद्विशेषग्रहणम् । अच्छावाकस्य भावः कर्म वा अच्छावाकीयम् । मैत्रावरुणीयम् । ब्रह्मणस्त्वः ।५।१।१३६। होत्रावाचिनो ब्रह्मशब्दात्त्वः स्यात् । छस्यापवादः । ब्रह्मत्वम् । नेति वाच्ये त्ववचनं तलो बाधनार्थम् । ब्राह्मणपर्यायाद्ब्रह्मन्शब्दात्तु त्वतलौ । ब्रह्मत्वम् । ब्रह्मता । नञ्स्नञोरधिकारः समाप्तः ।

अथ पाञ्चमिकाः ।

धान्यानां भवने क्षेत्रे खञ् ।५।२।१। भवन्त्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् । व्रीहिशाल्योर्ढक् ।५।२।२। व्रैहेयम् । शालेयम् । यवयवकषष्टिकाद्यत् ।५।२।३। यवानां भवनं क्षेत्रं यव्यम् ।

त.] वुञ उदाहरणं तु 'काठिकया श्लाघते' इत्यादि बोध्यम् । श्लाघादिष्विति किम् ? । गार्ग्यत्वम् । कठत्वम् । होत्राशब्द इति । जुहोतेस्त्रन् । नेति वाच्ये इति । छप्रत्यये निषिद्धे 'तस्य भावस्त्वतलौ' इत्यनेनैव त्वप्रत्ययः सिध्यति, विभक्तेरनुच्चारणाल्लाघवं च भवतीति भावः । 'होत्राभ्यः' इत्यनुवृत्तेः फलं दर्शयति-ब्राह्मणपर्यायादिति ।

[ इति भावकर्मार्थकाः ] । नञ्स्नञोरधिकारः समाप्तः ।

धान्यानाम् । 'धिवि प्रीणने' इत्यस्मात् 'कृत्यल्युटो बहुल'मिति कर्तरि ण्यत् । अस्मादेव निपातनादन्त्यस्य लोप इकारस्य चात्वम् । धिनोतीति धान्यम् । मन्त्रश्च 'धान्यमसि धिनुहि देवान्' इति दृश्यते । 'धान्याना'मिति भवनापेक्षया कर्तरि षष्ठी । सा च निर्देशादेव समर्थविभक्तिः । बहुवचनं तु स्वरूपविधिनिरासार्थम् । अलौकिके प्रक्रियावाक्ये तु षष्ठ्यन्तत्वानुवादेन तद्विधिसामर्थ्यादेवेति बोध्यम् । भवतिरिहोत्पत्तिवचनः, क्षेत्रग्रहणसामर्थ्यात् । सूत्रे हि सत्तावचनस्यापि भवतेर्ग्रहणं माभूदिति क्षेत्रग्रहणं कृतम् । अन्यथा 'धान्यानां भवनं कुसूलः' इत्यत्रापि स्यादिति । धान्यानां किम् ? । तृणानां भवनं क्षेत्रम् । व्रीहिशाल्योः । अत्रापि निर्देशादेव षष्ठी समर्थविभक्तिः । सा च भवनापेक्षया कर्तरीत्यादि पूर्ववत् । यवयवक । अत्र प्रत्ययार्थसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः । विभाषा ।

बा.] अवेतस्तदवेत इति विग्रहः । 'द्वितीये'ति योगविभागात्समासः । अवगतवान्वेति । ज्ञातवानित्यर्थः । गार्गिकयेति । गार्ग्यशब्दाद्वुञि 'आपत्यस्ये'ति यलोपे 'यस्येति चे'त्यकारलोपे लोकात्स्त्रीत्वे टापि 'प्रत्ययस्था'दिति इत्वे गार्गिकाशब्दः । काठिकया श्लाघते इति चरणादुदाहार्यम् । अत्र श्लाघादयः पदान्तरोपात्ता एव प्रत्ययार्थान्वयिनो नतु प्रत्ययवाच्या इति बोध्यम् । होत्राभ्यश्छः । ऋत्विग्वाचीति । याज्ञिकप्रसिद्धेरिति भावः । ऋत्विग्विशेषवाचिभ्यः षष्ठ्यन्तेभ्यश्छः स्याद्भावकर्मणोरित्यर्थः । अच्छावाकीयमिति । 'आ च त्वा'दिति त्वतलोरपि सर्वत्र समावेशो बोध्यः । ब्रह्मणस्त्वः । 'होत्राभ्यः' इत्यनुवृत्तमेकवचनेन विपरिणम्यते । तदाह—होत्रावाचिन इति । ऋत्विग्वाचिन इत्यर्थः । ननु 'ब्रह्मणो ने'त्येवास्तु, ब्रह्मणश्छो न इत्यर्थलाभे सति छे निषिद्धे 'आ च त्वा'दित्यधिकारात् 'होत्राभ्यश्छः' इत्येव भावकर्मणोस्त्वप्रत्ययः सिध्यतीत्यत आह—नेति वाच्ये इति । तलो बाधनार्थमिति । अधिकारवशाद्धोत्राभ्य इति भावकर्मणोः प्राप्तस्य तलो निवृत्त्यर्थमित्यर्थः । एतेन 'तस्य भावस्त्वतलौ' इत्यनेन ब्रह्मणः कर्मणि त्वस्याऽप्राप्तेस्तदर्थं त्वप्रत्ययविधानमिति न शङ्क्यम् । नापि 'ब्रह्मणो ने'त्युक्ते पूर्वसूत्रविहितानां त्वतल्छानां निषेधः स्यादित्यपि शङ्क्यम्, शब्दोपात्तस्य छस्यैव निषेधात् । अत्र होत्राग्रहणानुवृत्तेः प्रयोजनमाह—ब्राह्मणपर्यायादिति । इति नञ्स्नञोरधिकारः ।

अथ पाञ्चमिका निरूप्यन्ते । धान्यानां भवने । धान्यवाचिभ्यः षष्ठ्यन्तेभ्यो भवने क्षेत्रेऽर्थे खञित्यर्थः । भवनशब्दस्य भावल्युडन्तत्वे क्षेत्रशब्दसामानाधिकरण्यानुपपत्तेराह-भवन्त्यस्मिन्निति भवनमिति । भूधातुरुत्पत्तिवाची । उत्पत्तिस्थानं भवनमिति लभ्यते । धान्योत्पत्तिस्थानं क्षेत्रम् । 'केदारः क्षेत्र'मित्यमरः । क्षेत्रशब्दाऽभावे भूधातोः सत्तावाचित्वमाश्रित्य यत्र विद्यते तद्भवनमिति व्युत्पत्त्या आधारसामान्यं गृहकुसूलादि लभ्येत, अतः क्षेत्रपदम् । भवनपदाऽभावे तु क्षेत्रशब्देन सेतुबन्धकाश्यादिपुण्यप्रदेशोऽपि लभ्येत, अतो भवनपदम् । उभयोपादाने तु धान्योत्पत्तिप्रदेश एव लभ्यत इति न पौनरुक्त्यम् । व्रीहिशाल्योर्ढक् । व्रीहिशब्दाच्छालिशब्दाच्च षष्ठ्यन्ताद्भवने क्षेत्रेऽर्थे ढगित्यर्थः । खञोऽपवादः । यवयवक । यव, यवक, षष्टिक-एभ्यः

शे.] बाधनार्थमिति । अधिकारवशाद्धोत्राभ्य इति भावकर्मणोः प्राप्तस्येति भावः । एतेन कर्मणि त्वस्याऽप्राप्तेस्तदर्थं त्वग्रहणम् । किं च पूर्वसूत्रविहितस्य त्वादेरपि निषेधः स्यादित्यपास्तम्, शब्दोपात्तछस्यैव निषेधात् । नञ्स्नञोरधिकारः समाप्तः ।

॥श्रीः॥ धान्यानाम् । निर्देशात्षष्ठ्यत्र समर्थविभक्तिः । अलौकिके तु प्रत्ययार्थस्याऽक्रियात्वेऽपि कृद्योगाभावेऽपि तद्धितविधावनुवादसामर्थ्येनैव सा बोध्या । अलौकिके प्रथमाप्रवेशेऽपि न क्षतिरिति कश्चित् । क्षेत्रशब्दस्तृणधान्यादीनामुत्पत्त्याधारभू-

यवक्यम् । षष्टिक्यम् । **विभाषा तिलमाषोमाभङ्गाणुभ्यः** ।५।२।४। यद्वा स्यात् । पक्षे खञ् । तिल्यम् । तैलीनम् । माष्यम् । माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् । अणव्यम् । आणवीनम् । **सर्वचर्मणः कृतः खखञौ** ।५।२।५। असामर्थ्येऽपि निपातनात्समासः । सर्वश्चर्मणा कृतः सर्वचर्मीणः । सार्वचर्मीणः । यथा-**मुखसंमुखस्य दर्शनः खः** ।५।२।६। मुखस्य सदृशं यथामुखं=प्रतिबिम्बम् । निपातनात्सादृश्येऽव्ययीभावः । समं=सर्वं मुखं—संमुखम् । समशब्दस्याऽन्त्यलोपो निपात्यते । यथामुखं दर्शनो यथामुखीनः । सर्वस्य मुखस्य दर्शनः—संमुखीनः । **तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति** ।५।२।७। सर्वादेः पथ्याद्यन्ता-

**त.]** खञि नित्ये प्राप्ते वचनम् । **औमीनं भाङ्गीनमिति** । ननूमाभङ्गयोर्धान्यत्वाऽभावात्कथमिह खञ् । 'व्रीहयश्च मे यवाश्च मे' इति चमकानुवाके हि द्वादशैव धान्यानि पठितानि, न तूमाभङ्गौ पठितौ इति चेत् । मैवम् । 'धान्यानि सप्तदशानि धान्यानी'ति स्मरणात् । तत्र चोमाभङ्गयोरपि पाठाद्धान्यत्वमस्तीति भाष्यादौ स्थितत्वात् । न च चमकानुवाके धान्यपरिगणनेनाऽर्थः, तत्राऽधान्यानामप्यश्मादीनां पाठात्, धान्यानामपि केषांचित्कोद्रवादीनामपाठात् । तस्मादन्यत एव धान्यनिर्णय इति पूर्वोक्तस्मृत्या तयोर्धान्यत्वमस्तीति ज्ञेयम् । **सर्वचर्मणः** । 'खश्चे'त्येव तु नोक्तं, यतोऽप्युत्कर्षः संभाव्येतेति । अत्र तृतीया समर्थविभक्तिः, कृत इति प्रत्ययार्थे चर्मणः करणत्वस्योचितत्वात् । **सर्वश्चर्मणेति** । सर्वेण चर्मणा कृत इत्यर्थे तद्धितो नेष्यत इति भावः । **यथामुख** । दृश्यतेऽस्मिन् दर्शनः=आदर्शादिः । अधिकरणे ल्युट् । 'असादृश्ये' इति प्रतिषेधात्सादृश्ये कथं यथाशब्दस्य समासः ? । तत्राह—**निपातनादिति** । एतच्च वृत्तिग्रन्थमनुसृत्योक्तम् । भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः । तथा च मायामृगं प्रक्रम्योक्तं—'यथामुखीनः सीतायाः पुप्लुवे बहु लोभयन्' इति । **यथामुखं दर्शन इति** । अव्ययीभावस्यापि यथामुखशब्दस्योन्मत्तगङ्गादिवत्सत्त्ववचनत्वात्कर्मशक्तियोगे सति कृद्योगलक्षणा षष्ठी । तस्या 'नाव्ययीभावा'दित्यमादेशः । **सर्वस्य मुखस्येति** । 'संमुखस्ये'ति नोक्तं, प्रत्ययसंनियोगेनैव समशब्दस्याऽन्त्यलोपनिपातनात् । संशब्दस्तु समशब्दार्थे न दृश्यते, 'संमुखो भव' इत्यत्र 'अभिमुख' इत्यर्थप्रतीतेः । तत्र च खप्रत्ययस्याऽनिष्यमाणत्वात् । कथं तर्हि—'संयुगे संमुखीनं तमुद्यन्तं प्रसहेत कः' इति भट्टिः । अभिमुखावस्थानात्सामर्थ्याद्भविष्यतीति हरदत्तः । **तत्सर्वादेः** । 'त'दिति द्वितीया समर्थविभक्तिः । व्याप्नोतीति प्रत्ययार्थः । परिशिष्टं प्रकृतिविशेषणम् । तत्र केवलानां पथ्यादीनां सर्वादित्वाऽसंभवात्प्रातिपदिकैरपि तैस्तदन्तविधिः । तदाह—**पथ्याद्यन्तादिति** । पथ्यङ्गकर्मपत्रपात्रान्ता-

**बा.]** षष्ठ्यन्तेभ्यो भवने क्षेत्रे यत्स्यादित्यर्थः । खञोऽपवादः । 'धान्याना'मित्यनुवृत्तेरिहापि षष्ठ्येव समर्थविभक्तिः । **विभाषा तिल** । 'तिल, माष, उमा, भङ्ग, अणु-एभ्यो धान्यविशेषवाचिभ्यः षष्ठ्यन्तेभ्यो यद्वा स्यादित्यर्थः । 'उमाभङ्गौ धान्यविशेषौ' इति भाष्यम् । 'उमा स्यादतसी क्षुमा' इत्यमरः । **अणव्यमिति** । अणुर्धान्यविशेषः । यति 'ओर्गुणः' 'वान्तो यी'त्यवादेशः । **सर्वचर्मणः** । सर्वचर्मन्शब्दात्तृतीयान्ताच्चर्मणा सर्वं कृतमित्यर्थे खखञौ स्त इत्यर्थः । औचित्यादिह तृतीया समर्थविभक्तिः । नन्विह सर्वशब्दस्य कृते अन्वयाच्चर्मण्यन्वयाऽभावादसामर्थ्याच्चर्मणा समासाऽसम्भवात्कथं सर्वचर्मन्शब्दात्प्रत्यय इत्यत आह—**असामर्थ्येऽपीति** । सर्वश्चर्मणा कृत इति विग्रहवाक्यम् । चर्मणा कृत्स्नः कृत इत्यर्थः । **सर्वचर्मीण इति** । 'नस्तद्धिते' इति टिलोपः । सर्वेण चर्मणा कृत इत्यर्थे तु न खखञौ, व्याख्यानात् । **यथामुख** । यथामुख, संमुख-आभ्यां षष्ठ्यन्ताभ्यां दर्शन इत्यर्थे खः स्यादित्यर्थः । दृश्यतेऽस्मिन्निति दर्शनः=आदर्शादिः । ननु मुखस्य सदृशं यथामुखमिति कथमव्ययीभावः ? 'यथाऽसादृश्ये' इति सादृश्ये तन्निषेधादित्यत आह—**निपतनादिति** । सम्मुखशब्दे आभिमुख्यार्थकस्य समित्युपसर्गस्य न प्रवेशः, किंतु समशब्दस्य सर्वपर्यायस्येत्याह—**समं सर्वं मुखं संमुखमिति** । **सममित्यस्य** विवरणं **सर्वमिति** । समं च तन्मुखं चेति कर्मधारये संमुखशब्द इत्यर्थः । **निपात्यत इति** । इदं च भाष्ये स्पष्टम् । एवञ्च समित्युपसर्गपूर्वादयं प्रत्ययो नेष्यत इति भावः । **तत्सर्वादेः** । पथिन्, अङ्ग, कर्मन्, पत्र, पात्र-एषां समाहारद्वन्द्वात्सप्तम्यर्थे द्वितीया । प्रातिपदिकविशेषणत्वात्तदन्तविधिः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'ति निषेधस्तु न, केवलानामेषां सर्वादित्वस्याऽसंभवात् । 'त'दिति तु द्वितीयान्तं व्याप्नोतीत्यत्रान्वेति । ततश्च तद्व्याप्नोतीत्यर्थे सर्वशब्द-

**शे.]** वचनः । भवतिश्चोत्पत्तिवाची, परस्परमन्वययोग्यत्वात् । तेनेह न—'मुद्गानां भवनं गृहभूतोऽयं कुसूल' इति । **विभाषाति** । अत्र पूर्वत्र च पञ्चमी षष्ठ्यर्थे इति धान्यानामित्यस्य सम्बन्धात्षष्ठ्येव समर्थविभक्तिरिति केचित् । **असामर्थ्येऽपीति** । सर्व इत्यस्य कृतेनान्वयेनोत्तरपदार्थेऽनन्वयादसामर्थ्यमित्यर्थः । सर्वेण चर्मणा कृत इत्यर्थे तु तद्धितो नेष्यत इति भावः । **निपातनादिति** । प्रत्ययसन्नियोगेनैवेदं निपातनं, तदाह—**सर्वश्चर्मणेति** । **समं सर्वमिति** । आभिमुख्यार्थक'सं'मित्युपसर्गपूर्वात्तु प्रत्ययो नेष्यत इति भावः । **यथामुखीन इति** । प्रतिबिम्बदर्शनाधिकरण इत्यर्थः । **तत्सर्वादेः** । पथ्यपात्र-

द्वितीयान्तात्खः स्यात् । सर्वपथान्व्याप्नोति सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः । आप्रपदं प्राप्नोति ।५।२।८। पादस्याऽग्रं प्रपदं, तन्मर्यादीकृत्य आप्रपदम् । आप्रपदीनः पटः । अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ।५।२।९। अनुरायामे सादृश्ये वा । अनुपदं बद्धा-अनुपदीना उपानत् । सर्वान्नानि भक्षयति-सर्वान्नीनो भिक्षुः । अयानयः स्थलविशेषः, तं नेयः-आयानयीनः शारः । परोवरपरम्परपुत्रपौत्रमनुभवति ।५।२।१०। परांश्चाऽवरांश्चानुभवतीति परोवरीणः । अवरस्योत्वं निपात्यते । परांश्च परतरांश्चानुभवति परम्परीणः । प्रकृतेः परम्परभावो निपात्यते । पुत्रपौत्राननुभवति पुत्रपौत्रीणः । परम्पराशब्दस्तु अव्युत्पन्नं शब्दान्तरं स्त्रीलिङ्गम् । तस्मादेव स्वार्थे ष्यञि—पारम्पर्यम् । कथं पारोवर्यंवदिति ।

त.] त्प्रातिपदिकादित्यर्थः । **सर्वपथीन इति** । 'पूर्वकालैके'ति समासः ।'ऋक्पू'रिति समासान्तः । तस्य पथ्यन्तसमासग्रहणेन ग्रहणाद्भवति खप्रत्ययः । **अनुपदसर्वान्नायानयं** । 'बद्धाभक्षयती'त्यत्र निपातनात्तिङन्तेन सह द्वन्द्वः । द्वितीयान्तेभ्योऽनुपदादिभ्यो यथासङ्ख्यं बद्धादिष्वर्थेषु खः स्यात् । **अनुरायाम इत्यादि** । 'यस्य चायामः' इति, यथार्थे-'ऽव्यय'मिति वा अव्ययीभाव इत्यर्थः । **सर्वान्नीन इति** । प्रकारकार्त्स्न्ये सर्वशब्दः । यान्यन्नानि लभ्यन्ते उष्णानि शीतलानि सरसानि नीरसानि वा सर्वाणि भक्षयतीत्यर्थः । 'अयः-प्रदक्षिणगमनम् । अनयः-प्रसव्यगमनम् । प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्परैरसमावेशः सोऽयमयानयः' इति काशिका । **तं नेय इति** । नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया । **आयानयीनः शार इति** । 'फलकशिरसि स्थित इत्यर्थः' इति काशिका । **अवरस्येति** । 'आदे'रिति शेषः । उत्वे कृते 'आद्गुणः' । केचित्तु ओत्वं परशब्दस्य निपात्यते, तस्मात्परस्याऽत्वः

बा.] पूर्वपदकेभ्यः प्रातिपदिकेभ्यो द्वितीयान्तेभ्यः पथ्यङ्गकर्मपत्रपात्रान्तेभ्यः खः स्यादित्यर्थः फलति । तदाह-**सर्वादेरित्यादिना । सर्वपथानिति** । 'ऋक्पू'रिति समासान्तः । **आप्रपदम्** । 'आप्रपद'मित्यव्ययीभावाद्द्वितीयान्तात्प्राप्नोतीत्यर्थे खः स्यादित्यर्थः । **पदस्याग्रं प्रपदमिति** । 'पादाग्रं प्रपद'मित्यमरः । **आप्रपदमिति** । 'आङ्मर्यादाभिविध्यो'रित्यव्ययीभावः । **अनुपद** । अनुपद, सर्वान्न, अयानय-एषां समाहारद्वन्द्वाद्द्वितीया । बद्धा, भक्षयति, नेय-एषां द्वन्द्वात्सप्तमी । तिङन्तस्य द्वन्द्वानुप्रवेश आर्षः । अनुपदादिभ्यो द्वितीयान्तेभ्यः क्रमाद्बद्धादिष्वर्थेषु खः स्यादित्यर्थः । **अनुरायामे सादृश्ये वेति** । आद्ये 'यस्य चायामः' इत्यव्ययीभावः, द्वितीये सादृश्ये अव्ययीभावः । **अनुपदं बद्धेति** । क्रियाविशेषणत्वाद्द्वितीया । **अनुपदीना उपानदिति** । पदसम्बन्धिदैर्घ्योपलक्षितेत्यर्थः । पदेन सदृशीति वा । तत्तुल्यपरिमाणेति यावत् । **अयानय इति** । द्यूते शाराणां प्रदक्षिणपरिवर्तनम्-अयः, प्रसव्यपरिवर्तनम्-अनयः । अयसहितः अनयः-अयानयः । प्रदक्षिणप्रसव्यगामिनां यस्मिन्युग्मादिपदे स्थितानां परकीयैः शारैरनाक्रमणं तत्स्थानमिह अयानयशब्देन लक्षणयोच्यत इत्यर्थः । एतत्सर्वं भाष्ये स्पष्टम् । 'ससहायस्य शारस्य परैर्नाक्रम्यते पदम् । असहायस्तु शारेण परकीयेण बाध्यते ।' इति द्यूतशास्त्रमर्यादा । विस्तरस्तु कैयटमनोरमादावनुसन्धेयः । **तं नेय इति** । तं=स्थानविशेषमयानयाख्यं, प्रापणीय इत्यर्थः । णीञ्द्विकर्मकः । 'प्रधाने कर्मणि यत्, अप्रधाने द्वितीया' इति भावकर्मलकारप्रक्रियायां वक्ष्यते । **परोवर** । परोवर, परम्पर, पुत्रपौत्र-एभ्यो द्वितीयान्तेभ्योऽनुभवतीत्यर्थे खः स्यादित्यर्थः । **परोवरीण इति** । परे च अवरे च परावरे ।ताननुभवतीत्यर्थः । **अवरस्योत्वमिति** । अवरशब्दस्य आदेरकारस्य खप्रत्ययसंनियोगेन उत्वं निपात्यत इत्यर्थः । एवं च विग्रहवाक्ये इदमुत्वं न भवति । **प्रकृतेरिति** । परपरतरशब्दाद्द्वन्द्वात्खे सति तत्संनियोगेन प्रकृतेः परम्परभावो निपात्यत इत्यर्थः । नन्वेवं सति 'कल्याणपरम्परे'त्यादौ कथं परम्पराशब्दः ?, परम्परभावस्य खप्रत्ययसंनियोगशिष्टत्वादित्यत आह—**परम्पराशब्दस्त्विति । तस्मादेवेति** । 'परम्परे'त्यव्युत्पन्नप्रातिपदि-

शे.] मिति पञ्चम्यर्थे प्रथमा । सर्वादेरिति बहुव्रीहिस्तत्सामानाधिकरण्याय पथ्यादिभिस्तदन्तग्रहणं, तदाह-**पथ्याद्यन्तादिति** । व्याप्तिक्रियाकर्मत्वलभ्य[मर्थ]माह-**द्वितीयान्तादिति । अनुरायामे इति** । आद्ये पादसम्बन्धि[दैर्घ्यसदृश]दैर्घ्योपलक्षितेत्यर्थः । अन्त्ये पादेन सदृशीत्यर्थः । सादृश्यन्तुल्यपरिमाणतया । समर्थविभक्तिर्द्वितीया, निर्देशात्, योग्यत्वाच्च । **स्थलविशेष इति** । अयः=प्रदक्षिणगमनम्, अनयो=वामगमनम् । अयःसहितोऽनयोऽयानय इतियद्यप्यसौ गतिविशेषे शक्तस्तथापि प्रदक्षिणप्रसव्यगामिनां शाराणां यस्मिन्युग्मादिपदे स्थितानां परकीयैः शारैस्तत्स्थानानामसम्बन्धस्तद्बाधाऽभावरूपः-'**ससहायस्य शारस्य परैर्नाक्रम्यते पदम् । असहायस्तु शारेण परकीयेण बाध्यते**'-इति द्यूतशास्त्रात्,तत्स्थानं लक्षणयोच्यते इति भावः । स्पष्टञ्चेदं सर्वं भाष्ये इत्यन्यत्र विस्तरः । **तं नेय इति** । प्रधानकर्मणि यत् । अप्रधाने द्वितीया । **संनियोगेनैवेति** । अत एव भाष्ये परांश्चावरांश्चेत्यनादेशेनैव विग्रहो दर्शितः । 'आश्चर्ये' ... ताऽपीत्यादि पठितं तद्विग्रहापीत्याशयेनाह—**अवारीण इत्यादि । पूर्वपदे इति** । उत्तरपदे तु विभक्तिलुकैव सिद्धिरिति भावः । पूर्वपदे यलोपनिपातनसामर्थ्याद्लुगिति तु

असाधुरेवायम् । खप्रत्ययसन्नियोगेनैव 'परोवरे'ति निपातनात् । **अवारपारात्यन्तानुकामं गामी** ।५।२।११। अवारपारं गामी–अवारपारीणः । अवारीणः । पारीणः । पारावारीणः । अत्यन्तं गामी–अत्यन्तीनः । भृशं गन्तेत्यर्थः । अनुकामं गामी—अनुकामीनः । यथेष्टं गन्ता । **समांसमां विजायते** ।५।२।१२। यलोपोऽवशिष्टविभक्तेरलुक् च पूर्वपदे निपात्यते । समांसमीना गौः । 'समांसमीना सा यैव प्रतिवर्षं प्रसूयते'। ॐ **खप्रत्ययानुत्पत्तौ यलोपो वा वक्तव्यः** । समांसमां विजायते । समायां समायां वा । अद्यश्वीना-

त.] 'एङः पदान्ता'दिति पूर्वरूपादेश इति पक्षान्तरमाहुः । **अवारपार** । **गामीति** । 'गमेरिनिः, आङि णिच्चे'ति बहुलवचनात्केवलादपि णिनिः । 'भविष्यति गम्यादयः' इति भविष्यत्कालता । न्यासकारस्तु 'आवश्यके णिनिः, सोऽपि भविष्यत्येवे'त्याह । **अवारपारमिति** । 'अकेनोर्भविष्यदाधमर्ण्ययो'रिति षष्ठीप्रतिषेधः । केचित्तु 'गत्यर्थकर्मणी'ति सूत्रे द्वितीयाग्रहणमपवादविषये विधानार्थम् । तेन कृद्योगषष्ठी न भवति 'ग्रामं गन्ते'तिवदिति व्याचख्युः । तदसत् । 'अकेनो'रिति प्रतिषेधे षष्ठीप्रसङ्गस्यैवाऽभावात् । **अवारीण इत्यादि** । 'विगृहीताद्विपरीतादपीष्यते' इति भावः । **अत्यन्तमिति** । क्रियाविशेषणम् । **अनुकाममिति** । काम इच्छा, तस्य सदृशमनुकामम् । कामानुरूपमित्यर्थः । 'अव्ययं विभक्ती'ति यथार्थेऽव्ययीभावः । **समांसमाम्** । **यलोप इति** । 'समाया'मित्यत्र यकारलोप इत्यर्थः । **पूर्वपदे निपात्यत इति** । अन्यथा तद्धिते उत्पन्ने यथोत्तरपदे सुपो लुग्भवति 'सुपो धातुप्रातिपदिकयो'रिति, तथा पूर्वपदेऽपि स्यादिति भावः । **समांसमीनेति** । वीप्सायां द्विर्वचनम् । सुबन्तसमुदायः प्रकृतिः । विजायत इत्येतद्व्याचष्टे—**प्रसूयत इति** । विपूर्वको जनिर्गर्भविमोचने वर्तत इति भावः । गर्भविमोचने कृत्स्नायाः समाया व्याप्त्यभावात् 'अत्यन्तसंयोगे चे'ति द्वितीया न भवतीत्याशयेनाह—**समायामित्यादि** । '**खप्रत्ययानुत्पत्ता**'**विति** । वार्तिकेन समांसमामिति सौत्रप्रयोगस्तूपपन्न इति भावः । **अद्यश्वीना** । अविभक्तिको निर्देशो न तु स्त्रीलिङ्गनिर्देशोऽयम् , 'अद्यश्वीनो गोसमूहः' 'अद्यश्वीनं गोमण्डल'मित्या-

बा.] कादेवेत्यर्थः । **कथमिति** । परावरशब्दाद्भावे वा स्वार्थे वा ष्यञि अवरस्यादेरुत्वे पारोवर्यशब्दान्मतुपि पारोवर्यवदिति कथमित्याक्षेपः, उत्वस्य खप्रत्ययसन्नियोगशिष्टत्वादिति भावः । उत्वं दुरुपपादमेवेत्याह—**असाधुरेवेति** । नन्वत्र परोवरेति निर्देशात्–खादन्यत्राप्युत्वं किं न स्यादित्यत आह—**खप्रत्ययसन्नियोगेनैवेति** । अत एव भाष्ये 'परांश्चावरांश्चानुभवती'त्येव विग्रहो दर्शित इति भावः । **अवारपार** । अवारपार, अत्यन्त, अनुकाम—एभ्यो गामीत्यर्थे खः स्यादित्यर्थः । **गामीत्यस्य** अवश्यं गमिष्यन्नित्यर्थः । 'आवश्यकाधमर्ण्ययोर्णिनि'रिति णिनिः । 'भविष्यति गम्यादयः' इति भविष्यत्कालता । 'बहुलमाभीक्ष्ण्ये' इति वा णिनिः । **अवारपारीण इति** । अवारपारं गामीति विग्रहः । अवारपारशब्दाद्विगृहीताद्विपरीतादपि, व्याख्यानात् । तदाह—**अवारीणः पारीण इति** । **अत्यन्तीन इति** । अत्यन्तशब्दोऽत्र भृशवाची । तदाह—**भृशं गन्तेति** । **अनुकाममिति** । कामः=इच्छा । तामनतिक्रम्येत्यर्थः । पदार्थानतिवृत्तावव्ययीभावः । **समां समाम्** । विपूर्वो जनिर्गर्भविमोचने वर्तते । विजायते=गर्भं विमुञ्चतीत्यर्थः । धात्वर्थेनोपसङ्ग्रहादकर्मकः । अतो न कर्मणि द्वितीया । गर्भविमोचनेन कृत्स्नायाः समाया अव्यापनादत्यन्तसंयोगलक्षणा द्वितीयापि न भवति । किंतु सप्तम्येव । तत्र सप्तम्यन्तस्य 'समाया'मित्यस्य 'नित्यवीप्सयो'रिति द्विर्वचने समायां–समायामिति भवितव्यम् । तत्र पदद्वयमपि यकारलोपसहितं निर्दिश्यते—**समां समामिति** । समायां समायामित्यर्थः । एवं च समायां समायां विजायत इत्यर्थे सप्तम्यन्तद्वयसमुदायाद्विजायत इत्यर्थे खः स्यादिति फलितम् । ननु सप्तम्यन्तद्वयसमुदायात्खप्रत्ययोत्पत्तौ तदन्तस्य समुदायस्य प्रातिपदिकत्वात्तदवयवयोः सप्तम्योर्लुकि 'समासमीन' इति स्यात् , इष्यते तु 'समांसमीने'ति । तदाह—**यलोप इति** । पूर्वपदे विभक्तेः तदवयवस्य यकारस्य लोपः, अवशिष्टस्य विभक्त्यंशस्य अलुक्च निपात्यत इत्यर्थः । भाष्ये तु 'यलोपनिपातनादवशिष्टविभक्त्यंशस्य न लु'गित्युक्तम् । ननु समां समामिति निर्देशादुत्तरपदेऽपि यकारलोपः, अवशिष्टविभक्त्यंशस्य अलुक्च स्यादित्यत आह–**पूर्वपदे इति** । 'पूर्वपदस्य यलोपवचन'मिति वार्तिकादिति भावः । **खप्रत्ययानुत्पत्ताविति** । 'पदद्वयेऽपी'ति शेषः । इह विभाषया कदाचित्खप्रत्ययाऽभावे सति 'समायां समायां विजायते' इति वाक्यदशायां सप्तम्यन्तद्वये यकारलोपो वा वक्तव्य इत्यर्थः । तत्र पदद्वयेऽपि निपातनादेव

शे.] भाष्यकृतः । **विजायते** । गर्भं मुञ्चतीत्यर्थः । तेनात्यन्तसंयोगाऽभावान्न द्वितीया । **खप्रत्ययानुत्पत्ताविति** । 'पदद्वयेऽपी'ति शेषः । सूत्रे उभयत्रापि तथोच्चारणात् । विकल्पस्तु वाचनिक एव । 'समाःशब्दो बहुवचनान्त एवे'त्युक्तसूत्रभाष्यादिबलादुपेक्ष्यमिति भावः । **अद्यश्वीनेत्यविभक्तिकं**, व्याख्यानात् ,तेनाऽस्त्रियामपि । अद्यश्वीनं वाडबमिति । **अवष्टब्धम्**=आसन्नम् । **आगवीने** आङ् मर्यादायाम् । गोशब्दो गोः प्रत्यर्पणे, तदाह–**प्रत्यर्पणेति** । अस्य यो गवा भृत इत्यादिः । **अलङ्गामीति** । 'सुप्यजातौ'

वष्टब्धे ।५।२।१३। अद्य श्वो वा विजायते-अद्यश्वीना वडवा। आसन्नप्रसवेत्यर्थः। केचित्तु विजायत इति नानुवर्तयन्ति। अद्यश्वीनं मरणम्। आसन्नमित्यर्थः। **आगवीनः** ।५।२।१४। आङ्पूर्वाद्गोः कर्मकरे खप्रत्ययो निपात्यते। गोः प्रत्यर्पणपर्यन्तं यः कर्म करोति स आगवीनः। **अनुग्वलंगामी** ।५।२।१५। अनुगु=गोः पश्चात्,-पर्याप्तं गच्छति-अनुगवीनो गोपालः। **अध्वनो यत्खौ** ।५।२।१६। अध्वानमलं गच्छति अध्वन्यः। अध्वनीनः। 'ये चाऽभावकर्मणोः' 'आत्माध्वानौ खे' इति सूत्राभ्यां प्रकृतिभावः। **अभ्यमित्राच्छ च** ।५।२।१७। चाद्यत्खौ। अभ्यमित्रीयः। अभ्यमित्र्यः। अभ्यमित्रीणः। अमित्राऽभिमुखं सुष्ठु गच्छतीत्यर्थः। **गोष्ठात्खञ्भूतपूर्वे** ।५।२।१८। गोष्ठो

---

त.]दावपीष्टत्वात्। **अद्य श्वो वेति**। निपातनाद्वाऽर्थे समासोऽयमिति भावः। 'अवाच्चालम्बने'ति सूत्रेण आविदूर्ये स्तन्भेः षत्वविधानादवष्टब्धशब्द आसन्नपरः। 'विजायते' इति हि वर्तते। स च गर्भविमोचनार्थकः। तदाह—**आसन्नप्रसवेत्यर्थ इति। कर्मकरे इति**। यस्तु प्रातर्गां गृहीत्वा गच्छति गोपालस्तस्मिन्नित्यर्थः। **गोः प्रत्यर्पणपर्यन्तमिति**। गोशब्दो लक्षणया गोः प्रतिदाने वर्तते इति भावः। **आगवीन इति**। 'आङ्मर्यादाभिविध्यो'रित्यव्ययीभावे 'गोस्त्रियो'रिति ह्रस्वे कृते खप्रत्ययः। 'ओर्गुणः'। **अनुग्वलं**। 'ख' इत्यनुवर्तते। अनुगुशब्दात् 'अलंगामी'त्यस्मिन्नर्थे खः स्यात्। **गोः पश्चादिति**। पश्चादर्थेऽव्ययीभावः। **पर्याप्तमिति**। क्रियाविशेषणम्। अत्र हरदत्तः—अनुग्वित्यस्य क्रियाविशेषणत्वाद्द्वितीयान्तादिह प्रत्ययः। न चालङ्गामीत्यस्य 'सुप्यजातौ' इति णिनिप्रत्ययान्ततया कृद्योगलक्षणा षष्ठी स्यादिति वाच्यं, क्रियाविशेषणात्तदप्रवृत्तेः, 'शोभनं पाचक' इत्यादौ तथादर्शनादित्याह। अत्र केचित्—धातूपात्तव्यापारजन्यफलाश्रयत्वं यत्र तन्मुख्यं कर्म, यत्र तु व्यापारजन्यत्वमात्रं तदौपचारिकम्। ततश्च 'तण्डुलानां पाचक' इत्यत्र मुख्ये कर्मणि कृद्योगलक्षणा षष्ठी भवति। 'मृदु पाचकः' 'शोभनं पाचक' इत्यत्र तु सा न भवति, फलव्यापारयोः क्रियाकर्मभावव्यवहारे सत्यपि फलस्यौपचारिककर्मत्वात्, तद्विशेषणत्वाच्च मृद्वादेरिति तस्याशय इत्याहुः। अन्ये त्वेवं तर्हि तुल्यन्यायेन क्रियाविशेषणाद्द्वितीयाया अप्यप्रवृत्तिः स्यात्। तस्मात् 'तदर्ह'मिति निर्देशादनित्या कृद्योगषष्ठीति क्रियाविशेषणात्सान स्वीक्रियत इति हरदत्ताशयः कथंचिद्वर्णनीय इत्याहुः। वस्तुतस्तु पश्चादर्थेऽव्ययीभावोऽयमिति निर्विवादम्। पश्चादिति चाऽस्तात्यर्थे निपातितम्। तच्च यद्यपि विभक्तित्रयसाधारणं तथापीह योग्यताबलात्सप्तम्यर्थवृत्तिः। अतस्तस्य कर्मत्वाऽयोगात्प्रथमान्तादेवेह प्रत्यय इति वक्तुमुचितम्। कृद्योगलक्षणषष्ठीशङ्काऽप्यत एव नेति बोध्यम्। **अभ्यमित्रात्**। अभ्यमित्रशब्दो 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। क्रियाविशेषणत्वाद्द्वितीया समर्थविभक्तिः। **गोष्ठात्खञ्**। गाव-

---

बा.]यकारलोपः सिद्धः, सूत्रे उभयत्रापि तथोच्चारणात्। विकल्प एव तु यलोपस्य वाक्यदशायां वाचनिक इति बोध्यम्। एतत्सर्वं भाष्ये स्पष्टम्। **अद्यश्वीनाऽवष्टब्धे**। 'अद्यश्वीने'त्यविभक्तिको निर्देशः। **अवष्टब्धम्**=आसन्नम्। 'अवाच्चालम्बनाविदूर्ययो'रित्याविदूर्ये स्तन्भेः षत्वविधानात्। अद्य श्वो वा विजायत इत्यर्थे अद्य श्वसिति समुदायात्खः स्यादासन्नत्वे गम्ये इत्यर्थः। **अद्यश्वीना वडवेति**। अद्य वा श्वो वेति वार्थे निपानात्समासः। खे सति 'अव्ययानां भमात्रे' इति टिलोपः। सूत्रे अद्यश्वीनेति टाबन्तनिर्देशे तु अद्यश्वीनो गोसमूहः, अद्यश्वीनं गोमण्डलमिति न स्यात्। **आगवीनः। कर्मकरे इति**। वार्तिकलभ्यमिदम्। भृतिं गृहीत्वा यः कर्म करोति स—कर्मकरः। अत्र गोपालो विवक्षितः। स हि प्रातर्गां गृहीत्वा आसायं चारयित्वा स्वामिनो गृहं नीत्वा प्रत्यर्पयति। तदाह—**गोः प्रत्यर्पणेति। आगवीन इति**। 'गो'शब्दो गोप्रत्यर्पणे लाक्षणिकः। 'आङ्मर्यादाभिविध्यो'रित्यव्ययीभावे 'गोस्त्रियो'रिति ह्रस्वत्वे, आगुशब्दात्खे 'ओर्गुणः' इति भावः। **अनुग्वलंगामी**। 'अनुगु' इत्यविभक्तिको निर्देशः। गोः पश्चादिति विग्रहे पश्चादर्थे अनोरव्ययीभावे ह्रस्वत्वे अनुगुशब्दः। तस्मादलङ्गामीत्यर्थे खः स्यादित्यर्थः। अत्र 'अनुगु' इत्यस्य क्रियाविशेषणत्वाद्द्वितीयैव समर्थविभक्तिरिति हरदत्तः। कृद्योगषष्ठीत्यन्ये। 'अलङ्गामी'त्यत्र अलंशब्दस्य विवरणं—**पर्याप्तमिति**। क्रियाविशेषणम्। **अध्वनो यत्खौ**। अध्वन्शब्दादलङ्गामीत्यर्थे यत्खौ स्त इत्यर्थः। **अध्वानमलंगच्छतीति**। अलङ्गामीत्यनेन विग्रहे तु अध्वनोऽलङ्गामीत्येव विग्रहः। **अभ्यमित्राच्छ च। अमित्रः**=शत्रुः। तमभिमुखो भूत्वेत्यर्थे 'लक्षणेनाभिप्रती आभिमुख्ये'इत्यव्ययीभावे अभ्यमित्रशब्दः। तस्मादलङ्गामीत्यर्थे छप्रत्ययः स्यादित्यर्थः। **गोष्ठात्खञ्**। भूतपूर्व इति प्रकृतिविशेषणम्।

---

शे.]इति णिनिस्तद्ध्वनयन्नाह-गच्छतीति। अनुग्विति पश्चादर्थेऽव्ययीभावः। [स चात्राधिकरणशक्तिमत्पर इति कर्मविभक्त्यन्ताव प्रत्ययः। विभक्तेस्त्वव्ययत्वाल्लुक् ]। **अध्वानमलङ्गच्छतीति**। 'सुप्यजातौ' इति णिनिं ध्वनयितुमेवमुक्तम्। अलङ्गामिपदेन विग्रहे तु अध्वनोऽलङ्गामीत्येव। **अभ्यमित्राच्छ च**। अलङ्गामीत्यनुवर्तते। 'लक्षणेनाभी'इत्यव्ययीभावः। **गोष्ठा**। अत्र केचित्-



यद्यपि 'भूतपूर्वे चरट्' 'षष्ठ्या रूप्य च'त्येते अत्रैव पठित्वा 'गोष्ठात्ख'मित्येव सूत्रं युक्तम्, तथापि तयोरन्यत्र करणसामर्थ्येन

भूतपूर्वः—गौष्ठीनो देशः । अश्वस्यैकाहगमः ।५।२।१९। एकाहेन गम्यते इत्यैकाहगमः । आश्वीनोऽध्वा । शालीनकौपीने अधृष्टाऽकार्ययोः ।५।२।२०। शालाप्रवेशमर्हति—शालीनोऽधृष्टः । कूपपतनमर्हति—कौपीनं पापम् । तत्साधनत्वात्तद्गोप्यत्वाद्वा-पुरुषलिङ्गमपि । तत्सम्बन्धात्तदाच्छादनमपि । व्रातेन जीवति ।५।२।२१। व्रातेन=शरीरायासेन जीवति नतु बुद्धिवैभवेन स-व्रातीनः । सात्पदीनं सख्यम् ।५।२।२२। सप्तभिः पदैरवाप्यते साप्तपदीनम् । हैयङ्गवीनं संज्ञायाम् ।५।२।२३। ह्योगोदोहस्य हियङ्गुरादेशो विकारार्थे खञ्च निपात्यते । दुह्यत इति दोहः=क्षीरम् । ह्योगोदोहस्य विकारो—हैयङ्गवीनं नवनीतम् । तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ।५।२।२४। पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं

---

त.] तिष्ठन्त्यस्मिन्निति गोष्ठः । 'घनर्थे कविधान'मित्यधिकरणे कः । 'अम्बाम्बगोभूमी'ति षत्वम् । पूर्वं भूतो भूतपूर्वः । 'सुप्सुपे'ति समासः । अश्वस्य । कर्तरि षष्ठीयं निर्देशादेव समर्थविभक्तिः । एकाहगम इति । 'कर्तृकरणे कृते'ति समासः । नन्विह 'ग्रहवृदृनिश्चिगमश्चे'त्यपं बाधित्वा 'पारिमाणाख्यायां सर्वेभ्यः' इति घञ्प्राप्नोति, अस्ति चाऽत्र परिमाणाख्या 'एकाहेन गम्यते' इति परिच्छेदावगमात् । अत्राहुः—अस्मादेव निपातनादप्रवृष्टञ्ञ इति । शालीनकौपीने । इमौ खप्रत्ययान्तत्वेन निपात्येते । रूढिशब्दावेतौ कथंचिद्व्युत्पाद्याविति नात्राऽवयवार्थेऽभिनिवेशः कार्यः । शालाप्रवेशमिति । अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः । कूपपतनमिति । यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः । तदाच्छादनमिति । वासःखण्ड इत्यर्थः । अन्ये त्वाहुः—अकार्यशब्दे यः करोति स क्रियासामान्यवचनः, तेन लज्जाहेतुत्वेन अद्रष्टव्यत्वात्पुरुषलिङ्गं 'कौपीनम्' । अस्पृश्यत्वात्तदाच्छादनमिति । शरीरायासेनेति । भारवहनादिनेत्यर्थः । यद्यपि व्रातशब्दो लोके सङ्घातवचनः, तथाप्यत्रत्यभाष्यादिग्रन्थपर्यालोचनया अयमेवार्थ इहोचित इति भावः । साप्तपदीनम् । योग्यतया समर्थविभक्तिस्तृतीयेति दर्शयति—सप्तभिः पदैरिति । पदमिह संभाषणं पादविक्षेपो वा । तद्धितार्थे द्विगुः । अवाप्यत इत्यर्थे खञ् । हैयंगवीनम् । ह्योगोदोहस्येति । गोर्दोहो गोदोहः । षष्ठीसमासः । तेन सह ह्यस्शब्दस्य 'सुप्सुपे'ति समासः । ततो विकारे अनुदात्तलक्षणस्याऽञोऽपवादः खञ् । अत्र ह्यस्शब्देन कालप्रत्यासत्तिर्विवक्षिता । नवनीतमिति । यद्यपि वृत्तौ 'घृत'मित्युक्तं,तथैव चामरेणा'पि–'तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृत'मित्युक्तम्, तथापि घृतशब्देन नवनीतमेव विवक्षितमिति हरदत्तग्रन्थानुरोधेनेदमुक्तम् । तस्य पाक । पाकः=परिणामः ।

---

बा.] भूतपूर्वार्थवृत्तेर्गोष्ठशब्दात्स्वार्थे खः स्यादिति वृत्तिकृतः । अश्वस्यैकाहगमः । अश्वशब्दात्षष्ठ्यन्तादेकाहगम इत्यर्थे खञ्स्यादित्यर्थः । 'एकाहगम'शब्दं व्युत्पादयति—एकाहेनेति । अस्मादेव निपातनात्कर्मणि गमेरबिति भावः । 'कर्तृकरणे कृते'ति समासः । अश्वस्येति कर्तरि षष्ठी । आश्वीनोऽध्वेति । अश्वेन कर्त्रा एकाहेन गन्तुं शक्य इत्यर्थः । शालीन । 'शालाप्रवेशमर्हत्यधृष्ट' इति, 'कूपावतरणमर्हत्यकार्य'मिति चाऽर्थे शालाप्रवेशशब्दात्कूपावतरणशब्दाच्च खञ् । 'प्रवेशशब्दस्य अवतरणशब्दस्य चोत्तरपदस्य लोपे शालीनकौपीनशब्दौ निपात्येते' इति भाष्यम् । अधृष्ट इति । अप्रगल्भ इत्यर्थः । अप्रागल्भ्यादन्यत्र गन्तुमशक्तः शालाप्रवेशमेवार्हति यः स शालीन इति यावत् । कूपपतनमिति । कूपावतरणशब्दस्य विवरणमिदम् । कूपशब्दो नरकाभिधायी । कौपीनं पापमिति । नरकपतनसाधनमकार्यं पापमित्यर्थः । अनयोरर्थयोरेतौ रूढौ । ननु पुरुषलिङ्गे कथं कौपीनशब्द इत्यत आह—तत्साधनत्वादिति । पापसाधनत्वाद्वा, पापवदाच्छादनीयत्वाद्वा पुरुषलिङ्गे कौपीनशब्दो लाक्षणिक इत्यर्थः । तत्सम्बन्धादिति । कौपीनशब्दस्य लक्ष्यपुरुषलिङ्गसंबन्धात्तदाच्छादनवस्त्रखण्डे कौपीनशब्दो लक्षितलक्षणया प्रयुज्यत इत्यर्थः । व्रातेन जीवति । व्रातशब्दात्तृतीयान्ताज्जीवतीत्यर्थे खञ्स्यादित्यर्थः । नानाजातीयानामलब्धजीवनद्रव्याणां भारवहनादिकष्टकर्मजीविनां सङ्घो—व्रातः । तस्य यज्जीवनार्थं कष्टं कर्म तदिह व्रातमिति भाष्यम् । तादृशसङ्घवाचिनो व्रातशब्दात् 'तस्येद'मित्यणि व्रातशब्दोऽत्र तदीयकर्मणि विवक्षित इति तदाशयः । तदाह—शरीरायासेनेति । साप्तपदीनम् । सप्तपदशब्दात्तृतीयान्तादवाप्यं सख्यमित्यर्थे खञि साप्तपदीनमिति भवतीत्यर्थः । सप्तभिः पदैरिति । पदविक्षेपैरित्यर्थः । हैयङ्गवीनम् । ह्यसित्यव्ययं पूर्वेद्युरित्यर्थे । तत्रोत्पन्नो गोदोहः=गोपयः–ह्योगोदोहः । तस्मात्षष्ठ्यन्ताद्विकारार्थे खञि ईनादेशे प्रकृतेर्हियङ्गु इत्यादेशे ओर्गुणे अवादेशे आदिवृद्धौ 'हैयङ्गवीन'मिति भवतिसंज्ञायामिति भाष्यम् । तदाह-ह्योगोदोहस्येत्यादिना ।

---

शे.] विशेषविहितेनापि खञा चरटो बाधा नेति ज्ञाप्यते इत्याहुः । तद्भाष्ये न दृष्टम् । शालीनकौपीने । शालाकूपाभ्यां तत्प्रवेशतत्पतनलाक्षणिकाभ्यामेव प्रत्ययः, अनयो रूढिशब्दत्वात् । व्रातेन । नानाजातीयानामनियतवृत्तीनां शरीरायासजीविनां सङ्घो व्रातः । तत्कर्माऽत्र शरीरायासरूपं व्रातः । अत एव निपातन[illegible] 'व्रातीन' इष्यते । नवनीतमिति ।

कर्णजाहम् । पक्षात्तिः ।५।२।२५। मूलग्रहणमात्रमनुवर्तते । पक्षस्य मूलं पक्षतिः । तेन वित्तश्चुञ्चुप्चणपौ ।५।२।२६। चकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः, तेन चस्य नेत्संज्ञा । विद्यया वित्तो विद्याचुञ्चुः । विद्याचणः । विनञ्भ्यां नानाञौ नसह ।५।२।२७। असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ । विना । नाना । वेः शालच्छङ्कटचौ ।५।२।२८। क्रियाविशिष्टसाधनवाचकात्स्वार्थे । विस्तृतम्-विशालम् । विशङ्कटम् । संप्रोदश्च कटच् ।५।२।२९। सङ्कटम् । प्रकटम् । उत्कटम् । चाद्विकटम् । * अलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानम् । अलाबूनां रजः-अलाबूकटम् । तिलकटम् । उमाकटम् । * गोष्ठजादयः स्थानादिषु पशुनामभ्यः ।

त.]मूलम्-उपक्रमः । 'तस्येद'मित्यणादिषु प्राप्तेष्वयमारम्भः । जाहचो जकारस्य प्रयोजनाऽभावान्नेत्वम् । पीलु, कर्कन्धु, शमी, करीर, कुवल, बदर, [अश्वत्थ] खदिर-पील्वादिः । कर्ण, अक्षि, नख, मुख, केश, पाद, गुल्फ, भ्रू, शृङ्ग, दन्त, ओष्ठ, पृष्ठ,-कर्णादिः । मूलग्रहणमात्रमिति । एकादेशे स्वरितत्वप्रतिज्ञानादिति भावः । पक्षतिरिति । प्रतिपत्, पक्षिणां पक्षमूलं च । तेन वित्तः । वित्तः=प्रतीतः । 'वित्तो भोगप्रत्यययो'रिति निपातनात् 'रदाभ्यां निष्ठातो नः' इति नत्वं न । लुप्तनिर्दिष्ट इति । 'चुटू' प्रत्ययस्ये'ति वक्तव्ये पृथग्योगकरणात् 'चुटू' इत्येतद-नित्यमिति समाधानान्तरमप्याहुः । नानाञाविति । नाञो ञकारो वृद्ध्यर्थः, स्वरार्थश्च । 'न सहे'ति प्रकृति-विशेषणं, न प्रत्ययार्थं इत्याशयेनाह—असहार्थं इत्यादि । यदि प्रत्ययार्थः स्यात्तो 'द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः' इति सहार्थो गम्येत 'न न सह,=अपि तु सहैवे'ति । तस्मात्प्रकृतिविशेषणम् । एतच्च व्याख्यानाल्लभ्यते । यद्येवं सहेत्येव प्रत्ययार्थोऽस्तु, विनञोः प्रतिषेधार्थत्वादिष्टसिद्धेः 'विनार्दमरथकः' इत्यादौ विशब्दस्यापि प्रतिषेध-वृत्तिर्दृष्टैवेति । सत्यम् । क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत,-विगतेन सह, विकृतेन सहेति । तस्मात्पूर्वो-क्तमेव न्याय्यम् । एतच्च हरदत्तग्रन्थे स्पष्टम् । स्वार्थे इति । अनिर्दिष्टार्थत्वादिति भावः । संप्रोदश्च । क्रियाविशिष्टसाधनवाचकात्स्वार्थे प्रत्ययः । सङ्कटं=संहतम् । संबाध इत्यर्थः । प्रकटं=प्रज्ञातम् । प्रकाशत इत्यर्थः । उत्कटम्=उद्धूतं । विकटं=विकृतं । रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते । अलाबूतिलेत्यादि । एभ्यः पञ्चभ्यो रजस्यभिधेये कटच्प्रत्ययो भवति । रजसो विकारत्वाद्विकारप्रत्ययानामपवादोऽयम् । अलाबूकटमिति । 'ओरञ्' 'मयड्वैतयो'रिति मयड्वेह प्राप्तः । तिलकटमिति । 'असंज्ञायां तिलयवाभ्या'मिति मयट् प्राप्तः । उमाभङ्गा-

बा.]नवनीतमिति । भाष्ये तु 'हैयङ्गवीनं घृत'मिति दृश्यते । 'तत्तु हैयङ्गवीनं स्याद् ह्योगोदोहोद्भवं घृत'मित्यमरः । तस्य पाकमूले । 'पाकमूले' इति समाहारद्वन्द्वात्सप्तमी । पाकः=परिणामः । षष्ठ्यन्तेभ्यः पील्वादिभ्यः पाकेऽर्थे कुणप् । कर्णादिभ्यस्तु मूलेऽर्थे जाहजित्यर्थः । कुणपस्तद्धितत्वात्ककारस्य नेत्संज्ञा । जाहचस्तु जकारस्य प्रयोजना-ऽभावान्नेत्संज्ञा । पक्षात्तिः । मूलग्रहणमात्रमिति । पूर्वसूत्रे पाकमूल इति समासनिर्दिष्टत्वेऽप्येकदेशे स्वरित-त्वप्रतिज्ञानादिति भावः । तस्येत्यप्यनुवर्तते । पक्षशब्दात् षष्ठ्यन्तान्मूलेऽर्थे तिप्रत्ययः स्यादित्यर्थः । तेन वित्तः । तृतीयान्ताद्वित्त इत्यर्थे चुञ्चुप्चणपौ भवत इत्यर्थः । वित्तः=प्रसिद्धः । चस्य नेत्संज्ञेति । उपदेशे आदित्वा-ऽभावादिति भावः । विनञ्भ्याम् । 'नसहे'ति सङ्घातः पृथक्त्वे वर्तते । प्रकृतिविशेषणमिदम् । तदाह—अस-हार्थे इति । तस्य विवरणं—पृथग्भावे इति । वर्तमानाभ्यामित्यनन्तरं 'विनञ्भ्या'मिति शेषः । स्वार्थे इति । प्रत्ययार्थस्य अनिर्देशादिति भावः । प्रत्ययाविति । 'यथासङ्ख्यं नानाञा'विति शेषः । विनेति । वेर्ना-प्रत्यये रूपम् । पृथगित्यर्थः । नानेति । नञो नाञि आदिवृद्धौ रूपम् । पृथगित्यर्थः । 'नसहे'त्यस्य प्रत्ययार्थत्वे तु नेत्यनेन न सहेति गम्येत । एवं सति नाना न न सह, किंतु सहैवेत्यर्थः स्यात्, 'द्वौ नञौ' प्रकृतमर्थं गमयतः' इति न्यायादिति भाष्ये स्पष्टम् । वेः शालच्छङ्कटचौ । क्रियाविशिष्टेति । क्रियाविशिष्टकारकवाचकात्स्वार्थे शालच्शङ्कटच्प्रत्ययौ स्त इति यावत् । इदं च भाष्ये स्पष्टम् । संप्रोदश्च कटच् । सं, प्र, उत् एभ्यश्च क्रिया-विशिष्टसाधनवाचिभ्यः स्वार्थे कटच् स्यादित्यर्थः । चाद्वेरपि । संकटं । संहतमित्यर्थः । निबिडीकृतमिति यावत् । प्रकटमिति । प्रज्ञातमित्यर्थः । प्रकाशमिति यावत् । उत्कटमिति । उन्नतमित्यर्थः । अधिकमिति यावत् । रूढशब्दा एते कथञ्चिद्व्युत्पाद्याः । अलाबूतिलेति । अलाबू, तिल, उमा, भङ्गा इत्येभ्यः षष्ठ्यन्तेभ्यो रजसि अभिधेये कटच उपसङ्ख्यानमित्यर्थः । विकारप्रत्ययानामपवादोऽयम् । रजः=चूर्णरेणुः । गोष्ठजादय इति । पशुनामभ्यः स्थानादिष्वर्थेषु गोष्ठजादयः प्रत्यया वक्तव्या इत्यर्थः । गोष्ठजादीनां प्रत्ययानां स्थानादीनां चार्थानां

शे.]भाष्ये 'घृत'मिति पाठः । सञ्ज्ञायामित्युक्तेरदधिति न । तस्य पाक । अर्थयोः प्रत्यययोः प्रकृत्योश्च यथासङ्ख्यम् । विनञ्भ्याम् । नसहेति प्रकृत्यर्थविशेषणमित्याह-असहार्थे इति । तद्व्याख्या-पृथग्भावे इति । असहार्थे किम् ? । विगत इत्यादौ क्रिया-विशेषकान्मा भूत् । गोष्ठजिति । एतत्प्रत्ययाव्याख्यानपरमयमेवार्थ[ ] वित्तः पठितः । अन्यत्रादर्शनाद्येनोपकानि वार्तिकान्यात-

गवां स्थानं गोगोष्ठम् । अश्वगोष्ठम् । ॐ सङ्घाते कटच् । अवीनां सङ्घातोऽविकटः । ॐ विस्तारे पटच् । अविपटः । ॐ द्वित्वे गोयुगच् । द्वावुष्ट्रौ उष्ट्रगोयुगम् । ॐ षट्त्वे षड्गवच् । अश्वषड्गवम् । ॐ स्नेहे तैलच् । तिलतैलम् । सर्षपतैलम् । ॐ भवने क्षेत्रे शाकटशाकिनौ । इक्षुशाकटम् । इक्षुशाकिनम् । अवात्कुटारच्च ।५।२।३०। चात्कटच् । अवाचीनोऽ[धोमुखो]वकुटारः । अवकटः । नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ।५।२।३१। अवादित्येव । नतं=नमनम् । नासिकाया नतम्-अवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिका अवटीटा । पुरुषोऽप्यवटीटः । नेर्बिडज्बिरीसचौ ।५।२।३२। निबिडम् । निबिरीसम् । इनच्पिटच्चिकचि च ।५।२।३३। 'ने'रित्येव । नासिकाया नतेऽभिधेये इनच्पिटचौ प्रत्ययौ प्रकृतेश्चिकचि इत्यादेशौ च । ॐ कप्रत्ययचिकादेशौ च वक्तव्यौ । चिकिनम् । चिपिटम् । चिक्कम् । ॐ क्लिन्नस्य चिल्-पिल्-लश्चाऽस्य चक्षुषी । क्लिन्ने

त.]घृतादित्वादन्तोदात्तात् 'अनुदात्तादेश्चे'त्यञ् , 'उमोर्णयोर्वे'ति वुञ् प्राप्तः । भङ्गाशब्दात् 'तृणधान्यानां च द्व्यषा'मित्याद्युदात्तत्वादण्मयट्वा प्राप्त इत्येवं यथासंभवं प्रत्ययप्राप्तिरूह्या । हरदत्तस्तु-तिलशब्दस्य घृतादित्वादन्तोदात्तत्वमङ्गीकृत्य ततः 'अनुदात्तादेश्चे'त्यञ् , 'असंज्ञायां तिलयवाभ्या'मिति मयड्वा प्राप्त इत्याह । तत्र तिलशब्दस्य घृतादित्वकल्पने बीजं चिन्त्यम् । 'तृणधान्यानां च द्व्यषा'मिति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वात् । 'तिलाश्च मे' इत्यत्र तथैव वेदे पाठाच्च । गोष्ठजादय इति । 'सङ्घाते कट'जित्यादीन्यस्यैव प्रपञ्चः । इहोभयत्राऽऽदिशब्दः प्रकारे । पशुनामभ्य इति । 'पशुनामादिभ्यः' इति भाष्ये प्रचुरः पाठः । गवां स्थानमिति । 'तस्येद'मित्यत्रार्थे 'सर्वत्र गोरजादिप्रसङ्गे' इति यति प्राप्ते गोष्ठच् । सङ्घात इति । अप्रस्तुतावयवः समूहः—सङ्घातः । प्रस्तुतावयवस्तु—विस्तारः । कटच्पटचौ द्वावपि सामूहिकानामपवादौ । द्वित्वे इति । प्रकृत्यर्थस्य द्वित्वे द्योत्य इत्यर्थः । उष्ट्रगोयुगमिति । द्वयं युग्ममित्यादिवद्द्व्यवयवसङ्घातप्राधान्यादेकवचनम् । एवमग्रेऽपि । नतमिति । नपुंसके भावे क्तः । नमनमिति । नीचैस्त्वमित्यर्थः । अवटीटमिति । नासिकासाधनके नमने वर्तमानादवशब्दात्स्वार्थे प्रत्ययः । कथं तर्हि नासिकायां पुरुषे चाऽवटीटशब्दस्य प्रयोग इत्यत आह—तद्योगादिति । नेर्बिडच् । 'नते नासिकायाः संज्ञाया'मिति वर्तते । निशब्दान्नासिकाया नतेऽभिधेये बिडज्बिरीसचौ स्तः । निबिडमिति । तद्योगान्निबिडा नासिका, निबिरीसा । कथं तर्हि 'निबिडाः केशाः', 'निबिडं वस्त्र'मिति । उपमानाद्भविष्यति । एतच्च काशिकायां स्पष्टम् । केचित्तु उक्तप्रयोगानुरोधेनेह सूत्रे 'नते नासिकायाः' इति नानुवर्तत इति व्याचक्षते । प्रकृतेरिति । निशब्दस्येत्यर्थः । आदेशौ चेति । प्रत्ययौ, तत्संनियोगेन यथासङ्ख्यमिमावादेशौ च स्त इत्यर्थः । चिकिनमिति । इनच्प्रत्ययसंनियोगेन चिकादेशः । चिपिटमिति । पिटच्प्रत्ययसंनियोगेन 'चि' इत्यादेशः । क्लिन्नस्येति । चिल् पिल् इत्येतावादेशौ

बा.]प्रपञ्चनपराणि 'सङ्घाते कटजि'त्यादीनि 'शाकटशाकिना'वित्यन्तानि षड्वार्तिकानि । तेषु चतुर्षु 'पशुनामभ्य' इत्यनुवर्तते । अप्रस्तुतावयवः समूहः—सङ्घातः । प्रस्तुतावयवस्तु-विस्तारः । द्वित्व इति । प्रकृत्यर्थगतद्वित्व इत्यर्थः । वृषगोयुगमिति । द्व्यवयवकसङ्घाताभिप्रायमेकवचनम् । द्वयं युग्ममित्यादिवत् । केचित्तु द्वौ वृषावित्यर्थे 'वृषगोयुग'मिति स्वभावादेकवचनं विंशतिरित्यादिवदित्याहुः । एवमुष्ट्रगोयुगम् । अश्वषड्गवम् । अवात्कुटारच्च । क्रियाविशिष्टसाधनवाचकादवात्स्वार्थे कुटारच्च स्यादित्यर्थः । अवाचीन इति । अवाचीने विद्यमानादवात्कुटारचि अवकुटार इत्यर्थः । नते नासिकायाः । अवादित्येवेति । अवशब्दान्नासिकाया अवनतेऽर्थे टीटच् , नाटच् , भ्रटच् एते प्रत्ययाः स्युरित्यर्थः । 'णमु प्रह्वत्वे' इति धातोर्भावे क्तप्रत्यये नतशब्द इत्यभिप्रेत्याह-नतं नमनमिति । प्रह्वत्वमित्यर्थः । ननु यदि नासिकाया नमनमवटीटं तर्हि अवटीटा नासिकेति कथमित्यत आह—तद्योगादिति । नमनयोगात्तत्र लाक्षणिकमिति भावः । पुरुषोऽप्यवटीट इति । तादृशनासिकायोगादिति भावः । नेर्बिडज्बिरीसचौ । 'नते नासिकायाः संज्ञाया'मित्यनुवर्तते । नेः-नासिकाया नतेऽर्थे बिडच् , बिरीसच् द्वौ प्रत्ययौ स्त इत्यर्थः । 'निबिडा वृक्षा' इति तु उपमानादित्याहुः । इनच्पिटच् । इनच् पिटजिति समाहारद्वन्द्वात्प्रथमैकवचनम् । 'चिकचि' इत्यपि चिक-चि इत्यनयोः समाहारद्वन्द्वात्प्रथमैकवचनम् । प्रकृतेरिति । नेरित्यर्थः । तत्र इनचि परे चिक इत्यादेशः । तत्र अकार उच्चारणार्थः । पिटचि तु परे चीत्यादेशः । कप्रत्ययेति । उक्तनेः कप्रत्ययः, प्रकृतेः चिकादेशश्चेत्यर्थः । अयमपि ककारान्त एवादेशः । चिकिनमिति । इनचि प्रत्यये कृते नेश्चिकादेशे रूपम् । चिपिटमिति । पिटचि कृते नेश्चीत्यादेशे

शे.]सङ्घात इति । षट्त्वे इति । 'हस्तिषड्गव'मिति भारतप्रयोगादिदमुक्तम् । अवाचीनः=प्रसिद्धः । नत इति । नासिकासम्बन्धिततते वर्तमानादवात्स्वार्थे प्रत्यय इत्यर्थः । नेर्बिड । 'निबिडाः केशा' इति प्रयोगान्नते नासिकाया इत्यादेरत्राऽसम्बन्धः । अग्रे तु मण्डूकानुवृत्तिर्बोध्या । अभिधेय इति । तत्र वर्तमानान्नेरित्यर्थः । चिकादेशेऽकार उच्चारणार्थः । क्लिन्नस्येति ।

चक्षुषी अस्य चिल्लः । पिल्लः । * चुल् च । चुल्लः । उपाधिभ्यां त्यकन्नासन्नारूढयोः ।५।२।३४। संज्ञायामित्यनुवर्तते । पर्वतस्यासन्नं स्थलमुपत्यका । आरूढं स्थलमधित्यका । कर्मणि घटोऽठच् ।५।२।३५। घटते इति घटः । पचाद्यच् । कर्मणि घटते—कर्मठः पुरुषः । तदस्य संजातं तारकादिभ्य इतच् ।५।२।३६। तारकाः संजाता अस्य तारकितं नभः । आकृतिगणोऽयम् । प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।५।२।३७। तदस्येत्यनुवर्तते । ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् । * प्रमाणे लः ।

त.] भवतो, लश्च प्रत्ययः 'अस्य चक्षुषी' इत्येतस्मिन्नर्थे । चुल् चेति । चाल्लप्रत्ययः । चुल्ल इति । क्लिन्ने अस्य चक्षुषी इति पूर्वोक्त एव विग्रहः । कथं तर्हि 'स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी' इत्यमर इति चेत् । अत्राहुः—पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्येति । अन्ये त्वाहुः—'अस्य चक्षुषी' इत्यत्र 'अस्ये'ति न वक्तव्यम् । क्लिन्ने चक्षुषी–चिल्ले पिल्ले । पुरुषे तु मत्वर्थेऽच्, अर्शआदिषु 'स्वाङ्गाद्धीना'दिति सूत्रितत्वादिति । उपाधिभ्याम् । संज्ञाधिकारादिह नियतविषयमासन्नारूढं गृह्यत इत्याशयेनाह—पर्वतस्येति । आसन्नं= समीपम् । आरूढम्—उच्चस्थानम् । उपत्यकेति । 'प्रत्ययस्था'दितीत्त्वं तु न भवति, 'त्यकनश्च निषेधः' इत्युक्तत्वात् । कर्मणि घटो । सप्तम्यन्तात्कर्मन्शब्दात् 'घटते' इत्यर्थेऽठच् स्यात् । कर्मठ इति । 'ठस्येकः' इतीह न भवति । अठचि ठस्याऽप्रत्ययत्वेनाऽङ्गसंज्ञानिमित्तत्वाऽभावात् । तारकितमिति । एवं पुष्पितं फलितं पुलकितं रोमाञ्चितमित्याद्युदाहार्यम् । प्रमाणे द्वयसज् । प्रमाणे विद्यमानात्प्रथमान्तात् 'अस्ये'ति निर्दिष्टे प्रमेयेऽर्थे त्रयः प्रत्ययाः स्युः । प्रमाणमिह परिच्छेदकमात्रम् । तत्र मात्रच् । द्वयसज्दघ्नञौ तूर्ध्वमान एव भवतः, 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम'ेति भाष्यात् । ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानम्–ऊर्वादि । तेन तिर्यङ्मानादौ 'दण्डद्वयसं क्षेत्र'मित्यादि न प्रयुज्यते, यथोत्तरं मुनीनां प्रामाण्यात् । अतएव 'द्विकाण्डा क्षेत्रभक्ति'रित्यत्र 'द्वयसचो लु'गिति प्राचोक्तं नादर्तव्यमित्यवोचाम । प्रमाणे ल इति । लुक एषा पूर्वाचार्यसंज्ञा । प्रमाणत्वेन ये

बा.] रूपम् । चिल्लमिति । कप्रत्यये नेश्चिकादेशे रूपम् । क्लिन्नस्य चिल्पिलश्चास्य चक्षुषी इति । वार्तिकमिदम् । चिल् पिलिति समाहारद्वन्द्वात्प्रथमैकवचनम् । क्लिन्ने अस्य चक्षुषी इति विग्रहे क्लिन्नशब्दादस्य चक्षुषी इत्यर्थे लप्रत्ययः, प्रकृतेश्चिल् पिल् एतावादेशौ स्त इत्यर्थः । क्लिन्ने इति । नेत्राऽऽमयप्रयुक्तजलनिष्यन्दवतीइत्यर्थः । चिल्लः पिल्ल इति । क्लिन्नचक्षुष्क इत्यर्थः । चुल्चेति । उक्तविषये क्लिन्नस्य चुल् आदेशश्च लप्रत्ययसंनियोगेन वक्तव्य इत्यर्थः । उपाधिभ्याम् । उप, अधि आभ्यां यथासङ्ख्यमासन्नारूढयोर्वर्तमानाभ्यां स्वार्थे त्यकन्प्रत्ययः स्यादित्यर्थः । आसन्नं=समीपम् । आरूढम्=उच्चम् । अनुवर्तत इति । 'नते नासिकायाः' इत्यस्मादिति भावः । कस्य समीपं, कस्योच्चमित्याकाङ्क्षायां संज्ञाधिकारात् पर्वतस्येति लभ्यत इत्यभिप्रेत्याह—पर्वतस्येति । उपत्यका, अधित्यकेति । स्त्रीत्वं लोकात् । अत्र 'प्रत्ययस्था'दिति इत्त्वं तु न, 'त्यकनश्चे'त्युक्तेः । कर्मणि घटोऽठच् । सप्तम्यन्तात्कर्मन्शब्दाद्घट इत्यर्थे अठच्स्यादित्यर्थः । घटशब्दस्य कलशपर्यायत्वभ्रमं वारयति—कर्मणि घटत इति । व्याप्रियत इत्यर्थः । तथाचाऽत्र घटशब्दो यौगिको घटमाने वर्तत इति भावः । कर्मठ इति । अठचि 'नस्तद्धिते' इति टिलोपः । अठचि ठस्य अङ्गात्परत्वाऽभावादिकादेशाऽभाव इति भावः । तदस्य । प्रथमान्तेभ्यस्तारकादिभ्योऽस्य तत्संजातमित्यर्थे इतच् स्यादित्यर्थः । तारकितं नभ इति । संजातनक्षत्रमित्यर्थः । आकृतिगणोऽयमिति । तेन 'पुष्पितो वृक्षः' 'फलित' इत्यादिसंग्रहः । प्रमाणे । अनुवर्तत इति । ततश्चास्य प्रमेयस्य तत्प्रमाणमित्यर्थे प्रमाणे विद्यमानात्प्रथमान्ताद्द्वयसच् , दघ्नच् , मात्रच् एते प्रत्ययाः स्युः । प्रमाणवानिदमर्थोऽत्र प्रत्ययार्थ इति भाष्ये स्पष्टम् । तत्र 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम'ेति भाष्ये उक्तम् । प्रमाणमिह परिच्छेदकमात्रम् , तत्र मात्रच् । प्रस्थमात्रमूरुमात्रमित्यादि इति कैयटः । वस्तुतस्तु 'यत्तदेतेभ्यः' इति सूत्रभाष्य-

शे.] चिल्पिलावादेशौ, लश्च प्रत्यय इत्यर्थः । आसन्नं = समीपम् । आरूढम्=उच्चम् । सञ्ज्ञाधिकारलभ्यमाह—पर्वतस्येति । 'समुद्रोपत्यका हैमी पर्वताधित्यका पुरी' । लक्षणया प्रयोगो बोद्धव्यः । कर्मठ इति । ठस्याऽङ्गसञ्ज्ञानिमित्तत्वाऽभावादिकादेशो न । प्रमाणे द्व । 'प्रमाणे' इत्यर्थद्वारा प्रकृतिविशेषणं । तत्र वर्तमानात्प्रथमान्तादित्यर्थः । प्रमाणमत्र परिच्छेदकमात्रं, तत्र मात्रच् । अत एव प्रस्थमात्रमूरुमात्रमित्यादिसिद्धिः । आद्यौ तूर्ध्वमाने एव, प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम'ेत्युक्तेरिति केचित् । अन्ये तु आयामपरिच्छेदकमेवात्र प्रमाणम् , अत एव 'यत्तदेतेभ्यः' इति सूत्रे प्रमाणपरिमाणशब्दयोरेकार्थत्वं मन्यमानस्य 'परिमाणग्रहणं किमर्थ'मिति शङ्कायाम् 'उक्तोऽत्र विशेषः' इति भाष्ये समाहितम् । तेनोक्तविशेषवाचकावत्र प्रकरणे प्रमाणपरिमाणशब्दाविति सूचितम् । एवञ्च 'प्रस्थमात्र'मित्याद्यसाध्वेव । 'मात्रचस्त्वविशेषेण परिच्छेदकमात्रवाचिनः स्मरणा'दिति कैयटोऽपि चिन्त्य एवेत्याहुः । प्रमाणे लः । प्रमाणे वर्तमानाद्विहितस्य लुगित्यर्थः । इह 'आयामस्तु प्रमाणं

शमः । दिष्टिः । वितस्तिः । ॐ द्विगोर्नित्यम् । द्वौ शमौ प्रमाणमस्य द्विशमम् । ॐ प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चापि संशये मात्रज्वक्तव्यः । शममात्रम् । प्रस्थमात्रम् । पञ्चमात्रम् । ॐ वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् । तावदेव तावद्द्वयसम् । तावन्मात्रम् । पुरुषहस्तिभ्यामण् च ।५।२।३८। पुरुषः प्रमाणमस्य पौरुषम् । पुरुषद्वयसम् । हास्तिनम् । हस्तिद्वयसम् । यत्तदेतेभ्यः परिमाणे वतुप्

त.] प्रसिद्धास्ततः परस्यैवायं लुगित्युदाहरति–शमः दिष्टिः वितस्तिरिति । शमः प्रमाणमस्येत्यादिविग्रहः । एषु मात्रचो लुक्, इतरयोरसंभवात् । शमादीनामनूर्ध्वमानत्वात् । द्विगोर्नित्यमिति । द्विगोरप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाऽप्राप्तो लुग्विधीयते । ननु विकल्पस्याऽप्रकृतत्वान्नित्यग्रहणमिह निरर्थकमिति चेत् । अत्राहुः— अनुपदं संशये वक्ष्यमाणो मात्रच् शममात्रमित्यादौ यथा न लुप्यते 'प्रमाणे लः' इत्यस्य 'प्रमाणे द्वयस'जिति यः पूर्वविधिस्तद्विषयत्वात्,–एवं द्विगोरपि न लुप्येत । इष्यते च लुक् । द्वौ शमौ स्यातां न वा द्विशम इति । तथा याऽधिकसङ्ग्रहार्थं नित्यग्रहणमिति । अत्र केचित्—द्विगोर्लः' इत्युक्तेऽपि पुनर्लग्रहणं नित्यार्थमधिकसङ्ग्रहार्थमिति व्याख्यातुं शक्यत इति वैचित्र्यार्थं नित्यग्रहणमित्याहुः । शममात्रमित्यादि । शमः स्यान्न वेत्यादिविग्रहः । पुरुषहस्तिभ्यामण्च । 'इनण्यनपत्ये' इति प्रकृतिभावः । हस्ती प्रमाणमस्य हास्तिनम् । अत्र काशिकायामुक्तं 'द्विगोर्नित्यं लुक् । द्विपुरुषमुदक'मित्यादि । व्याख्यातं च हरदत्तेन—यद्यपि 'प्रमाणे लो द्विगोर्नित्य'मित्यस्य नायमनुवादः, पुरुषहस्तिनोः शमादिवत्प्रमाणत्वेनाऽप्रसिद्धत्वात्, अतएव हि 'पुरुषद्वयस'मित्यादौ 'प्रमाणे लः' इति लुङ् न भवति, तथाप्यपूर्वोऽत्र लुग्विधीयते इति । एतच्चाऽसङ्गतम् । 'द्विगोर्नित्यं लु'गित्यपूर्ववचनस्य मुनित्रयाऽनुक्तत्वात् । वस्तुतस्तु विधीयत इत्यस्याऽनुमीयत इत्यर्थः । अयं भावः—'द्विगोः' 'तद्धितलुकी'त्यनुवर्तमाने 'पुरुषात्प्रमाणेऽन्यतरस्या'मिति ङीब्विकल्प्यते, तदेव लुकमनुमापयतीति । यत्तदेतेभ्यः । यावानित्यादि । 'आ सर्वनाम्नः' इत्यात्वे 'उगिदचा'मिति नुम् । 'अत्वसन्तस्य चे'ति दीर्घः । हल्ङ्यादिलोपसंयोगान्तलोपौ । 'प्रमाणे' इत्यनुवर्तमाने परिमाणग्रहणं प्रमाणपरिमाणयोर्भेदात्कृतम् । तथा च वार्तिकम्–'डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते । मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोः । इति । अस्यार्थः–इह शास्त्रे वतुपं विधाय तस्मिन् परे आत्वं विहितम् । पूर्वाचार्यास्तु डावतुं विदधिरे, तद्रीत्या निर्देशोऽयं डावताविति । विशेष्यते इति विशेषः, तस्य भावो वैशेष्यं, तस्मात्,

बा.] स्वरसादायामपरिच्छेदकमेवात्र प्रमाणमिति शब्देन्दुशेखरे विस्तरः । प्रमाणे ल इति । लुको 'ल' इति पूर्वाचार्यशास्त्रसिद्धा संज्ञा । प्रमाणे वर्तमानाद्विहितस्य द्वयसजादेर्लुग्वक्तव्य इत्यर्थः । शमो दिष्टिर्वितस्तिरिति । शमः प्रमाणमस्येत्यादिविग्रहः । शमादयोऽनूर्द्ध्वमानविशेषाः, तेभ्यो मात्रचो लुक्, इतरयोरसंभवात् । अत्र 'आयामस्तु प्रमाणं स्यादि'त्येव गृह्यते । एवंच ऊरुद्वयसमित्यादौ न लुक् । द्विगोर्नित्यमिति । प्रमाणान्ताद्द्विगोः परस्य द्वयसजादेर्नित्यं लुक् स्यादित्यर्थः । प्रमाणान्तस्य द्विगोः प्रमाणाऽवृत्तित्वात्सामर्थ्यादिह तदन्तविधिः । पूर्ववार्तिकेन तु नात्र प्राप्तिरस्ति, द्विगोः प्रमाणत्वाऽभावात् । द्विशममिति । तद्धितार्थे द्विगुः । ततो मात्रचोऽनेन लुक् । विकल्पस्याऽप्रकृतत्वादेव सिद्धे नित्यग्रहणं संशये वक्ष्यमाणस्य मात्रचो लुगर्थम् । अन्यथा शममात्रमित्यत्रेव द्विशमशब्दादपि स मात्रच् न लुप्येतेति भाष्ये स्पष्टम् । प्रमाणेति । प्रमाणवाचिनः परिमाणवाचिनः सङ्ख्यावाचिनश्च संशये मात्रज्वक्तव्य इत्यर्थः । अत्र प्रमाणमायाम एव गृह्यते, 'आयामस्तु प्रमाणं स्यादि'ति वचनात् । अत एव परिमाणग्रहणमर्थवत् । शममात्रमित्यादि । शमः स्यान्न वेत्यादिविग्रहः । वत्वन्तादिति । वार्तिकमिदम् । पुरुषहस्तिभ्यामण् च । 'उक्तविषये' इति शेषः । चाद्द्वयसजादयस्त्रयः । यत्तदेतेभ्यः । तदस्येत्यनुवर्तते । अस्य तत्परिमाणमित्यर्थे परिमाणवाचिभ्यः प्रथमान्तेभ्यः किम्, यद्, तद्, एतद् एभ्यो वतुप् स्यादित्यर्थः । यावानिति । यच्छब्दाद्वतुप् । उपावितौ । 'आ सर्वनाम्नः' इत्यात्त्वम्, सुः, 'उगिदचामि'ति नुम्, 'अत्वसन्त-

शे.] स्या'दित्येव गृह्यते । तेनोरुद्वयसमित्यादि सिद्धम् । शमादीनामपि यदाऽऽयामपरिच्छेदकत्वं तदा मात्रचो लुक् । यदा तूर्ध्वाधरदिगवस्थितवस्तुपरिच्छेदकत्वे द्वयसजादि तदाऽप्रमाणत्वान्न लुक् । द्विगोर्नित्यमिति । प्रमाणान्ताद् द्विगोरित्यर्थः । एतत्सामर्थ्यादेव तदन्तद्विगोरप्रमाणत्वेऽपि मात्रच् । प्रमाणपरीति । तेनोन्मानात्संशये मात्रच्न । शममात्रमिति । शमः स्यान्न वेत्यर्थः । वत्वन्तात्स्वार्थे इति । बहुलग्रहणसहितोऽत्र पाठो भाष्ये । हास्तिने—'इनणी'ति प्रकृतिभावः । यत्तदे । इह परिमाणग्रहणं सर्वतोमानार्थकम् । ननु 'प्रमाणे' इत्यनुवर्त्य तत्रैवास्य विधानमस्तु, 'यावानध्वे'त्यादिप्रयोगा एव मुख्याः सन्तु, परिमाणप्रयोगा एव सादृश्याद्भवन्तु । तदुक्तं भाष्ये–'किमर्थं परिमाण इत्युच्यते न प्रमाण इति वर्त्तते' इति चेन्न । यदादिभ्यो विशेषविहितेन वतुपा मात्रादीनां बाधप्रसङ्गात् । परिमाणग्रहणे तु भिन्नोपाधिकत्वान्न बाध इति, प्रमाणोपाधौ तन्मात्रम्, ऊर्ध्वमानोपाधौ तद्द्वयसं [illegible] 'यावानध्वा' [illegible] अधिकरणे तावत्त्वे [illegible]त्यादिप्रयोगास्तु प्रमाणग्रहणानु-

।५।२।३९। यत्परिमाणमस्य यावान् । तावान् । एतावान् । किमिदंभ्यां वो घः ।५।२।४०। आभ्यां वतुप्स्याद्वस्य च घः । कियान् । इयान् । किमः सङ्ख्यापरिमाणे डति च ।५।२।४१। चाद्वतुप् ।

त.]अर्थभेदादित्यर्थः । अर्थभेदस्तु—'परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्या'दिति प्रागेवोक्त इति भावः । नन्वनयोरर्थभेदे सति यावानध्वा यावती रज्जुरित्यादि न सिध्येत्, अत्र ह्यायाममात्रं गम्यते । यद्युपमानाद्भविष्यतीति ब्रूषे, तर्हि प्रमाणग्रहणमेवानुवर्त्यतां, यावानध्वेत्यादिप्रयोगाश्च मुख्याः सन्तु । ये तु परिमाणे प्रयोगाः 'यावान् धान्यराशि'रित्यादयः, त एवोपमानाद्भवन्तु । तत्राह—'**मात्रादीति**' । 'यत्तदेतेभ्यः' इति विशेषविहितो हि वतुप् सामान्यविहितान् मात्रजादीन् बाधेत । तेन तन्मात्रमित्यादि न स्यात् । परिमाणग्रहणे सति तु भिन्नोपाधिकत्वाद्वतुपः प्रमाणे विहितमात्रजादिभिः सह बाध्यबाधकभावो नेति भावः । नन्वेवमपि बाधः स्यादेव, 'प्रमाणे द्वयस'जित्यत्र प्रस्थमात्रमित्यादिसिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्यातत्वेन वतुपो यत्तदेतेभ्यो विहितत्वेन विशेषविहितत्वानपायात् । तस्मात् 'यत्तदेतेभ्यो वतुप् चे'त्येव सूत्र्यतां, मास्तु परिमाणग्रहणम्, अस्तु च प्रमाणे इत्यर्थाधिकारः, तेन 'यावती रज्जुः' 'यावान् धान्यराशि'रित्यादिप्रयोगाः सर्वेऽप्युपचारं विनैव निर्वहन्तीत्यपरमनुकूलमत आह–'**भावः सिद्धश्चेति**' । डावतोरिति पञ्चम्यन्तम् । अर्थभेदे सति वत्वन्तान्मात्रजादीनामुत्पत्तिः सिध्यति । तत्परिमाणमस्य तावद्धान्यं राशीकृतम् । तावत्प्रमाणमस्य कुड्यादेः 'तावन्मात्रम्' । यादृग्राशीकृतस्य धान्यादेर्दैर्घ्यं तादृशं कुड्यादेरपीत्यर्थः । एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वाद्वतुबन्तान्मात्रजादयो न स्युः । यस्य हि तावत्प्रमाणं तस्य तदपि प्रमाणम् । जानुप्रमाणकं जलादि यस्य प्रमाणं तदपि जानुप्रमाणकमिति वक्तुं शक्यत्वात् । एवं च तावच्छब्द एव प्रयुज्येत, न तु 'तावन्मात्र'मित्यादि । अन्यथा तत्प्रमाणमस्य तन्मात्रम् । तन्मात्रं प्रमाणमस्य तन्मात्रमात्रमित्येवं मात्रजादिभ्यः प्रत्ययमालाप्रसङ्गात् । **किमिदंभ्याम् । वतुप्स्यादिति** । वकारस्य घविधिसामर्थ्याद्वतुपमनुवर्त्य सोऽप्यत्र विधीयत इति भावः । 'आदेः परस्ये'त्येव सिद्धे 'वः' इति वचनमादेशप्रतिपत्त्यर्थम् । इतरथा घः प्रत्ययान्तरं विज्ञायेत । **कियानिति** । 'इदंकिमोरीश्की' 'यस्येति चे'ति लोपः । **इयानिति** । ईशादेशस्य 'यस्ये'ति लोपे प्रत्ययमात्रमवशिष्यते । पठन्ति च–'उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ, गतवति विलयं च प्राकृतेऽपि प्रपञ्चे । सपदि पदमुदीतं केवलः प्रत्ययो यत्तदियदिति मिमीते को हृदा पण्डितोपि ।' वैयाकरणानामौपनिषदानां च प्रक्रियामाश्रित्य प्रवृत्तो द्व्यर्थोऽयं श्लोकः । **किमः सङ्ख्या** । 'तदस्ये'त्यनुवर्तत एव । संख्यायाः परिमाणं=परिच्छेदः, तस्मिन् कर्तव्ये यः प्रश्नस्तस्मिन्वर्तमानात्किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः स्यात् । सङ्ख्यापरिमाणे किम् ? । क्षेपे माभूत् । का सङ्ख्येयमेषां दशानाम् । 'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते' इत्येवं सङ्ख्येयद्वारे-

बा.]स्ये'ति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ । एवं तावान्, एतावान् । **किमिदंभ्यां वो घः** । तदस्येति, परिमाणे वतुबिति चानुवर्तते । तदाह–**आभ्यां वतुप् स्यादिति** । आभ्यां प्रथमान्ताभ्याम् 'अस्य तत्परिमाण'मित्यर्थे वतुप्स्यादित्यर्थः । **वस्य च घ इति** । वकारस्य घकार इत्यर्थः । **कियानिति** । किं परिमाणमस्येति विग्रहः । किंशब्दाद्वतुप् । उपावितौ । वकारस्य घकारः । इयादेशः । किम् इयत् इति स्थिते 'इदङ्किमोरीश्की'इति किमः कीभावे 'यस्येति चे'ति ईकारलोपे कियच्छब्दात्सौ 'उगिदचा'मिति नुमि 'अत्वसन्तस्ये'ति दीर्घे, हल्ङ्यादिसंयोगान्तलोपाविति भावः । **इयानिति** । इदंशब्दाद्वतुपि वकारस्य घकारे इयादेशे इदम् इयत् इति स्थिते 'इदङ्किमोरीश्की'ति शित्त्वादिदम ईकारे सर्वादेशे 'यस्येति चे'ति ईकारस्य लोपे इयदिति प्रत्ययमात्रं शिष्यते । ततः सौ नुमादि पूर्ववत् । **किमः सङ्ख्या** । तदस्येत्यनुवर्तते । सङ्ख्यायाः परिमाणं=परिच्छेदः । किंशब्दःप्रश्ने वर्तते । का अस्य सङ्ख्येत्येवं सङ्ख्या परिच्छेदविषयकप्रश्ने विद्यमानात्किंशब्दात्प्रथमान्तादस्येत्यर्थे डतिप्रत्ययश्च स्यादित्यर्थः । **कतीति** । का सङ्ख्या अस्येति, का सङ्ख्या अनयोरिति च प्रश्नो न सम्भवति, 'अस्ये'त्यनेन एकत्वस्य, अनयो-

शे.]वृत्त्या परिच्छेदकमात्रेऽपि विधानात्सिद्धेः । तदुक्तं–'मात्राद्यप्रतीघाताये'ति । **किमिदम्** । वस्य घविधानसामर्थ्याद्वतुपोऽप्यत्र विधिः । प्रत्ययान्तरत्वभ्रमव्यावृत्तये 'व' इति । एतेन—आदेः परस्ये'त्येव सिद्धे 'व' इति व्यर्थमित्यपास्तम् । यद्वा किमिदम्भ्यामिति वाक्यभेदेन वतुपं विधत्ते । **किमः सम्** । इदमो निवृत्त्यर्थं–किम इति । **सङ्ख्यापरिमाणमिति**–कर्मधारयः । परिमाणशब्दः परिच्छेदकपरः । पूर्वत्र परिमाणग्रहणस्य सर्वतो मानार्थत्वात्पुनस्तद्ग्रहणम् । सङ्ख्यारूपपरिच्छेदविषयके प्रश्ने वर्तमानात्किमोऽस्येति षष्ठ्यर्थे डतिरित्यर्थः । सङ्ख्येति किम् ? । कियान् वृक्षः । **कतीति** । नित्यबहुवचनान्तः, द्व्येकयोः सन्देहाऽभावेन प्रश्नाऽभावात् । बहुत्वव्याप्यसङ्ख्यानां बहुत्वात्प्रश्नो युक्त एव । **सङ्ख्याया अ** । अवयवे वर्तमानसङ्ख्यावाचकादवयवि-

तस्य च वस्य षः स्यात् । का सङ्ख्या येषां ते कति । कियन्तः । **सङ्ख्याया अवयवे तयप्** ।५।२।४२। पञ्चावयवा अस्य पञ्चतयं दारु । **द्वित्रिभ्यां तयस्याऽयज्वा** ।५।२।४३। द्वयम् । द्वितयम् । त्रयम् । त्रितयम् । **उभादुदात्तो नित्यम्** ।५।२।४४। उभशब्दात्तयपोऽयच् स्यात्, स चायुदात्तः । उभयम् । **तदस्मिन्नधिकमिति दशान्ताड्डः** ।५।२।४५। एकादश अधिका अस्मिन्नेकादशम् । ❀ **शतसहस्रयोरेवेष्यते** । नेह-एकादश अधिका अस्यां विंशत्याम् । ❀ **प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते** । नेह—एकादश

त.]णाऽत्र संख्यायाः कुत्सा बोध्या । **संख्यायाः** । अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमान्तात्षष्ठ्यर्थे तयप् स्यात् । यं प्रत्यवयवः सोऽवयवी प्रत्ययार्थः, 'अस्ये'त्यधिकारात् । यथा द्वयसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयं प्रत्ययार्थस्तद्वत् । **त्रयमिति** । ननु 'त्रयोऽवयवास्तन्तवो यस्य त्रयं सूत्र'मिति प्रयोगे संभवत्यपि 'मुनित्रय'मिति प्रयोगो न सङ्गच्छते, अन्यपदार्थस्यावयविनोऽभावादिति चेत् । अत्राहुः—अवयवी त्वत्र समुदाय एव । स चातिरिक्तो वाऽनतिरिक्तो वेति विचारान्तरम् । एवं च समुदायस्यातिरिक्तत्वपक्षेऽपि समुदायघटकत्वेन मुनीनां प्रत्यभिज्ञानान्मुनित्रयनमस्कारस्य विघ्नविघातकत्वमस्त्येवेति । **उभादुदात्तो नित्यम्** । इह 'चितः' इत्यनेनैवान्तोदात्तत्वं सिद्धं, सर्वोदात्तत्वं तु 'अनुदात्तं पदमेकवर्ज'मिति वचनाद्बाधितम् । न च हे उभयेति संबुद्ध्यन्ते आमन्त्रितायुदात्तत्वं बाधितुं वचनमिति शङ्क्यं, पुरस्तादपवादन्येन चित्स्वरस्यैव बाध्यता, न त्वामन्त्रितायुदात्तत्वस्येति सुवचत्वात् । तस्मादुदात्तवचनसामर्थ्यादादेरेवायम् । प्रयुज्यते च तथा—'उभयं शृणवच्च न' इति । तदेतत्सकलमभिप्रेत्याह—**स चेति** । **तदस्मिन्** । पुनस्तद्ग्रहणम् 'अस्ये'ति षष्ठ्यन्तसंबद्धतद्ग्रहणनिरासार्थः प्रत्ययविधौ तदन्तविध्यभावादाह—**दशान्तादिति** । अन्तग्रहणं किम् ? । दश अधिका अस्मिन्शते । न

बा.]रित्यनेन द्वित्वस्य च ज्ञातत्वात्, ज्ञाते च प्रश्नाऽसम्भवात् । का सङ्ख्या एषामिति तु प्रश्नः सम्भवति, तत्र एषामित्यनेन बहुत्वस्य ज्ञातत्वेऽपि तद्व्याप्यत्रित्वचतुष्ट्वादिसङ्ख्यानामज्ञातत्वात् । उक्तं च भाष्ये—'न द्वयेकयोः प्रश्नोऽस्ती'ति । ततश्च नित्यबहुवचनान्तोऽयं कतिशब्दो 'डति चे'ति षट्संज्ञकत्वात् 'षड्भ्यो लु'गिति जश्शसोर्लुक् । **कियन्त इति** । कियानितिवत्प्रक्रिया । बहुवचने विशेषः । 'सङ्ख्यापरिमाणे' इत्युक्तेः किमः क्षेपार्थकत्वे डतिर्न भवति । **का सङ्ख्या एषां दशानामिति** । 'दशाऽवरा परिष'दित्यत्र ब्राह्मणबुवाणां मेलने इदं वाक्यं प्रवृत्तम् । सङ्ख्येयद्वारा सङ्ख्यायाः कुत्साऽत्र गम्यते, 'अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं न विद्यते ।' इति स्मरणात् । **सङ्ख्यायाः** । तदस्येत्यनुवर्तते । द्वित्र्यादिसङ्ख्याका अवयवा अस्यावयविन इति विग्रहे अवयवीभूतसङ्ख्यावाचिनः प्रथमान्तादस्यावयविन इत्यर्थे तयबित्यर्थः । **पञ्चतयमिति** । पञ्चावयवकः समुदाय इत्यर्थः । **द्वित्रिभ्यां** । द्वित्रिभ्यां परस्य तयपोऽयज्वा स्यादित्यर्थः । **द्वयमिति** । द्विशब्दात्तयपोऽयचि 'यस्येति चे'ति इकारलोपः । द्व्यवयवकसमुदाय इत्यर्थः । एवम् त्रयम् । **उभादुदात्तो नित्यं । स चोदात्त इति** । आद्युदात्त इत्यर्थः । अन्तोदात्तत्वस्य चित्त्वेनैव सिद्धेरिति भाष्ये स्पष्टम् । अत्र 'अयच्प्रत्यय एव विधीयते, न तु तयप आदेशः' इति स्थानिवत्सूत्रभाष्ये स्पष्टम् । 'तयप आदेशः' इति मूलं तु वार्तिकानुरोधेन ।

**इति पाञ्चमिकाः ।**

अथ मत्वर्थीयाः—**तदस्मिन्नधिकं** । तदधिकमस्मिन्निति विग्रहे प्रथमान्ताद्दशन्शब्दान्तात्समासादस्मिन्नित्यर्थे डप्रत्ययः स्यादित्यर्थः । प्रत्ययविधौ तदन्तविधिप्रतिषेधादन्तग्रहम् । अत एव निर्देशात्पञ्चम्यर्थे सप्तमीत्याहुः ।

शे.] रूपेऽस्येत्यर्थे तयबित्यर्थः । अवयवी चाऽत्रानुद्भूतावयवभेदोऽपि समुदायः । तेन 'मुनित्रयं', 'बहुतयं यूथम्', 'उभये देवमनुष्या' इत्यादि सिद्धम् । **द्वित्रिभ्याम्** । नन्वयचश्चित्त्वं व्यर्थं, चित्त्वेऽपि द्व्यादीनामन्तोदात्ततया 'यस्ये'ति लोपे 'अनुदात्तस्य च यत्रे'त्येनेनाद्युदात्तस्यैव प्रयोगे श्रवणादिति चेन्न, प्रत्ययसम्बन्ध्याद्याकारस्येव प्रकृतेरपि शेषनिघातेनाऽनुदात्तत्वात् । **उभादु** । उदात्तग्रहणसामर्थ्यादादिरुदात्तः । अन्तोदात्तत्वस्य चित्त्वेनैव सिद्धेः । सर्वोदात्तत्वन्तु बाधितम्, 'अनुदात्तं पदमेकवर्ज'मित्युक्तेः । न चोभयेत्यत्र सम्बुद्धावामन्त्रिताद्युदात्तं बाधितुमुदात्तग्रहणमिति वाच्यं, येननाप्राप्तिन्यायेन चित्स्वरस्यैव बाध्यत्वात्तस्य च सतिशिष्टत्वेन बलवत्त्वाच्च । 'उभयं शृणवच्च न' इत्यादौ मध्योदात्तप्रयोगाच्च । **तयप इति** । इदं 'तयादेशे प्रतिषेधः' । उभये' इति स्थानिवत्सूत्रस्थवार्तिकानुरोधेन । वस्तुतो नाऽत्राऽऽदेशता, किं तु प्रत्ययान्तरत्वमेव, 'उभयी'त्यत्र ङीप्तु 'टिड्ढे'ति सूत्रे 'मात्रच' इति मात्रशब्दात्प्रभृति अयचश्च कारेण प्रत्याहाराश्रयणादिति तत्प्रत्याख्यानभाष्यात् । अत एवोदात्तग्रहणं सार्थकम् । अन्यथा निरनुबन्धकादेशान्तरमेव कुर्यात् । आदेशत्वेऽपि 'आद्युदात्तश्चे'त्यधिकारेण तस्याद्युदात्ततया लाभात् । तदसम्बन्धेऽपि स्थानिसादृश्येनानुदात्तत्वे उभयस्याऽन्तोदात्ततया 'अनुदात्तस्य च यत्रे'त्यनेनाद्युदात्तत्वसिद्धेः । अयचश्चः समुदायानुबन्धः स्वानुबन्धश्चेत्यन्यत्र विस्तरः ।



**तदस्मिन्** । उपश्लिष्टस्याध्याहारेणौपश्लेषिकेऽधिकरणे सप्तमीति स्पष्टं भाष्ये । 'ग्रहणवते'ति निषेधादन्तग्रहणम् । दशशब्दात्तु न,

माषा अधिका अस्मिन् सुवर्णशते । शदन्तविंशतेश्च ।५।२।४६। डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन् त्रिंशं शतम् । विंशम् । सङ्ख्याया गुणस्य निमाने मयट् ।५।२।४७। भागस्य मूल्ये वर्तमानात्प्रथमान्तात्सङ्ख्यावाचिनः षष्ठ्यर्थे मयट् स्यात् । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम् । गुणस्येति किम् ? । द्वौ व्रीहियवौ निमानमस्योदश्वितः । निमाने किम् ? । द्वौ गुणौ क्षीरस्य एकस्तैलस्य

त.] चेह व्यपदेशिवद्भावेन दशान्तत्वमस्तीति वाच्यं, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्यभ्युपगमात् । शदन्त प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति 'यस्मात्प्रत्ययविधिस्तदादेस्तदन्तस्ये'ति परिभाषया तदादिनियमः स्यात्, तं वारयितुमन्तग्रहणम् । तेन 'एकत्रिंशं शतम्' 'एकचत्वारिंश'मित्यादि सिद्धम् । नचैवं गोत्रिंशदधिका अस्मिन् गोशते इत्यादावतिप्रसङ्गः शङ्क्यः, 'सङ्ख्याया अवयवे तय'बित्यतः सङ्ख्याग्रहणानुवृत्तेः । अन्तग्रहणमिह विंशति-शब्दानन्तरं कर्तव्यं 'षड्विंशत्यन्ताच्चे'ति । तेन 'एकविंशं शत'मित्यादि सिध्यति । अन्यथा 'ग्रहणवते'ति तदन्त-विधिप्रतिषेधादिह न स्यात् । सङ्ख्याया गुणस्य । गुणो—भागः । निमीयते = क्रीयतेऽनेनेति निमानं= मूल्यम् । 'मेङ् प्रणिदाने—इत्यस्मान्निपूर्वात्करणे ल्युट् । तदाह— भागस्य मूल्ये इति । षष्ठ्यर्थे इति । यद्यपि 'तदस्मिन्नधिक'मित्यतः 'त'दित्यनुवृत्तौ प्रथमान्तादित्ययमेवार्थो लभ्यते, तथापि मण्डूकप्लुत्या 'तदस्य संजात'मित्यतः 'तदस्य' इत्यनुवर्तनात् 'षष्ठ्यर्थे' इत्येतदपि लभ्यत इति भावः । द्विमयमिति । द्विशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वात् 'यवाना'मिति पदे सत्यपि तद्धितोत्पत्तिरिहाऽविरुद्धेति ज्ञेयम् । नन्वेवमपि प्रत्ययान्तस्योदश्विच्छब्देन सामानाधिकरण्यं दुर्लभम् । यावतोदश्विद्भागे प्रत्ययो विहितो, नोदश्वितीति । अत्राहुः— भागेऽपि विधीयमानः प्रत्ययोऽभिधानस्वाभाव्याद्भागवन्तमाचष्टे । तेन सामानाधिकरण्यं भवतीति । 'गुणनिमाने' इति वक्तव्ये व्यस्तोच्चारणात् 'एकत्वं गुणस्ये'त्यत्र विवक्षितम् । तेनेह न भवति 'यवानां द्वौ भागौ निमानमेषामुदश्वित्त्रयाणां भागाना'मिति । 'भूयसश्च वाचिकायाः सङ्ख्यायाः प्रत्यय इष्यते' । इह न भवति । एको भागो निमानमस्येति । 'भूयस' इति च प्रत्ययार्थादाधिक्यमात्रं प्रकृत्यर्थस्य विवक्षितं, न तु बहुत्वम् । तेन द्विशब्दादपि भवत्येव । तस्य पूरणे । 'तस्ये'ति षष्ठ्यन्तानुकरणम् । एकत्वं त्वविवक्षितम् । एकस्य पूरणाऽसम्भवात् । पूर्यतेऽनेनेति पूरणः । ण्यन्तात्करणे ल्युट् । एकादशानामिति । उद्भूतावयवभेदः समुदायः प्रकृत्यर्थः । अवयवः प्रत्ययार्थः । इह यस्मात्सङ्ख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे

बा.] 'औपश्लेषिकेऽधिकरणे सप्तमी'ति भाष्यम् । 'सामीपिकमधिकरण'मिति कैयटः । एकादश माषा अधिका अस्मिन्निति । अस्मादित्यर्थः । अस्मिन् उपश्लिष्टा इति वा । न च व्यपदेशिवत्त्वेन केवलदशन्शब्दादपि स्यादिति शङ्क्यं, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्युक्तेः । शदन्तविंशतेश्च । शेषपूरणेन सूत्रं व्याचष्टे—डः स्यादुक्तेऽर्थे इति । दशान्तत्वाऽभावात्पूर्वेणाऽप्राप्तिः । त्रिंशं शतमिति । डे सति 'टे'रिति टिलोपः । विंशमिति । विंशतिरस्मिन्नधिका इति विग्रहः । 'ति विंशते'रिति तिशब्दस्य लोपः । अन्तग्रहणादेकत्रिंशं शतमिति सिद्धम् । अन्यथा प्रत्ययग्रहणपरिभाषया तदादिनियमः स्यात् । 'विंशतावप्यन्तग्रहण'मिति वार्तिकादेकविंशं शतमित्यादि सिद्धम् । सङ्ख्याया गुणस्य । 'तदस्ये'त्यनुवर्तते । गुणः=भागः, अंशः । निमीयते क्रीयतेऽनेनेति निमानं=मूल्यद्रव्यम् । 'मेङ् प्रणिदाने' । करणे ल्युट् । तदाह—भागस्य मूल्य इत्यादि । षष्ठ्यर्थे इति । अस्येत्यर्थे इत्यर्थः । 'यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्ये'ति विग्रहवाक्यम् । द्वाभ्यां यवप्रस्थाभ्याम् एक उदश्वित्प्रस्थः क्रीयते यत्र तत्रेदं वाक्यं प्रयुज्यते । 'द्विमयमुदश्विद्यवाना'मित्युदाहरणम् । 'यवाना'मिति संबन्धसामान्ये षष्ठी । यवप्रस्थद्वयेन क्रेतव्यमुदश्विदित्यर्थः । द्विशब्दस्य भागवृत्तेर्नित्यसापेक्षत्वेऽपि प्रत्ययः । द्वौ व्रीहियवौ निमानमस्योदश्वित इति । द्वित्वसङ्ख्याविशिष्टौ व्रीहियवराशी यौ तौ अस्य उदश्वितो निमानमित्यर्थः । अत्र उदश्विद्यावत् तदपेक्षया व्रीहियवराश्योर्द्विगुणत्वं न विवक्षितं,

शे.] व्यपदेशिवद्भावस्य प्रातिपदिकग्रहणेऽभावात् । समानजातीयत्वे इति । इतिकरणलभ्योऽयमर्थः । शदन्त । तदस्मिन्नधिक-मिति, ड इति च वर्त्तते । 'सङ्ख्याया अवयवे' इत्यतः सङ्ख्याग्रहणञ्च वर्तते । तेन गोत्रिंशदधिका अस्मिन् शते इत्यादिषु न । अन्त-ग्रहणादेकत्रिंशं शतमित्यादि सिद्धम् । विंशतावप्यन्तग्रहणं कर्तव्यम्, एकविंशं शतमित्यादिसिद्धये । सङ्ख्याया गुणस्य निमाने । गुणोऽत्र समानभागः । निमीयते=क्रीयतेऽनेनेति निमानं=मूल्यम् । तदस्येति मण्डूकप्लुत्याऽनुवर्तते, तदाह—प्रथमान्तात्षष्ठ्यर्थे इति । 'गुणस्ये'ति मध्यमणिन्यायेनोभयान्वयि । गुणकर्मकनिमाने वर्तमानाद्गुणगतसङ्ख्यावाचकान्मयडित्यर्थः । निमाननिमेययोर्भागरूपत्वे, निमेयसङ्ख्यापेक्षया निमानसङ्ख्याया आधिक्ये च निमेयस्यैकत्वे एव चायं प्रत्यय इति भाष्ये स्पष्टम् । तेनैको यवभागो निमानमस्योदश्विद्भागस्येत्यत्र, त्रयो यवानां भागा निमानमनयोरुदश्विद्भागयोरित्यत्र च न । द्विमयमिति । द्विशब्दस्य भागवृत्तेर्नित्यसापेक्षत्वाद्यवानामित्येतत्सापेक्षत्वेऽपि प्रत्ययः । उदश्विद्भागस्याप्युदश्वित्त्वाद्द्विमयमुदश्विदित्युक्तम् ।

द्विगुणं तैलं पच्यते क्षीरेण । तस्य पूरणे डट् ।५।२।४८। एकादशानां पूरण एकादशः । **नान्तादसङ्ख्यादेर्मट्** ।५।२।४९। डटो मडागमः स्यात् । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् ? । विंशः । असंख्यादेः किम् ? । एकादशः । **षट्कतिकतिपयचतुरां थुक्** ।५।२।५१। एषां थुगागमः स्याड्डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्याऽसंख्यात्वेऽप्यतएव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः । * **चतुरश्छयतावाद्यक्षरलोपश्च** । तुरीयः । तुर्यः । **बहुपूगगणसङ्घस्य तिथुक्** ।५।२।५२। डटीत्येव । पूगसङ्घयोरसङ्ख्यात्वेऽप्यतएव डट् । बहुतिथ इत्यादि । **वतोरिथुक्** ।५।२।५३। डटीत्येव । यावतिथः । **द्वेस्तीयः** ।५।२।५४। डटोऽपवादः । द्वयोः पूरणो द्वितीयः । **त्रेः संप्रसारणं च** ।५।२।५५। तृतीयः । **विंशत्यादिभ्यस्तमडन्यतरस्याम्**

त.] प्रत्ययः । यथा 'अतिशायने', 'याप्ये' इत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिकं गृह्यते,अन्तरङ्गत्वात्, तथेहापि । तेन 'एकादशानां घटानां पूरणो जलादि'रित्यत्र नातिप्रसङ्गशङ्कालेशोऽपीति भावः । ननु यदि प्रवृत्तिनिमित्तस्य पूरणे प्रत्ययः, तर्ह्यत्र एकादशत्वस्य पूरण इति विग्रहो वक्तुं युक्त इति चेत् । अत्राहुः—'वैयाकरणपाशः' इत्यत्र यथा 'याप्यो वैयाकरणः' इति विग्रहः, न तु 'याप्यं वैयाकरणत्व'मिति, तथेहापि बोध्यमिति । एवं च व्युत्क्रमेणाध्यायेषु गम्यमानेषु 'वृद्धिरादै'जित्यध्यायो यदा चरमं गण्यते तदा सोऽप्यष्टमो भवत्येव । **नान्तादसङ्ख्यादेः । डट इति** । 'डट्' इति प्रथमान्तस्यानुवृत्तस्य 'नान्ता'दिति पञ्चम्या षष्ठी कल्प्यत इति भावः । यद्यपीह मटः प्रत्ययत्वेऽपि न क्षतिः, तथाप्युत्तरत्र तमट आगमत्वमेवाभ्युपगन्तव्यम्, अनुदात्तता यथा स्यात् । प्रत्ययत्वे ह्याद्युदात्तः स्यात् । तया चैकरूप्येणैव संदर्भव्याख्यानमुचितम् । अन्येत्वाहुः— मटः प्रत्ययत्वे अकारसहितो मकारो विधेयः, आगमत्वे तु मकारमात्रमिति लाघवमस्तीति । **विंश इति** । विंशतेः पूरणः । 'ति विंशतेर्डिति' इति लोपः । **षट्कति** । इह षष्ठीनिर्देशबलात् षडादीनामागमित्वं स्पष्टमिति तदानुकूल्येनानुवृत्तो डट् सप्तम्या विपरिणम्यते । तदाह—**डटीति** । डट एव थुट् तु न कृतः, षष्ठो षकारस्य जश्त्वप्रसङ्गात् ।' चतुर्थे रेफस्य विसर्गप्रसङ्गाच्च । न चैवं 'नान्ता'दिति सूत्रेऽपि डति परे मुगेव विधीयतामिति वाच्यं, पञ्चमः सप्तम इत्यादौ नलोपाऽभावापत्तेः । **चतुरश्छयतावीति** । विशेषविहिताभ्यामपि छयद्भ्यां डट्प्रत्ययो न बाध्यते, थुग्विधानसामर्थ्यात् । तेन 'चतुर्थ' इति सिद्धम् । **आद्यक्षरेति** । अच्सहितं व्यञ्जनमक्षरशब्देनोच्यते, अच्सहितस्यादेर्व्यञ्जनस्येत्यर्थः । 'व्यञ्जनसहितस्यादेरच' इति व्याख्याने तु द्विर्वचनन्यायेन तकारस्यापि लोपः स्यादिति हरदत्तः । 'आदेर्व्यञ्जनस्ये'ति व्याख्याने प्रमाणं तु-'द्वितीयतृतीये'ति सूत्रे 'तुर्याणी'ति निर्देशो बोध्यः ।

**द्वेस्तीयः । डटोऽपवाद इति** । डट आदेशस्तु न भवति, टिति 'टिड्ढे'ति ङीपः प्रसक्त्या 'द्वितीयाश्रिते'ति

बा.] किंतु राशिद्वित्वमेव विवक्षितमिति द्विशब्दस्य भागवृत्तित्वाऽभावान्न प्रत्ययः । **तस्य पूरणे** । सङ्ख्याया इत्यनुवर्तते । सङ्ख्येयार्थकसङ्ख्यावाचिनः षष्ठ्यन्तात्प्रवृत्तिनिमित्तसङ्ख्यायाः पूरणे वाच्ये डट्प्रत्ययः स्यादित्यर्थः । पूर्यते अनेनेति **पूरणः**=अवयवः, स प्रत्ययार्थः । **एकादश इति** । एकादशत्वसङ्ख्यायाः पूरकोऽवयव इत्यर्थः । यस्मिन्ननुपात्ते एकादशत्वसङ्ख्या न सम्पद्यते, यस्मिन्नुपात्ते तु सा पूर्यते, सोऽवयवः । एकदेश इति यावत् । प्रवृत्तिनिमित्तेति किम् ?। पञ्चाना घटानां पूरणं जलादि । **नान्तासङ्ख्यादेर्मट् । डटो मडागमः स्यादिति** । शेषपूरणमिदम् । डटि टकार इत् । अकार उच्चारणार्थः । **पञ्चम इति** । पञ्चन्शब्दाड्डटि तस्य मडागमे सति नलोपः । यद्यपि मटः प्रत्ययत्वेऽपि न रूपभेदः, तथापि स्वरविशेषार्थं मडागमाश्रयणमिति भाष्ये स्पष्टम् । **षट्कति** । थुकि ककार इत् । उकार उच्चारणार्थः । कित्वादन्त्यादचः परः । **षष्ठ इति** । अपदान्तत्वात्षस्य न जश्त्वम् । **चतुर्थ इति** । अपदान्तत्वाच्च रेफस्य विसर्गः । **चतुर इति** । वार्तिकमिदम् । चतुर्शब्दात्षष्ठ्यन्तात्पूरणे छयतौ स्तः । **आद्यक्षरस्य लोपश्चेति** । 'च' इति सङ्घातस्य लोपश्चेत्यर्थः । **बहुपूगगण** । बहु, पूग, गण, सङ्घ एषां डटि तिथुगागमः स्यादित्यर्थः । ककार इत् । उकार उच्चारणार्थः । कित्वादन्त्यादचः परः । **इत्यादीति** । पूगतिथः गणतिथः, सङ्घतिथः । **वतोरिथुक् । डटीत्येवेति** । वतुबन्तस्य इथुगागमः स्याड्डटीत्यर्थः । **यावतिथ इति** । यावतां पूरण इति विग्रहः । 'बहुगणे'ति सङ्ख्यात्वात् 'तस्य पूरणे' इति डटि प्रकृतेरिथुक् । **द्वेस्तीयः** । द्विशब्दा-

सङ्ख्याया इति किम् ? । यवमागो निमानमस्योदश्विङ्गस्य । तस्य पू । 'सङ्ख्याया' इति वर्तते । सङ्ख्यावाचिनो ग्रहणम् । प्रवृत्तिनिमित्तसङ्ख्यापूरणे चायम् । वार्क्षी शाखेतिवदवयवः प्रत्ययार्थः । **नान्ताद** । मुक् तु न कृतः, 'पञ्चमः' इत्यादौ नलोपानापत्तेः । 'ड'डित्यनुवृत्तस्य नान्तादितिपञ्चम्या षष्ठी कल्प्यते इत्याशयेनाह—**डट इति** । **छयताविति** । विशेषविहिताभ्यामप्याभ्यां चतुरो डट् न बाध्यते, थुग्विधानसामर्थ्यात् । **डटोऽपवाद इति** । प्रत्ययाधिकारेण प्रत्ययत्वस्य

**स्याम्** ।५।२।५६। एभ्यो डटस्तमडागमो वा स्यात् । विंशतितमः । विंशः । एकविंशतितमः । एकविंशः । **नित्यं शतादिमासार्धमाससंवत्सराच्च** ।५।२।५७। शतस्य पूरणः शततमः । एकशततमः । मासादेरत एव डट् । मासतमः । **षष्ट्यादेश्चाऽसङ्ख्यादेः** ।५।२।५८। षष्टितमः । सङ्ख्यादेस्तु 'विंशत्यादिभ्य' इति विकल्प एव । एकषष्टः । एकषष्टितमः । **मतौ छः सूक्तसाम्नोः** ।५।२।५९। मत्वर्थे छः स्यात् ।

**त.]** निर्देशानुपपत्तेः । अतएव निर्देशाद्द्विशब्दस्याप्यादेशो न भवति । **तृतीय इति** । रेफस्य ऋकारः संप्रसारणम् । 'हलः' इति दीर्घस्तु न भवति, 'ढ्लोपे' इति सूत्रादण इत्यनुवृत्तेः 'त्रेस्तृ च' इति नोक्तं, प्रत्ययो मा विज्ञायीति । **विंशत्यादिभ्यः** । इह प्रत्यासत्त्या 'पङ्क्ति'त्यादिसूत्रे निपातिता विंशत्यादयो गृह्यन्ते, न लोकप्रसिद्धाः, विप्रकृष्टत्वादिति भाष्यमतम् । वृत्तिकृता तु 'विंशत्यादयो लौकिका एव सङ्ख्याशब्दा गृह्यन्ते, न पङ्क्त्यादिसूत्रनिर्दिष्टाः, तद्ग्रहणे ह्येकविंशतिप्रभृतिभ्यो न स्यात्, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । एवं च सति 'षष्ट्यादेश्चाऽसङ्ख्यादे'रिति पर्युदासो युज्यत एवेत्युक्तम् । **एकविंशतितम इति** । यद्यपि भाष्यमते तदन्तविधिर्दुर्लभस्तथापि 'षष्ट्यादेश्चे'ति सूत्रे सङ्ख्यादिपर्युदासो ज्ञापयति—'इह प्रकरणे तदन्तानामपि ग्रहण'मिति । एवं च सति एकान्नविंशतेः पूरण एकान्नविंशतितम इत्यपि सिध्यति । 'लौकिकानां ग्रहण'मिति वृत्तिमते तु नैतत्सिध्येत् । विंशतिसंख्यातः प्रागभावित्वादस्याः संख्यायाः । एतच्च कैयटहरदत्तग्रन्थयोः स्पष्टम् । ननु 'अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु' इति वदता कात्यायनेन पङ्क्त्यादिसूत्रस्य प्रत्याख्याततत्वात्'तत्सूत्रे निपातिता विंशत्यादयो गृह्यन्ते' इति भाष्यमतमयुक्तमिति चेदत्राहुः—यद्यपि प्रत्याख्यातं तथापीहार्थमावश्यकं तत् । अतएव तत्र भाष्यकृता 'नाऽसूया कर्तव्या यत्रानुगमः क्रियते' इत्युक्तम् । अतः कात्यायनोक्तप्रत्याख्यानं नादर्तव्यमिति । **शततम इति** । यद्यपीदं 'षष्ट्यादेश्चे'त्युत्तरसूत्रेणैव सिध्यति, तथापि संख्यार्थं 'नित्यं शतादी'त्यावश्यकमिति ध्वनयन्नुदाहरति—**एकशततम इति** । **मासादेरिति** । संख्यावाचित्वाऽभावेऽपीति भावः । **षष्ट्यादेश्चेति** । 'विंशत्यादिभ्यः' इति विकल्पे प्राप्ते नित्यार्थोऽयमारम्भः । **सङ्ख्यादेस्त्विति** । एतच्च प्राक्यवाताद्बोध्यम्, 'नित्यं शतादी'त्युक्तत्वात् । **मतौ छः** । **मत्वर्थ इति** । मतोर्विषय इत्यर्थः । तेन 'त'दिति प्रथमा समर्थविभक्तिः, 'अस्याऽस्मि'न्निति प्रत्ययार्थश्चेह लभ्यते ।

**बा.]** त्वषष्ठ्यन्तात्पूरणे तीयप्रत्ययः स्यादित्यर्थः । **त्रेः संप्रसारणं च** । त्रेस्तीयः स्यात्प्रकृतेः सम्प्रसारणं चेत्यर्थः । **तृतीय इति** । त्रयाणां पूरण इति विग्रहः । तीयप्रत्यये सति रेफस्य सम्प्रसारणमृकारः । 'सम्प्रसारणाच्चे'ति पूर्वरूपम् । 'हलः' इति दीर्घस्तु न भवति, 'ढ्लोपे' इत्यतोऽण इत्यनुवृत्तेः । **विंशत्यादिभ्यः** । तमटि टकार इत् । मकारादकार उच्चारणार्थः । अत्र 'पङ्क्तिविंशती'ति सूत्रानुक्रान्ता एव विंशत्यादयो गृह्यन्ते नतु लोकप्रसिद्धा एकविंशत्यादयोऽपि, विप्रकर्षादिति कैयटः । 'एकविंशतितम' इत्यत्र तु तदन्तविधिना तमडित्यग्रे वक्ष्यते । **नित्यं शतादि** । शतादिभ्यो मासात् अर्धमासात्संवत्सराच्च परस्य डटो नित्यं तमडागमः स्यादित्यर्थः । ननु 'षष्ट्यादेश्चे'त्युत्तरसूत्रेण शततमः सिध्यतीत्यत आह—**एकशततम इति** । 'असङ्ख्यादे'रिति पर्युदासादुत्तरसूत्रस्य नात्र प्रवृत्तिरिति भावः । ननु मासार्धमाससंवत्सरशब्दानां सङ्ख्यावाचित्वाऽभावात्तेभ्यो डट एवाऽप्रसक्तेस्तस्य कथं तमड्विधिरित्यत आह—**मासादेरिति** । **मासतम इति** । मासस्य पूरणः—अर्धमासादिरवयवः । **अर्धमासतम इति** । अर्धमासस्य पूरणस्तिथ्यादिरवयवः । **संवत्सरतम इति** । संवत्सरस्य पूरणो मासादिरवयवः । **षष्ट्यादेश्चासङ्ख्यादेः** । सङ्ख्यापूर्वपदात्षष्ट्यादेः परस्य डटो नित्यं तमडागमः स्यादित्यर्थः । 'विंशत्यादिभ्यः' इति विकल्पस्याऽपवादः । **एकषष्टः एकषष्टितम इति** । सङ्ख्यादित्वान्नित्यस्य तमटोऽभावे 'विंशत्यादिभ्यः' इति डटस्तमड्विकल्पः । तमडभावे डटि 'यस्येति चे'ति इकारलोपे 'एकषष्ट' इति रूपम् । ननु केवलात्षष्ट्यादेर्विहितस्य नित्यतमटः सङ्ख्यादेः कथं प्रसक्तिः, तमडागमविधेरप्रत्ययविधित्वेऽपि 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'ति निषेधादिति चेत्, मैवम्—असङ्ख्यादेरिति हि इह प्रकरणे ग्रहणवता प्रातिपदिकेन तदन्तविधिं ज्ञापयति । तेन 'विंशत्यादिभ्यः' इति पूर्वसूत्रमेकविंशतितम इत्यादावपि प्रवर्तत इति भाष्ये स्पष्टम् । एवंच 'एकान्नविंशतितमः' इत्यपि सिद्धम् । **मतौ छः** । 'मतु'शब्दो मत्वर्थे लाक्षणिक इत्याह **मत्वर्थे इति** । **अच्छा-**

**शे.]** न्याय्यत्वात् । सहायवाची द्वितीयशब्दस्त्वव्युत्पन्नं प्रातिपदिकम् । अनेन तु नास्य साधुत्वम् । 'न ह्यपूरणस्तीयशब्दोऽस्ती'ति 'पूरणाद्भागे' इति सूत्रस्थभाष्याऽसङ्गतेः । तत्रत्यपूरणग्रहणन्तु प्रागेकादशभ्य इत्युत्तरार्थमिति भाष्ये स्पष्टम् । **विंशत्यादिभ्यस्त** । अत्र विंशत्यादयः 'पङ्क्तिविंशती'ति सूत्रस्थाः । उत्तरसूत्रे सङ्ख्यादेरिति त्विह प्रकरणे तदन्तविधिज्ञापकम् । तेनैकान्नविंशतितम एकविंशतितम इत्यादि सिद्धम् । ज्ञापकेन च प्रत्ययविधिविषयता बोध्यते ग्रहणवतेत्यादेः । अयमागमविधिरिति 'षष्ट्यादे'रिति सूत्रे भाष्ये स्पष्टम् । **मतौ छः** । अस्यवामीय मित्यादौ प्रकृतिवदित्यस्याऽनित्यत्वान्ङसादेर्न लुक् । 'अस्यवामस्ये'ति वेदे पठ्यते ।

अच्छावाकशब्दोऽस्मिन्नस्ति अच्छावाकीयं सूक्तम्। वारवन्तीयं साम। **अध्यायानुवाकयोर्लुक्** ।५।२।६०। मत्वर्थस्य छस्य! अतएव ज्ञापकात्तत्र छः। विधानसामर्थ्याच्च विकल्पेन लुक्। गर्दभाण्डः। गर्दभाण्डीयः। **विमुक्तादिभ्योऽण्** ।५।२।६१। मत्वर्थेऽण् स्यादध्यायानुवाकयोः। विमुक्तः शब्दोऽस्मिन्नस्ति वैमुक्तः। दैवासुरः। **गोषदादिभ्यो वुन्** ।५।२।६२। मत्वर्थेऽध्यायानुवाकयोः। गोषदकः। इषेत्वकः। **तत्र कुशलः पथः** ।५।२।६३। वुन् स्यात्। पथि कुशलः पथकः। **आकर्षादिभ्यः कन्** ।५।२।६४। आकर्षे कुशल आकर्षकः। 'आकषादिभ्य' इति रेफरहितो मुख्यः पाठः। आकषो-निकषोपलः। **धनहिरण्यात्कामे** ।५।२।६५। काम इच्छा। धने कामो धनको देवदत्तस्य। हिरण्यकः। **स्वाङ्गेभ्यः प्रसिते** ।५।२।६६। केशेषु प्रसितः केशकः। तद्रचनायां तत्पर इत्यर्थः। **उदराट्ठगाद्यूने** ।५।२।६७। अविजिगीषौ ठक् स्यात्। कनोऽपवादः। बुभुक्षयाऽत्यन्तपीडित उदरे प्रसित औदरिकः। आद्यूने किम्? । उदरकः। उदरपरिमार्जनादौ प्रसक्त इत्यर्थः। **सस्येन परिजातः** ।५।२।६८। कन् स्वर्यते नतु ठक्। सस्यशब्दो गुणवाची नतु धान्यवाची।

---

**त.]विधानसामर्थ्यादिति**। मतुप्प्रकरण एवास्मिन् सूत्रे कर्तव्ये यदत्रास्य लुग्विधानं तत्पाक्षिकं लुकमनुमापयतीति कैयटः। **तत्र कुशलः**। सप्तमीसमर्थात्पथिन्शब्दात्कुशल इत्यर्थे वुन्स्यात्। **आकर्षादिभ्यः कन्**। वुना सिद्धे कन्ग्रहणं इदुदन्तार्थम्। शकुनिकः। अशनिकः। त्सरुकः। **मुख्यः पाठ इति**। "आकषन्त्यस्मिन् सुवर्णादिकमित्याकषः। 'पुंसि संज्ञायां घः' इति व्याख्याय, ये तु 'आकर्षादिभ्यः' इति सरेफं पठन्ति, तेषाम् 'आकर्ष' इति घञि रूपम्'—इति हरदत्तेनोक्तत्वादिति भावः। **धने काम इति**। 'तत्रे'त्यनुवर्तनात्सप्तम्यन्तात्प्रत्यय इति भावः। **उदरात्**। आद्यूनशब्दार्थमाह—**अविजिगीषाविति**। 'दिवोऽविजिगीषाया'मिति तत्रैव निष्ठानत्वविधानात्।

---

**बा.]वाकीयं सूक्तमिति**। अच्छावाकशब्दोऽस्यास्ति, अस्मिन्नस्तीति वा विग्रहः। अच्छावाकशब्दयुक्तमित्यर्थः। अच्छावाकशब्दाच्छब्दस्वरूपपरात् प्रथमान्ताच्छः। **वारवन्तीयं सामेति**। 'अश्वं नत्वा वारवन्त'मित्यस्यामृच्यध्यूढमित्यर्थः। एवमस्यवामीयमित्यपि। 'अस्यवामस्ये'त्यस्य एकदेशानुकरणमस्यवामेति। तस्माच्छः। अस्यवामशब्दसंयुक्तमित्यर्थः। 'प्रकृतिवदनुकरण'मित्यस्याऽनित्यत्वात्सुपो न लुक्। **अध्यायानुवाकयोर्लुक्**। नन्वध्यायानुवाकयोरभिधेयत्वे छस्य कथं प्राप्तिः, सूक्तसाम्नोरिति नियमादित्यत आह-**अत एवेति**। **विधानेति**। मतुप्प्रकरण एवास्मिन्सूत्रे कर्तव्ये अत्र प्रकरणे छस्य लुग्विधानसामर्थ्यादिति कैयटः। ज्ञापकसिद्धविधानसामर्थ्यादित्यन्ये। भाष्ये तु 'अध्यायानुवाकयोर्वा लुग्वक्तव्यः' इति वचनमेवारब्धम्। **गर्दभाण्डः गर्दभाण्डीय इति**। गर्दभाण्डशब्दसंयुक्तोऽध्यायोऽनुवाको वेत्यर्थः। भाष्योदाहरणादेव क्वचिदेतन्नामकोऽध्यायोऽनुवाको वाऽन्वेष्यः। **विमुक्तादिभ्योऽण्**। **वैमुक्त इति**। विमुक्तशब्दयुक्तोऽध्यायोऽनुवाको वेत्यर्थः। **गोषदादिभ्यो वुन्**। **गोषदक इति**। गोषदशब्दसंयुक्तोऽध्यायोऽनुवाको वेत्यर्थः। **इषेत्वक इति**। 'इषेत्वे'ति शब्दयुक्त इत्यर्थः। 'अस्यवामीय'मित्यत्रोक्तरीत्या सुपो न लुक्। **तत्र कुशलः पथः**। **वुन्स्यादिति**। सप्तम्यन्तात्पथिन्शब्दात्कुशल इत्यर्थे वुनित्यर्थः। **पथक इति**। अकादेशे 'नस्तद्धिते' इति टिलोपः। **आकर्षादिभ्यः कन्**। **आकर्षक इति**। यद्यपि वुनैवाऽनुवृत्तेनेदं सिध्यति तथापि 'शकुनिक' इत्याद्यर्थं कन्ग्रहणम्। **धनहिरण्यात्कामे**। तत्रेत्यनुवर्तते। धनशब्दाद्धिरण्यशब्दाच्च सप्तम्यन्तात्कामे वाच्ये कन्स्यादित्यर्थः। **काम इच्छेति**। नतु कामयिता, व्याख्यानादिति भावः। **स्वाङ्गेभ्यः प्रसिते**। तत्रेत्यनुवर्तते। स्वाङ्गेभ्यः सप्तम्यन्तेभ्यः प्रसितेऽर्थे कन्स्यादित्यर्थः। **प्रसितः**—उत्सुकः। **तद्रचनायामिति**। वेण्यादिग्रथने इत्यर्थः। अत्रैवार्थेऽस्य साधुत्वम्, व्याख्यानादिति भावः। **उदराट्ठगाद्यूने**। तत्र प्रसित इत्यनुवर्तते। सप्तम्यन्तादुदरशब्दादाद्यूने प्रसितेऽर्थे ठगित्यर्थ इत्यभिप्रेत्य आद्यूनशब्दं विवृण्वन्नाह—**अविजिगीषाविति**। 'दिवोऽविजिगाषाया'मित्यविजिगाषायामेव दिवो निष्ठानत्वविधानादिति भावः। **बुभुक्षयेति**। क्षुधा पीडित एवं सन् उदरपरिमार्जने प्रसितो नतु मल्लवद्युद्धे विजिगीषयेत्यर्थः। **उदरक इति**। 'मल्ल' इति शेषः। स हि युद्धे विजिगीषया उदरपरिमार्जनादौ उत्सुको भवति। तदाह—**उदरपरिमार्जनादौ प्रसक्त इति**। 'विजिगीषये'ति शेषः। **सस्येन परिजातः**। तृतीयान्तात्सस्यशब्दात्परिजात इत्यर्थे कन्स्यादित्यर्थः। सन्निहितष्ठगेव कुतो नानुवर्तत इत्यत आह—**कन्स्वर्यते नतु ठगिति**। स्वरितत्व-

---

**शे.]**तत्र द्वितीयविभक्तिप्राग्भागानुकरणादनुकार्येणाऽर्थवतः प्रत्यय इति बोद्धव्यम्। **विधानसामर्थ्यादिति**। ज्ञापकसिद्धविधानसामर्थ्यादित्यर्थः। भाष्ये 'वा लु'गिति वचनमेवारब्धम्। विमुक्तादयः शब्दपरा गणे निर्दिष्टाः। गोशब्दादयोऽप्येवम्। 'मतौ च्छ' इत्यारम्भैतदन्ता अनुकरणशब्दादेव प्रत्ययाः साधवः। **काम इच्छेति**। न तु कामयिता, अनभिधानात्। तत्रेत्यनुवर्तते, तदाह—धने काम इति। **तद्रचनायामिति** ... अत्रैवार्थे [illegible] अस्य साधुत्वं, स्वभावात्। **उदरा**। तत्र प्रसित इति

'शस्येने'ति पाठान्तरम् । सस्येन गुणेन परिजातः संबद्धः सस्यकः साधुः । अंशं हारी ।५।२।६९। हारी'त्यावश्यके णिनिः । अतएव तद्योगे षष्ठी न । अंशको दायादः । तन्त्रादचिरापहृते ।५।२।७०। तन्त्रकः पटः । प्रत्यग्र इत्यर्थः । ब्राह्मणकोष्णिके संज्ञायाम् ।५।२।७१। आयुधजीविनो ब्राह्मणा यस्मिन्देशे स ब्राह्मणकः । अल्पमन्नं यस्यां सा—उष्णिका यवागूः । अन्नशब्दस्य उष्णादेशो निपात्यते । शीतोष्णाभ्यां कारिणि ।५।२।७२। शीतं करोतीति शीतकोऽलसः । उष्णं करोतीति—उष्णकः शीघ्रकारी । अधिकम् ।५।२।७३। अध्यारूढशब्दात्कन्, उत्तरपदलोपश्च । अनुकाऽभिकाऽभीकः कमिता ।५।२।७४। अन्वभिभ्यां कन् । अभेः पाक्षिको दीर्घश्च । अनुकामयते अनुकः । अभिकामयते अभिकः । अभीकः । पार्श्वेनान्विच्छति ।५।२।७५। अनृजुरुपायः पार्श्वं, तेनाऽन्विच्छति पार्श्वकः । अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ।५।२।७६।

---

त.] सस्येन । कर्मकर्तरि तृतीयेयम् । परितो जातः--परिजातः । फलितमाह—संबद्ध इति । अतएवेति । 'अकेनो'रिति निषेधादिति भावः । तन्त्रात् । तन्यन्ते तन्तवोऽस्मिन्निति व्युत्पत्त्या तन्त्रं=तन्तुवायशलाका । अचिरःकालोऽपहृतस्येत्यचिरापहृतस्तस्मिन् । 'कालाः परिमाणिने'ति समासः । प्रत्यग्र इति । नूतन इत्यर्थः । ब्राह्मणकोष्णिके । ब्राह्मणशब्दादायुधजीवित्वोपाधिकात्प्रथमान्तात्सप्तम्यर्थे कन् प्रत्ययो निपात्यते, अन्नशब्दात्तु अल्पत्वोपाधिकात् । तदाह—आयुधेत्यादि । शीतोष्णाभ्याम् । शीतमिव शीतम् । मन्दमित्यर्थः । शीते सति कार्यकरणे पाटवाऽभावात् । उष्णमिवोष्णम् । शीघ्रमित्यर्थः । क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां प्रत्ययः । कृद्योगलक्षणा षष्ठी तु क्रियाविशेषणान्नेत्युक्तम् । मुख्यार्थवृत्तिभ्यां तु प्रत्ययो न भवति, अनभिधानात् । अधिकम् । अध्यारूढशब्दादिति । 'गत्यार्थाकर्मके'त्यादिना रुहेः कर्तरि कर्मणि वा क्तो विहितः । आद्ये क्तप्रत्ययेन कर्मणोऽनभिहितत्वादध्यारूढशब्दयोगे द्वितीया । 'अध्यारूढो द्रोणः खारी'मिति, 'ग्रामं गत' इतिवत् । तथा अधिकशब्देनापि योगे द्वितीयायां प्राप्तायां 'यस्मादधिकं', 'तदस्मिन्नधिक'मिति च निर्देशद्वयात्पञ्चमीसप्तम्यौ भवतः । 'अधिको द्रोणः खार्याः । 'अधिको द्रोणः खार्या'मिति । द्वितीये तु क्तेन कर्मणोऽभिहितत्वात्प्रथमा । 'अधिका खारी द्रोणेन' । कर्मणोऽभिहितत्वादेव पञ्चमीसप्तम्याविह न शङ्कनीये । अनुका । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । सूत्रत्वाल्लिङ्गव्यत्यय इति फलितोऽर्थः । अन्वभिभ्यां कन्निति । क्रियाविशिष्टसाधनवाचिभ्यां स्वार्थे निपात्यत इत्यर्थः । पार्श्वेनान्विच्छति । 'आकर्षादिभ्यः कन्नि'त्यतः कननुवर्तते । अनृजुरिति । तिर्यगवस्थानात्पार्श्वमनृजु, तत्साधर्म्यादुपायोऽपि । इह शीतोष्णपार्श्वाऽयःशूलदण्डाजिनशब्दा गौणा एव गृह्यन्ते । मुख्यार्थेभ्यस्तु प्रत्ययो न भवति, अन-

---

बा.] प्रतिज्ञायां तु पाणिनीयपरम्परैव प्रमाणम् । गुणवाचीति । व्याख्यानमेवात्र शरणम् । शस्येनेतीति । 'शंसु स्तुतौ' इति धातोः कर्मणि यति शस्यशब्दः स्तुत्यपर्यायः । स्तुत्यश्च गुण एवेति भावः । परिजात इत्यस्य विवरणं—संबद्ध इति । अंशं हारी । द्वितीयान्तादंशशब्दाद्धारीत्यर्थे कन्स्यादित्यर्थः । ननु कृद्योगषष्ठीप्रसङ्गादंशमिति कथं द्वितीयेत्यत आह—आवश्यके णिनिरिति । 'आवश्यकाधमर्ण्ययो'रित्यनेने'ति शेषः । षष्ठी नेति । 'अकेनो'रिति तन्निषेधादिति भावः । तन्त्रादचिरापहृते । तन्त्रशब्दात्पञ्चम्यन्तादचिरापहृतेऽर्थे कनित्यर्थः । तन्त्रं—तन्तुवायशलाका । अचिरेण कालेन अपहृतः—अचिरापहृतः । 'कालाः परिमाणिने'ति समासः । प्रत्यग्र इति । नूतन इत्यर्थः । ब्राह्मणकोष्णिके । आयुधजीविविषयब्राह्मणशब्दात्प्रथमान्तादस्मिन्नित्यर्थे कन्निपात्यत इत्यर्थः । अल्पान्नशब्दस्येति । अल्पान्नशब्दात्प्रथमान्तादस्मिन्नित्यर्थे कन्प्रत्ययः, प्रकृतेरुष्णादेशश्च निपात्यत इत्यर्थः । शीतोष्णाभ्यां । शीतमिव शीतं । मन्दमित्यर्थः । उष्णमिव उष्णम् । शीघ्रमित्यर्थः । आभ्यां क्रियाविशेषणाभ्यां द्वितीयान्ताभ्यां कन्स्यादित्यर्थः । य आशु कर्तव्यानर्थांश्चिरेण करोति स शीतक उच्यते, यस्तु अनाशु कर्तव्यानाश्वेव करोति स उष्णक उच्यत इति भाष्ये । संज्ञायामित्यनुवृत्तेरयमर्थो लभ्यत इति कैयटः । तदाह—शीतकोऽलस इति । उष्णकः शीघ्रकारीति च । अधिकम् । अध्यारूढशब्दादिति । व्युत्पादनमात्रमिदम् । शुद्धरूढ एवायमिति बोध्यम् । अनुकाभिका । अनुक, अभिक, अभीक—एषां समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । पार्श्वेनाऽन्विच्छति । तृतीयान्तात्पार्श्वशब्दादन्विच्छतीत्यर्थे संज्ञायां कन्स्यादित्यर्थः । अन्वेषणं=मार्गणम् । पार्श्वमिव पार्श्वम्=अनृजुरुपायः । 'ऋजूपायेन अन्वेष्टव्यानर्थान्योऽनृजुनोपायेनान्विच्छति स पार्श्वक' इति भाष्यम् । तदाह—अनृजुरित्यादि । अयःशूल । अयःशूल, दण्डाजिन आभ्यां तृतीयान्ताभ्यामन्विच्छतीत्यर्थे संज्ञायां ठक्ठञौ स्त इत्यर्थः । अयःशूलमिव अयःशूलम् । साहसमित्यर्थः । यो मृदुनोपायेनान्विष्टव्यानर्था-

---

शे.] च वर्तते, यः प्रसितः स चेदविजिगीषुरित्यर्थः । उदरको—मल्लः । शीतोष्णाभ्याम् । सञ्ज्ञायामित्यनुवर्तते इत्याशयेनाह—अलस इत्यादि । अध्यारूढशब्दादिति—व्युत्पादनमात्रं, शुद्धरूढस्त्वयमिति बोध्यम् । अनृजुरिति । सञ्ज्ञाधिकारा-

तीक्ष्ण उपायोऽयःशूलं, तेनान्विच्छति आयःशूलिकः—साहसिकः । दण्डाजिनं=दम्भः, तेनान्विच्छति दाण्डाजिनिकः । **तावतिथं ग्रहणमिति लुग्वा** ।५।२।७७। [पूरणप्रत्ययान्तात्] कन् स्यात्पूरणप्रत्ययस्य च लुग्वा । द्वितीयकं द्विकं वा ग्रहणं देवदत्तस्य । द्वितीयेन रूपेण ग्रहणमित्यर्थः । ***तावतिथेन गृह्णातीति कन्वक्तव्यो नित्यं च लुक्** । षष्ठेन रूपेण गृह्णाति षट्को देवदत्तः । पञ्चकः । **स एषां ग्रामणीः** ।५।२।७८। देवदत्तो मुख्यो येषां ते देवदत्तकाः । त्वत्काः । मत्काः । **शृङ्खलमस्य बन्धनं करभे** ।५।२।७९। शृङ्खलकः करभः । **उत्क उन्मनाः** ।५।२।८०। उद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन् । उत्कः उत्कण्ठितः । **कालप्रयोजनाद्रोगे** ।५।२।८१। कालवचनात्प्रयोजनवचनाच्च कन् स्याद्रोगे । द्वितीयेऽहनि भवो द्वितीयको

---

त.]भिधानात् । **तावतिथं ग्रहणमिति लुग्वा** । तावतां पूरणं- तावतिथम् । 'वतोरिथुक्' । यथा 'तस्यापत्य'मित्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथाऽत्र 'तावतिथ'मिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः । अनन्तरावपि ठकठञौ नानुवर्तेते, अस्वरितत्वादित्यभिप्रेत्याह—**कन्स्यादिति** । **पूरणप्रत्ययस्येति** । ननु कनो लुक्, वाग्रहणानर्थक्यप्रसङ्गात् । पञ्चमं पञ्चमकमित्यादिरूपं हि तेन साध्यम् । तच्च महाविभाषाधिकाराद्विकल्पेन कन उत्पत्त्यापि सिद्धमेव । तस्मात्पूरणप्रत्ययस्यैव लुक्सूत्रकारस्याऽभिमत इति व्याचष्टे—**द्विकमिति** । वार्तिककारस्तु कन एव लुगिति व्याख्यामभिप्रेत्य 'तावतिथं ग्रहणमिति लुग्वा वचनानर्थक्यं, विभाषाग्रहणा'दित्याह । तन्मते द्वितीयकं द्वितीयमित्येव रूपं न तु द्विकमिति बोध्यम् । **तावतिथेनेति** । पूरणप्रत्ययान्ताद्ग्रहणोपाधिकात् स्वार्थे विधीयमानो ग्रहीतरि न प्राप्नोतीति वचनमिति कैयटः । **स एषां ग्रामणीः** । 'ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः । **करभ इति** । उष्ट्रबालकः । **द्वितीयेऽहनीति** । यद्यपि द्वितीयशब्दः कालवाची न भवति, तथाप्य-

---

बा.] स्तीक्ष्णोपायेनान्विच्छति स आयःशूलिक' इति भाष्यम् । तदाह—**तीक्ष्णोपाय इत्यादि** । **दम्भ इति** । दम्भार्थत्वाद्दण्डाजिनशब्दो दम्भे लाक्षणिक इति भावः । **तावतिथं** । तावतां पूरणं तावतिथमिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः । तृतीयार्थे प्रथमा । 'ग्रहण'मिति भावे ल्युडन्तम् । तथा च तृतीयान्तात्पूरणप्रत्ययान्ताद्ग्रहणमित्यर्थे कन्स्यात्पूरणप्रत्ययस्य च लुग्वेत्यर्थ इत्यभिप्रेत्याह—**कन्स्यादित्यादि** । पूरणप्रत्ययान्तस्य तु प्रकृतिभूतस्य न लुक्, किंतु पूरणप्रत्ययमात्रस्य, षष्ठेन गृह्णाति षट्क इति भाष्योदाहरणात् । **द्वितीयेन रूपेणेति** । अनेन तृतीयैव समर्थविभक्तिरिति सूचितम् । इतिना लोकानुसारित्वं गम्यते । एवं च ग्रन्थविषयकमेव ग्रहणमिह फलति । तेन 'द्वितीयं ग्रहणं देवदत्तेन दण्डस्ये'त्यादौ न भवति । **तावतिथेनेति** । ग्रहणेऽर्थे विहितं ग्रहीतरि न प्राप्नोतीत्यारम्भः । **षट्को देवदत्त इति** । भाष्ये एवमेवोदाहृतत्वात्पूरणप्रत्ययस्यैव लुगिति गम्यते, ननु तदन्तस्य । **स एषां ग्रामणीः** । ग्रामणीविशेषवाचकाच्छब्दात्प्रथमान्तादस्येत्यर्थे कन्स्यादित्यर्थः । **देवदत्तो मुख्य एषामिति** । एतेन ग्रामणीशब्दो मुख्यपर्याय इति सूचितम् । 'ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः । **त्वत्काः मत्का इति** । त्वमहं वा मुख्य एषामिति विग्रहः । 'प्रत्ययोत्तरपदयोश्चे'ति त्वमौ । **शृङ्खलमस्य** । करभ इति षष्ठ्यर्थे सप्तमी । 'बन्धन'मिति करणे ल्युट् । अस्य करभस्य शृङ्खलं बन्धनमिति विग्रहे बन्धनविशेषणाच्छृङ्खलशब्दात्प्रथमान्तादस्य करभस्येत्यर्थे कन्स्यादित्यर्थः । **शृङ्खलक इति** । शृङ्खलेन बद्ध इति यावत् । **करभः**=बाल उष्ट्रः । **उत्क उन्मनाः** ।**उद्गतमनस्कवृत्तेरिति** । उत्कण्ठितवृत्तेरित्यर्थः । **कालप्रयोजनाद्रोगे** । काल, प्रयोजन—अनयोः समाहारद्वन्द्वः । तदाह—**कालवचनात्प्रयोजनवचनाच्चेति** । 'यथोचितविभक्त्यन्ता'दिति शेषः । कालशब्देनाऽत्र कालवृत्तिःपूरणप्रत्ययान्तो द्वितीयादिशब्द एव

---

शे.]दीदृशेऽर्थे एव साधुत्वं बोध्यम् । **दम्भ इति** । दम्भसाधनत्वात् । दाम्भिका हि प्रायेण दण्डाजिनं धारयन्ति । **तावतिथम्** । ग्रहणमिति भावे ल्युट् । तच्च प्रत्ययार्थः । 'तावतिथ'मिति पूरणप्रत्ययान्तोपलक्षणम् । तृतीयार्थे प्रथमा । तृतीयान्ताद्ग्रहणमित्यर्थे प्रत्ययः, 'तावतिथेन गृह्णातीत्युपसङ्ख्यान'मिति वार्तिके तृतीयाया एव समर्थविभक्तित्वस्य क्लृप्तत्वात् । तद्ध्वनयन्व्याख्यति—**द्वितीयेन रूपेणेति** । **पूरणप्रत्ययस्येति** । 'षष्ठेन गृह्णाति षट्क' इति भाष्योदाहरणे तल्लुक एव दर्शनादिति भावः । **द्विकं वाग्रहणमिति** । ग्रहीतर्यपि प्रत्ययविधानेनाऽसन्देहाय 'ग्रहण'मित्युक्तम् । **द्वितीयेन रूपेणेति** । द्वितीयया गुरुकृतया शब्दावृत्त्येत्यर्थः । **इति**लौकिकविवक्षार्थः । तेन ग्रन्थविषये ग्रहणे एव । तेन 'द्वितीयं ग्रहणं देवदत्तेन दण्डस्ये'त्यादौ न । एवञ्च ग्रन्थरूपकर्मणः प्रत्ययेनोक्तत्वात् 'उभयप्राप्तौ' इत्यस्याऽप्राप्तेर्ग्रहणपदघटिते उदाहरणे देवदत्तस्येति षष्ठी कर्तरि निर्बाधा । **नित्यं लुगिति** । 'तावतिथेन गृह्णातीति उपसङ्ख्यानं कर्तव्यं लुक्च वक्तव्यः' इति वार्तिकपाठादिति भावः । **षष्ठेनेति** । पञ्चभी रूपैरसौ न गृह्णाति, किं तु षष्ठेनेत्यर्थः । **शृङ्खलमस्य** । 'शृङ्खल'मिति भाष्ये क्वचित्पाठः । काष्ठमयं पादकं यत्पादे न्यतिषज्यते तच्छृङ्खलमिति कैयटः । **कालप्रयो** । कालबोधकः पूरणप्रत्ययान्त एव । ततः सप्तम्यन्ताद्भावे प्रत्ययः । करणवाचकात्तृती-

ज्वरः । प्रयोजनं—कारणं, रोगस्य फलं वा । विषपुष्पैर्जनितो विषपुष्पकः । उष्णं कार्यमस्य उष्णकः । रोगे किम् ? । द्वितीयो दिवसोऽस्य । **तदस्मिन्नन्नं प्राये संज्ञायाम्** ।५।२।८२। प्रथमान्तात्सप्तम्यर्थे कन् स्यात् यत्प्रथमान्तमन्नं चेत्प्रायविषयं तत् । गुडाऽपूपाः प्रायेणाऽन्नमस्यां गुडापूपिका पौर्णमासी । ***वटकेभ्य इनिर्वाच्यः** । वटकिनी । **कुल्माषादञ्** ।५।२।८३। कुल्माषाः प्रायेणाऽन्नमस्यां कौल्माषी । **श्रोत्रियंश्छन्दोऽधीते** ।५।२।८४। श्रोत्रियः । वेत्यनुवृत्तेश्छान्दसः । **श्राद्धमनेन भुक्तमिनिठनौ** ।५।२।८५। श्राद्धी । श्राद्धिकः । **पूर्वादिनिः** ।५।२।८६। पूर्वं कृतमनेन पूर्वी । **सपूर्वाच्च** ।५।२।८७। कृतपूर्वी । **इष्टादिभ्यश्च** ।५।२।८८। इष्टमनेन इष्टी । अधीती । **छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि**

**त.**]र्थप्रकरणादिना वृत्तिविषये कालेवर्तत इति भावः । ननु साक्षात्कालवाचिभ्यो मासादिभ्यो न भवति, द्वितीयादिभ्यस्तु भवतीत्यत्र किं मानमिति चेदत्राहुः—उत्तरसूत्रस्थसंज्ञापकर्षणाच्छब्दस्वाभाव्याद्वा तद्बोध्यमिति । **वटकेभ्य इति** । कनि प्राप्ते वचनम् । ननु संज्ञाग्रहणात्कन्न भविष्यतीति चेत् । किं ततः ? । इनेरप्राप्तत्वात्तदर्थं वचनमावश्यकमेव । 'अत इनिठनौ' इत्येव कथंचिदिनिः सिध्यतीत्याशाऽत्र न कार्या, 'सप्तम्यां च न तौ स्मृतौ' इति वचनात् । **श्रोत्रियन्** । यश्छन्दोऽधीते सः श्रोत्रियो भवति । अत्र भाष्ये 'छन्दोऽधीते इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यते' इति वाक्यार्थे पदवचनपक्षः । 'छन्दसो वा श्रोत्रभावो निपात्यते, तदधीत इत्येतस्मिन्नर्थे, घञ प्रत्ययः' इति पक्षान्तरं च स्थितम् । व्याख्यातं च कैयटेन 'वाक्यार्थस्य=संबन्धरूपस्य क्रियारूपस्य वाऽसत्त्वरूपत्वात्, श्रोत्रियशब्दस्य च सत्त्वरूपार्थाभिधायित्वाद्वाक्यार्थग्रहणेन तदाश्रयश्छन्दोऽध्यायी अभिधीयत इति । 'एकां शाखामधीत्य श्रोत्रियो भवती'ति धर्मशास्त्रम् । **वेत्यनुवृत्तेरिति** । 'तावतिथं ग्रहणमिति लुग्वे'त्यतः । **श्राद्धमनेन** । श्रद्धाऽस्मिन्नस्तीति श्राद्धम् । 'प्रज्ञाश्रद्धाऽर्चाभ्यो णः' । यद्यपि पित्र्यं कर्म श्राद्धशब्देनोच्यते, तथापीह तत्साधनद्रव्यमुच्यते, मुख्यश्राद्धस्य भोक्तुमशक्यत्वात् । **श्राद्धी** । **श्राद्धिक इति** । अद्यतन एवेष्यते, अद्य भुक्ते श्वः श्राद्धिक इति मा भूत् । **पूर्वादिनिः** । पूर्वमिति क्रियाविशेषणाद्द्वितीयान्तात्प्रत्ययः । 'अनेने'ति कर्तृवाचकमनुवर्तते । न च क्रियामन्तरेण कर्ता संभवतीति कांचित्क्रियामध्याहृत्य प्रत्ययो विधेयस्तदाह—**पूर्वं कृतमनेनेति** । **सपूर्वाच्च** । 'अनेने'ति, पूर्वसूत्रं चानुवर्तते । विद्यमानपूर्वकात्पूर्वशब्दादनेनेत्यस्मिन्नर्थे इनिः स्यात् । 'पूर्वान्ताच्चे'त्येतत्फलितम् । **कृतपूर्वीति** । कृतपूर्वशब्दयोः 'सुप्सुपा' इति समासः । इह प्रातिपदिकाधिकारात् 'पूर्वादिनि'रित्यनेनैव पूर्वशब्दान्तप्रातिपदिकात्कृतपूर्वशब्दादिनौ सिद्धे 'सपूर्वाच्चे'त्येतत् 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्ने'ति परिभाषां ज्ञापयति । 'कृतपूर्वी'त्येतत्सिद्धये 'पूर्वान्ताच्चे'ति स्वीकृते तेनैव व्यपदेशिवद्भावेन पूर्वीत्यपि रूपे सिद्धे 'पूर्वादिनिः'

**बा.**]गृह्यते, न तु मासादिशब्दः, व्याख्यानात् । तदाह—**द्वितीयेऽहनीति** । प्रयुज्यतेऽनेनेति करणे ल्युटि 'प्रयोजनं' साधनम् । कर्मणि ल्युटि तु फलम् । तदाह—**प्रयोजनं कारणं रोगस्य फलं वेति** । **तदस्मिन्नन्नं** । प्रथमान्तादन्नवाचकादस्मिन्नित्यर्थे कन् स्यादन्नस्य बाहुल्ये गम्ये संज्ञायामित्यर्थः । **वटकेभ्य इति** । संज्ञायामित्येव । **वटकिनीति** । वटकाः प्रायेण अन्नमस्यां पौर्णमास्यामिति विग्रहः । **कुल्माषादञ्** । कनोऽपवादः । 'स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः' इत्यमरः । **श्रोत्रियंश्छन्दोऽधीते** । द्वितीयान्ताच्छन्दश्शब्दादधीते इत्यर्थे घन्, प्रकृतेः श्रोत्रादेशश्च निपात्यते । अध्येत्रणोऽपवादः । **वेत्यवृत्तेरिति** । 'तावतिथ'मितिं सूत्रान्मण्डूकप्लुत्ये'ति शेषः । ततश्च घनभावे अध्येत्रणिति भावः । वाग्रहणानुवृत्तौ तु घना अध्येत्रणो बाधः स्यादिति बोध्यम् । **श्राद्धमनेन** । प्रथमान्ताच्छ्राद्धशब्दाद्भुक्तमनेनेत्यर्थे इनिठनौ [ एतौ ] स्त इत्यर्थः । श्राद्धसाधनद्रव्ये श्राद्धशब्दो लाक्षणिकः । इनिप्रत्यये नकारादिकार उच्चारणार्थः । **पूर्वादिनिः** । अनेनेति कर्तृतृतीयान्तमनुवर्तते । कां क्रियां प्रति कर्तेत्याकाङ्क्षायां भुक्तं पीतमित्यादि यत्किंचित्क्रियापदमध्याहार्यम् । उपस्थितत्वात् कृञर्थभूतं क्रियासामान्यमेव प्रतीयते । ततश्च पूर्वं कृतमनेनेति विग्रहे कृतमित्यादिक्रियाविशेषणात्पूर्वशब्दादनेनेत्यर्थे इनिः स्यादित्यर्थः । **सपूर्वाच्च** । विद्यमानपूर्वादपि पूर्वशब्दादुक्तविषये इनिः स्यादित्यर्थः । पूर्वान्तादिति यावत् । प्रातिपदिकविशेषणत्वेऽपि प्रत्ययविधौ तदन्तविधिप्रतिषेधादप्राप्ते सूत्रमिदम् । **कृतपूर्वी कटमिति** । अत्र यद्वक्तव्यं तत्कर्तृकर्मणोः कृतीत्य-

**शे.**]यान्ताज्जनित इत्यर्थे, फलबोधकात्प्रथमान्तादस्य कार्यमित्यर्थे, अभिधानस्वाभाव्यात् । **तदस्मिन्नन्नम्** । अन्नमत्राऽभ्यवहार्यम् । **वटकेभ्य इति** । सञ्ज्ञायामित्येव । **वेत्यनुवृत्तेरिति** । 'तावतिथ'मिति सूत्रान्मण्डूकप्लुत्येति भावः । अन्यथा घना बाधादण्न स्यात् । **इदं वृत्त्यनुरोधेन** । सूत्रेऽधीत इत्यस्याऽध्ययनपूर्वकन्तदनुष्ठानमर्थः । तेनाध्येतृमात्रेऽप्रसिद्ध इत्यन्ये । **श्राद्धीति** । श्राद्धशब्दात्तत्साधनद्रव्यवृत्तेः प्रत्ययः । **पूर्वादिनिः** । अनेनेति कर्तृबोधकमनुवर्तते तस्य क्रियाकाङ्क्षायामन्तरङ्गत्वात्करोतिक्रिया एव गृह्यते । **सपूर्वाद्' इत्यस्य** विद्यमानपूर्वात्पूर्वशब्दादित्यर्थः । कृतपूर्वयोः सुप्सुपेति समासः । **छन्दसि**

।५।२।८९। लोके तु परिपन्थिशब्दो न न्याय्यः । **अनुपद्यन्वेष्टा** ।५।२।९०। अनुपदमन्वेष्टा अनुपदी गवाम् । **साक्षाद्द्रष्टरि संज्ञायाम्** ।५।२।९१। साक्षाद्द्रष्टा साक्षी । **क्षेत्रियच् परक्षेत्रे चिकित्स्यः** ।५।२।९२। क्षेत्रियो व्याधिः । शरीरान्तरे-चिकित्स्यः । अप्रतिकार्य इत्यर्थः । **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** ।५।२।९३। इन्द्रः=आत्मा, तस्य लिङ्गम् । करणेन कर्तुरनुमानात् । इतिशब्दः प्रकारार्थः । इन्द्रेण दुर्जयमिन्द्रियम् । **तदस्यास्त्यस्मिन्निति मतुप्** ।५।२।९४। गावोऽस्याऽस्मिन्वा

---

त.]इत्येतत् 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति परिभाषां ज्ञापयति । **छन्दसि** । पर्यवस्थातृशब्दाच्छत्रुपर्यायात्स्वार्थे इनिप्रत्ययः, अवस्थातृशब्दस्य च 'पन्थ' 'पर' एतावादेशौ निपात्येते । 'अपत्यं परिपन्थिनम्', 'मा त्वा परि परिणो विदन्' । उभयत्रापि परिशब्देऽवग्रहः । **लोके त्विति** । 'अनुपस्थितपरिपन्थिभिः पार्थिवै'रित्यादौ । **अनुपद्यन्वेष्टा** । अन्वेष्टरि इनिः प्रत्ययो निपात्यते । **अनुपदमिति** । पदस्य पश्चात् । पश्चादर्थेऽव्ययीभावः । **अनुपदी गवामिति** । पदापेक्षया षष्ठी गोपदात् । पश्चादन्वेषणं गवामेव । तेन हिरण्याद्यावन्वेष्ये न भवतीति हरदत्तः । **साक्षाद्द्रष्टरि** । द्रष्ट्र्यर्थे इनिः स्यात् । साक्षाच्छब्दोऽव्ययम्, तेन 'प्रकृतिवदनुकरण'मित्यतिदेशादिह सूत्रे पञ्चम्या लुक् । 'उदः स्थास्तम्भोः', 'अवाच्चालम्बने'त्यादौ तु 'प्रकृतिव'दित्यतिदेशस्य वैकल्पिकत्वेनाऽव्ययत्वाऽभावात् पञ्चम्या लुङ् न भवतीति बोध्यम् । **साक्षीति** । 'अव्ययानां भमात्रे' इति टिलोपः । यद्यपि साक्षाद्द्रष्टारस्त्रयो भवन्ति, दाता ग्रहीता उपद्रष्टा च, तथापीह संज्ञाग्रहणात्साक्षिशब्देनोपद्रष्टैवोच्यत इत्याहुः । **क्षेत्रियच्** । 'परक्षेत्रशब्दात्सप्तम्यन्ताद्घच्, परशब्दस्य लोपश्च निपात्यते' इति मनोरमा । अन्ये तु 'परक्षेत्रे चिकित्स्यः' इत्यर्थे 'क्षेत्रियच्' इति निपात्यते । वाक्यार्थे पदवचनं श्रोत्रियवदित्यप्याहुः । एवमन्यत्राप्यूह्यम् । **क्षेत्रियो व्याधिरिति** । किञ्च क्षेत्रियं विषम्, यत्परशरीरे सङ्क्रमय्य चिकित्स्यते । अपि च क्षेत्रियाणि तृणानि । यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि=विनाशयितव्यानि । किं च क्षेत्रियः पारदारिकः । परदाराः—परक्षेत्रम् । तत्र चिकित्स्यो निग्रहीतव्यः । सर्वेऽप्येते पक्षा आकरे स्थिताः । **इन्द्रियमिन्द्र** । इन्द्रशब्दाद्घच् । इन्द्रेण दृष्टं=ज्ञातं-'मम चक्षुः, मम श्रोत्रम्' इत्यादिक्रमेण । सृष्टम्-अदृष्टद्वारा । जुष्टं=प्रीणितं सेवितं वा । दत्तं=यथायथं विषयेभ्यः । रूढिशब्दोऽयं यथाकथञ्चिद्व्युत्पादितः । **तदस्यास्त्यस्मिन्निति मतुप्** । 'त'दिति प्रथमासमर्थात्प्रत्ययः । अस्तीति पुरुषवचने अविवक्षिते,

---

बा.]त्रोक्तम् । **इष्टादिभ्यश्च** । इष्टादिभ्यस्तृतीयान्तेभ्योऽनेनेत्यर्थे इनिः स्यादित्यर्थः । **छन्दसि परिपन्थि** । परिपन्थिन्, परिपरिन् एतौ शब्दौ छन्दसि निपात्येते पर्यवस्थातरि वाच्ये । पर्यवस्थातृशब्दादिनिप्रत्यये अवस्थातृशब्दस्य पन्थादेशे परिपन्थिन्शब्दः । पर्यवस्थातृशब्दादिनिप्रत्यये अवस्थातृशब्दस्य पर इत्यादेशे परिपरिन्शब्दः । 'मा त्वा विदन्परिपन्थिनः, मा वा परिपरिणो विदन्' इति श्रुतौ उदाहरणम् । इदं सूत्रं वैदिकप्रक्रियायामेव व्याख्यातुमुचितम् । **अनुपद्यन्वेष्टा** । पदस्य पश्चादनुपदम् । पश्चादर्थे अव्ययीभावः । सप्तम्या अम्भावः । अनुपदमित्यस्मादन्वेष्टरि अर्थे इनिप्रत्ययो निपात्यते । **साक्षाद्द्रष्टरि** । 'साक्षा'दित्यव्ययम्, इह शब्दस्वरूपपरं लुप्तपञ्चमीकम् । साक्षादित्यव्ययाद्द्रष्ट्र्यर्थे इनिः स्यादित्यर्थः । **साक्षीति** । यः कर्मणि स्वयं न व्याप्रियते, किन्तु कर्म क्रियमाणं पश्यति सोऽयं साक्षीत्युच्यते । साक्षादित्यव्ययादिनिप्रत्ययः । 'अव्ययानां भमात्रे' इति टिलोपः । **क्षेत्रियच्** । परम् अन्यत् क्षेत्रं=शरीरम्-परक्षेत्रम् । चिकित्स्यः=प्रतीकार्यः, 'कितेर्व्याधिप्रतीकारे' इत्युक्तेः । परक्षेत्रशब्दात्सप्तम्यन्ताच्चिकित्स्य इत्यर्थे घच्, परशब्दस्य लोपश्च निपात्यते । **शरीरान्तरे इति** । भाविनि शरीरे चिकित्स्यः, नतु वर्तमाने शरीरे इत्यर्थः । फलितमाह—**अप्रतिकार्य इति** । **इन्द्रियम्** । इन्द्रलिङ्गमित्याद्यर्थेषु इन्द्रियमिति भवति । इन्द्रशब्दाद्यथायोगं षष्ठीतृतीयान्ताल्लिङ्गमित्याद्यर्थेषु घच् निपात्यत इति यावत् । **इन्द्र आत्मेति** । 'स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्रमित्याचक्षते' इति श्रुतेरिति भावः । **तस्य लिङ्गमिति** । आत्मनोऽनुमापकमित्यर्थः । लिङ्गत्वमुपपादयति—**करणेनेति** । 'चक्षुरादीन्द्रियं किञ्चित्कर्त्रधिष्ठितं भवितुमर्हति, करणत्वात्, घटकरणदण्डादिव'दित्यनुमानादित्यर्थः । मम चक्षुरित्येवमिन्द्रेण दृष्टं ज्ञातमिन्द्रियम् । इन्द्रेण सृष्टमिन्द्रियम् । इन्द्रेण जुष्टं सेवितं प्रीणितं वा

---

शे.]परि । छान्दसमपीदमनुवृत्तिसौकर्यायेह व्याख्यातम् । **साक्षाद्द्रष्टरीति** । साक्षाद्द्रष्टेत्यर्थे प्रथमोच्चारितादिनिरित्यर्थः । सञ्ज्ञाग्रहणाच्च न दातृग्रहीत्रोरयं प्रयोगः, किं तु पार्श्वे स्थितः सन्नुदासीनतया यः पश्यति तत्रैव । **इन्द्र आत्मेति** । 'स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिति । तस्मादिदन्द्रो नाम तमिदन्द्रं सन्तमिन्द्र'इत्याचक्षते' इति श्रुतेः । कर्त्रधिष्ठितानामेव करणत्वात्तस्य लिङ्गम्=अनुमापकम् । **तदस्यास्त्य** । 'गोमान्देवदत्त' इत्यादावाधाराधेयभावाऽभावात्षष्ठ्युपादानम् । न च तत्राप्यधिग्रहदत्ते पश्वाल

सन्ति गोमान् । ॐ **भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः । रसादिभ्यश्च** ।५।२।९५। मतुप् । रसवान् । रूपवान् । अन्यमत्वर्थीयनिवृत्त्यर्थं वचनम् । रस, रूप, वर्ण, गन्ध, स्पर्श, शब्द, स्नेह । (ग) गुणात् । (ग.) एकाचः । स्ववान् । गुणग्रहणं रसादीनां विशेषणम् ।

**त.]** कालस्तु विवक्षितः, धने गते भाविनि वा 'धनवानय'मिति प्रतीत्यभावात् । इतिशब्दो विषयविशेषलाभार्थः तथा, हि—'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' । अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः । **भूमा**—बहुत्वम् । तच्चापेक्षिकम् । यस्य हि यावदुचितं तावदेव बहुत्वबोधकबहुशब्देनापि प्रतीयते । तथा पञ्चषाभिरपि गोभिर्देवदत्तस्य 'बह्वयो गाव' इति व्यवहारः । राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति व्यवहारः । गोमान् । यवमान् । यस्य खार्यादिभिः परिच्छिन्ना यवाः सन्ति स एवमुच्यते । ननु सहस्रेणापि यवैर्यवमानिति । कथं तर्हि 'यवमतीभिरद्भिर्यूपं प्रोक्षति'-इति ? । अत्राहुः-जातिमात्रसम्बन्धस्य विवक्षितत्वाद्भूमाऽभावेऽप्यत्र मतुप् । भूमादिग्रहणं तु प्रायेण भूमादयः प्रतीयन्त इत्येवंपरमिति । **निन्दायां**—ककुदावर्तिनी कन्या । **प्रशंसायां**—रूपवान् । **नित्ययोगे**—क्षीरिणो वृक्षाः । **अतिशायने**—उदरिणी कन्या । **संसर्गे**—दण्डी । संसर्गः=संयोगः । तेन संयुक्तदण्ड एवोच्यते, न तु गृहावस्थितदण्डोऽपि । इह दण्डपुरुषयोः संयोगे सत्यपि 'दण्डी पुरुष' इत्यादिवत् 'पुरुषी दण्डः' 'पुरुषवान्दण्डः' इति न प्रयुज्यते, वृत्तिनियामकस्य विलक्षणसम्बन्धस्याऽभावात् । संयोगे समानेऽपि प्रतीतिबलाद्वैलक्षण्यं कल्प्यत इत्याहुः । एवं च यवसंयोगमात्रेण यवमत्य आपो न भवन्ति, किं तु यवमज्जलवच्च पात्रमेवेत्याशयेन 'कथं यवमतीभिरद्भिः' इत्याक्षेपो, 'भूमादिग्रहणं प्रायिक'मित्याद्युत्तरं च सङ्गच्छत एव । **अन्यमत्वर्थीयेति** । कथं तर्हि 'रूपिणी कन्या' 'रसिको नटः' इति ? । अत्राहुः—रसादिगणे '**गुणात्**' इति पठ्यते । तेन गुणवाचिभ्य एवाऽन्यमत्वर्थीयस्य निषेधः, रूपिणीत्यत्र तु रूपशब्देन सौन्दर्यं गृह्यते । तच्च न गुणः । 'रसिक' इत्यत्र तु रसशब्देन भावो गृह्यते, न

**बा.]** इन्द्रियम् । रूढशब्दोऽयं कथञ्चिद्व्युत्पादितः । इन्द्रेण दुर्जयमिन्द्रियमिति साधयितुमाह—**इतिकरणमिति** । इतिशब्द इत्यर्थः । **तदस्यास्त्यस्मिन्निति मतुप्** । तदस्यास्तीति तदस्मिन्नस्तीति विग्रहे अस्तिसमानाधिकरणात्प्रथमान्तादस्य अस्मिन्निति चार्थे मतुप्स्यादित्यर्थः । उपाविती । इतिशब्दो विषयविशेषलाभार्थः । तदाह—**भूमनिन्देति** । श्लोकवार्तिकमिदम् । भूमा=बहुत्वम् । यथा गोमान्, यवमान् । **निन्दायां**-ककुदावर्तिनी कन्या । **प्रशंसायां**—रूपवान् । **नित्ययोगे**—क्षीरिणो वृक्षाः । **अतिशायने**-उदरिणी कन्या । **संसर्गे**-दण्डी । छत्री । वृत्तिनियामकः संसर्गविशेषो विवक्षितः । तेन 'पुरुषी दण्ड' इति नास्ति । **रसादिभ्यश्च । मतुबिति** । शेषपूरणमिदम् । 'उक्तविषये' इति शेषः । पूर्वेणैव सिद्धे किमर्थमिदमित्यत आह-**अन्यमत्वर्थीयेति** । 'अत इनिठनौ' इत्यादिनिवृत्त्यर्थमित्यर्थः । रसादीन्पठति-**रसरूपेत्यादि भावेत्यन्तम्** । **गुणादिति** । **एकाच इति** । गणसूत्रम् । उदाहरति-**स्ववानिति** । **गुणग्रहणमिति** । गुणादित्येतद्रसादीनां षण्णां विशेषणमित्यर्थः । तेन गुणवाचकानामेव एषां ग्रहणाज्जलादिवाचकानां रसादिशब्दानां द्रव्यवाचिनां च गन्धादिशब्दानामिह न ग्रहणमिति भावः । 'रसिको नटः', 'स्पर्शिकं वारि' इत्यादि प्रयोगदर्शनादिदं सूत्रं भाष्ये प्रत्याख्यातम् । ननु विद्यच्छन्दान्मतुपि

**शे.]** इति व[च]त्सम्भवः । अधिशब्दयोगे तथाबुद्धिसत्त्वात्तत्र तादृशबौद्धाधिकरणत्वसत्त्वेऽप्यत्र तत्सत्त्वे मानाऽभावात् । 'गोमान्देश' इत्यादावधिकरणत्वेऽपि सम्बन्धाऽभावेन षष्ठ्यप्राप्त्या सप्तम्युपादानम् । सर्वत्र क्रियाकारकभावमूलकः सम्बन्धो द्रव्यान्वये षष्ठीनियामकः । न चैवमत्र संयोग एवात्राऽऽधारत्वमूलं न तु तन्मूलकः सः । किं च संयोगो न षष्ठीनिमित्तम्, कथञ्चित्संयुक्तयोर्घटयोरन्यतरबोधकात्षष्ठ्यापत्तेः । अत एव भूमादिषु संसर्गपदेन संयोगग्रहणम् । तस्मात्संयोगस्य भूमादिवत्सम्बन्धान्तरे सत्येव प्रतीतिर्न तु षष्ठ्यर्थता । नापि मत्वर्थता । तदुक्तं भाष्ये—'पर्वते वृक्षाः सन्ति, न तु ते तस्य किंचि'दिति । 'लोहितोष्णीषा' इत्यादौ सप्तम्यर्थे एव बहुव्रीहिर्बोध्यः । अत्र षष्ठ्यर्थमत्वर्थीयानात् षष्ठ्यर्थमत्वर्थीयो न, सप्तम्यर्थतदन्तात्सप्तम्यर्थो न । भिन्नवृत्तावपि सरूपः स न । सप्तम्यर्थे च न इनिठनाविनि भाष्ये स्पष्टम् । अत्र शब्दशक्तिस्वभावादेव बहुव्रीहाविव वर्तमानकालाऽस्त्यर्थान्तर्भावो बोध्यः । 'गोमानासी'दित्यादेस्तु तथाव्यवहारविषय आसीदित्यादिरर्थः । अस्तिग्रहणं त्वस्तिशब्दादस्तिसामानाधिकरण्याऽभावेनाऽप्राप्तमतुपो विधानार्थम् । तेनाऽस्तिमानिति सिद्धम् । सत्ताकर्तृधनवानिति तदर्थ इति भाष्ये स्पष्टम् ।

इति शब्दलभ्यर्थमाह—**भूमेत्यादि** । अत्र संसर्गः=संयोगः । स च सम्बन्धान्तरे सत्येव तन्नियामकः । अत एव दण्डीत्यतः संयुक्तदण्डस्यैव तत्स्वामिनः प्रतीतिः । येऽस्तिविवक्षायां मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वाक्यार्थः । एवं बहुव्रीहिरपि यथायथं भूमादिषु बोध्यः 'मत्वर्थे बहुव्रीहि'रिति वार्तिकात् । **रसादीनां विशेषणमिति** । तेन गुणवाचकानामेवैषां ग्रहणमिति जलादिवाचिरसादीनां द्रव्यवचनगन्धादीनाञ्च नेति भावः । एन्य इनिठनावपीष्येते इतीदं व्यर्थमिति भाष्ये स्पष्टम् ।

**तसौ मत्वर्थे** ।१।४।१९। तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे। 'वसोः संप्रसारणम्' । विदुष्मान् । ॐ **गुणवचनेभ्यो मतुपो लुगिष्टः** । शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः । **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** ।८।२।९। मवर्णाऽवर्णान्तान्मवर्णाऽवर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः स्यात् । किंवान् । ज्ञानवान् । विद्यावान् । लक्ष्मीवान् । यशस्वान् । भास्वान् । यवादेस्तु—यवमान् । भूमिमान् । **झयः** ।८।२।१०। झयन्तान्मतोर्मस्य वः स्यात् । अपदान्तत्वान्न जश्त्वम् । विद्युत्वान् । **संज्ञायाम्** ।८।२।११। मतोर्मस्य वः स्यात् । अहीवती । मुनीवती । 'शरादीनां चे'ति दीर्घः । **आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती** ।८।२।१२। एते षट् संज्ञायां निपात्यन्ते । आसनशब्दस्याऽऽसन्दीभावः । आसन्दीवान् ग्रामः । अन्यत्र आसनवान् । अस्थिशब्दस्याऽष्ठीभावः । अष्ठीवान् [ नाम ऋषिः ] । अस्थिमानन्यत्र । चक्रशब्दस्य चक्रीभावः । चक्रीवान्नाम राजा । चक्रवानन्यत्र । कक्ष्यायाः संप्रसारणम् । कक्षीवान्नाम ऋषिः । कक्ष्यावानन्यत्र । लवणशब्दस्य रुमण्भावः । रुमण्वान्नाम पर्वतः । लवणवानन्यत्र । चर्मणो नलोपाऽभावो णत्वं च । चर्मण्वती नाम नदी । चर्मवत्यन्यत्र । **उदन्वानुदधौ च** ।८।२।१३। उदकस्य उदन्भावो मतौ

---

त.]तु रसनाग्राह्यो गुण इति । **गुणवचनेभ्य इति** । गुणे तद्वति च प्रसिद्धा ये शुक्लादयस्त एव गृह्यन्ते न तु रूपादयोऽपि । तेन रूपं वस्त्रमित्यादिप्रयोगो न भवति । **मादुपधायाः** । म्च अश्च मं । समाहारे द्वन्द्वः । तेन मतुप्प्रत्ययाक्षिप्तं प्रातिपदिकं विशेष्यते । तदाह—**मवर्णावर्णान्तादिति** । 'उपधायाश्चे'ति वाक्यान्तरम् । उपधाभूतान्मात्परस्य मतोरित्यर्थः । 'येन नाव्यवधान'न्यायेनाऽन्त्याऽव्यवहितेऽपि भवतीति । एवमक्षरार्थे स्थिते फलितमाह—**मवर्णावर्णोपधादिति** । **झयः** । इदमपि मतुबाक्षिप्तस्य प्रातिपदिकस्य विशेषणम् । तदाह—**झयन्तादिति** । **विद्युत्वानिति** । एतेन 'वह्निमद्वा'निति नैयायिकप्रयोगो निरस्तः । उक्तरीत्या जश्त्वस्या-

---

बा.]यजादिस्वादिपरकत्वाऽभावेन भत्वाऽभावात् 'वसोः संप्रसारण'मिति कथं संप्रसारणमित्यत आह—**तसौ मत्वर्थे** । मत्वर्थप्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वात्तदन्तविधिमभिप्रेत्याह—**तान्तसान्ताविति** । तकारसकारान्तावित्यर्थः । **गुणवचनेभ्य इति** । वार्तिकमिदम्, गुणे गुणवति च ये प्रसिद्धाः शुक्लादिशब्दास्त एव गृह्यन्ते, नतु रूपादिशब्दा अपि । तेन 'रूपं वस्त्र'मित्यादि न भवति । अत्र यद्वक्तव्यं तदध्वरमीमांसाकौतूहले अरुणाधिकरणे प्रपञ्चितमस्माभिः । **मादुपधायाश्च** । मात् उपधायाश्चेति च्छेदः । मादित्यावर्तते । म् च अश्चेति समाहारद्वन्द्वात्पञ्चम्येकवचनम् । मतुप्प्रत्ययाक्षिप्तप्रातिपदिकविशेषणत्वात्तदन्तविधिः । मवर्णान्तादवर्णान्तात्प्रातिपदिकात्परस्य मतोर्मस्य वः स्यादित्येकोऽर्थः । मादित्युपधाविशेषणम् । मकारात्मिका अकारात्मिका च या उपधा ततः परस्य मतोर्मस्य वः स्यादित्यन्योऽर्थः । फलितमाह—**मवर्णेत्यादिना** । मान्तादुदाहरति—**किंवानिति** । किमस्यास्मिन्वाऽस्तीति विग्रहः । एवमग्रेऽपि । अकारान्तादुदाहरति—**ज्ञानवानिति** । अत्र तपरकरणाऽभावादाकारस्यापि ग्रहणमिति मत्वाह—**विद्यावानिति** । मोपधादुदाहरति—**लक्ष्मीवानिति** । अदुपधादुदाहरति—**यशस्वानिति** । 'तसौ मत्वर्थे' इति भत्वान्न रुत्वम् । आकारोपधादुदाहरति—**भास्वानिति** । अथ 'विद्युत्वा'नित्यत्र मकाराऽकारान्तत्वाऽभावान्मकाराऽकारोपधत्वाऽभावाच्च मादुपधाया इति वत्वाऽप्राप्तावाह—**झयः** । **अपदान्तत्वादिति** । तसौ मत्वर्थे' इति भत्वेन पदत्वबाधादिति भावः । **संज्ञायाम्** । 'अहीवती'त्यादि नदीविशेषस्य, नगरीविशेषस्य वा संज्ञा । **शरादित्वादिति** । 'शरादीनां चे'ति दीर्घ इत्यर्थः । **आसन्दीवत्** । समाहारद्वन्द्वे ह्रस्वत्वम् । **निपात्यन्त इति** । आसन्दीभावादिकमेवात्र निपात्यते, वत्वं तु संज्ञायामिति सिद्धम् । **कक्ष्यायाः सम्प्रसारणमिति** । 'निपात्यते' इति शेषः । 'न सम्प्रसारणे' इति सूत्रभाष्ये तु 'कक्ष्यायाः संज्ञायां मतौ सम्प्रसारणं वक्तव्य'मित्यारब्धम् । अतोऽत्र सूत्रे कक्षीवच्छब्दपाठोऽनार्ष इत्याहुः । **उदन्वानुदधौ च** । **उदधौ संज्ञायां चेति** । वस्तुतस्तु उदन्वांश्चेत्येव

---

शे.]**गुणवचनेभ्य इति** । गुणगुणिबोधकेभ्यः शुक्लादिभ्य इत्यर्थः । 'शुक्लः पट'इत्यादि गुणगुणिनोरभेदव्यवहारेऽपि 'पटस्य शुक्ल' इति भेदव्यवहारस्यापि सत्त्वेन प्राप्तमतुपोऽश्रवणार्थमिदम् । अतएव गुणिनि विशेष्यलिङ्गता सिद्धा । तत्रापि रूढत्वे तु सर्वलिङ्गता नियतलिङ्गता वा प्रसज्येतेति भाष्यकैयटयोः स्पष्टम् । अयश्च लुक् द्रव्यवाचकसमभिव्याहारे एव । एतदेव ध्वनितं भाष्यानुक्तमपि 'इष्ट' इति वदता । तादृशस्थले एवेष्ट इति तदर्थः । ध्वनितश्चेदं 'पूरणगुणे'ति सूत्रे भाष्ये । गुणगुणिनोरभेदस्यापि सत्त्वादिदं वचनं भाष्ये प्रत्याख्यातम् । 'गुणिलिङ्गास्तु तद्वती'ति कोशस्य मतुब्लुकाऽभेदेन वा तद्वति वर्तमाना इत्यर्थः । भेदेऽपि मतुपोऽनभिधानम् । गुणवाचिनामेषां पुंस्त्वमेव, गुणिनि विशेष्यलिङ्गतेति त्वभिधानस्वाभाव्यात् । **मादुपधायाः** । विधीयमानत्वेन सवर्णाऽग्राहकत्वान्मस्य नानुनासिको वकारः । **आसन्दीवदष्ठीव** । अत्र सूत्रे कक्षीवच्छब्दपाठोऽनार्ष इति 'न सम्प्रसारणे' इति सूत्रस्थभाष्यस्वरसः । तत्र हि 'कक्ष्यायाः संज्ञायां मतौ सम्प्रसारणं वक्तव्य'मिति वचनमारब्धं, वत्वन्तु 'संज्ञाया'मिति

उदधौ संज्ञायां च । उदन्वान् समुद्रः ऋषिश्च । राजन्वान् सौराज्ये ।८।२।१४। राजन्वती भूः । 'राजवानन्यत्र । प्राणिस्थादातो लजन्यतरस्याम् ।५।२।९६। चूडालः । चूडावान् । प्राणिस्थात्किम् ? । शिखावान्दीपः । आतः किम् ? । हस्तवान् । प्राण्यङ्गादेव । नेह—मेधावान् । प्रत्ययस्वरेणैव सिद्धेऽन्तोदात्तत्वे 'चूडालोऽसी'त्यादौ 'स्वरितो वानुदात्ते पदादौ' इति स्वरितबाधनार्थश्चकारः । सिध्मादिभ्यश्च ।५।२।९७। लज्वा स्यात् । सिध्मलः । सिध्मवान् । अन्यतरस्याङ्ग्रहणं मतुप्समुच्चयार्थं, नतु प्रत्ययविकल्पार्थम् । तेनाऽकारान्तेभ्य इनिठनौ न । (वा) वातदन्तबलललाटानामूङ् च । वातूलः । वत्सांसाभ्यां कामबले

त.]ऽप्रवृत्तेः । मत्वन्तान्मतुपो निषेधाच्च । ननु गोधुग्वान् मधुलिण्मानित्यत्र हस्य घत्वे ढत्वे च कृते 'झयः' इति वत्वप्रवृत्त्याऽनुनासिकपरत्वाऽभावात् 'प्रत्यये भाषायां नित्य'मित्यनेन घकारढकारयोरनुनासिकाऽप्रवृत्तेर्गोधुग्वान् मधुलिड्वानित्यनिष्टं प्रसज्येत । मैवम् । घत्वढत्वयोरसिद्धत्वेन 'झयः' इति वत्वाऽप्रवृत्तेः । प्राणिस्थात् । शिखावान्दीप इति । प्रत्युदाहरणदिगियं दर्शिता । शिखाशब्दस्य व्रीह्यादिपाठेन लचोऽप्रसङ्गात् । 'चूडावान् वृक्षः' इति प्रत्युदाहार्यमिति हरदत्तः । न च वृक्षस्य प्राणित्वमस्तीति शङ्क्यम्, मुखनासासंचारी वायुः प्राणः, तद्वानेव प्राणीति तदाशयात् । प्राण्यङ्गादेवेति । एतच्चेतिकरणानुवृत्त्या लभ्यते । चूडालोऽसीति । 'असी'त्यस्य 'तिङ्ङतिङः' इति निघातः । चूडालशब्दात्सोरुत्वे तस्य 'अतो रोरप्लुता'दित्युकारे कृते, हलां स्रंसनधर्मत्वात्तत्स्थानिकोऽकारोऽनुदात्तः । सुप्स्थानिकस्यापि सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्त इत्यन्ये । पूर्वेण सह आद्गुणे सति 'एकादेश उदात्तेने'त्योकार उदात्तः । ततः 'एङः पदान्तादती'ति पूर्वरूपमेकादेशस्तस्य 'स्वरितो वाऽनुदात्ते' इत्यादिना स्वरिते प्राप्ते तद्बाधनाय चकार इत्यर्थः । सिध्मादिभ्यश्च । सिध्म, गड्डु, मणि, विजय, निष्पाव, पांसु, हनु, पार्ष्ण्यादयः सिध्मादयः । समुच्चयार्थमिति । निपातानामनेकार्थत्वादिति भावः । न च इनिठनावप्यन्यतरस्याङ्ग्रहणेन समुच्चीयेतामिति शङ्क्यम् । तयोरप्रकृतत्वात् । मतुप्प्रत्ययस्तु समुच्चीयते । तस्य प्रकृतत्वात् । अस्ति चेह लिङ्गं 'केशाद्वः' इत्यत्रान्यतरस्याङ्ग्रहणम् । तद्धि इनिठनोः प्राप्त्यर्थं क्रियते । प्रकृतस्याऽन्यतरस्याङ्ग्रहणस्य विकल्पार्थत्वे तदनुवृत्त्यैव सिद्धौ किं तेन; ? । क्रियमाणं तु पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चयार्थतां ज्ञापयत्येव । तथा च वार्तिकं–'लजन्यतरस्यामिति समुच्चयः' इति । अयं भावः–'प्राणिस्था'दिति सूत्रेण लचि विकल्पिते पक्षे मतुबिति चूडालश्चूडावानिति रूपद्वयं यद्यपि सिध्यति, तथापि सिध्मादिषु येऽदन्तास्तेषु इनिठनोः प्रवृत्त्या दोषः । समुच्चयार्थत्वे तु न दोष इति । एवं च 'लज्वा स्या'दिति वृत्तौ वाशब्दः समुच्चये बोध्यः । 'वा स्याद्विकल्पोपमयोरे-

बा.] सूत्रयितुमुचितं, संज्ञायामित्यनुवृत्त्यैव समुद्रेऽपि उदन्वच्छब्दस्य सिद्धत्वात् । राजन्वान् सौराज्ये । सुशोभनोराजा यस्य देशस्य स सुराजा, तस्य भावः सौराज्यम् । तस्मिन्नर्थे राजन्शब्दान्मतुपि 'मादुपधायाः' इति वत्वं सिद्धम् । नलोपाऽभावो निपात्यते । प्राणिस्थात् । आदन्तात्प्राणिस्थवाचिनः शब्दान्मत्वर्थे लज्वा स्यादित्यर्थः । शिखावान् दीप इति । अत्र शिखाशब्दस्य दीपाग्रवाचिनः प्राणिस्थवाचित्वाऽभावान्न लजिति भावः । प्राण्यङ्गादेवेति । भाष्ये तथा वचनादिति भावः । ननु लचश्चित्करणं व्यर्थं, चित इत्यन्तोदात्तत्वस्य प्रत्ययस्वरेणैव सिद्धेरित्यत आह—प्रत्ययस्वरेणेति । चूडालोऽसीति । तत्र असीत्येतत् 'तिङ्ङतिङः' इति निहतम् । चूडालात्सो रुत्वे उत्वे तस्य सुप्त्वेनाऽनुदात्तस्याद्गुणस्य 'एकादेश उदात्तेने'त्युदात्तत्वे तस्य परेण पूर्वरूपैकादेशे तस्य पदाद्यनुदात्तेन सहैकादेशत्वात् 'स्वरितो वाऽनुदात्ते' इत्यस्य प्राप्तौ तन्निवृत्त्यर्थं चित्करणमित्यर्थः । सिध्मादिभ्यश्च । लज्वा स्यादिति । 'मत्वर्थे' इति शेषः । अन्यतरस्यामिति । पूर्वसूत्रादन्यतरस्यामित्यनुवृत्तं न लच्प्रत्ययविकल्पार्थकं, किन्तु मतुप्प्रत्ययसमुच्चयार्थकमेव, अन्यतरस्यामित्यस्याव्ययत्वेनाऽनेकार्थकत्वात् । ततश्च सिध्मादिभ्यो लच्, मतुप्च स्यादिति लभ्यते । नचान्यतरस्यामित्यस्याऽत्र लच्प्रत्ययविकल्पार्थकत्वेऽपि तदभावे मतुप्सिद्ध इति वाच्यम्, 'लजभावे मतुबेव भवति, नतु अत इनिठनौ' इत्येतदर्थं समुच्चयविधानात् । तदाह—तेनेति । सिध्मादिषु ये अकारान्तास्तेभ्य इनिठनौ नेत्यर्थः । एतत्सर्वं भाष्ये स्पष्टम् । सिध्म, गड्डु, मणि, विजय, [निष्पाव] पांसु, हनु, पार्ष्णि इत्यादयः सिध्मादिषु पठिताः । एवंच लज्वा स्यादिति विवरणवाक्ये वाशब्दश्चार्थे । इदमन्य-

शे.]सूत्रेण सिद्धमिति दिक् । राजन्वतीति । 'राजन्वान् देश'इत्यपि बोद्धव्यम् । शिखावानिति । शिखाशब्दस्य व्रीह्यादित्वे तु 'चूडावती प्रतिमे'ति प्रत्युदाहार्यम् । मेधावानिति । न चात्र 'अस्मायामेधे'ति विनिना बाधान्न लचः प्राप्तिरिति वाच्य, [तेजस्वान् यशस्वानित्यर्थमन्यतरस्याङ्ग्रहणस्य तत्रावश्यकत्वात् । तथा च पक्षे प्राप्तमतुपं बाधित्वाऽयं स्यात् । अस्मान्मुक्ते पक्षे मतुप्स्यादिति त्रैरूप्यं स्यादिति भावः] । चिकीर्षावानित्यस्याऽनेनोपलक्षणम् । चूडालोऽसीति । असीति 'तिङ्ङतिङः' इति निहतं । चूडालात्सोरुत्वे तस्य सुप्त्वेनानुदात्ततया तत्स्थानिकस्याद्गुणस्य 'एकादेश उदात्तेने'त्युदात्तत्वे तस्य परेण पूर्वरूपैकादेशे तस्य पदाद्यनुदात्तेन सहैकादेश-

।५।२।९८। आभ्यां लच् वा स्याद्यथासङ्ख्यं कामवति बलवति चार्थे । वत्सलः । अंसलः । **फेनादिलच्च** ।५।२।९९। चाल्लच् । अन्यतरस्याङ्ग्रहणं मतुप्समुच्चयार्थमनुवर्तते । फेनिलः । फेनलः । फेनवान् । **लोमादिपामादिपिच्छादिभ्यः शनेलचः** ।५।२।१००। 'लोमादिभ्यः शः' । लोमशः । लोमवान् । रोमशः । रोमवान् । 'पामादिभ्यो नः' । पामनः । ( ग ) अङ्गात्कल्याणे । अङ्गना । ( ग ) लक्ष्म्या अच्च । लक्ष्मणः । [ * शाकीपलालीदद्र्वा ह्रस्वत्वं च । शाकिनम् । पलालिनम् । दद्रुणम् ] । ❀ विष्वगित्युत्तरपदलोपश्चाऽकृतसन्धेः । विषुणः । 'पिच्छादिभ्य इलच्' । पिच्छिलः । पिच्छवान् । उरसिलः । उरस्वान् । **प्रज्ञाश्रद्धाऽर्चाभ्यो णः** ।५।२।१०१। प्राज्ञो व्याकरणम् । प्राज्ञा । श्राद्धः । आर्चः । ❀ वृत्तेश्च ।

---

त.] चार्थेऽपि समुच्चये' इत्यमरः । **वातदन्तेत्यादि** । सिध्माद्यन्तर्गणसूत्रम् । **ऊङ् चेति** । ङित्त्वादन्तादेशः । ऊकारमात्रोक्तावन्तादेशत्वसिद्धावपि प्रत्ययत्वशङ्कानिवारणाय ङानुबन्धः कृतः । न च षष्ठ्यन्ताद्विहितस्य प्रत्ययत्वं नेति शक्यम्, 'अहंशुभमोर्युस्', 'गोपयसोर्यत्' इत्यादौ प्रत्ययत्वाभ्युपगमात् । **वातूल इति** । अन्तोदात्तमिदम् । प्राचा तु 'बलादूलः', 'वाताच्चे'ति पठित्वा वातूल इत्युक्तं, तदुपेक्ष्यम् , प्रत्ययस्वरेण मध्योदात्तत्वप्रसङ्गात् । गणसूत्रबलेनाऽन्तोदात्तत्वमेवेष्यत इत्याहुः । **'पार्ष्णिधमन्योर्दीर्घश्च'** । **'क्षुद्रजन्तूपतापाच्चे'**त्यपि गणे पठ्यते । पार्ष्णीलः । धमनीलः । **क्षुद्रजन्तुः**—यूकालः । मक्षिकालः । उपतापो रोगः । विपादिकालः । **वत्सांसाभ्याम्** । **कामवतीति** । कामबलशब्दौ सूत्रे अर्शआद्यजन्ताविति भावः । **वत्सल इति** । स्नेहवानित्यर्थः । ननु वत्सांसशब्दौ वयोविशेषे प्राण्यङ्गविशेषे च रूढौ, न कामबलयोः, तत्कथं ताभ्यां लजन्ताभ्यां कामवान्बलवांश्चोच्यत इति चेत् । अत्राहुः—वृत्तिविषये वत्सांसशब्दौ स्नेहबलयोर्वर्तेते इति । अस्मिंस्तु प्रकरणे सर्वत्र समुच्चीयमानोऽपि मतुबिह नेष्यते, मतुबन्तेनोक्तार्थस्याऽप्रतीतेः । किं त्वर्थान्तरमेव तेन प्रतीयते । वत्सवती गौः । अंसवान् दुर्बल इति ।

**लोमादि** । इह 'नन्दिग्रहिपचादिभ्यः' इतिवत् 'लोमपामपिच्छादिभ्यः' इति सुपठम् । 'अङ्ग कल्याणे' इति गणसूत्रमर्थतः पठति—**अङ्गादिति** । **शाकीपलालीदद्र्वा ह्रस्वत्वं च** । चान्नप्रत्ययः । महच्छाकं शाकी । तद्वत्-शाकिनम् । महत्पलालं पलाली । तद्वत् पलालिनम् । 'दरिद्रातेर्यालोपश्चे'त्युणादिसूत्रेण इकाराकारयोर्लोपश्चाद्रूप्रत्ययः । दद्रूस्त्वग्रोगविशेषः । तद्वान्—दद्रुणः । **विष्वगिति** । 'समर्थाना'मित्यस्यापवादोऽयम् । अकृतसन्धेरकृतयणादेशस्याऽञ्चतेर्लोपः, चकारान्नप्रत्यय इत्यर्थः । यदि तु कृते यणादेशे उत्तरपदलोपः स्यात्तदा वलिलोपे सति 'विष्ण' इति स्यात् । **विषुण इति** । विषु=नाना अञ्चन्तीति विष्वञ्चि, तान्यस्य सन्ति विषुणः=विषुवदाख्यः कालः । तस्य हि नानागतानि दिनानि सन्ति । दिनान्तराणां न्यूनाधिकभावस्य तन्मूलत्वात् । अयं भावः—विषुवति दिनानां समतायां जातायामग्रे न्यूनान्यधिकानि च दिनानि भवेयुरिति नानागतदिनवत्त्वं यद्यपि विषुवति नास्ति तथापि नानागतदिनमूलभूतदिनानां सत्त्वात्तथोच्यत इति । तथा नानागमनवत्त्वान्मृत्युर्वायुरव्यवस्थितचित्तश्च 'विषुण'शब्देनोच्यते । **प्रज्ञाश्रद्धा** । **प्राज्ञो व्याकरणमिति** । गुणभूतया क्रियया कर्मत्वेन संबन्धः । कृद्ग्रहणा-

---

बा.] तरस्याङ्ग्रहणमुत्तरसूत्रेषु सर्वत्र मत्वर्थीयविधिष्वनुवर्तते, नतु रूढशब्देषु । अतो न तेषु मतुप्समुच्चय इत्यास्तां तावत् । **वातदन्तबलललाटानामूङ् चेति** । सिध्मादिगणसूत्रमिदम् । एभ्यो लच् , प्रकृतेरूङ् चादेशः । ङकारस्तु आदेशत्वसूचनार्थः । अन्यथा प्रत्ययत्वशङ्का स्यात् । वातूलः । एवं दन्तूलः, बलूलः, ललाटूलः । **वत्सांसाभ्यां** । **लच्स्यादिति** । 'मत्वर्थे' इति शेषः । कामबलशब्दौ तद्वति लाक्षणिकावित्यभिप्रेत्याह—**कामवति बलवति चेति** । **फेनादिलच्च** । 'मत्वर्थे' इति शेषः । **चाल्लजिति** । संनिहितत्वादिति भावः । नन्वेवं सति मतुब् नैव स्यादित्यत आह—**अन्यतरस्यांग्रहणमिति** । सिध्मादिसूत्रे व्याख्यातमिदम् । **लोमादि** । श, न, इलच् एते त्रिभ्यो गणेभ्यो यथासङ्ख्यं स्युर्मत्वर्थे । **अङ्गात्कल्याणे इति** । पामादिगणसूत्रम् । कल्याणं=सुन्दरं, तद्विशेषणकादङ्गशब्दान्मत्वर्थे नप्रत्यय इत्यर्थः । **अङ्गनेति** । कल्याणानि अङ्गानि अस्या इति विग्रहः । **'लक्ष्म्या अच्चे'**त्यपि पामादिगणसूत्रम् । लक्ष्मीशब्दान्मत्वर्थे नप्रत्ययः स्यात्प्रकृतेरकारोऽन्तादेशश्च । **लक्ष्मण इति** । लक्ष्मीरस्यास्तीति विग्रहः । नप्रत्यये प्रकृतेरकारे अन्तादेशे णत्वम् । **विष्वगिति** । इदमपि पामादिगणसूत्रमिति केचित् । भाष्ये तु नप्रकरणे इदं वार्तिकं पठितम् । 'विषु' इत्यव्ययं सर्वत इत्यर्थे । विषु अञ्चतीति विष्वङ् । सर्वतोगामीत्यर्थ इति **धूर्तस्वामी** । 'विषु' इति तिर्यगर्थे इति **भवस्वामी** । पराङ्मुख इति **भट्टभास्करः** । विषु अञ्च् इत्यस्मात् अकृतसन्धेर्मत्वर्थे नप्रत्ययः स्यात् , उत्तरपदलोपश्चेत्यर्थः । **विषुण इति** । विष्वङ् अस्या-

---

शो.] त्वात् 'स्वरितो वे'त्यस्य प्राप्तिरिति बोद्धव्यम् । एतच्च वृत्तौ स्पष्टम् । **समुच्चयार्थमिति** । भाष्योक्तव्याख्यानादिति भावः । **वत्सांसाभ्याम्** । 'लच् स्या' दित्येव पाठः । [illegible] इति वृत्त्युक्तेः । **प्रज्ञाश्रद्धा** । यद्यपि कर्तृव्युत्पन्नप्रज्ञशब्दा-

वार्त्तः । तपःसहस्राभ्यां विनीनी ।५।२।१०२। विनीन्योरिकारो नकारपरित्राणार्थः । तपस्वी । सहस्री । असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा माभूदिति । सहस्रात्तु ठनोऽपि बाधनार्थम् । अण् च ।५।२।१०३। योगविभाग उत्तरार्थः । तापसः । साहस्रः । * ज्योत्स्नादिभ्य उपसङ्ख्यानम् । ज्यौत्स्नः । तामिस्रः । सिकताशर्कराभ्यां च ।५।२।१०४। सैकतो घटः । शार्करः । देशे लुबिलचौ च ।५।२।१०५। चादण् । मतुप् च । सिकताः सन्त्यस्मिन्देशे सिकताः । सिकतिलः । सैकतः । सिकतावान् । एवं शर्करा

त.] तद्धितप्रयोगे षष्ठी न, कृतपूर्वी कटमितिवत् । ननु प्रकर्षेण जानातीति प्रज्ञः, स एव प्राज्ञवान् । तथा च प्रज्ञ एव प्राज्ञ इत्यणि कृते सिद्धमिष्टं, किमत्र प्रज्ञाग्रहणेनेत्याशङ्कां निराकुर्वन्नाह—प्राज्ञेति । स्त्रियां टाप् । 'प्रज्ञादिभ्यश्चे'-त्यणि तु ङीप् स्यादिति भावः । वृत्तेश्चेति । वार्तिकमिदम् । काशिकाकृता तु वृत्तिशब्दः सूत्रे प्रक्षिप्तः । विच्छिन्नस्य प्रतिविधानं-वृत्तिः । तपस्वी । सहस्रीति । 'असन्तत्वाददन्तत्वाच्च सिद्धे पुनर्वचनमणा बाधा माभूदिति । सहस्रात्तु ठनोऽपि बाधनार्थम्' । एतच्च समाधानं मूलपुस्तकेष्वपि क्वचिद्दृश्यते । उत्तरार्थं इति । विनीन्योर्यथासङ्ख्यप्रवृत्त्यर्थश्चेत्यपि बोध्यम् । ज्यौत्स्न इति । शुक्लपक्षः । तामिस्र इति । कृष्णपक्षो, नरकविशेषश्च । तमःसमूहस्तमिस्रम् । 'ज्योत्स्नातमिस्रे'ति निपातनान्मत्वर्थीयो रः । तत्र ह्यवयवभूतानि तमांसि विद्यन्ते । तदस्मिन्नस्तीति विग्रहे रान्तादण् । स्त्रियां-तामिस्री । 'तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता' इत्यमरोक्तौ तु तमिस्रेत्येतद्रान्तं न त्वणन्तमिति न विरोधः । एवं च तमिस्रा रात्रयो अस्मिन् सन्ति 'तामिस्रः पक्ष' इत्यपि व्याख्यातुं शक्यम् । सिकताशर्करा । देशविशेषस्य वक्ष्यमाणत्वादाह—घट इति । मतुप् चेति । अन्य-

बा.] स्तीति लौकिकविग्रहः । विषु अम्व्-इत्यलौकिकविग्रहवाक्यम् । कृतसन्धेर्नप्रत्यये तु विष्वक्शब्दे उत्तरपदस्य लोपे 'लोपो व्यो'रिति यलोपे विष्ण इति स्यादिति भावः । समर्थानामित्यस्यापवादोऽयम् । प्रज्ञाश्रद्धार्चाभ्यो णः । प्रज्ञा, श्रद्धा, अर्चा एभ्यो मत्वर्थे णप्रत्ययः स्यादित्यर्थः । प्राज्ञो व्याकरणमिति । प्रज्ञानं प्रज्ञा । स्त्रियामित्यधिकारे प्रपूर्वकाज्ज्ञाधातोः 'आतश्चोपसर्गे' इति भावे अङ् । प्रज्ञा अस्यास्तीति विग्रहः । उपसर्जनभूतामपि प्रज्ञानक्रियां प्रति व्याकरणस्य कर्मत्वाद्द्वितीया । कृद्योगषष्ठी नात्र प्रवर्तते, 'कर्तृकर्मणोः कृती'त्यत्र कृद्ग्रहणेन तद्धितयोगे तन्निषेधात् । अत्र यद्वक्तव्यं तत्कर्तृकर्मणोः कृतीत्यत्र प्रपञ्चितम् । नच प्रजानातीति प्रज्ञः । 'इगुपधे'ति कः । प्रज्ञशब्दात्स्वार्थे अणि प्राज्ञ इति सिध्यतीति शङ्क्यं, तथा सति स्त्रियां ङीप्प्रसङ्गात् । तदाह—प्राज्ञेति । श्राद्ध इति । श्रद्धा अस्यास्तीति विग्रहः । आर्च इति । अर्चा अस्यास्तीति विग्रहः । वृत्तेश्चेति । वार्तिकमिदम् । 'मत्वर्थे णप्रत्यय' इति शेषः । वार्त्त इति । वृत्तिरस्यास्तीति विग्रहः । तपःसहस्राभ्याम् । विनिश्च इनिश्चेति द्वन्द्वः । 'मत्वर्थे' इति शेषः । यथासंख्यमन्वयः । विनिप्रत्यये इनिं प्रत्यये च नकारादिकारौ उच्चारणार्थौ ।

ननु नकारयोरित्संज्ञा कुतो न स्यात् । नच प्रयोजनाऽभावः, नित्स्वरस्यैव फलत्वादित्यत आह-नकारपरित्राणार्थं इति । तथा च उपदेशे अन्त्यत्वाऽभावान्नेत्संज्ञेति भावः । यद्यपि 'अस्मायामेधे'त्यसन्तत्वादेव तपःशब्दाद्विन्सिद्धः, सहस्रशब्दात्तु 'अत इनिठनौ' इत्येवेन्सिद्धस्तथापि विशिष्य उत्तरसूत्रविहितेन अणा असन्ताऽदन्तलक्षणयोर्विनीन्योः सामान्यविहितयोर्बाधो मा भूदिति विशिष्येह तपःसहस्रशब्दाभ्यां तयोर्विधानम् । सहस्रशब्दात्तु अदन्तलक्षणठनोऽपि बाधनार्थमिह इन्विधानम् । एतत्समाधानं क्वचिन्मूलपुस्तकेषु दृश्यते । अण्च । 'तपःसहस्राभ्यां मत्वर्थे' इति शेषः । ननु 'तपःसहस्राभ्यां विनीन्यणः' इत्येकमेव सूत्रमस्तु । नच तपःसहस्राभ्यां विनीन्योर्यथासंख्यार्थं पृथक्सूत्रकरणम्, अन्यथा त्रयोऽपि प्रत्यया द्वाभ्यां स्युरितिं वाच्यं, 'तपःसहस्राभ्यामण्विनीनी' इति सूत्रकरणे भिन्नविभक्त्युच्चारणादेव अण उभयसम्बन्धस्य, विनीन्योर्यथासंख्य(त्व)स्य च सिद्धेरित्यत आह—योगविभाग उत्तरार्थं इति । उत्तरसूत्रे अण एवानुवृत्त्यर्थं इत्यर्थः । ज्यौत्स्न इति । 'शुक्लपक्ष' इति शेषः । ज्योत्स्ना= चन्द्रिका । सा अस्यास्तीति विग्रहः । तामिस्र इति । 'कृष्णपक्ष' इति शेषः । तमिस्राः=तमोयुक्ता रात्रयः । ता अस्य सन्तीति विग्रहः । ज्योत्स्नादित्वादण् । सिकताशर्कराभ्यां च । 'मत्वर्थे अ'णिति शेषः । सैकतो घट इति । सिकता अस्य सन्तीति विग्रहः । देशे लुपो वक्ष्यमाणत्वाद्घट इति विशेष्यम् । 'अप्सुमनःसमासिकतावर्षाणां बहुत्वं चे'ति लिङ्गानुशासनसूत्रात्सिकताशब्दो नित्यं बहुवचनान्तः । देशे लुबिलचौ च । पूर्वसूत्रविहित-

शे.] त्प्रज्ञाद्यणि प्राज्ञः सिध्यति, तथापि स्त्रियां ङीबभावार्थं वचनम् । तदाह—प्राज्ञेति । श्रद्धासाहचर्यादर्चावार्थकाऽदन्तस्यैवाऽत्र ग्रहणम् । तपः सह । अर्थाभ्यां यथासङ्ख्यं न, अस्वरितत्वात् । उत्तरार्थं इति । तपःसहस्राभ्यामण्विनीनी इति न्यासेन भिन्नविभक्त्युच्चारणादण उभयसम्बन्धो, विनीन्योर्यथासङ्ख्यञ्च सिद्धमिति भावः । मतुप चेति । मतुप्समुच्चयार्थोऽन्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः । शिकता

इत्यादि । दन्त उन्नत उरच् ।५।२।१०६। उन्नता दन्ताः सन्त्यस्य दन्तुरः । ऊषसुषिमुष्कमधो रः ।५।२।१०७। ऊषरः । सुषिरः । मुष्कोऽण्डः । मुष्करः । मधु माधुर्यम् । मधुरः । * रप्रकरणे खमुखकुञ्जेभ्य उपसङ्ख्यानम् । खरः । मुखरः । कुञ्जो—हस्तिहनुः । कुञ्जरः । * नगपांसुपाण्डुभ्यश्च । नगरम् । पांसुरः । पाण्डुरः । पाण्डरशब्दस्त्वव्युत्पन्न एव । * कच्छ्वा ह्रस्वत्वं च । कच्छुरः । द्युद्रुभ्यां मः ।५।२।१०८। द्युमः । द्रुमः । केशाद्वोऽन्यतरस्याम् ।५।२।१०९। प्रकृतेनाऽन्यतरस्याङ्ग्रहणेन मतुपि सिद्धे पुनर्ग्रहणमिनिठनोः समावेशार्थम् । केशवः । केशी । केशिकः । केशवान् । * अन्येभ्योऽपि दृश्यते । मणिवो नाग-

त.]तरस्यांग्रहणेन सर्वत्र मतुपः समुच्चयादिति भावः । सिकता इति । लुपि युक्तवद्भावः । अत्र सूत्रद्वयस्योदाहरणान्यमरः संजग्राह—'स्त्री शर्करा शर्करिलः शार्करः शर्करावति । देश एवादिमावेवमुन्नेयाः सिकतावती'ति । दन्त उन्नत । उन्नत इति किम् ? । दन्तवान् । ऊषसुषि । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । 'स्यादूषः क्षारमृत्तिका' । 'ऊषवानूषरः' इत्यमरः । सुषिश्छिद्रम् । खर इति । महत्कण्ठविवरं खं, तद्वानित्यर्थः । गर्दभे रूढोऽयम् । मुखरो वाचाल इति हरदत्तः । नगरमिति । नगा वृक्षाः, पर्वताश्च । जातिशब्दोऽयम् । तथा च 'नगरी'त्यत्र ङीष् भवति । नगशब्दोऽयमश्मादिषु पठ्यते इति वुञ्छणादिसूत्रेणास्य सिद्धत्वादस्माद्रोऽयं न वक्तव्य इति हरदत्तः । पाण्डुर इति । पाण्डुः शुक्लो वर्णस्तद्वान् । अव्युत्पन्न एवेति । गुणमात्रे गुणिनि च वर्तते । 'हरिणः पाण्डरः पाण्डुः' इत्यमरः । 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वती'ति च । कच्छ्वा इति । कच्छूस्त्वग्रोगविशेषः । द्युद्रुभ्यां मः । द्युम इति । द्यौरस्यास्ति । 'दिव उ'दित्युत्वम् । द्रुर्वृक्षः सोऽस्यास्ति जनकतयेति द्रुमोऽपि वृक्ष एव । 'पलाशी द्रुद्रुमाऽगमाः' इत्यमरः । इह सर्वत्र समुच्चीयमानोऽपि मतुब्रूढशब्देषु नेष्यते,तदर्थस्य मतुपा अभि-

बा.]स्याऽणो लुप् , इलच स्यादित्यर्थः । चादणिति । संनिहितत्वादिति भावः । तर्हि अपवादेन मुक्ते उत्सर्गस्याऽप्रवृत्तेर्मतुब्नैव स्यादित्यत आह—मतुप्चेति । समुच्चयार्थकन्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः । सिकता इति । सिकताशब्दान्नित्यं बहुवचनान्तादणो लुपि प्रातिपदिकावयवत्वात्सुपो लुकि युक्तवद्भावाद्विशेष्यस्य देशस्य एकत्वेऽपि बहुवचनमिति भावः । 'हयवर'डिति सूत्रे 'एका च सिकता तैलदाने असमर्थे'ति भाष्ये प्रयोगात्सिकताशब्द एकवचनान्तोऽप्यस्तीति लिङ्गानुशासने मूलकारो वक्ष्यति । दन्त उन्नत उरच् । उन्नतविशेषणकाद्दन्तशब्दान्मत्वर्थे उरच्स्यादित्यर्थः । 'उन्नत' इति प्रकृतिविशेषणम् । दन्त इति सप्तमी पञ्चम्यर्थे । ऊषसुषि । ऊष, सुषि, मुष्क, मधु-एषां समाहारद्वन्द्वात्पञ्चम्येकवचनम् । सौत्रं पुंस्त्वम् । एभ्यो मत्वर्थे रप्रत्ययः स्यादित्यर्थः । ऊषर इति । ऊषः क्षारमृत्तिकाविशेषोऽस्यास्तीति विग्रहः । सुषिर इति । सुषिः=बिलम् ,-अस्यास्तीति विग्रहः । मधुशब्दः क्षौद्रे द्रव्ये, माधुर्यात्मकरसविशेषे च गुणे वर्तते । तत्र रसविशेषवाचिन एवात्र ग्रहणमित्याह—मधु माधुर्यमिति । तथा भाष्यादिति भावः । अन्यथा मधुद्रव्यवति घटेऽपि मधुरपदप्रयोगः स्यात् । खरो गर्दभः, धिष्ण्यो वा । मुखरः=शब्दं कुर्वन् । कुञ्जरो-हस्ती । रूढशब्दा एते । नगपांस्विति । वार्तिकमिदम् । 'नगर'मिति जातिविशेषवाची । अत एव नगरीति ङीष् । पांसुर इति । पांसुरस्यास्तीति विग्रहः । पाण्डुर इति । पाण्डुः=शुक्लवर्णः, स अस्यास्तीति विग्रहः । कथं पाण्डरशब्द इत्यत आह—पाण्डरशब्दस्त्विति । 'हरिणः पाण्डरः पाण्डु'रित्यमरः । कच्छ्वा इति । वार्तिकमिदम् । कच्छूशब्दाद्रप्रत्ययः, प्रकृतेर्ह्रस्वश्च अन्तादेश इत्यर्थः । कच्छुरः—शुनां रोगविशेषः । द्युद्रुभ्यां मः । 'दिव उ'दिति कृतोत्वस्य दिव्शब्दस्य 'द्यु' इति निर्देशः । दिव्शब्दात् द्रुशब्दाच्च मप्रत्ययः स्यादित्यर्थः । द्युमः द्रुम इति । रूढशब्दावेतौ । केशाद्वोऽन्यतरस्याम् । 'मत्वर्थे' इति शेषः । नन्विहाऽन्यतरस्याङ्ग्रहणं व्यर्थं, समर्थानामिति वाग्रहणेनैव वाक्यस्य सिद्धत्वात् । न च महाविभाषया अपवादेन मुक्ते औत्सर्गिकस्याऽप्रवृत्तेः 'पारेमध्ये षष्ठ्या वे'त्यत्रोक्तत्वादिह मतुपोऽप्रवृत्त्यापत्तौ तत्प्रवृत्त्यर्थमन्यतरस्याङ्ग्रहणमिति वाच्यं, 'प्राणिस्था'दिति सूत्रादन्यतरस्याङ्ग्रहणस्य समुच्चयार्थकस्याऽनुवृत्त्यैव तत्सिद्धेरित्यत आह—प्रकृतेनेति । इनिठनोरिति । इनिठनोरपीत्यर्थः । अन्यथा 'सिध्मादिभ्यश्चे'त्यत्रेव मतुबेव समुच्चीयेत, नत्विनिठनाविति भावः । तथाच वप्रत्यये इनिठनोर्मतुपि च चत्वारि रूपाणीत्याह-केशव इत्यादि । अन्येभ्योऽ-

शे]इति । लुपि युक्तवद्भावः । हयवरट्सूत्रे 'एका सिकते'ति भाष्यादेकवचनान्तोऽप्ययम् । दन्तुर इति । निम्नोन्नते प्रयोगस्तु लक्षणया । उन्नते किम् ? । दन्तवान् । ऊषः—क्षारमृत् । मधु माधुर्यमिति । रसवाचिन एवात्र ग्रहणमिति भावः । स्पष्टं चेदं भाष्ये । नगरमिति । चातुरर्थिकप्रत्ययान्तनगरशब्दस्तु देशविशेषनाम, अयन्तु जातिवाची । अत एव नगरीति जातिलक्षणो ङीष् । पुनर्ग्रहणमिति । पुनर्ग्रहणस्य 'द्युद्रुभ्यां म' इत्यस्याऽनित्यत्वार्थताया भाष्ये उक्तत्वेन व्याख्यानादेवाऽस्य सर्वविभाषार्थत्वमिति वस्तुमुचितम् । मणिव इत्यादि । बिम्बावम्, कुररावमिष्टकावमित्यप्यस्योदाहरणम् । 'अन्येषामपी'ति दीर्घः ।

विशेषः । हिरण्ययो निर्विशेषः । ❀ **अर्णसो लोपश्च** । अर्णवः । **गाण्ड्यजगात्संज्ञायाम्** ।५।२।११०। ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः । गाण्डिवं गाण्डीवम्—अर्जुनस्य धनुः । अजगवं पिनाकः । **काण्डाण्डादीरन्नीरचौ** ।५।२।१११। काण्डीरः । आण्डीरः । **रजःकृष्यासुतिपरिषदो वलच्** ।५।२।११२। रजस्वला स्त्री । कृषीवलः । 'वले' इति दीर्घः । आसुतीवलः शौण्डिकः । परिषद्वलः । पर्षदिति पाठान्तरम् । पर्षद्वलम् । * **अन्येभ्योऽपि दृश्यते** । भ्रातृवलः । पुत्रवलः । शत्रुवलः । 'वले' इत्यत्र संज्ञायामित्यनुवृत्तेर्नेह दीर्घः । **दन्तशिखात्संज्ञायाम्** ।५।२।११३। दन्तावलो हस्ती । शिखावलः केकी । **ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः** ।५।२।११४। मत्वर्थे निपात्यन्ते । 'ज्योतिष उपधालोपो नश्च प्रत्ययः' । ज्योत्स्ना । 'तमस उपधाया इत्वं रश्च' । तमिस्रा । स्त्रीत्वमतन्त्रम् । तमिस्रम् । 'शृङ्गादिनच्' । शृङ्गिणः । 'ऊर्जसो वलच्' । तेन बाधा माभूदिति विनिरपि । ऊर्जस्वी । ऊर्जस्वलः । 'ऊर्जोऽसुगागम' इति वृत्तिस्तु चिन्त्या । ऊर्जस्वतीतिवदसुन्नन्तेनैवोपपत्तेः । 'गोशब्दान्मिनिः' । गोमी । 'मलशब्दादिनच्' । मलिनः ।

त.]धातुमशक्यत्वात् । **दृश्यत इति** । 'व' इत्यनुवर्तते । **अर्णव इति** । अर्तेरसुन् , नुट्च । अर्णः=जलं, तद्वान् । **संज्ञायामिति** । 'तदस्यास्ती'ति सूत्रस्थेतिशब्दस्यैवायं प्रपञ्चः । **यणेति** । 'ख्यत्या'दित्विवत्कृतयणादेशस्यानुकरणं न भवति, लक्ष्ये यणोऽभावात् । किंतु सूत्रे सांहितिकोऽयं यणिति भावः । प्रयुज्यते चोभयथा—'अधिरोहति गाण्डिवं महेषौ' । 'गाण्डीवी कनकशिलानिभं भुजाभ्या'मिति च । **आसुतीवल इति** । 'षुञ् अभिषवे' । क्तिन् । **आसुतिरभिषवः** । **परिषद्वल इति** । परितः सीदतीति परिषत् । 'सत्सूद्विषे'त्यादिना क्विप् । 'सदिरप्रते'रिति षत्वम् । **पाठान्तरमिति** । 'शृदृभसोऽदिः' इत्यदिप्रत्ययो बाहुलकात् पृषेरपि भवति । तथा च भाष्यं—'पार्षदकृतिरेषा तत्रभवतां' 'सर्ववेदपार्षदं हीदं शास्त्र'मिति च । भट्टिस्त्वाह—'पर्षद्वलान्महाब्रह्मैराट नैकटिकाश्रमा'निति । 'पर्षदेषा दशावरे'ति मनुः । **भ्रातृवल इति** । 'वले' इत्यत्राऽण्ग्रहणानुवृत्तेर्नेह दीर्घः । पुत्रवलादौ तु स्यात्तत्राह—**संज्ञायामित्यनुवृत्तेरिति** । 'वनगिर्यो रिति सूत्रादिति भावः । **ज्योत्स्ना**=चन्द्रप्रभा । तत्रावयवीभूतं ज्योतिरस्तीति मत्वर्थीयोपपत्तिः । एतेन तमःसमूहे तमिस्राशब्दो व्याख्यातः । निघण्टुषु तमःपर्यायस्तमिस्रशब्दः पठितः । तत्र समूहसमूहिनोरभेदोपचार इति हरदत्तः । **स्त्रीत्वमतन्त्रमिति** । व्याख्यानमत्र शरणम् । 'ऊर्जस्विन्गोमिन्नि'-

बा.]पीति । वार्तिकमिदम् । केशादन्येभ्योऽपि मत्वर्थे वो दृश्यत इत्यर्थः। **अर्णस इति** । वार्तिकमिदम् । अर्णसो वप्रत्ययः प्रकृतेः सकारस्य लोपश्चेत्यर्थः । **अर्णव इति** । अर्णः=जलम् । तत्प्रभूतमस्मिन्नस्तीति विग्रहः । इदं तु वार्तिकं भाष्ये न दृश्यते । **गाण्ड्यजगात्संज्ञायाम्** । **ह्रस्वदीर्घयोरिति** । गाण्डिशब्दस्य गाण्डीशब्दस्य च कृतयणो गाण्ड्य् इति युगपन्निर्देशः—'ख्यत्यात्परस्ये'त्यत्र खितिशब्दयोः खीतीशब्दयोश्च यथेत्यर्थः । ततश्च गाण्डिशब्दाद्गाण्डीशब्दादजगशब्दाच्च मत्वर्थे वप्रत्ययः स्यादित्यर्थः । रूढशब्दत्वादिह न मतुप्समुच्चयः । **काण्डाण्डादीरन्नीरचौ** । काण्ड, आण्ड—आभ्यां ईरन्, ईरच् इति प्रत्ययौ मत्वर्थे स्त इत्यर्थः । **रजःकृषि** । रजस्, कृषि, आसुति, परिषद् एभ्यो मत्वर्थे वलच्स्यादित्यर्थः । **आसुतीवल इति** । 'षुञ् अभिषवे' । आङ्पूर्वात्स्त्रियां क्तिन् । 'वले' इति दीर्घः । **अन्येभ्योऽपीति** । वार्तिकमिदम् । 'रजः कृषी'त्यादिसूत्रोपात्तादन्येभ्योऽपि वलच्दृश्यत इत्यर्थः । भ्रातृवलः । 'ढ्रलोपे' इत्यतोऽण इत्यनुवृत्तेः 'वले' इति न दीर्घः । पुत्रवल इत्यादौ 'वले' इति दीर्घमाशङ्क्याह—**वले इत्यत्रेति** । **दन्तशिखात्संज्ञायाम्** । समाहारद्वन्द्वात्पञ्चमी । दन्तशब्दाच्छिखाशब्दाच्च मत्वर्थे वलच्स्यात्संज्ञायामित्यर्थः । **ज्योत्स्ना** । **ज्योतिष इति** । ज्योत्स्नावयवाः=ज्योतींषि, तान्यस्यां सन्तीति विग्रहे ज्योतिष्शब्दान्नप्रत्ययः, उपधाभूतस्य इकारस्य लोपश्च निपात्यते । सति च इकारस्य लोपे इणः परत्वाऽभावात्षत्वनिवृत्तौ ज्योत्स्नेति रूपम् । 'चन्द्रिका कौमुदी ज्योत्स्ने'त्यमरः । **तमस इति** । तमोऽस्यास्तीति विग्रहे तमस्शब्दात् रप्रत्ययः । उपधाभूतस्य मकारादकारस्य इत्वं च निपात्यत इत्यर्थः । 'तमिस्रा तामसी रात्रि'रित्यमरः । ननु 'तमिस्रे'ति स्त्रीलिङ्गनिर्देशात्तमिस्रं गृहमिति कथमित्यत आह—**स्त्रीत्वमतन्त्रमिति** । **शृङ्गादिनजिति** । 'निपात्यते' इति शेषः । **शृङ्गिण इति** । शृङ्गमस्यास्तीति विग्रहः । इनचि णत्वम् । **ऊर्जसो वलजिति** । 'निपात्यते' इति शेषः । ऊर्जसित्यसुन्नन्तं प्रातिपदिकम् । ननु 'अस्मायामेधे'ति विनिना सिद्धेरूर्जस्विन्निति निपातनं व्यर्थमित्यत आह—**तेनेति** । विशेषविहितेन वलचा,—अस्मायेति सामान्यविहितस्य विनो निवृत्तिर्मा भूदित्येतदर्थं विनो निपातनमित्यर्थः । **ऊर्जे इति** । ऊर्जशब्दाद्वलचि प्रकृतेरसुगागम इति वृत्तिग्रन्थोऽनुपपन्न इत्यर्थः । कुत इत्यत आह—**ऊर्जस्वतीरितिवदिति** । ऊर्जस्वतीरित्यत्र वलप्रत्ययाऽभावेन तत्सन्नियोगशिष्टस्य असुगागमस्या-



शे.]अर्णसो लोपश्चेति । भाष्ये न दृश्यते । नेहेति । शत्रुवलः पुत्रवल इत्यादौ। भ्रातृवले ऽण इति अनुवृत्तेरपि तदभावः ।

'ईमसंच' । मलीमसः । **अत इनिठनौ** ।५।२।११५। दण्डी । दण्डिकः । **व्रीह्यादिभ्यश्च** ।५।२।११६। व्रीही ।
व्रीहिकः । न च सर्वेभ्यो व्रीह्यादिभ्य इनिठनाविष्येते । किं तर्हि ? । *शिखामालासंज्ञादिभ्य इनिः ।
यवखदादिभ्य इकः । अन्येभ्य उभयम् । **तुन्दादिभ्य इलच्च** ।५।२।११७। चादिनिठनौ, मतुप् च ।
तुन्दिलः । तुन्दी । तुन्दिकः । तुन्दवान् । उदर, पिचण्ड, यव, व्रीहि । [ (ग) **स्वाङ्गाद्विवृद्धौ** । विवृद्ध्युपा-
धिकात्स्वाङ्गवाचिन इलजादयः स्युः । [विवृद्धौ कर्णौ यस्य स]-कर्णिलः । कर्णी । कर्णिकः । कर्णवान् ] ।
**एकगोपूर्वाट्ठञ् नित्यम्** ।५।२।११८। एकशतमस्यास्तीति ऐकशतिकः । ऐकसहस्रिकः । गौशतिकः । गौस-
हस्रिकः । **शतसहस्रान्ताच्च निष्कात्** ।५।२।११९। निष्कात्परौ यौ शतसहस्रशब्दौ तदन्तात्प्रातिपदिका-
ट्ठञ् स्यान्मत्वर्थे । नैष्कशतिकः । नैष्कसहस्रिकः । **रूपादाहतप्रशंसयोर्यप्** ।५।२।१२०। आहतं

त.]त्यत्र नान्तत्वाभिव्यक्तये नलोपो न कृतः । **अत इनिठनौ** । तपरकरणं किम् ? । खट्वावान् । 'एकाक्षरात्कृतो
जातेः सप्तम्यां च न तौ स्मृतौ' । **एकाक्षरात्**—स्ववान् । **कृतः**—कारकवान् । **जातेः**-व्याघ्रवान् , सिंहवान् ।
**सप्तम्यां**-दण्डा अस्यां सन्ति दण्डवती शाला । 'तदस्यास्ती'ति सूत्रस्थेतिकरणो विषयनियमार्थः सर्वत्रापि
संबध्यत इति । क्वचित्कृतोऽपि भवति—कार्यी । कार्यिकः । क्वचित्तु जातेरपि-तण्डुली । तण्डुलिकः । एतच्च
काशिकादौ स्पष्टम् । **तुन्दादिभ्य इलच्च** । अन्यतरस्यामित्यनुवर्तनादाह—**मतुप्चेति** । अत्र '**स्वाङ्गा-
द्विवृद्धौ**' इति पठ्यते । विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयः स्युः । विवृद्धौ कर्णावस्य-कर्णिलः कर्णी कर्णिकः
कर्णवान् । **एकगोपूर्वात्** । **ऐकशतिक इति** । एकं च तच्छतं चेति 'पूर्वकाले'त्यादिना कर्मधारयः । षष्ठीतत्पुरु-
षाद्बहुव्रीहेर्द्वन्द्वाच्च न भवति, अनभिधानादिति हरदत्तादयः । 'अत' इत्येव । नेह—एकविंशतिरस्यास्तीति । नित्य-
ग्रहणं मतुपो बाधनार्थम् । अन्यथा ठञा इनिठनोर्बाधे कृतेऽप्यन्यतरस्याङ्ग्रहणानुवृत्त्या मतुप् स्यादेवेत्याहुः । कथं
'एकद्रव्यवानिति ? । असाधुरेवायम् । एकेन द्रव्यवानिति वा विग्रहीतव्यम् । कथमेकदण्डीति ? । 'एकदेशिनैकाधि-
करणे' इति निर्देशो ज्ञापयति-'इनिरपि क्वचिद्भवती'ति । **रूपादाहत** । आहतप्रशंसाविशिष्टेऽर्थे वर्तमानाद्रूप-

बा.]ऽप्रसक्तेस्तत्र ऊर्जसित्यसुन्नन्तं प्रातिपदिकमवश्यमभ्युपेयम् । तेनैव ऊर्जस्विन्नूर्जस्वलयोर्विनिवलज्मात्रनिपातनोप-
पत्तेरित्यर्थः । **ईमसच्चेति** । मलशब्दान्निपात्यत इति शेषः । **अत इनिठनौ** । अदन्तान्मत्वर्थे इनि ठन् एतौ स्त
इत्यर्थः । समुच्चयार्थकान्यतरस्याङ्ग्रहणानुवृत्तेर्मतुबपि भवति । 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति
भाष्यम् । एकाक्षरात्-स्ववान् , कृतः-कारकवान्, जातेः-वृक्षवान्, सप्तम्यां-दण्डा अस्यां शालायां सन्ति दण्डवती ।
इदं प्रायिकम् । तेन कार्यी कार्यिकः, तण्डुली तण्डुलिक इत्यादि सिद्धमिति भाष्ये स्पष्टम् । **व्रीह्यादिभ्यश्च** ।
'मत्वर्थे इनिठनौ' इति शेषः । **शिखामालेत्यादि** । वार्तिकमिदम् । 'शिखा, माला, संज्ञा, वीणा, बडवा, बलाका,
पताका, वर्मन्, शर्मन् एभ्य इनिरेव, नतु ठनित्यर्थः । **यवखलेति** । यवखल, नौ, कुमारी एभ्यष्ठनेव, न त्विनि-
रित्यर्थः । परिशिष्टेभ्यस्तु व्रीह्यादिगणपठितेभ्य उभावित्यर्थसिद्धम् । इदं वृत्तौ स्पष्टम् । **तुन्दादिभ्य इलच्च** ।
**मतुप्चेति** । समुच्चयार्थकाऽन्यतरस्याङ्ग्रहणानुवृत्तेरिति भावः । उदरादयश्चत्वारस्तुन्दादिगणपठिताः । **स्वाङ्गाद्वि-
वृद्धाविति** । गणसूत्रमिदम् । वृद्धविषयात्वात्स्वाङ्गादिलच् , इनिठनौ मतुप्चेत्यर्थः । **कर्णिल इति** । वृद्धौ कर्णौ
यस्येति विग्रहः । **एकगोपूर्वाट्ठञ्नित्यम्** । एकपूर्वाद्गोपूर्वाच्च नित्यं ठञ्स्यादित्यर्थः । यद्यपि नित्यग्रहणाऽभावे-
ऽपि ठञा इनिठनोर्निवृत्तिः सिध्यति, तथापि समुच्चयार्थकाऽन्यतरस्याङ्ग्रहणानुत्त्या मतुप्समुच्चीयेत, तन्निवृत्त्यर्थं
नित्यग्रहणम् । **ऐकशतिक इति** । 'पूर्वकाल' इति समासः । 'सङ्ख्यायाः संवत्सर'इत्युत्तरपदवृद्धिस्तु न, तत्र
प्रतिपदोक्ततद्धितार्थसमासस्यैव ग्रहणात् । **शतसहस्र** । **निष्कात्परावििति** । असामर्थ्येऽपि सौत्रत्वात्समास इति
भावः । **रूपादाहत** । आहतेति भावे क्तः । आहतविशेषणकात्प्रशंसाविशेषणकाच्च रूपशब्दान्मत्वर्थे यप्स्यादि-

शे.]**अत इति** । 'एकाक्षरात्कृतो जातेः सप्तम्याश्च न तौ स्मृतौ'-इति भाष्यम् । यवव्रीहीति व्रीह्यादिगणे पाठादिहाऽर्थग्रहणम् ।
तेन शालिलः [शौली शालिमान् ] शालिक इति सिद्धमिति वृत्तिः । **एकगोपू** ] सूत्रे बहुव्रीहिः । अधिकारप्राप्तं प्रातिपदिकादि-
त्यन्यपदार्थः । **ऐकशतिक इति** । 'पूर्वकालैके'ति समासः । 'तद्धितार्थोत्तरपदे'ति समासस्य मत्वर्थेऽनभिधानेनाऽप्रवृत्तेः ।
'सङ्ख्यायाः सम्वत्सरे'त्युत्तरपदवृद्धिस्तु न, तत्र सङ्ख्यापदमुच्चार्य विहितस्य तद्धितार्थेति समासस्यैव प्रतिपदोक्ततया ग्रहणात् ।
अत्राऽत इति निवृत्तम् । अत एव गोशकटिरस्यास्तीति विग्रहे ऽपि 'गौशकटिक' इत्येव । न तु गोशकटिमानिति । गोविंशति[रेक-
विंशति]रस्यास्तीत्यादौ त्वनभिधानान्नेति स्पष्टं भाष्ये । द्वन्द्वोपतापेत्यादौ मण्डूकप्लुत्याऽत इत्यस्य सम्बन्धः, 'समासान्ताः' इति
सूत्रस्थभाष्यादित्यलम् । **निष्कात्परावििति** । सूत्रेऽसामर्थ्येऽपि सौत्रत्वात्समासः । अन्तग्रहणं शतादिपूर्वान्निष्कादित्यर्थनिरासार्थम् ।

रूपमस्यास्तीति रूप्यः कार्षापणः । प्रशस्तं रूपमस्यास्तीति रूप्यो गौः । आहतेति किम् ? । रूपवान् ।
* अन्येभ्योऽपि दृश्यते । हिम्याः पर्वताः । गुण्या ब्राह्मणाः । **अस्मायामेधास्रजो विनिः** ।५।२।१२१।
यशस्वी । यशस्वान् । मायावी । व्रीह्यादिपाठादिनिठनौ । मायी । मायिकः । क्विन्नन्तत्वात्कुः । स्रग्वी ।
* **आमयस्योपसङ्ख्यानं दीर्घश्च** । आमयावी । * **शृङ्गवृन्दाभ्यामारकन्** । शृङ्गारकः । वृन्दारकः ।
* **फलबर्हाभ्यामिनच्** । फलिनः । बर्हिणः । * **हृदयाच्चालुरन्यतरस्याम्** । [इनिठनौ मतुप् च ] ।
हृदयालुः । हृदयी । हृदयिकः । हृदयवान् । * **शीतोष्णतृप्रेभ्यस्तदसहने** । शीतं न सहते शीतालुः ।
उष्णालुः । 'स्फायितञ्ची'ति रक् । तृप्रः पुरोडाशः । तं न सहते तृप्रालुः । तृप्रं दुःखमिति माधवः ।
* **हिमाच्चेलुः** । हिमं न सहते हिमेलुः । * **बलादूलः** । बलं न सहते बलूलः । **वातात्समूहे च** ।
वातं न सहते, वातस्य समूहो वा वातूलः । * **तप्पर्वमरुद्भ्याम्** । पर्वतः । मरुत्तः । **ऊर्णाया युस्**

त.]शब्दान्मत्वर्थे यप् स्यात् । **आहतमिति** । आहननमाहतं=ताडनमित्यर्थः । ततो निष्पन्नं यत्कार्षापणादिरूपं तदपि कार्ये कारणोपचारादाहतमित्युच्यते इत्याहतरूपयोः सामानाधिकरण्यमुपपद्यते । **हिम्या इति** । भूम्नि यप् । **पर्वता इति** । हिमवान्, तत्पर्यन्तवर्तिनश्च । **गुण्या इति** । दशिग्रहणादिनिरपि । तथा च माघः—'गुण्यगुण्य इति न व्यजीगणत्' । गुणी-अगुण्य इति पदच्छेदः । **अस्मायामेधा** । **यशस्वीति** । 'तसौ मत्वर्थे' इति भत्वाद्रुत्वं न । **यशस्वानिति** । नित्यग्रहणात्पूर्वत्राऽसंबद्धमप्यन्यतरस्याङ्ग्रहणं मतुप्समुच्चयार्थमिह संबध्यत एव । 'तसौ मत्वर्थे' इति सूत्रे यशस्वी यशस्वानिति भाष्योदाहरणादिति भावः । 'चोः कु'रित्यनेन सिद्धे व्रश्चादिषत्वमाशङ्क्याह—**क्विन्नन्तत्वादिति** । **हृदयाच्चालुरन्यतरस्याम्** । अन्यतरस्याङ्ग्रहणमिनिठनोः प्राप्त्यर्थम् । मतुप् सर्वत्र समुच्चीयत एव । चकारस्य 'चुटू' इतीत्संज्ञा । तेन हृदयालुशब्दोऽन्तोदात्त इत्याहुः । **शीतोष्णेति** । इह चालुरनुवर्तते । **पुरोडाश इति** । 'न तृप्रा उरुव्यचस'मिति मन्त्रस्य भाष्ये तथा व्याख्यातत्वादिति भावः । **माधव इति** । सुब्धातुवृत्तौ स्थितमिदम् । **हिमाच्चेलुरिति** । एकारादिरयं प्रत्यय इति माधवः । **बलादिति** । सिध्मादिषु बलूलवातूलशब्दौ मत्वर्थे प्रकारान्तरेण व्युत्पादितौ । **तप्पर्वमरुद्भ्याम्** । पित्त्वमनुदात्त-

बा.]त्यर्थः । **आहतं रूपमिति** । आहतेन निष्पन्नं स्वरूपं यस्येति विग्रहे रूपशब्द इत्यर्थः । **रूप्यः कार्षापण इति** । परिमाणविशिष्टो रजतसुवर्णादिर्मुद्रिकाविशेषयुक्तः कार्षापण इत्युच्यते । तत्स्वरूपं च स्वर्णकारकृता हननिष्पाद्यमिति बोध्यम् । **रूप्यो गौरिति** । प्रशस्तरूपसम्पन्न इत्यर्थः । **अन्येभ्योऽपीति** । वार्तिकमिदम् । रूपशब्दादन्येभ्योऽपि यप्दृश्यत इत्यर्थः । **हिम्याः पर्वता इति** । भूम्नि यप् । बहुलं हिममेष्वस्तीति विग्रहः । **गुण्या ब्राह्मणा इति** । प्रशंसायां यप् । प्रशस्तगुणसम्पन्ना इत्यर्थः । **अस्मायामेधा** । 'अ'सित्यनेन असन्तं विवक्षितम् । असन्त, माया, मेधा, स्रज् एभ्यो विनिप्रत्ययः स्यादित्यर्थः । प्रत्यये नकारादिकार उच्चारणार्थः । **यशस्वीति** । 'तसौ मत्वर्थे' इति भत्वान्न रुत्वमिति भावः । **यशस्वानिति** । 'एकगोपूर्वा'दिति सूत्रे नित्यग्रहणेन निवृत्तमपि समुच्चयार्थमन्यतरस्याङ्ग्रहणमिह मण्डूकप्लुत्या अनुवर्तते, 'तसौ मत्वर्थे' इति सूत्रे यशस्वानिति भाष्योदाहरणादिति भावः । स्रग्वीत्यत्र 'व्रश्चे'ति षत्वमाशङ्क्याह—**क्विन्नन्तत्वादिति** । **आमयस्येति** । आमयशब्दान्मत्वर्थे विनिः प्रकृतेर्दीर्घश्चेत्यर्थः । **शृङ्गवृन्दाभ्यामिति** । **फलबर्हाभ्यामिति** । **हृदयाच्चालुरिति** । वार्तिकत्रयमिदम् । **मतुप्चेति** । 'वक्तव्य' इति शेषः, भाष्ये तथोक्तत्वात् । चुटू इति चकारस्येत्संज्ञा । अन्यतरस्यांग्रहणाच्चालोरभावे इनिठनौ । समुच्चयार्थकान्यतरस्याङ्ग्रहणानुवृत्तेर्मतुबपि । तथा चाऽत्र चत्वारः प्रत्ययाः । तदाह—**हृदयालुरित्यादि** । 'शीतोष्णतृप्रेभ्यस्तन्न सहते' इति वार्तिकमर्थतः सङ्गृह्णाति—**शीतेति** । शीत, उष्ण, तृप्र-एभ्यो द्वितीयान्तेभ्यो न सहते इत्यर्थे चालुर्वक्तव्य इत्यर्थः । **तृप्रः पुरोडाश इति** । मन्त्रभाष्ये तथोक्तत्वादिति भावः । **हिमाच्चेलुरिति** । वार्तिकमिदम् । हिमशब्दाद्द्वितीयान्तान्न सहत इत्यर्थे चेलुः स्यादित्यर्थः । चकार इत् । **बलादूल इति** । 'तन्न सहते इत्यर्थे वक्तव्य' इति शेषः । **वातात्समूहे चेति** । षष्ठ्यन्ताद्वातशब्दात्समूहेऽर्थे, द्वितीयान्तान्न सहते इत्यर्थे च ऊलप्रत्ययो वाच्य इत्यर्थः । **तप्पर्वमरुद्भ्यामिति** । वार्तिकमिदम् । पर्वमरुद्भ्यां तप्वक्तव्य इत्यर्थः । 'तन्वक्तव्य' इति वृत्तिकृत्, हरदत्तश्च । प्रौढमनोरमायां तु नित्त्वं निराकृतम् । शब्देन्दुशेखरे तु हरदत्तसंमतं नित्त्वमेव स्थापितम् । रूढत्वादवयवार्थाऽभावान्न मतुप् । **ऊर्णाया युस्** । ऊर्णायुशब्दे 'यस्येति

शे.]इनजिति पाठः । **हृदयी हृदयिक इत्यादि** । अनेनान्यतरस्याङ्ग्रहणेनाऽत इनीत्यस्य प्रवृत्तौ तत्र मतुप्समुच्चयबोधकान्यतरस्याङ्ग्रहणानुवृत्तेः । प्रत्ययत्रयसौलभ्यमिति भावः । **तप्पर्व** । पिदयमित्येके । निदयं, मरुद्भिर्दत्तो मरुत्त इत्येवं मरुत्तं साधयित्वाऽस्य भाष्ये

।५।२।१२३। सित्वात्पदत्वम् । ऊर्णायुः । अत्र छन्दसीति केचिदनुवर्तयन्ति । युक्तं चैतत् । अन्यथा हि 'अहंशुभमो'रित्यत्रैवोर्णाग्रहणं कुर्यात् । **वाचो ग्मिनिः** ।५।२।१२४। वाग्मी । **आलजाटचौ बहुभाषिणि** ।५।२।१२५। *कुत्सित इति वक्तव्यम् । कुत्सितं बहु भाषते वाचालः । वाचाटः । यस्तु सम्यग्बहु वदति तत्र वाग्मीत्येव । **स्वामिन्नैश्वर्ये** ।५।२।१२६। ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच् । स्वामी । **अर्शआदिभ्योऽच्** ।५।२।१२७। अर्शांस्यस्य विद्यन्ते अर्शसः । आकृतिगणोऽयम् । **द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः** ।५।२।१२८। द्वन्द्व—कटकवलयिनी । शङ्खनूपुरिणी । उपतापो रोगः । कुष्ठी । किलासी । गर्ह्यं=निन्द्यम् । ककुदावर्ती । काकतालुकी । प्राणिस्थात्किम् ? । पुष्पफलवान्घटः । *प्राण्यङ्गान्न । पाणिपादवती । 'अत'इत्येव । चित्रकललाटिकावती । सिद्धे प्रत्यये पुनर्वचनं ठनादिबाधनाऽर्थम् ।

त.]त्वार्थम् । काशिकायां तु 'पर्वमरुद्भ्यां तन्वक्तव्यः' इति स्थितम् । हरदत्तेन तु 'त'मिति प्रतीकमुपादाय आद्युदात्तत्वार्थो नकार इत्युक्तम् । तच्च मनोरमायां महता प्रबन्धेन दीक्षितैर्निराकृतं तत एव तदवधार्यम् । **पदत्वमिति** । तेन 'यस्येति चे'ति लोपो न प्रवर्तत इति भावः । **अनुवर्तयन्तीति** । 'बहुलं छन्दसी'त्यतः । **वाचो ग्मिनिः** । इकारो नकारपरित्राणार्थः । चकारस्य कुत्वे जश्त्वे च कृते वाग्मी वाग्मिनावित्यादौ द्वयोर्गकारयोः श्रवणं भवति । द्वित्वे तु—त्रयाणाम् । 'मिनिः' इत्युक्ते तु द्वित्वे सति द्वयोर्गकारयोः श्रवणं, द्वित्वाऽभावे त्वेकस्यैव श्रवणं स्यात् । किंच 'यरोऽनुनासिके', 'प्रत्यये भाषायां नित्य'मिति वाङ्मयमित्यत्रेव नित्यमनुनासिकः प्राप्नोति, तच्चाऽनिष्टमिति ग्मिनिः कृतः । **स्वामिन्नैश्वर्ये** । **ऐश्वर्यवाचकादिति** । स्वशब्दस्यैश्वर्यवाचित्वमेतद्वृत्तिविषयकमेवेति बोध्यम् । ईशिता हि ईश्वरः । स तु स्वामीत्युच्यते । यथा वागीश एव वाचस्पतिः वाचः स्वामीति । ऐश्वर्ये किम् ? । स्ववान् । **अर्शआदिभ्योऽच्** । इह 'स्वाङ्गाद्धीना'दिति गणे पठ्यते । खञ्जः पादोऽस्यास्तीति खञ्जः । काणं

बा.]चे'ति लोपमाशङ्कयाह—**सित्वादिति** । **अनुवर्तयन्तीति** । 'बहुलं छन्दसीत्यस्मा'दिति शेषः । **वाचो-ग्मिनिः** । वाच्शब्दान्मत्वर्थे ग्मिनिप्रत्ययः स्यादित्यर्थः । नकारादिकार उच्चारणार्थः । अतद्धित इति पर्युदासादकारस्य नेत्संज्ञा । **वाग्मीति** । वाच्शब्दात्–ग्मिनिप्रत्यये कुत्वं, जश्त्वम् । प्रत्यये गकारोच्चारणं तु 'प्रत्यये भाषाया'मित्यनुनासिकाऽभावार्थम् । **आलजाटचौ** । वाच्शब्दात्—आलच्, आटच् एतौ मत्वर्थे बहुभाषिणीत्यर्थः । ग्मिनोऽपवादः । **यस्तु सम्यगिति** । नच अबहु अकुत्सितं च यो वदति तत्रापि वाग्मीति कुतो न भवतीति वाच्यं, 'यो हि सम्यग्बहु भाषते वाग्मीत्येव स भवती'ति भाष्यबलेन पूर्वसूत्रस्य सम्यग्बहुभाषिण्येव प्रवृत्तेरभ्युपगमादिति भावः । **स्वामिन्नैश्वर्ये** । 'ऐश्वर्ये' इति प्रकृतिविशेषणमित्यभिप्रेत्याह—**ऐश्वर्यवाचकादिति** । **आमिनजिति** । 'निपात्यते' इति शेषः । **स्वामीति** । स्वम्=ऐश्वर्यं, तद्वानित्यर्थः । नियन्तेति यावत् । ऐश्वर्ये इत्युक्तेर्धनवानित्यर्थे स्वामीति न भवति । **अर्शआदिभ्योऽच्** । अर्शस्शब्द आदिरेषामिति विग्रहः । **अर्शस इति** । अर्शो–गुदरोगविशेषः । **द्वन्द्वोपताप** । द्वन्द्वसमासादुपतापवाचकाद्गर्ह्यवाचकाच्च प्राणिस्थविषयेभ्यो मत्वर्थे इनिः स्यादित्यर्थः । द्वन्द्वेति उदाहरणसूचनम् । **कटकवलयिनीति** । कटकवलययोः कश्चिदाकृतिभेदं परिकल्प्य द्वन्द्व उपपाद्यः । उपताप इत्यस्य विवरणं—**रोग इति** । **किलासः**-कुष्ठभेदः । **गर्ह्यमित्यस्य विवरणं—निन्द्यमिति** । **ककुदावर्तीति** । ककुदं ग्रीवाया अधस्तात्पृष्ठभागः । तत्र आवर्तः ककुदावर्तः, सोऽस्यास्तीति विग्रहः । **काकतालुकिनीति** । काकस्येव तालुके काकतालुके, तं अस्याः स्त इति विग्रहः । **प्राण्यङ्गान्नेति** । व्याख्यानमेवात्र शरणम्, एवंविधवार्तिकस्य भाष्ये अदर्शनात् । **अत इत्येवेति** । समासान्त इति सूत्रभाष्यरीत्या मण्डूकप्लुत्या तदनुवृत्तेरिति भावः । **चित्र-**

शे.]प्रत्याख्यानात् । तत्र हि मरुत उपसर्गत्वे उपसङ्ख्यानेनोपसर्गत्वसामर्थ्यादजन्तत्वाऽभावेऽप्यच उपसर्गादिति तत्वम् । तत्र तत्वविधावुपसङ्ख्यानेन सिद्धे प्रथमे उपसर्गसञ्ज्ञायामुपसङ्ख्यानमनेकसञ्ज्ञालाभार्थमिति निपातत्वान्मरुत आद्युदात्तत्वेन 'तृतीया कर्मणी'ति पूर्वपदप्रकृतिस्वरेण मरुत्तस्याद्युदात्तत्वम् । एताश्च सञ्ज्ञास्तत्वविषया एवेति मरुद्भिर्दत्त इति भाष्यप्रयोगो नानुपपन्नः । पचच फलाऽभेदाय निरवमेवोचितम् । पित्वेतु मध्योदात्तत्वं स्यादित्यपरे । एतद्विषये मतुप् न, अस्य रूढिशब्दत्वादवयवार्थाऽभावेन तदप्राप्तेरित्यन्यत्र विस्तरः । **पदत्वमिति** । तेन 'यस्ये'ति लोपो न । **अनुवर्तयन्तीति** । 'बहुलं छन्दसी'त्यतः । **वाचो ग्मिनिः** । गकारोच्चारणं 'प्रत्यये भाषाया'मित्यनुनासिकाऽभावाय । उत्तरसूत्रस्थबहुभाषिणीत्यस्याऽत्रापि सम्बन्धात्सम्यक् बहुभाषिणि वाग्मीति बोध्यम् । **ऐश्वर्येति** । तेन धनवानित्यर्थे स्वामीति न । **कटकवलयिनीति** । कटकवलययोः कश्चिद्भेदं परिकल्प्य द्वन्द्व उपपाद्यः । **अत इत्येवेति** । 'समासान्ता' इति सूत्रस्थभाष्यात् । मण्डूकप्लुत्या तदनुवर्तत इति भावः । **ठनादीति** । आदिना

**वातातीसाराभ्यां कुक् च** ।५।२।१२९। चादिनिः । वातकी । अतीसारकी । *रोगे चायमिष्यते । नेह—वातवती गुहा । *पिशाचाच्च । पिशाचकी । **वयसि पूरणात्** ।५।२।१३०। पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्याद्वयसि द्योत्ये । मासः संवत्सरो वा पञ्चमोऽस्यास्तीति पञ्चमी उष्ट्रः । ठन्बाधनार्थमिदम् । वयसि किम् ? । पञ्चमवान्ग्रामः । **सुखादिभ्यश्च** ।५।२।१३१। इनिर्मत्वर्थे । सुखी । दुःखी । (ग) माला क्षेपे । माली । **धर्मशीलवर्णान्ताच्च** ।५।२।१३२। धर्माद्यन्तादिनिर्मत्वर्थे । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी । **हस्ताज्जातौ** ।५।२।१३३। हस्ती । जातौ किम् ? । हस्तवान्पुरुषः । **वर्णाद्ब्रह्मचारिणि** ।५।२।१३४। वर्णी । **पुष्करादिभ्यो देशे** ।५।२।१३५। पुष्करिणी । पद्मिनी । देशे किम् ? । पुष्करवान् हस्ती । * बाह्रूरुपूर्वपदाद्बलात् । बाहुबली । ऊरुबली । * सर्वादेश्च : सर्वधनी । सर्वबीजी । * अर्थाच्चाऽसंनिहिते । अर्थी । संनिहिते तु-अर्थवान् । * तदन्ताच्च । धान्यार्थी । हिरण्यार्थी । **बलादिभ्यो मतुबन्यतरस्याम्** ।५।२।१३६। बलवान् । बली । उत्साहवान् । उत्साही । **संज्ञायां मन्माभ्याम्**

---

त.] चक्षुर्यस्यास्तीति काणः । **प्रथिमिनीति** । 'पृथ्वादिभ्यः' इतीमनिचि 'टे'रिति टिलोपः । 'र ऋतः' इति रभावः । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ती'ति मन्नन्तादिनौ कृते 'नस्तद्धिते' इति टिलोपे नान्तत्वान्ङीप् । **दामिनीति** । दाधातोर्मनिन् । **होमिनी** । **सोमिनीति** । 'अर्तिस्तुसुहुसृधृक्षी'त्यौणादिकेन मनि

---

बा.] **कलललाटिकावतीति** । चित्रकं च ललाटिका चेति द्वन्द्वः । अदन्तत्वाऽभावादिनिर्नेति भावः । ननु 'अत इनिठनौ' इत्यतोऽनुवृत्त्यैव सिद्धे पुनरिह इनिग्रहणं किमर्थमित्यत आह—**सिद्धे प्रत्यये इति** । **ठनादीति** । आदिना मतुपः संग्रहः । **वातातीसाराभ्यां** । **चादिनिरिति** । वात, अतीसार आभ्यां मत्वर्थे इनिः स्यात् प्रकृतेः कुक् चेत्यर्थः । कुकि ककार इत् । उकार उच्चारणार्थः । कित्त्वादन्तावयवः । **वातकीति** । वातरोगवानित्यर्थः । **अतीसारकीति** । अतीसाररोगवानित्यर्थः । **रोगे चायमिति** । व्याख्यानादिति भावः । रोग एवेत्यर्थः । **वातवती गुहेति** । अत्र रोगस्याऽप्रतीतेरिनिकुकौ नेति भावः । **पिशाचाच्चेति** । वार्तिकमिदम् । पिशाचादिनिः, प्रकृतेः कुक्चेत्यर्थः । **वयसि पूरणात्** । 'अत इनिठना'वित्येव इनिसिद्धेः किमर्थमिदमित्यत आह—**ठनादिबाधनार्थमिति** । **सुखादिभ्यश्च** । **इनिर्मत्वर्थे इति** । इनिरेव, नतु ठनित्यर्थः । **माला क्षेपे इति** । सुखादिगणसूत्रमिदम् । **धर्मशील** । **धर्माद्यन्तादिति** । धर्म, शील, वर्ण—एतदन्तादिनिरेवेत्यर्थः । **हस्ताज्जातौ** । हस्तान्मत्वर्थे इनिरेव, समुदायेन जातिविशेषे गम्ये इत्यर्थः । **वर्णाद्ब्रह्मचारिणि** । वर्णशब्दान्मत्वर्थे इनिरेव, समुदायेन ब्रह्मचारिणि गम्ये इत्यर्थः । **वर्णीति** । वर्णः=ब्राह्मणादितत्तद्वर्णोचितवसन्तादिकाले उपनयनम्, सोऽस्यास्तीति विग्रहः । **पुष्करादिभ्यो देशे** । पुष्करशब्दान्मत्वर्थे इनिरेव स्याद्देशे गम्ये । **बाहुरुपूर्वपदाद्बलादिति** । वार्तिकमिदम् । बाहु, ऊरु एतत्पूर्वपदकाद्बलशब्दान्तान्मत्वर्थे इनिरेवेत्यर्थः । **सर्वादेश्चेति** । वार्तिकमिदम् । 'इनिरेवे'ति शेषः । **अर्थाच्चासंनिहिते इति** । वार्तिकमिदम् । असन्निहितविषयकादर्थशब्दादिनिरेवेत्यर्थः । **अर्थीति** । असंनिहितोऽर्थोऽस्येति विग्रहः । अर्थो नास्तीति यावत् । अत्र विरोधादस्तीति न सम्बध्यते । अर्थोऽसंनिहितोऽस्येत्यर्थे अप्राप्त एव इनिर्विधीयत इति कैयटः । प्रत्ययविधौ तदन्तविधिनिषेधादाह—**तदन्ताच्चेति** । अर्थशब्दान्तादपि इनिर्वक्तव्य इत्यर्थः । **बलादिभ्यो** । मतुबभावपक्षे संनिहित इनिरित्यभिप्रेत्योदाहरति—**बलवान् बलीति** । **संज्ञायां मन्माभ्याम्** । **प्रथिमिनीति** । 'पृथ्वादिभ्य इमनिज्वे'ति इमनिजन्तः प्रथिमन्शब्दः । अत्र मनोऽनर्थकत्वेऽपि 'अनिनस्म'न्निति तदन्तविधिना इमनिजन्तोऽपि गृह्यते । प्रथिमन्शब्दादिनिप्रत्यये टिलोपे नान्तलक्षणङीपि प्रथिमिनीशब्दः । **दामिनीति** । दामन्शब्दादिनौ टिलोपे ङीबिति

---

शे.] मतुपो ग्रहणम् । मतुप्समुच्चयार्थान्यतरस्याङ्ग्रहणस्य-'एकगो' इति सूत्रे नित्यग्रहणात्, 'बलादिभ्यो मतु'बिति सूत्रेऽन्यतरस्याङ्ग्रहणाच्चाऽसम्बन्ध इति भावः । 'अस्मायेत्यत्र तु सम्बध्यत एव, 'तसा'विति सूत्रे 'यशस्वा'निति भाष्ये उदाहरणात्, 'प्रकृत्यैका'जिति सूत्रे 'स्रग्वत्तर' इति भाष्ये उदाहरणाच्चेति बोद्धव्यम् । **वातातीसा** । कुगर्थमेवेदम्, अदन्तत्वादेवेनेः सिद्धत्वादिति वृत्तिः । **ठन्बाधनार्थमिति** । सामान्यसूत्रेण सिद्धेः । सूत्रस्य फलान्तराऽभावाच्च । **वर्णाद्ब्र** । वर्णोऽत्र वेदाध्ययनार्थं ब्रह्मचर्यम् । **अर्थाच्चेति** । अर्थशब्दोऽत्र धनवाची । कालतोऽत्राऽसन्निधिर्न देशतः । तत्र विरोधादस्तीत्यस्याऽसम्बन्ध इत्यप्राप्त एवेनिर्विधीयते । सत्तोपाधिकादिनिठनोरभावः, अनभिधानात् । अत एव 'असन्निहित इति किमर्थम् ? । अर्थवान्' इति भाष्ये उक्तम् । 'अर्थी समर्थो विद्वान्यः शास्त्रानुपहतश्च यः' इति त्वार्षम् । अर्थनमर्थ इति क्रियाशब्दात्सत्तोपाधिकादिनिठनौ भवत एव । मतुप्तु न, अनभिधानात् । तेनाऽर्थिकप्रत्यर्थिकौ, धान्यार्थीत्यादि च सिद्धम् । धान्यकरणकप्रार्थनावानित्यर्थः । **बलादिभ्यो** । अन्यतरस्याङ्ग्रहणं 'द्वन्द्वोपतापे'ति प्रकृतस्येनेः समुच्चयार्थम् । तेनेतरमात्रेण । **प्रथिमिनीति** । इमनिजन्ता प्रकृतिः । 'अनिनस्मन्नि'त्यनर्थकेनापि

।५।२।१३७। मन्नन्तान्मान्ताच्चेनिर्मत्वर्थे । प्रथिमिनी । दामिनी । होमिनी । म-सोमिनी । संज्ञायां किम् ? । सोमवान् । **कंशंभ्यां बभयुस्तितुतयसः** ।५।२।१३८। 'कं' 'शं'मिति मान्तौ । 'क'मित्युदकसुखयोः । 'श'मिति सुखे । आभ्यां सप्त प्रत्ययाः । स्युः । युस्यसोः सकारः पदत्वार्थः । कम्बः । कम्भः । कँय्युः । कन्तिः । कन्तुः । कन्तः । कँय्यः । शम्बः । शम्भः । शँय्युः । शन्तिः । शन्तुः । शन्तः । शँय्यः । अनुस्वारस्य वैकल्पिकः परसवर्णः । वकारयकारपरस्यानुनासिकौ वयौ । **तुन्दिवलिवटेर्भः** ।५।२।१३९। वृद्धा नाभिस्तुन्दिः । मूर्धन्योपधोऽयमिनि माधवः । तुन्दिभः । वलिभः । वटिभः । पामादित्वाद्वलिनोऽपि । **अहंशुभमोर्युस्** ।५।२।१४०। अहमिति मान्तमव्ययमहङ्कारे । शुभमिति शुभे । अहंयुः-अहङ्कारवान् । शुभंयुः-शुभान्वितः । इति मत्वर्थीयाः ।

## अथ प्राग्दिशीयाः ।

**प्राग्दिशो विभक्तिः** ।५।३।१। 'दिक्शब्देभ्य' इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः । अथ स्वार्थिकाः प्रत्ययाः । 'समर्थाना'मिति 'प्रथमा'दिति च निवृत्तम् । 'वे'ति त्वनुवर्तत एव । **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः** ।५।३।२। 'किमः सर्वनाम्नो बहुशब्दाच्चे'ति प्राग्दिशोऽधिक्रियते । इदम्

---

त.]नित्वाद्धोमसोमशब्दौ मप्रत्ययान्तौ । **कंशंभ्याम्** । **पदत्वार्थ इति** । अन्यथा 'कम्युः, काम्यः, शम्युः, शाम्यः' इति स्यादिति भावः । **वकारयकारपरस्येति** । बहुव्रीहिरियम् । **अनुनासिकौ वयाविति** । एतेन प्रथम-प्रत्ययः दन्त्योष्ठ्यादिः, न तु पवर्गतृतीय इति ध्वनितम् । **माधव इति** । 'तुडि तोडने' इति धातौ तेनोक्तं— 'वृद्धा नाभिस्तुण्डिः' । इन् । तुण्डिरस्यास्तीति तुण्डिलः । 'तुन्दादिभ्य इलच्चे'त्यत्र 'स्वाङ्गाद्विवृद्धौ' इति गणसूत्रेण इलच् । तुण्डिल एव तुण्डिभः । 'तुण्डिवलिवटेर्भः' इति मत्वर्थीयो भ' इति । **वटिभ इति** । 'वट वेष्टने' इन् । वटिशब्दः पामादिषु पठ्यते । तेन 'वटिन' इत्यपि भवति । **अहंयुः** । **शुभंयुरिति** । पूर्ववदनुस्वारपरसवर्णौ ।

## इति मत्वर्थीयाः ।

**किंसर्वनाम** । द्व्यादिपर्युदासात्किमः पृथग्ग्रहणम् । द्व्यादिषु किंशब्दपाठे प्रयोजनं तु-त्वं च

---

बा.]भावः । **मेति** । मान्तोदाहरणसूचनमिदम् । **होमिनी सोमिनीति** । होमशब्दात्सोमशब्दाच्च इनौ ङीबिति भावः । **कंशंभ्याम्** । व, भ, युस्, ति, तु, त, यस्, एषां सप्तानां द्वन्द्वात् प्रथमाबहुवचनम् । **सप्त प्रत्ययाः स्युरिति** । 'मत्वर्थे' इति शेषः । **पदत्वार्थ इति** । अन्यथा कमित्यस्माद्युप्रत्यये यप्रत्यये च कृते भत्वात्पदत्वा-ऽभावादनुस्वारो न स्यादिति भावः । **वकारयकारपरस्येति**-बहुव्रीहिः । वकारपरकस्य यकारपरकस्य चानुस्वार-स्येत्यर्थः । **तुन्दिवलि** । तुन्दि, वलि, वटि एभ्यो मत्वर्थे भप्रत्ययः स्यादित्यर्थः । समाहारद्वन्द्वात्पञ्चम्येकवचनम् । पुंस्त्वमार्षम् । **वटिभ इति** । 'वट वेष्टने' । वटनं वटिः । सोऽस्यास्तीति विग्रहः । **अहंशुभमोर्युस्** । अहंयुः शुभंयुरित्यत्र युल्लुकमाशङ्क्याह-**अहमित्यादीति** । सित्त्वं पदत्वार्थम् । तेन पदत्वादनुस्वारे परसवर्णः सिध्यति ।

## इति मत्वर्थीयाः ।

अथ पञ्चमाध्यायस्य तृतीयापादे प्राग्दिशीयप्रकरणं निरूप्यते । **प्राग्दिशो विभक्तिः** । दिक्छब्देन तद्घटितं सूत्रं विवक्षितमित्यभिप्रेत्याह—**दिक्छब्देभ्य इत्यत इति** । **विभक्तिसंज्ञका इति** । तत्फलं तु 'न विभक्तौ तुस्माः' इति निषेधः, त्यदाद्यत्वम्, इदम 'ऊडिदंपदादी'ति स्वरश्च । **स्वार्थिका इति** । स्वीयप्रकृत्यर्थे भवा इत्यर्थः । तसिलादिष्वर्थनिर्देशाऽभावात्, 'अतिशायने' इत्यादीनां प्रकृत्यर्थविशेषणत्वाच्चेति भावः । **निवृत्तमिति** । अत्रोपपत्तिः-'समर्थाना'मित्यत्रोक्ता । **अनुवर्तत एवेति** । व्याख्यानमेवात्र शरणम् । **किंसर्वनाम** । अद्व्यादिभ्य इति च्छेदः । प्राग्दिश इत्यनुवर्तते । तदाह—**प्राग्दिशोऽधिक्रियत इति** । विधेयाऽनिर्देशादधिकारोऽयमिति भावः । किमः सर्वनामत्वेऽपि द्व्यादिपर्युदासात्पृथग्ग्रहणम् । द्व्यादिषु किंशब्दपाठस्तु त्वं च कश्च कौ, अहं च कश्च कौ इत्यत्र 'त्यदादीनां मिथः सहोक्तौ' इति किमः शेषत्वार्थः । अथ वक्ष्यमाणतसिलादिप्रत्यये परे कार्यविशेषा-नाह —**इदम इशित्यादिना** । **इदम इश्** । **'प्राग्दिशीये परे' इति**—शेषपूरणम् । प्रकरणलभ्यमिदम् । शित्वात्सर्वादेशः । 'इत' इत्युदाहरणम् । **एतेतौ रथोः** । 'इदम' इत्यनुवर्तते । एतश्च इच्चेति द्वन्द्वात्प्रथमा-

---

दो.]तदन्तविधिः । **मेति** । मान्तस्योदाहरणमित्यर्थः । **वकारयकारपरस्येति** बहुव्रीहिः । अनुस्वारोऽन्यपदार्थः । **इति मत्वर्थीयाः** ।

**प्राग्दिशो** । व्याख्यानादिदं सञ्ज्ञासूत्रं, तदाह—**विभक्तिसञ्ज्ञा इति** । **स्वार्थिका इति** । 'प्रायेणे'ति शेषः । स्वीयप्रकृतेरर्थे भवा इत्यर्थः । तसिलादावर्थनिर्देशाऽभावात् अतिशायने इत्यादीनां प्रकृत्यर्थविशेषणत्वादिति भावः । 'जात्यन्ताच्छ बन्धुनि' 'प्रकारवचने' इत्यादिविहितस्य तु वाचकत्वमेव । अत एव तदर्थस्य विशेष्यतया भानम् । अतः 'प्रायेणे'ति पूरितम् । **किंसर्वनाम** । प्राग्दिश इत्येव । द्व्यादिपर्युदासाकिमः पृथग्ग्रहणम् । द्व्यादिभ्यः प्रागेव किम्शब्दस्तु न पठितः, कश्च

**इश्** ।५।३।३। प्राग्दिशीये परे । **एतेतौ रथोः** ।५।३।४। इदंशब्दस्य एत इत इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । इशोऽपवादः । **एतदोऽन्** ।५।३।५। योगविभागः कर्तव्यः । 'एतदः'—एतेतौ स्तो रथोः । 'अन्' । एतद इत्येव । अनेकाल्त्वात्सर्वादेशः । 'नलोपः प्रातिपदिकान्तस्य' । **सर्वस्य सोऽन्यतरस्यां दि** ।५।३।६। प्राग्दिशीये दकारादौ प्रत्यये परे सर्वस्य सो वा स्यात् । **पञ्चम्यास्तसिल्** ।५।३।७। पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल्वा स्यात् । **कु तिहोः** ।७।२।१०४। किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः । कुतः । कस्मात् । यतः । ततः । अतः । इतः । अमुतः । बहुतः । द्व्यादेस्तु—द्वाभ्याम् । **तसेश्च** ।५।३।८। किंसर्वनामबहुभ्यः परस्य तसेस्तसिलादेशः स्यात् । स्वरार्थं विभक्त्यर्थं च वचनम् ।

---

**त.]** कश्च कौ । अहं च कश्च कौ । भवांश्च कश्च कौ इत्यत्र किमः शेषः, 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्युक्तत्वात् । **एतदोऽन्** । भाष्यारूढोऽयं पाठः । वृत्तिकारस्तु 'एतदो'ऽशिति पठित्वा शकारः सर्वादेशार्थ इत्याह । **अनिति** । प्राग्दिशीये परे अन्त्यात् । **अनेकाल्त्वादिति** । नित्करणस्य प्रयोजनं नास्ति, प्रत्ययनिस्वरस्यैव स्वरार्थत्वादिति भावः । **कु तिहोः** । तकारादिकार उच्चारणार्थः । वेत्यनुवृत्तेः फलं दर्शयति—**कस्मादिति** । **यतस्तत इति** । 'कृत्तद्धिते'ति प्रातिपदिकत्वात्सुपो लुकि त्यदाद्यत्वम् । पक्षे—यस्मात् । तस्मात् । **इत इति** । 'इदम इश्' । पक्षे अस्मात् । **अत इति** । एतदोऽनादेशः । पक्षे एतस्मात् । **अमुत इति** । 'अदसोसे'रिति मुत्वम् । पक्षे । अमु-

---

**बा.]** द्विवचनम् । रश्च थ् च तयोरिति द्वन्द्वः । रेफादकार उच्चारणार्थः । रेफथकाराभ्यां प्राग्दिशीयं प्रकरणलभ्यं विशेष्यते । 'यस्मिन्विधि'रिति तदादिविधिः । तदाह—**इदंशब्दस्येत्यादिना** । तत्र रेफादौ परे एतः, थादौ तु इदिति यथासङ्ख्यं बोध्यम् । एतर्हि । इत्थम् । **एतदोऽन्** । प्राग्दिशीये प्रत्यये परे एतच्छब्दस्य अन्त्यादित्यर्थः प्रतीयते, एवं सति एतच्छब्दस्य अनेव स्यात्, नत्वेतेतौ । तत्राह—**योगविभाग इति** । **एतद इति** । प्रथमसूत्रमिदम् । तस्य शेषपूरणम् 'एतेतौ रथोः' इति । एतच्छब्दस्य एतेतौ स्तो रेफथकारादौ प्रत्यये परे इत्यर्थः । एतर्हि, इत्थमित्युदाहरणम् । **अनिति** । द्वितीयं सूत्रम् । **एतद इत्येवेति** । रथोरिति तु नानुवर्तते इति भावः । तथाच 'एतद' इत्यस्य अन्त्यात्प्राग्दिशीये परे इत्यर्थः फलति । अतः, अत्र इत्युदाहरणम् । ननु अनादेशे नकारस्य इत्संज्ञायामकारोऽन्त्यादेशः स्यादित्यत आह—**अनेकाल्त्वादिति** । नकारस्य प्रयोजनाऽभावान्नेत्संज्ञा, नित्स्वरस्य प्रत्ययविषयत्वादिति भावः । तर्हि 'अत' इत्यादौ नकारस्य श्रवणं स्यादित्यत आह—**नलोप इति** । **सर्वस्य सो** । 'दि' इति सप्तम्येकवचनं प्राग्दिशीयविशेषणम् । 'यस्मिन्विधि'रिति तदादिविधिः । तदाह—**प्राग्दिशीये दकारादाविति** । सदा इत्युदाहरणम् । तदेवं तसिलादिप्रत्ययेषु प्राग्दिशीयेषु परेषु कतिपयान् आदेशान्विधाय तसिलादिप्रत्ययान्वक्तुमुपक्रमते—**पञ्चम्यास्तसिल्** । **किमादिभ्य इति** । किंसर्वनामबहुभ्य इत्यर्थः । **वा स्यादिति** । 'समर्थाना'मित्यतो वाग्रहणस्याऽनुवृत्तेरिति भावः । **कुतिहोः** । 'कु' इति लुप्तप्रथमाकम् । 'किमः कः' इत्यस्मात् 'किमः' इत्यनुवर्तते । 'अष्टन आ' इत्यतो 'विभक्ता'विति । तिश्च ह् च तयोरिति द्वन्द्वः । इकार उच्चारणार्थः । ताभ्यां विभक्तिर्विशेष्यते । तदादिविधिः । तदाह—**किमः कुः स्यादित्यादिना** । **कुत इति** । किंशब्दात् पञ्चम्यन्तात्तसिल् । सुब्लुक् । किमः कुभावः । 'तसिलादयः प्राक्पाशपः' इत्युक्तेरव्ययत्वम् । वेत्यनुवृत्तेः फलमाह—**कस्मादिति** । 'तिहो'रित्युक्तेरत्र न कुभावः । सर्वनाम्न उदाहरति—**यत इति** । यच्छब्दात्पञ्चम्यन्तात्सुब्लुक्, तसिलो विभक्तित्वात्तस्मिन्परे त्यदाद्यत्वं पररूपम् । एवं तच्छब्दात्तत इति रूपम् । पक्षे तस्मादिति भवति । **अत इति** । एतच्छब्दात्पञ्चम्यन्तात्तसिल् । सुब्लुक् । एतदोऽन् । सर्वादेशः । नलोपः । पक्षे 'एतस्मा'दिति भवति । **इत इति** । इदंशब्दात्पञ्चम्यन्तात्तसिल् । सुब्लुक् । 'इदम इश्' । पक्षे अस्मादिति भवति । **अमुत इति** । अदश्शब्दात्पञ्चम्यन्तात्तसिल्, उत्वमत्वे च । पक्षे 'अमुष्मा'दिति भवति । **बहुत इति** । पक्षे 'बहुभ्य' इति भवति । **द्व्यादेस्त्विति** । सर्वनामत्वात्प्राप्तस्तसिल्-द्व्यादिपर्युदासान्नेत्यर्थः । **तसेश्च** । **परस्य तसेरिति** । 'प्रतियोगे

---

**शे.]** भवांश्च कावित्यत्र भवतः शेषापत्तेः । 'त्यदादीनां यत्परं तच्छिष्यते' इत्युक्तेः । विधेयाऽनिर्देशादाह—**अधिक्रियत इति** । बहुशब्दश्चाऽत्र सङ्ख्यावाच्येव, व्याख्यानात् । प्रकरणलभ्यमाह—**प्राग्दिशीये परे इति** । दिशः प्राक् प्राग्दिशं, तत्र भव इत्यर्थः । **एतेतौ** । द्वितीयो व्यञ्जनान्तः । यथासङ्ख्यं-कार्यनिमित्तयोः । **नलोप इति** । सर्वादेशत्वेनानुपूर्व्या[व]सिद्धम् । इत्संज्ञा तु न, फलाऽभावात् । परत्वादनः पूर्वमेव त्यदाद्यत्वेऽनि कृते 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरत्वाऽप्रवृत्तिरिति भावः । **कु तिहोः** । 'अष्टन आ' इत्यतो विभक्तावित्यनुवर्तते । 'ती'त्यत्रेकार उच्चारणार्थः । 'तिहो'रित्यस्य फलमाह—**कस्मादिति** । **यत इति** । तसिलादीनां विभक्तित्वात्त्यदाद्यत्वम् । **परस्य तसेरिति** । 'प्रतियोगे पञ्चम्यास्तसिः' 'अपादाने चाहीयरुहोः' इति वक्ष्यमाणस्येत्यर्थः । प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणम्, व्याख्यानात् । **स्वरार्थम्**—लित्स्वरार्थम् । **विभक्त्यर्थम्**—

**पर्यभिभ्यां च** ।५।३।९। आभ्यां तसिल् स्यात् । * **सर्वोभयार्थाभ्यामेव** । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः । **सप्तम्यास्त्रल्** ।५।३।१०। कुत्र । यत्र । तत्र । बहुत्र । **इदमो हः** ।५।३।११। त्रलोऽपवादः । इशादेशः । इह । **किमोऽत्** ।५।३।१२। वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् । पक्षे त्रल् । **क्वाति** ।७।२।१०५। किमः क्वादेशः स्यादति । क्व । कुत्र । **वा ह च च्छन्दसि** ।५।३।१३। कुह स्थः । कुह जग्मथुः । **एतदस्त्रतसोस्त्रतसौ चानुदात्तौ** ।२।४।३३। अन्वादेशविषये एतदोऽश् स्यात्स चानुदात्तस्त्रतसोः परतः, तौ चानुदात्तौ स्तः । एतस्मिन् ग्रामे सुखं वसामः । अथोऽत्राऽधीमहे । अतो न गन्तास्मः । **इतराभ्योऽपि दृश्यन्ते** ।५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । * दृशिग्रहणाद्भवदादि-

---

त.]ष्मात् । बहुत इति । पक्षे–बहुभ्यः । **द्वाभ्यामिति** । सर्वनामत्वात्प्राप्तोऽपि तसिल् 'अद्व्यादिभ्यः' इति पर्युदासान्न । **तसेरिति** । 'प्रतियोगे पञ्चम्यास्तसिः', 'अपादाने चाहीयरुहोः'रिति विहितस्य तसेस्तसिलादेश इत्यर्थः ।' **विभक्त्यर्थे चेति** । अन्यथा परत्वात्तसौ कृते तस्याऽप्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वाऽभावे 'यतोऽवगच्छती'त्यादि न सिध्येदिति भावः । ननु तसेर्ग्रामत इत्यादौ चरितार्थत्वात्किमादिभ्यस्तसिलो बाध्यत्वेन तसिर्न प्रवर्तते, तस्य निरवकाशत्वात् । तथा च 'तसेश्चे'ति विधानं व्यर्थमिति वाच्यं, 'कुतोऽवहीयते' 'कुतोऽवरोहती'त्यादौ तसिलः सावकाशत्वात् । **सर्वोभयार्थाभ्यामेवेति** । अत्र चाभिधानस्वाभाव्यमेव हेतुः । तेनेह न भवति-परिषिञ्चति । अभिषिञ्चति । उपर्यर्थे परिः । अभिस्त्वाभिमुख्ये । नन्वोदनं परिषिञ्चतीत्यत्र सर्वतोभावे परिरिति तसिलभावः कथमिति चेन्नैवम् । वावचनाऽनुवृत्त्या तु तत्सिद्धेः । **सप्तम्यास्त्रल्** । इह त्रल्तसिलौ स्वतन्त्रौ प्रत्ययौ, न तु सप्तमीपञ्चम्योरादेशौ । तेन कुत्र बहुत्र कुतः बहुत इत्यादौ 'अच घेः' 'घेर्ङिती'त्यादिकं नेत्याहुः । **किमोऽत्** । 'न विभक्तौ तुस्माः' इति निषेधोऽत्र न प्रवर्तते, थमोरुकारेण मकारपरित्राणार्थेनाऽनित्यताज्ञापनात् । **वाग्रहणमिति** । 'किमोऽद्वा' इति सूत्रं पठित्वा 'ह च छन्दसी'ति सूत्रयितुं युक्तम् । **कुत्रेति** । यद्यपि भागवृत्तिकारो भाषायां त्रल् नेच्छति, तथापि बहुप्रयोगदर्शनादिह स्वीकृतम् । तथा च श्रीहर्षः—'नान्यत्र कुत्रापि च साभिलाषम्' । अमरश्चाह—'साहचर्याच्च कुत्रचि'दिति । **वा ह च छन्दसि** । पूर्वोक्तस्य वाग्रहणापकर्षणस्य स्फुटीकरणार्थमिदमुप-

---

बा.]पञ्चम्यास्तसिः' 'अपादाने चाहीयरुहो'रिति वक्ष्यमाणस्य तसेरित्यर्थः । ननु तसेस्तसिल्किमर्थमित्यत आह— **स्वरार्थमिति** । लित्स्वरार्थमित्यर्थः । **विभक्त्यर्थमिति** । विभक्तिनिमित्तकत्यदाद्यत्वार्थमित्यर्थः । अन्यथा परत्वात्तसौ कृते तस्य अप्राग्दिशीयत्वाद्विभक्तित्वाऽभावात्त्यदाद्यत्वादिकं न स्यादित्यर्थः । **पर्यभिभ्यां च** । **सर्वोभयार्थाभ्यामेवेति** । वार्तिकमिदम् । परिषिञ्चति अभिषिञ्चतीत्यादौ वाग्रहणात्पक्षे न तसिल् । **सप्तम्यास्त्रल्** । किमादिभ्यः सप्तम्यन्तेभ्योऽद्व्यादिभ्यस्त्रलित्यर्थः । 'कुत्रे'त्यादिरूपाणि 'कुत' इत्यादिवत् । **इदमो हः** । इदंशब्दात्सप्तम्यन्तात् हप्रत्ययः स्यादित्यर्थः । **किमोऽत्** । **अपकृष्यत इति** । 'वा ह च छन्दसी'त्युत्तरसूत्रादिति शेषः । अपकर्षे व्याख्यानमेव शरणम् । अत्प्रत्यये तकार इत् । 'न विभक्ता'विति निषेधस्तु न भवति, 'तवर्गस्येत्वप्रतिषेधोऽतद्धिते' इति वार्तिकात् । **क्वाति** । क्व—अतीति छेदः । 'क्वे'ति लुप्तप्रथमाकं । 'किमः कः' इत्यतः किम इत्यनुवर्तते । तदाह—**किमः क्वेति** । किंशब्दात्सप्तम्यन्तादत्प्रत्ययः, तकार इत्, किमः क्वादेश इति भावः । **कुत्रेति** । अत्प्रत्ययाऽभावपक्षे त्रलि 'कु तिहो'रिति कुभावे रूपम् । केचित्तु 'किमोऽ'दित्यत्र उत्तरसूत्राद्वाग्रहणाऽपकर्षे प्रमाणाऽभावात्त्रलं बाधित्वा नित्य एव अत्प्रत्ययः, 'कुत्रे'ति त्वपशब्द एवेत्याहुः । **वा ह च छन्दसि** । 'हे'ति लुप्तप्रथमाकम् । किमः सप्तम्यन्तात् हप्रत्ययः स्यादित्यर्थः । चादत्, त्रल्च । यद्यपि वैदिकप्रक्रियायामिदमुपन्यसनीयं, तथापि वाग्रहणस्य पूर्वसूत्रेऽपकर्षज्ञानायाऽत्र तदुपन्यासः । **एतदस्त्रतसोः** । 'इदमोऽन्वादेशे' इत्यस्मादन्वादेशे अशनुदात्त इत्यनुवर्तते । तदाह—**अन्वादेशेत्यादिना** । **अतोऽत्रेति** । एतच्छब्दात्त्रलि प्रकृतेरशादेशे 'अत्रे'ति रूपम् । **अतो न गन्ता[र]स्म इति** । एतस्माद्ग्रामादित्यर्थः । एतच्छब्दात्तसिल्, प्रकृतेरशादेशः । 'एतदो' शित्येव सिद्धेऽनुदात्तार्थं वचनम् । नच लित्स्वरे सति शेषनिघातेन त्रतसोरनुदात्तत्वं सिद्धमिति शङ्क्यं, लित्स्वरापवादेऽशोऽनुदात्तत्वे कृते लित्स्वराऽप्राप्त्या प्रत्ययस्वरेण त्रतसोरुदात्तत्वे प्राप्ते तद्विधानार्थत्वात् । **इतराभ्योऽपि दृश्यन्ते** । पञ्चमीसप्तमीतरविभक्तिभ्योऽपीत्यर्थः । फलितमाह—**पञ्चमीसप्तमीतरविभक्त्यन्ताद-**

---

शे]विभक्तिनिमित्ताऽत्वाद्यर्थम् । 'स्वरार्थ'मिति भाष्यन्तूपलक्षणं पूर्वोक्तविभक्तिकार्यस्यापीति बोद्धव्यम् । **सर्वोभयेति** । अभिधानमूलकमेतद्भाष्ये उक्तम् । 'ओदनं परिषिञ्चती'त्यादौ सर्वार्थत्वेऽपि वाग्रहणाऽनुवृत्तेर्न तसिल् । **वाग्रहणमिति** । 'साहचर्याच्च कुत्रचित्' 'नान्यत्र कुत्रापि च साभिलाष'मिति बहुतरप्रयोगदर्शनादिदमुक्तम् । **भागवृत्तिकारादयस्तु** किमो भाषायां त्रलं नेच्छन्ति । भाष्यस्वरसोऽप्येवमेव । **एतदस्त्रतसोः** । इदमोऽन्वादेश इत्यतोऽशनुवर्तते । एतदोऽशि त्येव सिद्धेऽनुदात्तार्थं वचनम् ।

योग एव । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं दीर्घायुः । देवानांप्रियः । आयुष्मान् । **सर्वैकान्यकिंयत्तदः काले दा** ।५।३।१५। सप्तम्यन्तेभ्य [एभ्यः] कालार्थेभ्यः स्वार्थे दा स्यात् । सर्वस्मिन्काले सदा । सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् ? । सर्वत्र देशे । **इदमो र्हिल्** ।५।३।१६। सप्तम्यन्तात्काले इत्येव । हस्याऽपवादः । अस्मिन्काले एतर्हि । काले किम् ? । इह देशे । **अधुना** ।५।३।१७। इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थेऽधुनाप्रत्ययः स्यात् । इश् । 'यस्ये'ति लोपः । अधुना । **दानीं च** ।५।३।१८। इदानीम् । **तदो दा च** ।५।३।१९। तदा । तदानीम् । ※ **तदो दावचनमनर्थकं विहितत्वात्** । **अनद्यतने र्हिलन्यतरस्याम्** ।५।३।२१। कर्हि । कदा । यर्हि । यदा । तर्हि । तदा । एतस्मिन्काले एतर्हि । **सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः** ।५।३।२२। एते निपात्यन्ते । ※ **समानस्य सभावो द्यश्चाऽहनि** । समानेऽहनि सद्यः । ※**पूर्वपूर्वतरयोः पर उदारी च संवत्सरे** । पूर्वस्मिन्वत्सरे परुत् । पूर्वतरे वत्सरे परारि । ※ **इदम इश् समसण् प्रत्ययश्च संवत्सरे** । अस्मिन्संवत्सरे ऐषमः । ※ **परस्मादेद्यव्यहनि** । परस्मि-

---

त.]न्यस्तम् । **अत इति** । एतस्माद्ग्रामादित्यर्थः । **तत्रभवन्तमिति** । ततो भवता तत्र भवता । ततो भवते तत्रभवते इत्यादि । **एवमिति** । ततो दीर्घायुस्तत्र दीर्घायुरित्याद्यूह्यमित्यर्थः । **सदेति** । 'सर्वस्य सोऽन्यतरस्यां दी'ति सभावः । **कदेति** । 'किमः कः' । **एतर्हीति** । 'एतेतौ रथोः' एत्येतादेशः । **अधुनाप्रत्यय इति** । निपातनान्मध्योदात्तोऽयम् । भाष्यमतं चेदम् । वृत्तिकारस्त्वाह—इदमो अश्भावो धुना च प्रत्यय इति । तत्र 'ऊडिद'मित्यादिना विभक्तिस्वरः, स च 'आदेः परस्ये'त्यादेर्भवतीति हरदत्तः । **दावचनमिति** । 'तदश्चे'त्येव सूत्रं पठनीयमिति भावः । **एतस्मिन्काले एतर्हीति** । 'एतदः' इति योगविभागाद्रेफादावेतादेशः । **सद्यःपरुत्** । निपातनाद्विषयविशेषो लभ्यत इत्याह—**अहनीति** । सप्तम्यन्तस्याऽहन्शब्दस्यार्थे इत्यर्थः । तद्दर्शयति—**समानेऽहनीति** । **पर उदारी**

---

बा.]पीति । 'किमादे'रिति शेषः । **एवमिति** । स दीर्घायुः, ततो दीर्घायुः, तत्र दीर्घायुरित्याद्यूह्यमित्यर्थः । **सर्वैकान्य** । **सप्तम्यन्तेभ्य इति** । 'सर्वादिभ्य' इति शेषः । 'सप्तम्या' इत्येवानुवर्तते, व्याख्यानादिति भावः । **सदा सर्वदेति** । 'सर्वस्य सोऽन्यतरस्यां दी'ति सभावविकल्पः । **कदेति** । किंशब्दाद्दाप्रत्यये सति तस्य 'किमः कः' इति कादेशः । **इदमो र्हिल्** । इदमः—र्हिल् इति च्छेदः । **एतर्हीति** । इदम्शब्दात् र्हिल् । 'एतेतौ रथो'रित्येतादेशः । **अधुना** । 'इदम' इति, 'सप्तम्या' इति, 'काले' इति चानुवर्तते । तदाह—**इदम इति** । **इशिति** । 'इदम इ'शित्यनेने'ति शेषः । **अधुनेति** । 'इय'दितिवत्प्रत्ययमात्रं शिष्यते । पठन्ति चाभियुक्ताः 'उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ, गतवति विलयं च प्राकृतेऽपि प्रपञ्चे । सपदि पदमुदीतं केवलः प्रत्ययो यत् तदियदिति मिमीते कोऽधुना पण्डितोऽपि ? ।' इति वैयाकरणीमौपनिषदीं च प्रक्रियामाश्रित्य प्रवृत्तो द्व्यर्थोऽयं श्लोकः । **दानीं च** । इदमः सप्तम्यन्तात्कालवाचिनः स्वार्थे दानीमिति च प्रत्ययः स्यादित्यर्थः । **इदानीमिति** । इदंशब्दाद्दानींप्रत्ययः, इश् । **तदो दा च** । सप्तम्यन्तात्कालवृत्तेस्तच्छब्दाद्दाप्रत्ययः, दानींप्रत्ययश्च स्यादित्यर्थः । **तदो दावचनमिति** । वार्तिकमिदम् । **विहितत्वादिति** । 'सर्वैकान्ये'त्यनेने'ति शेषः । **अनद्यतने र्हिल्** । अनद्यतनकालवृत्तिभ्यः किमादिभ्यः सप्तम्यन्तेभ्यः र्हिल्प्रत्ययो वा स्यादित्यर्थः । पक्षे दाप्रत्ययः । **एतर्हीति** । एतच्छब्दात् र्हिल् । 'एतद' इति योगविभागाद्रेफादौ एतादेशः ।

**सद्यःपरुत्** । **'समानस्य सभावो द्यश्चाहनी'**ति भाष्यवाक्यमिदम् । अहर्वृत्तेः समानशब्दात्सप्तम्यन्तात् द्यस्प्रत्ययः, समानस्य सभावश्च निपात्यत इत्यर्थः । सद्यः । समानेऽहनीत्यर्थः । **'पूर्वपूर्वतरयोः परादेशः उदारी च संवत्सरे'** इत्यपि भाष्यवाक्यम् । उत्—आरिश्चेति द्वन्द्वः । सप्तम्यन्तादिमौ प्रत्ययौ संवत्सरे अभिधेये । **'इदम इश् समसण्'** इत्यपि भाष्यवाक्यम् । **ऐषम इति** । समसणि णकार इत्, सकारादकार उच्चारणार्थः । णित्त्वादादिवृद्धिः । **'परस्मादेद्यव्यहनी'**त्यपि भाष्यवाक्यम् । सप्तम्यन्तादेद्यविरि-

---

शे.]ननु लित्स्वरे शेषनिघातेनैव त्रतसोरनुदात्तत्वे सिद्धे तयोस्तद्विधानं व्यर्थमिति चेन्न, लित्स्वरापवादेऽशोऽनुदात्तत्वे कृते लित्स्वराऽप्राप्त्या प्रत्ययस्वरेण त्रतसोरुदात्तत्वे प्राप्ते तत्सार्थक्यात् । **अतो नेति** । अतः=एतस्माद्ग्रामादित्यर्थः । **सप्तम्यन्तेभ्य इति** । सप्तम्या इत्येवानुवर्त्तते, क्लृप्तस्वरितत्वात्, 'न इतराभ्यः' इतीति भावः । **सर्वत्र देशे इति** । सर्वत्र काले इत्यपि बोद्धव्यम् । काले इत्युपादानेन सर्वशब्दस्य तत्र कालमात्राऽर्थत्वाऽभावात् । अत एव 'वर्तमाने ल'डिति सूत्रभाष्यस्थे 'अनागतमतिक्रान्तं वर्तमानमिति त्रयम् । सर्वत्र च गतिर्नास्ती'ति प्रयोगे कालवृत्तित्वाऽविवक्षायां दाप्रत्ययोन कृत इति कैयटः । **विहितत्वादिति** । 'सर्वैकान्ये'-त्यनेन । एतद्भाष्ये स्पष्टम् । **तर्हीति** । एतत्प्रतिद्वन्द्विभूत यदा त्यतद्रूपमव्ययम् । **एतर्हीति** । 'एतदः' इति योगविभागेन

ऽहनि परेद्यवि । * इदमोऽश् द्यश्च । अस्मिन्नहनि अद्य । * पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस् । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । उभयोरह्नोरुभयेद्युः । * द्युश्चोभयाद्वक्तव्यः । उभयद्युः । **प्रकारवचने थाल्** ।५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात्स्वार्थे । तेन प्रकारेण तथा । यथा । **इदमस्थमुः** ।५।३।२४। थालोऽपवादः । * एतदोऽपि वाच्यः । अनेन एतेन वा प्रकारेण इत्थम् । **किमश्च** ।५।३।२५। केन प्रकारेण कथम् । **प्राग्दिशीयानां विभक्तिसंज्ञानां पूर्णोऽवधिः ।**

**अथ प्रागिवीयाः ।**

**दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** ।५।३।२७। सप्तम्याद्यन्तेभ्यो दिक्षु रूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिप्रत्ययः स्यात् । **पूर्वाधरावराणामसिपुरधवश्चैषाम्** ।

---

त.] **चेति** । 'पर'-इत्यादेशः, उदारी प्रत्ययौ । **प्रकारवचने थाल्** । सामान्यस्य भेदको विशेषः प्रकारः । यथा ब्राह्मणसामान्यस्य माठरकाठकादय इति हरदत्तः । यद्यपि 'प्रकारे गुणवचनस्ये'त्यत्र सादृश्यं प्रकारस्तथापि नेह सादृश्यं गृह्यते, अनभिधानात् । 'अव्ययं विभक्ती'ति सूत्रे सादृश्यमपि यथाशब्दार्थ इत्युक्तम्, इह तु केवलस्य थाल्प्रत्ययस्य सादृश्यं नार्थः, किं तु प्रकार एवेत्युक्तमिति नास्ति पूर्वापरविरोध इति बोध्यम् । **तेन प्रकारेण तथेति** । प्रथमान्तात्तु न भवति—स प्रकारस्तथेति, अनभिधानादेवेति भावः । किंसर्वनामबहुभ्यो विशेषविहितेनापि थाला जातीर्न बाध्यते, अर्थभेदात् । प्रकारे हि थाल् । जातीयर्तु तद्वति, स्वभावात् । एवं च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयरं प्रयुञ्जते—तथाजातीयो यथाजातीयोऽन्यथाजातीय इति । **अनेन एतेन वेति** । द्वितीयान्तादपि थमुर्भवत्येव, इममेतं वा प्रकारमापन्न इत्थम्भूतः । अत्र च 'लक्षणेत्थम्भूताख्याने'त्यादिसौत्रप्रयोगो लिङ्गम् । एतेन कथम्भूतो व्याख्यातः । **इत्थमिति** । 'एतेतौ रथो'रिति इदम इतादेशः । 'एतदः' इति योगविभागादेतदोऽपि इतादेश इति भावः । **किमश्च** । योगविभागः 'था हेतौ च छन्दसी'त्युत्तरसूत्रे किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति । **प्राग्दिशीयानां पूर्णोऽवधिः ।**

**दिग्देशकालेष्विति** । यथासङ्ख्यमत्र नेष्यते, अस्वरितत्वात् । **पुरः पुरस्तादिति** । कथं तर्हि

---

बा.] कारान्तः प्रत्ययः । **'इदमोऽश्भावो द्यश्चे'**त्यपि भाष्यवाक्यम् । सप्तम्यन्तादकारान्तो द्यप्रत्ययः । **'पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युस् चे'**त्यपि भाष्यवाक्यम् । **प्रकारवचने थाल्** । पञ्चम्यर्थे सप्तमीत्याह—**प्रकारवृत्तिभ्य इति** । सामान्यस्य भेदको विशेषः प्रकारः । यथा 'बहुभिः प्रकारैर्भुङ्क्ते' इति । विशेषैरिति गम्यते । सादृश्यं त्विह न गृह्यते, सर्वथेत्यादौ तदप्रतीतेः । **तेन प्रकारेणे**त्यनन्तरं 'विशिष्ट' इति शेषः । 'यथा हरिस्तथा हरः' इत्यादौ यत्प्रकारवान्हरिस्तत्प्रकारवान्हर इति बोधे सति हरिसदृशो हर इति फलति । तदभिप्रायेण यथाशब्दस्य सादृश्यार्थकत्वोक्तिः । **इदमस्थमुः** । इदंशब्दात्प्रकारवृत्तेस्थमुप्रत्ययः स्यादित्यर्थः । प्रत्यये उकार उच्चारणार्थः । मकारस्य उपदेशेऽन्त्यत्वाऽभावान्नेत्वम् । यद्यपि 'न विभक्तौ' इति निषेधादेव मस्येत्वं न भवति, तथापि तदनित्यत्वज्ञापनार्थं मकारोच्चारणमित्याहुः । **इत्थमिति** । 'एतेतौ रथो'रिति प्रकृतेरिदम इदादेशः । एतच्छब्दात्थमुप्रत्यये तु 'एतद' इति योगविभागादिदादेशः । **किमश्च** । 'प्रकारवृत्तेस्थमु'रिति शेषः । **कथमिति** । 'किमः कः' इति कादेशः । **प्राग्दिशीयानां विभक्तिसंज्ञकानां पूर्णोऽवधिः ।**

अथ प्रागिवीयप्रकरणमारभ्यते—**दिक्छब्देभ्यः** । **सप्तम्याद्यन्तेभ्य इति** । सप्तमीपञ्चमीप्रथमान्तेभ्य इत्यर्थः । **रूढेभ्य इति** । शब्दग्रहणलभ्यमिदम् । अस्तातिप्रत्यये इकार उच्चारणार्थः । तकारान्तः प्रत्ययः ।

---

शे.] एतादेशः । **अस्मिन्नहनीति** । पुष्येण युक्तः कालोऽयमित्यर्थके 'अद्य पुष्य' इत्यादौ शक्तिमत्प्रधानता । इदमह इत्यर्थेऽप्यद्येत्यन्ये । व्यपदेशिवद्भावेन स प्रयोग इत्यपरे । **एद्युसिति** । निपातनादन्तोदात्तोऽयम् । भाष्ये तु चित्पठ्यते । **प्रकारवचने** । पञ्चम्यर्थे सप्तमीत्याह—**प्रकारवृत्तिभ्य इति** । वचनग्रहणात्प्रकारवद्वृत्तिभ्य इत्यर्थः । **तेन प्रकारेणे**त्यस्य विशिष्ट इति शेषः । [इदं प्रकृतिविशेषणं, स्वार्थिकोपक्रमात्] । सामान्यस्य भेदको विशेषोऽत्र **प्रकारः** । 'बहुभिः प्रकारैर्भुङ्क्ते' इत्यतो बहुभिर्विशेषैरित्यवगमात् । सादृश्यन्तु न गृह्यते, अन्यथा सर्वथेत्यादौ तदप्रतीत्याऽनभिधानात् । 'यथा हरिस्तथा हर' इत्यादौ यत्प्रकारवान्हरिस्तत्प्रकारवान् हर इति बोधे हरिसदृशो हर इति फलतीति बोद्धव्यम् । अत्यन्तस्वार्थिकोऽयम् । प्रत्ययं विनापि यश्चैत्रः स मैत्र इत्यादौ प्रकारवचनत्वदर्शनात् । द्योतकत्वे तदर्थस्य विशेषणतापत्तिश्च । एवं जातीयर्विधावपि बोद्धव्यम् । स्थूलादिभ्यः कन्विधौ चैवमेव, स्थूलादीनामपि 'गौर्वाहीक' इत्यादौ गवादिपदानामिवाऽस्त्येव प्रत्ययं विनापि प्रकारवाचित्वम् । अत एवैषां नित्यत्वं नोक्तम् । **प्राग्दिशीयानां विभक्तिसंज्ञकानां पूर्णोऽवधिः ।**

**दिक्शब्देभ्यः** । नेह यथासङ्ख्यम्, अस्वरितत्वात् । शब्दग्रहणलभ्यमर्थमाह—**दिशि रूढेभ्य इति** । 'सङ्ख्याया'

।५।३।३९। एभ्योऽस्तात्यर्थेऽसिप्रत्ययः स्यात्तद्योगे चैषां क्रमात्पुर्, अध्, अव्—इत्यादेशाः स्युः। अस्ताति च ।५।३।४०। अस्तातौ परे पूर्वादीनां पुरादयः स्युः। पूर्वस्यां पूर्वस्याः पूर्वा वा दिक्—पुरः। पुरस्तात्। अधः। [अधस्तात्]। अवः। **विभाषाऽवरस्य** ।५।३।४१। अवरस्याऽस्तातौ परेऽव् स्याद्वा। अवस्तात्। अवरस्तात्। एवं देशे काले च। दिशिरूढेभ्यः किम्?। ऐन्द्रयां वसति। सप्तम्याद्यन्तेभ्यः किम्?। पूर्वं ग्रामं गतः। दिगादिवृत्तिभ्यः किम्। पूर्वस्मिन् गुरौ वसति। 'अस्ताति चे'ति ज्ञापकादसिरस्तातिं न बाधते। **दक्षिणोत्तराभ्यामतसुच्** ।५।३।२८। अस्तातेरपवादः। दक्षिणतः। उत्तरतः। **विभाषा परावराभ्याम्** ।५।३।२९। परतः। अवरतः। परस्तात्। अवरस्तात्। **अञ्चेर्लुक्** ।५।३।३०। अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात्। 'लुक्तद्धितलुकि'। प्राच्यां प्राच्याः प्राची वा दिक्-प्राक्। उदक्। एवं देशे काले च। **उपर्युपरिष्टात्** ।५।३।३१। अस्तातेर्विषये ऊर्ध्वशब्दस्योपादेशः स्याद्रिल्रिष्टातिलौ च प्रत्ययौ। उपरि उपरिष्टाद्वा वसति आगतो रमणीयं वा। पश्चात्

---

त.]'पश्यामि तामित इतः पुरतश्च पश्चा'दिति भवभूतिः, 'स्यात्पुरः पुरतोऽग्रतः' इत्यमरः, 'पुरतः प्रथमे चाऽग्रे' इति विश्वश्च ?। 'समानकालीनं' 'पूर्वकालीन'मित्यादिवत्प्रामादिकमेवेति बहवः। केचित्तु 'दक्षिणोत्तराभ्यां तसुज्विधिनैवेष्टसिद्धौ 'अतसु'जित्यकारोच्चारणमन्यतोऽपि विधानार्थम्। तेन पुरत इति सिध्यति । 'पुर अग्रगमने' क्विपि—पुर्। 'र्वोः' इति दीर्घस्तु न भवति, भत्वात्। न च अतसुचश्चित्त्वेऽप्यकारोच्चारणं पक्षे आद्युदात्तत्वार्थमिति वाच्यं, बहूनां प्रयोगानुरोधेनाऽन्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वादित्याहुः। यथासङ्ख्यत्वानाश्रयणात् पुरस्ताद्वसति पुरस्तादागतः पुरस्ताद्रमणीयम्। अधस्ताद्वसति अधस्तादागतः—इत्यादि सिध्यति। **प्राच्यां प्राच्या इति** । प्राच्यां

---

बा.]'सङ्ख्याया विधार्थे धे'ति सूत्रपर्यन्तमिदं सूत्रमस्तातिवर्जमनुवर्तते। अत्र विभक्तीनां दिगादीनां च न यथासङ्ख्यं, व्याख्यानात्। **पूर्वाधरावराणम्**। 'असी'ति लुप्तप्रथमाकम्। पुर अध्, अव्–एषां द्वन्द्वात्प्रथमाबहुवचनम्। **अस्तात्यर्थे इति** । दिग्देशकालवृत्तिभ्य इत्यर्थः। **अस्ताति च** । 'अस्ताती'ति लुप्तसप्तमीकम्, अस्तातीति तकारान्तात्सप्तम्येकवचनं वा । 'पूर्वाधरावराणा'मिति 'पुरधव' इति चानुवर्तते । तदाह—**अस्ताताविति** । यद्यपि सूत्रक्रमे 'पूर्वाधरे'ति 'अस्ताति चे'ति 'सङ्ख्याया विधार्थे' इत्यतः प्राक् पठितं तथापि अस्तातौ पुराद्यादेशविधानाय 'अस्ताति चे'ति सूत्रमुपन्यसनीयम्। तत्रानुवृत्तिप्रदर्शनाय 'पूर्वाधरे'त्यपि सूत्रमिहैवोपन्यस्तम् । **पुर इति**। पूर्वाशब्दादसिप्रत्ययः प्रकृतेः 'पुर्' आदेशः । **पुरस्तादिति**। पूर्वाशब्दादस्तातिप्रत्ययः, प्रकृतेः 'पुर्' आदेशः। **अधः, अधस्तादिति** । अधरशब्दादसिप्रत्यये अस्तातिप्रत्यये च प्रकृतेः 'अध्'आदेशे रूपम्। **अव इति**। अवरशब्दादसिप्रत्ययेप्रकृतेः 'अव्'आदेशे रूपम्। **विभाषाऽवरस्य**। 'अस्ताति चे'ति पूर्वसूत्रादस्तातीत्यनुवर्तते । तदाह—**अवरस्येति** । **एवमिति** । पूर्वस्मिन्पूर्वस्मात्पूर्वो वा देशः, कालो वा—पुरः पुरस्तादित्यादि। **पूर्वस्मिन्गुराविति**। पूर्वकालिकाध्यापनकर्तरीत्यर्थः। ननु 'दिक्छब्देभ्यः' इति सामान्यविहितस्य परादिशब्देषु सावकाशस्य अस्तातेः पूर्वाधरावरशब्देषु असिना विशेषविहितेन बाधः स्यादित्यत आह—**अस्ताति चेतीत्यादि**। **दक्षिणोत्तराभ्यां**। 'दिग्देशकालवृत्तिभ्या'मिति शेषः। **दक्षिणत उत्तरत इति**। नच तसुजेव प्रत्ययोऽस्तु, दिग्वर्तित्वे तु 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्वेनैव 'दक्षिणतः' इत्यादि सिद्धमिति वाच्यं, स्पष्टार्थत्वात्। अत एव भाष्ये अकारः प्रत्याख्यातः। केचित्तु—अकारोच्चारणमन्यतो विधानार्थं, तेन पुरत इति सिद्धमित्याहुः। 'समानकालीन'मित्यादिवत् 'पुरत' इति प्रामादिकमेवेति बहवः । **विभाषा** ।- 'अतसु'जिति शेषः। पक्षे अस्तातिः। **अञ्चेर्लुक्**। **प्राच्यामिति** । लिङ्गविशिष्टपरिभाषयाऽस्तातेर्लुक्। **उपर्युपरिष्टात्** । 'उर्ध्वस्य उपभावो रिल्प्रत्ययो रिष्टातिल्प्रत्ययश्चे'ति भाष्यम्। तदाह—**अस्तातेर्विषये इत्यादिना** । **वसति, आगतो, रमणीयं वेति**—विभक्तित्रयस्य यथासङ्ख्यमुदाहरणम् । **पश्चात्**। 'अपरस्य पश्चभावः, आतिश्च

---

शे.] इत्येतत्पर्यन्तमस्तातिपदरहितमिदं सूत्रमनुवर्तते। अस्तातौ पुराद्यादेशविधानार्थम् 'अस्ताति चे'तीह लेख्यम्। तत्रानुवृत्तिप्रदर्शनाय पूर्वेत्यादिसूत्रमपीह व्याचष्टे—**पूर्वाध**। 'असी'त्यविभक्तिकम्। सन्नियोगशिष्टत्वाय चकारः। 'अवराणा'मित्यनन्तरयोगे षष्ठी। **अस्ताति च**। लुप्तसप्तम्यन्तमिदम्। तदाह—**अस्तातविति**। शब्दभेदादर्थभेदेऽपि समानानुपूर्वीकत्वादिक्शब्दो देशादिवृत्तिरिति व्यवहारो बोद्धव्यः। पूर्वादयस्तत्तद्दिक्स्थत्वं प्रवृत्तिनिमित्तीकृत्य क्वचिद्वक्तृसंमुखदेशत्वं तथाकृत्वा क्वचिद्देशे प्रवर्तते। अत एव 'पुर' इत्यस्याऽग्रे इत्यर्थकत्वं विश्वकोशादावुक्तम्। क्वचित्स्वसंयुक्तसंयोगित्वं। यथा परादिशब्दे। प्रकृतसूत्रे च सर्वेषां ग्रहणं, विनिगमनाविरहात्। **पूर्वस्मिन् गुराविति**। पूर्वकालाध्यापनकर्तरीत्यर्थः। **दक्षिणोत्त**। ननु तसुरेव प्रत्ययोऽस्तु, 'दक्षिणस्यां दिशि दक्षिणतः' इति तु 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावेन सिद्धम्। 'षष्ठ्यतसर्थे'ति सूत्रं 'षष्ठी तसर्थे'ति पाठ्यम्। तेन 'ततो ग्रामादन्य'इत्यादौ पञ्चमीं बाधित्वा परत्वात्षष्ठी नेति चेन्न, स्पष्टार्थत्वात् [अर्धमात्रालाघवेऽनादरेण तयोक्तेः]।

।५।३।३२। अपरस्य पश्चभाव आतिश्च प्रत्ययोऽस्तातेर्विषये । **उत्तराऽधरदक्षिणादातिः** ।५।३।३४। उत्तरात् । अधरात् । दक्षिणात् । **एनबन्यतरस्यामदूरेऽपञ्चम्याः** ।५।३।३५। उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये, पञ्चम्यन्तं विना । उत्तरेण । अधरेण । दक्षिणेन । पक्षे यथास्वं प्रत्ययाः । इह केचिदुत्तरादीननुवर्त्य दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । **दक्षिणादाच्** ।५।३।३६। अस्तातेर्विषये । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः । **आहि च दूरे** ।५।३।३७। दक्षिणाद् दूरे आहि स्यात् । चादाच् । दक्षिणाहि । दक्षिणा । **उत्तराच्च** ।५।३।३८। उत्तराहि । उत्तरा । **सङ्ख्याया विधार्थे धा** ।५।३।४२। क्रियाप्रकारार्थे वर्तमानात्सङ्ख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । पञ्चधा । **अधिकरणविचाले च** ।५।३।४३। द्रव्यस्य सङ्ख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु ।

---

**त.**]दिशि वसति-प्राग्वसति । प्राच्या दिश आगतः प्रागागत इत्यादि योज्यम् । **पञ्चम्यन्तं विनेति** । नेह—उत्तरादागतः । अधरादागतः । **उत्तरेणेत्यादि** । वसति रमणीयं वा । **पक्षे यथास्वमिति** । दक्षिणतः । उत्तरतः । अधः । अधस्तात् । उत्तरात् । अधरात् । दक्षिणात् । **सङ्ख्याया विधार्थे धा** । विधाशब्दस्याऽर्थो विधार्थः । यद्यप्योदनपिण्डोऽपि विधाशब्देनोच्यते तथापीह न गृह्यते । तेन एका गोविधेत्यादौ न भवति । इह हि 'विधाया'मिति वक्तव्ये अर्थग्रहणस्य प्रयोजनं—विधाशब्दो यत्रार्थे प्रसिद्धतरस्तत्रैव यथा स्यात् । तादृशश्चार्थः प्रकार एव, स च क्रियाविषयक एव गृह्यते, अभिधानस्वभावात् । तदाह-**क्रियाप्रकारे वर्तमानादिति** । कथं तर्हि 'नवधा द्रव्यं,' बहुधा गुणः' इत्यादि ? । अत्रापि ह्यश्रुता क्रिया प्रतीयते 'उपदिश्यते इति वा, भवति इति वा' इति हरदत्तः । **अधिकरणविचाले च** । अधिकरणं = द्रव्यं, विचलनं विचालः=अन्यथाकरणम् । णिजन्तादेरच् । तच्चेह संख्यासंनिधानात्संख्यान्तरापादनमिति व्याचष्टे-**द्रव्यस्येत्यादिना** । संख्यान्तरापादनं हि एकस्यानेकीकरणम्, अनेकस्य च एकीकरणम् । तत्राद्ये उदाहरणम्—**एकं राशिं पञ्चधेति** । पञ्च राशीन्कुर्वित्यर्थः । द्वितीये तु—'अनेकं एकधा कुर्वि'त्युदाहर्तव्यम् । इह क्रियाविषयकप्रकारो न गम्यत इति सूत्रारम्भः ।

---

**बा.**]प्रत्ययः' इति भाष्यवाक्यमिदम् । प्रत्यये इकार उच्चारणार्थः । **उत्तराधर** । आतिप्रत्यये इकार उच्चारणार्थः । अस्तातेरपवादः । **एनबन्यतरस्याम्** । 'अपञ्चम्या इति प्रागसे'रिति भाष्यम् । सूत्रक्रमे 'पूर्वाधरे'त्यसिं वक्ष्यति ततः प्रागित्यर्थः । **उत्तरादिभ्य इति** । उत्तराधरदक्षिणादित्यनुवर्तत इति भावः । 'अदूरे' इत्येतद्व्याचष्टे—**अवध्यवधिमतोः सामीप्ये इति** । **पञ्चमीं विनेति** । पञ्चम्यन्तान्न भवतीत्यर्थः । **यथास्वमिति** । एनबभावे पक्षे अस्तातिः असिः आतिश्चेत्यर्थः । **दिक्छब्दमात्रादिति** । अञ्चत्यन्तात्तु नेदम्, व्यवस्थितविभाषाश्रयणात् । तेन प्राचेन ग्राममित्यादि न भवतीत्याहुः । **दक्षिणादाच्** । **अस्तातेर्विषये इति** । एतेन अदूरे इति नानुवर्तत इति सूचितम् । एवञ्च आच्प्रत्यये, 'उत्तराधरदक्षिणा'दित्यातिप्रत्यये,'दक्षिणोत्तराभ्या'मित्यतसुचि च त्रीणि रूपाणि । **आहि च दूरे** । 'दक्षिणाशब्दा'दिति शेषः । **चादाजिति** । तथा दूरे उक्तरूपत्रयेण सह चत्वारि रूपाणीति भावः । **उत्तराच्च** । 'आच् आहि चे'ति शेषः । अतसुचा आतिना च चत्वारि रूपाणि । **सङ्ख्याया विधार्थे धा** । विधाशब्दस्याऽर्थः प्रकारो विधार्थः । 'विधा विधौ प्रकारे चे'त्यमरः । सामान्यस्य भेदको विशेषः–प्रकारः । स चाभिधानस्वभावाक्रियाविषयक एव गृह्यते । तदाह—**क्रियाप्रकारेति** । **चतुर्धा पञ्चधेति** । 'गच्छती'त्यादिक्रियापदमध्याहार्यम् । चतुष्प्रकारा गमनादिक्रियेति बोधः । 'नवधा द्रव्य'मित्यादावपि 'भवती'त्यादि क्रियापदमध्याहार्यम् । **अधिकरणविचाले च** । **अधिकरणं**—द्रव्यं, तस्य विचालः=विचालनं, सङ्ख्यान्तरापादनम् । तदाह-**द्रव्यस्येति** । सङ्ख्यान्तरापादनं च न्यूनसङ्ख्यस्य अधिकसङ्ख्याकरणम्, अधिकङ्ख्यस्य न्यूनसङ्ख्याकरणं च । आद्ये उदाहरति-**एकं राशिं पञ्चधा कुर्विति** । द्वितीये तु 'अनेकमेकधा कुर्वि'त्युदाहार्यम् । इह राशिविषयक-

---

**शे.**]**प्राच्यामिति** । लिङ्गविशिष्टपरिभाषयाऽस्तातेर्लुक् । विभक्तित्रयार्थं प्रकटयितुमाह—**वसत्यागतं इत्यादि** । एनबन्यत । 'अपञ्चम्या' इति प्रागसेरनुवर्तते । **अदूरे इति** । अवधिमानवधेश्चेददूरे इत्यर्थः । **केचिदिति** । अञ्चत्यन्तात्तु न, व्यवस्थितविभाषाविज्ञानादिति तदाशयः । इयमेवाऽत्राऽरुचिः । **दक्षिणादाच्** । चकार 'आजाही'त्यत्र विशेषणार्थः । तेन 'वाक्यस्मरणयोरङिदाकारस्य व्यावृत्ति'रिति भाष्यम् । **उत्तराच्च** । चेन व्यवहित आजपि समुच्चीयते, व्याख्यानात् । तदाह—**उत्तरेति** । **संख्याया वि** । विधस्याऽर्थे इत्यर्थः । विधानं 'विध' इति घञर्थे कः । विधशब्दस्यार्थश्च—सामान्यस्य भेदकविशेषरूपः प्रकारः । स चाऽभिधानस्वाभाव्यात्क्रियाविषयक एव गृह्यते । तदाद—**क्रियाप्रकारे इति** 'तदुक्तं भाष्ये–'विधयुक्तगताश्च प्रकारे भवन्ती'ति । 'त्रेधा गुणो' 'नवधा द्रव्य'मित्यादावप्युपदिश्यते भवतीति वा क्रिया बोध्या । **चतुर्धेति** । चतुर्भिः प्रकारैरित्यर्थः । **अधिकरणस्य**=द्रव्यस्य, **विचलनम्**=अन्यथाकरणं । तच्चेह सङ्ख्यासंनिधानात्तद्विषयमेवेत्याह— **द्रव्यस्यसंख्यान्तरेति** ।

**एकाद्धो ध्यमुञन्यतरस्याम्** ।५।३।४४। ऐकध्यम् । एकधा । **द्वित्र्योश्च धमुञ्** ।५।३।४५। आभ्यां 'धा' इत्यस्य धमुञ् स्याद्वा । द्वैधम् । द्विधा । त्रैधम् । त्रिधा । ॐ धमुञन्तात्स्वार्थे डदर्शनम् । पथि द्वैधानि [ तृणानि ] । **एधाच्च** ।५।३।४६। द्वेधा । त्रेधा । **याप्ये पाशप्** ।५।३।४७। कुत्सितो भिषक् भिषक्पाशः । **पूरणाद्भागे तीयादन्** ।५।३।४८। द्वितीयो भागो द्वितीयः । तृतीयः । स्वरे विशेषः । ॐ **तीयादीकक् स्वार्थे वा वाच्यः** । द्वैतीयीकः । द्वितीयः । तार्तीयीकः । तृतीयः । ॐ **न विद्यायाः** । द्वितीया तृतीया विद्येत्येव । **प्रागेकादशभ्योऽच्छन्दसि** ।५।३।४९। पूरणप्रत्ययान्ताद्भागेऽन् । चतुर्थः । पञ्चमः । **षष्ठाष्टमाभ्यां ञ च** ।५।३।५०। चादन् । षष्ठो भागः षाष्ठः । षष्ठः । आष्टमः । अष्टमः । **मानपश्वङ्गयोः कन्लुकौ च** ।५।३।५१। षष्ठाऽष्टमशब्दाभ्यां क्रमेण कन्लुकौ स्तो माने पश्वङ्गे च वाच्ये । षष्ठको भागः-मानं चेत् । अष्टमो भागः-पश्वङ्गं चेत् । अस्य अनो वा लुक् । चकाराद्यथाप्राप्तम् । षष्ठः । षाष्ठः । अष्टमः । आष्टमः ।

---

**त.]एकाद्धो** । शब्दप्रधानत्वात्सर्वनामकार्याऽभावः । इह प्रकरणादेव सिद्धे पुनर्धाग्रहणं विधार्थे विहितस्यापि यथा स्यात् । 'अनन्तरस्ये'ति न्यायेनाधिकरणविचाले विहितस्यैव हि प्राप्नोतीति वृत्तिपदमञ्जर्योः स्पष्टम् । एतेन ध्यमुञ् स्वतन्त्र एव प्रत्ययोऽस्त्वित्याशङ्का परास्ता । **ऐकध्यमिति** । विधार्थे-'ऐकध्यं भुङ्क्ते' । अधिकरणविचाले तु-ऐकध्यं राशिं कुर्वि'त्यादि ज्ञेयम् । एवमग्रेऽपि द्वैधमित्यादौ योज्यम् । **एधाच्च** । द्वित्र्योः संबन्धिनो धाप्रत्ययस्य एधाच् स्यात् । योगविभागो यथासङ्ख्यनिरासार्थः । **याप्ये पाशप्** । 'कुत्सिते' इत्यत्रैव नाऽयं विहितः, तिङन्तादपि प्रसङ्गात् । **पूरणाद्भागे** । पूरणार्थत्वात्तीयप्रत्ययः पूरणशब्देनोक्तः । पूरणग्रहणं चोत्तरार्थम् , न ह्यपूरणस्तीय-

---

**बा.]**एव प्रकारो गम्यते नतु क्रियाप्रकार इति सूत्रारम्भः । **एकाद्धो** । एकात्-ध इति च्छेदः । धान्तस्य 'ध' इति षष्ठ्येकवचनम् । एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशः स्यादित्यर्थः । **ऐकध्यमिति** । नच एकशब्दात् ध्यमुञ्प्रत्ययः स्वतन्त्रो विधीयतां नतु धाप्रत्ययस्यादेश इति वाच्यं, तथा सति अधिकरणविचाल एव सन्निहित-त्वादापत्तेः । **द्वित्र्योश्च धमुञ्** । षष्ठी पञ्चम्यर्थे । 'ध' इति 'अन्यतरस्या'मिति चानुवर्तते । तदाह—**आभ्या-मिति** । 'परस्ये'ति शेषः । **धमुञन्तादिति** । वार्तिकमिदम् । ङशिग्रहणात्कचिदेवायम् । **पथि द्वैधानीति** । 'तृणानी'ति शेषः । 'द्वैध'मित्यस्माञ्प्रत्यये टिलोपे रूपम् । नच 'तसिलादयः प्राक् पाशपः' इति ञप्रत्ययान्तस्या-प्यव्ययत्वं शङ्क्यं,स्वभावतः सत्त्ववचनत्वेनाऽव्ययत्वाऽसंभवात्,'द्वैधानी'ति भाष्यप्रयोगाच्च । **एधाच्च** । द्वित्रिभ्यां परस्य धाप्रत्ययस्य एधाजित्यादेशः स्यादित्यर्थः । 'पञ्चम्यास्तसि'लित्यारभ्य 'एधाच्चे'त्यन्तैर्विहितप्रत्ययान्ताना-मव्ययत्वम् । **याप्ये पाशप्** । याप्यः=कुत्सितः । 'निकृष्टप्रतिकृष्टाऽर्वरेफयाप्याऽवमाऽधमाः' इत्यमरः । कुत्सिते-विद्यमानात्स्वार्थे पाशप्स्यादित्यर्थः । प्रवृत्तिनिमित्तकुत्सायामिदम् । अप्रवृत्तिनिमित्तकुत्सायामपि कुत्सित इति वक्ष्यमाणं भवतीति भाष्ये स्पष्टम् । **पूरणाद्भागे** । पूरणार्थकतीयप्रत्ययान्ताद्भागे विद्यमानात्स्वार्थे अन्स्यादित्यर्थः । अन्विधेः प्रयोजनमाह—**स्वरे विशेष इति** । 'ञ्नित्यादिर्नित्य'मिति स्वरे इत्यर्थः । **तीयादीकगिति** । वार्तिकमिदं 'हृद्यं सामे'ति सूत्रभाष्ये स्थितम् । **न विद्याया इति** । वार्तिकमिदमपि तत्रैव स्थितम् । विद्यावृत्तेस्तीयप्रत्यया-न्तादीकक्नेत्यर्थः । **प्रागेकादशभ्यः** । शेषपूरणेन सूत्रं व्याचष्टे-**पूरणप्रत्ययान्ताद्भागेऽनिति** । द्वितीयतृतीय-शब्दाभ्यां पूर्वसूत्रेण सिद्धत्वाच्चतुर्थादिदशमशब्दपर्यन्तविषयकमिदमित्यभिप्रेत्योदाहरति-**चतुर्थ इति** । नचानेनैव सिद्धत्वात्पूर्वसूत्रं किमर्थमिति शङ्क्यं, तस्य छन्दस्यपि प्रवृत्त्यर्थत्वात् । **षष्ठाष्टमाभ्यां ञ च** । 'पूर्वसूत्रविषये' इति शेषः । 'ञे'ति लुप्तप्रथमाकम् । ञे आदिवृद्धिः । **चादनिति** । इह न यथासङ्ख्यं, व्याख्यानात् । **मानपश्व-ङ्गयोः** । **अस्य अनो वेति** । अष्टकशब्दात्पूर्वसूत्रविहितस्य ञप्रत्ययस्य अन्प्रत्ययस्य च अनेन लुगित्यर्थः । **चकाराद्यथाप्राप्तमिति** । ञप्रत्ययः, अन्प्रत्ययश्चेत्यर्थः । ननु 'समर्थाना'मित्यतो वाग्रहणानुवृत्त्यैव ञाऽनोरभावे सति पश्वङ्गे अष्टमो भाग इत्यस्य सिद्धेरिह लुग्विधानं व्यर्थमित्याशङ्क्याह-**महाविभाषयेति** । **पूर्वत्रेति** । 'षष्ठाऽष्टमाभ्यां ञ चे'ति सूत्रे इत्यर्थः । एवं षष्ठाष्टमाभ्यां शब्दाभ्यां ञाऽनोरिह नित्यं प्राप्तयोः कदाचिल्लुग्विधिरर्थ-

---

**शे.]**तदवगमश्च पदान्तरसमभिव्याहारादिति बोध्यम् । एकं राशिं पञ्चधेति । पञ्चत्वसंख्याविशिष्टमित्यर्थः । **एकाद्धो** । धाग्रहणं धामात्रस्य यथा स्यात् । अन्यथाऽनन्तरत्वादधिकरणविचाले विहितस्यैव स्यात् । अत एव प्रत्ययो नाऽकारि । अधिकरणविचाले एव सन्निहितत्वादापत्तेः । यद्यप्यनेकमेकं क्रियते सोऽप्यधिकरणविचाल इति बोध्यम् । **ऐकध्यमिति** । 'भुङ्क्ते' इति, 'राशिं कुर्वि'ति वा शेषः । **द्वैधानीति** । स्वभावात् सत्त्ववाचित्वम् । **एधाच्च** । 'द्वित्र्योर्धा इत्यस्यैधा'जित्यर्थः । **याप्ये पा** । याप्यमत्र कुत्सितम् । कुत्साविशिष्टेऽर्थे वर्तमानात्पाशबित्यर्थः । अयं प्रवृत्तिनिमित्तकुत्सायामेव,'कुत्सिते'इत्यस्य त्वप्रवृत्तिनिमित्त-कुत्सायामपि प्रवृत्तिरिति बोध्यम् । **पूरणाद्भागे** । पूरणार्थकतीयप्रत्ययान्ताद्भागे वर्तमानात्स्वार्थे । **तीयादीकगिति** वचन-

महाविभाषया सिद्धे लुग्वचनं पूर्वत्र ञाऽनौ नित्यावितिं ज्ञापयति । एकादाकिनिच्चाऽसहाये ।५।३।५२। चात्कन्लुकौ । एकः । एकाकी । एककः । भूतपूर्वे चरट् ।५।३।५३। आढ्यो भूतपूर्व आढ्यचरः । षष्ठ्या रूप्य च ।५।३।५४। षष्ठयन्ताद्भूतपूर्वेऽर्थे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः । कृष्णचरः । तसिलादिषु रूप्यस्याऽपरिगणितत्वान्न पुंवत् । शुभ्राया भूतपूर्वः-शुभ्रारूप्यः । अतिशायने तमबिष्ठनौ ।५।३।५५।

त.]प्रत्ययो भवति । मुख्यतीयः पार्श्वतीय इत्यत्र त्वनर्थकत्वान्नातिप्रसङ्गः । भाग इति पुंस्त्वं विवक्षितम् । तेन समानेऽप्यर्थे विभक्तौ विवक्षितायां चतुर्थी पञ्चमीत्येव भवति । 'प्रागेकादशभ्यः' इत्यनि सति तु टापि चतुर्थी पञ्चमेति प्रसज्येत । एकादाकिनिच्चा । असहायवाचिन एकशब्दादाकिनिच् स्यात् । कन्लुकाविति । आकिनिचः कनो वा पक्षे लुक् । तयोरेवानेन सूत्रेण विधानात् । असहायग्रहणं सङ्ख्याशब्दनिरासार्थम् , अन्यथा प्रसिद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहणं स्यात् । इष्टापत्तौ तु द्वित्वे बहुत्वे च न स्यादेकाकिनौ एकाकिन इति । न हि द्वयोर्बहुषु वा एकत्वसंख्याऽस्ति । असहायत्वं तु परस्परातिरिक्तसहायाऽभावेन द्वयोर्बहूनामपि भवति । इह अकिनिजेवायं वक्तव्यः, सवर्णदीर्घेण सिद्धमिष्टम् । 'यस्येति चे'ति लोपश्चाऽकारोच्चारणसामर्थ्यान्न भवतीत्यादि हरदत्तग्रन्थे स्थितम् । भूतपूर्वे । अत्र वर्तमानाच्चरट् स्यात् । 'गोष्ठात् खञि'त्यत्रैव नोक्तं, विशेषविहितेन खञा चरटो बाधा मा भूदिति । संनिधौ हि सामान्यविशेषभावः स्फुटीभवति । यद्यपि दूरस्थस्यापि बाधो न्याय्य एव, तथापीह गौरवं स्वीकृत्य दूरे पाठसामर्थ्याद्बाधो नेति भावः । षष्ठ्या रूप्य च । भूतपूर्व इत्यनुवर्तते । तच्च यद्यपि पूर्वत्र ङ्याप्प्रातिपदिकस्य विशेषणं, तथापीह न तथा, षष्ठयन्तार्थस्य विशेषणत्वात्, तदाक्षिप्तस्य संबन्धिनो गवादेः प्रधानत्वात्, प्रधानेतरसंनिधौ च प्रधाने कार्यसंप्रत्ययस्य न्याय्यत्वात् । त[दित]दाह-भूतपूर्वेऽर्थे रूप्यः स्यादिति । अतिशायने । अतिपूर्वाच्छेतेर्ल्युट् । अतिशयनमेवातिशायनम् । अस्मादेव निपातनाद्दीर्घः । न तु सौत्रः । तेन लोकेऽपि दीर्घः साधुः । 'अबाधकान्यपि निपातनानि भवन्ति' । तेन ह्रस्वोऽपि साधुः । यद्यपि केवलः शेतिः स्वप्ने वर्तते तथाप्यतिपूर्वः प्रकर्षे । प्रकर्षश्चात्र नाधिक्यं, किं त्वभिभवः, 'पूर्वान्महाभागतयाऽतिशेषे' इति प्रयोगदर्शनात् । न चैवं 'प्रकर्षे तमबिष्ठनौ' इत्येव कुतो न सूत्रितमिति शङ्क्यम्, अतिशायनमिति निपातनार्थमेव तथोक्तत्वात् । अतिशयो न प्रत्ययार्थः, तथा हि सति लघोरतिशायनं लघुतममिति स्यात् । प्रत्ययार्थस्य प्राधान्यात् । नापि प्रकृत्यर्थः, तथा हि सति प्रकर्षातिशयनादिभ्य एव स्यात्, न त्वाढ्यादिभ्यः । किं तु प्रकृत्यर्थविशेषणम् ।

बा.]वानित्यर्थः । एकादाकिनिच्चा । असहायवाचकादेकशब्दात्स्वार्थे आकिनिच्प्रत्ययः स्यादित्यर्थः । भूतपूर्वे चरट् । भूतपूर्वे वर्तमानात्प्रातिपदिकात्स्वार्थे चरट् स्यादित्यर्थः । षष्ठ्या रूप्य च । 'रूप्ये'ति लुप्तप्रथमाकम् । 'भूतपूर्वे' इत्यनुवर्तते । षष्ठ्यन्ताद्भूतपूर्वेऽर्थे इति । भूतपूर्वेऽर्थे विद्यमानात्षष्ठ्यन्तादित्यन्वयः । भूतपूर्वे' इत्यनुवृत्तं हि श्रुतत्वात्षष्ठ्या विशेषणम् । भूतपूर्वे सम्बन्धे या षष्ठी तदन्तात्स्वार्थे रूप्यः स्यादिति फलति । यथाश्रुते तु स्वार्थिकप्रकरणविरोधः । कृष्णरूप्य इति । भूतपूर्वगत्या कृष्णसंबन्धी गौरित्यर्थः । शुभ्रारूप्यशब्दे 'तसिलादिषु' इति पुंवत्त्वमाशङ्क्य 'तसिलादयः प्राक्पाशपः' इत्यादिवार्तिकपरिगणितेषु रूप्यस्यानन्तर्भावात्तस्मिन्परे पुंवत्त्वं नेत्याह—तसिलादिष्वित्यादि । शुभ्राया भूतपूर्व इति । 'गौ'रिति शेषः । शुभ्रारूप्य इति । भूतपूर्वगत्या शुभ्रासंबन्धी गौरित्यर्थः । अतिशायने । अतिपूर्वकः शीङ्धातुरुपसर्गवशादुत्कर्षे वर्तते । उत्कर्षश्चाधिक्यफलको न्यक्कारः, नत्वाधिक्यमात्रं, तथा सति अकर्मकत्वापातात् । न चेष्टापत्तिः, तथा सति 'शुक्लमतिशेते शुक्लतरः', 'कृष्णमतिशेते कृष्णतरः' इत्यादिभाष्यविरोधात् । अतिशयिता=अतिशायनः । बाहुलकः

शे.]दयं 'दृष्टं सामे'त्यत्र भाष्ये स्पष्टम् । पूर्वत्र ञाऽनौ नित्याविति । न च षष्ठाऽष्टमाभ्यां भागार्थप्रतिपादनार्थं लुग्विधानं, प्रत्ययानां स्वार्थिकत्वेन प्रकृतेरतदर्थत्वलाभात् । प्रकरणादिकं तु तवाऽप्यावश्यकम् । स्वरस्तु लुकि नास्त्येवेति 'न लुमते'त्यत्र भाष्ये स्पष्टम् । एकादा । असहायवाचकादेकशब्दादित्यर्थः । असहाये किम् ? । प्रसिद्धतरत्वात्सङ्ख्यावाचकस्यैवान्यत्रेवात्रापि ग्रहणापत्तौ द्विवचनाद्यसिद्धिः स्यात् । वाक्यभेदेन कनाकिनिचोरेव लुक् । विधानसामर्थ्यात्पक्षे श्रवणमपि । भूतपूर्वे । तत्रार्थे वर्तमानात्प्रातिपदिकादित्यर्थः । षष्ठ्या रू । अत्र भूतपूर्वे इत्यनुवृत्तं श्रुतत्वात्षष्ठ्या विशेषणं । भूतपूर्वे संम्बन्धे या षष्ठी तदन्तात्स्वार्थे प्रत्ययः । अत एव स्वार्थिकप्रकरणविरोधो न । अतिशायने । अतिशेतेः—प्रकर्षोऽपरपर्याय इतर [illegible] न्यूनीकरणरूपोऽभिभवोऽर्थः । एवञ्च सकर्मकादस्माद्बाहुलकात्कर्तरि ल्युट् । अत एव निपातनाद्दीर्घः । तत्र वर्तमानात्प्रातिपदिकात्स्वार्थे प्रत्यय इत्यर्थः । यत्तु 'यावद्भूयात्प्रकर्षेऽतिशये इति तावदतिशायने' इत्युक्तमुपक्रमे भाष्ये, तत्र भावार्थकस्य, कर्तृप्रत्ययान्तस्य च तन्त्रेणोच्चारणं बोध्यम् । अग्रे 'गुणोऽभिधीयते' इत्युक्त्या कौलोऽतिशेते इति विग्रहप्रदर्शनेन । 'बाहुलकाल्ल्युडि'त्युक्त्या चै तथा भाष्यार्थ-

अतिशयविशिष्टाऽर्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेनाऽऽढ्य आढ्यतमः । लघुतमो लघिष्ठः । **तिङश्च** ।५।३।५६। तिङन्तादतिशये द्योत्ये तमप् स्यात् । **तरप्तमपौ घः** ।१।१।२२। एतौ घसंज्ञौ स्तः । **किमेत्तिङ-**

त.]प्रत्ययस्तु द्योतकः । तदेतदाह—**अतिशयविशिष्टेत्यादि** । **अयमेषामिति** । द्व्यवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते तदा तरबीयसुनावपवादौ वक्ष्येते । तथा च परिशेषाद्बहूनां मध्ये यदा एकदेशस्य निर्धारणं सोऽस्य विषय इति भावः । **आढ्यतम इति** । सुबन्तात्तमप् । 'सुपो धात्वि'ति लुक् । यद्यपि 'ङ्याप्प्रातिपदिका'-दित्येवानुवर्तते तथापि सुबन्तपरतयैव व्याख्येयम् । अन्यथा हि पूर्वाह्णेतमामित्यादौ 'घकालतनेषु कालनाम्नः' इति सप्तम्या अलुग्विधानं कथमुपपद्येत ? । **तिङश्च** । अस्मादिष्ठन्न भवति, 'अजादी गुणवचनादेवे'ति नियमादित्याशयेनाह—**तमप् स्यादिति** । **तरप्तमपौ घः** । अस्मिन्नेवाऽऽतिशायनिकप्रकरणे 'तादौ घः' 'पितौ घः' इति वा

बा.]कर्तरि ल्यु'डिति भाष्यम् । अत एव निपातनाद्दीर्घः । 'अतिशायने' इति प्रकृत्यर्थविशेषणम् । अतिशयितरि विद्यमानात्प्रातिपदिकात्स्वार्थे तमप् इष्ठन् च स्यादित्यर्थः । फलितमाह—**अतिशयविशिष्टार्थवृत्तेरिति** । यदि तु अतिशायनशब्दस्य भावल्युडन्तत्वं तर्हि प्रत्ययार्थस्य प्राधान्यापत्तौ शुक्लतरादिशब्दाच्छुक्लादिगतमतिशयनमिति बोधः स्यान्नत्वतिशयितशुक्ल इति । तथा च शुक्लतरः शुक्लतरेति पुंस्त्वं स्त्रीत्वं च न स्यात् । 'अतिशायने वर्तमाना'-दित्यर्थे तु अतिशयप्रकर्षादिशब्देभ्य एव स्यान्नतु पट्वादिभ्यः । अतिशयविशिष्टे लक्षणया विद्यमानादित्यर्थे अतिशय्यमानादपि प्रत्ययापत्तिः । अतिशयनकर्तरि लक्षणायां तु भाष्योक्तमेव साधु इत्यास्तां तावत् । **अयमेषामिति** । द्वयोरेकस्य निर्धारणे तरबीयसुनावपवादौ वक्ष्येते । अतः परिशेषाद्बहूनामेकस्य निर्धारणे अस्य तमपः प्रवृत्तिरिति भावः । **अतिशयेनाढ्य इति** । द्रव्यस्य जातेर्वा स्वतः प्रकर्षयोगो नास्ति, अन्यथा 'घटतम' इत्याद्यापत्तेः । किंतु गुणद्वारैव द्रव्यजात्योः प्रकर्षयोगः । तथा च 'आढ्यतम' इत्यत्र उत्कर्षविशिष्ट आढ्यः प्रकृत्यर्थः । तमप्तु तद्द्योतकः । तमपि सति 'सुपो धातु' इति सुपो लुक्, 'घकालतनेषु' इति योगेन सुबन्तादेव तद्धितोत्पत्तेरुक्तत्वात् । अत्र आतिशायनिकप्रत्ययान्तादातिशायनिकप्रत्ययोऽनभिधानान्न भवति । 'श्रेष्ठतमाय कर्मणे' इति तु छान्दसमिति भाष्ये स्पष्टम् । **लघिष्ठ इति** । लघुशब्दादिष्ठनि ओर्गुणे प्राप्ते 'इष्ठेमेयस्सु' इत्यनुवृत्तौ 'टे'रिति टिलोपः । **तिङश्च** । अत्राऽप्रातिपदिकत्वादप्राप्ते वचनम् । **तमप्स्यादिति** । 'अजादी गुणवचनादेवे'ति नियमादिष्ठन्नानुवर्तत इति भावः । **तरप्तमपौ घः** । प्रथमस्य प्रथमपादे सूत्रमिदम् । आतिशायनिकप्रत्ययप्रकरणान्ते, 'पितौ घः' तादौ घः इति वा वक्तव्ये प्रकरणान्तरे पृथग्गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति । तस्य आतिशायनिकप्रकरणबहिर्भूतस्य सत्त्वे तत्संग्रहणार्थं प्रकरणान्तरे सूत्रकरणस्यावश्यकत्वादित्याहुः । तेन 'अल्पाच्तरं' 'लोपश्च बलवत्तरः' इत्यादि सिद्धम् । **किमेत्तिङव्यय** । 'आमु' इति छेदः । उकार उच्चारणार्थः । किम्, एत्, तिङ्, अव्यय—एषां चतुर्णां द्वन्द्वः । 'किमेत्तिङव्ययप्रकृतिको घः' इति मध्यमपदलोपी

शे.]लाभः । तदाह—**अतिशयविशिष्टेऽर्थे इति** । अतिशयकर्तृरूपेऽर्थे इत्यर्थः । 'भावे ल्यु'डिति तु न युक्तम् । तत्रार्थे प्रत्यय इत्यर्थे तस्य प्राधान्यापत्तेः । अत एव भावल्युट्पक्षे लिङ्गवचनाऽसिद्धिर्भाष्ये शङ्किता । अतिशये वर्तमानात्प्रातिपदिकादित्यर्थेऽतिशयप्रकर्षादिभ्य एव प्रत्ययः स्यात्, न पट्वादिभ्यः । न हि विशेषणीभूतमर्थमादाय 'तत्राऽयं शब्दो वर्तते' इति व्यवहारः सचेतसाम् । न चाऽतिशयशब्दस्य तद्विशिष्टे लक्षणा, अभिभूयमानादेव प्रत्ययापत्तेः । तत्कर्तरि लक्षणायान्तु भाष्योक्तमेव साधु । अत एवैतेषां समानाधिकरणवृत्तितद्धितत्वेन व्यवहारो 'युष्मद्युपपदे' 'लटः शतृशानचौ' इत्यादौ भाष्ये । प्रातिपदिकार्थे तद्धितद्योत्यार्थस्य सामानाधिकरण्यमिति तदर्थः । तत्र प्रकृत्यर्थद्रव्यस्य स्वरूपत इतराऽभिभवकर्तृत्वाऽभावेऽपि तत्प्रवृत्तिनिमित्तगुणादिनिष्ठेन तेन तस्यापि तत्त्वं बोद्धव्यम् । 'गोतर' इत्यादौ प्रवृत्तिनिमित्तभूतजातेः स्वतस्तदभावेऽपि तत्सहचरितवाहदोहादिगतेन तस्य तत्त्वम् । एवञ्च तरबादिसमभिव्याहारे आढ्यादिपदानामितराऽभिभवकर्तृत्वविशिष्ट आढ्योऽर्थः । प्रत्ययस्तु द्योतकः । 'कुमारितरे'त्यादौ ङीप् तु न, तरप्प्रकृतिभूतेन तदन्तघटकेन कुमारीशब्दादिना वयोविशिष्टार्थगतस्त्रीत्वस्योक्तत्वात् । तरबन्तस्य तु प्रकर्षः प्रवृत्तिनिमित्तम् । अतस्तद्विशिष्टार्थगते स्त्रीत्वे टाबेव, न 'वयसी'ति ङीप् । वयोमात्रविशिष्टाऽर्थगते स्त्रीत्वे हि तत्प्रवृत्तिः । अत एव गोतरेत्यादौ न ङीप्, जातिप्रवृत्तिनिमित्तकत्वाऽभावात् । तदुक्तं भाष्ये—'यदि प्रथमान्तात्स्वार्थिकः, कुमारितरेत्यादौ—केवलवय . प्रकृष्टं वयोऽनतिरिक्तमिति—ङीप्प्राप्नोति । तरपोक्तत्वात् स्त्रीत्वस्य प्रत्ययो न भविष्यती'ति । तरपा=तत्प्रकृतिभूतेन वयोविशिष्टार्थगतस्त्रीत्वस्योक्तत्वादित्यर्थः । एतदुत्तरं 'टाबपि न प्राप्नोती'त्यादि भाष्यमेकदेशिनो रुक्तिरिति बोद्धव्यम् । आतिशायनिकप्रत्ययान्तादातिशायनिको न, अनभिधानात् । 'श्रेष्ठतमाय कर्मणे' इत्यादिकं तु छान्दसत्वात्स्वार्थे साध्विति सर्वं भाष्ये स्पष्टम् । **अतिशयेनेति** । प्रकृत्यादित्वात्तृतीया । **तिङश्च** । अप्रातिपदिकत्वादप्राप्ते वचनम् ।

**अव्ययघादाम्वद्रव्यप्रकर्षे** ।५।४।११। किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किंतमाम् । प्राह्णेतमाम् । पचतितमाम्। उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तमस्तरुः । **द्विवचनविभज्योपपदे तरबीयसुनौ** ।५।३।५७। द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयम

---

त.]वक्तव्ये प्रकरणान्तरे गुरुसूत्रकरणमत्यन्तस्वार्थिकमपि तरपं ज्ञापयति । तेन 'अल्पाच्तरं', लोपश्च बलवत्तरः' इत्यादि सिद्धम् । अल्पाजेव ह्यल्पाच्तरम् । न त्वत्र द्वयोरेकस्यातिशयविवक्षायां तरप् । अन्यथा 'शिवकेशवौ' इत्यादिसिद्धावपि 'शङ्खदुन्दुभिवीणाः' इत्यादि न सिध्येदित्याहुः । **किमेत्** । आमोरुकारो यदि त्यज्येत तर्हि पचतितरामित्यादौ 'ह्रस्वनद्यापः' इति नुटि 'पचतितराणा'मिति स्यात्, यस्येतिलोपस्य परेण नुटा बाधात् । सिद्धान्ते तु 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'ति परिभाषया नुड्विधौ नाऽस्य ग्रहणम् । **द्विवचनविभज्योपपदे** । द्वयोरर्थयोर्वचनं–द्विवचनम् । करणे ल्युट् । कर्मणि षष्ठ्या समासः । येन पदेन द्वावर्थावुच्येते तद्द्विवचनम् । विभक्तव्यं=विभज्यम् । 'ऋहलो'रिति ण्यति प्राप्ते तदपवादो यत् निपात्यते । ण्यति तु 'चजो'रिति कुत्वेन विभाग्यमिति स्यात् । विभाज्यशब्दस्य स्मृतिषु प्रयुक्तस्य साधुत्वं चिन्त्यमिति हरदत्तोक्तिश्चिन्त्या । ण्यन्तात् 'अचो य'दिति यति विभाज्यमिति रूपसिद्धेः । न चात्राऽर्थभेदः शङ्क्यः, 'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिच' इति 'णेरणौ' इति सूत्रे व्युत्पादनादिति दिक् । द्विवचनं च विभज्यं चेति द्वन्द्वः । तस्य उपपदेन कर्मधारयः । तथा च द्व्यर्थवाचके विभजनीये चोपपदे सतीत्यक्षरार्थः । 'द्विवचनान्ते उपपदे' इति व्याख्यायां तु 'दन्तोष्ठस्य दन्ताः स्निग्धतराः' इत्यादि न सिध्यति । नच 'द्वयोर्वचनं द्विवचन'मिति पक्षेऽपि नेदं सिध्यति, समाहारस्यैकत्वात्, गुणभूतवर्तिपदार्थाश्रयणे तु द्वात्रिंशद्दन्ताः, द्वावोष्ठाविति तेषां बहुत्वात्सुतरां न सिध्ये-

---

बा.]समासः । फलितमाह–**किम एदन्तादित्यादिना** । एभ्य इत्यर्थः । **किन्तमामिति** । अत्यन्तस्वार्थिकोऽयं तमप्, नत्वतिशायने । एषामतिशयेनाढ्य इतिवदेषामतिशयेन क इति विग्रहस्याऽसंभवात् । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं हि निर्धारणम् । किंशब्दश्च न जात्याद्यन्यतमप्रवृत्तिनिमित्तकः । एवं चात्रातिशयस्याऽप्रतीतेर्द्रव्यप्रकर्षो दूरापास्त इति भावः । **प्राह्णेतमामिति** । प्राह्णः=पूर्वाह्णः । 'प्राह्णाऽपराह्णमध्याह्नाः त्रिसन्ध्य'-मित्यमरः । अतिशयिते पूर्वाह्णे इत्यर्थः । पूर्वावयवगतप्रकर्षादह्नः प्रकर्षो बोध्यः । अत्र अह्नो द्रव्यम्, सूर्योदयादारभ्य सूर्यास्तमयावधिकस्यैव कालस्य अहन्शब्दार्थत्वात् । तस्य च उदयादिक्रियाघटितत्वान्न द्रव्यत्वमिति भावः । **पचतितमामिति** । अतिशयिता पाकक्रियेत्यर्थः, तिङन्तेषु क्रियाविशेष्यकबोधस्यैव 'प्रशंसायां रूप'बिति सूत्रभाष्ये प्रपञ्चितत्वात् । अतोऽत्र क्रियाया एव प्रकर्षो नतु द्रव्यस्येति भावः । **उच्चैस्तमामिति** । 'आशंसती'-त्यध्याहार्यम् । अतिशयेन उच्चैराशंसनादिक्रियेत्यर्थः । अत्रापि क्रियाया एव प्रकर्षो न तु द्रव्यस्य । **उच्चैस्तमस्तरुरिति** । अतिशयेन उच्चैस्तरुरित्यर्थः । अत्र उच्चैस्त्वप्रकर्षस्य तरौ द्रव्ये भानादाम्नेत्यर्थः । 'किंतमा'मित्यादौ 'यस्येति चे'ति लोपं परत्वाद्बाधित्वा ह्रस्वान्तलक्षणनुटो निवृत्त्यर्थमामु इत्युकारोच्चारणम् । सति तु तस्मिन् 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'ति परिभाषया नुड्विधावस्य न ग्रहणमित्यादि 'आमि सर्वनाम्नः' इति सूत्रभाष्ये प्रपञ्चितम् । **द्विवचन** । उच्यतेऽनेनेति वचनम् । द्वयोरर्थयोर्वचनं द्विवचनम् । द्व्यर्थप्रतिपादकमिति यावत् । न द्विवचनसंज्ञकमिह गृह्यते, व्याख्यानात् । विभक्तव्यं–विभज्यम् । 'ऋहलो'रिति ण्यतं बाधित्वा निपातनाद्यत् । द्विवचनं च विभज्यं चेति समाहारद्वन्द्वः । द्विवचनविभज्यं च तदुपपदं चेति कर्मधारयः । द्व्यर्थप्रतिपादके विभक्तव्यविषयके च उपपदे सतीति फलितम् । प्रातिपदिकादिति, तिङ इति चानुवर्तते । सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तात्सुबन्तत्वं प्रातिपदिकविशेषणं लभ्यते । फलितमाह—**द्वयोरेकस्येत्यादिना** । द्वयोर्मध्ये अन्यतरापेक्षया

---

शे.]किमेत्तिङ । किमादिप्रकृतिकघादित्यर्थः । तत्फलितमाह–**अव्ययाच्च यो घ इति** । **किंतमामिति**। आमन्तस्याऽव्ययत्वात्ततः परस्य सोर्लुक् । पूर्वाह्णेतरामित्यादौ तत्तत्क्रियाविशिष्टस्यैव तत्तत्कालव्यवहारनियामकत्वान्न शुद्धद्रव्यप्रकर्षः । **उच्चैस्तम इति** । उच्चैःशब्दोऽत्रोच्चत्वगुणवत्परः । द्रव्यस्य स्वतः प्रकर्षाऽभावेऽपि द्रव्यनिष्ठगुणादिप्रकर्ष एव द्रव्यप्रकर्ष इति बोद्धव्यम् । तदुक्तं तमप्सूत्रे कैयटेन –'अद्रव्यप्रकर्ष' इति निषेध उपचरितगुणक्रियागतप्रकर्षद्रव्यविषयो द्रष्टव्य' इति । 'उच्चैस्तमा'मित्यत्र त्वधिकरणशक्तिप्रधान उच्चैःशब्दः। तत्रोच्चत्वप्रकर्षेण तदाश्रयस्य प्रकर्षेऽपि तस्य न द्रव्यत्वम् । क्रियाकारकभावरूपसम्बन्धविशेषणत्वेनैव तस्य भानेनाऽप्रधानतया सर्वनामपरामर्शाऽयोग्यत्वात्, शक्त्या विशिष्टस्य सर्वनाम्ना परामर्शाऽभावाच्च । अत एव तदादिशब्देभ्यस्तत्तद्विभक्तयः । यत्किंचित्–इदं तदितिसर्वनामपरामर्शयोग्यं वस्तु तद्द्रव्यत्वेन विवक्षितमिति तमप्सूत्रे कैयटोक्तेः । इदं पूर्वाह्णेतमामित्यत्राऽपि बोद्धव्यम् । **द्विवचनविभज्यो** । द्व्यर्थप्रतिपादके विभजनीये चोपपदे द्वयोर्मध्येऽन्यतरापेक्षातिशय-

नयोरतिशयेन लघुर्लघुतरः । लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः, पटीयांसः । **अजादी गुणवचनादेव** ।५।३।५८। इष्ठन्नीयसुनौ गुणवचनादेव स्तः । [प्रथिष्ठः । प्रथीयान्] । नेह-पाचकतरः । पाचकतमः । **तुश्छन्दसि** ।५।३।५९। तृन्-तृजन्तादिष्ठन्नीयसुनौ स्तः । **तुरिष्ठेमेयःसु** ।६।४।१५४। तृशब्दस्य लोपः स्यादेषु परेषु ।

त.]दिति चेत् । अत्राहुः-वृत्तावभेदैकत्वसङ्ख्यामुपाददति वर्तिपदानि । ततश्च भेदस्य परित्यागादभेदैकत्वं, सङ्ख्याया-श्चोपादानाद्दन्तोष्ठलक्षणार्थद्वयं दन्तोष्ठशब्देनोच्यत इति नास्ति द्वयोर्वचनं द्विवचनमित्येतदर्थकद्विवचनोपपदे इति पक्षे दोष इति । विस्तरस्त्वाकरग्रन्थेभ्योऽवगन्तव्यः । अन्वर्थं चोपपदम्,-उपोच्चारितं पदमिति, न तु कृत्रिमम् । तद्धितविधौ तस्याऽसंभवात् । तच्च विग्रहवाक्य एव प्रयुज्यते । वृत्तौ तु गतार्थत्वान्नावश्यकम् । एवं स्थिते उपपद-ग्रहणं स्पष्टार्थम् । इह द्वे उपपदे, द्वे च प्रकृती सुबन्ततिङन्तरूपे, द्वौ च प्रत्ययौ, तथापि यथासङ्ख्यं नेष्यते । द्विवचनोपपदमुदाहरति—**अनयोरिति** । **लघीयानिति** । 'टे'रिति लोपः । उगित्वान्नुम् । 'सान्तमहतः' इति दीर्घः । हल्ङ्यादिसंयोगान्तलोपौ । विभज्योपपदमुदाहरति—**प्राच्येभ्य इति** । 'पञ्चमी विभक्ते' इति पञ्चमी । कथं तर्हि 'परुद्भवान् पटुरासीत्, ऐषमस्तु पटुतरः' इति ? । अत्राहुः-एकस्यापि धर्मिणस्तत्कालस्थत्वादिरूपधर्मभेदेन भेदाध्यारोपात्प्रतियोग्यपेक्षस्तत्कालस्थप्रकर्षः,तदाश्रयश्चेह तरप्प्रत्यय इति । व्यपदिशन्ति च-'अन्य एवासि संवृत्तः', 'कच्चित्स एवासि धनञ्जयस्त्वम्' इति । **अजादी गुणवचनादेव** । इष्टतोऽवधारणार्थं एवकारः । तेन प्रत्यय-नियमोऽयम् । एवकाराऽभावे तु 'गुणवचनादजादिप्रत्ययावेवे'ति प्रकृतिनियमोऽपि सम्भाव्येत । तथा च पटुतरः, पटुतम इत्यादि न सिध्येत् । **तुश्छन्दसि** । पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयम्, नत्वपूर्वो विधिः । तेन उपाधिसङ्करो न । **तुरिष्ठे** । 'टे'रित्यनेनान्त्यलोपे सिद्धेऽप्यारम्भसामर्थ्यात्सर्वस्य तृशब्दस्य लोपस्तदाह—**करिष्ठ**

बा.]अतिशयविशिष्टस्वार्थवृत्तेः, विभागप्रयोजकीभूतधर्मवाचकाच्च शब्दात्स्वार्थे तरबीयसुनौ स्त इति यावत् । यद्यप्यत्र द्वे सुबन्ततिङन्ते प्रकृती, द्वौ च प्रत्ययौ, तथापि न यथासङ्ख्यम्, व्याख्यानात् । अथ द्विवचनोपपदे उदाहरति—**अयमनयोरिति** । अत्र उपोच्चारितं पदम् उपपदम्, नतु कृत्रिमं, तद्धितविधौ तदसंभवात्, धात्वधिकार एव तत्प्रवृत्तेरुक्तत्वात् । तच्चोपपदं विग्रहवाक्येऽवश्यं प्रयुज्यते । तद्धितवृत्तौ तु गतार्थत्वान्नावश्यकम् । **लघीयानिति** । ईयसुनि नकार इत्, उकार उच्चारणार्थः, उगित्वान्नुम्, 'सान्ते'ति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ ।

अथ विभज्योपपदे उदाहरति-**उदीच्याः प्राच्येभ्य इति** । 'पञ्चमी विभक्ते' इति पञ्चमी । द्विवचनसंज्ञकग्रहणे तु 'दन्ताः स्निग्धतराः' इति न सिध्येत् ।'बहुषु पुत्रेषु एतदुपपन्नं भवति अयं मे ज्येष्ठोऽयं मे मध्यमः,अयं मे कनीया'-निति आद्यन्तवत्सूत्रस्थभाष्यप्रयोगात्, 'नैदेशिकानां वार्ततरका' इति 'तस्मिन्'इति सूत्रभाष्यप्रयोगाच्च अद्व्यर्थोपपदे-ऽपि तरबीयसुनावित्याहुः । **अजादी** । तरप्तमपौ इष्ठन्नीयसुनौ चेति चत्वारः प्रत्यया अनुक्रान्ताः । तेषां मध्ये यौ अजादी इष्ठन्नीयसुनौ तावित्यर्थः । तदाह—**इष्ठन्नीयसुनाविति** । **पाचकतरः, पाचकतम इति** । क्रिया-शब्दत्वात्ताभ्यामिष्ठन्नीसुनौ नेति भावः । 'गुणवचनादजादी एवे'ति विपरीतनियमव्यावृत्त्यर्थं एवकारः । तेन पटुतरः पटुतम इत्यादि सिद्धम् । **तुश्छन्दसि** । 'तृ' इत्यस्य 'तु'रिति पञ्चम्येकवचनम् । 'तृ'इत्यनेन तृन्तृचोः सामान्येन ग्रहणम् । प्रत्ययत्वात्तदन्तग्रहणम् । अजादी इत्यनुवर्तते । तदाह-**तृन्तृजन्तादिति** । अगुणवचनादपि तृप्रत्यया-न्तात्प्राप्त्यर्थमारम्भः । एवंच पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयं नत्वपूर्वो विधिरिति सूचयितुं छान्दस-मप्यत्रोपन्यस्तम् । तथाच अगुणवचनादपि कर्तृशब्दादिष्ठन्प्रत्यये 'कर्तृ-इष्ठ' इति स्थिते 'इष्ठेमेयस्सु' इति विहिते टिलोपे प्राप्ते-**तुरिष्ठेमेयःसु** । 'तृ' इत्यस्य 'तु'रिति षष्ठ्येकवचनम् । **एष्विति** । इष्ठन्, इमन्, ईयस् इत्येतिष्वि-

शे.]विशिष्टस्वार्थवृत्तेर्विभागप्रयोजकीभूतधर्मवाचकाच्च स्वार्थे प्रत्यय इत्यर्थः । विभज्यांशे उपपदशब्दबोधितसुबन्तत्वं प्रतिपदोक्तत्वात् 'पञ्चमी विभक्ते' इति विहितपञ्चम्येवेति बोद्धव्यम् । तेन 'साङ्काश्यकानां पाटलिपुत्रकाणाञ्च पाटलिपुत्रका आढ्यतमा' इत्यत्र न तरप् । पञ्चमी त्वत्र न, विभागस्यैवाऽभावात् । चेन्न समूहरूपतया विभागस्यापि सत्त्वात् । 'एते खल्वपि नैदेशिकानां वार्त-तरकाः' इति 'तस्मि'न्निति सूत्रे भाष्ये प्रयोगात्, 'बहुषु पुत्रेष्वेतदुपपन्नं भवति अयं मे ज्येष्ठोऽयं मध्यमोऽयं कनीया'नित्याद्य-न्तवत्सूत्रस्थभाष्यप्रयोगाच्चाऽद्व्यर्थोपपदेऽपीमौ साधू, सूत्रे द्विवचनेति तूदाहरणमात्रमिति केचित् । परे तु नैदेशिकानां मध्येऽल्पेभ्यः शब्देभ्य इत्यध्याहृत्य विभज्योपपदे तरप्, आभ्यामित्यध्याहृत्याऽन्त्ये ईयसुन् । अत एव 'न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यम् । केन तर्हि ? । तमपा' इति तमप्सूत्रे भाष्ये उक्तमित्याहुः । 'नतरा'मित्यादौ प्रतियोग्यसमानाधिकर-णत्वरूपात्यन्तिकत्वेऽभावगते प्रकर्षे तरप् । प्रवृत्तिनिमित्तगते प्रकर्षे तरबादिरिति तु प्रकृत्यर्थप्रकर्षाऽसम्भवविषयम् । एवं द्योत्यार्थ-प्रकर्षेऽपि द्योतकात्तरप्, यथा 'नितराङ्गच्छतो'त्यादौ । तुश्छन्दसि । पूर्वनियमव्यावर्तितप्रतिप्रसवत्वं स्फुटं बोधयितुं छान्दसम-प्यत्रोपन्यस्तम् । तुरिष्ठे । इमनिज्ग्रहणमुत्तरार्थं । न चैत एव ज्ञापकादिष्ठन्नीयसुनोः सिद्धौ तुश्छन्दसीति व्यर्थमिति वाच्यम्,

अतिशयेन कर्ता करिष्ठः । दोहीयसी धेनुः । **प्रशस्यस्य श्रः** ।५।३।६०। अस्य श्रादेशः स्यादजाद्योः । **प्रकृत्यैकाच्** ।६।४।१६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः । श्रेयान् । **ज्य च** ।५।३।६१। प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः । ज्येष्ठः । **ज्यादादीयसः** ।६।४।१६०। 'आदेः परस्य' । ज्यायान् । **वृद्धस्य च** ।५।३।६२। ज्यादेशः स्यादजाद्योः । ज्येष्ठः—ज्यायान् । **अन्तिकबाढयोर्नेदसाधौ** ।५।३।६३। अजाद्योः । नेदिष्ठः । नेदीयान् । साधिष्ठः । साधीयान् । **स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च**

त.]इति । **दोहीयसीति** । इयमनयोरतिशयेन दोग्ध्री । 'भस्याढे तद्धिते सिद्धश्च प्रत्ययविधौ' इति वचनात्तद्धिते कर्तव्ये प्रागेव पुंवद्भाव इति ङीपि निवृत्ते दोग्धृशब्दात्प्रत्ययः, ततस्तृचि निवृत्ते निमित्ताऽभावाद्धत्वजश्त्वयोरपि निवृत्तिः । अलौकिके विग्रहवाक्ये प्रागेव तयोरप्रवृत्तिः 'अकृतव्यूह'परिभाषयेति तु तत्त्वम् । गुणस्तु प्रवर्तते । लुप्तेऽपि तृचि प्रत्ययलक्षणध्रौव्यात्, छान्दसमपि 'तु'रिति सूत्रम्, 'तुरिष्ठेमेयःसु' इति च 'णाविष्ठव'दित्यतिदेशेन लोकेऽपि कर्तारमाचष्टे कारयतीत्यादावुपयोक्ष्यमाणत्वादिहोपन्यस्तम् । **प्रशस्यस्य श्रः** । 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह—**अजाद्योरिति** । अजाद्योः किम् ? । प्रशस्यतरः । प्रशस्यतमः । **श्रेष्ठ इति** । प्रकृतिभावादिह 'टे'रिति लोपो 'यस्ये'ति लोपश्च न भवति । **ज्यादादी** । ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात् । **वृद्धस्य च** । स्वरूपस्येह ग्रहणं, न तु 'वृद्धिर्यस्याचामादि'रिति पारिभाषिकस्य, व्याख्यानात् । अस्य 'प्रियस्थिरे'त्यादिना वर्षादेशोऽपि पक्षे भवति । न च तस्येमनिचि सावकाशता शङ्क्या, वृद्धशब्दादिमनिचोऽभावात् । यदि तु 'वृद्धस्य वर्षिश्चे'ति सूत्रमिहैव क्रियेत तदा द्विर्वृद्धग्रहणं न कर्तव्यमिति लाघवं भवतीत्याहुः । **स्थूलदूर** । परग्रहणं

बा.]त्यर्थः । अयं लोपः सामर्थ्यात्सर्वादेशः, अन्त्यस्य ऋकारस्य 'टे'रित्येव सिद्धेः । **करिष्ठ इति** । अयमनयोरतिशयेन कर्तेत्यर्थः । **दोहीयसी धेनुरिति** । इयमनयोरतिशयेन दोग्ध्रीत्यर्थः । इष्ठनि 'भस्याढे' इति पुंवत्त्वे ङीपो निवृत्तौ तृप्रत्ययस्य लोपे परनिमित्ताऽभावात् 'दादे'रिति घत्वस्य निवृत्तौ उगित्त्वात् ङीपि 'दोहीयसी'ति रूपम् । 'पुगन्ते'ति गुणस्तु न निवर्तते, लुप्तेऽपि तृचि प्रत्ययलक्षणेन तत्सत्त्वात् ।

**प्रशस्यस्य श्रः** । **अजाद्योरिति** । इष्ठन्नीयसुनोरित्यर्थः । 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इति भावः । प्रशस्यशब्दस्य क्रियाशब्दतया गुणवचनत्वाऽभावेऽपि अत एव ज्ञापकादिष्ठन्नीयसुनौ । श्र-इष्ठ, श्र-ईयस् इति स्थिते इष्ठेमेयःसु विहितटिलोपे प्राप्ते—। **प्रकृत्यैकाच्** । एकोऽच् यस्येति बहुव्रीहिः । **इष्ठादिष्विति** । 'तुरिष्ठेमेयःसु' इत्यत तदनुवृत्तेरिति भावः । 'अल्लोपोऽनः,' 'नस्तद्धिते,' 'यस्येति च,' टे रित्यादेरेतत्प्रकरणस्थलोपस्यायं प्रकृतिभाव इति भाष्ये स्पष्टम् । **श्रेष्ठः** । **श्रेयानिति** । अयमनयोरतिशयेन प्रशस्त इत्यर्थः । **ज्य च** । 'ज्ये'ति लुप्तप्रथमाकम् । प्रशस्यस्येति, अजादी इति चानुवर्तते । तदाह—**प्रशस्यस्येति** । **ज्येष्ठ इति** । 'प्रकृत्यैका'जिति प्रकृतिभावान्न टिलोपः । ईयसुनि निज्यादेशे 'ज्येया'निति प्राप्ते—। **ज्यादादीयसः** । ज्यात्—आदितिच्छेदः । ज्यात् परस्य ईयस आकारः स्यादित्यर्थः । अन्तादेशत्वे प्राप्ते आह—**आदेः परस्येति** । **वृद्धस्य च** । शेषपूरणेन सूत्रं व्याचष्टे—**ज्यादेशः स्यादजाद्योरिति** । इष्ठन्नीयसुनोरित्यर्थः । **ज्येष्ठ इति** । अयमनयोरतिशयेन वृद्ध इत्यर्थः । **अन्तिकबाढयोः** । **अजाद्योरिति** । शेषपूरणमिदम् । अन्तिक, बाढ अनयोरिष्ठेयसुनोः परतः 'नेद' 'साध' एतावादेशौ स्त इत्यर्थः । **नेदिष्ठः नेदीयानिति** । अयमनयोरतिशयेनान्तिक इत्यर्थः । **साधिष्ठः साधीयनिति** । अयमनयोरतिशयेन बाढ इत्यर्थः । **बाढो—भृशः** । 'भृशप्रतिज्ञयोर्बाढ'मित्यमरः । 'अतिवेलभृशाऽत्यर्थातिमात्रोद्गाढनिर्भर'मिति च । **स्थूलदूर** । **एषामिति** । स्थूल, दूर, युवन् ह्रस्व, क्षिप्र, क्षुद्र

शे.]इमनिचोऽपि कल्पनापत्तेः । लोकेऽपीष्टनादेरापत्तेश्च । यद्यपि निमित्तस्य छान्दसत्वादिदं छान्दसं, तथापि तस्यैवेहोपन्यासादिदमप्यत्रोक्तम् । **लोप इति** । स च वचनसामर्थ्यात्सर्वादेशः, अन्त्यस्य 'टे'रित्यनेन सिद्धेः । **प्रशस्य** । 'अजादी' इत्यनुवृत्तं सप्तम्या विपरिणम्यत इत्याह—**अजाद्योरिति** । प्रशस्यत्वं गुण इत्यजादी । तस्य क्रियात्वेऽप्यत एव ज्ञापकात्तौ । **प्रकृत्यैकाच्** । **इष्ठादिष्विति** । तेन श्रो देवताऽस्य श्रः स्थालीपाक इत्यत्र नेदम् । अयञ्च प्रकृतिभावोऽल्लोपोनः' 'नस्तद्धिते' 'यस्येति च' 'टेः' इत्यादेरेतत्प्रकरणस्थलोपमात्रस्येति भाष्ये स्पष्टम् । **अन्तिकबा** । अत्र नेदसाधौ हलन्तावेव । अन्यथा 'प्रकृत्यैका'जिति सूत्रस्थभाष्योक्तरीत्या 'श्रेष्ठ इत्यादावुच्चारणसामर्थ्यादकारस्य लोपाऽभाववदत्रापि तदभावापत्तौ 'नेदिष्ठ' इत्याद्यसिद्धेः, उत्तरसूत्रस्थकस्याच्चर्याच्च । 'कनिष्ठ' इत्यादौ 'टे'रिति लोपस्तु न, प्रकृतिभावात्, कनस्तदपवादत्वाच्च । 'नस्तद्धिते' इत्यपि न, अन उच्चारणसामर्थ्यात् । सर्वादेशस्तु केत्यादेशेनापि सिद्ध इति बोध्यम् । **स्थूलदूर** । 'यणादी'ति लुप्तषष्ठीकम् । 'पर'मिति षष्ठ्यर्थे प्रथमा । पूर्वत्वेऽवधिस्तु यणादिरेव । 'यणादी'ति बहुव्रीहिः । इष्ठनिमापया क्षिप्रक्षुद्रयोः पकारदकारयोर्न गुणः । युवशब्दस्याऽगुणवचनत्वादत एव ज्ञापकादजादी । अन्ये तु गुणवचना एव । न च क्षिप्रक्षुद्रावगुणवचनौ, इमनिचि तद्ग्रहणस्य चारितार्थ्या-

गुणः ।६।४।१५६। एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । दविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयस् । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात्—ह्रसिमा । क्षेपिमा । क्षोदिमा ।
**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः।६।४।१५७।**
प्रियादीनां क्रमात्प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः । एवमीयसुन् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वादिमनिच् । प्रेमेत्यादि । **बहोर्लोपो भू च बहोः** ।६।४।१५८। बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । भूयान् । **इष्ठस्य यिट् च** ।६।४।१५९। बहोः परस्य इष्ठस्य लोपः स्यात्, यिडागमश्च । भूयिष्ठः ।

त.] यविष्ठो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्लोपो माभूदिति । पूर्वग्रहणं तु स्पष्टार्थम् । परस्मिन् लुप्ते सामर्थ्यात्पूर्वस्यैव गुणलाभात् । **स्थविष्ठ इति** । न चात्र 'ओर्गुण' इत्येव सिद्धे गुणग्रहणं व्यर्थमिति वाच्यं, परयणादिलोपस्याभीयत्वेनाऽसिद्धत्वात् क्षिप्रक्षुद्रयोरोर्गुणस्य प्राप्त्यभावात् । क्षेपिष्ठः क्षोदिष्ठ इत्यसिद्धिप्रसङ्गाच्च । **एवमिति** । प्रेयान् । स्थेयान् । स्फेयान् । वरीयानित्यादि । **इमेयसोर्लोप इति** । स च 'आदेः परस्ये'त्यादेरेव भवति । **इष्ठस्य यिट् च** ।

बा.] इत्येतेषामित्यर्थः । **यणादीति** । यण्—आदिर्यस्येति विग्रहः । 'पर'मिति 'यणादी'त्यस्य विशेषणम् । परभूतं यणादीत्यर्थः । **लुप्यत इति** । 'अल्लोपोऽनः' इत्यतोऽनुवृत्तं लोपपदमिह कर्मणि घञन्तमाश्रीयत इत्यर्थः । भावसाधनत्वे परमित्यनेन सामानाधिकरण्याऽसंभवात् । **पूर्वस्येति** । पूर्वत्वं यणपेक्षया बोध्यम् । **इष्ठादिष्विति** । 'तुरिष्ठेमेयस्सु' इत्यतस्तदनुवृत्तेरिति भावः । **स्थविष्ठ इति** । स्थूलशब्दादिष्ठनि ल इत्यस्य लोपे ऊकारस्य गुण ओकारः । अवादेश इति भावः । ओर्गुणस्तु न प्रवर्तते, यणादिलोपस्याऽऽभीयत्वेनासिद्धत्वात् । एवमग्रेऽपि । **दविष्ठ इति** । दूरशब्दादिष्ठनि र इत्यस्य लोपे ऊकारस्य गुणे अवादेशः । **यविष्ठ इति** । युवन्शब्दादिष्ठनि 'व'-नित्यस्य लोपे गुणे अवादेशः । 'पर'मित्यनुक्तौ 'यु' इत्यस्यापि यणादेर्लोपः स्यात् । **ह्रसिष्ठ इति** । ह्रस्वशब्दादिष्ठनि 'व' इत्यस्य लोपः । 'पर'मित्यनुक्तावत्र रादेर्लोपः स्यात् । **क्षेपिष्ठ इति** । क्षिप्रशब्दादिष्ठनि र इत्यस्य लोपे इकारस्य गुणः । 'इको गुणवृद्धी' इत्युक्तेर्न पकारस्य गुणः । **क्षोदिष्ठ इति** । क्षुद्रशब्दादिष्ठनि र इत्यस्य लोपः, उकारस्य गुणः । **एवमीयसिति** । स्थवीयान्, दवीयान्, यवीयान्, ह्रसीयान्, क्षेपीयान्, क्षोदीयान् । इमनिजनुवृत्तेः प्रयोजनमाह—**ह्रस्वक्षिप्रेति** । **प्रियस्थिर** । **प्रियादीनामिति** । प्रिय, स्थिर, स्फिर, उरु, बहुल, गुरु, वृद्ध, तृप्र, दीर्घ, वृन्दारक एषां दशानामित्यर्थः । **प्रादय इति** । प्र, स्थ, स्फ, वर्, बंहि, गर्, वर्षि, त्रप्, द्राघि, वृन्द एते दशेत्यर्थः । **इष्ठादिष्विति** । इष्ठेमेयस्स्वित्यर्थः । 'तुरिष्ठेमेयः सु' इत्यतस्तदनुवृत्तेरिति भवः । **प्रेष्ठ इति** । प्रियशब्दादिष्ठनि प्रकृतेः प्रादेशः । आभीयत्वेनाऽसिद्धत्वादकारोच्चारणसामर्थ्याच्च न टिलोपः । **स्थेष्ठ इति** । स्थिरशब्दादिष्ठनि प्रकृतेः स्थादेशः । प्रकृतिभावान्न टिलोपः । **स्फेष्ठ इति** । स्फिरशब्दस्य इष्ठनि स्फादेशः । **वरिष्ठ इति** । उरुशब्दादिष्ठनि 'वर्' आदेशः । **बंहिष्ठ इति** । बहुलशब्दस्य 'बंहि' इत्यादेशः । इकार उच्चारणार्थः । अन्यथा आभीयत्वेनाऽसिद्धत्वादुच्चारणसामर्थ्याद्वा इकारस्य लोपो न स्यात् । **गरिष्ठ इति** । गुरुशब्दस्य इष्ठनि 'गर्' आदेशः । **वर्षिष्ठ इति** । वृद्धशब्दस्य इष्ठनि वर्षिरादेशः । बंहिवदिकार उच्चारणार्थः । **त्रपिष्ठ इति** । तृप्रशब्दस्य इष्ठनि 'त्रप्' आदेशोऽदुपधः । तृपधातोस्तृप्त्यर्थकादौणादिके रकि तृप्रशब्दः । **द्राघिष्ठ इति** । दीर्घशब्दस्य इष्ठनि द्राघिरादेशः । बंहिवदिकार उच्चारणार्थः । **वृन्दिष्ठ इति** । वृन्दारकशब्दस्य इष्ठनि वृन्द आदेशः । अकार उच्चारणार्थः । **एवमीयसुन्निति** । प्रेयान्, स्थेयान्, स्फेयान्, वरीयान्, बंहीयान्, गरीयान्, वर्षीयान्, त्रपीयान्, द्राघीयान्, वृन्दीयान् । अत्र इमनिजनुवृत्तेः प्रयोजनमाह—**प्रियोरुबहुलेति** । **इत्यादीति** । वरिमा, बंहिमा, गरिमा, द्राघिमा । **बहोर्लोपः** । 'भू' इति लुप्तप्रथमाकम् । इष्ठेमेयस्स्वित्यनुवृत्तम् । तत्र इष्ठन उत्तरसूत्रे कार्यान्तरविधानादिह तस्य न संबन्धः । तदाह—**बहोः परयोरिति** । 'आदेः परस्ये'ति प्रत्ययादिलोपः । **भूमेति** । बहुत्वमित्यर्थः । बहुशब्दात्पृथ्वादिमनिचि प्रकृतेर्भूभावः, प्रत्ययादेरिकारस्य लोपश्च ।

शे.] त्वयोरिष्ठनाद्यनापत्तौ 'क्षेपिष्ठ' इत्याद्यसिद्धेः । वस्तुतो युवशब्दो गुणवचनोऽपीति 'आकडार'सूत्र-'जातेरस्त्री'ति सूत्रभाष्याभ्यां लभ्यते । **प्रियस्थिर** । 'बंहि'त्यादाविकार उच्चारणार्थः । अन्यथाऽऽभीयाऽसिद्धत्वादिकारोच्चारणसामर्थ्याद्वा प्रादाविव टिलोपानापत्त्या 'बंहिष्ठ' इत्याद्यसिद्धेः । द्राघिसाहचर्याद्वृन्दो हलन्तः । तेन वृन्दिष्ठ इति । प्रस्थस्फास्तु—प्रेष्ठ इत्यादेर्भाष्ये उदाहृतत्वेनाऽदन्ता एव । 'प्रेष्ठ' इत्यादावादेशस्याऽसिद्धत्वात्प्रकृतिभावाच्च तन्निमित्तकटिलोपो न । स्थानिनिमित्तकोऽपि न, प्रादेशानां टिलोपापवादत्वात् । **बहोर्लो** । इष्ठन उत्तरसूत्रेण कार्यान्तरस्य विधानात्तस्येह न ग्रहणमित्याशयेनाह—**इमेयसोरिति** । लोपश्च

**युवाऽल्पयोः कनन्यतरस्याम्** ।५।३।६४। एतयोः कनादेशो वा स्यादिष्ठेयसोः । कनिष्ठः । कनीयान् । पक्षे–यविष्ठः । अल्पिष्ठः । इत्यादि । **विन्मतोर्लुक्** ।५।३।६५। विनो मतुपश्च लुक् स्यादिष्ठेयसोः । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान्–त्वचिष्ठः । त्वचीयान् । **प्रशंसायां रूपप्** ।५।३।६६। सुबन्तात्तिङन्ताच्च । प्रशस्तः पटुः पटुरूपः । प्रशस्तं पचति पचतिरूपम् । **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** । ईषदूनो विद्वान् विद्वत्कल्पः । यशस्कल्पम् । यजुष्कल्पम् । विद्वद्देशीयः । पचतिकल्पम् । **विभाषा सुपो**

---

त.]पूर्वसूत्रं संपूर्णमनुवर्तते । तदाह— **बहोरित्यादि** । 'भूरादेशश्चे'त्यपि ज्ञातव्यम् । **भूयिष्ठ इति** । अत्र इष्ठस्याऽऽदिलोपे कृते यिशब्द आगमः । यद्वा लोपापवादो यकार आगमः । इकारस्तूच्चारणार्थः । पक्षद्वयमपीदं भाष्यारूढम् । **युवाल्पयोः** । 'युवे'ति स्वरूपग्रहणं, न तु युवापत्यस्य, अल्पसाहचर्याद्व्याख्यानाच्च । 'अजादी' इत्यनुवर्तनादजाद्योरेव परयोर्न तु तरप्तमपोरित्याशयेन व्याचष्टे—**इष्ठेयसोरिति** । **विन्मतोर्लुक्** । **स्रजिष्ठ इति** । विनो लुकि कृते भत्वात्पदकार्याऽभावः । अस्मादेव ज्ञापकादगुणवचनत्वेऽपि विन्मतोरजादी भवतः । **प्रशंसायां रूपप्** । प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा, न तु स्तुतिः । तेनेहापि भवति—'चौररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति । गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते । **पचतिरूपमिति** । क्रियाप्रधानमाख्यातम् । क्रियायाश्चाऽसत्त्वरूपत्वेऽपि औत्सर्गिक-

---

बा.]**भूयानिति** । अयमनयोरतिशयेन बहुरित्यर्थः । वैपुल्यवाचकाद्बहुशब्दादीयसुनि प्रकृतेर्भूभावः,प्रत्ययादेरिकारस्य लोपश्च । भूभावस्याभीयत्वेनाऽसिद्धत्वादोर्गुणो न भवति । **इष्ठस्य यिट् च** । **लोपः स्यादिति** । 'आदेः परस्ये'ति बोध्यम् । यिटि टकार इत् । इष्ठस्यादिलोपे कृते यिडागमः । ट इत् । टित्वात्प्रत्ययस्याद्यवयवः । बहोर्भूभावस्तु पूर्वसूत्रेण सिद्ध एव । यदि तु लोप इति निवृत्तं तदा यकार आगम इति भाष्यम् । **युवाल्पयोः** । **इष्ठेयसोरिति** । 'अजादी' इत्यनुवृत्तस्य सप्तम्या विपरिणामादिति भावः । **कनिष्ठः कनीयानिति** । अयमनयोरतिशयेन युवा अल्पो वेत्यर्थः । **पक्षे यविष्ठ इति** । युवन्शब्दादिष्ठनि 'स्थूलदूरे'ति वनो लोपे उकारस्य गुणेऽवादेशे रूपम् । **अल्पिष्ठ इति** । अल्पशब्दादिष्ठनि टिलोपः । **इत्यादीति** । यवीयान्, अल्पीयानिति रूपद्वयमादिपदग्राह्यम् । **विन्मतोर्लुक्** । **इष्ठेयसोरिति** । 'अजादी' इत्यनुवृत्तस्य सप्तम्या विपरिणामादिति भावः । **स्रजिष्ठ इति** । स्रग्विन्शब्दादिष्ठनि विनो लुकि तन्निमित्तपदत्वभङ्गात्कुत्वनिवृत्तिरिति भावः । एवं स्रजीयानिति । **त्वचिष्ठ इति** । त्वग्वच्छब्दादिष्ठनि मतुपो लुकि तन्निमित्तपदत्वभङ्गात्कुत्वनिवृत्तिरिति भावः । एवं त्वचीयान् । अत एव ज्ञापकादाभ्यामिष्ठन्नीयसुनौ । **प्रशंसायां रूपप्** । **सुबन्तात्तिङन्ताच्चेति** । शेषपूरणमिदम् । 'तिङश्चे'त्यनुवृत्तम्, प्रातिपदिकादिति च । 'घकाले'त्यादिलिङ्गात्सुबन्तादिति लभ्यत इति भावः । प्रशंसाविशिष्टे स्वार्थे वर्तमानात्तिङन्तात्सुबन्ताच्च रूपबिति फलितम् । **पचतिरूपमिति** । प्रशस्ता पाकक्रियेत्यर्थः । अत्र भाष्ये 'क्रियाप्रधानमाख्यातं द्रव्यप्रधानं नामे'ति सिद्धान्तितम् । पचतोरूपं पचन्तिरूपमित्यत्र च न द्विवचनबहुवचने, तिङैव द्वित्वबहुत्वयोरुक्तत्वात् । एकवचनं तूत्सर्गतः करिष्यते, नपुंसकत्वं तु लोकादित्यपि भाष्ये स्पष्टम् । **ईषदसमाप्तौ** । ईषदसमाप्तिविशिष्टेऽर्थे विद्यमानात्सुबन्तात्स्वार्थे कल्पप्, देश्य, देशीयर् एते प्रत्ययाः स्युरित्यर्थः । **विद्वत्कल्प इति** । इषन्न्यूनवैदुष्यवानित्यर्थः । **यशस्कल्पमिति** । असंपूर्णं यशः इत्यर्थः । 'सोऽपदादौ' इति सत्वम् । **यजुष्कल्पमिति** । असंपूर्णं यजुरित्यर्थः । 'इणः षः' इति षत्वम् । **विद्वद्देश्य इति** । असम्पूर्णवैदुष्यवानित्यर्थः । एवं विद्वद्देशीयः । अत्र सर्वत्र 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते' इति वचनात् प्रकृतिलिङ्गत्वं बोध्यम् । **पचतिकल्पमिति** । असंपूर्णा पाकक्रियेत्यर्थः । 'पचतिरूप'मितिवल्लिङ्गवचननिर्वाहः ।

---

शे.]'आदेः परस्ये'त्यादेः । भूभावस्याऽसिद्धत्वाद्भूयानित्यत्रौर्गुणो न । दीर्घोच्चारणन्तु भूमेत्यादौ सावकाशम् । **विन्मतोर्लुक्** । 'अजादी' इत्यनुवृत्तेराह—**इष्ठेयसोरिति** । अत एव ज्ञापकादाभ्यामजादी । न च विन्विषये मतुपःसत्त्वेन तल्लुकैव सिद्धौ विग्रहणं व्यर्थम्, [विन्नत्तास्वगुणवचनत्वान्नेष्ठन् ]इति वाच्यं, स्रक्करोतीत्यादिना णिचीष्ठवद्भावेन विनो लुगर्थं तत्सत्त्वात् । 'बिल्वकादिभ्यश्छस्ये'त्युत्तरमेव 'विन्मतोरिष्ठेमेयःसुतुः' इति नोक्तम्, तत्रत्यलुक्पदस्याऽस्वरितत्वात् । अत एव तुरित्यत्र-लोप इत्येव व्याख्यातम् । **प्रशसायां रू** । प्रशंसावि[शि]ष्टेऽर्थे वर्तमानात्स्वार्थे रूपबित्यर्थः । प्रशंसा चात्र परिपूर्णत्वरूपवैस्पष्ट्यरूपा प्रकृत्यर्थतावच्छेदकधर्मनिष्ठा तत्समानाधिकरणधर्मनिष्ठा वा प्रकृत्यर्थे आरोप्यते । तेन चोररूपोऽयं यदक्ष्णोरञ्जनं हरेदिति सिद्धम् । [ तद्विशिष्टश्च प्रशस्य एव, न प्रशंसिता, अनभिधानात्] । प्राशस्त्यं प्रतियोगिनिरपेक्षमतिशायनन्तु तत्सापेक्षमिति न तदनुवृत्त्या निर्वाहः । **ईषदसमा** । ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात्प्रातिपदिकादित्यर्थः । स्वार्थिकानां प्रकृतितो लिङ्गवचनाङ्गीकारात् 'बहुगुडो द्राक्षा' 'वृषभकल्प इयज्ञौ'रित्यादि सिद्धम् । 'गुडकल्पा द्राक्षे'ति तु कचित्प्रकृतितो लिङ्गवचनातिक्रमात्सिद्धम् । 'णचः स्त्रिया'मिति सूत्रे

**बहुच् पुरस्तात्तु** ।५।३।६८। ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा, स्यात्स च प्रागेव नतु परतः । ईषदूनः पटुर्बहुपटुः । पटुकल्पः । सुपः किम् ? । यजतिकल्पम् । **प्रकारवचने जातीयर्** ।५।३।६९। प्रकारवति चायम् । थाल् तु प्रकारमात्रे । पटुप्रकारः—पटुजातीयः । **प्रागिवात्कः** ।५।३।७०। 'इवे प्रतिकृतौ' इत्यतः

त.]मेकवचनं भवति । तेन पचतोरूपं पचन्तिरूपमित्यादि । इह प्रथमैव, विभक्त्यन्तराणामप्राप्तेरिति बहवः । वस्तुतस्तु पश्येत्यादियोगे कर्मणि द्वितीयापि सुलभा । क्लीबत्वं लोकात् । एवं 'पचतिकल्प'मित्यादावपि बोध्यम् । **विभाषा सुपः** । सूत्रे 'सुपः' इति षष्ठ्यन्तं, 'षष्ठ्यतसर्थप्रत्ययेने'त्युक्तेः । **सुबन्तादिति** । एतच्च पञ्चम्यन्तं युक्तमेव, पुरस्ताच्छब्दपर्यायस्य प्रागितिशब्दस्य वृत्तौ प्रयुक्तत्वात् । प्रागित्यपकृष्यत इति तु मनोरमायां स्थितम् । न च सूत्रस्थपुरस्ताच्छब्दसमानार्थकप्राक्शब्दयोगेऽपि 'षष्ठ्यतसर्थे'ति षष्ठी स्यादिति वाच्यम्, 'अन्यारा'दिति सूत्रेऽञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थप्रत्ययेने'त्येतद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा 'प्राक् प्रत्यग्वा ग्रामा'-दित्युदाहृतत्वात् । काशिकायां तु वृत्तावपि पुरस्ताच्छब्दः प्रयुक्तः, सुबन्तादिति च प्रयुक्तं । तदसमञ्जसमिति मत्वा हरदत्तेन कथंचित् समर्थितं—'ल्यब्लोप एषा पञ्चमी । एवंभूतं प्रकृतित्वेनाश्रित्येत्यर्थ' इति । **प्रागेवेति** । सौत्रस्तुशब्दोऽवधारणे वर्तत इति भावः । तेन च बहुजेव विकल्प्यते, न तु पूर्वत्वम् । तुशब्दाऽभावे तु प्राक्त्वं विकल्प्येत । तथा च पक्षे बहुच् परः स्यात् । भाष्यकारस्य मते तु नेदं तुशब्दस्य फलम् । तथाहि—'उदश्वितोऽन्य-

बा.]एवं 'वृषभकल्प इयं गौ'रित्यादावपि प्रकृतिलिङ्गत्वं बोध्यम् । 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति वचनाद्गुडकल्पा द्राक्षेत्यादौ प्रकृतिलिङ्गातिक्रमः । एतत्सर्वमत्रैव भाष्ये स्पष्टम् । **विभाषा** । ईषदसमाप्तावित्यनुवर्तते । तदाह—**ईषदसमाप्तिविशिष्ट इति** । **प्रागेवेति** । सूत्रे तुशब्दोऽवधारणे इति भावः । **बहुपटुरिति** । पटुशब्दात्सुबन्तात्प्राग्बहुचि कृते प्रातिपदिकावयवत्वात्सुपो लुकि समुदायात्पुनः सुबुत्पत्तिः । नच तद्धितान्तत्वाऽभावात्समासत्वाऽभावाच्च पूर्वोत्पन्नसुब्विशिष्टस्य प्रातिपदिकत्वाऽभावात्कथमिह लुगिति वाच्यम्, 'अर्थव'दित्यनेन तस्य प्रातिपदिकत्वसत्त्वात् । पटुरित्यस्य पूर्वोत्पन्नसुप्प्रत्ययान्तत्वेऽपि 'बहुपटु'रिति समुदायस्य प्रत्ययान्तत्वाऽभावात्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । नचैवं सति 'कृत्तद्धिते'त्यत्र समासग्रहणं व्यर्थमिति वाच्यं, 'पदघटितसङ्घातस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवे'ति नियमार्थत्वात् । नचैवं सति प्रकृते 'बहुपटु'रिति समुदायस्य पूर्वोत्पन्नसुब्विशिष्टस्य कथं प्रातिपदिकत्वम्, असमासत्वादिति वाच्यं, 'यत्र सङ्घाते पूर्वो भागः पदं तस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवे'ति नियमशरीराभ्युपगमादिति प्रागुक्तं न विस्मर्तव्यम् । न च 'समर्थाना'मितिसूत्रे वाग्रहणादेव सिद्धे विभाषाग्रहणं व्यर्थमिति वाच्यं, बहुजभावपक्षे पूर्वसूत्रविहितकल्पबाधार्थत्वात् । अन्यथा 'महाविभाषया अपवादेन मुक्ते उत्सर्गस्य न प्रवृत्ति'रिति सिद्धान्ताद्बहुजभावे वाक्यमेव स्यात् । नच कल्पबादीनां बहुचा समानविषयकत्वान्निरवकाशत्वं शङ्क्यं, तेषां तिङन्ते सावकाशत्वादिति भाष्ये स्पष्टम् । एतदभिप्रेत्याह—**पटुकल्प इति** । ननु सुबन्तात्तद्धितोत्पत्तिरिति सिद्धान्तादिह सुब्ग्रहणं व्यर्थमिति पृच्छति—**सुपः किमिति** । 'तिङश्चे'त्यनुवृत्तिनिवृत्त्यर्थं सुब्ग्रहणम् । नच अस्वरितत्वादेव तदनुवृत्तिर्न भविष्यति इति वाच्यम्, 'अव्ययसर्वनाम्ना'मित्याद्युत्तरसूत्रे 'तिङश्चे'त्यनुवृत्तेरावश्यकतया तस्य स्वरितत्वावश्यकत्वादिति भाष्ये स्पष्टम् । एतदभिप्रेत्याह—**यजतिकल्पमिति** । तुग्रहणं तु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते, क्वचिदतिवर्तन्ते' इति ज्ञापनार्थमिति भाष्ये प्रपञ्चितम् । **प्रकारवचने** । 'प्रकारवचने था'लित्यतोऽस्य वैलक्षण्यमाह—**प्रकारवति चायमिति** । प्रकारवत्येवेत्यर्थः । **थाल्तु प्रकारमात्रे इति** । वस्तुतस्तु उभयमपि प्रकारवतीति न्याय्यम्, अविशेषात् । अन्यथा 'तथे'त्यत्र स

शे.]स्त्रीग्रहणात्तदतिक्रमः । अन्यथा णचः स्त्रियां विधानात्, अञश्च स्वार्थिकत्वात् सिद्धौ किं तेन ? । गुडशब्दस्य सादृश्याद्द्राक्षायां वृत्तिः । तत्र सादृश्यप्रयोजकधर्मस्य माधुर्यादेरीषदसमाप्तिः । यन्निरूपितसादृश्यप्रयोजकधर्मस्येषदसमाप्तिस्तद्वाचकाच्च कल्पादयः, स्वभावात् । एवञ्च पूर्णपटुः कश्चित्तत्सादृश्यादन्यः पटुः पटुकल्पः । प्रचुरसादृश्यञ्च पटुकल्पशब्दगम्यमिति सर्वत्रोपमा गम्या द्रष्टव्या । **विभाषा सु** । विभाषाग्रहणं [प्रत्ययेन सम्बध्यते] कल्पबादिसमावेशार्थम् । कल्पादयस्तिङन्तेषु सावकाशाः । वाक्यार्थन्तु न तत्, तस्येष्टत्वे महाविभाषयैव सिद्धेः, अनिष्टत्वे तु न तदर्थता तस्येति बोध्यम् । सुब्ग्रहणन्तिङश्चेत्यस्याऽत्राऽसम्बन्धाय । उत्तरत्र त्वनुवर्तत एव । 'पुरस्ता'दिति प्रत्ययपरत्वनिवृत्तये । 'तु'ग्रहणं 'पुरस्ता'दित्यस्यावृत्त्या पुरस्ताद्यादृशे लिङ्गवचने तादृशे एवेत्यर्थबोधनद्वारा स्वार्थिकानां प्रकृतितो लिङ्गाद्यतिक्रमे ज्ञापकम् । वृत्तौ प्रागेवेत्येवकारस्तु 'सर्वं वाक्यं सावधारण'मिति न्यायसिद्ध इति सर्वं भाष्ये स्पष्टम् । **प्रकारव** । अत्र प्रकारो भेद एवेति जयादित्यः । सादृश्यं भेदश्चेत्युभयमपीति 'प्रकारे गुणवचनस्ये'त्यत्र वामनः । **थाल् तु प्रकारमात्र इति** । तत्रापि 'प्रकारवचने' इत्येवोक्तेः सोऽपि प्रकारवति न्याय्य इति

प्राकाधिकारः । **अव्ययसर्वनाम्नामकच् प्राक् टेः** ।५।३।७१। 'तिङश्चे'त्यनुवर्तते । **कस्य च दः** ।५।३।७२। कान्ताव्ययस्य दकारोऽन्तादेशः स्यादकच्च । **अज्ञाते** ।५।३।७३। कस्यायमश्वोऽश्वकः । उच्चकैः । नीचकैः । सर्वके । विश्वके । ॐ**ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्** । युवकयोः । आवकयोः । युष्मकासु । अस्मकासु । युष्मकाभिः । अस्मकाभिः । ओकारेत्यादि किम् ? । त्वयका । मयका ।

---

त.]तरस्या'मित्यादौ प्रधानत्वात्प्रत्यय एव विकल्प्यते, न तु परत्वं, प्रत्यय एव हि परत्वविशिष्टो विधीयत इति, विशेषणस्य गुणत्वात् , 'गुणानां च परार्थत्वादि'ति न्यायात् । तद्वदिहापि विभाषाग्रहणेन बहुजेव संभन्त्स्यते, न पुरस्तादित्येतत् । तुशब्दस्य तु अवधारणार्थस्याऽन्यदेव प्रयोजनं 'पुरस्तादेव सर्वं यथा स्या'दिति । तेन लिङ्गसङ्ख्ये अपि प्राक् प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः । बहुचः प्रयोगश्च प्राक् प्रकृतेरेव भवतीति । तेन 'बहुगुडो द्राक्षा', 'लघुर्बहुतृणं नरः' इत्यादौ प्रकृतिवल्लिङ्गमेव भवति, न त्वभिधेयवल्लिङ्गम् । ननु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनानि लभन्ते' इत्येव सिद्धमिति किमनेन तुशब्दग्रहणेनेति चेत् । अत्राहुः—एतदेव ज्ञापयति 'ईषदसमाप्तौ ये स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गवचने स्तः' इति । तेन 'गुडकल्पा द्राक्षा' 'शर्कराकल्पो गुड' इत्यादि सिद्धम् । **प्रागिवात्कः** । 'सुपः' इत्यनुवर्तते, तेन तिङन्तात्को न । **अव्ययसर्वनाम्नाम्** । **अनुवर्तते इति** । मण्डूकप्लुत्येति भावः । 'ङ्याप्प्रातिपदिकात्' 'सुपः' इति चानुवर्तत एव । **कस्य च दः** । **कान्ताव्ययस्येति** । सर्वनामग्रहणं तिङ्ग्रहणं च नेह संबध्यते, तयोः कान्तत्वाऽसंभवात् । न चाऽधोक् अधोगित्यादौ संभवोऽस्तीति वाच्यं, कत्वस्याऽसिद्धत्वात् । यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि 'अशाशक्' इति संभवति, तथापि यङ्लुकोऽसार्वत्रिकत्वान्नेदृशं लक्ष्यमस्ति । छन्दसि क्वचिल्लक्ष्यसद्भावेऽपि 'सर्वे विधयश्छन्दसि वा विधीयन्ते' इति दत्वविधिर्न प्रवर्तत इति भावः । **ओकारसकारेति** । अकज्विधौ सुपोऽप्यनुवृत्त्या सर्वनाम्ना सुपा च टेर्विशेषणे कामचारादव्यवस्थाप्रसङ्गे भाष्यकारवचनाद्व्यवस्थाऽऽश्रीयते । 'ओकारसकारे'त्यादिसङ्कोचश्च युष्मदस्मन्मात्रविषयकः, तथैव भाष्ये

---

बा.] प्रकारः इत्येवार्थः स्यात् । नच किमादिभ्यो विशिष्य विहितेन थाला जातीयरो बाधात्तज्जातीय इत्याद्यसिद्धिरिति वाच्यं, 'जात्यन्ताच्छ बन्धुनी'ति तज्जात्यादिशब्दाच्छप्रत्ययेनैव तज्जातीयादिसिद्धेः । अत एव 'यथाजातीयक' इत्यादिभाष्यप्रयोगाः सङ्गच्छन्ते । जयादित्यस्तु–अत्र प्रकारो भेदः, थाल्विधौ सामान्यस्य भेदको विशेषः प्रकार इत्याह । वामनस्तु–सादृश्यं भेदश्चेत्युभयमपि प्रकार इत्याह । **प्रागिवात्कः** । इवशब्दस्तद्घटितसूत्रपर इति मत्वाह–**इवे प्रतीति** । **अव्ययसर्वनाम्नाम्** । **अनुवर्तत इति** । 'मण्डूकप्लुत्ये'ति शेषः । अव्ययसर्वनाम्नां तिङन्तानां च टेः प्रागकच्प्रत्ययः स्यादित्यर्थः । अकचि ककारादकार उच्चारणार्थः । चकार इत् । ककारान्तः प्रत्ययः । अयमपि प्रागिवादधिकारः । **कस्य च दः** । पूर्वसूत्रे 'अव्ययसर्वनाम्ना'मिति समासनिर्देशेऽपि एकादेशे स्वरितत्वप्रतिज्ञाबलादव्ययग्रहणमेवात्राऽनुवर्तते । 'कस्ये'त्यत्र ककारादकार उच्चारणार्थः । ककारस्येति विवक्षितम् । तेनाऽव्ययस्य विशेषणात्तदन्तविधिः । तदाह—**कान्ताव्ययस्येति** । **अकच्चेति** । चकारेण तदनुकर्षादिति भावः । एतेन अकच्संनियोगशिष्ट एवाऽयं दकार इत्युक्तं भवति । अयमपि प्रागिवादधिकारः । **अज्ञाते** । अज्ञातेऽर्थे विद्यमानात्सुबन्तात्स्वार्थे कप्रत्ययः स्यात् । अव्ययसर्वनाम्नां तिङन्तानां च टेः प्रागकच्स्यात् । तत्रापि ककारान्ताव्ययानां दकारोऽन्तादेशः स्यादित्यर्थः । **कस्यायमिति** । स्यादित्यर्थः । अज्ञातत्वाभिनयोऽयम् । अज्ञातोऽश्व इति विग्रहः । **उच्चकैरिति** । उच्चैरित्यव्ययस्य टेः प्रागकच् । **सर्वके विश्वके इति** । ननु अव्ययसर्वनाम्ना'मिति सूत्रे 'सुप' इत्यनुवृत्तेः सुबन्तानां सर्वनाम्नां टेः प्रागकजिति फलितम् । तथा सति युवयोः आवयोः, युष्मासु अस्मासु, युष्माभिः अस्माभिरित्यत्र सुबन्तानां टेः प्रागकचि युवकयोः, आवकयोः, युष्मकासु अस्मकासु, युष्मकाभिः अस्मकाभिरिति न स्युः । युवयकोः आवयकोः, युष्मासकु अस्मासकु, युष्माभकिः अस्माभकिरिति स्युः । यदि तु 'सुप' इत्यननुवर्त्य प्रातिपदिकादित्येवानुवर्त्य प्रातिपदिकादेव सर्वनाम्नां टेः प्रागकजित्यर्थः स्यात् तर्हि त्वयका मयकेति न स्यात् । त्वकया, मकया इति स्यादित्यत आह—**ओकारेति** । वार्तिकमिदम् । ओकारादौ

---

शे.]चिन्त्यम् । किं च तथा सति 'तथे'त्यादेः स प्रकार इत्यादिरर्थः स्यात् । न च थाला जातीयरो बाधापत्तौ तज्जातीय इत्याद्यसिद्धिरिति वाच्यं, 'जात्यन्ताच्छ बन्धुनी'त्यनेन सिद्धेरिष्टापत्तेः । वामनोक्तरीत्या द्वित्वेनेव थालाऽपि बाधा नेष्यते इति वक्तुं शक्यत्वाच्च । अत एव 'यथाजातीयक' इत्यादिभाष्यप्रयोगाः सङ्गच्छन्ते ।

**अव्ययस** । अयमप्यधिकारः । 'अज्ञाते' इत्यादौ तु वाक्यभेदेनाऽकचोऽपि विधानं बोद्धव्यम् । **कस्यायमिति** । अज्ञातत्वाभिनयोऽयम् । 'अज्ञातोऽश्व' इत्यपि विग्रहो बोद्धव्यः । 'अव्यये'ति सूत्रे प्रातिपदिकादिति, सुबिति च सम्बध्यते । तेन क्वचित्सुबन्तावयवप्रातिपदिकटेर्ग्रहणं, क्वचित्सुबन्तटेर्ग्रहणं । तत्र व्यवस्थामाह—**ओकारेति** । इदं वाक्यं युष्मदस्मच्छब्दमात्र-

*अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः । मित्त्वादन्त्यादचः परः । तूष्णीकामास्ते । *शीले को मलोपश्च । तूष्णींशीलः—तूष्णीकः । पचतकि । जल्पतकि । धकित् । हिरकुत् । **कुत्सिते** ।५।३।७४। कुत्सितोऽश्वोऽश्वकः । **संज्ञायां कन्** ।५।३।७५। कुत्सिते कन् स्यात्तदन्तेन चेत्संज्ञा गम्यते । शूद्रकः । राधकः । स्वरार्थं वचनम् । **अनुकम्पायाम्** ।५।३।७६। पुत्रकः । अनुकम्पितः पुत्र इत्यर्थः । **नीतौ च तद्युक्तात्** ।५।३।७७। सामदानादिरुपायो नीतिः, तस्यां गम्यमानायामनुकम्पायुक्तात्कप्रत्ययः स्यात् । हन्त ! ते धानकाः ।

---

त.] उदाहृतत्वात् । अन्येषां त्वविशेषेण प्रातिपदिकस्यैव टेः प्रागकच् न सुबन्तस्य । तेन सर्वकेण इमकेन भवकन्त-मित्यादि सिध्यति । **त्वयका मयकेति** । नन्वत्र सुपः प्रागकचि कृते प्रत्यये परतस्त्वमादेशयोः सतोरपि 'योऽची'ति यत्वं न स्याद्विभक्तिपरत्वाऽभावादिति चेत् । मैवम् । अकृतव्यूहपरिभाषाया अनित्यतामाश्रित्याऽकचः पूर्वमेव यत्वविधानात् । एवं युवकामावकामित्यत्राप्यकचः पूर्वमेव युवावादेशाविति बोध्यम् ।

**शीले क इति** । शीलं स्वभावो नियमश्च । **तूष्णीक इति** । 'केऽणः' इति ह्रस्वस्तु भाष्यकार-प्रयोगात् 'न कपी'त्यत्र 'ने'ति योगविभागाद्वा न भवतीत्याहुः । अकचो द्वितीय अकार उच्चारणार्थ इति ध्वनयन्नु-दाहरति—**पचतकीत्यादि** । **अनुकम्पायाम्** । 'कृपा दयाऽनुकम्पा स्या'दित्यमरः । **नीतौ च तद्युक्तात्** । **अनुकम्पायुक्तादिति** । यद्यपि पुत्रादिरेव साक्षादनुकम्पायुक्तो न तु धानादिस्तथापि तद्द्वारा धानादीनामप्यस्त्यनु-कम्पासंबन्ध इति भावः । **धानका इति** । 'धाना'शब्दः स्त्रीलिङ्गः । ततः कः । 'केऽणः' इति ह्रस्वः । कप्रत्यया-

---

बा.] सकारादौ भकारादौ च सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्यैव सर्वनाम्नष्टेः प्रागकजित्यर्थः । इदं तु वार्तिकं युष्मदस्मन्मात्रविषयकमेव, भाष्ये तथैवोदाहृतत्वात् । अन्येषां तु सर्वनाम्नां प्रातिपदिकस्यैव टेः प्रागकच्, नतु सुबन्तानाम् । तेन सर्वकेणेत्यादि सिद्धम् । अत एव 'विभक्तौ परतो विहितः किमः क आदेशः साकच्कार्थः, कः कौ के' इति भाष्यं सङ्गच्छते । **त्वयका मयकेति** । इह त्वया मयेति सुबन्तयोष्टेः प्रागकच् । प्रातिपदिकस्य टेः प्रागकचि तु त्वकया मकयेति स्यादिति भावः । **काम् वक्तव्य इति** । 'काम्प्रत्यय' इति वृत्तिस्तु चिन्त्या, भाष्ये प्रत्ययशब्दस्याऽदर्शनात् । किं तु मित्त्वादागम एवायम् । तदाह—**मित्त्वादिति** । अकचोऽपवादः । **तूष्णीकामिति** । तूष्णीमित्यव्ययस्य ईकारादुपरि का इत्याकारान्त आगमः । **शीले इति** । इदमपि वार्तिकम् । 'तूष्णी'मित्यव्ययात्कप्रत्ययः स्यान्मकारस्य लोपश्च शीले गम्ये इत्यर्थः । शीलं=स्वभावः । **तूष्णीक इति** । मौनस्वभाव इत्यर्थः । भाष्ये दीर्घस्यैव प्रयोगदर्शनात् 'केऽणः' इति ह्रस्वो न भवति । 'अव्ययसर्वनाम्ना'मित्यत्र तिङश्चेत्यनुवृत्तेः प्रयोजनमाह—**पचतकीति** । 'पचती'त्यत्र इकारात्प्रागकच् । ककारादकार उच्चारणार्थः । अन्यथा इकारात्प्रागकच्प्रत्यये आद्गुणे 'पचतके' इति स्यादिति भावः । **जल्पतकीति** । 'जल्पती'त्यस्य टेः प्रागकच् । **धकिदिति** । 'धि'गित्यव्ययस्य टेः प्रागकच्, कस्य दश्च । **हिरकुदिति** । 'हिरु'गित्यव्ययस्य टेः प्रागकच्, कस्य दश्च । **कुत्सिते** । येन धर्मेण कुत्स्यते वस्तु तद्धर्मयुक्तार्थाभिधायिनः प्रातिपदिकात्स्वार्थे प्रत्ययः स्यादित्यर्थः । अव्ययसर्वनाम्नान्तु टेः प्रागकच्, कान्तस्याव्ययस्य दकारश्चान्तादेश इति बोध्यम् । 'तिङश्चे'त्यप्यनुवर्तते ।

**अश्वक इति** । धावनस्य असम्यक्त्वादश्वस्य कुत्सा बोध्या । सर्वनामाव्ययतिङन्तानि पूर्ववदुदाहार्याणि । 'याप्ये पाश'बिति प्रवृत्तिनिमित्तकुत्सायामेव भवति, इदं तु सूत्रमप्रवृत्तिनिमित्तकुत्सायामपीति भाष्ये स्पष्टम् । **संज्ञायां कन्** । कुत्सिते इत्यनुवर्तते । तदाह—**कुत्सित इति** । **तदन्तेन चेदिति** । कुत्साहेतुकसंज्ञाविषये कनिति यावत् । **अनुकम्पायाम्** । अनुकम्पायुक्तार्थाऽभिधायिनः स्वार्थे कः स्यादित्यर्थः । अनुकम्पा=दया ।

**नीतौ च तद्युक्तात्** । **सामदानादीति** । आदिना भेददण्डयोर्ग्रहणम् । तद्युक्तादित्येतद्व्याचष्टे—**अनुकम्पायुक्तादिति** । अव्ययसर्वनाम्नां टेः प्रागिति चानुवर्तते, 'कस्य च दः' इति च । **हन्त ते धानका इति** । 'दास्यन्ते' इति शेषः । 'हन्ते'त्यव्ययमनुकम्पाद्योतकम् । 'हन्त हर्षेऽनुकम्पाया'मित्यमरः । 'हन्ते'त्यद-न्तम् । 'हे पुत्रे'ति शेषः । अनुकम्पायुक्ता धाना इत्यर्थः । धानाशब्दात्कप्रत्यये 'केऽणः' इति ह्रस्वे कान्ताद्यपि 'अभाषितपुंस्काच्चे'ति विकल्पात्पक्षे इत्त्वाऽभावः । **एहकीति** । 'एही'ति तिङन्तस्य टेः प्रागकच् । 'अव्ययसर्वनाम्ना'-

---

शे.] विषयम् । भाष्ये तथैवोदाहरणात् । अन्येषान्तु सर्वनाम्नां प्रातिपदिकटेरेव प्रागकच् । अत एव 'कादेशः साकच्कार्थः—कः कौ के इत्येवमर्थ'मिति भाष्यं सङ्गच्छते । **त्वयकेति** । यत्वादिषु कृतेष्वकच् । **पचतकीति** । अकचो द्वितीयोऽकार उच्चारणार्थ इति भावः । **कुत्सिते** । येन धर्मेण कुत्स्यते वस्तु तद्धर्मयुक्ताऽर्थाभिधायिनः प्रत्ययः । 'अश्वक' इत्यादौ धावनादेः सम्यगननुष्ठाना-त्कुत्सेति बोद्धव्यम् । कुत्सितमत्कुत्सायां कुत्सितक इत्याद्यपि प्रकृष्टतम इनिवत् । **संज्ञायाङ्कन्** । कुत्सादिहेतुकसञ्ज्ञाविषये  कनित्यर्थः । तद्युक्तादित्यस्य विवरणम्—**अनुकम्पायुक्तादिति** । **धानका इति** । धानाशब्दात्के 'केऽणः' इति ह्रस्वे

गुडकाः । पृथुकि । अद्धकि । पूर्वेणानुकम्प्यमानात्प्रत्ययः, अनेन तु परम्परासम्बन्धेऽपीति विशेषः । **बह्वचो मनुष्यनाम्नष्ठज्वा** ।५।३।७८। पूर्वसूत्रद्वयविषये । **घनिलचौ च** ।५।३।७९। तत्रैव । **ठाऽजादावूर्ध्वं द्वितीयादचः** ।५।३।८३। अस्मिन्प्रकरणे यष्ठोऽजादिप्रत्ययश्च तस्मिन्प्रत्यये परे प्रकृतेर्द्वितीयादच ऊर्ध्वं सर्वं लुप्यते । अनुकम्पितो देवदत्तो-देविकः । देवियः । देविलः । देवदत्तकः । अनुकम्पितो वायुदत्तो वायुकः । ठग्रहणमुको द्वितीयत्वे कविधानार्थम् । [वायुदत्तकः]वायुकः । [पितृदत्तकः]पितृकः । ***चतुर्थादच ऊर्ध्वस्य लोपो**

**त.]** न्ताट्टाप् । अत्र 'प्रत्ययस्था'दितीत्वेन भाव्यम् । प्रायेण तु 'धानका' इति पठ्यते । तत्र लिङ्गातिवृत्तिर्द्रष्टव्येति हरदत्तः । 'कर्मव्यतिहारे णच्स्त्रियाम्'मिति सिद्धे 'णचः स्त्रियामञि'ति सूत्रे पुनः स्त्रीग्रहणेन ज्ञापितं 'स्वार्थिकाः प्रकृतिलिङ्गं क्वचिदतिवर्तन्ते' इति । तेन 'धानका' इत्यत्र पुंस्त्वमिति भावः । **घनिलचौ च** । चकारादयथाप्राप्तमिति काशिका । इह पूर्वसूत्रेणैव ठज् विहितः । बावचनात्कोऽपि । चकारेण तु कस्याभ्यनुज्ञेति चिन्त्यं, योगविभागे फलमपि चिन्त्यमिति हरदत्तः । **ठाजादौ** । समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । आदिग्रहणं चिन्त्यप्रयोजनं, 'यस्मिन्विधिस्तदादौ' इत्येव सिद्धमिति हरदत्तः । **अस्मिन्प्रकरण इति** । अनुकम्पायां नीतौ चेत्यर्थद्वयस्यैव प्रत्यासत्त्या बुद्धौ सन्निधानादिति भावः । ऊर्ध्वग्रहणमिह सर्वलोपार्थम् । अन्यथा 'आदेः परस्ये'त्यादेरेव स्यादित्यभिप्रेत्याह— **द्वितीयादच ऊर्ध्वं सर्वमिति** । 'अजिनान्तस्ये'त्यतो लोप इत्यनुवर्तनादाह— **लुप्यत इति** । ननु ठग्रहणं व्यर्थम्, इकादेशे कृते अजादावित्येव सिद्धत्वादत आह— **ठग्रहणमुको द्वितीयत्व इति** । **वायुक इति** । वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव लोपे 'इसुसुक्तान्ता'दिति कः । किंच पृथक् ठग्रहणस्य प्रयोजनान्तरमप्यस्ति । यदा तु चित्रगुप्रभृतिभ्यष्ठच्, तदोगन्तत्वात्कादेशप्राप्त्या प्रथममिकादेशस्याऽसंभवेनाजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहणम् । तेन ठावस्थायामुत्तरपदलोपे कादेशस्याऽसंभवादिकादेशे 'चित्रिक' इति रूपं सिध्यतीति बोध्यम् । 'चतुर्थादनजादौ चे'ति वक्ष्यमाणमेव श्लोकं भङ्क्त्वा व्याचष्टे— **चतुर्थादच ऊर्ध्वस्येति** । अन-

**बा.]** मित्यत्र तिङश्चेत्यनुवृत्तेरिति भावः । **अद्धकीति** । 'अद्धी'ति तिङन्तस्य टेः प्रागकच् । **पूर्वेणेति** । अनुकम्पायास्तद्विषयत्वादिति भावः । **परम्परासम्बन्धेऽपीति** । पुत्रः साक्षादनुकम्प्यः, तद्द्वारा धाना अनुकम्पायुक्ता इति भावः । **बह्वचो मनुष्य** । 'ठ'जिति च्छेदः । **पूर्वसूत्रद्वयविषये** इति शेषपूरणम् । 'अनुकम्पाया'मिति 'नीतौ च तद्युक्ता'दिति च सूत्रद्वयविषये बह्वचो मनुष्यनाम्नः प्रातिपदिकाट्ठज्वा स्यादित्यर्थः । पक्षे कः । **घनिलचौ च** । **तत्रैवेति** । शेषपूरणमिदम् । 'बह्वच' इति पूर्वसूत्रविषये इत्यर्थः । 'अनुकम्पाया'मिति, 'नीतौ च तद्युक्ता'-दिति च सूत्रद्वयविषये बह्वचो मनुष्यनाम्नो घन् इलच् एतौ च प्रत्ययावित्यर्थः । **ठाजादौ** । **अस्मिन्प्रकरणे इति** । अनुकम्पायां, नीतौ चेत्यस्मिन्प्रकरणे इत्यर्थः । सन्निधानलभ्यमिदम् । **सर्वमिति** । ऊर्ध्वग्रहणादिदं लभ्यते । अन्यथा 'आदेः परस्ये'ति परिभाषया द्वितीयाऽचो यः परस्तस्यादेरेव स्यादिति भावः । 'अजिनान्तस्योत्तरपदलोपश्चे'त्यतो लोप इत्यनुवृत्तमिह कर्मसाधनमाश्रीयते इति मत्वाह— **लुप्यत इति** । **देविक इति** । देवदत्तशब्दाट्ठचि द्वितीयादचः परस्य दत्तशब्दस्य लोपे इकादेशे रूपम् । **देविय इति** । देवदत्तशब्दाद्घनि दत्तशब्दस्य लोपे इयादेशे रूपम् । **देविल इति** । इलचि दत्तशब्दस्य लोपः । **देवदत्तक इति** । कप्रत्यये सति ठाऽजाद्यभावान्न दत्तपदलोपः । **वायुक इति** । वायुदत्तशब्दाद्दत्तशब्दस्य लोपः । उकः परत्वाट्ठस्य कः । नन्विकादेशे सति देविक इत्यत्र अजादित्वादेव सिद्धे ठग्रहणं व्यर्थमित्यत आह— **ठग्रहणमिति** । कृत एव ठग्रहणे वायुशब्दात्परस्य दत्तशब्दस्य ठावस्थायामेव नित्यत्वाल्लोपे कृते ठस्य उकः परत्वात्कादेशः सिध्यति । अन्यथा इकादेशे कृतेऽजादित्वं पुरस्कृत्य दत्तशब्दस्य लोपे सति वायु-इक इति स्थिते ठस्याऽभावात्कादेशो न स्यात् । नच स्थानिवत्त्वादिकस्य ठत्वं शङ्क्यं, 'ठस्येकः' इत्यत्र स्थान्यादेशयोरकार उच्चारणार्थं इति पक्षे अल्विधित्वात्सन्निपातपरिभाषाविरोधाच्चेति भाष्ये स्पष्टम् । **पितृक इति** । पितृदत्तशब्दाट्ठचि दत्तशब्दस्य लोपे उकः परत्वाट्ठस्य कः । अथ **'चतुर्थादनजादौ वा लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च ।'**

**शे.]** कान्ताट्टापि 'अभाषितपुंस्काच्चे'ति विकल्पात्पक्षे इत्वाऽभावः । **पूर्वेणेति** । अनुकम्पायास्तद्विषयत्वादिति भावः । **परम्परासंबन्धेऽपीति** । आरम्भसामर्थ्यादिति भावः । अनुकम्प्यमानो दानेनाराधयतीति (?) धानादेरनुकम्प्यमानसम्बन्धादनुकम्पायुक्तत्वमिति बोद्धव्यम् । **ठज्वेति** । पक्षे कः । **पूर्वसूत्रद्वयेति** । 'अनुकम्पायां' 'नीतौ चे'त्येतत् । व्याख्यानादिति भावः । **घनिल** । पूर्वसूत्रेणैव ठच्कयोः सिद्धौ योगविभागादुक्तविषयातिरिक्तेऽप्येतौ । तत्र कथञ्चिद्-यर्थश्चकार इत्येके । **ठाजादौ** । **अस्मिन्निति** । बुद्धिसन्निधानादिति भावः । ननु ठग्रहणं व्यर्थम्, इकादेशे अजादित्वात्सिद्धेरत आह— **ठग्रहणमिति** । तस्मिन्हि वायुदत्त-

वाच्यः । अनुकम्पितो बृहस्पतिदत्तो बृहस्पतिकः । *अनजादौ च विभाषा लोपो वक्तव्यः । देवदत्तकः । देवकः । *लोपः पूर्वपदस्य च । दत्तिकः । दत्तियः । दत्तिलः । दत्तकः । *विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः । देवदत्तः । दत्तः । देवः । सत्यभामा । भामा । सत्या । *उवर्णाल्ल इलस्य च । भानुदत्तः । भानुलः । *ऋवर्णादपि । सवित्रियः । सवितृलः ।

*'चतुर्थादनजादौ च लोपः पूर्वपदस्य च । अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च' ॥ १ ॥

**प्राचामुपादेरडज्वुचौ च** ।५।३।८०। उपशब्दपूर्वात्प्रातिपदिकात्पूर्वविषये अडच् वुच् एतौ स्तः । चाद्यथाप्राप्तम् । प्राचाग्रहणं पूजार्थम् । अनुकम्पित उपेन्द्रदत्तः-उपडः ।

---

त.]जादाविति । हलादावित्यर्थः । 'अस्मिन् प्रकरणे' इत्येव । **लोपः पूर्वपदस्य चेति** । ठाजादावनजादौ चेति बोध्यः । 'अप्रत्यये तथैवेष्टः' इत्येतद्व्याचष्टे--**विनापि प्रत्ययमिति** । **ल इलस्य चेति** । इलस्य लः=लोपः इत्यर्थः । तत्र 'आदेः परस्ये'ति इकारलोपो बोध्यः । **प्राचामुपादेः** । 'बह्वचो मनुष्ये'त्याद्यनुवर्तते । उपेन्द्रदत्त इति । ननु कृतसन्धेरुपेन्द्रशब्दादेकादेशस्य पूर्वान्ततया ग्रहणात् 'उपादे'रिति विधीयमानौ प्रत्ययौ स्तां नाम, लोपस्तु नकारादेरेव स्यात् । ततश्च 'उपक' 'उपड' इति रूपे न स्यातां, किं तु 'उपयक'-'उपयड' इति रूपे स्याताम् । एवं घनिलच्ठच्स्वपि दोष एव । तस्मादिहैव 'द्वितीयं सन्ध्यक्षरं चे'दिति वार्तिकं कुतो नोक्तमिति चेत् । अत्राहुः—प्रकारान्तरेण निर्वाहसंभवान्नोक्तम् । तथाहि—आद्गुणे कृते 'द्वितीयं सन्ध्यक्षर'मित्यादिना अकारस्यापि लोपप्रसक्त्या गुणात्पूर्वमेवाऽकृतव्यूहपरिभाषया प्रत्ययः । नच परिनिष्ठितत्वपरेण समर्थग्रहणेन सौत्थितिरित्यत्रेव परिभाषाबाधः शङ्क्यः । 'प्राग्दिशः' इति सूत्रे 'समर्थग्रहणं निवृत्त'मित्युक्तत्वात् । 'अकृतसन्धे'रिति प्रागुक्तज्ञापक-बलेन समर्थग्रहणप्रत्याख्यानपक्षेऽपि ज्ञापकस्य विशेषपरत्वाश्रयणादिति । उपेन्द्रः, उपगुः, उपकर्तेत्यादिषूपडादीनां

---

बा.]इति वक्ष्यमाणश्लोकवार्तिकं भङ्क्त्वा 'चतुर्थादच' इत्येतद्व्याचष्टे—**चतुर्थादच इति** । **बृहस्पतिक इति** । बृहस्पतिदत्तशब्दाट्ठचि दत्तशब्दस्य लोपे ठस्य इकादेशः । द्वितीयादूर्ध्वत्वाऽभावादप्राप्ते वचनम् । 'अनजादौ चे'ति वार्तिकभागं व्याचष्टे—**अनजादौ चेति** । 'अनजादौ चे'ति पाठे विभाषेति भाष्यलब्धम्, तत्र देवदत्तको देवक इति कप्रत्यये दत्तलोपविकल्पोदाहरणात् । **लोपः पूर्वपदस्य चेति** । 'विभाषे'ति शेषः । अनजादाविति तु नात्र सम्बध्यते । तदाह—**दत्तिक इत्यादि** । ठचि घनि इलचि के च रूपम् । 'अप्रत्यये तथैवेष्ट' इति वार्तिकभागं व्याचष्टे—**विनापि प्रत्ययमिति** । **दत्तः देव इति** । देवदत्तशब्दाट्ठाजादिप्रत्ययस्याप्यभावे पूर्वोत्तरपदयोः क्रमेण लोपे रूपम् । **उवर्णादिति** । 'ल' इति लोपस्य पूर्वाचार्यसंज्ञा । उवर्णात्परस्य इलचो लोपः स्यादित्यर्थः । 'आदेः परस्ये'तीकारस्य लोपः । चकारेण ठाजादौ द्वितीयादच ऊर्ध्वं लोपः सूत्रसिद्धोऽनूद्यते । **ऋवर्णादपीति** । ऋवर्णादपि परस्य इलच आदेर्लोपः स्यादित्यर्थः । **सवित्रियः सवितृल इति** । घनि इलचि च रूपम् । वस्तु-तस्तु ऋवर्णादपीति भाष्याऽदृष्टत्वादुपेक्ष्यम् । तदेवं व्याख्यातं वार्तिकं समस्तं पठति—**चतुर्थादित्यादि** । **प्राचामुपादेरडज्वुचौ च** । **पूर्वविषये इति** । 'बह्वचो मनुष्यनाम्नः' इति सूत्रविषये इत्यर्थः । **चाद्यथा-प्राप्तमिति** । ठच्, घन्, इलचेत्यर्थः । ठज्वेत्यतो वेत्यनुवृत्त्यैव सिद्धे प्राचाङ्ग्रहणं व्यर्थमित्यत आह-**प्राचाङ्ग्रहण-मिति** । **उपड इति** उपेन्द्रदत्तशब्दादडचि 'द्वितीयं सन्ध्यक्षर'मिति वक्ष्यमाणेन एकारादेर्लोप इति केचित् । 'नेन्द्रस्य परस्ये'ति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षया अन्तरङ्गस्याप्येकादेशस्य पूर्वमप्रवृत्तेरिकारादिलोप इति शब्देन्दुशेखरे । **उपक इति** । वुचि अकादेशे एकारादिलोपे रूपम् । **उपिय इति** । घनि रूपम् । **उपिल इति** ।

---

शे.]शब्दाट्ठे नित्यत्वाट्ठावस्थायां लोपे कादेशे च 'वायुक'सिद्धिः । अन्यथा मातिथिकवत्सन्निपातपरिभाषया कादेशाऽभावे न सिद्ध्ये-दिति भावः । न च यचश्चित्त्वेन ज्ञापकेनैकादेः सर्वतः पूर्वं प्रवृत्तिरिति वाच्यं, ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात्, ठग्रहणसामर्थ्याच्च तस्याऽत्राऽप्रवृत्तेः । अत्राऽजिनान्तस्येत्यत्रत्योत्तरपदेति पृथक्पदं लुप्तविभक्तिकम् । तेन [लोपपदे एकदेशे स्वरितत्वप्रतिज्ञानात्] लोपपदमेवानुवर्तते । अत एव 'षष्ठाजादिवचनात्सिद्ध'मिति सङ्गच्छते । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः । तेन 'सवित्रिय' इत्यत्र 'ठजादौ' इति लोपो न । उपेन्द्रदत्ते च 'चतुर्थादच' इति लोपो न । **विनापि प्रत्ययमिति** । समुदायशक्तिग्रहकालेऽवयवाना-मपि शक्तिग्रहादवयवतोऽपि तद्बोधः । एवमेव 'प्रविश पिण्डी'मित्यादौ वाक्यैकदेशाद्वाक्यार्थबोधः । अस्यैवाऽनुवादकमिदम् । वर्णमात्रप्रयोगस्तु न, ततोऽबोधात् । **उवर्णाल्ल** । 'ल' इति लोपस्य पूर्वाचार्यसञ्ज्ञा । उवर्णात्परस्य लप्रत्ययस्य लोपः । स चाऽऽदेः परस्य । चेन द्वितीयादच ऊर्ध्वंलोपः सूत्रसिद्ध एवानूद्यते । **ऋवर्णादपीति** । भाष्ये न दृष्टम् । **पूजार्थमिति** । 'ठज्वे'त्यतो

उपकः । उपिकः । उपियः । उपिलः । उपेन्द्रदत्तकः । षड् रूपाणि । **जातिनाम्नः कन्** ।५।३।८१। मनुष्यनाम्न इत्येव । जातिशब्दो यो मनुष्यनामधेयस्तस्मात्कन्स्यादनुकम्पायां नीतौ च । सिंहकः । शरभकः । रासभकः । *द्वितीयं सन्ध्यक्षरं चेत्तदादेर्लोपो वक्तव्यः* । [अनुकम्पितः] कहोडः—कहिकः । *एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः* । वागाशीर्दत्तः वाचिकः । कथं षडङ्गुलिदत्तः षडिक इति ? । *षषष्ठाजादिवचनात्सिद्धम्* । **शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्** ।५।३।८४। एषां

त.]पञ्चानां रूपाणां साम्येऽपि सैन्धवादिष्विव प्रकरणादिना विशेषोऽध्यवसेयः । **जातिनाम्नः** । ये शब्दा जात्यन्तरे प्रसिद्धाः, मनुष्येषु नामत्वेन विनियुक्तास्त इहोदाहरणम् । **द्वितीयमित्यादि** । 'एचः सन्ध्यक्षराणी'ति प्राचां संज्ञा । **वागाशीरिति** । वाचि आशीर्यस्येति विग्रहः । **वाचिक इति** । यद्यत्र द्वितीयादच ऊर्ध्वस्य लोपः स्यात्तदा वाच् आ इक इति स्थिते 'यस्येति चे'त्याकारस्य लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भत्वे अन्तर्वर्तिनीं विभक्तिमाश्रित्य चकारान्तस्य पदत्वेन कुत्वजश्त्वयोः सतोर्वागिक इति स्यात् । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाऽभावात्तुल्यावधिकतया 'यचि भ'मिति भसंज्ञया 'सुप्तिङन्त'मिति पदसंज्ञा एकसंज्ञाधिकारात्परत्वाद्बाध्यते । 'स्वादिषु' इति पदसंज्ञा तु न शङ्कनीयैव, 'यचि भ'मिति भसंज्ञायास्तदपवादत्वात् । **कथमिति** । अत्राप्युत्तरपद-

बा.]इलचि रूपम् । **उपिक इति** । ठचि रूपम् । **उपेन्द्रदत्तक इति** । कप्रत्यये रूपम् । ठाजाद्यभावाल्लोपो न । **जातिनाम्नः कन्** । **जातिशब्दो य इति** । यो जातिप्रवृत्तिनिमित्तकः प्रसिद्धः सन् मनुष्यनामधेयभूतः स इत्यर्थः । 'अनुकम्पाया'मिति 'नीतौ' इति च सूत्रद्वयविहितस्याऽपवादः । **द्वितीयं सन्ध्यक्षरं चेदिति** । 'एचः सन्ध्यक्षराणी'ति प्राचामाचार्याणां प्रवादः । **कहोड इति** । ऋषिविशेषस्य नामेदम् । अत्र द्वितीयोऽच् सन्ध्यक्षरं, तदादेर्लोपो, नतु तदूर्ध्वस्यैव । **एकाक्षरेति** । व्यञ्जनसहित एकोऽच्—एकाक्षरम् । एकाचकमिति यावत् । तथाविधं पूर्वपदं येषां पदानां तानि एकाक्षरपूर्वपदानि, तेषां मध्ये उत्तरभूतानि पदानि यावन्ति तेषां लोपः स्यादित्यर्थः । इह उत्तरपदशब्दो यौगिकः, नतु समासस्य चरमावयवे रूढो, व्याख्यानात् । 'द्वितीयादच ऊर्ध्व'मित्यनेन द्वितीयाज्विशिष्टस्य लोपे अप्राप्ते वचनमिदम् । **वागाशीर्दत्त इति** । वाचि आशीर्यस्य नतु मनस्येव स वागाशीः । तेन दत्त इति विग्रहः । यद्वा आशासनमाशीः, वाचा आशीः—वागाशीः । 'कर्तृकरणे कृते'ति समासः । तया वागाशिषा दत्त इति विग्रहः । वाक्करणकाशासनेन दत्त इत्यर्थः । **वाचिक इति** । वागाशीर्दत्तशब्दाट्ठचि वागित्येकाक्षरपूर्वपदात्परयोराशीर्दत्तशब्दयोर्लोपे सति अन्तर्वर्तिविभक्त्या पदत्वमाश्रित्य प्रवृत्तकुत्वजश्त्वयोरिकाश्रयभत्वेन पदत्वबाधान्निवृत्तौ वाचिक इति रूपमिति केचित् । वस्तुतस्तु ठचि इकादेशात्प्राक्ठावस्थायामेव उत्तरपदलोपे कर्तव्येऽसिद्धत्वान्न पूर्वं कुत्वादिप्रवृत्तिरित्याहुः । यद्यपि द्वितीयादच ऊर्ध्वस्य 'शीर्दत्त'शब्दस्य लोपे वागा—इक इति स्थिते 'यस्येति चे'त्याकारलोपे उक्तरीत्या कुत्वजश्त्वयोर्निवृत्तौ 'वाचिक' इति सिध्यति, तथापि आकारलोपस्य स्थानिवत्त्वेन आकारान्तस्य इकमाश्रित्य भत्वे सति आकारान्तनिष्ठभत्वेन चकारान्तनिष्ठपदत्वस्याऽव्याघातात्कुत्वजश्त्वयोः 'वागिक' इति स्यात् । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाऽभावात्तुल्यावधिकया भसंज्ञया 'सुप्तिङन्त'मिति पदसंज्ञा बाध्यते, एकसंज्ञाधिकारे परत्वादिति भावः । **कथमिति** । अत्रापि अङ्गुलिदत्त-

श.]वेत्यनुवृत्त्यैव सिद्धेरिति भावः । **उपड इति** । [न च गुणे कृते द्वितीयादच ऊर्ध्वस्य जायमानो लोपो नकारादेः स्यादितिवाच्यं] 'नेन्द्रस्ये'ति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षयाऽन्तरङ्गस्याप्येकादेशस्य पूर्वमप्रवृत्तेरिति भावः । **द्वितीयं सन्ध्यक्षरञ्चेदिति** । एकपदेऽपीदम् । **सन्ध्यक्षराणि—एचः** । **एकाक्षरेति** । अच्सहितं व्यञ्जनम्—अक्षरम् । एकाच्पूर्वपदानामित्यर्थः । 'द्वितीयादच ऊर्ध्व'मित्यनेन द्वितीयाऽज्विशिष्टस्य लोपाऽप्राप्तेरिदम् । **वागाशीर्दत्त इति** । वाच्याशीर्यस्य तेन दत्तो, वाक्करणकशुभाशंसनेन दत्त इति वाऽर्थः । अत्रैकादेशपर्यन्तं तत्तत्सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया न पूर्वं कुत्वादिप्रवृत्तिः । यद्यपि द्वितीयादच ऊर्ध्वभागस्य 'शीर्दत्त'शब्दस्य लोपे यस्येति लोपे चाऽन्ते इङ्निमित्तभसञ्ज्ञासत्त्वात्कुत्वाद्यप्रवृत्ताविदं सिद्ध्यति, तथापि भत्वे आलोपस्य स्थानिवत्त्वादाकारान्तनिष्ठभत्वेन चाऽन्तनिष्ठपदत्वाऽव्याघातात्कुत्वजश्त्वयोर्वागिक इति स्यादिति भावः । न च साक्षात्परम्परया वा पदान्तविध्यादिप्रापकस्य, प्रतिबन्धकस्य वा स्थानिवत्त्वस्य निषेध इति सिद्धान्ताद्भत्वेऽपि स्थानिवत्त्वनिषेध इति वाच्यं, षडिकेऽपि दोषापत्तेः । यदि तत्र द्वितीयादच ऊर्ध्वस्य लोपविधायकवचनप्रामाण्याद्भत्वे स्थानिवत्त्वं तर्हि प्रकृतेऽपि तुल्यम् । एतेन 'पूर्वत्रासिद्धीये' इति निषेधो, जशिचेति निषेधश्च स्यादित्यपास्तम् । नपदान्तसूत्रोक्तरीत्या तयोः पदान्तजश्त्वेऽप्राप्तेश्च । उत्तरपदलोपे तु अज्झलादेशत्वेन स्थानिवत्त्वाऽभावात्तुल्यावधिकया भसञ्ज्ञया बाद्ध्यते । तत्र तद्धिताश्रयाया विभक्त्याश्रयायाश्च बाद्ध्यसामान्यचिन्तयाऽपवादत्वाद्बाधः । यद्यपि विभक्त्याश्रयाऽन्तरङ्गा, तथापि तद्बाध आकडारसूत्रे निरूपितः । **षषष्ठेति** ।

मनुष्यनाम्नां ठाजादौ परे तृतीयादच ऊर्ध्वं लोपः स्यात् । पूर्वस्याऽपवादः । अनुकम्पितः शेवलदत्तः-शेवलिकः । शेवलियः । शेवलिलः । सुपरिकः । विशालिकः । वरुणिकः । अर्यमिकः । **अजिनान्तस्योत्तरपद-लोपश्च** ।५।३।८२। अजिनाऽन्तान्मनुष्यनाम्नोऽनुकम्पायां कन्, तस्य चोत्तरपदलोपः । अनुकम्पितो व्याघ्राजिनो व्याघ्रकः । सिंहकः । **अल्पे** ।५।३।८५। अल्पं तैलं-तैलकम् । **ह्रस्वे** ।५।३।८६। ह्रस्वो वृक्षो वृक्षकः । **संज्ञायां कन्** ।५।३।८७। ह्रस्वहेतुका या संज्ञा तस्यां गम्यमानायां कन् । पूर्वस्यापवादः । वंशकः । वेणुकः । **कुटीशमीशुण्डाभ्यो रः** ।५।३।८८। ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः । **कुत्वा डुपच्** ।५।३।८९। ह्रस्वा कुतूः कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्' । **कासूगोणीभ्यां ष्टरच्** ।५।३।९०। आयुधविशेषः कासूः । ह्रस्वा सा कासूतरी । गोणीतरी । **वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे** ।५।३।९१। वत्सतरः । द्वितीयं वयः प्राप्तः । उक्षतरः । अश्वतरः । ऋषभतरः । प्रवृत्तिनिमित्ततनुत्व एवाऽयम् । **किंयत्तदो निर्धारणे**

त.] लोपे जाते जश्त्वं दुर्लभमिति प्रश्नः । **षष इति** । अत्र सौत्र एव लोप इष्यते, न त्वौपसङ्ख्यानिक इत्यर्थः । **शेवलसुपरि** । **शेवलिक इति** । 'बह्वचो मनुष्यनाम्नः' इति ठच् । घनिलचोस्तु-शेवलियः । शेवलिलः । 'शेवलादीनां तृतीयाल्लोपो य उच्यते स चाऽकृतसन्धीनां वक्तव्यः । सुपर्याशीः । सुपरिकः । सुपरियः । सुपरिलः' इति भाष्ये स्थितम्, कैयटेन तु 'सुपरिक' इति प्रतीकमुपादाय 'संहिताकार्ये तु कृते लोपे सति 'सुपर्यिक' इति स्यादिति व्याख्यातम् । अयं भावः-संहिताकार्ये यणि कृते तृतीयादच ऊर्ध्वे लोपे सति 'शीर्दत्त' इत्यस्यैव लोपः स्यात्, आकारस्य तु 'यस्येति चे'त्यनेन स्यात्, तथाच स्थानिवद्भावाद्यणो निवृत्तिर्न भविष्यतीति । **ह्रस्वे** । तैलादौ ह्रस्वदीर्घादिव्यवहाराऽभावाद्वृक्षक इत्युदाहृतम् । यद्यपि 'अल्पे' इत्यनेनैवेदं रूपं सिध्यति तथापि शाब्दबोधे विशेषोऽस्तीत्याहुः । **कुटीर इति** । 'स्वार्थिकाः प्रकृतितो लिङ्गमतिवर्तन्ते' इति पुंलिङ्गताऽत्र सङ्गच्छते । **वत्सोक्षाश्व** । **तनुत्वं** = न्यूनता । सा च प्रवृत्तिनिमित्तस्य, प्रत्यासत्तेः । क्वचित्तु तत्सहचरितधर्मान्तराणाम् । तत्र वत्सः-प्रथमवयाः । वयसश्च प्रथमस्य न्यूनत्वं नाम वयोऽन्तरप्राप्तिः । तदाह—**द्वितीयमिति** । तरुण **उक्षा** । तारुण्यस्य च

बा.] शब्दस्य लोपे सति इकप्रत्ययाश्रितभत्वेन पदत्वाऽभावाज्जश्त्वं दुर्लभमिति प्रश्नः । **षष इति** । षष्शब्दस्य पूर्वपदत्वे 'ठाजादौ' इति सूत्रसिद्धो द्वितीयादच ऊर्ध्वस्यैव लोपो, न त्वयमुत्तरपदलोप इति वचनात्षडिक इति सिद्धमित्यर्थः । एवंच 'षडङ्गुलिदत्त' इत्यत्र डकाराऽकारादूर्ध्वस्य लोपे सति डकाराऽकारस्य 'यस्येति चे'ति लोपे सति तस्य स्थानिवत्त्वेन अकारान्तस्य इकमाश्रित्य भत्वे सति तेन अकारान्तनिष्ठेन षकारान्तस्य पदत्वाऽव्याघाताज्जश्त्वं निर्बाधमिति भावः । स्पष्टं चेदं 'स्वादिषु' इति सूत्रे भाष्ये । **शेवल** । **एषामिति** । शेवल, सुपरि, विशाल, वरुण, अर्यमन्-एतत्पूर्वपदकानामित्यर्थः । **पूर्वस्येति** । 'ठाजादौ' इत्यस्येत्यर्थः । **शेवलिक इति** । शेवलदत्तशब्दाट्ठचि तृतीयादचः परस्य दत्तशब्दस्य लोपः । **शेवलिल इति** । इलचि रूपम् । **सुपरिक इति** । सुपरिदत्तशब्दाट्ठचि दत्तशब्दलोपः । **विशालिक इति** । विशालदत्तशब्दाट्ठचि रूपम् । **वरुणिक इति** । वरुणदत्ताद्-वरुणिकः । **अर्यमिक इति** । अर्यमदत्ताद्-अर्यमिकः । 'अकृतसन्धीनामेषा'मिति वार्तिकं भाष्ये स्थितम् । तेन सुपर्याशीर्दत्तः सुपरिक इत्यादि सिध्यति । **अजिनान्तस्य** । **व्याघ्रक इति** । 'व्याघ्राजिन' इति कस्यचिन्मनुष्यस्य नाम । तस्मात्कनि अजिनकस्य लोपः । **सिंहक इति** । सिंहाजिनशब्दात्कनि अजिनस्य लोपः । **अल्पे** । अल्पत्वविशिष्टे वर्तमानाद्यथाविहितं प्रत्ययाः स्युः । **तैलकमिति** । 'सर्वकम्' 'उच्चकैः' 'पचतकी'त्याद्यप्युदाहार्यम् । **ह्रस्वे** । ह्रस्वत्वविशिष्टे वर्तमानाद्यथाविहितं प्रत्यया इत्यर्थः । अल्पत्वं-महत्त्वप्रतिद्वन्द्वि, ह्रस्वत्वं तु दीर्घत्वप्रतिद्वन्द्वीति भेदः । **संज्ञायां कन्** । **वंशक इति** । ह्रस्वस्य वेणुजातिविशेषस्य नाम । **कुटीशमी** । ह्रस्व इत्येव । **कुटीर इति** । 'स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति पुंस्त्वम् । एवं शमीरः शुण्डार इत्यपि । ह्रस्वा शमी, शुण्डा चेत्यर्थः । **कुत्वा डुपच्** । **कुतुप इति** । कुतूशब्दाद् डुपचि ड्त्वाट्टिलोपः । तत्रापि कुटीरादिवत्स्त्रीत्वमपहाय पुंस्त्वमेव । तत्राऽमरकोशमपि प्रमाणयति-**कुतूः कृत्तिरिहेति** । **कासूगोणीभ्यां ष्टरच्** । ह्रस्व इत्येव । **कासूतरीति** । षित्त्वान्ङीषिति भावः । 'कासूर्बुद्धे कुवाच्येऽस्त्रे' इति नानार्थरत्नमालायाम् । एवं गोणीतरीति । **वत्सोक्ष** । ह्रस्व इति निवृत्तम् । वत्स, उक्षन्, अश्व, ऋषभ—एभ्यस्तनुत्वविशिष्टवृत्तिभ्यः ष्टरच्प्रत्ययः स्यादित्यर्थः । **तनुत्वं-न्यूनत्वम्** । **वत्सः**-प्रथमवयाः । वयसश्च प्रथमस्य तनुत्वम्—उत्तर-

शे.] स्पष्टंचेदं 'स्वादिषु' इति सूत्रे भाष्ये । **शेवलसु** । **एषामिति** । शेवलादय आदिभूता येषान्तेषामित्यर्थः । एषामकृतसन्धीनां तृतीयादच इति वक्तव्यम् । तेन सुपर्याशीर्दत्तशब्दाट्ठचि 'सुपरिक' इति सिद्ध्यति । **अजिनान्तं** । उत्तरपदग्रहणात्सर्वलोपोऽत्र । **अल्पे** । अल्पत्वं महत्त्वप्रतिद्वन्द्वि, ह्रस्वत्वं दीर्घत्वप्रतिद्वन्द्वीति भेदः । क्वचित्प्रकृतिलिङ्गातिक्रमस्यापि सत्त्वेनाह—

**द्वयोरेकस्य डतरच्** ।५।३।९२। अनयोः कतरो वैष्णवः । यतरः । ततरः । महाविभाषया कः । यः । सः । **वा बहूनां जातिपरिप्रश्ने डतमच्** ।५।३।९३। बहूनां मध्ये एकस्य निर्धारणे डतमज्वा स्यात् । 'जातिपरिप्रश्ने' इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः ।

---

त.] तनुत्वं तृतीयवयःप्राप्तिः । अश्वायामश्वादुत्पन्नोऽश्वः । अश्वत्वं च जातिः । तत्सहचरितस्याऽश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकता । तथा च गर्दभेनाऽश्वायामुत्पादितोऽश्वतरः । ऋषभो भारस्य वोढा । तस्य तनुत्वं भारोद्वहने मन्दशक्तिता । तद्वांस्तु ऋषभतरः । **कियत्तदो** । **कतरो वैष्णव इति** । गुणेन निर्धारणमिदम् । क्रियासंज्ञाभ्यां निर्धारणे तु 'कतरोऽध्यापकः' 'कतरो देवदत्त' इत्यादि ज्ञेयम् । ननु द्वयोरेकस्य निर्धारणे डतरच्चेद्भवति, तर्हि 'कयोरन्यतरो देवदत्तः' 'ययोरन्यतरः' 'तयोरन्यतरः' इत्यत्रापि प्राप्नोति । अत्राहुः—निर्धार्यमाणवाचिभ्य एवायं प्रत्ययोऽभिधानस्वाभाव्यात्, तेनात्र नातिप्रसङ्ग इति । एकस्येति किम् ? । 'द्वयो'रिति कर्मणि षष्ठी माभूत् । तथाहि सति 'अस्मिन् सङ्घे कौ देवदत्तयज्ञदत्तौ' इत्यादावेव स्यात् । **वा बहूनाम्** । 'कियत्तदः' इति वर्तते । जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः । तत्र जाताविति सर्वेषां विशेषणम् । षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्य संबन्धोऽनुपपन्नः स्यात् । परिप्रश्नग्रहणं तु किम एव विशेषणम् । तच्च क्षेपनिवृत्त्यर्थम् । तत्र जातिग्रहणं प्रायोऽभिप्रायम् । क्रियागुणसंज्ञाभिरपि निर्धारणे डतरच इष्टत्वात् । तथा पूर्वसूत्रे द्वयोरिति प्रायोऽभिप्रायम् । बहूनां निर्धारणेऽपि डतरच इष्टत्वात् । तथा च वार्तिकम्—'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाख्यानर्थक्य'मिति । अत्र कैयटः—'द्वयो'रिति, 'जातिपरिप्रश्ने' इति च न कर्तव्यमिति भाव इति । तदेतदाह—**प्रत्याख्यातमाकर इति** । **कठ इति** । 'कतमो भवतामध्यापकः, शूरो, देवदत्तो वे'त्यप्युदाहर्तव्यम् । **यकः सक इति** । 'कक' इति तु नोक्तम् ।

---

बा.] वयःप्राप्त्या ज्ञेयम् । तदाह—**द्वितीयं वयःप्राप्त इति** । **उक्षतर इति** । उक्षा—तरुणो बलीवर्दः । तारुण्यस्य तनुत्वं तृतीयवयः-प्राप्त्या ज्ञेयम् । **अश्वतर इति** । गर्दभेन अश्वायामुत्पादितः । **अश्वतरः**—अश्वतरत्वं च अश्वत्वापेक्षया न्यूनमेव । **ऋषभतर इति** । ऋषभो—भारस्य वोढा । तस्य तनुत्वं भारोद्वहने मन्दशक्तिता, तद्वानित्यर्थः । तनुः कृशो वत्सो वत्सतर इति कुतो नेत्यत आह—**प्रवृत्तिनिमित्ततनुत्वे प्रत्ययमिति** । एतच्च भाष्ये स्पष्टम् । **कियत्तदो निर्धारणे** । किम्, यत्, तत् एषां समाहारद्वन्द्वात्पञ्चमी । द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरच् स्यादित्यर्थः । **अनयोः कतरो वैष्णव इति** । को वैष्णव इत्यर्थः । अत्र वैष्णवत्वगुणेन किंशब्दार्थ इदमर्थाभ्यां निर्धार्यते । अतः किंशब्दाड्डतरचि डित्वाट्टिलोपे 'कतर' इति भवति । एवं यच्छब्दात्, तच्छब्दाच्च डतरचि टिलोपे यतरः ततर इति भवति । निर्धार्यमाणवाचिभ्य इति किम् ? । कयोरन्यतरो देवदत्तः, ययोरन्यतरः, तयोरन्यतर इत्यत्र किमादिभ्यो न भवति ।

**वा बहूनाम्** । कियत्तद इति, निर्धारणे इति, एकस्येति चानुवर्तते । बहूनामिति निर्धारणे षष्ठी । तदाह—**बहूनां मध्ये निर्धारणे डतमज्वा स्यादिति** । 'मध्ये' इत्यनन्तरम्—'एकस्ये'ति शेषः । जातिपरिप्रश्ने गम्ये इत्यपि बोध्यम् । जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः । जातौ परिप्रश्ने च गम्ये इत्यर्थः । तत्र जाताविति कियत्तदां सर्वेषामेव विशेषणम् । परिप्रश्नग्रहणं तु किम एव विशेषणं, तच्च क्षेपार्थकस्य किमो निवृत्त्यर्थम् । यत्तदोस्तु परिप्रश्नग्रहणं न विशेषणम्, असंभवादिति वृत्तौ स्पष्टम् । अत्र वार्तिकम्—'किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाख्यानर्थक्य'मिति । 'पूर्वसूत्रे द्वयोरिति, अत्र सूत्रे जातिपरिप्रश्ने इति च न कर्तव्ये इति भाव' इति कैयटः । तदाह—**प्रत्याख्यातमाकरे इति** । क्षेपार्थस्य त्वनभिधानान्न ग्रहणमिति तदाशयः । पूर्वसूत्रे द्वयोरिति चेति बोध्यम् । तथाच 'कतम एषां पाचकः, शूरो, देवदत्तः' इत्यत्र क्रियागुणसंज्ञाभिरपि निर्धारणे डतमज् भवति । 'एषां कतरो देवदत्तः' इत्यत्र बहूनामेकस्य निर्धारणे डतरच् भवति । अत एव 'प्रत्ययः' इति सूत्रभाष्ये 'बहुष्वासीनेषु कश्चित् कंचित्पृच्छति कतरो देवदत्तः' इति प्रयोगः सङ्गच्छते । **कतमो भवतां कठ इति** । 'गोत्रं च चरणैः सहे'ति कठस्य जातित्वम् । **वाग्रहणमकजर्थमिति** । अन्यथा महाविभाषयाऽपवादेन मुक्ते उत्सर्गस्याऽप्रवृत्तेरुक्-

---

शे.] कुटीर इति । कासूः—शक्तयाख्यशस्त्रं, विकलवाक्च । **कियत्तदो** । द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यो डतरजित्यर्थः । द्वयोरित्युपलक्षणम् । अत एव 'बहुष्वासीनेषु कश्चित्कंचित्पृच्छति कतरो देवदत्त' इति 'प्रत्ययः' इति सूत्रस्थभाष्यप्रयोगः सङ्गच्छते । एतद्बोधयितुमेव सूत्रे एकग्रहणम् । द्वयोरिति निर्धारणषष्ठी व्याख्यानादेव भविष्यतीत्यलम् । अत्र निर्धारणं न प्रत्ययार्थः, तं विनापि प्रतीयमानतयाऽन्यलभ्यत्वात्, किं तु विषयनिर्देश इति वृत्तौ । **वा बहूनाम्** । **प्रत्याख्यातमिति** । क्षेपार्थस्य त्वनभिधानान्न । अत एव ततो डतरज्न । **आकरे इति** । पूर्वसूत्रस्थ'द्वयो'रित्यस्य प्रत्याख्यानभाष्यव्याख्यावसरे कैयटग्रन्थे इत्यर्थः । अत एव कतमा—कतमेषामाख्यते ति पदद्वित्वप्रकरणे भाष्यप्रयोगः सङ्गच्छते ।

महाविभाषया-यः । सः । किमोऽस्मिन्विषये डतरजपि । कतरः । एकाच्च प्राचाम् ।५।३।९४। डतरच् डतमच स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः । अवक्षेपणे कन् ।५।३।९५। व्याकरणकेन गर्वितः । येनेतरः कुत्स्यते तदिहोदाहरणम् , स्वतः कुत्सितं तु 'कुत्सिते' इत्यस्य । प्रागिवीयानां पूर्णोऽवधिः ।

अथ स्वार्थिकाः ।

इवे प्रतिकृतौ ।५।३।९६। कन् स्यात् । अश्व इव प्रतिकृतिः-अश्वकः । प्रतिकृतौ किम् ? । गौरिव गवयः । संज्ञायां च ।५।३।९७। इवार्थे कन् स्यात्समुदायश्चेत्संज्ञा । अप्रतिकृत्यर्थमारम्भः । अश्व-सदृशस्य संज्ञा-अश्वकः । उष्ट्रकः । लुम्मनुष्ये ।५।३।९८। संज्ञायां विहितस्य कनो लुप्स्यान्मनुष्ये वाच्ये । 'चञ्चा तृणमयः पुमान्' । चञ्चेव मनुष्यश्चञ्चा । वर्ध्रिका । जीविकार्थे चाऽपण्ये ।५।३।९९। जीविकार्थे

त.] अकच्प्रकरणस्थस्यापि 'किमः कः' इत्ययमादेश इति व्याख्यातत्वात् । महाविभाषयेति । 'प्राग्दिशः' इति सूत्रे समर्थप्रथमग्रहणयोर्निवृत्तत्वेऽपि वाग्रहणमनुवर्तते इत्युक्तत्वादिति भावः । 'कियत्तदः' इति सूत्रे द्वयोरित्यस्य प्रत्या-ख्यानादाह-किमोऽस्मिन्निति । एकाच्च । प्राचांग्रहणं पूजार्थम् । विकल्पोऽनुवर्तत एव । अवक्षेपणे कन् । कुत्सिते तु कः । स्वरे विशेषः । येनेतर इति । अवक्षिप्यते येनेत्यवक्षेपणशब्दः करणे ल्युडन्त इति भावः । प्रागिवीयानां पूर्णोऽवधिः ।

अश्वक इति । अश्वशब्दोऽश्वे एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृश इति नाऽयं स्वार्थिक इत्येके । अन्ये तु सादृश्यनिबन्धनादभेदोपचाराद्गौर्वाहीक इतिवदश्वशब्द एव प्रतिकृतौ वर्तते । प्रत्ययस्तु तस्यैवौपचारि-कत्वस्य बोधक इत्याहुः । प्रतिकृतौ किम् ? । गौरिव गवयः । तृणचर्मकाष्ठादिनिर्मितं प्रतिमाऽपरपर्यायं वस्तु प्रति-कृतिः । गवयस्तु नैवम् । समुदायश्चेदिति । प्रकृतिप्रत्ययसमुदायश्चेदश्वसदृशस्य संज्ञेत्यर्थः । चञ्चा । वर्ध्रि-

बा.] त्वादकच् न स्यादिति भावः । नच 'अव्ययसर्वनाम्ना'मित्यस्याधिकारत्वात्तदनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमेवेति वाच्यम् , इहैव सूत्रे तदनुवृत्तिर्न तु पूर्वसूत्रे इति ज्ञापनार्थत्वात् । अतो डतरज्विषये नाऽकच् । महाविभाषयेति । अत एव 'अवक्षेपणे' इति सूत्रे भाष्ये 'क एतयोरर्थयोर्विशेषः' इति प्रयोगः सङ्गच्छते । 'तमवादयः प्रागवक्षेपणकनो नित्याः प्रत्ययाः' इति तु प्रायिकमिति भावः । किमोऽस्मिन्निति । 'वा बहूनां'मिति प्रकृतसूत्रविषयेऽपीत्यर्थः, बहुष्वासीनेषु इत्याद्युदाहृतभाष्यप्रयोगादिति भावः । एकाच्च प्राचाम् । शेषपूरणेन सूत्रं व्याचष्टे—डतरच् डतमच्च स्यादिति । 'पूर्वसूत्रद्वयविषये' इति शेषः । 'महाविभाषयैव सिद्धे प्राचांग्रहणं न कर्तव्य'मिति भाष्यम् । अत एव नाऽकजर्थं तत् । अवक्षेपणे कन् । व्याकरणकेन गर्वित इति । व्याकरणं हि स्वतो न कुत्सितं, किं तु अधीतं सदध्येतृकुत्साहेतुभूतं गर्वमावहदवक्षेपणम् । नन्ववक्षेपणं कुत्सा, तत्कथं व्याकरणमवक्षेपणं स्यात् , 'कुत्सित' इत्यनेन गतार्थं चेदमित्यत आह—येनेतर इति । अवक्षेपणशब्दः करणे ल्युडन्त इति भावः । इति प्रागिवीयाः ।

अथ तद्धिते स्वार्थिकप्रकरणं निरूप्यते । इवे प्रतिकृतौ । कन्स्यादिति । 'अवक्षेपणे क'न्नित्यतस्तद-नुवृत्तेरिति भावः । इवार्थ उपमानत्वम् । तद्वति वर्तमानात्प्रातिपदिकात्कन्स्यात्प्रतिकृतिभूते उपमेये इति फलितम् । मृदादिनिर्मिता प्रतिमा प्रतिकृतिः । अश्वक इति । प्रतिकृतेः स्त्रीत्वेऽपि 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्य-नुवर्तन्ते' इति पुंलिङ्गत्वम् । संज्ञायां च । 'क'न्निति शेषः । समुदायश्चेदिति । प्रकृतिप्रत्ययसमुदायश्चेत्प्रक-त्यर्थसदृशस्य संज्ञेत्यर्थः । पूर्वसूत्रेणैव सिद्धे किमर्थमिदमित्यत आह—अप्रतिकृत्यर्थमारम्भ इति । तथाच प्रतिकृताविति निवृत्तम् । इव इति त्वनुवर्तत एव । तदाह—अश्वसदृशस्येति । अश्वसदृशस्य अमनुष्यस्य

शे.] तेन 'कतमो भवतामध्यापकः, शूरो, देवदत्तो वे'ति सिद्धम् । वाग्रहणमिति । न च 'अव्ययसर्वनाम्ना'मित्यस्याऽधिकार-त्वात्तदनुवृत्त्यैव सिद्धे वाग्रहणं व्यर्थमिति वाच्यम् , तन्निवृत्तिज्ञापनार्थत्वात् । तेन डतरज्विषये नाऽकच् । महाविभाषयेति । अत एव 'अवक्षेपणे' इति सूत्रे भाष्ये 'क एतयोरर्थयोर्विशेषः' इति प्रयोगः सङ्गच्छते । 'तमादयः प्रागवक्षेपणे कनो नित्याः प्रत्ययाः' इति प्रायिकमिति भावः । किम इति । 'बहुष्वासीनेषु' इत्यादिभाष्यप्रयोगादिति भावः । एकाच्च । प्राचामिति पूजार्थं, वाक्यस्येष्टत्वे महाविभाषयैव सिद्धेः । अकजर्थमपि न, तस्याऽनिष्टत्वादिति स्पष्टं भाष्ये । येनेतर इति । 'अवक्षेपणे' इति करणे ल्युडिति भावः । प्रागिवीयानां पूर्णोऽवधिः ।

इवे प्र । इवार्थोपमानत्ववति वर्तमानात्प्रातिपदिकात्कन् , यदुपमेयं सा प्रतिकृतिश्चेदित्यर्थः । प्रतिकृतिर्मृदादिनिर्मिता प्रतिमा । प्रकारान्तरे स्वार्थिकप्रकरणविरोधः । अश्वक इति । उपमानाऽश्वाऽभिन्न इति बोधः । लुम्म । अस्य लुप्त्वं प्रकृति-

यदविक्रीयमाणं तस्मिन्वाच्ये कनो लुप्स्यात् । वासुदेवः । शिवः । स्कन्दः । देवलकानां जीविकार्थासु देवप्रतिकृतिष्विदम् । अपण्ये किम् ? । हस्तिकान्विक्रीणीते । देवपथादिभ्यश्च ।५।३।१००। कनो लुप्स्यात् । देवपथः । हंसपथः । आकृतिगणोऽयम् । वस्तेर्ढञ् ।५।३।१०१। इवे इत्यनुवर्तते [ एव ] । प्रतिकृताविति निवृत्तम् । वस्तिरिव वास्तेयम् । वास्तेयी । शिलाया ढः ।५।३।१०२। 'शिलायाः' इति योगविभागाड्ढञ्-पीत्येके । शिलेव शिलेयम् । शैलेयम् । शाखादिभ्यो यः ।५।३।१०३। शाखेव—शाख्यः । मुख्यः ।

त.] केति । लुपि युक्तवद्भावात्स्त्रीलिङ्गता । वासुदेवः । शिव इत्यादि । याः प्रतिमाः प्रतिगृह्य गृहाद्गृहं भिक्षमाणा अटन्ति ता एवमुच्यन्ते । देवलका अपि त एव भिक्षवोऽभिप्रेताः । यास्त्वायतनेषु प्रतिष्ठाप्यन्ते पूज्यन्ते च तासूत्तरसूत्रेण लुप् । तदुक्तम्—'अर्चासु पूजनार्हासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु' । इति । अर्चासु=प्रतिमासु । प्रतिमासु—कीदृशीषु ? । पूजनार्हासु । गेहेष्वायतनेषु वा याः पूज्यन्ते तासु । चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते । अर्चासूदाहरणं–शिवः । विष्णुः । चित्रकर्मणि–अर्जुनः । दुर्योधनः । ध्वजेषु–कपिः । गरुडः । सिंहः । सुपर्णसिंहमकरादयो राज्ञां ध्वजेषु सन्ति । हस्तिकानिति । ईदृशमेव विषयमभिप्रेत्य पठन्ति—'रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक्' इति । अयं भावः—'अपण्ये' इत्युक्तत्वात्पण्ये हस्तिकानितिवत् रामकं सीतिकां लक्ष्मणकमिति प्रयोगा एव साधव इति । देवपथ इत्यादि । देवपथ इव प्रतिकृतिः ।

बा.] कस्यचित्संज्ञैषा । अश्वसदृशोऽयमश्वकसंज्ञक इति बोधः । लुम्मनुष्ये । संज्ञायां चेति विहितस्येति । ननु 'इवे प्रतिकृतौ' इति विहितस्य, मनुष्यस्य प्रतिकृतित्वाऽसंभवादिति भावः । चञ्चेव मनुष्यः चञ्चेत्युदाहरणं वक्ष्यन्चञ्चाशब्दं व्याचष्टे—चञ्चा तृणमयः पुमानिति । चञ्चेति । चञ्चातुल्यो मनुष्योऽयं चञ्चासंज्ञक इत्यर्थः । वध्रिकेति । वध्रिका चर्ममयी प्रतिकृतिः । तत्तुल्यो मनुष्योऽयं वध्रिकासंज्ञक इत्यर्थः । लुपि युक्तवत्त्वात्स्त्रीत्वम् । वचनं तु विशेष्यवदेव, 'हरीतक्यादिषु व्यक्ति'रित्युक्तेः । तेन 'चञ्चे इव मनुष्यौ' इत्यत्र चञ्चा इति न भवति । जीविकार्थे चापण्ये । पण्यं—विक्रीयमाणम् । तदाह—अविक्रीयमाणमिति । वासुदेव इति । वासुदेवतुल्या जीविकार्था अविक्रेया प्रतिकृतिरित्यर्थः । एवं शिव इत्यादि । कथं प्रतिकृतेरविक्रेयाया जीविकार्थत्वमित्यत आह—देवलकानामिति । प्रतिमां गृहीत्वा भिक्षार्थं प्रतिगृहमटतामित्यर्थः । तत्तदायतनेषु प्रतिष्ठितासु पूजार्थप्रतिमासु उत्तरसूत्रेण लुब्वक्ष्यते । हस्तिकान्विक्रीणीते इति । जीविकार्थं हस्तितुल्यप्रतिकृतीर्विक्रीणीते इत्यर्थः । अत्र पण्यत्वप्रतीतेः कनो न लुक् । 'संज्ञायां चे'ति विहितस्य नायं लुप् , किन्तु 'इवे प्रतिकृतौ' इति विहितस्यैव, भाष्ये प्रतिकृतावेव एतदुदाहरणात् । पठन्ति चाभियुक्ताः—'रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दं न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक् । इति । अत्र रामादिशब्दाः प्रतिकृतिषु वर्तन्ते । तासां चात्र पण्यतया कनो लुब्दुर्लभ इति रामसीतालक्ष्मणशब्दानामपशब्दत्वमित्याशयः । देवपथादिभ्यश्च । कनो लुप् स्यादिति । शेषपूरणमिदम् । 'इवे प्रतिकृतौ' इति विहितस्य देवपथादिभ्यः परस्य कनो लुप्स्यादिति यावत् । देवपथ इति । देवानां पन्थाः देवपथः । तत्प्रतिकृतिरित्यर्थः । 'इवे प्रतिकृतौ' इति कनो लुप् । एवं हंसपथः । अत्र वृत्तौ पठितम्—'अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु ।' इति । अर्चाः=प्रतिमाः । पूजार्थासु तासु, चित्रकर्मसु, ध्वजेषु देवपथादिगणपठितेषु 'इवे प्रतिकृतौ' विहितस्य कनो लुबित्यर्थः । 'तद्राजस्ये'ति सूत्रे कैयटोऽप्येतं श्लोकं पपाठ । अर्चासु यथा—शिवो विष्णुर्गणपतिरित्यादि । चित्रकर्मसु यथा—रावणः कुम्भकर्णः इन्द्रजिदित्यादि । ध्वजेषु यथा—कपिः गरुडः वृषभ इत्यादि । वस्तेर्ढञ् । निवृत्तमिति । अस्वरितत्वादिति भावः । 'संज्ञायां चे'त्यादिपूर्वसूत्रेषु क्वापि प्रतिकृतावित्यस्याऽनिवृत्तेर्न लुब्विधिषु तेषु तदनुवृत्तिरपेक्षिता । बस्तिरिवेति । 'बस्तिर्नाभेरधो द्वयो'रित्यमरः । शिलाया ढः । इवे इत्येव । शिलेव शिलेयमिति । 'दध्यादी'ति शेषः । योगेति । 'शिलाया' इत्येको योगः । ढमित्यनुवर्तते, इवे इति च । शैलेयमिति । भित्वादादिवृद्धिः, स्त्रियां ङीप् च फलम् । 'ढः' इति द्वितीयो योगः । शिलाया इत्यनुवर्तते । उक्तोऽर्थः । शाखादिभ्यो यत् । 'य' इति त्वपपाठः । तैत्तिरीये

शो.] वल्लिङ्गाय । वचनन्तु विशेष्यवदेव, 'हरीतक्यादिषु व्यक्ति'रित्यत्र पाठात् । तेन चञ्चे मनुष्यावित्येव । देवलकानामिति । प्रतिमां गृहीत्वा भिक्षार्थं प्रतिगृहमटतामित्यर्थः । तत्तदायतनेषु प्रतिष्ठापितपूजार्थप्रतिमासु चित्रेषु नटेषु च भ्रमात्मिका शिवाऽभेदबुद्धिरेव न सादृश्यबुद्धिरिति प्रत्ययोत्पत्तेरेवाऽभावः । स्पष्टश्च चित्रनटविषये तादृशी बुद्धी रसप्रकरणे शङ्कुकमतनिरूपणावसरे प्रकाशकारैरुक्ता । यस्तु तत्र बुद्धेर्भ्रमत्वाऽभावोऽप्युक्तः स त्वनन्तरावतीर्णबाधया एव बुद्धेस्तत्र भ्रमत्वेन प्रक्रमान्न विरुद्ध इति

जघनमिव जघन्यः। अग्र्यः। शरण्यः। द्रव्यं च भव्ये ।५।३।१०४। द्रव्यम्—अयं ब्राह्मणः। कुशाग्राच्छः ।५।३।१०५। कुशाग्रमिव कुशाग्रीया बुद्धिः। समासाच्च तद्विषयात् ।५।३।१०६। इवार्थविषयात्समासाच्छः स्यात्। काकतालीयो देवदत्तस्य वधः। इह काकतालसमागमसदृशश्चोरसमागम इति समासार्थः। तत्प्रयुक्तः

त.] हंसपथं इव प्रतिकृतिरिति विग्रहः। वस्तिरिति। 'बस्तिर्नाभेरधो द्वयो'रित्यमरः। द्रव्यं च भव्ये। द्रुशब्दादिवार्थे यत्प्रत्ययो निपात्यते। समासाच्च तद्विषयात्। तच्छब्देन प्रकृत इवार्थो निर्दिश्यते इत्याह—इवार्थविषयादिति। छः स्यादिति। इवार्थे इति बोध्यम्। 'पूगाञ्ञ्यः' इत्यतः प्रागिवेत्यधिकारात्। शस्त्री श्यामेत्यादौ तु एक एव इवार्थः, स च समासान्तर्भूत इति छो न भवत्युक्तार्थानामप्रयोगात्। काकतालीय इति। प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः। सुप्सुपेति वा। उभयथापि विशेषसंज्ञाविनिर्मुक्तः। स च छप्रत्ययविषय एव। तेनेह स्वातन्त्र्यमुपाध्यन्तरयोगो विग्रहश्च नेत्याकरः। इह काकतालेत्यादि। आगच्छतः काकस्याऽकस्मात्ताल-

बा.] 'मुख्यो भवती'त्यादौ मुख्यशब्दस्य आद्युदात्तत्वदर्शनात्, उगवादिसूत्रभाष्यविरुद्धत्वाच्च। द्रव्यं च भव्ये। द्रुशब्दादिवार्थवृत्तेर्यप्रत्ययो निपात्यते भव्ये उपमेये गम्ये। भव्य आत्मवान्। 'अभिप्रेतानामर्थानां पात्रभूतः' इति वृत्तिः। द्रव्यमयमिति। द्रुः=वृक्षः,स यथा पुष्पफलादिभागेवमभिमतफलपात्रभूत इत्यर्थः। यद्वा द्रुः=कल्पवृक्षोऽत्र विवक्षितः, स इव अभिमतार्थभागित्यर्थः। यप्रत्यये ओर्गुणः। अवादेशः। कुशाग्राच्छः। इवे इत्येव। कुशाग्रमिवेति। सूक्ष्मत्वेन सादृश्यम्। कुशाग्रवत्सूक्ष्मेत्यर्थः। समासाच्च। तच्छब्देन प्रकृत इवार्थः परामृश्यते। तदाह—इवार्थविषयादिति। इवार्थः सादृश्यमुपमानोपमेयभावात्मकं, तद्विषयकादित्यर्थः। सादृश्यवदर्थबोधकात्समासादिति यावत्। यद्यपि घनश्याम इति समासोऽपि सादृश्यवदर्थबोधकस्तथापि सादृश्यवदर्थबोधकसमस्यमानयावत्पदावयवकात्समासादिति विवक्षितमिति न दोषः। छःस्यादिति। चकारेण पूर्वसूत्रोपात्तच्छस्यानुकर्षादिति भावः। 'इवार्थे' इति शेषः। 'पूगाञ्ञ्यः' इत्यतः प्रागिवाधिकारात्। ततश्च इवार्थसमस्यमानयावत्पदकात्समासादिवार्थे छः स्यादिति लभ्यते। काकतालीयो देवदत्तस्य वध इति। काकः कश्चिदकस्मात्तालवृक्षस्य मूलं गतस्तालफलपतनान्मृतः। तथैव कश्चिद्देवदत्तोऽकस्मान्निर्जनप्रदेशे क्वचिद्गतश्चोरेण हतस्तत्रेदं वाक्यं प्रवृत्तम्। अत्र समासार्थगतं सादृश्यमेकं, प्रत्ययार्थगतम् अन्यत्सादृश्यं च भासते। तथाहि—काकागमनमिव तालपतनमिव काकतालमिति समासस्य विग्रहः। अत्र 'काक'शब्दः काकागमनसदृशे देवदत्तागमने लाक्षणिकः। 'ताल'-शब्दस्तु तालपतनसदृशे चोरागमने लाक्षणिकः। काकागमनसदृशं देवदत्तागमनं, तालपतनसदृशं चोरागमनमिति च काकतालमिति समासाद्बोधः। यद्यप्यत्र काकतालशब्दयोर्मिलितयोरेकत्रान्वयाऽभावाद्द्वन्द्वसमासो न संभवति, परस्परान्वयाऽभावेन असामर्थ्याच्च; तथापि अस्मादेव विधिबलात् 'सुप्सुपा' इति समासः। तथाच काकतालसमागमसदृशो देवदत्तचोरसमागम इति समासार्थः। तदाह—इहेत्यादि। अत्र चोरसमागम इत्यस्य चोरेण देवदत्तस्य समागम इत्यर्थः। तदेवंविधात्समासात्काकतालशब्दादिवान्तरार्थे सादृश्यान्तरे छप्रत्ययः। तत्र समासात्मककाकतालशब्दभूतप्रकृत्यर्थरूपकाकतालसमागमसदृशदेवदत्तचोरसमागमे सति तालपतनकृतकाकमरणे उपस्थिते उपमानत्वं, देवदत्तवधे चोरागमनकृते उपमेयत्वं च छप्रत्ययेन गम्यते। ततश्च तादृशचोरसमागमे सति तालपतनकृतकाकमरणसदृशो देवदत्तस्य चोरकृतो वध इति छप्रत्ययेन लभ्यते। तदाह—तत्प्रयुक्त इति। तादृशतालपतनप्रयुक्तेत्यर्थः। सदृश इत्यनन्तरं 'देवदत्तवध' इति शेषः। तथा च काकतालसमागमसदृशो देवदत्तचोरसमागमः, तद्धेतुकस्तालपतनकृत-

शे.] दिक्। 'अर्चासु पूजानार्थासु चित्रकर्मध्वजेषु च' इति देवपथादिषु पाठात्तत्र न दोष इति 'तद्राजस्ये'ति सूत्रे कैयटः। प्रकृतसूत्रे वृत्तावप्येतत्। निवृत्तमिति। अस्वरितत्वादननुवृत्तिरेवाऽत्र निवृत्तिः। 'शाखादिभ्यो य'दिति पाठः। 'यं' इति त्वपपाठः। मुख्यादीनामाद्युदात्तत्वदर्शनात्। उगवादिसूत्रस्थभाष्यविरुद्धत्वाच्च। भव्यः—आत्मवान्। अभिप्रेतानामर्थानां पात्रभूत इति यावत्। तद्विषयादिति। इवार्थविषयसर्वावयवकादित्यर्थः, भाष्ये तथैवोदाहरणात्। इवार्थविषयसर्वावयवकादिवार्थोपमानत्ववति वर्त्तमानाच्छ इत्यर्थः। अत एव 'शस्त्री श्यामे'त्यादेरिवार्थे च्छो न। काकतालमिति द्वन्द्वाच्चेवार्थे न। काकतालीय इति। काक इव तालमिवेति इवार्थे इत एव ज्ञापकात्सुप्सुपेति समासः।' तत्र पूर्वपदमुपमानकाकागमनपरम्, उत्तरपदं चोक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरम्। समुदायश्चोपमेयदेवदत्तगमनसमानाधिकरणचोरपतनपरः। एवञ्चोपमानकाकागमनसमानाधिकरणोपमानतालपतनोपमेयदेवदत्तगमनसमानाधिकरणं चोरपतनमिति समासार्थः। विशिष्टे विशिष्टनिरूपितोपमेयत्वबोधाद्विशेषणे विशेषणनिरूपितं,विशेष्ये च विशेष्यनिरूपितन्तत्पर्यवस्यति। तत्तदुपमेयबोधे तत्तदुपमेयवाचकसमभिव्याहारस्तन्त्रम्। ततस्तद्धितसमभिव्याहारे समासार्थोपमानप्रयोज्योपमानभूततालकृतकाकवधोपमेयः समासार्थोपमेयप्रयोज्यश्चोरकृतो देवदत्तवध इति बोधः। [एकार्थीभावबलाच्चैतदर्थलाभः]। अत्र शब्दशक्तिस्वभावात्। एतेन परस्परं सामर्थ्याऽभावाद्वृत्तिद्वयमपि दुर्लभमित्यपास्तम्। तत्फलितमाह—इह काकेत्यादि।

काकमरणसदृशस्तु प्रत्ययार्थः। अजाकृपाणीयः। 'अतर्कितोपनत' इति फलितोऽर्थः। **शर्करादिभ्योऽण्** ।५।३।१०७। शर्करेव शार्करम्। **अङ्गुल्यादिभ्यष्ठक्** ।५।३।१०८। अङ्गुलीव आङ्गुलिकः। भरूजेव—भारूजिकः। **एकशालायाष्ठजन्यतरस्याम्** ।५।३।१०९। एकशालाशब्दादिवार्थे ठज्वा। पक्षे ठक्। एकशालेव एकशालिकः। ऐकशालिकः। **कर्कलोहितादीकक्** ।५।३।११०। कर्कः शुक्लोऽश्वः, स इव कार्कीकः। लौहितीकः स्फटिकः। **पूगाञ्ञ्योऽग्रामणीपूर्वात्** ।५।३।११२। इवार्थो निवृत्तः। नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः। तद्वाचकात्स्वार्थे ञ्यः स्यात्। लौहितध्वज्यः।। 'व्रातच्फञोरस्त्रियाम्'। व्रातः—कापोतपाक्यः। च्फञ्—कौञ्जायन्यः। ब्राध्नायन्यः। **आयुधजीविसङ्घाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्** ।५।३।११४। वाहीकेषु य आयुधजीविसङ्घस्तद्वाचिनः स्वार्थे ञ्यट्। क्षौद्रक्यः। मालव्यः। टित्त्वान्ङीप्। क्षौद्रकी। आयुधेति किम्?। मल्लाः। सङ्घेति किम्?। सम्राट्। वाहीकेषु किम्?। शबराः। अब्राह्मणेति किम्?। गोपालवाः। शालङ्कायनाः। [ राजन्याः ]। ब्राह्मणे तद्विशेषग्रहणम्। राजन्ये स्वरूपग्रहणम्। **वृकाट्टेण्यण्**

त.] फलपतनाद्यथा वधः, तथैव चौकस्मिकचोरसमागमाद्देवदत्तवधः। एवमजाया आगच्छन्त्याः कृपाणपतनाद्यथा वधः, तत्सदृशं मरणमिति फलितोऽर्थः। **अतर्कितोपनत इति**। अचिन्तितोपपन्नः। यादृच्छिक इत्यर्थः। **पूगाञ्ञ्यो**। स्वरूपग्रहणं तु न भवति, 'अग्रामणीपूर्वा'दिति वचनात्। पूर्वशब्दो ह्यवयववचनः। अग्रामणीपूर्वादिति किम्?। देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः। 'स एषां ग्रामणी'रिति कन्। अत्र समुदायः पूगवचनः। **लौहितध्वज्य इति**। लोहितो ध्वजो यस्य सङ्घस्य स लोहितध्वजः। स एव लौहितध्वज्यः। **व्रातच्फञोः**। उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः। उत्सेधः=शरीरायासः। **कौञ्जायन्य इति**। 'गोत्रे कुञ्जादिभ्यः' इति

बा.] काकमरणसदृशश्चोरकृतो देवदत्तवध इत्येवं 'काकतालीयो देवदत्तवध' इति समासाद्बोधः। एतदेवाभिप्रेत्योक्तं भाष्ये 'काकागमनमिव तालपतनमिव काकतालम्। काकतालमिव काकतालीय'मिति। अत्र काकतालमिति इवार्थगर्भितकेवलद्वन्द्वान्न भवति, इवान्तरार्थस्य सादृश्यान्तरस्याऽप्रतीतेरित्यलम्। **अजाकृपाणीय इति**। अजागमनमिव कृपाणपतनमिव अजाकृपाणम्, तदिव अजाकृपाणीयः। अजाकृपाणसमागमसदृशो देवदत्तचोरसमागमः समासार्थः, कृपाणपतनप्रयुक्ताऽजामरणसदृशो देवदत्तवधश्चोरकृतः प्रत्ययार्थः। अत्र सर्वत्र अतर्कितोपनतत्वं साधारणो धर्म इत्याह—**अतर्कितेति**। **शर्करादिभ्योऽण्**। इवे इत्येव। **शार्करमिति**। 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति विशेष्यनिघ्नतेति भावः। **अङ्गुल्यादिभ्यष्ठक्**। इवे इत्येव। **अङ्गुलीवेति**। अङ्गुलिशब्दात् 'कृदिकारादक्तिनः' इति ङीष्। **आङ्गुलिक इति**। पूर्ववद्विशेष्यनिघ्नता। **भारूजिक इति**। पूर्ववद्विशेष्यनिघ्नता। **एकशालायाः**। **पक्षे ठगिति**। अन्यतरस्याङ्ग्रहणम् अनन्तरठकः समुच्चयार्थमिति भावः। 'ठञ्वे'त्येव सुवचम्। **कर्कलोहितादीकक्**। **कर्कः शुक्लोऽश्व इति**। अश्वपर्यायेषु 'सितः कर्कः' इत्यमरः। **लौहितीकः स्फटिक इति**। जपापुष्पादिसम्पर्कवशाल्लोहित इवेत्यर्थः। **पूगाञ्ञ्यः**। **इवार्थो निवृत्त इति**। व्याख्यानादिति भावः। **अनियतवृत्तय इति**। उद्धृता इत्यर्थः। **तद्वाचकादिति**। पूगेति न स्वरूपग्रहणं, व्याख्यानात्। ग्रामणीवाचकपूर्वावयवकभिन्नात्पूगवाचकादित्यर्थः। **लौहितध्वज्य इति**। लोहिता ध्वजा यस्य पूगस्य स लोहितध्वजः। सएव—लौहितध्वज्यः। **व्रातच्फञोरस्त्रियामिति**। इदं सूत्रम् 'गोत्रे कुञ्जादिभ्यः' इत्यत्र प्रसङ्गादुपादाय व्याख्यातम्। **व्रात इति**। उदाहरणसूचनमिदम्। भारोद्वहनादिशरीरायासजीवनानां नानाजातीयानामनियतवृत्तीनां सङ्घो व्रातः। **कापोतपाक्य इति**। कपोतान्=पक्षिविशेषान् भक्षणाय पचतीति कपोतपाकः, स एव कापोतपाक्यः। पचेः कर्तरि घञ्, 'चजोः कु घिण्ण्यतो'रिति कुत्वम्। **च्फञिति**। उदाहरणसूचनमिदम्। **कौञ्जायन्य इति**। 'गोत्रे कुञ्जादिभ्यः' इति च्फञ्। आयन्नादेशः। ततः स्वार्थे अनेन ञ्यः। एवं **ब्राध्नायन्यः**। **आयुधजीवि**। **वाहीकेष्विति**। वाहीकाख्यग्रामविशेषेष्वित्यर्थः। **क्षौद्रक्य इति**। क्षुद्रको नाम कश्चिदायुधजीविनां वाहीकदेशवासिनां सङ्घः। स एव क्षौद्रक्यः। **मालव्य इति**। मालवो नाम कश्चिद्वाहीकेषु आयुधजीविनां सङ्घः। स

शे.] सर्वत्रातर्कितोपनतत्वं साधारणो धर्म इत्याह—**अतर्कितेति**। **पक्षे ठगिति**। अन्यतरस्याङ्ग्रहणमनन्तरठकः समुच्चयार्थमिति भावः। एकशालाशब्दस्याङ्गुल्यादिषु पाठादिति भाव इत्यन्ये। **पूगात्**। 'पूगे'ति न स्वरूपग्रहणं, व्याख्यानात्। ग्रामणीवाचकपूर्वावयवकभिन्नात्पूगवाचकादित्यर्थः। **लौहितध्वज्य इति**। लोहिता ध्वजा यस्य पूगस्य स एव लोहितध्वज्यः। **व्रातच्फ**। शरीरायासजीवी नानाजातीयानामनियतवृत्तीनां सङ्घो—व्रातः। **च्फञिति**। 'गोत्रे कुञ्जादिभ्यः' इत्यनेन। अस्त्रियां किम्?। कौञ्जायनी। **टित्त्वान्ङीबिति**। टित्त्वसामर्थ्यादस्त्रियामिति अत्र न सम्बध्यत इति भावः। **तद्विशेषेति**। व्याख्यानादिति

।५।३।११५। आयुधजीविसङ्घवाचकात्स्वार्थे। वार्केण्यः। आयुधेति किम्? जातिशब्दान्मा भूत्। दामन्यादित्रिगर्तषष्ठाच्छः।५।३।११६। दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चायुधजीविसङ्घवाचिभ्यः स्वार्थे छः स्यात्। त्रिगर्तः षष्ठो वर्गो येषां ते त्रिगर्तषष्ठाः। 'आहुस्त्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी। क्रौष्टुकिर्जालमानिश्च ब्रह्मगुप्तोऽथ जानकिः'। १। दामनीयः। दामनीयौ। दामनयः। औलपि—औलपीयः। [औलपीयौ। औलपयः]। त्रिगर्त–कौण्डोपरथीयः। दाण्डकीयः। पर्श्वादियौधेयादिभ्योऽणञौ।५।३।११७। आयुधजीविसङ्घवाचिभ्य एभ्यः क्रमादणञौ स्तः स्वार्थे। पार्शवः। पार्शवौ। पर्शवः। यौधेयः। यौधेयौ। यौधेयाः। अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्।५।३।११८। अभिजिदादिभ्योऽणन्तेभ्यः स्वार्थे यञ् स्यात्।

---

त.] च्फञ्। **दामन्यादित्रिगर्तषष्ठात्**। समाहारद्वन्द्वात्पञ्चमी। **त्रिगर्तषष्ठेभ्य इति**। येषामायुधजीविनां षडन्तर्वर्गाः, षष्ठवर्गस्तु त्रिगर्तस्तेभ्य इत्यर्थः। त्रिगर्तवर्गषष्ठकाः के इत्याकाङ्क्षायामाह–**आहुस्त्रिगर्तषष्ठांश्चेति**। अत्र जानकयस्त्रिगर्तवर्गः। तेषु च त्रिगर्तषष्ठेषु [तु] प्रथमपञ्चमौ कौण्डोपरथब्राह्मगुप्तशब्दौ शिवाद्यणन्तौ, शेषास्त्विञन्ताः। केचित्तु अतद्धितान्तमेव पञ्चमं ब्रह्मगुप्तशब्दं पठन्ति। **कौण्डोपरथीय इति**। बहुवचने तु कौण्डोपरथाः दाण्डकय इत्यादि। **पार्शव इति**। 'पर्शु'रिति जनपदशब्दस्ततोऽपत्ये 'द्व्यञ्मगधे'त्यण्। बहुत्वे तद्राजत्वाल्लुक्। पुनः सङ्घविवक्षायामनेनाऽण्। अस्याप्यणो बहुत्वे तद्राजत्वाल्लुक्। तदाह—**पर्शव इति**। ननु 'पर्शु'रिति यो जनपदशब्दस्तस्मादेवाऽनेन स्वार्थेऽण् विधीयताम्, अपत्यवाचिपर्शुशब्दात्सङ्घविवक्षायामण्विधौ तु स्वार्थिकत्वं न सिध्येदिति चेत्। अत्राहु—केवलः पर्शुशब्द एव जनपदवाची न त्वणन्त इति जनपदवाचिनः स्वार्थेऽण् न विधीयते, किं तु 'द्व्यञ्मगधे'त्यणः 'तद्राजस्य बहुषु' इत्यादिना लुकि बह्वपत्यवाचिपर्शुशब्दादेव स्वार्थे विधीयते। स्वार्थश्चात्र सङ्घ एव। न च पर्शुशब्दस्य सङ्घवाचित्वं नेति शङ्क्यं, बह्वपत्यवाचित्वे सङ्घवाचित्वध्रौव्यादिति न काप्यनुपपत्तिरिति। **यौधेय इति**। युध्यतेऽसौ युधा। युधेरिगुपधलक्षणः कः। युधाया अपत्यं। 'द्व्यचः' इति ढक्। तदन्तात्सङ्घविवक्षायामनेनाऽञ्। तेन 'यौधेय' इति आद्युदात्तं भवति। किं च यौधेयस्याऽङ्को लक्षणं वा यौधेयः। 'संघाङ्कलक्षणे'त्यञन्तादञ्। एवं यौधेयादिषु ये ढगन्ताः शौक्रेयादयस्तेषु सर्वेषु प्रयोजनद्वयमूह्यम्। **यौधेया इति**। अञो लुक्। अन्तोदात्तम्। न च 'न प्राच्यभर्गे'त्यादिना निषेधः शङ्क्यः, स्त्रियामेव तन्निषेधात्। **आभिजित्य**

---

बा.] एव मालव्यः। **टित्त्वान्ङीबिति**। एवं च अस्त्रियामिति नात्र सम्बध्यत इति भावः। **तद्विशेषेति**। व्याख्यानादिति भावः। **वृकाट्टेण्यण्**। वृको नाम कश्चिदायुधजीविसङ्घः। स एव वार्केण्यः। आदिवृद्धिः। रपरत्वम्। **जातिविशेषादिति**। वृको नाम कश्चिन्मनुष्यखादी चतुष्पाज्जातिविशेषः प्रसिद्धः, तस्मान्नेत्यर्थः। **दामन्यादि**। दामनिरादिर्यस्य दामन्यादिः। त्रिगर्तः षष्ठो यस्य वर्गस्य स त्रिगर्तषष्ठः। दामन्यादिश्च त्रिगर्तषष्ठश्चेति समाहारद्वन्द्वात्पञ्चमी। फलित माह—**दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्चेति**। आयुधजीविनां हि षड्वर्गाः, तत्र षष्ठस्त्रिगर्तो वर्गः, तेभ्यः षड्वर्गेभ्य इति यावत्। के ते त्रिगर्तषष्ठा इत्यत आह–**आहुरिति**। कौण्डोपरथः, दाण्डकिः, क्रौष्टुकिः, जालमानिः, ब्राह्मगुप्तः, जालकिरित्येतान् त्रिगर्तषष्ठान् आहुरित्यर्थः। 'जालकि'रिति त्रिगर्तस्य नामान्तरम्। एतेषु षट्सु कौण्डोपरथब्राह्मगुप्तशब्दौ शिवाद्यणन्तौ। शेष इञन्तः। दामादिगणमुदाहरति–**दामनीय इति**। दामनिरेव दामनीयः। **औलपीति**। प्रकृतिप्रदर्शना। **औलपीय इति**। औलपिशब्दात्स्वार्थे छः। **त्रिगर्तेति**। त्रिगर्तषष्ठानामुदाहरणसूचनमिदम्। **कौण्डोपरथीय इति**। कौण्डोपरथशब्दात्स्वार्थे छः। **दाण्डकीय इति**। दाण्डकिशब्दात्स्वार्थे छः। क्रौष्टुकीयः, जालमानीयः, ब्राह्मगुप्तीयः, जालकीयः–इत्यप्युदाहार्यम्। **पर्श्वादियौधेयादि। एभ्य इति**। पर्श्वादिभ्यो यौधेयादिभ्यश्चेत्यर्थः। **पार्शव इति**। पर्शुशब्दाज्जनपदक्षत्रियविशेषयोर्वाचकादपत्येऽर्थेषु 'द्व्यञ्मगधे'त्यण्। ततोऽपत्यसङ्घविवक्षायामनेन अणिति भावः। **पर्शव इति**। अपत्यसङ्घबहुत्वविवक्षायां प्रकृतस्याऽणोऽपि तद्राजत्वाल्लुक्, 'ञ्याद्यस्तद्राजाः' इति वक्ष्यमाणत्वादिति भावः। **यौधेय इति**। युधाशब्वादपत्येऽर्थे 'द्व्यचः' इति ढक्। तदन्तादपत्यसङ्घविवक्षायामनेन अञ्। ञित्त्वमाद्युदात्तत्वफलकम्। **यौधेया इति**। अपत्यसङ्घबहुत्वविवक्षायां 'तद्राजस्ये'त्यञो लुक्। 'कितः' इत्यन्तोदात्तं फलम्। **अभिजिद्विदभृत्**। अभिजित्, विदभृत्, शालावत्, शिखावत्, शमीवत्, ऊर्णावत्, श्रुमत्–एषां समाहारद्वन्द्वात्पञ्चम्या लुक्। अण इति प्रत्ययत्वात्तदन्तग्रहणम्। तदाह—**अभिजिदादिभ्य इति**। अत्र 'आयुधजीविसङ्घादिति निवृत्त'मिति वृत्तिः।

---

शे.] भावः। **जानकिः**–त्रिगर्तः। **पर्श्वादियौ**। अत्राऽस्त्रियामित्यनुवर्तते, 'यञश्चे'ति सूत्रस्थभाष्यप्रामाण्यात्। तेन पर्शुः स्त्री। व्यट्टेण्यण्विधायकयोष्टित्त्वसामर्थ्यादसम्बन्धेऽप्यन्यत्राऽसम्बन्धे मानाऽभावात्। **आभिजित्य इति**। अपत्याऽणन्ताद्यञ्। तस्य

अभिजितोऽपत्यमाभिजित्यः । वैदभृत्यः । शालावत्यः । शैखावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः । **ञ्यादयस्तद्राजाः** ।५।३।११९। 'पूगाञ्ञ्यः' इत्यारभ्योक्ता एतत्संज्ञाः स्युः । तेनाऽस्त्रियां बहुषु लुक् । लोहितध्वजाः । कपोतपाकाः । कौञ्जायनाः । ब्राध्नायना इत्यादि । **पादशतस्य सङ्ख्यादेर्वीप्सायां वुन् लोपश्च** ।५।४।१। लोपवचनमनैमित्तिकत्वार्थम् । अतो न स्थानिवत् । 'पादः पत्' । 'तद्धितार्थं' इति समासे कृते प्रत्ययः । वुन्नन्तं स्त्रियामेव । द्वौ द्वौ पादौ ददाति द्विपदिकाम् । द्विशतिकाम् । *पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् । द्विमोदकिकाम् । **दण्डव्यवसर्गयोश्च** ।५।४।२। वुन् स्यात् । अवीप्सार्थमिदम् ।

---

त.] इति । आभिजितशब्दादणन्तायञ् । एवं विदभृत्प्रभृतिभ्योऽणि तदन्तेभ्यो वैदभृत-शालावतः-शैखावतादिभ्यो यञ् । **पादशतस्य सङ्ख्यादेः** । पादशतस्य किम् ? । द्वौ द्वौ माषौ ददाति । संख्यादेरिति किम् ? । पादं पादं ददाति । वीप्सायामिति किम् ? । द्वौ पादौ ददाति । **अनैमित्तिकत्वार्थमिति** । निमित्ते भवो नैमित्तिकः । अध्यात्मादित्वाट्ठञ् । **तद्धितार्थं इति । समास इति** । यद्यपि प्रकृत्युपाधिर्वीप्सा, तथापि वुनो द्योत्येति तद्धितार्थो भवत्येवेति भावः । **ददातीति** । समर्पणमात्रमिह ददातेरर्थः, न तु परस्वत्वापादनपर्यन्तम् । तथात्वे हि उत्तरसूत्रविषयत्वं स्यात् । केचित्तु व्यवसृजेर्धातोः प्रयोगे सत्येव उत्तरसूत्रस्य प्रवृत्तिमाहुः । **अन्यत्रापि दर्शनादिति** । 'द्वौ द्वौ माषौ ददाती'त्यादौ त्वनभिधानान्नातिप्रसङ्ग इति भावः । **दण्डव्यवसर्ग** । दण्डनं दण्डः । दण्डेक्षुरादित्वाद्भावे घञ् । अत्राप्युदाहरणे 'तद्धितार्थं' इति समासः । स्त्रीलिङ्गं च तद्धितार्थः । यद्वा प्रकृत्यर्थ एव तद्धितार्थः, स्वार्थिक-

---

बा.] **आभिजित्य इति** । अभिजितोऽपत्यम् आभिजितः । अपत्येऽण् । आभिजित एव आभिजित्यः । **वैदभृत्य इति** । विदभृतोऽपत्यं वैदभृतः । स एव वैदभृत्यः । **शालावत्य इति** । शालावतोऽपत्यं शालावतः, स एव शालावत्यः । **शैखावत्य इति** । शिखावतोऽपत्यं शैखावतः । स एव शैखावत्यः । **शामीवत्य इति** । शमीवतोऽपत्यं शामीवतः, स एव शामीवत्यः । **और्णावत्य इति** । ऊर्णावतोऽपत्यमौर्णावतः, स एव और्णावत्यः । **श्रौमत्य इति** । श्रुमतोऽपत्यं श्रौमतः, स एव श्रौमत्यः । अत्र अभिजिदित्यादिशब्देषु यञः स्वार्थिकतया गोत्रार्थकत्वादाभिजित्यस्यायमिति विग्रहे 'गोत्रचरणा'दिति वुञि 'आपत्यस्य चे'ति यलोपे 'आभिजितक' इति भवति । 'अपत्याऽणन्तेभ्य एवायं यञ् । तेन आभिजितो मुहूर्त इत्यादौ न य'ञिति भाष्ये स्पष्टम् । **ञ्यादयस्तद्राजाः । लोहितध्वजा इति** । 'पूगा'दिति विहितस्य ञ्यस्य तद्राजत्वाद्बहुत्वे लुक् । **कपोतपाकाः कौञ्जायनाः ब्राध्नायना इति** । 'व्रातच्फञो'रिति विहितस्य ञ्यस्य लुक् । **इत्यादीति** । क्षौद्रक्यौ, क्षुद्रकाः । 'आयुधजीवी'ति ञ्यटो लुक् । वार्केण्यः, वार्केण्यौ, वृकाः । वृकाट्टेण्यणो लुक् । दामनीयः, दामनीयौ, दामनयः, कौण्डोपरथाः इत्यादौ 'दामन्यादित्रिगर्तषष्ठा'दिति छस्य लुक् । पार्शवौ:, पार्शव, पर्शवः, यौधेयाः इत्यत्र पर्श्वादियौधेयाद्यणञोर्लुक् । आभिजित्यः आभिजित्यौ, अभिजितः, विदभृत इत्यादौ 'अभिजिद्विदभृ'दित्यादिविहितस्य यञो लुगिति भावः ।

**इति पञ्चमस्य तृतीयपादः** । अथ पञ्चमस्य चतुर्थपादः- **पादशतस्य** । पादश्च शतं चेति समाहारद्वन्द्वाल्लोपापेक्षया षष्ठी । वुन्प्रत्ययापेक्षया तु सा पञ्चम्यर्थे । सङ्ख्यावाचकशब्दपूर्वकात्पादशब्दाच्छतशब्दाच्च वीप्साविशिष्टार्थवृत्तेः स्वार्थे वुन्प्रत्ययः स्यात्, प्रकृतेरन्त्यस्य लोपश्चेत्यर्थः । ननु वुनोऽकादेशे सति 'यस्येति चे'त्येव लोपसिद्धेरिह लोपविधिर्व्यर्थ इत्यत आह—**अनैमित्तिकत्वार्थमिति** । 'यस्येति चे'ति लोपस्य परनिमित्तकतया तस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् 'पादः प'दिति पदादेशो न स्यात् । अस्य तु लोपस्य परनिमित्तकत्वाऽभावेन स्थानिवत्त्वाऽप्रसक्तेः पद्भावो निर्बाध इति भावः । **तद्धितार्थं इति** । नच वीप्सायाः प्रकृत्यर्थविशेषणतया वुनोऽर्थाऽभावात्कथमिह 'तद्धितार्थे' इति समास इति वाच्यं, वुनो द्योतकतया द्योत्यार्थेनैवार्थवत्त्वात् । **वुन्नयं स्त्रियामेवेति** । स्वभावादिति भावः । **द्विशतिकामिति** । द्वे द्वे शते ददातीति विग्रहः । **पादशतेत्यादि** । वार्तिकमिदम् । अनर्थकमिति कथं, पादशतभिन्नव्यावृत्त्यर्थत्वादित्यत आह—**अन्यत्रापि दर्शनादिति** । तदुदाहृत्य दर्शयति—**द्विमोदकिकामिति** । द्वौ द्वौ मोदकौ ददातीति विग्रहः । **दण्डव्यवसर्गयोश्च । वुन्स्यादिति** । सङ्ख्यादेः पादशताद्दण्डव्यवसर्गयोर्गम्ययोर्वुन्स्यात्प्रकृतेरन्तलोपश्चेत्यर्थः । दण्डनं-दण्डः=बलात्कृत्य द्रव्यग्रहणम् । व्यवसर्गो-दानम् । ननु पूर्वेण सिद्धे किमर्थमि-

---

शे.] स्वार्थिकत्वेन गोत्रार्थकत्वादाभिजित्यस्याऽयमिति विग्रहे वुञ् । अत्र 'आपत्ये'ति यलोपश्च । आभिजितकः । अयमपत्याऽणन्तेभ्य एव । तेनाभिजितो मुहूर्त इत्यादौ न । [अस्त्रियामिति चाऽत्र सम्बध्यते ] । स्पष्टं चेदं सर्वं भाष्ये । **अनैमित्तिकत्वार्थमिति** । ननु 'तद्भावभावित्वे'रूपं निमित्तत्वं सहविधानेऽपि, तद्भावोत्तरं भाव इत्यर्थवत्तद्भावसमकालं भाव इत्यपि तदर्थात् । अत एव 'धिन्विकृण्व्यो'रित्यत्र वलोप एव कार्यो 'न धातुलोप' इति गुणनिषेधसिद्धेरकारादेशविधानं व्यर्थमित्याशङ्क्य 'तत्प्रत्याख्याने

द्वौ पादौ दण्डितः द्विपदिकाम् । द्विशतिकां व्यवसृजति । ददातीत्यर्थः । **स्थूलादिभ्यः प्रकारवचने कन्** ।५।४।३। जातीयरोऽपवादः । स्थूलप्रकारः स्थूलकः । अणुकः । *चञ्चद्बृहतोरुपसंख्यानम् । चञ्चत्कः । बृहत्कः । (ग) **सुराया अहौ** । सुरावर्णोऽहिः सुरकः । **अनत्यन्तगतौ क्तात्** ।५।४।४। छिन्नकम् । भिन्नकम् । [अभिन्नकम्] । **न सामिवचने** ।५।४।५। सामिपर्याये उपपदे क्तान्तान्न कन् । सामिकृतम् । अर्धकृतम् । अनत्यन्तगतेरिह प्रकृत्यैवाभिधानात्पूर्वेण कन्न प्राप्तः । इदमेव निषेधसूत्रमत्यन्तस्वार्थिकमपि कनं ज्ञापयति । बहुतरकम् । **बृहत्या आच्छादने** ।५।४।६। कन् स्यात् । 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा' । आच्छादने किम् ? ।

---

त.] त्वाद्वुनः । **द्वौ पादौ दण्डित इति** । 'देवदत्तेन यज्ञदत्त' इति शेषः । दण्डेरप्रधाने कर्मणि क्त इति यज्ञदत्त इत्यत्र प्रथमा । द्वौ पादावित्यत्र द्विपदिकामित्यत्र च द्वितीया भवति । 'दण्डिर्ग्रहणार्थे' इति तु द्विकर्मकेसूक्तम् । तथा च द्विपदिकाकर्मकग्रहणविषयीभूतो यज्ञदत्त इत्यादिरर्थ इति नव्याः । **स्थूलादिभ्यः** । प्रकारो भेदः सादृश्यं च । उभयत्रापि यथासंभवं कन् । **जातीयरोऽपवाद इति** । तेनायमपि तद्वदेव प्रकारवति भवति न तु प्रकारमात्रे इत्युक्तं भवति । **चञ्चद्बृहतोरिति** । एतावपि स्थूलादिष्वेव पठितव्याविति भावः । **चञ्चत्क इति** । चञ्चतिश्चलनकर्मा । चञ्चत्कः । एवं बृहद्विशेषो बृहत्कः । अचञ्चन्नबृहन्नपि प्रभाविशेषाच्चञ्चन्निव बृहन्निव मणिविशेषो लक्ष्यते स चञ्चत्कः । बृहत्कः । **सुरक इति** । 'केऽणः' इति ह्रस्वः । **छिन्नकमिति** । ईषच्छिन्नमित्यर्थः । क्तप्रकृतिवाच्यया क्रियया क्तप्रत्ययवाच्यस्य साधनस्य व्याप्तिरत्यन्तगतिः । सेह नास्ति । **न सामिवचने** । सामि अर्थ उच्यते येन तत्सामिवचनमिति व्युत्पत्त्या वचनग्रहणं पर्यायार्थमित्याह—**सामिपर्याये इति** । **सामिकृतमिति** । 'सामी'ति समासः । **अर्धकृतमिति** । विशेषणसमासो बहुव्रीहिर्वा । **प्रकृत्यैवेति** । सामिवचनेनैवेत्यर्थः । **ज्ञापयतीति** । अयं भावः – 'न सामिवचने' इत्यनेन 'अनत्यन्तगतौ' इति कनो न निषेधः, सामिकृतादिभ्यस्तस्य प्राप्त्यभावात्, तेभ्योऽसमासे सामिपदेनैव अनत्यन्तगतेर्द्योतनात् । समासेभ्य-

---

बा.] दमित्यत आह—**अवीप्सार्थमिति** । **द्वौ पादौ दण्डित इति** । बलात्कृत्य ग्राहित इत्यर्थः । **स्थूलादिभ्यः** । प्रकारो भेदः सादृश्यं च, व्याख्यानात्, तद्वति वर्तमानाद्यथायोग्यं कन्नित्यर्थः । **जातीयरोऽपवाद इति** । एतेन अयमपि तद्वदेव प्रकारवति भवति, नतु प्रकारमात्रे इति सूचितम् । **चञ्चत्क इति** । चञ्चधातुश्चलने । अचञ्चन्नपि यश्चञ्चन्निव दृश्यते स चञ्चत्कः । यथा स्पन्दमानस्वच्छजलमध्यवर्ती मणिः । **बृहत्क इति** । अबृहन्नपि बृहन्निव दृश्यते स बृहत्कः, बृहदाख्यसामविशेषो वा । **सुराया अहाविति** । गणसूत्रमिदम् । 'प्रकारवचने क'न्निति शेषः । सुराया अहावेवेति नियमार्थमिदम् । **सुरक इति** । 'केऽण' इति ह्रस्वः । **अनत्यन्तगतौ क्तात्** । अत्यन्तगतिरशेषावयवसम्बन्धः, तदभावः=अनत्यन्तगतिः, तस्यां गम्यमानायां क्तान्तात्कन्नित्यर्थः । **छिन्नकमिति** । किञ्चिदवयवावच्छेदेन छिन्नमित्यर्थः । **न सामिवचने** । वचनग्रहणं पर्यायलाभार्थमिति मत्वाऽऽह—**सामिपर्याये उपपदे इति** । **सामिकृतमिति** । 'सामी'त्यव्ययमर्धे । 'सामी'ति समासः । **अर्धकृतमिति** । अर्धं कृतमिति कर्मधारयः । 'सामी'त्यस्य क्रियाविशेषणत्वेन कारकत्वात्समुदायस्य क्तान्तत्वं, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । नन्विह अनत्यन्तगतेः प्रकृत्यैवाभिहितत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन पूर्वसूत्रविहितस्य कनोऽप्रसक्तेरिह तन्निषेधो व्यर्थ इति शङ्कते—**अनत्यन्तगतेरिति** । परिहरति—**इदमेवेति** । 'तथापी'ति पूर्वमध्याहार्यम् । **ज्ञापयतीति** । न ह्ययमनत्यन्तगताविति कनः प्रतिषेधः । किं तर्हि, अत्यन्तस्वार्थिकस्य कनः । तत्र च इदमेव ज्ञापकम् । अन्यथा तद्वैयर्थ्यादिति भावः । **बहुतरकमिति** । बहुतरमेव बहुतरकम् । भाष्ये तु इदं सूत्रं प्रत्याख्यातम् । 'तमबाद्यन्तात्स्वार्थे कन्वक्तव्यः' इति वचनेन, यावादित्वाद्वा स्वार्थे कना बहुतरकं सुकरतरकमित्यादि सिद्धमिति तदाशयः । **बृहत्या आच्छादने** । 'कन्' इति शेषः । बृहत्येव बृहतिका=उत्तरीयं वासः । तदाह—**द्वौ प्रावार इति** । अमरवाक्यमिदम् । **अषडक्षा** । **स्वार्थे इति** । शेषपूरण-

---

शे.] गुणवारणाय त'दिति भाष्ये उक्तमिति चेन्न, लोपवचनसामर्थ्यादचः परस्मिन्नित्यत्र तथा निमित्तत्वाऽनाश्रयणात् । दण्डव्यव । दण्डी—दण्डनम्, व्यवसर्गसाहचर्यात् । तयोरर्थयोर्विषये स्वार्थे वुन्नित्यर्थः । **स्थूलादिभ्यः** । प्रकारो भेदः, सादृश्यञ्च, व्याख्यानात्, तद्वति वर्त्तमानादित्यर्थः । **जातीयरोऽपवाद इति** । जातीयविधौ भेद एव प्रकार इति जयादित्यमते अपवाद इत्यस्य परत्वाद्बाधक इत्यर्थः । 'तत्राप्युभयं गृह्यते' इति वामनमते यथाश्रुतमेव । अनन्त्य । अनत्यन्तगतिः—अशेषतः सम्बन्धाऽभावः । **सामिकृतमिति** । समासेऽपि 'सामी'त्यस्य क्रियाविशेषणत्वेन कारकत्वात्समुदायस्य क्तान्तत्वम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । अनत्यन्तगतेरित्यस्य 'यद्यपी'त्यादिः । **प्रकृत्यैवेति** । समस्तत्वे तदेकदेशसामिशब्देनेत्यर्थः, असमस्तत्वे तत्सन्निहिते नेत्यर्थः । **इदमेवेति** । अस्य 'तथापी'त्यादिः । **बहुतरकमिति** । यदि तु बहुतरकं

बृहती छन्दः । **अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः** ।५।४।७। स्वार्थे । अषडक्षीणो मन्त्रः । द्वाभ्यामेव कृत इत्यर्थः । आशिता गावोऽस्मिन्नित्याशितङ्गवीनम्—अरण्यम् । निपातनात्पूर्वस्य मुम् । अलं कर्मणे [इति] अलङ्कर्मीणः । अलम्पुरुषीणः । ईश्वराधीनः । नित्योऽयं खः, उत्तरसूत्रे विभाषाग्रहणात् । **'अन्येऽपि केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते । तमबादयः प्राक्कनः । ञ्यादयः प्राग्वुनः । आमादयः प्राङ्मयटः । बृहतीजात्यन्ताः । समासान्ताश्चे'ति** । **विभाषाऽञ्चेरदिक्स्त्रियाम्** ।५।४।८। अदिक्-

त.] स्तु क्तान्तत्वाऽभावाच्च । न च कृद्ग्रहणपरिभाषया समासस्य क्तान्तत्वमस्तीति शङ्क्यं, सामिशब्दस्य गतिकारकत्वाऽभावात् । तस्मात् स्वार्थिक एव कन्निषिध्यत इति । इदमेव निषेधवचनं क्वचित्स्वार्थिकं कनं ज्ञापयतीति । **अषडक्षीण इति** । अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिः । अक्षिशब्दोऽत्र श्रोत्रेन्द्रिये वर्तते । 'बहुव्रीहौ सक्थ्यक्ष्णो'रिति षच् । तदन्तादनेन खः । मन्त्रो मन्त्रणम् । **आशितंगवीनमिति** । आङ्पूर्वादश्नोतेः 'आशितः कर्ते'ति ज्ञापकात्कर्तरि क्तः, ण्यन्तात्कर्मणि वा । उभयथापि प्रभूतयवसमिति फलितोऽर्थः । **अलङ्कर्मीण इति** । अलङ्कर्म अलंपुरुषेति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्ये'ति समासः । **अलंपुरुषीण इति** । प्रतिमल्लादिः । **ईश्वराधीन इति** । अधिशब्दः शौण्डादिरित्युक्तम् । **तमबादय इति** । 'अतिशायने तमबि'त्यादयः । **प्राक्कन इति** । 'अवक्षेपणे कन्' इति विहितात् । **ञ्यादय इति** । 'पूगाञ्ञ्योऽग्रामणीपूर्वा'दित्यादयः । **प्राग्वुन इति** । 'पादशतस्य सङ्ख्यादेः' इति विहितात् । **आमादय इति** । 'किमेत्तिङव्ययघादामु—' इत्यादयः । **प्राङ्मयट इति** । 'तत्प्रकृतवचने मयट्' इत्यतः प्रागित्यर्थः । **बृहतीजात्यन्ता इति** । 'बृहती'शब्देन 'बृहत्या आच्छादने' इति विहितः कन्नुपलक्ष्यते । 'जात्यन्त'शब्देन 'जात्यन्ताच्छे'ति च्छः । बहुवचननिर्देशात्पाशबादयो गृह्यन्ते । यो हि

बा.]मिदम् । अषडक्ष, आशितङ्गु, अलङ्कर्मन्, अलम्पुरुष एभ्योऽध्युत्तरपदाच्च स्वार्थे खः स्यादित्यर्थः । **अषडक्षीणो मन्त्र इति** । मन्त्रणं मन्त्रः । रहसि राजतदमात्यादिभिर्युक्तिभिः क्रियमाणं निर्धारणम् । अविद्यमानानि षट् अक्षीणि श्रोत्रेन्द्रियाणि यस्मिन्निति बहुव्रीहिः । 'बहुव्रीहौ सक्थ्यक्ष्णो'रिति षच् । तदन्तादनेन स्वार्थे खः । **द्वाभ्यामेवेति** । 'पुरुषाभ्या'मिति शेषः । **आशिता इति** । 'अश भोजने' इत्यस्मादाशितः कर्तेति ज्ञापकात्कर्तरि क्तः । **पूर्वस्य मुमिति** । आशितशब्दस्येत्यर्थः । **अलङ्कर्मीण इति** । 'पर्यादयो ग्लानाद्यर्थे' इति चतुर्थीसमासात्खः, टिलोपः । **अलम्पुरुषीण इति** । अलं पुरुषायेति विग्रहः । 'मातृभोगीण' इत्यादाविव अषडक्षीणादौ णत्वम् । 'पदव्यवायेऽपी'तिं निषेधस्तु न, पदे परतो यत्पदं तेन व्यवाये इत्याश्रयणात् । **ईश्वराधीन इति** । 'यस्मादधिक'मिति ईश्वरशब्दात्सप्तमी । शौण्डादित्वादधिशब्देन समासः । ततः स्वार्थे खः । 'समर्थाना'मित्यतो वाग्रहणानुवृत्त्या अस्य वैकल्पिकत्वभ्रमं वारयति—**नित्योऽयं ख इति** । **उत्तरेति** । 'विभाषाऽञ्चे'रित्युत्तरसूत्रे 'समर्थाना'मित्यतो वाग्रहणानुवृत्त्यैव सिद्धे विभाषाग्रहणादिह पूर्वसूत्रे वाग्रहणानुवृत्त्यभावो ज्ञाप्यत इत्यर्थः । नचैवं सति आशिता गावोऽस्मिन्निति, अलं कर्मणे इति च विग्रहप्रदर्शनमनुपपन्नमिति वाच्यम्, तस्य खप्रत्ययप्रकृतिकथनार्थत्वेन अलौकिकविग्रहवाक्यप्रायत्वात् । प्रसङ्गादाह—**अन्येऽपीति** । **इष्यन्त इति** । 'भाष्यकृते'ति शेषः । **तमबादयः प्राक्कन इति** । 'अतिशायने तम'बित्यारभ्य 'अवक्षेपणे क'न्नित्यतः प्राग्विहिताः प्रत्यया इत्यर्थः । **ञ्यादयः प्राग्वुन इति** । 'पूगाञ्ञ्योऽग्रामणीपूर्वा'दित्यारभ्य 'पादशतस्य सङ्ख्यादेर्वीप्सायां वुन्नित्यतः प्राग्विहिताः प्रत्यया इत्यर्थः । **आमादयः प्राङ्मयट इति** । 'किमेत्तिङव्ययघादा'मित्यारभ्य 'तत्प्रकृतवचने मयट्' इत्यतः प्राग्विहिता इत्यर्थः । **बृहतीजात्यन्ता इति** । बृहतीशब्देन 'बृहत्या आच्छादने' इति कन् लक्ष्यते । जात्यन्तशब्देन तु 'जात्यन्ताच्छ बन्धुनी'ति छो लक्ष्यते । बहुवचननिर्देशात्पाशबादयोऽपि 'षष्ठ्या रूप्य चे'त्यन्ता गृह्यन्त इति कैयटः । वस्तुतस्तु परिगणिता एव नित्या, नतु पाशबादयोऽपि । 'बृहतीजात्यन्ताः' इति बहुवचनं तु 'बृहत्या आच्छादने' इति 'जात्यन्ताच्छ बन्धुनी'ति च सूत्रयोर्मध्यगतेन 'अषडक्षे'ति सूत्रेण विहितं खप्रत्ययमभिप्रेत्येति न दोषः । 'विभाषाऽञ्चे'रिति उत्तरसूत्रे खविधौ विभाषाग्रहणं तु तस्यापि बृहतीजात्यन्तरालवर्तित्वाऽविशेषान्नित्यत्वे प्राप्ते

शे.] सुकरतरकमित्यादि 'तमाद्यन्तात्स्वार्थे कन्वक्तव्य' इति वचनेन, यावादित्वात्स्वार्थे कना वा सिद्धमित्युच्यते तदा नाऽस्य प्रयोजनम् । एतदेवाभिप्रेत्येदं भाष्ये प्रत्याख्यातम् । एतदेव भाष्यं तस्याकृतिगणत्वे मानम् । **विभाषाग्रहणादिति** । प्राक्प्राचीनमिति रूपद्वयं महाविभाषयैव सिद्धमिति तदस्य नित्यत्वे ज्ञापकमिति भावः । तेनांशितंग्वित्याद्यसाध्विति बोद्धव्यम् । 'आशिता गाव इत्यादि तु खप्रत्ययप्रकृतेरर्थकथनम् । इयमभ्युच्चययुक्तिः, 'बृहतीजात्यन्ता' इति बहुवचनेनाऽस्यापि ग्रहणाज्जात्यन्ताच्छस्येवास्यापि स्वभावतो नित्यत्वलाभात् । अतः खस्य नित्यत्वाऽभावाय विभाषाग्रहणमिति भाष्यसम्मतः पन्थाः । **प्राक्कन इति** । तेनावक्षेपणे कन्वैकल्पिक एव । एतत्प्रायिकमित्युक्तम् । **बृहतीजात्यन्ताः**—कन्खच्छाः । अदिक्स्त्रियामिति कर्मधारयगर्भो नञ्तत्पुरुषः ।

स्त्रीवृत्तेरञ्चत्यन्तात्प्रातिपदिकात्खः स्याद्वा स्वार्थे । प्राक्,-प्राचीनम् । प्रत्यक्,-प्रतीचीनम् । अवाक्,-अवाचीनम् । 'निकृष्टप्रतिकृष्टाऽर्वरेफयाप्याऽवमाऽधमाः । अर्वन्तमञ्चतीति अर्वाक् , अर्वाचीनम् । अदिक्स्त्रियां किम् ? । प्राची दिक् । [ उदीची दिक् ] । दिग्ग्रहणं किम् ? । प्राचीना ब्राह्मणी । स्त्रीग्रहणं किम् ? । प्राचीनं ग्रामादाम्राः । **जात्यन्ताच्छ बन्धुनि** ।५।४।९। ब्राह्मणजातीयः । बन्धुनि किम् ? । ब्राह्मणजातिः शोभना । जातेर्व्यञ्जकं द्रव्यं बन्धु । **स्थानान्ताद्विभाषा सस्थानेनेति चेत्** ।५।४।१०। सस्थानेन तुल्येन चेत् स्थाना-

**त.]** वैयाकरणपाशादिशब्दैरर्थः प्रतीयते नासौ प्रकृतिमात्रेण प्रतीयते इति तेऽपि तमबादिवन्नित्या एवेति स्थितमाकरे । कन्थौ मुक्त्वा मूले बृहतीमात्रप्रयोगो जात्यन्तमात्रप्रयोगश्च कृतः, स तु अवाचकोऽप्यार्षग्रन्थानुवादकत्वान्न दोषाय । **विभाषाञ्चेर** । दिक् चासौ स्त्री चेति दिक्स्त्री, तत्र प्रतिषेधो, न तु दिशि, स्त्रियां च, स्त्रीलिङ्गैकवचननिर्देशात् । **प्राचीनमिति** । 'अचः' इत्यकारलोपे कृते 'चौ' इति दीर्घः । एवमग्रे क्वचिदूह्यम् । **प्राचीना ब्राह्मणीति** । प्रकर्षेणाञ्चतीति प्राचीनेत्येवं क्रियानिमित्तको वा, देशकालनिमित्तको वा अयं शब्दो ब्राह्मण्यां वर्तते, न तु दिशीति प्रतिषेधाऽभावः । **प्राचीनमिति** । प्राच्यां दिशीत्यर्थे 'दिक्शब्देभ्यः' इत्यस्तातिः 'अञ्चेर्लुग्'गिति लुक् । 'लुक्तद्धितलुकी'ति ङीपो लुक् । 'तद्धितश्चाऽसर्वविभक्ति'रित्यव्ययत्वात् स्त्रीत्वाऽभावः । खे तु कृते स्वभावान्नपुंसकत्वम् । **ब्राह्मणजातीय इति** । द्व्येकयोरितिवद्भावप्रधानो ब्राह्मणशब्दः, तस्य जातिशब्देन सह बहुव्रीहिः । ब्राह्मणत्वजात्याधारभूतः पिण्ड इत्यर्थः । **ब्राह्मणजातिरिति** । षष्ठीतत्पुरुषः । भावप्रधानेन सह कर्मधारयो वा । **जातेर्व्यञ्जकमिति** । बध्यते जातिरस्मिन्निति बन्धु [:] । 'शृस्वृस्निहि' इत्यादिना अधिकरणे उप्रत्ययः । रूढोऽपि बन्धुशब्द आप्तपर्यायः पुंलिङ्गोऽस्ति, तथापि स नेह गृह्यते, 'बन्धुनी'ति नपुंसकनिर्देशादिति भावः । 'सस्थानेने'-

**बा.]** विकल्पार्थम् ।'अनित्योऽयं खः,उत्तरसूत्रेषु विभाषाग्रहणा'दिति मूलं तु अभ्युच्चययुक्तिरिति शब्देन्दुशेखरे स्थितम् । **विभाषाञ्चेरदिक्स्त्रियाम्** । अदिक्स्त्रियामिति कर्मधारयगर्भो नञ्तत्पुरुषः । तदाह—**अदिक्स्त्रीवृत्तेरिति** । **प्रागिति** । 'अञ्चेर्लु'गिति लुप्ताऽस्तात्यन्तमिदम् प्राचि देशे इत्यर्थे । **प्राचीनमिति** । खान्तमिदं स्वभावादाधेयपरम् । स्वभावादेव सामान्ये नपुंसकमेकवचनान्तत्वं च । इदं तु पदसंस्कारपक्षे । वाक्यसंस्कारपक्षे तु प्रागादिशब्देभ्यः समभिव्याहृतदेशकालस्थवृक्षादिबोधकेभ्यः खः । तत्र उपस्थितविशेष्यलिङ्गत्यागे मानाऽभावात् 'प्राचीना आम्राः', 'प्राचीना वाटी' 'प्राचीनं वन'मिति भवतीत्याहुः । अर्वन्तमञ्चतीति वक्ष्यन्नर्वच्छब्दं विवृणोति—**निकृष्टेति** । अमरवाक्यमिदम् । **प्राची दिगिति** । लिङ्गविशिष्टपरिभाषया प्राप्तिः । **दिग्ग्रहणं किमिति** । 'अस्त्रिया'मित्येतावतैव प्राची दिगित्यत्रातिप्रसङ्गनिराशाल्किं तेनेति प्रश्नः । अव्याप्तिपरिहारार्थमित्याह—**प्राचीना ब्राह्मणीति** । नेयं दिग्रूपा स्त्री, किंतु तद्भिन्ना स्त्रीति खो भवत्येवेति भावः । **स्त्रीग्रहणं किमिति** । 'अदिशी'त्येतावतैव प्राचीना ब्राह्मणीत्यत्राऽव्याप्तिनिरासात्प्रश्नः । इदमप्यव्याप्तिपरिहारार्थमित्याह—**प्राचीनं ग्रामादाम्रा इति** । स्थानिवत्सूत्रभाष्येऽयं प्रयोगः स्थितः । अत्र प्राच्यां दिशीत्यर्थे लुप्ताऽस्तात्यन्ता प्रागिति प्रकृतिः । स च अव्ययत्वादस्त्रीति खो भवत्येवेति भावः । **जात्यन्ताच्छ बन्धुनि** । छेति लुप्तप्रथमाकम् । जातिशब्दान्तात्प्रातिपदिकाद्बन्धुनि वर्तमानात्स्वार्थे छप्रत्ययः स्यादित्यर्थः । बन्धुशब्दो द्रव्यवाचीति वक्ष्यति । तथाच **बन्धुनि वर्तमाना**-दित्यनेन जात्याश्रयद्रव्यलक्षकादिति फलितम् । **ब्राह्मणजातीय इति** । ब्राह्मणत्वजात्याश्रयो व्यक्तिविशेष इत्यर्थः । **ब्राह्मणजातिः शोभनेति** । ब्राह्मणत्वजातिरित्यर्थः । बध्यते ब्राह्मणत्वादिजातिर्व्यज्यतेऽस्मिन्निति बन्धु =द्रव्यम् । 'शृस्वृस्निही'त्यादिनाऽधिकरणे उप्रत्ययः । तदाह—**जातेर्व्यञ्जकं द्रव्यं बन्ध्विति** । आप्तपर्यायस्तु बन्धुशब्दो नेह गृह्यते, 'बन्धुनी'ति नपुंसकनिर्देशादिति भावः । **स्थानान्तात्** । **'सस्थानेने'**त्यस्य विवरणम्-तुल्येनेति । इतिशब्दादर्थवदिति लभ्यते । तुल्यरूपेणाऽर्थेन यदि स्थानान्तं शब्दस्वरूपमर्थवद्भवति, तदा स्थानान्ता-

**शे.]** **प्रागिति** । अस्तात्यन्तं, प्राचि देशे इत्यर्थकं निर्लिङ्गम् । खान्तत्वाधेयप्रधानतया स्वभावाल्लिङ्गयोगि । लिङ्गञ्च नपुंसकमेव, लिङ्गसर्वनामत्वात्, न स्त्रीत्वादि, प्रकृत्या सहाऽत्यन्तविरोधापत्तेः, [स्वार्थिकानां प्रकृतिवल्लिङ्गत्वोक्तेः], एकवचनञ्च । एवञ्च ग्रामावधिकप्राग्देशवृत्तय आम्रा इति बोधः । तदाह—**प्राचीनमिति** । पदसंस्कारपक्षे इदम् । यदा प्रागादिशब्दास्तद्देशकालस्थाम्रादिबोधकास्तेभ्यश्च खस्तदोपस्थितविशेष्यलिङ्गत्यागे मानाऽभावात्प्राचीना आम्राः, प्राचीना वाटी, प्राचीनं वनमित्यादीति कश्चित् । तत्र मानं चिन्त्यम् । **प्राची दिगिति** । लिङ्गविशिष्टपरिभाषया प्राप्तिः । **प्राचीनं ग्रामादिति** । अत्र प्राच्यां दिशीत्यर्थेऽस्तात्यन्ता प्रागिति प्रकृतिः । सा चाऽव्ययत्वादस्त्री । स्थानिवत्सूत्रे भाष्ये चाऽयं प्रयोगः । **जात्यन्ताच्छ ब** । जात्यन्ताद्बन्धुनि वर्तमानात्तज्जात्याश्रयद्रव्यलक्षकादित्यर्थः । **जातेर्व्यञ्जकमिति** । बध्यतेऽस्मिन् जातिरिति व्युत्पत्तेः । अत्र प्रकरणबाधेन वाचकत्वं वक्तुं शक्यं युक्तञ्चेति परे । **स्थानान्ता** । सस्थानशब्दस्तुल्यवाची । तुल्यरूपार्थेन चेत्स्थानान्तमर्थवद्भवति

न्तमर्थवदित्यर्थः । पितृस्थानीयः । पितृस्थानः । सस्थानेन किम् ? । गोःस्थानम् । **अनुगादिनष्ठक्** ।५।४।१३। अनुगदतीत्यनुगादी, स एव आनुगादिकः । **णचः स्त्रियामञ्** ।५।४।१४। णच्प्रत्ययान्तात्स्त्रियामञ् स्यात्स्वार्थे । **न कर्मव्यतिहारे** ।७।३।६। अत्र ऐज्न स्यात् । व्यावक्रोशी । **अणिनुणः** ।५।४।१५। इनुणन्तादण् स्यात्स्वार्थे । 'इनण्यनपत्ये' । सांराविणं वर्तते । **विसारिणो मत्स्ये** ।५।४।१६। अण् स्यात् । वैसारिणः । मत्स्ये इति किम् ? । विसारी देवदत्तः । **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्** ।५।४।१७। अभ्यावृत्तिर्जन्म । क्रियाजन्मगणनवृत्तेः संख्याशब्दात्स्वार्थे कृत्वसुच् स्यात् । पञ्चकृत्वो भुङ्क्ते । संख्यायाः किम् ? । भूरिवारा-

---

**त.]** त्यस्यैव व्याख्यानं-**तुल्येनेति** । **पितृस्थानीय इति** । स्थानमत्र संबन्धविशेषः, पदमिति यस्य प्रसिद्धिः । पितुरिव स्थानमस्य पितृस्थानः । पितृतुल्य इत्यर्थः । **गो[ः]स्थानमिति** । तिष्ठन्त्यस्मिन्निति स्थानं देशः । इति-करणं विवक्षार्थम् । तेन तत्पुरुषो बहुव्रीहिर्वा यस्तुल्यस्थानशब्दस्तस्माच्छो न भवति । **अनुगादिनः** । प्रकृति-स्वरूपप्रदर्शनपरं चैतन्न त्वयं केवलः प्रयोगार्हः, ठको नित्यत्वादिति हरदत्तः । 'सुप्यजातौ' इति णिनिः । **विसा-रिणो** । पूर्ववदिहापि णिनिः । हरदत्तस्तु—'सुप्यजातौ' इति णिनिरुपसर्गभिन्न एव सुप्युपपदे भवतीत्याशयेन पूर्वसूत्रेऽस्मिंश्च अतएव निपातनाण्णिनिरित्याह । तदयुक्तम् । 'स बभूवोपजीविनाम्', 'अनुयायिवर्गः', 'न वञ्चनीयाः प्रभवोऽनुजीविभि'रित्यादिप्रयोगानुरोधेन उपसर्गे सुप्युपपदेऽपि णिनेरवश्यस्वीकर्तव्यतया निपातनाश्रयणस्य व्यर्थ-त्वात् । 'अणिनुणः' इत्यतोऽनुवर्तनादाह—**अण् स्यादिति** । **वैसारिण इति** । 'इनण्यनपत्ये' इति प्रकृतिभावः । **सङ्ख्यायाः** । अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते, तदा षट्कृत्वः प्रवृत्तौ पञ्चकृत्व इति स्यात्, अतो-ऽत्र विवक्षितमर्थमाह—**अभ्यावृत्तिर्जन्मेति** । **भूरिवारानिति** । भूरिशब्दस्य लौकिकसङ्ख्यावाचित्वेऽपि नेह ग्रहणम्, 'बहुगणे'ति सूत्रे बहुग्रहणस्य नियमार्थत्वात् । 'अनियतसङ्ख्यावाचिनां चेद्भवति बहोरेवे'ति नियमशरीर-मिति मनोरमा । 'बहुगणयोरेवे'ति नियमशरीरमित्यन्ये । वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात् 'कालाध्वनो'-रिति द्वितीयेति हरदत्तः । ननु वारशब्दस्य कालवाचित्वे भूरिशब्दोऽपि तत्समानाधिकरणत्वात्कोल एव वर्तत इति

---

**बा.]** च्छो वा स्यादित्यर्थः । तुल्यरूपार्थे वर्तमानात्स्थानान्ताच्छो वा स्यादिति यावत् । **पितृस्थानीय इति** । **स्थानं**-पूज्यत्वादिपदम् । पितृस्थानमिव स्थानं यस्येति बहुव्रीहिः । पितृनिष्ठपूज्यत्वादितुल्यपूज्यत्वादिमा-नित्यर्थः । **गोस्थानमिति** । गवां निवास इत्यर्थः । अत्र तुल्यत्वाऽप्रतीतेर्न च्छः । 'किमेत्तिङव्यये'त्युत्तरसूत्रं प्रसङ्गात्पूर्वमेव व्याख्यातम् । 'अमु च च्छन्दसी'ति तु वैदिकप्रक्रियायां व्याख्यास्यते । **अनुगादिनष्ठक्** । 'स्वार्थे' इति शेषः । 'आमादयः प्राग्मयटः' इत्युक्तेष्ठगादयो नित्या एव प्रत्ययाः । **अनुगादीति** । 'सुप्यजातौ' इति णिनिः । प्रकृतिप्रदर्शनमिदम् । ठको नित्यत्वात्स एवेत्यस्वपदविग्रहप्रदर्शनम् । **आनुगादिक इति** । 'नस्तद्धिते'-इति टिलोपः । इह क्रमे 'णचः स्त्रिया'मिति 'अणिनुणः' इति च सूत्रद्वयं पठितं कृदधिकारे व्याख्यास्यते । **विसा-रिणो मत्स्ये** । 'अणिनुणः' इति पूर्वसूत्रादण्णित्यनुवर्तते । तदाह—**अण् स्यादिति** । मत्स्ये विद्यमानाद्विसारिन्-शब्दात्स्वार्थे अण् स्यादित्यर्थः । **वैसारिण इति** । 'इनण्यनपत्ये' इति प्रकृतिभावाट्टिलोपो न ।

**सङ्ख्यायाः** । अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्येत, तदा चतुर्वारं पाकप्रवृत्तौ त्रिः पचतीति स्यादित्यत आह—**अभ्यावृत्तिर्जन्मेति** । उपसर्गवशात् 'वृतु वर्तने' इति धातोरुत्पत्तौ वृत्तिरिति भावः । कृत्वसुचि चकार इत् । उकार उच्चारणार्थः । 'तद्धितश्चाऽसर्वविभक्ति'रित्यत्र तसिलादिषु परिगणनात्कृत्वोऽर्थानामव्ययत्वम् । **पञ्चकृत्वो भुङ्क्त इति** । पञ्चत्वसङ्ख्याकोत्पत्तिविशिष्टा भोजनक्रियेत्यर्थः । **सङ्ख्यायाः किमिति** । गणने वृत्तिः सङ्ख्याशब्दानामेवेति प्रश्नः । **भूरिवारान्भुङ्क्ते इति** । भूरिशब्दो बहुशब्दपर्यायः । वारशब्दस्तु सम-भिव्याहृतक्रियापर्याप्ते काले वर्तते । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । बहुकालेषु कार्त्स्न्येन व्याप्ता भोजन-

---

**शे.]** तदा प्रत्यय इत्यर्थः । इतिशब्दादर्थवदिति लब्धम् । **अनुगदतीति** । अत्रार्थे अनुगादिशब्द इत्यर्थः । अस्य नित्यत्वादस्वपदविग्रहं दर्शयति—**स एवेति** । अनुयाय्यादिवत् 'सुप्यजातौ' इति णिनिः । **विसारिणो** । 'अणिनुणः' इत्यतोऽणनुवर्तते । 'इनणी'ति प्रकृतिभावः । [नच 'अनुपसर्जना'दिति सूत्रस्थभाष्यरीत्या कदाचिदप्यवयवादप्युत्पत्तौ 'विसारिण' इत्यस्याप्यापत्तिः, गतिकारकसमवधाने तद्विशिष्टस्यैव कृद्ग्रहणेन ग्रहणम्, अपिना तदसमवधाने केवलस्यापीत्यर्थिकया कृद्ग्रहणपरिभाषयाऽदोषात्] । **क्रियाजन्मेति** । [ अत एव 'एकस्य सकृच्चे'त्यत्राऽस्य सम्बन्धः । अभ्यावृत्तिशब्दस्य जन्मार्थत्वात् ] । अत एव त्रिः प्रवृत्तौ द्विः पचतीति न । वृत्तौ पञ्चादिशब्दास्तत्संख्योत्पत्तिपरास्तस्यैव सुज्द्योतकः । तेषाञ्च क्रियायामन्वयः, सूत्रस्वरसात् । 'द्विदशा' इत्यादौ समास एव द्व्यादिशब्दानान्तत्परत्वद्योतक इत्युक्तार्थत्वान्न सुच् । समुदायस्याऽपरिसमाप्तत्वाच्च 'भुङ्क्ते' इति वर्तमानप्रयोगः, त्रिरावृत्ता [illegible] सुच् । **सङ्ख्यायाः किमिति** । गणने वृत्तिः सङ्ख्याशब्दाना-

न्भुङ्क्ते । **द्वित्रिचतुर्भ्यः सुच्** ।५।४।१८। कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिः । 'रात्सस्य' । चतुः । **एकस्य सकृच्च** ।५।४।१९। सकृदित्यादेशः स्याच्चात्सुच् । सकृद्भुङ्क्ते । 'संयोगान्तस्ये'ति सुचो लोपः, न तु 'हल्ङ्या'बिति । अमैत्सीदित्यत्र सिच इव सुचोऽपि तदयोगात् । **विभाषा बहोर्धाऽविप्रकृष्टकाले** ।५।४।२०। अविप्रकृष्ट आसन्नः । बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते । आसन्नकाले किम् ? । बहुकृत्वो मासस्य भुङ्क्ते । **तत्प्रकृतवचने मयट्** ।५।४।२२। प्राचुर्येण प्रस्तुतं प्रकृतं, तस्य वचनं=प्रतिपादनम् । भावेऽधिकरणे वा

त.] कथमत्र प्रसङ्ग इति चेत् । अत्राहुः—कालवाचित्वेऽपि क्रियाभ्यावृत्तेरपि गम्यमानत्वात्प्रसङ्ग इति । अभ्यावृत्ति-गणने किम् ? । पञ्चपाकाः, दश पाकाः-इत्यत्र क्रियामात्रगणने माभूत् । क्रियाग्रहणं किमर्थम् । यावताऽभ्यावृत्तिः क्रियाया एव भवति, साध्यार्थविषयत्वात्तस्याः, न द्रव्यगुणयोः, तयोस्तु सिद्धस्वभावतया शब्दाभिधानात् । 'पुनः-पुनर्दण्डः', 'पुनः-पुनः स्थूलः'-इत्यत्रापि गम्यमानायां भवतिक्रियाया एवाभ्यावृत्तिर्न तु द्रव्यगुणयोरिति चेत् । मैवम् । उत्तरार्थं क्रियाग्रहणस्यावश्यकत्वात् । **एकस्य सकृच्च** । अभ्यावृत्तिरिति न संबध्यते, एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते, तस्यास्त्वावृत्तेरसंभवात् । क्रियाग्रहणमिहार्थमावश्यकम् , अन्यथा 'आ दशतः सङ्ख्या सङ्ख्येये वर्तते' इत्येको भुङ्क्ते इत्यत्रापि स्यादिति । इह साधु पचतीत्यादिवदेकं भुङ्क्ते इति प्रयोगे प्राप्ते सकृच्छ-ब्दप्रयोगार्थमिदं सूत्रमिति कैयटः । 'एकः पाक' इत्यत्र तु अनभिधानान्नेति काशिका । **संयोगान्तस्येति** । 'हल्ङ्यादिना सुलोप' इति प्राचो ग्रन्थोऽयुक्त इत्याह—**न त्विति** । 'सुतिसी'ति साहचर्याद्विभक्तय एव तत्र गृह्यन्त इत्यभिप्रेत्याह—**सिच इवेति** । **बहुधा दिवसस्य भुङ्क्ते इति** । शेषत्वविवक्षायां षष्ठी । 'कृत्वोऽर्थ-प्रयोगे कालेऽधिकरणे' इत्यनेन षष्ठी'ति हरदत्तोक्तिस्तु नादर्तव्या, 'शेषाधिकारबलेनाष्टसुत्र्याः समासनिवृत्तिफलकतया तिङन्तेनोदाहरण'मिति प्रागुक्तनिष्कर्षविरोधादित्याहुः । **तत्प्रकृत** । **प्राचुर्येण प्रस्तुतमिति** । यद्यपि प्रकृतशब्दः

बा.]क्रियेत्यर्थः । भोजनबहुत्वं त्वर्थाद्गम्यते । तथा च वारशब्दोऽयं न गणनवाची । भूरिशब्दोऽपि न सङ्ख्याशब्देन गृह्यते, 'बहुगणवतुडति सङ्ख्ये'त्यत्र बहुग्रहणेन तत्पर्यायस्य असङ्ख्यात्वबोधनात् , अतोऽत्र न कृत्वसुच् ।

**द्वित्रिचतुर्भ्यः** । क्रियाभ्यावृत्तिगणने इत्येव । सुचि चकार इत्, उकार उच्चारणार्थः । पूर्ववदव्ययत्वम् । **त्रिरिति** । 'भुङ्क्ते' इत्यनुषज्यते । **रादिति** । चतुर्शब्दात्सुचि चतुर् स् इति स्थिते 'रात्सस्ये'ति सकारस्य लोपे चतुरिति रूपमित्यर्थः । अत्र 'भुङ्क्ते' इत्यनुषज्यते । **एकस्य सकृच्च** । शेषपूरणेन सूत्रं व्याचष्टे—**सकृदि-त्यादेशः स्यादिति** । **सकृद्भुङ्क्ते इति** । एकशब्दात्सुच् , प्रकृतेः सकृदित्यादेशश्च । अत्र एकशब्दः क्रिया-विशेषणम् । एकत्वविशिष्टा भुजिक्रियेत्यर्थः । 'स्वादु पचती'त्यादिवदेकं भुङ्क्ते इति प्रयोगे प्राप्ते इदं सूत्रमिति कैयटः । 'एको भुङ्क्ते' इत्यत्र तु नायं विधिः प्रवर्तते, क्रियाग्रहणमनुवर्त्य क्रियाविशेषणस्यैव एकशब्दस्य ग्रहणा-दित्यास्तां तावत् । ननु 'संयोगान्तस्ये'ति सुचो लोप इत्यनुपपन्नम् । 'हल्ङ्याब्भ्यः' इत्येव हि सुलोपोऽत्र युक्तः, तस्मिन्कर्तव्ये संयोगान्तलोपस्य त्रैपादिकस्याऽसिद्धत्वादित्यत आह—**ननु हल्ङ्याबितीति** । **सिच इवेति** । 'अमैत्सी'त्यित्र सिचो लोपनिवृत्त्यये 'हल्ङ्या'बित्यत्र सिग्रहणेन सिचो न ग्रहणं, तत्साहचर्यात्सुग्रहणेनापि सुजयं न गृह्यत इति भावः । **विभाषा बहोर्धा** । अविप्रकृष्टकालिकक्रियाजन्मगणनवृत्तेर्बहुशब्दाद्धाप्रत्ययो वा स्यात् । पक्षे कृत्वसुच् । **बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते इति** । दिवसे प्रातःसङ्गवाद्यव्यवहितकालिकोत्पत्ति-विशिष्टा भोजनक्रियेत्यर्थः । 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति दिवसात्षष्ठीति हरदत्तः । शेषत्वविवक्षायां षष्ठी इति तु नवीनाः । **तत्प्रकृतवचने** । 'त'दिति प्रथमान्तनिर्देशः । **प्राचुर्येणेति** । बहुलतया उपस्थितं प्रकृतशब्देन

शे.]मेवेति प्रश्नः । **भूरिवारानिति** । नायं सङ्ख्यावाची, लोके गणनायामप्रसिद्धेरिति भावः । बहुशब्दस्तु सङ्ख्यासम्बन्धवाच-त्कार्यभागित्युक्तं । तदभावे हि क्रियाजन्मगणने गम्ये इत्यर्थः स्यादिति तात्पर्यम् । 'वार'शब्दः कालपरः । स च भोजनपर्याप्त इति 'कालाध्वनो'रिति द्वितीया । यद्यपि द्रव्यगुणयोर्गणनयोग्यं जन्माऽप्रसिद्धम्, एकैव तेषामुत्पत्तिः । क्रियायास्त्वनेकस्या अपि निवृ-त्तभेदाया धातुवाच्यत्वेन तत्सम्भवात्, तथापि क्रियाग्रहणं स्पष्टार्थम् । साध्यस्वभावैव यत्र क्रिया तत्रैतत्प्रवृत्त्यर्थन्तु न तत्; द्विर्वचनेऽचीति द्विरावृत्तिर्द्विःप्रयोगः, द्विर्बद्धं सुबद्धमित्यादिप्रयोगविरोधात् । 'पञ्चकृत्वः कर्त्ता कटान्', 'द्विः कर्त्ते'त्यादौ गुणभूतक्रियायोगे कारकविभक्तेरिव अस्यापि साधुत्वमिष्टमेवेति स्पष्टं हरिकैयटादिग्रन्थे इत्यन्यत्र निरूपितम् । 'द्वौ पाकौ' इत्यादौ न सुजादि, क्रियाजन्मगणनस्याऽभावात् । तद्गणनार्थत्वे हि पाकावित्यादौ द्विवचनाद्यनापत्तिः । अत एव द्विः प्रयोगाविति न । तदुक्तं भाष्ये—'द्वौ पाकावित्यत्र कस्मान्न भवति ? । नैतत्क्रियागणनम् । अभिमुखी प्रवृत्तिरभ्यावृत्तिः' इति । सा च जन्मरूपा । एवञ्च नैतत्क्रियागणनमिति तदर्थं इति निरूपितं भाष्यप्रदीपोद्द्योते । यद्यपि सङ्ख्या गणनात्मिकैव, तथापि गणन इति गणनायां ये प्रसिद्धास्तेषामेव ग्रहणार्थम् । तेन युग्मादिशब्दानां [illegible] । विभाषा । अविप्रकृष्टकालक्रियाजन्म-

ल्युट्। आद्ये प्रकृतमन्नमन्नमयम्। अपूपमयम्। यवागूमयी। द्वितीये–अन्नमयो यज्ञः। अपूपमयं पर्व। **समूहवच्च बहुषु** ।५।४।२२। सामूहिकाः प्रत्यया अतिदिश्यन्ते। चान्मयट्। मोदकाः प्रकृताः मौदकिकम्। मोदकमयम्। शाष्कुलिकम्। शष्कुलीमयम्। द्वितीयेऽर्थे–मौदकिको यज्ञः। मोदकमयः। **अनन्तावसथेतिहभेषजाञ्ञ्यः** ।५।४।२३। अनन्त एव– आनन्त्यम्। आवसथ एव आवसथ्यम्। इतिहेति निपातसमुदायः। ऐतिह्यम्। भेषजमेव–भैषज्यम्। **देवतान्तात्तादर्थ्ये यत्** ।५।४।२४। तदर्थ एव तादर्थ्यम्

---

**त.]** प्रस्तुतमात्रे रूढः, तथापि वचनग्रहणादयं विशेषो लभ्यते। वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थम्। **आद्ये इति**। प्रथमान्तात्प्रकृते द्योत्ये प्रत्ययः। स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनम्। 'अपूपमय'मित्यपि क्वचित्पठ्यते। प्रस्तुतोऽपूपोऽपूपमयम्। 'क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते'। अस्मिन्पक्षे तद्ग्रहणं व्यर्थम्। द्वितीये त्वावश्यकं,–प्रथमान्तादेव प्रत्ययलाभार्थम्। **द्वितीये इति**। अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणम्। ल्युटोक्तमधिकरणं तु मयडर्थः। अतएव विशेष्यनिघ्नता। तदाह —**अन्नमयो यज्ञ इति**। अन्नं प्रकृतमुच्यते अस्मिन्नित्यर्थः। **मौदकिकम्। शाष्कुलिकमिति**। 'अचित्तहस्तिधेनोष्ठक्'। **आवसथ इति**। 'उपसर्गे वसेः' इत्यथप्रत्ययः। **निपातसमुदाय इति**। उपदेशपारम्पर्ये वर्तते, वचनाच्चाऽप्रातिपदिकादेव प्रत्ययः। 'ऐतिह्यमितिहाऽव्यय'मिति कोशः। **भेषजमिति**।

---

**बा.]** विवक्षितमित्यर्थः। उपसर्गबलादिति भावः। **प्रतिपादनमिति**। बोधनमित्यर्थः। **भावे इति**। तथाच प्रकृतस्य बोधने सतीत्यर्थः। प्राचुर्यविशेषणकवस्तुवृत्तेः प्रथमान्तात्स्वार्थे मयडिति फलति। अत्र प्राचुर्यविशिष्टं वस्तु प्रकृतेरर्थः। प्रत्ययस्तु तद्द्योतकः। **अधिकरणे वेति**। तथाच प्राचुर्यविशेषकं यद्वस्तु यस्मिन्नुच्यते तदधिकरणे वाच्ये तादृशवस्तुवृत्तेः शब्दान्मयडिति फलितम्। अत्र पक्षे प्राचुर्यविशिष्टमुच्यमानं वस्तु प्रकृत्यर्थः। तदधिकरणं प्रत्ययार्थः। तन्त्रेणाऽर्थद्वये सूत्रतात्पर्यम्, व्याख्यानात्। यद्यप्याद्यपक्षे स्वार्थिकप्रकरणपाठः समञ्जसो नतु द्वितीयपक्षे, तथापि 'अथ स्वार्थिकाः' इति मूलं प्रायिकाऽभिप्रायमिति न दोषः। **आद्ये इति**। भावल्युट्पक्षे इत्यर्थः।

**प्रकृतमन्नमन्नमयमिति**। प्रचुरमन्नमित्यर्थः। स्वार्थिकत्वात्प्रकृतिलिङ्गता। **अपूपमय इति**। प्रचुरोऽपूप इत्यर्थः। **यवागूमयीति**। प्रचुरा यवागूरित्यर्थः। टित्वान्ङीबिति भावः। **द्वितीये इति**। अधिकरणल्युट्पक्षे इत्यर्थः। **अन्नमयो यज्ञ इति**। 'इष्टिषु दशौदनाः पशौ तं सोमसहस्र'मित्यादिवाक्यैरुच्यमानानि प्राचुर्यविशिष्टाऽन्नानीत्यर्थः। अस्वार्थिकत्वेन प्रकृतिलिङ्गत्वाऽभावाद्विशेष्यनिघ्नता। **अपूपमयं पर्वेति**। पर्वणि प्रचुरा अपूपाः कार्या इत्याद्युच्यमानाऽपूपाधिकरणं पर्वेत्यर्थः। अस्वार्थिकत्वाद्विशेष्यनिघ्नता। केचित्तु द्वितीयपक्षे वचनशब्दोऽधिकरणल्युडन्तः, प्रकृत्यर्थो न विवक्षित इत्याहुः। तथा सति प्राचुर्यविशिष्टान्नाद्यधिकरणं यज्ञ इत्येव बोधः, नतु उच्यमानत्वस्य बोधः। **समूहवच्च बहुषु**। तत्प्रकृतवचने इत्येव। **सामूहिका इति**। 'तस्य समूहः' इत्यधिकारविहिताः प्रत्यया इत्यर्थः। बहुषु प्राचुर्यविशिष्टेषु वर्तमानाच्छब्दात्स्वार्थे समूहवत्प्रत्ययाः स्युरित्यर्थः। यद्वा बहुत्वविशिष्टानि प्राचुर्यविशिष्टानि वस्तूनि यस्मिन्नधिकरणे उच्यन्ते, तदधिकरणे वाच्ये तद्वस्तुवृत्तेः शब्दात्समूहवत्प्रत्ययाः स्युरित्यर्थः। आद्ये उदाहरति -**मोदकाः प्रकृता मौदकिकमिति**। 'अचित्तहस्तिधेनो'रिति सामूहिकष्ठक्। स्वार्थिकत्वेऽपि प्रकृतिलिङ्गातिक्रमः कुटीरवत्। **शाष्कुलिकमिति**। शष्कुलयः प्रचुरा इत्यर्थः। पूर्ववट्ठक्, प्रकृतिलिङ्गातिक्रमश्च। **द्वितीयेऽर्थे मौदकिको यज्ञ इति**। मोदका अस्मिन्यज्ञे उच्यन्त इति विग्रहः। **अनन्तावथेतिह**। अनन्त, आवसथ, इतिह, भेषज एभ्यः स्वार्थे ञ्यप्रत्ययः स्यादित्यर्थः। **अनन्त एवेति**। अन्तो नाशः। तस्याऽभावः अनन्तः। अर्थाऽभावे नञ्तत्पुरुषः, अर्थाऽभावे अव्ययीभावेन तद्विकल्पस्योक्तत्वात्। **आनन्त्यमिति**। स्वार्थिकत्वेऽपि प्रकृतिलिङ्गव्यतिक्रम। **आवसथो**–गृहम्। **निपातसमुदाय इति**। स च उपदेश-

---

**शे.]** गणनवृत्तेरित्यर्थः। **प्राचुर्येणेति**। व्याख्यानादिति भावः। **भाव इति**। प्रचुरस्य वचने बोधने सति प्रातिपदिकात्प्रत्यय इत्यक्षरार्थः। प्रचुराऽर्थबोधकात्तदिति प्रथमासमर्थात्स्वार्थे मयडिति यावत्। **अधिकरणे इति**। प्राचुर्येण प्रस्तुताऽन्नादिवचनाऽत्प्रथमासमर्थादधिकरणे प्रत्यय इत्यर्थः। 'प्रकृते'ति लुप्तसप्तम्यन्तं, तत्र वर्तमानादित्यर्थः। अत्र पक्षे वचने इत्यत्र प्रकृत्यर्थोऽविवक्षितः। तेन 'भवन्मयो ध्यायति नाऽवनीपति'रित्यादौ प्रकृत्यर्थाधिकरणमात्रे मयड्युपपन्नः। तन्त्रेणार्थद्वये सूत्रतात्पर्यम्, व्याख्यानात्। स्वार्थिकप्रकरणे पाठस्त्वाद्यपक्षे चरितार्थः। वस्तुतो'ऽथ स्वार्थिका' इत्यस्य 'प्रायेणे'त्यादिः। 'प्रकारवचने जातीयर्' जात्यन्ताच्छ बन्धुनि देवतान्तात्तादर्थ्ये यदित्यादौ वाचकतया एव प्रतीतेरिति बोद्धव्यम्। तद्ग्रहणं वाक्यभेदेन प्राचुर्याऽभावेऽप्यत्यन्तस्वार्थिकमयडर्थम्। तेन 'चिन्मयं मह्ये'त्यादि सिद्धम्। **यवागूमयीति**। टित्वान्ङीप्। [ **अन्नमय इति**। क्वचित्प्रकृतिलिङ्गातिक्रमाद्विशेष्यनिघ्नता ]। **समूहव**। बहुत्वविशिष्टेऽर्थे प्राचुर्यार्थे च वर्तमानादित्यर्थः। **मौदकिकादौ**—'अचित्ते'ति ठक्।

स्वार्थे ष्यञ् । अग्निदेवतायै इदम्—अग्निदेवत्यम् । पितृदेवत्यम् । पादाऽर्घाभ्यां च ।५।४।२५। पादार्थमुदकं पाद्यम् । अर्घ्यम् । ॐ नवस्य नू आदेशस्त्नप्तनप्खाश्च प्रत्यया वक्तव्याः । नूत्नम् । नूतनम् । नवीनम् । ॐ नश्च पुराणे प्रात् । पुराणे वर्तमानात्प्रशब्दान्नो वक्तव्यः चात्पूर्वोक्ताः । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् । ॐ भागरूपनामभ्यो धेयः । भागधेयम् । रूपधेयम् । नामधेयम् । ॐ आग्नीध्र-साधारणादञ् । आग्नीध्रम् । साधारणम् । स्त्रियां ङीप् । आग्नीध्री । साधारणी । अतिथेर्ञ्यः ।५।४।२६। तादर्थ्यं इत्येव । अतिथय इदमातिथ्यम् । देवात्तल् ।५।४।२७ देव एव देवता । अवेः कः ।५।४।२८। अविरेव—अविकः । यावादिभ्यः कन् ।५।४।२९। याव एव यावकः । मणिकः । लोहितान्मणौ ।५।४।३०। लोहित एव मणिर्लोहितकः । वर्णे चाऽनित्ये ।५।४।३१। लोहितकः कोपेन । ॐ लोहिता-

त.] भिषज्यतेः कण्ड्वादियगन्तात्क्विप् । भिषक् । भिषजामिदं भेषजम् । अस्मादेव निपातनादेकारः । पितृदेवत्य-मिति । पितरश्च ता देवताश्च पितृदेवताः । पितृदेवताभ्य इदमिति विग्रहः । अर्घ्यमिति । 'मूल्ये पूजाविधावर्घः' इत्यमरः । पूर्वोक्ता इति । त्नप्तनप्खप्रत्यया इत्यर्थः । आग्नीध्रमिति । 'अग्नीधः शरणे रण् भं चे'ति शैषिकेषु व्युत्पादितं, तच्चान्तोदात्तम्, ततः स्वार्थेऽनेनाऽञ् । आद्युदात्तत्वं फलम् । फलान्तरमप्याह—स्त्रियामिति । आग्नीध्रीति । शालेति विशेष्यम् । समानं धारणमस्याः साधारणी । अनेकं प्रत्यविशिष्टसम्बन्धो भूम्यादिः । पृषोदरादित्वात्समानस्य सभावः । विभाषाप्रकरणादञभावे टाप् । आग्नीध्रा शाला । साधारणा भूमिः । नन्वञ-भावपक्षे समानस्य सभावेऽपि सधारण इत्येव स्यान्न त्वत्रादिवृद्धिरिति चेत् । अत्राहुः—'साधारणाद'मित्यतएव

बा.] पारम्पर्ये वर्तते । तस्मात्स्वार्थे ष्यञ् । 'पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्यय' मित्यमरः । भैषज्यमिति । भेषजम्=औषधम्, तदेव भैषज्यम् ।'भेषजौषधभैषज्यानी'त्यमरः । देवतान्तात्तादर्थ्ये यत् । तदर्थ एवेति तच्छब्देन देवतान्तस्यार्थ उच्यते, तस्मै अयं तदर्थः,ततः स्वार्थे चतुर्वर्णादित्वात् ष्यञित्यर्थः । देवतान्तात्प्रातिपदिका-यत्स्यात्प्रकृत्यर्थार्थे वस्तुनि वाच्य इत्यर्थः । 'त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या चे'त्युक्तं 'सास्य देवते'त्यत्र । अतः पितृदेवत्यं रक्षोदेवत्यमित्यादौ नाव्याप्तिः । तदाह—पितृदेवत्यमिति । देवताशब्दस्य देवा मनुष्याः पितरः असुरा रक्षांसि पिशाचा इत्यादिश्रुतिपुराणादिप्रसिद्धजातिविशेषपरत्वे तु अत्राऽव्याप्तिः स्यादिति भावः । भाष्ये तु 'पितृदेवत्यमिति न सिध्यती'त्याक्षिप्य 'दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे त'लिति समाहितम् । हविः प्रति पित्रादीनामीश्वरत्वं स्वामित्वम् । हविस्तु यजमानस्य स्वम् । तच्च यजमानेन अग्न्याद्युद्देशेन त्यक्तं चेत्तदाग्न्यादिस्वामिकं भवितुमर्हति । अतो देवतात्वं त्यज्यमानद्रव्योद्देश्यत्वविशेषात्मकमेव भाष्यरीत्याऽपि पर्यवस्य-तीत्यलम् । पादार्घाभ्यां च । 'तादर्थ्ये य'दिति शेषः । अर्घ्यमिति । अर्घार्थमुदकमिति विग्रहः । अर्घः—पूजा । 'मूल्ये पूजाविधावर्घः' इत्यमरः । नवस्येति । वार्तिकमिदम् । एते प्रत्यया अत्यन्तस्वार्थिकाः । नवीन-मिति । नवशब्दात्खप्रत्यये, तस्य ईनादेशे, प्रकृतेर्नूभावे, ओर्गुणः, अवादेशः । नश्च पुराणे प्रादिति । वार्तिकमिदम् । चात्पूर्वोक्ता इति । त्नप्, तनप्, ख इत्यर्थः । प्रीणमिति । खे रूपम् । भागरूपेति । वार्तिकमिदम् । आग्नीध्रेति । वार्तिकमिदम् । आग्नीध्रमिति । अग्नीधः शरणम्-आग्नीध्रम् । ततः स्वार्थे अञि आग्नीध्रमेव । अनेकं प्रत्यविशिष्टसम्बन्धं साधारणमुच्यते । ततः स्वार्थे अञि साधारणमित्येव । अञ्विधेः प्रयो-जनमाह—स्त्रियां ङीबिति । अतिथेर्ञ्यः । तादर्थ्ये इत्येवेति । अतिथये इदमित्यर्थे अतिथिशब्दाच्चतुर्थ्यन्तात्ण्यः स्यादित्यर्थः । देवात्तल् । 'तादर्थ्ये' इति निवृत्तम् । अत्यन्तस्वार्थिकोऽयं तल् । देवतेति । स्वार्थिकत्वेन प्रकृति-लिङ्गातिक्रमात्स्त्रीत्वम् । अवेः कः । अयमपि केवलस्वार्थिकः । 'अवयः शैलमेषाऽर्काः' इत्यमरः । यावादिभ्यः कन् । यावक इति । यवानामयं यावः=ओदनादिः, स एव यावकः । अलक्तको वा यावः, स एव यावकः । 'यवोऽलक्तो द्रुमामयः' इत्यमरः । लोहितान्मणौ । मणौ वर्तमानाल्लोहितशब्दात्स्वार्थे कन्स्यादित्यर्थः । माणिक्य-मयो मणिरेवेह मणिर्विवक्षितः । यस्तु जपाकुसुमादिनिमित्तलौहित्यवान्स्फटिकमणिस्तस्य तु 'रक्ते' इत्युत्तरसूत्रेण

शे.] स्वार्थिकत्वेऽपि लिङ्गातिक्रमः [उक्तन्यायेन] कुटीरवत् । भेषजमिति । 'भियः पुकह्रस्वश्चे'ति व्युत्पादिताद्भिषज्शब्दादिदमर्थेऽण्यत एव निपातनादेकारः । देवतान्तात्तादर्थ्ये । तदर्थे वस्तुनि [वर्तमानात्] इत्यर्थः । अग्निदेवतायै इति । [तदर्थकस्य तात्पर्य-ग्राहकं बोध्यम् ] । वैधे कर्मणि त्यज्यमानद्रव्योद्देश्यत्वं मन्त्रस्तुत्यत्वञ्च देवतात्वम् । तदुक्तं भाष्ये—'दिवेरैश्वर्यकर्मणो देवस्त-स्मात्स्वार्थे त'लिति । तेन देवदेवत्यमिति सिद्धम् । तत् ध्वनयन्नाह—पितृदेवत्यमिति । एतेन पितृषु देवतात्वजात्यभावादि-दमयुक्तमित्यपास्तम् । 'नवस्ये'त्यादिवार्त्तिकैर्विधीयमाना अत्यन्तस्वार्थिकाः । साधारणादिति । अत एव निपातनात्सादेशस्य

लिङ्गबाधनं वा । लोहितिका लोहिनिका कोपेन । रक्ते ।५।४।३२। लाक्षादिना रक्ते यो लोहितशब्दस्त-स्मात्कन्स्यात् । 'लिङ्गबाधनं वे'त्येव । लोहिनिका लोहितिका शाटी । कालाच्च ।५।४।३३। 'वर्णे चाऽनित्ये' 'रक्ते' इति द्वयम[प्य]नुवर्तते । कालकं मुखं वैलक्ष्येण । कालकः पटः । कालिका शाटी । विनयादिभ्यष्ठक् ।५।४।३४। विनय एव वैनयिकः । सामयिकः । (ग) उपायो ह्रस्वत्वं च । औपयिकः । वाचो व्याहृतार्थायाम् ।५।४।३५। संदिष्टार्थायां वाचि विद्यमानाद्वाक्शब्दात्स्वार्थे ठक् स्यात् 'संदेशवाग

त.] निपातनात्, समानस्य साभावविधानाद्वा इष्टसिद्धिरिति । देवतेति । 'तलन्तं स्त्रियाम्' । वर्णे चाऽनित्ये । अनित्ये किम् ? । लोहितं रुधिरम् । लोहिता लाक्षा । अनित्यत्वमिह स्वसमानाधिकरणध्वंसप्रतियोगित्वम् । अतएव 'रक्ते' इत्युत्तरसूत्रं सार्थकम् । लाक्षादिना रक्ते लौहित्यस्य यावदाश्रयमवस्थानेन नित्यतया पूर्वेणाऽसिद्धेः । लोहितक इति । कोपेन लोहितो यः पुरुषस्तस्मिन्नेव क्षणादूर्ध्वं कोपशान्तौ लौहित्यं नश्यतीति भवत्यत्राऽनित्यो वर्णः । 'प्रातिपदिकात्तद्धिताः' इति पक्षस्य 'प्रतिपदविधानमात्रेणाऽपवादत्व'मिति पक्षस्य चाश्रयणे 'वर्णादनुदात्ता'दित्यतः प्रागेव कनि कृते लोहितिकेति रूपं न स्यादित्याशङ्कायामाह—लिङ्गबाधनं वेति । लोहितादित्युपलक्षणम् । एतिका एनिकेत्यादेरपि सङ्ग्राह्यत्वात् । 'सुबन्तात्तद्धिताः' इति पक्षस्य 'निरवकाशत्वमपवादत्व'मिति पक्षस्य च मुख्यत्वा-त्तदाश्रयणे तु 'वर्णादनुदात्ता'दित्यस्यानन्तरमेव कनः प्रवृत्तेः कन्प्रत्ययस्य पुंलिङ्गे सावकाशतया निरवकाशत्वा-ऽभावाच्च वार्तिकमिदं न कर्तव्यम् । अतएव ङ्याप्ग्रहणं व्यर्थमिति, स्वाम्पीति रूपं प्रबलमिति च मनोरमादावुक्त-मिति दिक् । उपाय इति । उपायशब्दष्ठकं लभते ह्रस्वत्वं चेत्यर्थः । अकस्माच्छब्दोऽत्र पठ्यते स तु दान्तो न तु तान्तः । तेन कादेशो न । 'अव्ययानां भमात्रे टिलोपः' । आकस्मिकम् । वाचो व्याहृता । व्याहृतार्थायां किम् ? ।

बा.] सिद्धम् । वर्णे चाऽनित्ये । अनित्ये वर्णे विद्यमानाल्लोहितशब्दात्स्वार्थे कन्स्यादित्यर्थः । अमण्यर्थमिदम् । लोहितकः कोपेनेति । 'देवदत्तादि'रिति शेषः । कोपनिमित्तकं देवदत्तादेर्लौहित्यमनित्यमेव, कोपाऽभावे तद-भावात् । यद्यपि माणिक्यमणिलौहित्यमपि अनित्यमेव, माणिक्ये नष्टे तन्नाशात्, तथापि आश्रयद्रव्यस्य उत्पत्ति-प्रभृति नाशपर्यन्तं यो वर्णो वर्तते, स वर्णो नित्य इत्यभिमतमिति न दोषः । स्यादेतत् । 'लोहिनिका लोहितिका वा कोपेने'ति स्त्रियां रूपद्वयमिष्यते । तत्र लोहितशब्दात् 'वर्णादनुदात्ता'दिति नत्वसन्नियोगशिष्टं ङीपं परत्वात्स्वा-र्थिकतया अन्तरङ्गत्वाच्च बाधित्वा कनि कृते सति नत्वसन्नियोगशिष्टङीपो न प्रसक्तिः, कोपधत्वेन तोपधत्वाऽभावात् । ततश्च लोहितकशब्दात् 'अजाद्यतः' इति टापि 'प्रत्ययस्था'दिति इत्वे लोहितिकेत्येव स्याद्वतु तत्र लोहिनिकेति । अत आह—लोहिताल्लिङ्गबाधनं वेति । वार्तिकमिदम् । लोहितशब्दात्परस्य स्त्रीलिङ्गबोधकप्रत्ययस्य कना बाधो वा स्यादित्यर्थः । असति तु कना ङीपो बाधे लोहिनीशब्दात्कनि 'केऽणः' इति ह्रस्वे कन्नन्ताट्टापि लोहिनिकेति सिध्यति । सति तु कना ङीपो बाधे लोहिताशब्दात्कनि 'केऽणः' इति ह्रस्वे टापि लोहितिकेति भवति । ननु 'ङ्याप् प्रातिपदिका'दित्यत्र लिङ्ग-विशिष्टपरिभाषयैव सिद्धे ङ्याप्ग्रहणं ङ्याबन्तादेव तद्धिता भवन्ति, नतु ङ्याब्भ्यां प्रागित्येवमर्थमित्युक्तम् । एवंच ङीपः प्राक् कनः प्रसक्तेरेवाऽभावादिदं वार्तिकं व्यर्थमिति चेत्, अत एव वार्तिकाल्लिङ्गात्स्वार्थिकतद्धितेषु ङ्याप्ग्रहणं न संबध्यते । न च 'सुबन्तात्तद्धितोत्पत्ति'रिति सिद्धान्तात् 'कुत्सिते' इति सूत्रस्थभाष्यरीत्या स्वार्थद्रव्यलिङ्गसङ्ख्या-कारककुत्सादिप्रयुक्तकार्याणां क्रमिकतया ङ्याबन्तादेव सुपि ततः कनि रूपसिद्धेर्वचनमिदं व्यर्थमिति वाच्यम्, अत एव स्वार्थिकतद्धितानां प्रातिपदिकादेव प्रवृत्तिविज्ञानादित्यन्यत्र विस्तरः । रक्ते । लाक्षादिना रक्ते पटादौ लौहि-त्यस्य यावद्द्रव्यमवस्थानेन नित्यतया पूर्वेणाऽप्राप्तौ वचनम् । कालाच्च । द्वयमनुवर्तत इति । अनित्ये वर्णे रक्ते च वर्तमानात्स्वार्थे कन्निति फलितम् । अनित्ये वर्णे उदाहरति—कालकं मुखं वैलक्ष्येणेति । लज्जाऽसूयादिने-त्यर्थः । रक्ते उदाहरति—कालकः पट इति । 'नील्यादिने'ति शेषः । । विनयादिभ्यः । उपायाद्ध्रस्वत्वं चेति । गणसूत्रमिदम् । उपायशब्दात्स्वार्थे ठक्, प्रकृतेर्दीर्घस्य ह्रस्वत्वं चेत्यर्थः । ह्रस्वस्य ह्रस्वविधौ वैयर्थ्या-द्दीर्घस्येति गम्यते । वाचो व्याहृतार्थायाम् । 'इदमस्य वक्तव्य'मिति दूतं प्रति योऽर्थ उच्यते स व्याहृतः,

शे.] दीर्घः । सह=समानं धारणमस्येत्यर्थः । अनेकं प्रत्यविशिष्टसम्बन्धमित्यर्थः । देवतेति । लिङ्गातिक्रमात्स्त्रीत्वम् । वर्णे चा । वर्णे किम् ? । लोहितं रुधिरम् । यावदाश्रयमवस्थानयोग्यत्वाऽभावोऽनित्यत्वम् । लोहितादिति । अस्मादेव ज्ञापकादत्यन्त-स्वार्थिकानां सुबुत्पत्तेः प्रागेवोत्पत्त्यङ्गीकारेणाऽन्तरङ्गत्वात्प्राप्तं लिङ्गबोधकप्रत्ययस्य बाधनं स्वार्थिकेन वा भवतीत्यर्थः । अत एव ङ्याप्पदस्यात्र प्रकरणेऽसम्बन्धः । तेनैतादिभ्योऽत्वन्तस्वार्थिके एतिकेत्येव, न त्वेनिकेति । वैलक्ष्येणेति । लज्जयेत्यर्थः । उपाय

वाचिकं स्यात्'। **तद्युक्तात्कर्मणोऽण्** ।५।४।३६। कर्मैव कार्मणम्। वाचिकं श्रुत्वा क्रियमाणं कर्मेत्यर्थः। **ओषधेरजातौ** ।५।४।३७। स्वार्थेऽण्। औषधं पिबति। अजातौ किम्?। ओषधयः क्षेत्रे रूढाः। **प्रज्ञादिभ्यश्च** ।५।४।३८। प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री। दैवतः। बान्धवः। **मृदस्तिकन्** ।५।४।३९। मृदेव मृत्तिका। **सस्नौ प्रशंसायाम्** ।५।४।४०। रूपपोऽपवादः। प्रशस्ता मृत्—मृत्सा। मृत्स्ना। उत्तरत्राऽन्यतरस्याङ्ग्रहणान्नित्योऽयम्। **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्** ।५।४।४२। बहूनि ददाति बहुशः। अल्पानि-अल्पशः। ***बह्वल्पार्थान्मङ्ग[लाऽमङ्ग]लवचनम्**। नेह—बहु ददात्य-

---

त.] मधुरा वाग्देवदत्तस्य। **वाचिकमिति**। 'स्वार्थिकाः क्वचिल्लिङ्गमतिवर्तन्ते' इति नपुंसकत्वम्। **प्रज्ञ एवेति**। प्रजानातीति प्रज्ञः। 'इगुपधज्ञे'ति कः। ततः स्वार्थेऽण्। प्राज्ञः। **प्राज्ञीति**। 'टिड्ढे'ति ङीप्। प्रज्ञानं प्रज्ञा। 'आतश्चोपसर्गे'त्यङि टाप्। प्रज्ञा विद्यते यस्याः सा तु प्राज्ञा भवति। 'प्रज्ञाश्रद्धार्चाभ्यः' इति णः। **मृदस्तिकन्**। 'प्रत्ययस्था'दित्येव सिद्धे इकारोच्चारणं प्रक्रियालाघवार्थं, टापो लुक्यपि श्रवणार्थं च। पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिकः पटः। **सस्नौ**। इह 'प्रशंसायां रूप'बित्यस्यानन्तरं 'वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि'। 'मृदः सस्नौ' 'तिकंश्चे'ति वक्तुमुचितम्। नचैवं सस्नाविति कन्प्रत्ययोऽपि प्रशंसायामेवेत्येवमतिप्रसङ्गः। 'तिकंश्चे'-त्यत्र 'प्रशंसाया'मिति निवृत्तमिति कल्पनायां मानाऽभावादिति वाच्यं, 'मृदः सस्नतिकनः' इति वक्तव्ये तिकनः पृथक्करणस्यैव तत्र मानत्वात्। **प्रशस्ता मृदिति**। 'मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिके'-त्यमरः। **नित्योऽयमिति**। मृदित्येतावदुक्ते प्रशस्तत्वानवगमाद्विभाषाऽत्र नानुवर्तत इति सस्नावित्ययं विधिर्नित्य एव। उत्तरसूत्रस्थाऽन्यतरस्याङ्ग्रहणात्तु सुतरामिति भावः। **बह्वल्पार्थात्**। **बहूनीति**। 'बहुभ्यो ददाति बहुशः' 'अल्पेभ्योऽल्पश' इत्याद्यपि बोध्यम्। बह्वल्पार्थात्किम्?। गां ददाति। अश्वं ददाति। अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च। भूरिशो ददाति। त्रिशः। कारकात्किम्?। बहूनां स्वामी, अल्पानां स्वामी। **मङ्गलवचनमिति**। 'बहुशो ददात्याभ्युदयिकेषु कर्मसु। अल्पशो ददात्यनिष्टेषु'। आभ्युदयिकेषु बहुदानम्, अनिष्टेष्वल्पदानं च मङ्गलम्। तद्वैपरीत्येन दानं तु मङ्गलं न भवतीत्याशयेनाह—**नेहेति**। **अनिष्टेष्विति**। मयादिनिमित्तेषु दानेषु।

---

बा.] व्याहृतोऽर्थो यस्या इति विग्रहः। तदाह-**संदिष्टार्थायामिति**। **तद्युक्तात्**। संदिष्टार्थया दूतवाचा यद्युक्तं कर्म तदभिधायिनः कर्मन्शब्दात्स्वार्थे अण्णित्यर्थः। **कर्मैव कार्मणमिति**। 'अ'न्निति प्रकृतिभावान्न टिलोपः। दूतवाक्यं श्रुत्वा तथैव यत्क्रियते कर्म तत्कार्मणमुच्यते। तदाह—**वाचिकं श्रुत्वेति**। **ओषधेरजातौ**। **औषधं पिबतीति**। शुण्ठीमरीचादिचूर्णमवादिद्रव्यसंसृष्टं विवक्षितम्। तस्य न जातिवचनत्वमिति भावः। **क्षेत्रे रूढा इति**। उत्पन्ना इत्यर्थः। शाल्यादिसस्यात्मका इति फलितम्। **प्रज्ञादिभ्यश्च**। 'स्वार्थे'ऽण्णिति शेषः। **प्राज्ञ इति**। प्रजानातीति प्रज्ञः, 'इगुपधज्ञे'ति कः। प्रज्ञशब्दात्स्वार्थे अण्। **प्राज्ञीति**। अण्णन्तत्वान्ङीप्। प्रज्ञा अस्यास्तीति विग्रहे तु 'प्रज्ञाश्रद्धार्चाभ्यः' इति णाऽन्तात्टापि प्राज्ञेति रूपम्। **मृदस्तिकन्**। मृच्छब्दात्स्वार्थे तिकन्नित्यर्थः। **सस्नौ**। प्रशस्तायां मृदि वर्तमानान्मृच्छब्दात्स्वार्थे स स्न एतौ प्रत्ययौ स्त इत्यर्थः। **रूपप इति**। 'प्रशंसायां रूपबि'ति विहितस्येत्यर्थः। **नित्योऽयमिति**। सस्नविधिरित्यर्थः। वस्तुतस्तु 'म्यादयः प्राग्वुनः' इत्यादिपरिगणितेष्वनयोः प्रत्यययोरनन्तर्भावादनित्यत्वमेवाऽनयोरुचितमित्याहुः। **बह्वल्पार्थाच्छस्**। बह्वल्पार्थाच्च कारकाभिधायिनः शब्दात्स्वार्थे शस्प्रत्ययो वा स्यादित्यर्थः। **बह्वल्पार्थादिति**। वार्तिकमिदम्। मङ्गलाऽमङ्गले

---

शे.] इति। 'अ चे'ति वक्तव्ये ह्रस्वग्रहणाद्दीर्घस्य स्थानित्वम्। एतेनाऽन्त्यस्य स्यात्, तत्सामर्थ्याच्च लोपाऽभाव इत्यपास्तं, व्याख्यानाच्च। **वाचो**। व्याहृतोऽन्येनोक्तोऽर्थो यस्या इत्यर्थः। तदाह—**सन्दिष्टेति**। **तद्युक्ता**। तच्छब्देन वाक्। वाचा युक्ताद्वाग्व्याहृतार्थप्रतिपादककर्मशब्दादित्यर्थः। तेन स्वयं वाचा कथनपूर्वकं यत्कर्म क्रियते तत्—कार्मणम्। तदुक्तं भाष्ये—'त'दित्यनेन किं प्रतिनिर्दिश्यते?। वागेव। 'यदेव वाचा व्याह्रियते तदेव कर्मणा क्रियते' इति। अत्र वागेवेत्युत्तरस्यैवकारेण व्याहृतार्थायामित्यंशाऽसम्बन्धो लक्ष्यते, क्रिययोरुत्सर्गत एककर्तृकत्वञ्च प्रतीयते। 'यद्वाचा वदति तत्कर्मणा कुरुते' इति श्रुत्यर्थानुवादरूपत्वाद्यदेवेत्यादिभाष्यस्य। तद्युक्तात्किम्?। वाचा कथनं विनैव यत्कर्म क्रियते तत्र माभूदिति। एवं च मन्त्रविशेषप्रयोगपूर्वं क्रियमाणकर्मविशेषे रूढोऽयमित्याहुः। 'इदन्त्वया कर्तव्य'मिति सन्देशवाचं श्रुत्वा यत्कर्म क्रियते तत्कार्मणमिति वदतः कैयटस्याशयस्तु चिन्त्यः। 'वाचिकं श्रुत्वे'ति मूलं कैयटानुसारेण। **क्षेत्रे रूढा इति**। तत्रोत्पन्ना इत्यर्थः। प्रजानातीति–**प्रज्ञः**। **नित्योऽयमिति**। वृत्तौ चेदं स्पष्टम्। भाष्ये नित्येष्वस्याऽगणनान्नाऽस्य नित्यत्वम्। प्रत्ययान्तरं त्वस्माद-स्यापवादत्वान्न भविष्यतीति **परे**। **मङ्गलामङ्गलवचनमिति**। 'अपेतापोढे'ति सूत्रे 'अल्पशः' इति सौत्रप्रयोगः। एतेना-ऽस्मात्सूत्रप्रयोगान्मङ्गलेऽयादि प्रायिकमित्यपास्तम्, भाष्याऽनुक्तेः। अत्राऽल्पार्थशब्देन स्तोकादीनामेव ग्रहणं, न तदर्थकैक-

परिष्टात्समीपदेश इत्यर्थः। अध्यधि सुखम्। सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः। अधोऽधो लोकम्। लोकस्याऽधस्तात्समीपदेशे इत्यर्थः। **वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु** ।८।१।८। असूयायां—सुन्दर सुन्दर! वृथा ते सौन्दर्यम्। संमतौ,-देवदेव! वन्द्योऽसि। कोपे,-दुर्विनीत दुर्विनीत! इदानीं ज्ञास्यसि। कुत्सने,-धानुष्कधानुष्क! वृथा ते धनुः। भर्त्सने,-चोरचोर! घातयिष्यामि त्वाम्। **एकं बहुव्रीहिवत्** ।८।१।९। द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात्। तेन सुब्लोपपुंवद्भावौ। एकैकमक्षरम्। इह द्वयोरपि सुपोर्लुकि सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप्। एकैकयाऽऽहुत्या।

---

त.] **उपर्यध्य**। सामीप्यं प्रत्यासत्तिः, तच्च कालकृतं देशकृतं वा। **अध्यधि सुखमिति**। कालकृतस्योदाहरणमिदम्। सामीप्य इति किम्?। उपरि चन्द्रमाः। 'उपरि शिरसो घटं धारयती'त्यत्र तु वस्तुतो विद्यमानमपि सामीप्यं न विवक्षितं, किं त्वौत्तराधर्यमेव केवलं विवक्षितमिति द्विर्वचनं न भवति। विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणम्। अत्र च 'उपज्ञोपक्रमं तदाद्याचिख्यासाया'मिति सन्नन्तप्रयोगो ज्ञापक इत्याहुः। **वाक्यादेः**। **सुन्दरसुन्दरेत्यादि**। 'स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु', 'आम्रेडितं भर्त्सने' इति सूत्राभ्यां यथायथं प्राप्तः प्लुतो वैकल्पिकत्वान्नेह कृतः। उक्तं हि प्राक् 'सर्वः प्लुतो वैकल्पिकः' इति। नन्वत्र कोपाऽसूयाभ्यां पृथक्कुत्सनभर्त्सनग्रहणमपार्थकम्। न ह्यसूयां विना कुत्सयते, न वा अकुपितो भर्त्सयते इति चेत्। अत्राहुः—गुरवो हि हितैषित्वादकुपिता अपि भर्त्सनं कुर्वते, 'विनाप्यसूयां कुत्सां कुर्वन्ती'ति पृथक्तया निर्देशः सूत्रकारेण कृतः। 'साऽमृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः। लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः' इति। **एकं बहुव्रीहिवत्**। द्वे इत्यनुवर्तते। तच्चानुवाद्यसमर्पकं, तदाह— **द्विरुक्त इति**। **तेनेति**। यद्यप्येतौ बहुव्रीहौ विशिष्य न विहितौ, तथापि तत्र दृष्टावित्येतावतैवातिदिश्येते इति भावः। **सुब्लोपपुंवद्भावाविति**। पूर्वपदप्रकृतिस्वरश्च बोध्यः। **समुदायात्सुबिति**। तच्चैकवचनमेवेति, अन्तरङ्गैकसङ्ख्यावरुद्धो द्विरुक्तार्थः सङ्ख्यान्तरे निराकाङ्क्ष इति

---

बा.] कालत इति ज्ञेयम्। **वाक्यादेः**। 'द्वे स्त'इति शेषः। यद्यपि कोपाद्भर्त्सनम्, असूयया कुत्सनं, तथापि विनापि कोपाऽसूये भर्त्सनकुत्सनयोः शिष्यादौ संभवात्पृथग्ग्रहणमिति भाष्ये स्पष्टम्। **सुन्दरेति**। सौन्दर्यमसहमानस्येदं वाक्यम्। **देवेति**। तव वन्दनं सम्मतमित्यर्थः। **दुर्विनीतेति**। क्रोधाविष्टस्य वाक्यम्। **ज्ञास्यसीति**। 'दुर्विनयस्य फल'मिति शेषः। **धानुष्केति**। युद्धाऽसमर्थं प्रति निन्देयम्। **चोरेति**। चोरं प्रति अवाच्यवादोऽयम्। **एकं बहुव्रीहिवत्**। **द्विरुक्त इति**। द्विर्वचनं प्राप्त इत्यर्थः। एतच्च प्रकरणाल्लभ्यते, 'वीप्सामात्रविषयमिद'मिति भाष्याच्च। **तेनेति**। बहुव्रीहिवत्त्वेन सुब्लोपपुंवद्भावौ सिध्यत इत्यर्थः। तत्र सुब्लोपमुदाहरति—**एकैकमिति**। **इहेति**। 'एकैक'मित्यत्र एकमित्यस्य द्विर्वचने सति, एकमेकमिति स्थिते सुपो लुकि, समुदायात्सुबित्यन्वयः। ननु 'यत्र सङ्घाते पूर्वो भागः पदं तस्य चेद्भवति तर्हि समासस्यैवे'ति नियमेन समुदायस्य प्रातिपदिकत्वाऽभावात्कथमिह सुपो लुक्, कथं वा समुदायात्सुबित्यत आह—**बहुव्रीहिवद्भावादेव प्रातिपदिकत्वादिति**। एतच्च 'सुपोर्लुकी'त्यत्र, 'समुदायात्सु'बित्यत्र च मध्यमणिन्यायेनान्वेति। अथ पुंवत्त्वेऽप्युदाहरति—**एकैकयाऽऽहुत्येति**। 'एकये'त्यस्य द्विर्वचने सति एकया—एकयेति स्थिते, बहुव्रीहिवत्त्वेन समुदायस्य

---

शे.] वर्तते। कस्तर्हि?। समास' इति। **वाक्यादेरा**। विनापि कोपाऽसूये भर्त्सनकुत्सनयोः शिष्यादौ सम्भवात्तद्ग्रहणम्। **द्विरुक्त इति**। वीप्साविषये इति भावः। अस्य सूत्रस्य वीप्सायामेव प्रवृत्तेर्भाष्यसंमतत्वात्। अत एवैक इत्यादौ न बहुव्रीहिवत्। तथा सति सुब्लुकि दधीत्यादौ विभक्तिरहितस्येवाऽत्रापि तादृशस्यैव साधुत्वापत्तिरित्यन्यत्र विस्तरः। अनेनैव द्वित्वं विधीयते इति तु न युक्तं, शसं एतदपवादत्वाऽनापत्त्यैकश इत्याद्यसिद्धेः। अत्रेदं बोद्धव्यम्। अल्पार्थैकशब्दसत्त्वेऽपि तदर्थे वीप्सायान्द्वित्वापवादः शसेव। सङ्ख्याशब्दातिरिक्तशब्दार्थानां परिगृहीतैकत्वानामेव वीप्सासत्त्वेन तस्याप्येकवचनत्वात्। किञ्चाऽल्पत्वमपि परिमाणविशेष इति 'अल्पे' इति सूत्रे भाष्यकैयटयोरुक्ततया प्रस्थाद्यर्थानामिवास्यापि परिगृहीतैकत्वस्यैव वीप्सा। एकैकश इति भाष्यप्रयोगस्योपपत्तिरुक्तेत्यन्यत्र विस्तरः। **तेनेति**। अत्र सुब्लोपशब्देन तन्निमित्तं प्रातिपदिकत्वं लक्ष्यते। अन्यथा सुबुत्पत्तिरपि वक्तव्या स्यात्। भाष्येऽप्येवमेव। 'गोस्त्रियो'रिति ह्रस्वस्तु नातिदिश्यते, तस्योपसर्जनार्थनिमित्तत्वात्। **बहुव्रीहिवद्भावादेव [प्रातिपदिकत्वात्] इति**। मध्यमणिन्यायेनोभयान्वयि। समुदाये जातस्य प्रातिपदिकत्वस्यैकदेशविकृतन्यायेन सुब्लोपेऽपि सत्त्वम्, कार्यकालपक्षे तु तेनैव पुनः प्रातिपदिकत्वम्। **सुबिति**। न चाऽत्र द्वयोः सुपोर्लुकि तदर्थस्य प्रातिपदिकार्थेऽन्तर्भावेण द्वितीयाद्यनापत्तिः। व्याप्तिविशिष्टस्य कर्मत्वादिबोधार्थं तदुत्पत्तेः सुलभत्वात्। **एकैकस्मै इति**। द्वयोरपि सुपोर्लुकि पुनः सर्वादिपठितैकशब्दान्तत्वेन सर्वनामत्वात्स्मैभावः। **इह पुंवदिति**। बहुव्रीहिवत्त्वातिदेशेनोत्तरपदत्व-

इह पूर्वभागे पुंवद्भावादवग्रहे विशेषः। 'न बहुव्रीहौ' इत्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम्। तेनाऽतिदिष्टबहुव्रीहौ सर्वनामताऽस्त्येवेति प्राञ्चः। वस्तुतस्तु भाष्यमते प्रत्याख्यातमेतत्। सूत्रमतेऽपि बहुव्रीह्यर्थेऽलौकिके विग्रहे निषेधकं न तु बहुव्रीहावितीहातिदेशशङ्कैव नास्ति। एकैकस्मै देहि। आबाधे च ।८।१।१०। पीडायां द्योत्यायां द्वे स्तो बहुव्रीहिवच्च। गतगतः। विरहात्पीड्यमानस्येयमुक्तिः। बहुव्रीहि-

त.]प्रागेवोक्तत्वात्। **पूर्वभाग इति**। नतूत्तरभागेऽपि। तथाहि–द्विधाऽत्र पुंवद्भावः 'सर्वनाम्नो वृत्तिमात्रे' इति वा, 'स्त्रियाः पुंव'दिति वा। तत्राद्यः पूर्वभागस्यैव, 'भस्यैढे'ति ज्ञापकादित्युक्तम्। द्वितीयस्तु समानाधिकरणे परे विधीयते, न चोत्तरभागस्य समानाधिकरणपरत्वमस्तीति भावः। **अवग्रहे विशेष इति**। 'एकैकयेत्येकएकये'ति भवतीत्यर्थः। **एकैकस्मै इति**। ननु सुब्लोपपुंवद्भावाविव बहुव्रीहौ सर्वनामसंज्ञाऽभावोऽपि दृष्ट इत्ययमपि बहुव्रीहिवद्भावेनातिदिश्यताम्, तथाच स्मायादेशोऽत्र दुर्लभ इति चेत्। अत्राहुः—सुब्लोपपुंवद्भावाविव सर्वनामसंज्ञाऽभावः शास्त्रेण न दृष्टः। किं तु बहुव्रीहेर्गौणत्वात्सर्ववाचकत्वं न संभवतीति तदभावो दृष्ट इति नायमतिदिश्यते। 'न बहुव्रीहौ' इति शास्त्रं त्वलौकिकवाक्ये निषेधकं, नतु बहुव्रीहावित्युक्तत्वादिति। **आबाधे च**। **इहेति**। 'बहुव्रीहिवद्भावा'दित्यनुषज्यते। तथा च 'स्त्रियाः पुंव'दिति वर्तते। न च द्विरुक्तस्य परमुत्तरपदं नेति वाच्यं, 'बहुव्रीहिव'दित्यतिदेशबलेनैव उत्तरपदत्वस्यापि लाभात्। ननु बहुव्रीहिवद्भावेनोत्तरपदत्वलाभे सति 'नने'त्यत्र 'नलोपो नञः' इति कस्मान्न भवति। उच्यते—'नलोपो नञः' इत्यत्र उत्तरपदे इति [प्र]वर्तते, नञ इति च कार्यिणो निर्देशः, तत्र साक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते। यथा मद्रह्रदो भद्रह्रद इति। अत्र रेफस्य 'अचो रहाभ्या'मिति द्वित्वप्रसङ्गे आकरे उक्तं 'नेमौ रहौ कार्यिणौ किं तु निमित्तमेतौ द्विर्वचनस्ये'ति। नन्वेवमपि 'धूर्धूः' 'पन्थाःपन्थाः'

बा.]प्रातिपदिकत्वात्सुपोर्लुकि, पूर्वखण्डस्य पुंवत्त्वे कृते, समुदायात्पुनस्तृतीयोत्पत्तौ, एकैकयेति रूपम्। बहुव्रीहिवत्त्वाऽभावे तु इह समुदायस्य प्रातिपदिकत्वाऽभावात्सुपोर्लुक्, पूर्वखण्डस्य पुंवत्त्वं च न स्यात्, उत्तरपदपरकत्वाऽभावात्, समासचरमावयवस्यैव उत्तरपदत्वादिति भावः। 'एकैका'मित्यत्र उत्तरखण्डस्य 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वं बहुव्रीहिवत्त्वे सत्यपि न प्रवृत्तिमर्हति, पूर्वस्यैवेदं 'भस्याढे'ति लिङ्गादित्युक्तत्वादिति बोध्यम्। ननु सुपोर्लुकि पूर्वखण्डस्य एकाशब्दस्य पुंवत्त्वे सत्यसति वा वृद्धौ एकैकयेति सिध्यत्येवेत्यत आह—**इह पूर्वभागे इति**। **अवग्रहे इति**। समस्तपदस्य द्विधा करणे पूर्वखण्डोऽवग्रहः। 'तस्य पूर्वोऽवग्रहः' इति प्रातिशाख्यम्। 'एकैकयेत्येक-एकया' इतीष्यते पूर्वखण्डस्य पुंवत्त्वम्। बहुव्रीहिवत्त्वाऽभावे तु एकैकयेत्येका-एकयेति स्यादिति भावः। तैत्तिरीयास्तु 'एकैकयेत्येका- एकया' इत्येवाऽवगृह्णन्ति। 'एकं समासव'दित्येव सिद्धे बहुव्रीहिग्रहणं 'बहुव्रीहौ प्रकृत्या पूर्वपद'मिति स्वरार्थम्। ननु बहुव्रीहिवत्त्वे सति 'न बहुव्रीहौ' इति सर्वनामत्वनिषेधादेकैकस्मै देहीत्यादौ कथं सर्वनामकार्यमित्यत आह—**न बहुव्रीहावित्यत्रेति**। 'विभाषा दिक्समासे बहुव्रीहौ' इत्यतो बहुव्रीहिग्रहणानुवृत्त्यैव सिद्धे 'न बहुव्रीहौ' इत्यत्र पुनर्बहुव्रीहिग्रहणं मुख्यबहुव्रीहिलाभार्थम्। अतो बहुव्रीहिवदित्यतिदिष्टबहुव्रीहौ सर्वनामत्वनिषेधो नेत्यर्थः। तदाह—**तेनेति**। तदेवं प्राचीनोक्तं परिहारमुक्त्वा सिद्धान्तिमतेनाह—**वस्तुतस्त्विति**। **एतदिति**। 'न बहुव्रीहौ' इति सूत्रमित्यर्थः। एवं च बहुव्रीहावपि सर्वनामत्वस्य भाष्यसंमततया बहुव्रीहिवत्त्वातिदेशे सत्यपि सर्वनामत्वं निर्बाधमिति भावः। **सूत्रमतेऽपीति**। उपसर्जनत्वादेव बहुव्रीहौ सर्वनामत्वनिषेधे सिद्धे 'न बहुव्रीहौ' इति बहुव्रीह्यर्थके अलौकिकविग्रहवाक्ये एव समासात्प्राक्सर्वनामत्वं निषिध्यत इति प्रागेवोक्तम्। तस्मादिह बहुव्रीह्यतिदेशप्रयुक्तसर्वनामकार्याऽभावशङ्कैव नास्तीत्यर्थः। **एकैकस्मै देहीति**। इह द्वयोरपि सुपोर्लुकि पुनः सर्वादिपठितैकशब्दान्ततया सर्वनामत्वात्स्मैभाव इति भावः। **आबाधे च**। आबाधः=पीडा। तदाह—**पीडायामिति**। **गतगत इति**। 'प्रियां विना क्वाऽऽल' इति शेषः। आबाधं दर्शयितुमाह—**विरहादिति**। स्त्रीवियोगादित्यर्थः। **बहुव्रीहिवद्भावादिति**। 'गत' इत्यस्य द्विर्वचने सति बहुव्रीहिवत्त्वात्समुदायस्य प्रातिपदिकत्वेन सुपोर्लुकि समुदायात्सुबुत्पत्तिरित्यर्थः। **गतगतेति**। 'प्रिये'ति शेषः। इयमपि स्त्रीविरहात्पीड्यमानस्योक्तिः। एकस्या एव गमनकर्त्र्या द्विः कथनात्समानाधिकरणं स्त्रीलिङ्गमुत्तरपदमिति 'स्त्रियाः पुंव'दिति पुंवत्त्वम्,

शे.]स्यैकार्थ्येन भिन्नार्थत्वाऽभावेन च सामानाधिकरण्यस्य च सत्त्वात् 'स्त्रियाः पुंव'दित्यनेनेति भावः। अन्तोदात्तत्वानीति। 'अनुदात्तं चे'त्यस्याधिकारत्वेऽपि भाष्यप्रामाण्यान्नेहोपस्थितिः। अत एव बहुव्रीहिवद्भावे प्रकृतेऽपि कर्मधारयवद्भावः। किंच प्रियादिषु प्रतिषिद्धपुंवत्त्वस्यापि विधानार्थं कर्मधारयवद्भावः। अत एव पूर्वसूत्रयोः 'कर्मधारयव'दिति नोक्तम्, प्रियादिषु पुंवत्त्वापत्तेः। पूर्वसूत्रे तु न स्वरातिदेशो, भाष्यप्रामाण्यात्। अत एव तत्र किं प्रयोजनं, सुब्लोपपुंवद्भावावित्येव भाष्ये उक्तम्।

वद्भावात्सुब्लुक्। गतगता। इह पुंवद्भावः। **कर्मधारयवदुत्तरेषु** ।८।१।११। इत उत्तरेषु द्विर्वचनेषु कर्मधारयवत्कार्यम्। प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि। **प्रकारे गुणवचनस्य** ।८।१।१२। सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत्। 'कर्मधारयवदुत्तरेषु' इत्यधिकारात्। तेन पूर्वभागस्य पुंवद्भावः, 'समासस्ये'-त्यन्तोदात्तत्वं च। पटुपट्वी। पटुपटुः। पटुसदृशः। ईषत्पटुरिति यावत्। गुणोपसर्जनद्रव्यवाचिनः, केवलगुण-

त.]इत्यादौ 'ऋक्पूरब्धू'रिति समासान्तः स्यादिति चेन्न। 'समासाच्च तद्विषया'दित्यतः समासादित्यनुवर्तमाने 'समासान्ताः' इति पुनः समासग्रहणं हि समासाधिकारविहितो यः समासस्तत्परिग्रहार्थम्। तेनातिदेशिके समासे समासान्तानामप्रवृत्तिरिति दिक्। **कर्मधारयवदुत्तरेषु**। अधिकारेणैव सिद्धे 'उत्तरेषु' इति वचनं विस्पष्टार्थमिति वृत्तिः। **प्रकारे गुणवचनस्य**। यद्यपि प्रकारशब्दो भेदे सादृश्ये च वर्तते। बहुभिः प्रकारैर्भुङ्क्ते। बहुभिर्भेदैर्विशेषैरित्यवगमात्। ब्राह्मणप्रकारोऽयं माणवकः, ब्राह्मणसदृश इत्यवगमाच्च। तथापीह विवक्षितमाह—**सादृश्य इति**। व्याख्यानमेवाऽत्र शरणम्। **पुंवद्भाव इति**। 'पुंवत्कर्मधारये'ति सूत्रात्। तच्च कोपधादिष्वपि कालककालिकेत्यादिषु प्रवर्तते। तेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावोक्तिर्व्यर्थेति शङ्काया निरवकाश इति बोध्यम्। **पटुपटुरिति**। इह द्वित्वेन जातीयरो बाधा नेष्यते, 'पटुजातीय' इति वामनः। अन्यथा ब्राह्मणजातीय इत्यादावगुणवचनेऽपि भेदरूपेऽर्थे सावकाशो जातीयर् गुणवचनेषु सादृश्ये परेण द्वित्वेन बाध्येतेति भावः। गुणवचनस्येति किम्? अग्निर्माणवकः। सिंहो माणवकः। यद्यपीहाऽग्निसिंहशब्दाभ्यां गौण्या वृत्त्या तैक्ष्ण्यक्रौर्यादिगुणो गम्यते, तथापि प्रकारे वर्तमानस्येत्येव सिद्धे गुणवचनग्रहणसामर्थ्यात् मुख्यवृत्त्या गुणपराणामेव द्वित्वं, न त्वन्येषामित्याकरः। 'नवंनवं प्रीतिरहो करोती'त्यत्र वीप्सायां द्विर्वचनम्। अनेन तु द्विर्वचने सुब्लुक् स्यात्। 'नवनवा वनवायुभिरादधे' इत्यत्र त्वनेनैव द्विर्वचनं, नतु वीप्सायामिति पुंवद्भावः। कथं 'भीतभीत इव शीतमयूखः' इति भारविः। इवशब्देन सादृश्यस्योक्ततया इह प्रकारे द्वित्वाऽयोगात्। सत्यम्। भीतेभ्यो भीत इति कथंचिद्व्याख्येयम्। तेनाऽतिभीत इति फलितम्। 'आधिक्ये द्वे वाच्ये' इति वार्तिकेन भीतभीतादौ द्वित्वमिति दुर्घटादिभिरुक्तं समाधानं नादर्तव्यम्। तादृशस्य वार्तिकस्याऽप्रसिद्धत्वात्। अथ कथं 'खिन्नःखिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणःक्षीणः परिलघु पयः स्रोतसां चोपयुज्ये'ति मेघदूतः। पदार्थभेदस्याऽभावेन वीप्सार्थस्यासंभवादिति चेत्। अत्राहुः—एकस्यापि खेदावस्थासु क्षयावस्थासु च भेदं परिकल्प्य वीप्सा बोध्येति। अथ कथं 'मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वा'मिति मेघदूतः। वीप्सार्थस्याऽसंभवादनेनैव द्विर्वचने कृते 'मन्दमन्दमुदितः प्रययौ खं'मितिवत्सुब्लुक् स्यादिति चेत्। सत्यम्। स्वतो मन्दगामिनं त्वां पवनो मन्दं नुदतीति कथं-

बा.]बहुव्रीहिवत्त्वादुत्तरपदत्वस्यापि सत्त्वात्। तदाह—**इह पुंवद्भाव इति**। **कर्मधारयवदुत्तरेषु**। 'कार्यं स्या'दिति शेषः। कर्मधारयवत्त्वस्य फलमाह—**प्रयोजनमिति**। सुब्लोपादीनां प्रत्येकान्वयाभिप्रायमेकवचनम्। **अन्तोदात्तत्वानीति**। 'अनुदात्तं चे'त्यधिकृतमपि भाष्यप्रामाण्यान्नात्र सम्बध्यत इति भावः। **प्रकारे गुणवचनस्य**। प्रकारशब्दः सादृश्ये वर्तते, व्याख्यानादित्यभिप्रेत्याह—**सादृश्ये द्योत्य इति**। गुणवचनशब्देन 'क्षा कडारा'दिति सूत्रस्थभाष्यपरिगणिताः शब्दा गृह्यन्त इति 'वोतो गुणवचना'दित्यादौ प्रपञ्चितमिदम्। **तेनेति**। कर्मधारयवत्त्वेनेत्यर्थः। **पुंवद्भाव इति**। 'पुंवत्कर्मधारये'त्यनेने'ति शेषः। **पटुपट्वीति**। पट्वीशब्दस्य द्विर्वचने कर्मधारयवत्त्वात् 'पुंवत्कर्मधारये'ति पूर्वखण्डस्य पुंवत्त्वे रूपमिति भावः। यद्यपि बहुव्रीहिवत्त्वेऽपि 'स्त्रियाः पुंव'दिति पुंवत्त्वादिदं सिद्धं, तथापि कारिकेत्यादिकोपधादिष्वपि पुंवत्त्वार्थं 'कर्मधारयव'दिति वचनमिति भावः। **पटुपटुरिति**। 'वोतो गुणवचना'दिति ङीषभावे पुंसि च द्विर्वचने रूपम्। **पटुसदृश इति**। 'इत्यर्थ' इति शेषः। फलितमाह—**ईषत्पटुरिति**। इह गुणवचनशब्दस्य गुणोपसर्जनद्रव्यवाचित्वमेवेति भ्रमं

शे.]अत्र च 'कानि प्रयोजनानि सुब्लोपपुंवद्भावान्तोदात्तत्वानी'त्युक्तम्। प्रकारशब्दः सादृश्यवाची, व्याख्यानादित्याह—**सादृश्ये द्योत्ये इति**। **पुंवद्भाव इति**। 'पुंवत्कर्मधारये'त्यनेन। गुणवचनश्चेहाकडारसूत्रभाष्यपरिभाषित इति बोद्धव्यम्। **प्रकारः**=सादृश्यप्रतियोगित्वरूपमुपमानत्वम्। उपमानपट्वभिन्न इति बोध इति परे। **आनुपूर्व्ये इति**। वार्त्तिकेषु कर्मधारयवदिति न सम्बध्यते, तदुदाहरणेषु भाष्ये सुब्लोपाऽदर्शनात्। **संभ्रमः**=आदरो भयं च। **क्रियासमभिहारे चेति**। पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः। लोड्वेदम्। अत एव 'क्रियासमभिहारे लो'डिति सूत्रे 'क्रियासमभिहारे लोण्मध्यमैकवचनस्य द्वे भवतः' इति पठित्वा तस्य लोड्ज्ञापकत्वमुक्तम्। अष्टमे चास्य लोड्वेवोदाहरणमुपन्यस्तम्। अत एव यङन्ते न द्वित्वम्। यत्तु लोटः समुच्चयादिष्वपि विधानेन केवलस्य तद्द्योतने सामर्थ्याऽभावाल्लोटि द्वित्वम्। यङन्तु तदतिरिक्ताऽर्थाभावाद्यङैव तद्द्योतनसम्भवाद्यङन्ते न द्वित्वमिति, तन्न। अकजादेरनेकत्र द्योत्येऽर्थे विधानेऽपि केवलस्यैव प्रकरणादिना तत्तदर्थद्योतकताया

वाचिनश्चेह गृह्यन्ते। शुक्लशुक्लं रूपं। शुक्लशुक्लः पटः। * आनुपूर्व्ये द्वे वाच्ये। मूलेमूले स्थूलः। * संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः। सर्प सर्प बुध्यस्व बुध्यस्व। सर्प सर्प सर्प। बुध्यस्व बुध्यस्व बुध्यस्व। * क्रियासमभिहारे च। लुनीहिलुनीहीत्येवायं लुनाति। 'नित्यवीप्सयो'रिति सिद्धे भृशार्थे द्वित्वार्थमिदम्, पौनःपुन्येऽपि लोटा सह समुच्चित्य द्योतकतां लब्धुं वा। * कर्मव्यतिहारे

त.] चिन्त्याख्येयम्। सिद्धस्य गतेश्चिन्तनीयत्वात्। शुक्लशुक्लमिति। केवलगुणवाचिन उदाहरणमिति ध्वनयति— रूपमिति। आनुपूर्व्ये इति। वीप्साऽभावादयमारम्भः। मूलेमूले इति। 'अग्रेअग्रे सूक्ष्म' इत्यप्युदाहर्तव्यम्। एकस्य वस्तुनो वेणुदण्डादेरेकमेव मुख्यं मूलमग्रं च। इतरेषां भागानामापेक्षिकोऽग्रमूलव्यपदेशः। स्थौल्यसौक्ष्म्ये अपि नैकरूपे, किं तर्हि यथामूलमुपचीयते स्थौल्यं, यथा अग्रं सौक्ष्म्यं तथा नेतरे भागा इति वीप्साया असंभवः। 'मूले मूले पथि विटपिना'मित्यत्र तु वीप्सायां द्विर्वचनम्। एतच्च हरदत्तग्रन्थे स्पष्टम्। न्यायसिद्ध इति। यावद्भिः शब्दैः संबोध्याऽर्थमवगच्छति तावतां प्रयोक्तव्यत्वादिति भावः। पौनःपुन्य इति। पुनःपुनर्भवितरि वर्तमानात्पुनः-पुनःशब्दाद्भावे प्रत्ययः। लोटा सह समुच्चित्येति। नन्वत्र लोटा सह समुच्चित्य यथा द्विर्वचनं भवति; तथा क्रियासमभिहारे यङि यङा सह समुच्चित्य द्विर्वचनं स्यात्-पापच्यतेपापच्यते बोभूयतेबोभूयते इति। अत्राहुः—लोट् क्रियासमभिहारं व्यभिचरति, समुच्चयेऽपि जायमानत्वात्। ततश्च लोट्द्विर्वचनयोरेव तद्द्योतकत्वं, न त्वेकैकस्येति युक्तं लोडन्तस्य द्विर्वचनम्। यङ् तु क्रियासमभिहारं न व्यभिचरतीति द्विर्वचनं विनैव तस्य द्योतकत्वम्। तेन तदन्तस्य न द्विर्वचनमिति। कर्मव्यतिहार इति। क्रियाविनिमय इत्यर्थः।

बा.] निरस्यति—गुणोपसर्जनेति। शुक्लशुक्लं रूपमिति। शुक्लसदृशमित्यर्थः। ईषच्छुक्लमिति यावत्। एवं शुक्लशुक्लः पट इति बोध्यम्। आनुपूर्व्ये इति। अत्र वार्तिके 'कर्मधारयव'दिति न सम्बध्यते, तदुदाहरणे भाष्ये सुब्लोपाऽदर्शनादित्यभिप्रेत्योदाहरति—मूलेमूले इति। पूर्वपूर्वो मूलभाग उत्तरोत्तरमूलभागापेक्षया स्थूल इति यावत्। संभ्रमेणेति। वार्तिकमिदम्। संभ्रमः=भयादिकृता त्वरा, तेन प्रवृत्तौ गम्यमानायां यथेष्टम्=इच्छानुसारेण अनेकधाशब्दः प्रयोक्तव्य इति वक्तव्यमित्यर्थः। अनेकधेत्युक्तेर्द्वे इति निवर्तते। 'यथेष्ट'मित्युक्तेरसकृत्त्वेऽप्येकस्य प्रयोगः स्यादिति शङ्कां निरस्यति—न्यायसिद्ध इति। यावद्वारं प्रयोगे सति बोद्धा अर्थं प्रत्येति, तावद्वारमेव प्रयोगः। बोधात्मकफलपर्यवसायित्वाच्छब्दप्रयोगस्येत्यर्थः। एतच्च भाष्ये स्पष्टम्। अत्रापि कर्मधारयवत्त्वानतिदेशाच्च सुब्लुक्, भाष्ये तथैवोदाहरणात्। क्रियासमभिहारे चेति। वार्तिकमिदम्। 'द्वे स्त' इति शेषः। पौनःपुन्यं भृशत्वं च क्रियासमभिहारः। लोडन्तविषयमेवेदम्। 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमो'रिति सूत्रभाष्ये क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे भवत इति वक्तव्यमिति पाठमभिप्रेत्योदाहरति— लुनीहिलुनीहीत्येवायं लुनातीति। 'लूञ् छेदने' अस्मात् 'क्रियासमभिहारे लोट्, लोटो हिस्वौ' इति लोट्। तस्य हीत्यादेशः। श्नाविकरणः। 'लुनीही'त्यस्य अनेन द्विर्वचनम्। 'यथाविध्यनुप्रयोगः पूर्वस्मि'न्नित्यनुप्रयोगः। तस्माल्लडादयः। अतिशयेन पुनर्वा लवनं लुनीहीति द्विरुक्तस्यार्थः। एककर्तृकं लवनमनुप्रयोगस्याऽर्थः। इतिशब्दस्त्वभेदान्वये तात्पर्यं ग्राहयतीत्यादि मूल एव लकारार्थप्रक्रियायां स्फुटीभविष्यति। तथा च अतिशयितमेककर्तृकं लवनमिति फलितोऽर्थः। नित्येति। 'नित्यवीप्सयो'रिति पौनःपुन्ये द्विर्वचने सिद्धेऽपि भृशार्थे द्विर्वचनार्थमिदं वार्तिकमित्यर्थः। नन्वस्य भृशार्थ एव द्विर्वचनफलकत्वे 'भृशे चे'त्येव सिद्धे 'क्रियासमभिहारे' इति व्यर्थमित्यत आह—पौनःपुन्येऽपीति। लुनीहि—लुनीहीत्यत्र पौनःपुन्ये लोटो द्विर्वचनस्य च समुच्चयार्थमिति यावत्। अन्यथा लोटैव पौनःपुन्यस्य द्योतितत्वात्तत्र नित्यवीप्सयोर्द्विर्वचनस्य प्रवृत्तिर्न स्यादित्यर्थः। एवं च 'धातोरेकाचः' इति पौनःपुन्ये यङन्ते 'पापच्यते' इत्यादौ न द्विर्वचनमित्यन्यत्र विस्तरः। कर्मव्यतिहारे इति। क्रिया-

शे.] दृष्टत्वात्। भृशार्थे यङि ततः पौनःपुन्यविवक्षायान्तु 'नित्यवीप्सयो'रिति द्वित्वं भवत्येव। पापच्यते पापच्यते=भृशं पाकं पुनःपुनः करोतीत्यर्थः। नन्वस्य भृशार्थे द्वित्वफलकत्वे भृशार्थे इत्येव सिद्धे क्रियासमभिहारपदं व्यर्थमत आह—पौनःपुन्येऽपीति। इदमेव ज्ञापकं पौनःपुन्यस्य केनचित् द्योतने सौत्रद्वित्वाऽप्रवृत्तेरिति पौनःपुन्ययङन्ते न सौत्रं द्वित्वमिति भावः। 'भुक्त्वा भुक्त्वा' 'भोजं भोज'मित्यादौ तु 'आभीक्ष्ण्ये द्वे वाच्ये' इति भाष्यपठितवचनान्तरेण द्वित्वं। मूले त्वेतत्कृदन्ते वक्ष्यते। पुनःपुनः क्रियाया विच्छेदेनोत्पत्तिः=आभीक्ष्ण्यम्। तदेव च नित्यत्वम्। 'भुक्त्वा भुक्त्वे'त्यादौ विच्छेदिका क्रिया चोपात्ता व्रजनादिरूपैव गृह्यते, अनुपस्थितकल्पने मानाऽभावात्। एवञ्च क्त्वाद्यन्तद्वित्वेनैव व्रजनाद्याभीक्ष्ण्यस्य द्योतितत्वात्क्त्वाद्यन्तसमभिव्याहारे तिङन्तस्य द्वित्वम्। जीवत्येवायमित्यर्थे जीवति जीवतीत्यादौ कमलानि कमलानीतिवदेकं जीवतिपदं दीर्घाऽविच्छिन्नजीव-

सर्वनाम्नो द्वे वाच्ये। समासवच्च बहुलम्। बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्। ❀ **असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः**। अन्योन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्यान्। अन्योन्येन कृतम्। अन्योन्यस्मै दत्तमित्यादि। 'अन्योन्येषां पुष्करैरामृशन्त' इति माघः। एवं परस्परम्। अत्र कस्कादित्वाद्विसर्जनीयस्य सः। इतरेतरम्। इतरेतरेणेत्यादि। ❀ **स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वा वक्तव्यः**। अन्योन्याम्, अन्योन्यम्, परस्पराम्, परस्परम्, इतरेतराम्

---

त.] **द्वे इति**। नित्यमेवेदं द्वित्वम्, बाहुलकं तु समासवद्भावस्यैव। **सुपः सुर्वक्तव्य इति**। अत्र कैश्चिदुक्तं-द्वितीयादीनामेवेदं स्वादेशविधानम्। अतएवोत्तरदलेऽपि द्वितीयादय एव न तु प्रथमा, तत्राप्येकवचनमेव, न तु वचनान्तरमिति। तदपाणिनीयम्। भाष्यादावनुक्तत्वात्। तदेतद्ध्वनयन् वचनान्तरमुदाहरति—**अन्योन्यावन्योन्यानिति। माघ इति**। स च भाष्यानुगुण एवेति भावः। एतेनाऽर्वाचीनमतं कवयोऽपि नाद्रियन्त इत्युक्तं भवति। भारविश्चाह—'क्षितिनभःसुरलोकनिवासिभिः कृतनिकेतमदृष्टपरस्परै'रिति। अत्राऽदृष्टः परस्परो यैरिति विग्रहः। यदि तु द्वितीयादीनामेव स्वादेशविधानं न तु प्रथमायाः, तर्ह्ययं प्रयोगो न सिध्येदिति दिक्। **अन्योन्यमिति**।

---

बा.] विनिमयः=कर्मव्यतिहारः, तस्मिन्गम्ये सर्वनाम्नो द्वे स्तः। ते च द्विरुक्ते पदे बहुलं समासवदित्यर्थः। अत्र 'बहुल'मिति समासवदित्यत्रैवान्वेति। द्विर्वचनं तु नित्यमेव। **अन्यपरयोरिति**। अन्यशब्दपरशब्दयोरेव बहुलं समासवत्त्वम्, इतरशब्दस्य तु नित्यमेवेत्यर्थः। अत एव अन्यशब्दस्य समासवत्त्वरहितमेव, इतरशब्दस्य तत्सहितमेवोदाहरणं भाष्ये दृश्यते। तथा 'परस्परोपपदाच्चे'ति वार्तिकप्रयोगात्परशब्दस्यापि समासवत्त्वाऽभावो गम्यत इति भावः। एवंच क्रियासमभिहारे अन्यशब्दस्य परशब्दस्य च नित्यं द्विर्वचनम्। द्विरुक्तयोस्तु समासवत्त्वं बहुलम्। इतरशब्दस्य तु तदुभयमपि नित्यम्। एतत्त्रयव्यतिरिक्तसर्वनामशब्दस्य तु नेदं द्वित्वं, बहुलग्रहणादिति स्थितिः। **असमासवद्भावे इति**। इदमन्यपरशब्दयोरेव, इतरशब्दस्य समासवत्त्वस्यैवोक्तत्वात्। **सुपः सुरिति**। 'सु'बिति प्रत्याहारः। सप्तानामपि विभक्तीनां पूर्वपदस्थानां प्रथमैकवचनं सु इत्यादेशो वाच्य इत्यर्थः। इदं द्वित्वादिविधानं प्रथमैकवचनमात्रविषयमिति केचित्। तदेतद्भाष्यविरुद्धं, भाष्ये द्वितीयादिविभक्तेरुदाहृतत्वादित्यभिप्रेत्य द्वितीयादिविभक्तीरुदाहरति—**अन्योन्यं विप्रा नमन्तीत्यादि**। इह अन्यम् अन्यौ इत्यादीनां द्वित्वे पूर्ववत्सुपः सुः। प्रथमैकवचनस्यैवेदं द्वित्वादीत्येतन्न कविसंमतमित्याह—**अन्योन्येषामित्यादि, माघ इत्यन्तम्**। 'परस्पर'मित्यत्र विसर्गस्य सत्त्वापवादमुपध्मानीयमाशङ्क्य आह—**कस्कादित्वादित्यादि**। **इतरेतरमिति**। इतरः इतरावित्यादीनां द्वित्वे समासवत्त्वात्, सुपोर्लुकि समुदायात्पुनः सुबुत्पत्तिरिति भावः। **स्त्रीनपुंसकयोरिति**। स्त्रीनपुंसकयोर्विंयमानानामन्यपरेतरपदानां कर्मव्यतिहारे द्वित्वे उत्तरपदस्थविभक्तेरामित्यादेशो बहुलं वक्तव्य इत्यर्थः। **अन्योन्यामित्यादि**। अन्योन्याम्, अन्योन्यं वा इमे ब्राह्मण्यौ कुले वा भोजयतः, परस्परां परस्परं वा इमे ब्राह्मण्यौ कुले वा भोजयतः। इतरेतराम्, इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयत इत्यन्वयः। तत्र 'अन्या'मित्यस्य द्वित्वे 'दलद्वये टाबभाव' इति वक्ष्यमाणतया पुंवत्त्वाट्टापो निवृत्तौ समासवत्त्वाऽभावात्सुपोरलुकि पूर्वपदस्थविभक्तेः सुभावे रुत्वे 'अतो रोरप्लुता'दित्युत्वे आद्गुणे उत्तरपदस्थविभक्तेरनेन आम्भावे अन्योन्यामिति रूपम्। आम्भावविरहे तु पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे पुंलिङ्गवदेव अन्योन्यमिति रूपम्। इयं ब्राह्मणी अन्यां ब्राह्मणीं भोजयति, अन्या त्विमामित्येवं विनिमयेन ब्राह्मण्यौ भोजयत इत्यर्थः। इदं कुलं कर्तृ अन्यत्कुलं भोजयति, अन्यत्कुलं कर्तृ इदं कुलमित्येवं विनिमयेन कुले भोजयत इत्यर्थः। अत्राऽन्यच्छब्दस्य नपुंसकलिङ्गस्य द्वित्वे पूर्वपदस्थायाः विभक्तेः सुभावे उत्तरपदस्थविभक्तेराम्भावे अन्योन्यामिति रूपम्। आम्भावविरहे तु 'क्लीबे चाद्ड्विरहः स्वमो'रिति वक्ष्यमाणतया पुंवत्त्वादद्डादेशाऽभावे अन्योन्यमिति पुंवदेव रूपमिति बोध्यम्। एवं स्त्रीत्वे परा-

---

शे.] नलक्षकमिति तत्र न शास्त्रीयं द्वित्वम्। कर्मव्यतिहारश्च क्रियाविनिमयः। नित्यमेवेदं द्वित्वम्। बाहुलकन्तु समासवद्भावस्यैव। तदाह—**बहुलग्रहणादिति**। अत एवाऽन्यशब्दस्य समासवद्भावरहितमेव, इतरशब्दस्य तत्सहितमेवोदाहरणं भाष्ये। परस्परशब्दे 'परस्पराच्चे'ति वार्तिकप्रयोगात्समासवद्भावाऽभावः। [तत्त्वातिदेशस्य तु न कल्पकमिति भावः]। अन्यपरेतरव्यतिरिक्तेषु तु नास्य प्रवृत्तिः, बाहुलकादेव। अन्येषां कर्मव्यतिहाराऽबोधकत्वाच्च। अन्योन्यादौ कर्मव्यतिहारः स्फुट एव। [**अन्योन्याविति**। प्रथमाद्विवचनम्]। **अन्योन्यस्मै इति**। 'अन्यस्मै' इत्यस्य द्वित्वे पूर्वपदस्थसुपः सौ रूपसिद्धिः। **इतरेतरेषामित्यादौ** तु 'एकैकस्मै' इत्यत्रोक्तरीत्या सर्वनामत्वम्। वार्तिकेषु कर्मधारयवत्पदाऽसम्बन्धबोधनाय 'समासव'दित्युक्तिः। सुब्लुग्विधिनैव सिद्धे समास इत्युक्तिराम्रेडितानुदात्तत्वा[illegible]र्था। **कस्कादित्वादिति**। 'कुप्वोः ᳲक ᳲपौ च' इति बाधित्वेति भावः।

इतरेतरं वा, इमे ब्राह्मण्यौ, कुले वा भोजयतः। अत्र केचित्—आमादेशो द्वितीयाया एव, भाष्यादौ तथैवोदाहृतत्वात्। तेन स्त्रीनपुंसकयोरपि तृतीयादिषु पुंवदेव रूपमित्याहुः। अन्ये तूदाहरणस्य दिङ्मात्रत्वात्सर्वविभक्तीनामामादेशमाहुः।

**दलद्वये टाबभावः क्लीबे चादड्विरहः स्वमोः। समासे सोरलुक्चेति सिद्धं बाहुलकाश्रयम्॥**

तथाहि—अन्योन्यं परस्परमित्यत्र दलद्वयेऽपि टाप् प्राप्तः। न च 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावः, अन्यपरयोरसमासवद्भावात्। नच द्विर्वचनमेव वृत्तिः, 'यां यां प्रियः प्रैक्षत कातराक्षी सा सा' इत्यादावतिप्रसङ्गात्। अन्योन्यमितरेतरमित्यत्र च 'अड्डुतरादिभ्यः' इत्यद्ड् प्राप्तः। 'अन्योन्यसंसक्तमहस्त्रियामम्' 'अन्योन्याश्रयः' 'परस्पराक्षिसादृश्यम्' 'अदृष्टपरस्परै'रित्यादौ सोर्लुक्च प्राप्तः। सर्वं बाहुलकबलेन

त.]न चाऽत्र आमभावेऽपि टाप् स्यादिति शङ्क्यम्। 'बहुलग्रहणाट्टाबभावः' इत्यनुपदमेव वक्ष्यमाणत्वात्। स्त्रीनपुंसकयोस्तृतीयादिषु पुंवदिति प्राचो ग्रन्थं परिष्कुर्वन्नाह—**अत्र केचिदिति**। वस्तुस्थितिमाह—**अन्ये त्विति। अतिप्रसङ्गादिति**। तथा च एकशेषप्रतिबन्धाद्द्विर्वचनस्यापि वृत्तित्वमाश्रित्य तद्बलेन पुंवद्भावो न शङ्क्यो, लक्ष्यविरोधात्। 'कारकं चेद्विजानीयाद्यां यां मन्येत सा भवे'दिति 'अकथित'सूत्रस्थ-'यांया'मिति भाष्यप्रयोगविरोधाच्चेति भावः। नव्यास्तु—'यांयां प्रियः प्रैक्षते'त्यादिमाघप्रयोगे 'सासा' इति द्विर्वचनमयुक्तम्, द्विरुक्तार्थस्यैन्यनेनैव परामर्ष्टुं शक्यत्वात्। अतएव भाष्ये 'यांयां मन्येत सा भवे'दित्येवोक्तमित्याहुः। **सोर्लुक् च प्राप्त**

बा.]मिति पदस्य द्वित्वे दलद्वयेऽपि पुंवत्त्वाट्टापो निवृत्तौ पूर्वोत्तरपदस्थविभक्त्योः क्रमेण सुभावे आम्भावे च परस्परामिति रूपम्। आम्भावविरहे तु द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ पूर्वपदस्थविभक्तेः सुभावे परस्परमिति रूपम्। नपुंसकत्वे तु परमित्यस्य द्वित्वे पूर्वपदस्थविभक्तेः सुभावे उत्तरपदस्थविभक्तेराम्भावे परस्परामिति रूपम्। आमभावे तु द्वित्वे पूर्वपदस्थविभक्तेः सुभावे परस्परमिति रूपम्। इतरामित्यस्य द्वित्वे पुंवत्त्वाट्टापो निवृत्तौ उत्तरपदस्थविभक्तेराम्भावे समासवत्त्वात्पूर्वपदस्थविभक्तेर्लुकि इतरेतरामिति रूपम्। आम्भावविरहे तु इतरेतरमिति रूपम्। नपुंसकस्य तु इतरच्छब्दस्य द्वित्वे पुंवत्त्वाददड्डादेशविरहे पूर्वपदस्थविभक्तेर्लुकि उत्तरपदस्थविभक्तेराम्भावतदभावाभ्यां रूपद्वयम्। अत्र भाष्यादौ द्वितीयाविभक्त्यन्तस्योदाहरणादितरविभक्तिषु आम्भावो न भवतीति प्राचीनमतमाह—**अत्र केचिदिति। तेनेति**। द्वितीयेतरविभक्तिषु आम्भावविरहेणेत्यर्थः। **पुंवदेवेति**। आम्भावविरहे सति बहुलग्रहणात्पुंवत्त्वे टाबभावे प्रथमतृतीयादिविभक्तिषु पुंवदेव रूपम्। नपुंसकत्वे प्रथमतृतीयादिविभक्तिषु आम्भावविरहात्प्रथमैकवचस्य इदं पुंवदेव रूपमित्यर्थः। सिद्धान्तमाह—**अन्ये त्विति। दिङ्मात्रत्वादिति**। दिक्प्रदर्शनमात्रत्वादित्यर्थः। उपलक्षणत्वादिति यावत्। अथाऽत्र बहुलग्रहणानुवृत्तेः प्रयोजनकथनपरप्राचीनश्लोकमाह—**दलद्वये इति**। स्त्रीलिङ्गेष्वन्यपरेतरशब्देषु कर्मव्यतिहारे द्वित्वे सति पूर्वोत्तरखण्डयोः पुंवत्त्वाट्टाब्निवृत्तिरित्यर्थः। यद्यपि 'इतरेतर'मित्यत्र समासवत्त्वात्सर्वनाम्नो वृत्तिमात्रे इति पुंवत्त्वादेव पूर्वखण्डे टाबभावः सिद्धस्तथाप्युत्तरखण्डे टाबभावार्थं बाहुलकाश्रयणमिति भावः। **क्लीबे इति**। 'अन्योन्य'मित्यादावदड्डादेशविरह इत्यर्थः। **समासे सोरिति**। कृतद्वित्वस्य अन्येन समासे पूर्वखण्डस्थस्येत्यर्थः। **तथाहीति**। यथेदं स्पष्टं भवति, तथा उदाहृत्य प्रदर्श्यत इत्यर्थः। ननु पूर्वदले 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वेनैव टाब्निवृत्तेः सिद्धत्वात्तद्विषये बहुलग्रहणं नादर्तव्यमित्याशङ्क्य निराकरोति—**न चेति**। 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वस्याऽत्र न प्रसक्तिरित्यर्थः। कुत इत्यत आह—**अन्यपरयोरिति**। 'समासवच्च बहुल'मिति समासवत्त्वमितरशब्दमात्रविषयं, न त्वन्यपरशब्दविषयमिति प्रागुक्तमित्यर्थः। ननु मास्तु समासवत्त्वं, तथापि 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वं दुर्वारम्, द्विर्वचनस्य वृत्तित्वादित्याशङ्क्य निराकरोति—**नच द्विर्वचनमेव वृत्तिरिति**। 'कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः' इति परिगणनादिति भावः। द्विर्वचनस्य वृत्त्यन्तर्भावे बाधकमाह—**यां या मिति**। द्विर्वचनस्य

शे.]सिद्धान्तिमतमाह—**अन्ये त्विति**। तदुक्तं वृद्धैः-'न चोदाहरणमादरणीय'मिति। तदतिरिक्तोदाहरणाऽभाव इत्येवंपरतया नादरणीयमित्यर्थः। **दलद्वये इति**। समासवद्भावे, तदभावे चेत्यर्थः। इतरेतरमित्यादौ पूर्वखण्डस्य 'सर्वनाम्नः' इति पुंवत्त्वेन यद्यपि सिद्धन्तथाप्युत्तरखण्डे टाबभावार्थं बाहुलकमावश्यकम्। **क्लीबे चेति**। अन्योन्यमित्यत्र पूर्वपदे प्रासादड्विरह इत्यर्थः। उत्तरखण्डे तु अस्मद्वक्ष्यमाणाऽन्यमतरीत्यापि तदभावः। **समासे सोरिति**। कृतद्वित्वस्याऽन्येन समासे पूर्वखण्डस्थस्येत्यर्थः। इदमुपलक्षणं परस्परमित्यत्र पूर्वपदे नपुंसके सोरमभावस्य, परस्परस्मा इत्यादौ व्यवस्थाऽभावेऽपि सर्वनामत्वस्य च। **इतरेतरमित्यत्र चेति**। डतरादिसूत्रे 'सर्वादीनी'ति सूत्रस्थभाष्यरीत्या विहितविशेषणाद्दुण्णेत्यन्ये। **सोर्लुक्चेति**। स्वादेशविधानं

समाधेयम् । प्रकृतवार्तिकभाष्योदाहरणं, 'स्त्रिया'मिति सूत्रे 'अन्योन्यसंश्रयं त्वेत'दिति भाष्यं चात्र प्रमाणमिति । **अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्** ।८।१।१३। प्रियप्रियेण ददाति । प्रियेण वा । सुखसुखेन ददाति । सुखेन वा । द्विर्वचने कर्मधारयवद्भावात्सुब्लुकि पुनस्तदेव वचनम् । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः । **यथास्वे यथायथम्** ।८।१।१४। यथास्वमिति वीप्सायामव्ययीभावः । योऽयमात्मा यच्चात्मीयं तद्यथास्वम् । तस्मिन्यथाशब्दस्य द्वे, क्लीबत्वं च निपात्यते । यथायथं ज्ञाता । यथास्वभावमित्यर्थः । यथात्मीयमिति वा । **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** ।८।१।१५। द्विशब्दस्य द्विर्वचनं, पूर्वपदस्याऽम्भावोऽत्वञ्चोत्तरपदस्य नपुंसकत्वं च निपात्यते एष्वर्थेषु । तत्र रहस्यं द्वन्द्वशब्दस्य

---

त.] **इति** । सुपः स्वादेशविधानस्याऽन्योन्यं परस्परमित्यत्र केवले चरितार्थत्वादिति भावः । **योऽयमात्मेत्यादि** । आत्मात्मीययोरपि स्वशब्दवाच्यत्वात् । **यथायथमिति** । 'न लोके'त्यनेन कृयोगषष्ठीनिषेधः, ज्ञातेत्यस्य तृन्नन्तत्वात् । 'यो य आत्मा' इत्यर्थे विद्यमानयथायथशब्दस्यार्थमाह—**यथास्वभावमिति** । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च'त्यमरः । **पूर्वपदस्येति** । द्विऔ द्विऔ इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवस्यैकारस्येत्यर्थः । **अत्वमुत्तरपदस्येति** । उत्तरपदावयवस्यैकारस्येत्यर्थः । **नपुंसकत्वं चेति** ।

---

बा.]वृत्त्यन्तर्भावे 'यांयां प्रियः प्रैक्षत कातराक्षी सासा ह्रिया नम्रमुखी बभूवे'त्यत्र श्लोके यांयामित्यत्र सासेत्यत्र च 'सर्वनाम्नो वृत्तिमात्रे' इति पूर्वखण्डस्य पुंवत्त्वं स्यादित्यर्थः । 'क्लीबे चादुड्विरहः' इत्यस्योदाहरति-**अन्योऽन्यमिति** । ननु 'समासे सोरलुक् चे'ति कथम्, अन्यपरशब्दयोः समासवत्त्वाऽभावादित्याशङ्क्य कृतद्वित्वस्यान्येन समासे पूर्वखण्डस्थस्य सोरलुगिति तदर्थमभिप्रेत्य तथैवोदाहरति—**अन्योन्यसंसक्तमिति** । अन्योऽन्येन संसक्तमिति तृतीयासमासः । अहश्च त्रियामा चेति समाहारद्वन्द्वः । अहश्च रात्रिश्च अन्योन्येन संयुक्तमित्यर्थः । **अन्योन्याश्रय इति** । अन्योऽन्यस्य आश्रय इति षष्ठीसमासः । **परस्पराक्षिसादृश्यमिति** । अक्ष्णा सादृश्यमक्षिसादृश्यम् । परस्परस्याऽक्षिसादृश्यमिति विग्रहः । **अपरस्परैरिति** । न परस्परे अपरस्परे, तैरिति विग्रहे एषु कृतद्वित्वेषु समासावयवेषु पूर्वखण्डस्थस्य सुबादेशस्य सोर्लुक् प्राप्त इत्यर्थः । सुभावविधानं तु अन्योन्यमित्यादावसमासे चरितार्थमिति भावः । ननु बहुलग्रहणादेतत्समाधेयमित्यत्र किं प्रमाणमित्यत आह—**प्रकृतवार्तिकेति** । 'स्त्रीनपुंसकयो'रिति प्रकृतवार्तिके 'अन्योन्यमिमे ब्राह्मण्या'विति, 'इतरेतरमिमे कुले' इति चोदाहरणात् 'दलद्वये टाबभावः क्लीबे चादुड्विरहः स्वमो'रिति विज्ञायते । 'स्त्रिया'मिति सूत्रे 'अन्योन्यसंश्रयं त्वेत'दिति भाष्यप्रयोगात्समासे सोरलुगिति विज्ञायत इत्यर्थः । **अकृच्छ्रे** । कृच्छ्रं-कष्टम् । अकृच्छ्रम्-अनायासः । तस्मिन्वर्तमानयोः प्रियसुख इत्यनयोर्द्वे वा स्तः । **कर्मधारयवद्भावादिति** । 'कर्मधारयवदुत्तरेषु' इत्यधिकारादिति भावः । 'समासवच्च बहुल'मित्यतः समासवदित्यनुवृत्तिस्तु न शङ्क्या, तस्य वार्तिकस्थत्वात्, एवं च 'प्रियेणे'त्यस्य 'सुखेने'त्यस्य च द्वित्वे सति कर्मधारयवत्त्वात्सुपोस्तृतीयैकवचनयोर्लुकि पुनः समुदायात्तृतीयैकवचनमिति फलितम् । **यथास्वे यथायथम्** । **वीप्सायामिति** । कार्त्स्न्येन संबन्धो वीप्सेत्युक्तम् । स्वशब्दार्थगतकार्त्स्न्ये द्योत्ये यथाशब्दस्य स्वशब्देनाऽव्ययीभावं इत्यर्थः । कृत्स्नश्चासौ स्वश्चेत्यस्वपदविग्रहः, नित्यसमासत्वात् । स्वशब्दस्तु आत्मात्मीयज्ञातिधनवाची । इह तु आत्मात्मीयवाच्येव गृह्यते, न तु ज्ञातिधनवाची, व्याख्यानादित्यभिप्रेत्य विग्रहवाक्यस्य फलितमर्थमाह—**द्वे इति** । 'स्व' इति शेषः । निपातनादिति भावः । न च 'नित्यवीप्सयो'रित्येव वीप्सया द्वित्वमिह सिद्धमिति शङ्क्यम्, द्वित्वविषयस्य शब्दस्य लक्षणया कार्त्स्न्यविशिष्टे वृत्तावेव वीप्सायां द्विर्वचनविधानात् । अन्यथा 'सर्वो घटः' इत्यादौ सर्वशब्दस्यापि द्वित्वापत्तेरिति भावः । **क्लीबत्वमिति** । 'यथा-यथा इति समुदायस्ये'ति शेषः । अन्यथा अव्ययत्वादलिङ्गत्वं स्यादिति भावः । एवं च कृतद्वित्वस्य नपुंसकह्रस्वत्वं च फलितम् । **यथायथं**

---

शे.]त्वन्योन्यमित्यादावसमासे चरितार्थमिति भावः । **प्रकृतवार्तिकेति** । 'स्त्रीनपुंसकयो'रिति वार्तिके । 'अन्योन्यमिमे ब्राह्मण्यौ' 'इतरेतरमिमे कुले' इत्यादि तत्रोदाहृतम् । **स्त्रियामितीति** । 'अन्योन्यसहाया' इति 'सर्वस्य द्वे' इति सूत्रस्थभाष्यप्रयोगोऽपि बोध्यः । 'अन्योन्यप्रादुर्भावा'दिति 'अपादाने' इति सूत्रस्थभाष्यप्रयोगे कर्मव्यतिहाराऽभावः स्पष्ट एव । **अकृच्छ्रे इति** । तत्र वर्तमानयोस्तदर्थकयोरित्यर्थः । **पुनस्तदेवेति** । अनुवादकविभक्तेर्न्याय्यत्वादिति भावः । यस्य दाने क्लेशसंभावना तत्रैव तदभावप्रतिपादनं सफलमित्याशयेनाह—**अतिप्रियमिति** । **यच्चेति** । स्वशब्दस्योभयार्थकत्वात् । ज्ञातिधनवाची तु न गृह्यते, अनभिधानात् । **द्वे इति** । वीप्सायां यथाशब्दस्य वृत्तौ द्वित्वाऽप्राप्त्या तदपि निपात्यते इति भावः । **क्लीबत्वञ्चेति** । तेन ह्रस्वसिद्धिः । येन कृतद्वित्वस्याऽव्ययत्वाऽभावसङ्ग्रहः । **ज्ञातेत्यस्य** तृन्नन्तत्वात् षष्ठी न । तृचि 'यथायथस्य ज्ञाते'त्येव । **यथास्वभावमिति** । यथास्व-

वाच्यम् । इतरे विषयभूताः । द्वन्द्वं मन्त्रयते । रहस्यमित्यर्थः । मर्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनीयन्ति । माता पुत्रेण मिथुनं गच्छति,पौत्रेण,प्रपौत्रेणापीति मर्यादार्थः । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्ताः । द्विवर्गसंबन्धेन पृथगवस्थिताः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं संकर्षणवासुदेवौ ।

त.] चकारादेकवद्भाव इत्यपि बोध्यम् । तेन 'अतोऽ'मित्यमादेशे द्वन्द्वमिति सिध्यति । **रहस्यं द्वन्द्वशब्दवाच्यमिति** । द्वाभ्यां निर्वृत्ते रहस्ये योगरूढिरेवेत्यर्थः । **द्वन्द्वं मन्त्रयते इति** । द्वौ द्वौ भूत्वा मन्त्रयेते इत्यर्थः । एवं हि तद्रहस्यं भवति । **आचतुरमिति** । 'आङ्मर्यादाभिविध्यो'रित्यव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति टच् । चतुःशब्दोऽत्र चतुर्णां पूरणे द्रष्टव्यः । आ चतुर्थादित्यर्थः । **द्वन्द्वं यज्ञपात्राणीति** । 'स्फ्यश्च कपालानि चे'त्यादीनि पात्राणि द्वन्द्वं प्रयुनक्ति । आसादयतीत्यर्थः । **अभिव्यक्तौ साहचर्येणेत्यर्थ इति** । अत्र 'द्वन्द्व'मित्यत्र स्वार्थे द्विर्वचनम् । एकवद्भावादिकं तु पूर्ववत् । **अन्यत्रापीति** । 'द्वन्द्वं युद्धं प्रवर्तते' । इह

बा.] **ज्ञातेति** । अत्र 'ज्ञाते'ति तृन्नन्तम् । तद्योगे 'न लोके'ति षष्ठीनिषेधात्कर्मणि द्वितीया । तृजन्तत्वे तु 'यथायथस्य ज्ञाने'त्येव । **द्वन्द्वं रहस्य । पूर्वपदस्येति** । द्वौ द्वाविति द्वित्वे कर्मधारयत्वात्सुब्लुकि समुदायात्पुनः सुपि पूर्वपदावयवस्य इकारस्य 'अ'मिति मकारान्तादेश इत्यर्थः । **अत्वमिति** । उत्तरपदस्य अकारोऽन्तादेश इत्यर्थः । न च त्यदाद्यत्वमुत्तरपदान्तस्य सिद्धमिति वाच्यं, संज्ञात्वात्तदप्राप्तेरित्याहुः । **नपुंसकत्वं चेति** । चकारोऽनुक्तसमुच्चये । कृतद्वित्वस्य नपुंसकत्वं द्विवचनाऽभावश्चेत्यर्थः । **आचतुरं हीति** । आङभिविधौ । 'आङ्मर्यादे'त्यव्ययीभावः । शरत्प्रभृतित्वाट्टच् । चतुर्थान्तमिति फलितोऽर्थः । पशवः स्वप्रभृति चतुर्थपर्यन्तं द्वन्द्वं मिथुनीयन्तीत्यन्वयः । मिथुनशब्देन मैथुनं विवक्षितम् । मिथुनस्य कर्म मैथुनम् । तदिच्छतीत्यर्थे 'सुप आत्मनः' इति क्यच् । फलितमर्थमाह—**मिथुनं गच्छतीति** । मिथुनत्वं प्राप्नोतीत्यर्थः । **मिथुनायन्ते** इति क्यङ्पाठस्तु प्रामादिकः । **मर्यादीकृत्येति** । स्वप्रभृति चतुरोऽभिव्याप्येत्यर्थः । अत्यन्तसहचरितत्वेन लोकविज्ञानमभिव्यक्तिरिति भाष्याल्लभ्यते । तदाह-**साहचर्येणेत्यर्थ इति** । अत्र 'द्वन्द्वं न्यञ्ची'त्यत्र वीप्सायां द्वित्वम्, अन्यत्र स्वार्थे इति बोध्यम् । **अन्यत्रापीति** । 'द्वन्द्वानि सहते' इत्यादावित्यर्थः । शीतमुष्णं च एकं द्वन्द्वम् । सुखं दुःखं चापरम् । क्षुत्तृष्णा चान्यत् ।

शे.] रूपमित्यर्थः । 'ज्ञाताः सर्वे पदार्था यथायथं'=यथास्वभावं सर्वे पदार्था ज्ञाता इत्यर्थ इति **वृत्तिसम्मतम्** । **पूर्वपदस्याऽम्भाव इति** । द्वौ द्वाविति कर्मधारयवद्भावात्सुब्लुकि पूर्वपदावयवस्यैकारस्याऽमादेश इत्यर्थः । **अत्वमिति** । सञ्ज्ञात्वादप्राप्तिः । **नपुंसकत्वं चेति** । चेन कृतद्वित्वान्नियतद्विवचनोत्पत्त्यभावस्य सङ्ग्रहः । कर्मधारयवद्भावादन्तोदात्तत्वम् । **वाच्यमिति** । इदं वृत्तौ स्पष्टम् । अभिव्यक्तिरप्येवमित्यन्ये । **आचतुरमिति** । आङभिविधौ । 'आङ्मर्यादे'त्यव्ययीभावः, शरत्प्रभृतित्वाट्टच् । चतुर्थान्तमिति फलितोऽर्थः । **मिथुनीयन्तीत्यनेनान्वयः** । मिथुनशब्देन तत्कर्म मैथुनं, तदिच्छन्तीत्यर्थे क्यच् । **मिथुनं गच्छतीति** । मिथुनत्वं प्राप्नोतीत्यर्थः । फलितार्थकथनमिदम् । '**मिथुनायन्ते**' इति क्यङन्तोऽपपाठः । उपमाना[र्था]ऽभावाद् । द्वन्द्वपदद्योत्या मर्यादा तु 'एतावदेव पशूनामायु'रित्येवंरूपा । स्वसाहित्येन च चतुरोऽभिव्याप्येत्यर्थः । **प्रपौत्रेणापीति** । चतुरोऽभिव्याप्येत्यर्थ इति वृत्तिस्वरसः । अत्यन्तसहचरितत्वेन लोकविज्ञानमत्राऽभिव्यक्तिः । 'अत्यन्तसहचरिते लोकविज्ञाने द्वन्द्वमित्युपसंख्यान'मिति वार्तिकात् । तदाह—**साहचर्येणेति** । तेनेह न–द्वौ युधिष्ठिरार्जुनौ । 'द्वन्द्वं न्यञ्ची'त्यत्र वीप्सायान्द्वित्वम् । अन्यत्र स्वार्थे । **अन्यत्रापीति** । 'द्वन्द्वं युद्धान्यवर्तन्ते'ति यथा । अत्र द्वयोर्द्वयोरित्यर्थाद्वीप्सायान्द्वित्वम् । यथा च शीतोष्णसुखदुःखक्षुत्तृषां द्वन्द्वानि सहते इत्यत्र स्वार्थे द्वित्वमेकशेषाद्बहुवचनं, यथा 'चार्थे द्वन्द्वः' इति स्वार्थे द्वित्वं । पुंस्त्वं लोकात् । अयं योगविभागो भाष्ये न दृश्यते । 'द्वन्द्वं युद्धानी'त्यत्र मर्यादावचनेन सिद्धम् । एषा हि युद्धमर्यादा । शीतोष्णादिष्वभिव्यक्त्या सहचरितत्वं शब्दप्रयोगे बोद्धव्यम् । चार्थे द्वन्द्व इति तु सञ्ज्ञाशब्दोऽव्युत्पन्नः, अवयवार्थाऽभानादिति तदाशयः । विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः ।

अभिव्यक्तौ साहचर्येणेत्यर्थः । योगविभागादन्यत्रापि द्वन्द्व[म्] इष्यते । इति द्विरुक्तप्रक्रिया ।

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यां पूर्वार्द्धं सुबन्तम् ।



त.] वीप्सायां द्विर्वचनम् । द्वयोर्द्वयोर्युद्धमित्यर्थः । 'द्वन्द्वानि सहते' । 'शीतमुष्णमेकं द्वन्द्वं, सुखदुःखे चापरं, क्षुत्तृष्णे चापरम्' । इह स्वार्थे द्विर्वचनमेकवद्भावादि पूर्ववत् । बहुत्वं त्वेकशेषवशात् ।

सिद्धान्तकौमुदीव्याख्या विहिता तत्त्वबोधिनी ।
समाप्तं तत्र पूर्वार्धं तेन तुष्यतु शङ्करः ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यवामनेन्द्रस्वामिचरणारविन्दसेवकज्ञानेन्द्रसरस्वतीकृतौ सिद्धान्तकौमुदीव्याख्यायां तत्त्वबोधिन्याख्यायां पूर्वार्द्धम् ।

---

बा.] इह स्वार्थे द्वन्द्वः । अम्भावादि पूर्ववत् । 'चार्थे द्वन्द्वः' इति निपातनादन्यत्रापीति सिद्धम् । इति द्विरुक्तप्रकरणम् ।

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशाररथचक्राकारादिबहुगुणविराजमानप्रौढापरिमितमहाध्वरस्य 'श्रीशाहजी तुकोजी भोसल' चोलमहीमिहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्याध्वर्युणा, पद्मपुरुषीपोष्येण, बाल्य एव तदयानिर्वर्तिततताऽपरिमिताग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन, पदवाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन, अध्वरमीमांसाकुतूहलवृत्तिनिर्माणप्रकटितसर्वतन्त्रस्वातन्त्र्येण, बौधायनापस्तम्बसत्याषाढभारद्वाजकात्यायनाश्वलायनद्राह्यायणादिकल्पसूत्रतद्भाष्यपारीणमहादेववाजपेययाजिसुतेन, अन्नपूर्णाम्बागर्भजातेन, वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां पूर्वार्धम् ।



---

शे.] शब्देन्दुशेखरे स्वल्पे पूर्वमर्द्धमपूपुरम् । प्रीयतां तेन भगवान् शिवया सहितः शिवः ॥ १ ॥
भूषितः फणिभाष्योक्त्या लघुः शब्देन्दुशेखरः । सतां हृत्कमलेष्वास्तां यावत्फणिफणे धरा ॥ २ ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते लघुशब्देन्दुशेखरे पूर्वार्द्धम् ।



